तिलक-महाराष्ट्र-विद्यापीठ-शाखाभूत-
वैदिक-संशोधन-मण्डलेन प्रकाशितः

# श्रौतकोशः

श्रौतयज्ञानुषङ्गिवचनसंकलनरूपः श्रौतसूत्रानुवादरूपश्च

# ŚRAUTAKOŚA

Encyclopædia of Vedic Sacrificial Ritual comprising the two complementary Sections, namely, the Sanskrit Section and the English Section




VAIDIKA SAMŚODHANA MAṆḌALA
POONA

# श्रौतकोशः

द्वितीयो ग्रन्थः

तस्यायं

## संस्कृतप्रथमविभागः

[ प्रकरणानुसारेण संकलितानि संहिताब्राह्मणारण्यकान्तर्गतश्रौत-
यज्ञानुषङ्गिवचनानि बौधायनश्रौतसूत्राणि च ]

अग्निष्टोमः सप्रवर्ग्यः

वैदिक-संशोधन-मण्डलम्, पुणें

शाके १८९२

# अनुक्रमणिका

माध्यंदिनसवनम्

| विषयः | पृष्ठम् |
|---|---|

# संक्षेपचिह्नानि

| | |
|---|---|
| अपैसं | अथर्ववेदपैप्पलादसंहिता |
| अशौसं | अथर्ववेदशौनकसंहिता |
| आपश्रौ | आपस्तम्बश्रौतसूत्रम् |
| आश्वश्रौ | आश्वलायनश्रौतसूत्रम् |
| ऋसं | ऋग्वेदसंहिता |
| ऐब्रा | ऐतरेयब्राह्मणम् |
| कपिसं | कपिष्ठलकठसंहिता |
| कात्याश्रौ | कात्यायनश्रौतसूत्रम् |
| काशब्रा | काण्वशतपथब्राह्मणम् |
| कासं | काठकसंहिता |
| कासंक | काठकसंकलनम् |
| गोब्रा | गोपथब्राह्मणम् |
| छांउ | छान्दोग्योपनिषद् |
| जैउब्रा | जैमिनीयोपनिषद्ब्राह्मणम् |
| जैब्रा | जैमिनीयब्राह्मणम् |
| तांब्रा | ताण्ड्यमहाब्राह्मणम् |
| तैआ | तैत्तिरीयारण्यकम् |
| तैब्रा | तैत्तिरीयब्राह्मणम् |
| तैसं | तैत्तिरीयसंहिता |

| | |
|---|---|
| बौ०<br>बौश्रौ०<br>बौधायनश्रौ० | बौधायनश्रौतसूत्रम् |
| माशब्रा | माध्यंदिनशतपथब्राह्मणम् |
| माश्रौ | मानवश्रौतसूत्रम् |
| मैसं | मैत्रायणीसंहिता |
| वाकासं | वाजसनेयकाण्वसंहिता |
| वामासं | वाजसनेयमाध्यंदिनसंहिता |
| वैश्रौ | वैतानश्रौतसूत्रम् |
| शांब्रा | शाङ्खायनब्राह्मणम् |
| शांश्रौ | शाङ्खायनश्रौतसूत्रम् |
| षब्रा | षड्विंशब्राह्मणम् |
| साकौसं | सामवेदकौथुमसंहिता |
| साजैसं | सामवेदजैमिनीयसंहिता |
| साब्रा | सामविधानब्राह्मणम् |
| ० | अनुद्धृतब्राह्मणभागबोधकम् |
| ... | मन्त्रभागसमानत्वबोधकम् |
| ≡ | पूर्णतः सादृश्यम् |
| ≐ | अंशतः सादृश्यम् |
| --- | एकाधिकमन्त्रसमानत्वबोधकम् |
| ×××× | त्रुटितो ग्रन्थः |




ॐ

# १. अग्निष्टोमः

## सप्रवर्ग्यः

### १. ऋत्विग्वरणं देवयजनयाचनं च

तैसं [ ७.१.१-२ ]–प्रजननं ज्योतिः। अग्निर्देवतानां ज्योतिः। विराट् छन्दसां ज्योतिः। विराड् वाचोऽग्नौ सं तिष्ठते। विराजमभि सं पद्यते। तस्मात् तज्ज्योतिरुच्यते। द्वौ स्तोमौ प्रातःसवनं वहतो यथा प्राणश्चापानश्च। द्वौ माध्यंदिनꣳ सवनं यथा चक्षुश्च श्रोत्रं च। द्वौ तृतीयसवनं यथा वाक् च प्रतिष्ठा च। पुरुषसंमितो वा एष यज्ञोऽस्थूरिः। यं कामं कामयते तमेतेनाभ्यश्नुते। सर्वꣳ ह्यस्थूरिणाभ्यश्नुते। अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत। ता अग्निष्टोमेनैव पर्यगृह्णात्। तासां परिगृहीतानामश्वतरोऽत्यप्रवत। तस्यानुहाय रेत आदत्त। तद्गर्दभे न्यमार्ट्। तस्माद्गर्दभो द्विरेताः। अथो आहुर्वडबायां न्यमार्डिति। तस्माद्वडबा द्विरेताः। अथो आहुरोषधीषु न्यमार्डिति। तस्मादोषधयोऽनभ्यक्ता रेभन्ति। अथो आहुः प्रजासु न्यमार्डिति। तस्माद्यमौ जायेते। तस्मादश्वतरो न प्र जायत आत्तरेता हि। तस्माद्बर्हिष्यनवक्लृप्तः। सर्ववेदसे वा सहस्रे वावक्लृप्तः। अति ह्यप्रवत। य एवं विद्वानग्निष्टोमेन यजते प्राजाताः प्रजा जनयति परि प्रजाता गृह्णाति। तस्मादाहुर्ज्येष्ठयज्ञ इति। प्रजापतिर्वाव ज्येष्ठः। स ह्येतेनाग्रेऽयजत। प्रजापतिरकामयत प्र जायेयेति। स मुखतस्त्रिवृतं निरमिमीत। तमग्निर्देवतान्वसृज्यत। गायत्री छन्दः। रथन्तरꣳ साम। ब्राह्मणो मनुष्याणाम्। अजः पशूनाम्। तस्मात् ते मुख्याः। मुखतो ह्यसृज्यन्त। उरसो बाहुभ्यां पञ्चदशं निरमिमीत। तमिन्द्रो देवतान्वसृज्यत। त्रिष्टुप् छन्दः। बृहत् साम। राजन्यो मनुष्याणाम्। अविः पशूनाम्। तस्मात् ते वीर्यावन्तः। वीर्याद्ध्यसृज्यन्त। मध्यतः सप्तदशं निरमिमीत। तं विश्वे देवा देवता अन्वसृज्यन्त। जगती छन्दः। वैरूपꣳ साम। वैश्यो मनुष्याणाम्। गावः पशूनाम्। तस्मात् त आद्याः। अन्नधानाद्ध्यसृज्यन्त। तस्माद् भूयाꣳसोऽन्येभ्यः। भूयिष्ठा हि देवता अन्वसृज्यन्त। पत्त एकविꣳशं निरमिमीत। तमनुष्टुप् छन्दोऽन्वसृज्यत। वैराजꣳ साम। शूद्रो मनुष्याणाम्। अश्वः पशूनाम्। तस्मात् तौ भूतसंक्रामिणावश्वश्च शूद्रश्च। तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः। न हि देवता अन्वसृज्यत तस्मात् पादावुप जीवतः। पत्तो ह्यसृज्येताम्। प्राणा वै त्रिवृदर्धमासाः पञ्चदशः प्रजापतिः सप्तदशस्त्रय इमे लोका असावादित्य एकविꣳशः। एतस्मिन् वा एते श्रिता एतस्मिन् प्रतिष्ठिताः। य एवं वेदैतस्मिन्नेव श्रयत एतस्मिन् प्रति तिष्ठति॥

प्रातःसवने वै गायत्रेण छन्दसा त्रिवृते स्तोमाय ज्योतिर्दधदेति। त्रिवृता ब्रह्मवर्चसेन पञ्चदशाय ज्योतिर्दधदेति। पञ्चदशेनौजसा वीर्येण सप्तदशाय ज्योतिर्दधदेति। सप्तदशेन प्राजापत्येन प्रजननेनैकविंशाय ज्योतिर्दधदेति। स्तोम एव तत् स्तोमाय ज्योतिर्दधदेति। अथो स्तोम एव स्तोममभि प्र णयति। यावन्तो वै स्तोमास्तावन्तः कामास्तावन्तो लोकास्तावन्ति ज्योतींषि। एतावत एव स्तोमानेतावतः कामानेतावतो लोकानेतावन्ति ज्योतींष्यव रुन्धे ॥

[ ६.२.६ ]– पुरोहविषि देवयजने याजयेद्यं कामयेतोपैनमुत्तरो यज्ञो नमेदभि सुवर्गं लोकं जयेदिति। एतद्वै पुरोहविर्देवयजनं यस्य होता प्रातरनुवाकमनुब्रुवन्नग्निमप आदित्यमभि विपश्यति० आप्ते देवयजने याजयेद् भ्रातृव्यवन्तम्। पन्थां वाधिस्पर्शयेत् कर्तं वा। यावन्नानसे यातवै न रथायैतद्वा आप्तं देवयजनम्० एकोन्नते देवयजने याजयेत् पशुकामम्० अन्तरा सदोहविर्धाने उन्नतं स्यात्। एतद्वा एकोन्नतं देवयजनम्० त्र्युन्नते देवयजने याजयेत् सुवर्गकामम् ० अन्तराहवनीयं च हविर्धानं चोन्नतं स्यादन्तरा हविर्धानं च सदश्चान्तरा सदश्च गार्हपत्यं च। एतद्वै त्र्युन्नतं देवयजनम्० प्रतिष्ठिते देवयजने याजयेत् प्रतिष्ठाकामम्। एतद्वै प्रतिष्ठितं देवयजनं यत् सर्वतः समम्० यत्रान्याअन्या ओषधयो व्यतिषक्ताः स्युस्तद्याजयेत् पशुकामम्० निर्ऋतिगृहीते देवयजने याजयेद्यं कामयेत निर्ऋत्यास्य यज्ञं ग्राहयेयमिति। एतद्वै निर्ऋतिगृहीतं देवयजनं यत् सदृश्यै सत्या ऋक्षम्० व्यावृत्ते देवयजने याजयेद्व्यावृत्कामं यं पात्रे वा तल्पे वा मीमांसेरन्। प्राचीनमाहवनीयात् प्रवणं स्यात् प्रतीचीनं गार्हपत्यादेतद्वै व्यावृत्तं देवयजनम् ० कार्ये देवयजने याजयेद् भूतिकामम्० ॥

**तैब्रा [ ३.७.१ ]—**

**सक्षेदं पश्य। विधर्तरिदं पश्य। नाकेदं पश्य। रमतिः पनिष्ठा। ऋतं वर्षिष्ठम्। अमृता यान्याहुः। सूर्यो वरिष्ठो अक्षभिर्विभाति। अनु द्यावापृथिवी देवपुत्रे ॥**

तैसं [ ३.५.२ ]–तस्माद् वासिष्ठो ब्रह्मा कार्यः० ॥

मैसं [ ३.८.४ ]–० यद्वाव प्राचीनप्रवणं तद्देवयजनम्० अथ यत् प्राचीनप्रवणमुदीचीनापनतं तद्यजेत यः कामयेतोभयोर्लोकयोर्ऋध्नुयाम्० अथ यस्य देवयजनस्योत्तरादन्यद्देवयजनं तद्यजेत यः कामयेताभि मोत्तरो यज्ञो नमेदिति। एतद्वा उत्तरावन्नाम देवयजनम्० अथ यस्य देवयजनस्य मध्यतो बहुला ओषधयस्तत्पशुकामो यजेत० यत्समं प्रतिष्ठितं तद्व्रतश्रीर्यजेत० अथ यस्य देवयजनस्यापः पुरस्तात्तद्यजेत यः कामयेताभि मोत्तरो यज्ञो नमेदिति। एतद्वै पुरोहविर्नाम देवयजनम्० अथ यस्य देवयजनस्य पन्थाः पुरस्ता-

दिरिण॰ वा कर्तो वा भ्रातृव्यवान् यजेत । एतद्वा आप्तं देवयजनम्० अथ यस्य देवयजनस्याहवनीयादन्याः प्राचीरापो धावन्ति गार्हपत्यादन्याः प्रतीचीस्तद्यजेत यं तल्पे वा पात्रे वा मीमा॰सेरन्० यत् त्र्युन्नतं तद् भ्रातृव्यवान् यजेत यस्याहवनीयं च हविर्धानं चान्तरोन्नत॰ यस्य हविर्धानं च सदश्चान्तरोन्नत॰ यस्य सदश्च गार्हपत्यं चान्तरोन्नतम्० अथ यस्य देवयजनस्य दक्षिणत उन्नतं तद् भ्रातृव्यवान् यजेत० स्थले यजेत यः कामयेतोभयेषां देवमनुष्याणां प्रकाशं गच्छेयमिति । प्रकाशो वै नामैतद्देवयजनम्० अभिशस्यमान॰ याजयेत्० अथ यस्य होता प्रातरनुवाकमनुब्रुवन्नग्निमपः सूर्यं तानि पश्येत् तद् ब्रह्मवर्चसकामो यजेत० अथ यस्य देवयजनस्यान्या अन्या मध्यतो बहुला ओषधयः० तत् पशुकामो यजेत । अथ यस्य देवयजनस्य मध्यत उन्नतम्० तत्स्वर्गकामो यजेत । निर्वस्केऽभिचरन् यजेत ० ॥

कासं [ २५.२–३ ]–यदुदीचीनं प्राचीनं प्रवणं स्यात् तस्मिन् यजेत यज्ञकामः० यत् समं प्रतिष्ठितं तस्मिन् यजेत गतश्रीः० त्र्युन्नते यजेत भ्रातृव्यवान्० यस्यैकधा मध्य उन्नतं स्यात् तस्मिन् यजेत स्वर्गकामः० यत्रौषधयो बह्वीरन्या अन्या इव स्युस्तस्मिन् यजेत पशुकामः ० यत्रौषधयः कृच्छ्रशः पर्यायशः परीयुस्तस्मिन् यजेत पशुकामः० यत् समया देवयजनं पन्था विधावेत् तस्मिन् याजयेद्यं कामयेत व्येनं प्रजया पशुभिश्छिन्द्यामिति । एतद्वै विच्छिन्नं नाम देवयजनम् ० यदन्तरापश्च देवयजनं च पन्था विधावेत् तस्मिन् याजयेद्यं कामयेत नैनमपरो यज्ञ उपनमेदिति । एतद्वै परिवर्त्म नाम देवयजनम्० यत्रापस्सर्वतस्समवद्रवेयुस्तस्मिन् यजेतान्नकामः० तदेतत् समापं नाम देवयजनम् ० यत्रापः प्राचीराहवनीयात् प्रतीचीर्गार्हपत्याद् व्यवद्रवेयुस्तस्मिन् याजयेद्यमुदके वा पात्रे वा विवाहे वा मीमींसेरन्० यत्रापो दक्षिणा परिप्लूय पश्चात् प्राची रमेरंस्तस्मिन् यजेत बुभूषन्० यत्रापो दक्षिणत उदीची रमेरंस्तस्मिन् यजेत सजातकामः ० कृत्रिमे यजेत बुभूषन्० यत्राग्निं चापश्च पश्यन् प्रातरनुवाकमनुब्रूयात् तस्मिन् यजेत यः कामयेत यज्ञो मापर उपनमेदिति० यत्राग्निमपस्सूर्यं पश्यन् प्रातरनुवाकमनुब्रूयात् तस्मिन् यजेत ब्रह्मवर्चसकामः । एतद्वै त्रिशुक्रियं नाम देवयजनम् ० यत् पुरस्तादाशि स्याद्देवयजनं तस्मिन् यजेत भ्रातृव्यवान् ० अग्निर्वाव देवयजनम्० यत्रैव क्व चाग्निमाधाय यजेत० ब्राह्मणा वाव देवयजनम् । यत्र ब्राह्मणा बहवस्संराधयेयुस्तस्मिन् यजेत० ॥

कपिसं [ ३८.५ ] = कासं

माशब्रा [ ११.५.८.६-७ ]– तस्मादेवंविदमेव ब्रह्माणं कुर्वीत । नानेवंविदम् । तदाहुः । यदृचा हौत्रं क्रियते । यजुषाध्वर्यवम् । साम्नोद्गीथः । अथ केन ब्रह्मत्वमिति । अनया त्रय्या विद्ययेति ह ब्रूयात् ॥

[ १२.६.१.४१ ]– तस्माद्ध स्म पुरा वासिष्ठ एव ब्रह्मा भवति । यतस्त्वेना अप्येतर्हि य एव कश्चाधीते । ततोऽप्येतर्हि य एव कश्च ब्रह्मा भवति ० ॥

[ ३.१.१.१–५ ]– देवयजनं जोषयन्ते० यदेव वर्षिष्ठꣳ स्यात् तज्जोषयेरन् । तद्वर्ष्म सत् समꣳ स्यात् । समꣳ सदविभ्रꣳशि स्यात् । अविभ्रꣳशि सत् प्राक्प्रवणꣳ स्यात्० अथो उदक्प्रवणम्० दक्षिणतः प्रत्युच्छ्रितमिव स्यात्० न पुरस्ताद्देवयजनमात्रमतिरिच्येत० कामꣳ ह दक्षिणतः स्यादेवमुत्तरतः । एतद्ध त्वेव समृद्धं देवयजनम् । यस्य देवयजनमात्रं पश्चात्परिशिष्यते ० तदु होवाच याज्ञवल्क्यः । वार्ष्णाय देवयजनं जोषयितुमैम । तत् सात्ययज्ञोऽब्रवीत् सर्वा वा इयं पृथिवी देवी देवयजनम् । यत्र वा अस्यै क्व च यजुषैव परिगृह्य याजयेदिति । ऋत्विजो हैव देवयजनम् । ये ब्राह्मणाः शुश्रुवाꣳसोऽनूचाना विद्वाꣳसो याजयन्ति सैवाह्वला । एतन्नेदिष्ठतमामिव मन्यामह इति ॥

काशब्रा [ १३.५.८.७-८ ] ≡ माशब्रा ११.५.८.६-७

[ १४.८.१.३७ ] ≡ माशब्रा १२.६.१.४१

[ ४.१.१.१-३ ] ≡ माशब्रा ३.१.१.१–५

ऐब्रा [ ३.४६ ]–त्रीणि ह वै यज्ञे क्रियन्ते जग्धं गीर्णं वान्तम् । तद्धैतदेव जग्धं यदाशंसमानमार्त्विज्यं कारयत उत वा मे दद्यादुत वा मा वृणीतेति० अथ हैतदेव गीर्णं यद्भिभ्यदार्त्विज्यं कारयत उत वा मा न बाधेतोत वा मे न यज्ञवेशसं कुर्यादिति ० अथ हैतदेव वान्तं यदभिशस्यमानमार्त्विज्यं कारयते ० स एतेषां त्रयाणामाशां नेयात् । तं यद्येतेषां त्रयाणामेकंचिदकाममभ्याभवेत् तस्यास्ति वामदेव्यस्य स्तोत्रे प्रायश्चित्तिः ० तत् त्रिभिरक्षरैर्न्यूनं तस्य स्तोत्र उपसृप्य त्रेधात्मानं विगृह्णीयात् पुरुष इति ० अपि यदि समृद्धा इव ऋत्विजः स्युरिति ह स्माहाथ हैतज्जपेदेवेति ॥

**तांब्रा [ १.१.१ ]–**

**महन् मेऽवोचो भर्गो मेऽवोचो यशो मेऽवोचः स्तोमं मेऽवोचो भुक्तिं मेऽवोचः सर्वं मेऽवोचस्तन्मावतु तन्माविशतु तेन भुक्षिषीय ॥**

[ ६.१-३ ]–प्रजापतिरकामयत बहु स्यां प्रजायेयेति । स एतमग्निष्टोममपश्यत् तमाहरत् तेनेमाः प्रजा असृजत० सोऽकामयत यज्ञꣳ सृजेयेति । स मुखत एव त्रिवृतमसृजत । तं गायत्रीछन्दोऽन्वसृज्यताग्निर्देवता ब्राह्मणो मनुष्यो वसन्त ऋतुः । तस्मात् त्रिवृत् स्तोमानां मुखं गायत्री छन्दसामग्निर्देवतानां ब्राह्मणो मनुष्याणां वसन्त ऋतूनाम् ० स उरस्त एव बाहुभ्यां पञ्चदशमसृजत । तं त्रिष्टुप्छन्दोऽन्वसृज्यतेन्द्रो देवता राजन्यो मनुष्यो ग्रीष्म ऋतुः । तस्माद्राजन्यस्य पञ्चदशः स्तोमः त्रिष्टुप्छन्द इन्द्रो देवता ग्रीष्म ऋतुः० स मध्यत एव प्रजननात् सप्तदश-

मसृजत। तं जगती छन्दोऽन्वसृज्यत विश्वे देवा देवता वैश्यो मनुष्यो वर्षा ऋतुः० स एत एव प्रतिष्ठाया एकविंशमसृजत। तमनुष्टुप्छन्दोऽन्वसृज्यत न का चन देवता शूद्रो मनुष्यः० इमे वै लोकास्त्रिणवः० देवता वाव त्रयस्त्रिंशोऽष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्च त्रयस्त्रिंशौ० एष वाव यज्ञो यदग्निष्टोमः। एकस्मा अन्यो यज्ञः कामायाह्रियते सर्वेभ्योऽग्निष्टोमः। द्वादश स्तोत्राण्यग्निष्टोमः० द्वादश स्तोत्राणि द्वादश शस्त्राणि० किं ज्योतिष्टोमस्य ज्योतिष्टोमत्वमित्याहुः। विराजं सं स्तुतः संपद्यते विराड् वै छन्दसां ज्योतिः० ज्येष्ठयज्ञो वा एष यदग्निष्टोमः० त्रिवृत् पञ्चदशः सप्तदश एकविंश एते वै स्तोमानां वीर्यवत्तमाः। तानेव युङ्क्ते स्वर्गस्य लोकस्य समष्ट्यै। चतुष्टोमो भवति० ॥

षष्ठा [ १.५ ]—अपि हैवंविदं वा वासिष्ठं वा ब्रह्माणं कुर्वीत ० यावदृचा यजुषा साम्ना कुर्युस्तावद् ब्रह्मा वाचंयमो बुभूषेत्० ॥

[ २.१० ]—स एतान् दैवानृत्विजो वृणीत अग्निर्मे होतादित्यो मेऽध्वर्युश्चन्द्रमा मे ब्रह्मा पर्जन्यो म उद्गाताकाशो मे सदस्य आपो मे होत्राशंसिनो रश्मयो मे चमसाध्वर्यवः। स एतान् दैवानृत्विजो वृत्वाथैतान् मानुषान् वृणीत य एनमभिराधयेयुः। अथ क्षत्रियं देवयजनं याचेत्। स चेतस्मै दद्यात् देवयजनवान् भूयाः इत्येनं ब्रूयात्। न चेत्तस्मै दद्यात् यदहं देवयजनं वेद तस्मिंस्त्वा वृश्चानि इत्येनं ब्रूयात् ० अथ तत एत्यर्त्विजो देवयजनं याचेत् अग्निर्मे होता स मे देवयजनं ददातु। होतर्देवयजनं मे देहि इत्युच्चैः। आदित्यो मेऽध्वर्युः स मे देवयजनं ददातु। अध्वर्यो देवयजनं मे देहि इत्युच्चैः। चन्द्रमा मे ब्रह्मा स मे देवयजनं ददातु। ब्रह्मन् देवयजनं मे देहि इत्युच्चैः। पर्जन्यो म उद्गाता स मे देवयजनं ददातु। उद्गातर्देवयजनं मे देहि इत्युच्चैः। आकाशो मे सदस्यः स मे देवयजनं ददातु। सदस्य देवयजनं मे देहि इत्युच्चैः। आपो मे होत्राशंसिनस्ते मे देवयजनं ददतु। होत्राशंसिनो देवयजनं मे दत्त इत्युच्चैः। रश्मयो मे चमसाध्वर्यवस्ते मे देवयजनं ददतु। चमसाध्वर्यवो देवयजनं मे दत्त इत्युच्चैः० स दत्ते यजते यदुन्नतं भूम्या अनूषरं यत्र बहुला ओषधयश्चात्वालसारिण्यो यत्रापः स्युः। तस्य न पुरस्ताद्देवयजनमात्रमतिशिष्याद् यावांश्छम्याप्रासः। अवरपुरुषा ह्यस्मात् पापीयांसो भवन्ति यस्यैवमतिरेचयन्ति० यस्य पुरस्तात् त्रीणि ज्योतींषि दृश्येरन्नभिराप आदित्यस्तद्देवयजनम्। तत् त्रिशुक्रियम्। पुरस्ताच्चित्रं देवयजनं पश्चाच्चित्रं श्मशानकरणम्। प्रागुदक्प्रवणं देवयजनं पश्चाद्दक्षिणाप्रवणं श्मशानकरणम्० यथा श्मशानकरणं तथाभिचरणीयानां देवयजनमप्यु हैक आहुः। यस्मिन्नेव कस्मिंश्च देशे श्रद्दधानो यजत ऋध्नोत्येवेति ॥

जैब्रा [ १.६६-७० ]–प्रजननं ज्योतिः। अग्निर्देवतानां ज्योतिः। विराड्वाच्यग्नौ संतिष्ठते। विराजꣳ संपद्यते। तस्मादेष ज्योतिरुच्यते। द्वौ स्तोमौ प्रातःसवनं वहतो यथा चक्षुश्च प्राणश्च तथा तत्। द्वौ स्तोमौ माध्यंदिनꣳ सवनं वहतो यथा च(?)श्रोत्रं च बाहू च तथा तत्। द्वौ स्तोमौ तृतीयसवनं वहतो यथा मध्यं च प्रतिष्ठा च तथा तत्। हिंकारेण वै ज्योतिषा देवास्त्रिवृते ब्रह्मवर्चसाय ज्योतिरदधुः। त्रिवृता ब्रह्मवर्चसेन पञ्चदशायौजसे वीर्याय ज्योतिरदधुः। पञ्चदशेनौजसा वीर्येण सप्तदशाय प्रजायै पशुभ्यः प्रजननाय ज्योतिरदधुः। सप्तदशेन प्रजया पशुभिः प्रजननेनैकविꣳशाय प्रतिष्ठायै ज्योतिरदधुः। स्तोमो वा एतत्। स्तोमे ज्योतिर्दधत इति। तस्माज्ज्योतिष्टोम इत्याख्यायते। अथ यत् स्तोमꣳस्तोमꣳ सवनमभिप्रणयति तस्माज्ज्योतिष्टोम इत्याख्यायते। अथो यद्यज्ञः सꣳस्तुतो विराजमभिसंपद्यते ज्योतिर्विराट् तस्माज्ज्योतिष्टोम इत्याख्यायते० प्रजापतिर्यत् प्रजा असृजत ता अग्निष्टोमेनासृजत० ज्येष्ठयज्ञो वा एष प्रजापतियज्ञो यदग्निष्टोमः० प्रजापतिर्वावेदमग्र आसीत्। जनो ह वै प्रजापतिर्देवता। सोऽकामयत बहुः स्यां प्रजायेय भूमानं गच्छेयमिति। स शीर्षत एव मुखतस्त्रिवृतꣳ स्तोममसृजत गायत्रीं छन्दो रथन्तरꣳ सामाग्निं देवतां ब्राह्मणं मनुष्यमजं पशुम्० स बाहुभ्यामेवोरसः पञ्चदशꣳ स्तोममसृजत त्रिष्टुभं छन्दो बृहत् सामेन्द्रं देवताꣳ राजन्यं मनुष्यमश्वं पशुम् ० स उदरादेव मध्यतः सप्तदशꣳ स्तोममसृजत जगतीं छन्दो वामदेव्यꣳ साम विश्वान् देवान् देवतां वैश्यं मनुष्यं गां पशुम्० स पद्भ्यामेव प्रतिष्ठाया एकविꣳशꣳ स्तोममसृजतानुष्टुभं छन्दो यज्ञायज्ञीयꣳ साम न कां चन देवताꣳ शूद्रं मनुष्यमविं पशुम्० वृणुतेऽन्यानृत्विजो नोद्गातारम्॥

[ १.३५८ ]–तदाहुर्यदृचा होतृत्वं क्रियते यजुषाध्वर्यवꣳ साम्नोद्गीथोऽथ केन ब्रह्मत्वं क्रियत इति। अनया त्रय्या विद्ययेति ह ब्रूयात्। तस्मादु यमेव ब्रह्मिष्ठं मन्येत तं ब्रह्माणं कुर्वीत॥

गोब्रा [ १.२.११-१४ ]–एतद् विच्छिन्नं देवयजनं यदप्राक्प्रवणं यदनुदक्प्रवणं यत्कृत्रिमं यत्समविषमम्। इदं ह त्वेव देवयजनं यत्समं समूलमविदग्धं प्रतिष्ठितं प्रागुदक्प्रवणं समं समास्तीर्णमिव भवति ० अथैतद्भौमं देवयजनं यत्रापस्तिष्ठन्ति यत्र स्यन्दन्ति प्र तद्वहन्त्युद्वहन्ति तद्देवयजनम्। यत्समं समूलमविदग्धं प्रतिष्ठितं प्रागुदक्प्रवणं समं समास्तीर्णमिव भवति यस्य श्वभ्र ऊर्मी वृक्षः पर्वतो नदी पन्था वा पुरस्तात् स्यात्। न देवयजनमात्रं पुरस्तात् पर्यवशिष्येत्। नोत्तरतोऽग्नेः पर्युपसीदेरन्निति ब्राह्मणम्॥

[ १.२.२४ ][१]–अथ ह प्रजापतिः सोमेन यक्ष्यमाणो वेदानुवाच कं वो होतारं वृणीय

१. गोब्रा १.३.१–२;४; १.५.२४ अत्रापि ब्राह्मणं द्रष्टव्यम्।

कमध्वर्युं कमुद्गातारं कं ब्रह्माणमिति। त ऊचुर्ऋग्विदमेव होतारं वृणीष्व यजुर्विदमध्वर्युं सामविदमुद्गातारमथर्वाङ्गिरोविदं ब्रह्माणम् ० ॥

[ १.५.११ ]—तस्माद्य एव सर्ववित् स्यात्तं ब्रह्माणं कुर्वीत। एष ह वै विद्वान्सर्व-विद् ब्रह्मा यद् भृग्वङ्गिरोवित् ० ॥

[ २.२.५ ]—ब्रह्मैव विद्वान् यद् भृग्वङ्गिरोवित् सम्यगधीयानश्चरितब्रह्मचर्योऽन्यूनान-तिरिक्ताङ्गोऽप्रमत्तो यज्ञं रक्षति ० तस्माद्यजमानो भृग्वङ्गिरोविदमेव तत्र ब्रह्माणं वृणीयात्०॥

[ १.३.१७ ]—य इच्छेत् स्वरियामिति स एतेनैकगुनाग्निष्टोमेन यजेतेति० ॥

## २. प्राचीनवंशशालानिर्माणम्

तैसं [ ६.१.१ ]—प्राचीनवꣳशं करोति। देवमनुष्या दिशो व्यभजन्त। प्राचीं देवा दक्षिणां पितरः प्रतीचीं मनुष्या उदीचीꣳ रुद्राः० परिश्रयति० दिक्ष्वतीकाशान् करोति० ॥

मैसं [ ३.६.१ ]—प्राचीनवꣳशं कुर्वन्ति ० परिश्रयन्ति ० परिश्रयन्तोऽतिरोकान् कुर्वन्ति० पुरस्तात् प्रायणं कुर्यात् स्वर्गकामस्य० दक्षिणतः प्रायणं कुर्याद्यं कामयेत पितृलोक ऋध्नुयादिति ० पश्चात् प्रायणं कुर्यात् प्रजाकामस्य ० उत्तरतः प्रायणं कुर्याद्यं कामयेत मनुष्यलोक ऋध्नुयादिति ० उत्तरतः पुरस्तात् प्रायणं कुर्याद्यं कामयेतोभयोर्लोकयो-र्ऋध्नुयादिति ० सर्वतः प्रायणं कुर्याद्यं कामयेत सर्वासु दिक्षित्र्यृध्नुयादिति ॥

कासं [ २२.१३]—प्राचीनवंशं कुर्वन्ति ० परिश्रिते याजयन्ति ० तस्मिन्नेनं दीक्षयन्ति० स्रक्तिष्वतीरोकान् कुर्यात् ० ॥

माशब्रा [ ३.१.१.६,८ ]—तच्छालां वा विमितं वा प्राचीनवꣳशं मिन्वन्ति ० तां वा एतां परिश्रयन्ति ० ॥

काशब्रा [ ४.१.१.४–६ ] ≡ माशब्रा

## ३. अवान्तरदीक्षा

तैआ [ ४.४१ ]—

पृथिवी समित्। तामग्निः समिन्धे। साग्निꣳ समिन्धे। तामहꣳ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ताꣳ स्वाहा॥ अन्तरिक्षꣳ समित्। तां वायुः समिन्धे। सा वायुꣳ समिन्धे। तामहꣳ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया। यशसा ब्रह्म-वर्चसेन। अन्नाद्येन समिन्ताꣳ स्वाहा॥ द्यौः समित्। तामादित्यः समिन्धे।

सादित्य॰ समिन्धे। तामह॰ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ता॰ स्वाहा॥ प्राजापत्या मे समिदसि सपत्नक्षयणी। भ्रातृव्यहा मेऽसि स्वाहा॥ अग्ने व्रतपते व्रतं चरिष्यामि। तच्छकेयं तन्मे राध्यताम्॥ वायो व्रतपते [व्रतं चरिष्यामि। तच्छकेयं तन्मे राध्यताम्॥] आदित्य व्रतपते [व्रतं चरिष्यामि। तच्छकेयं तन्मे राध्यताम्॥] व्रतानां व्रतपते व्रतं चरिष्यामि। तच्छकेयं तन्मे राध्यताम्॥ द्यौः समित्। तामादित्यः समिन्धे। सादित्य॰ समिन्धे। तामह॰ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ता॰ स्वाहा॥ अन्तरिक्ष॰ समित्। तां वायुः समिन्धे। सा वायु॰ समिन्धे। तामह॰ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ता॰ स्वाहा॥ पृथिवी समित्। तामग्निः समिन्धे। साग्नि॰ समिन्धे। तामह॰ समिन्धे। सा मा समिद्धा। आयुषा तेजसा। वर्चसा श्रिया। यशसा ब्रह्मवर्चसेन। अन्नाद्येन समिन्ता॰ स्वाहा॥ प्राजापत्या मे समिदसि सपत्नक्षयणी। भ्रातृव्यहा मेऽसि स्वाहा॥ आदित्य व्रतपते व्रतमचारिषम्। तदशकं तन्मेऽराधि॥ वायो व्रतपते [व्रतमचारिषम्। तदशकं तन्मेऽराधि॥] अग्ने व्रतपते [व्रतमचारिषम्। तदशकं तन्मेऽराधि॥] व्रतानां व्रतपते व्रतमचारिषम्। तदशकं तन्मेऽराधि॥

मैसं [४.९.२३–२६]—

पृथिवी समित् तामग्निः समिन्द्धे साग्नि॰ समिन्द्धे तामह॰ समिन्धे सा मा समिद्धा सुसमिद्धा तेजसा ब्रह्मवर्चसेन समिन्धता॰ स्वाहा॥ अन्तरिक्ष॰ समित् ता॰ वायुः समिन्द्धे सा वायु॰ समिन्द्धे....॥ द्यौः समित् तामादित्यः समिन्द्धे सादित्य॰ समिन्द्धे....॥ दिशः समित् तां प्रजापतिः समिन्द्धे सा प्रजापति॰समिन्द्धे ....॥ अग्ने व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तन्मे गोपाय तच्छकेयं तेन शकेयं तेन राध्यासम्॥ वायो व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तन्मे गोपाय तच्छकेयं तेन शकेयं तेन राध्यासम्॥ सूर्य व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तन्मे गोपाय तच्छकेयं तेन शकेयं तेन राध्यासम्॥ व्रताना॰ व्रतपते व्रतं चरिष्यामि तत्ते प्रब्रवीमि तन्मे गोपाय तच्छकेयं तेन शकेयं तेन राध्यासम्॥ पृथिवी समित् तामग्निः समिन्धिष्ट साग्नि॰ समिन्धिष्ट तामह॰ समिन्धिष्ट सा मा समिद्धा सुसमिद्धा तेजसा ब्रह्मवर्चसेन समिन्धिषता॰ स्वाहा॥ अन्तरिक्ष॰ समित् ता॰ वायुः समिन्धिष्ट सा वायु॰ समिन्धिष्ट.... ॥ द्यौः समित् तामादित्यः समिन्धिष्ट

सादित्यꣳ समिन्धिष्ट....।। दिशः समित् तां प्रजापतिः समिन्धिष्ट सा प्रजापतिꣳ समिन्धिष्ट....।। अग्ने व्रतपते व्रतमचार्षं तत्ते प्रावोचं तदशकं तेनाशकं तेनारात्स्यम्।। वायो व्रतपते व्रतमचार्षं तत्ते प्रावोचं तदशकं तेनाशकं तेनारात्स्यम् ।। सूर्य व्रतपते व्रतमचार्षं तत्ते प्रावोचं तदशकं तेनाशकं तेनारात्स्यम् ।। व्रतानाꣳ व्रतपते व्रतमचार्षं तत्ते प्रावोचं तदशकं तेनाशकं तेनारात्स्यम् ।।

माशब्रा [१४.१.१]–तस्मादेतदृषिणाभ्यनूक्तं "दध्यङ् ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्र यदीमुवाच" (ऋसं १·११६·१२) इति० तन्न सर्वस्मा अनुब्रूयात्० यो न्वेव ज्ञातः। तस्मै ब्रूयात् । अथ योऽनूचानः । अथ योऽस्य प्रियः स्यात्० संवत्सरवासिनेऽनुब्रूयात्० तिस्रो रात्रीर्व्रतं चरति० तप्तमाचामति० अमृण्मयपायी० अशूद्रोच्छिष्टी० अनृतꣳ स्त्री शूद्रः श्वा कृष्णः शकुनिस्तानि न प्रेक्षेत ० य एतमनु वा ब्रूते। भक्षयति वा । तस्य व्रतचर्या। नातपति प्रच्छादयेत० नातपति निष्ठीवेत् ० नातपति प्रस्रावयेत ० अवत्योत्य रात्रावश्नीयात् ।।

काशब्रा [ १६.१.१ ] = माशब्रा

## ४. प्रवर्ग्यसंभरणम्

तैआ [ ४.१–३ ]—

नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माहमृषीन् मन्त्रकृतो मन्त्रपतीन् परादां वैश्वदेवीं वाचमुद्यासꣳ शिवामदस्तां जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत् । शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती । भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु । ॐ शान्तिः शान्तिः शान्तिः ।।[1]

युञ्जते मन उत युञ्जते धियः । विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इत् । मही देवस्य सवितुः परिष्टुतिः ।।
देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्यामाददे ।।
अभ्रिरसि नारिरसि । अध्वरकृद्देवेभ्यः ।।

१. पूर्णा शान्तिः ।

उत्तिष्ठ ब्रह्मणस्पते। देवयन्तस्त्वेमहे।
उपप्रयन्तु मरुतः सुदानवः। इन्द्र प्राशूर्भवा सचा॥
प्रैतु ब्रह्मणस्पतिः। प्र देव्येतु सूनृता।
अच्छा वीरं नर्यं पङ्क्तिराधसम्। देवा यज्ञं नयन्तु नः॥

देवी द्यावापृथिवी अनु मेऽमꣳसाथाम्॥ ऋध्यासमद्य। मखस्य शिरः॥ मखाय त्वा॥ मखस्य त्वा शीर्ष्णे॥ इयत्यग्र आसीः॥ ऋध्यासमद्य। मखस्य शिरः॥ मखाय त्वा॥ मखस्य त्वा शीर्ष्णे॥ देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीः॥ ऋध्यासमद्य। मखस्य शिरः॥ मखाय त्वा॥ मखस्य त्वा शीर्ष्णे॥ इन्द्रस्यौजोऽसि॥ ऋध्यासमद्य। मखस्य शिरः॥ मखाय त्वा॥ मखस्य त्वा शीर्ष्णे॥ अग्निजा असि प्रजापते रेतः॥ ऋध्यासमद्य। मखस्य शिरः॥ मखाय त्वा॥ मखस्य त्वा शीर्ष्णे॥ आयुर्धेहि प्राणं धेहि। अपानं धेहि व्यानं धेहि। चक्षुर्धेहि श्रोत्रं धेहि। मनो धेहि वाचं धेहि। आत्मानं धेहि प्रतिष्ठां धेहि। मां धेहि मयि धेहि॥ मधु त्वा मधुला करोतु॥ मखस्य शिरोऽसि॥ यज्ञस्य पदे स्थः॥ गायत्रेण त्वा छन्दसा करोमि॥ त्रैष्टुभेन त्वा छन्दसा करोमि॥ जागतेन त्वा छन्दसा करोमि॥ मखस्य रास्नासि॥ अदितिस्ते बिलं गृह्णातु। पाङ्क्तेन छन्दसा॥ सूर्यस्य हरसा श्राय॥ मखोऽसि॥ वृष्णो अश्वस्य निष्पदसि। वरुणस्त्वा धृतव्रत आधूपयतु। मित्रावरुणयोर्ध्रुवेण धर्मणा॥ अर्चिषे त्वा॥ शोचिषे त्वा॥ ज्योतिषे त्वा॥ तपसे त्वा॥

अभीमं महिना दिवम्। मित्रो बभूव सप्रथाः। उत श्रवसा पृथिवीम्॥
मित्रस्य चर्षणीधृतः। श्रवो देवस्य सानसिम्। द्युम्नं चित्रश्रवस्तमम्॥

सिद्ध्यै त्वा॥ देवस्त्वा सवितोद्वपतु। सुपाणिः स्वङ्गुरिः। सुबाहुरुत शक्त्या॥ अपद्यमानः पृथिव्याम्। आशा दिश आपृण॥ उत्तिष्ठ बृहन्भव। ऊर्ध्वस्तिष्ठ ध्रुवस्त्वम्॥ सूर्यस्य त्वा चक्षुषान्वीक्षे। ऋजवे त्वा। साधवे त्वा। सुक्षित्यै त्वा भूत्यै त्वा॥ इदमहममुमामुष्यायणं विशा [पर्यूहामि॥ इदमहममुमामुष्यायणं] पशुभिः [पर्यूहामि॥ इदमहममुमामुष्यायणं] ब्रह्मवर्चसेन पर्यूहामि॥ गायत्रेण त्वा छन्दसाच्छृणद्मि। त्रैष्टुभेन त्वा छन्दसाच्छृणद्मि। जागतेन त्वा छन्दसाच्छृणद्मि। छृणत्तु त्वा वाक्। छृणत्तु त्वोर्क्। छृणत्तु त्वा हविः। छृन्धि वाचम्। छृन्ध्यूर्जम्। छृन्धि हविः। देव पुरश्चर सध्यासं त्वा॥

तैआ [४.४२]—

शं नो वातः पवतां मातरिश्वा शं नस्तपतु सूर्यः।
अहानि शं भवन्तु नः शꣳ रात्रिः प्रतिधीयताम्॥

शमुषा नो व्युच्छतु शमादित्य उदेतु नः ।
शिवा नः शंतमा भव सुमृडीका सरस्वती । मा ते व्योम संदृशि ॥

इडायै वास्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोश्छित्स्म ह्यवास्तुः स भूयाद्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ प्रतिष्ठासि प्रतिष्ठावन्तो भूयास्म मा प्रतिष्ठायाश्छित्स्म ह्यप्रतिष्ठः स भूयाद्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥

आ वात वाहि भेषजं वि वात वाहि यद्रपः ।
त्वꣳहि विश्वभेषजो देवानां दूत ईयसे ॥
द्वाविमौ वातौ वात आ सिन्धोरा परावतः ।
दक्षं मे अन्य आवातु परान्यो वातु यद्रपः ॥
यददो वात ते गृहेऽमृतस्य निधिर्हितः ।
ततो नो देहि जीवसे ततो नो धेहि भेषजम् । ततो नो मह आवह ॥
वात आवातु भेषजꣳ शंभूर्मयोभूर्नो हृदे । प्र ण आयूꣳषि तारिषत् ॥
इन्द्रस्य गृहोऽसि तं त्वा प्रपद्ये सगुः साश्वः । सह यन्मे अस्ति तेन ॥

भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्य भूर्भुवः सुवः प्रपद्ये वायुं प्रपद्येऽनार्तां देवतां प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोशं ब्रह्म प्रपद्य ॐ प्रपद्ये ॥ अन्तरिक्षं म उर्वन्तरं बृहदग्नयः पर्वताश्च यया वातः स्वस्त्या स्वस्ति मां तया स्वस्त्या स्वस्ति मानसानि ॥ प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टम् ॥ मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥

द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥
कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥
कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः । दृढाचिदारुजे वसु ॥
अभी षु णः सखीनामविता जरितृणाम् । शतं भवास्यूतिभिः ॥
वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् ॥
शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥
ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् ॥

सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥

यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥

पृथिवी शान्ता साग्निना शान्ता सा मे शान्ता शुचꣳ शमयतु ॥ अन्तरिक्षꣳ शान्तं तद्वायुना शान्तं तन्मे शान्तꣳ शुचꣳ शमयतु ॥ द्यौः शान्ता सादित्येन शान्ता सा मे शान्ता शुचꣳ शमयतु ॥ पृथिवी शान्तिरन्तरिक्षꣳ शान्तिर्द्यौः शान्तिर्दिशः शान्तिरवान्तरदिशाः शान्तिरग्निः शान्तिर्वायुः शान्तिरादित्यः शान्तिश्चन्द्रमाः शान्तिर्नक्षत्राणि शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्गौः शान्तिरजा शान्तिरश्वः शान्तिः पुरुषः शान्तिर्ब्रह्म शान्तिर्ब्राह्मणः शान्तिः शान्तिरेव शान्तिः शान्तिर्मे अस्तु शान्तिः ॥ तयाहꣳ शान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे च शान्तिं करोमि शान्तिर्मे अस्तु शान्तिः ॥ एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मोत्तिष्ठन्तमनूत्तिष्ठन्तु मा माꣳ श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः ॥

उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अनु ॥

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतꣳ शृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं ज्योक्च सूर्यं दृशे ॥ य उदगान्महतोऽर्णवाद्विभ्राजमानः सरिरस्य मध्यात् स मा वृषभो लोहिताक्षः सूर्यो विपश्चिन्मनसा पुनातु ॥ ब्रह्मण श्चोतन्यसि ब्रह्मण आणी स्थो ब्रह्मण आवपनमसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेनेन महदन्तरिक्षं दिवं दाधार पृथिवीꣳ सदेवां यदहं वेद तदहं धारयाणि मा मद्वेदोऽधि विस्रसत् ॥ मेधामनीषे माविशताꣳ समीची भूतस्य भव्यस्यावरुद्ध्यै सर्वमायुरयाणि सर्वमायुरयाणि ॥

आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः ।

यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम ॥

ब्रह्म प्रावादिष्म तन्नो मा हासीत् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥[1]

तैआ [ ५.१-३ ]—यत् प्रवर्ग्यं प्रवृणक्ति० तस्मादेष आश्विनप्रवया इव । यत्प्रवर्ग्यः । सावित्रं जुहोति प्रसूत्यै । चतुर्गृहीतेन जुहोति० यजुरेव वदेत्० यत् खादिर्यभ्रिर्भवति०

१. उत्तरा शान्तिः ।

यदौदुम्बरी॰ यद्वैणवी॰ यद्वैकङ्कती॰ देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते॰ निर्दिश्यै-वैनद्धरति। त्रिर्हरति॰ तूष्णीं चतुर्थꣳ हरति॰ मृत्खननादग्रे हरति॰ यद्वल्मीकवपासंभारो भवति॰ यदूतीका भवन्ति॰ पञ्चैते संभारा भवन्ति॰ कृष्णाजिनेन संभरति॰ लोमतः संभरति॰ परिगृह्यायन्ति॰ बहवो हरन्ति॰ उद्धते सिकतोपोप्ते परिश्रिते निदधति॰ मदन्ती-भिरुपसृजति॰ अर्मकपालैः सꣳसृजति॰ शर्कराभिः सꣳसृजति॰ अजलोमैः सꣳसृजति॰ कृष्णाजिनस्य लोमभिः सꣳसृजति॰ परिश्रिते करोति॰ न कुर्वन्नभिप्राण्यात्॰ अपहाय प्राणिति॰ न प्रवर्ग्यं चादित्यं चान्तरेयात्॰ वेणुना करोति॰ स्युद्धिं करोति॰ छन्दोभिः करोति॰ यजुषा बिलं करोति व्यावृत्त्यै। इयन्तं करोति॰ अपरिमितं करोति॰ परिग्रीवं करोति॰ अश्वशकेन धूपयति॰ इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामीति॰ विशेति राजन्यस्य ब्रूयात्॰ पशुभिरिति वैश्यस्य॰ आच्छृणत्ति॰ अजक्षीरेणाच्छृणत्ति॰ छन्दोभिराच्छृणत्ति॰ ॥

मैसं [ ४·९·२ ]—

नमो वाचे नमो वाचस्पतये या चोदिता या च नोदिता तस्यै वाचे नमो नमा ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रविद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रविदः प्रादुर्दैवीँ वाचमुद्यासं जुष्टां देवेभ्यः स्वधावरीं पितृभ्योऽनुमता-न्मनुष्येभ्यस्तन्मा देवा अवन्तु शोभायि पितरोऽनुमदन्तु ॥[1]

[ ४·९·१ ]–

युञ्जते मन उत युञ्जते....॥ देवस्य त्वा....॥ अभ्रिरसि नारिरसि ॥ उत्तिष्ठ ब्रह्मणस्पते ....॥ प्रैतु ब्रह्मणस्पतिः....॥ देवी द्यावापृथिवी अनु मेऽमꣳ-साथामृध्यासमद्य मखस्य शिरः ॥ मखाय त्वा ॥ मखस्य त्वा शीर्ष्णे ॥ देवीर्वम्रीरस्य भुवनस्य प्रथमजा ऋतावरीर्ऋध्यासमद्य....॥ इयत्यग्र आसीद्‌तो देव्यृध्यासमद्य....॥ इन्द्रस्यौजोऽसि प्रजापते रेत ऋध्यासमद्य....॥ मखस्य त्वा शीर्ष्णे ॥ मधु त्वा मधुला कृणोतु ॥ मखस्य शिरोऽसि ॥ यज्ञस्य पदे स्थः ॥ गायत्रोऽसि ॥ त्रैष्टुभोऽसि ॥ जागतोऽसि ॥ मखस्य रास्नासि ॥ सूर्यस्य रसा आश्रयस्व ॥ वृष्णो अश्वस्य निष्पदसि वृष्णस्त्वाश्वस्य निष्पदा धूपयामसि ॥ वरुणस्त्वा धृतव्रतो धूपयतु मित्रावरुणौ ध्रुवेण धर्मणा ॥ अदितिष्ट्वा देवी विश्व-देव्यवती पृथिव्याः सधस्थे अङ्गिरस्वत् खनत्ववट देवानां त्वा पत्नीर्देवीर्विश्वदेव्यवतीः पृथिव्याः सधस्थे अङ्गिरस्वद्दधतु महावीरान् ॥ अर्चिषे त्वा शोचिषे त्वा ज्योतिषे त्वा हरसे त्वा ॥

१. पूर्वा शान्तिः।

अभीमान्महिना दिवो मित्रो बभूव सप्रथाः । उत श्रवस आ पृथिवीम् ॥

मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् ॥

देवस्त्वा सवितोद्वपतु....॥ ऋजवे त्वा ॥ साधवे त्वा ॥ सुक्षित्यै त्वा ॥ इदमहम-मुमामुष्यायणं तेजसा ब्रह्मवर्चसेन पर्यूहामि ॥ इदमहममुमामुष्यायण७ विशा क्षत्रेण पर्यूहामि॥ इदमहममुमामुष्यायणं प्रजया पशुभिः पर्यूहामि॥ छृणत्तु त्वा वाक्॥ छृणत्तु त्वोर्क् ॥ छृणत्तु त्वा हविः॥ देव पुरश्चरस ऋध्यासं त्वा ॥

वामासं—

ऋचं वाचं प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये चक्षुः श्रोत्रं प्रपद्ये । वागोजः सहौजो मयि प्राणापानौ ॥ यन्मे छिद्रं चक्षुषो हृदयस्य मनसो वातितृण्णं बृहस्पतिर्मे तद्दधातु । शं नो भवतु भुवनस्य यस्पतिः ॥ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ कया नश्चित्र आभुवदूती .... ॥ कस्त्वा सत्या मदानां ॥.... अभी षु णः सखीनामविता ....॥

कया त्वं न ऊत्याभि प्रमन्दसे वृषन् । कया स्तोतृभ्य आभर ॥

इन्द्रो विश्वस्य राजति । शं नो अस्तु द्विपदे शं चतुष्पदे ॥

शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः॥

शं नो वातः पवता७ शं नस्तपतु सूर्यः। शं नः कनिक्रदद्देवः पर्जन्यो अभिवर्षतु ॥

अहानि शं भवन्तु नः श७ रात्रीः प्रतिधीयताम् ।

शं न इन्द्राग्नी भवतामवोभिः शं न इन्द्रावरुणा रातहव्या ।

शं न इन्द्रापूषणा वाजसातौ शमिन्द्रासोमा सुविताय शं योः ॥

शं नो देवीरभिष्टय....॥

स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः ॥

आपो हि ष्ठा मयोभुवस्ता .... ॥ यो वः शिवतमो .... ॥ तस्मा अरं गमाम वो....॥ द्यौः शान्तिरन्तरिक्ष७ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः। वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्व७ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ दृते दृ७ह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्ष-न्ताम् । मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे । मित्रस्य चक्षुषा समीक्षामहे ॥ दृते दृ७ह मा । ज्योक्ते संदृशि जीव्यासं ज्योक्ते संदृशि जीव्यासम् ॥

नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे ।
अन्याँस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्य७ शिवो भव ॥
नमस्ते अस्तु विद्युते नमस्ते स्तनयित्नवे ।
नमस्ते भगवन्नस्तु यतः स्वः समीहसे ॥
यतो यतः समीहसे ततो नो अभयं कुरु ।
शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः ॥

सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शत७ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ॥[1] ३६.१-२४

देवस्य त्वा सवितुः .... हस्ताभ्याम् । आददे नारिरसि ॥ युञ्जते मन उत युञ्जते....॥ देवी द्यावापृथिवी मखस्य वामद्य शिरो राध्यासं देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ देव्यो वम्र्यो भूतस्य प्रथमजा मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्याः। मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ इयत्यग्र आसीन्मखस्य तेऽद्य शिरो राध्यासं देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ इन्द्रस्यौजः स्थ मखस्य वोऽद्य शिरो राध्यासं देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ प्रैतु ब्रह्मणस्पतिः....॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ अश्वस्य त्वा वृष्णः शक्ना धूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ऋजवे त्वा ॥ साधवे त्वा ॥ सुक्षित्यै त्वा ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ मखाय त्वा मखस्य त्वा शीर्ष्णे ॥ ३७.१-१०

---

१. शान्तिः ।

माशब्रा [ १४.१.२ ]—स वै संभारान् संभरति० कृष्णाजिने संभरति० लोमतः० उत्तरतः० प्राचीनग्रीवे० अभ्र्या० औदुम्बरी भवति० अथो वैकङ्कती० अरत्निमात्री भवति० तामादत्ते देवस्य त्वा.... नारिरसीति० ताᳬं सव्ये पाणौ कृत्वा दक्षिणेनाभिमृश्य जपति युञ्जते मन....परिष्टुतिरिति०अथ मृत्पिण्डं परिगृह्णाति। अभ्र्या च दक्षिणतो हस्तेन च। हस्तेनैवोत्तरतः देवी द्यावापृथिवी....इति० अथ वल्मीकवपां देव्यो वम्र्य....इति० अथ वराहविहतम् इयत्यग्र आसीत्....इति० अथादारान् इन्द्रस्यौजः स्थ .... इति० अथाजाक्षीरम्० मखाय त्वा मखस्य त्वा शीर्ष्णे इति० तान् संभृतानभिमृशति मखाय त्वा मखस्य त्वा शीर्ष्णे इति० अथोत्तरतः परिश्रितं भवति। तदभिप्रयन्तो जपन्ति प्रैतु ब्रह्मणस्पतिः.... इति० अथ खरे सादयति मखाय त्वा मखस्य त्वा शीर्ष्णे इति० अथ प्रयौति मखाय त्वा मखस्य त्वा शीर्ष्णे इति० अथ मृत्पिण्डमुपादाय महावीरं करोति मखाय त्वा मखस्य त्वा शीर्ष्णे इति० प्रादेशमात्रम्० मध्ये संगृहीतम्० अथोपरिष्टात् त्र्यङ्गुलं मुखमुन्नयति० तं निष्ठितमभिमृशति मखस्य शिरोऽसीति० एवमितरौ। तूर्ष्णीं पिन्वने। तूर्ष्णीᳬं रौहिणकपाले० अथोपशयायै मृत्पिण्डं परिशिनष्टि प्रायश्चित्तिभ्यः। अथ गवेधुकाभिर्हिन्वति० मखाय त्वा मखस्य त्वा शीर्ष्णे इति० एवमितरौ। तूर्ष्णीं पिन्वने। तूर्ष्णीᳬं रौहिणकपाले। अथैनान् धूपयति अश्वस्य त्वा वृष्णः शक्ना धूपयामि.... इति० एवमितरौ। तूर्ष्णीं पिन्वने। तूर्ष्णीᳬं रौहिणकपाले। अथैनान् श्रपयति० तद् येनैव सुशृताः स्युस्तेन श्रपयेत्। अथ पचनमवधाय महावीरमवदधाति मखाय त्वा मखस्य त्वा शीर्ष्णे इति० एवमितरौ। तूर्ष्णीं पिन्वने। तूर्ष्णीᳬं रौहिणकपाले। तान् दिवैवोपवपेत्। दिवोद्वपेत्० स उद्वपति ऋजवे त्वा... इति० तूर्ष्णीं पिन्वने। तूर्ष्णीᳬं रौहिणकपाले। अथैनानाच्छृणत्त्यजायै पयसा मखाय त्वा मखस्य त्वा शीर्ष्णे इति० एवमितरौ। तूर्ष्णीं पिन्वने। तूर्ष्णीᳬं रौहिणकपाले०॥

[ १४.३.२.२२–३१ ]- संवत्सरो वै प्रवर्ग्यः० इमे वै लोकाः प्रवर्ग्यः० एता वै देवताः प्रवर्ग्यः० यजमानो वै प्रवर्ग्यः० अग्निहोत्रं वै प्रवर्ग्यः० दर्शपूर्णमासौ वै प्रवर्ग्यः० चातुर्मास्यानि वै प्रवर्ग्यः० पशुबन्धो वै प्रवर्ग्यः० सोमो वै प्रवर्ग्यः० ॥

**वाकासं—**

**---॥ द्यौः शान्तिरन्तरिक्षᳬं....वनस्पतयः शान्तिः शान्तिरेव शान्तिः॥ दृते दृᳬंह.... ॥---॥ तच्चक्षुर्....शृणुयाम शरदः शतम्॥ ३६.१.१–२४**

**---॥ देव्यो वम्रियो भूतस्य....॥ इयत्यग्र आसीर्मखस्य....॥---॥ ३७.१.१-१०.**

काशब्रा [ १६.१.२ ] ≡ माशब्रा १४.१.२

[ १६.२.४.१८–२६ ] ≡ माशब्रा १४.३.२.२२–३१

ऐब्रा [ १.१८ ]—अध्वर्यू घर्मं संभरतः ॥

शांब्रा [ ८.३ ]— न प्रथमयज्ञे प्रवृञ्ज्यात् ० कामं तु योऽनूचानः श्रोत्रियः स्यात् तस्य प्रवृञ्ज्यात् ० ॥

गोब्रा [ २.२.६ ]— तस्मादध्वर्यू घर्मं संभरतः ० ॥

## ५. अप्सुदीक्षा दीक्षणीयेष्टिश्च

तैसं [ १.२.१ ]—

आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे ॥ ओषधे त्रायस्वैनम् ॥ स्वधिते मैनꣳ हिꣳसीः ॥ देवश्रूरेतानि प्र वपे ॥ स्वस्त्युत्तराण्यशीय ॥ आपो अस्मान् मातरः शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु ॥ विश्वमस्मत् प्र वहन्तु रिप्रम् ॥ उदाभ्यः शुचिरा पूत एमि ॥ सोमस्य तनूरसि तनुवं मे पाहि ॥ महीनां पयोऽसि वर्चोधा असि वर्चो मयि धेहि ॥ वृत्रस्य कनीनिकासि चक्षुष्पा असि चक्षुर्मे पाहि ॥ चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ॥ तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयम् ॥ आ वो देवास ईमहे सत्यधर्माणो अध्वरे यद् वो देवास आगुरे यज्ञियासो हवामहे ॥ इन्द्राग्नी द्यावापृथिवी आप ओषधीः ॥ त्वं दीक्षाणामधिपतिरसि ॥ इह मा सन्तं पाहि ॥

[ ६.१.१–२ ]— केशश्मश्रु वपते । नखानि नि कृन्तते० अप्सु स्नाति० तीर्थे स्नाति० अपोऽश्नाति० वाससा दीक्षयति । सौम्यं वै क्षौमं देवतया० अश्नाति० नवनीतेनाभ्यङ्क्तेऽनुलोमं यजुषा० यदाङ्क्ते० दक्षिणं पूर्वमाङ्क्ते० न नि धावते० पञ्च कृत्व आङ्क्ते० परिमितमाङ्क्ते० सतूलयाङ्क्ते० यद्दर्भपुञ्जीलैः पवयति० द्वाभ्यां पवयति० त्रिभिः पवयति० पञ्चभिः पवयति० षड्भिः पवयति० सप्तभिः पवयति० नवभिः पवयति० एकविꣳशत्या पवयति० बहिः पवयित्वान्तः प्र पादयति० ॥

[ ३.५.६ ]—

प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु ।
अथाहमनुकामिनी स्वे लोके विशा इह ॥
सुप्रजसस्त्वा वयꣳ सुपत्नीरुप सेदिम ।
अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् ॥

तैत्रा [ १.४.८ ]—

पवमानः सुवर्जनः । पवित्रेण विचर्षणिः । यः पोता स पुनातु मा ॥
पुनन्तु मा देवजनाः । पुनन्तु मनवो धिया । पुनन्तु विश्व आयवः ॥
जातवेदः पवित्रवत् । पवित्रेण पुनाहि मा ।
शुक्रेण देव दीद्यत् । अग्ने क्रत्वा क्रतूꣳरनु ॥
यत्ते पवित्रमर्चिषि । अग्ने विततमन्तरा । ब्रह्म तेन पुनीमहे ॥
उभाभ्यां देव सवितः । पवित्रेण सवेन च । इदं ब्रह्म पुनीमहे ॥
वैश्वदेवी पुनती देव्यागात् । यस्यै बह्वीस्तनुवो वीतपृष्ठाः ।
तया मदन्तः सधमाद्येषु । वयꣳ स्याम पतयो रयीणाम् ॥
वैश्वानरो रश्मिभिर्मा पुनातु । वातः प्राणेनेषिरो मयोभूः ।
द्यावापृथिवी पयसा पयोभिः । ऋतावरी यज्ञिये मा पुनीताम् ॥
बृहद्भिः सवितस्तृभिः । वर्षिष्ठैर्देव मन्मभिः । अग्ने दक्षैः पुनाहि मा ॥
येन देवा अपुनत । येनापो दिव्यं कशः ।
तेन दिव्येन ब्रह्मणा । इदं ब्रह्म पुनीमहे ॥
यः पावमानीरध्येति । ऋषिभिः संभृतꣳ रसम् ।
सर्वꣳ स पूतमश्नाति । स्वदितं मातरिश्वना ॥
पावमानीर्यो अध्येति । ऋषिभिः संभृतꣳ रसम् ।
तस्मै सरस्वती दुहे । क्षीरꣳ सर्पिर्मधूदकम् ॥
पावमानीः स्वस्त्ययनीः । सुदुघा हि पयस्वतीः ।
ऋषिभिः संभृतो रसः । ब्राह्मणेष्वमृतꣳ हितम् ॥
पावमानीर्दिशन्तु नः । इमं लोकमथो अमुम् ।
कामान्त्समर्धयन्तु नः । देवीर्देवैः समाभृताः ॥
पावमानीः स्वस्त्ययनीः । सुदुघा हि घृतश्चुतः ।
ऋषिभिः संभृतो रसः । ब्राह्मणेष्वमृतꣳ हितम् ॥
येन देवाः पवित्रेण । आत्मानं पुनते सदा ।
तेन सहस्रधारेण । पावमान्यः पुनन्तु मा ॥
प्राजापत्यं पवित्रम् । शतोद्यामꣳ हिरण्मयम् ।
तेन ब्रह्मविदो वयम् । पूतं ब्रह्म पुनीमहे ॥
इन्द्रः सुनीती सह मा पुनातु । सोमः स्वस्त्या वरुणः समीच्या ।
यमो राजा प्रमृणाभिः पुनातु मा । जातवेदा मोर्जयन्त्या पुनातु ॥

[ ३.७.१२ ]—

यद्देवा देवहेडनम् । देवासश्चकृमा वयम् ।
आदित्यास्तस्मान्मा मुञ्चत । ऋतस्यर्तेन मामुत ॥
देवा जीवनकाम्या यत् । वाचानृतमूदिम ।
अग्निर्मा तस्मादेनसः । गार्हपत्यः प्रमुञ्चतु ।
दुरिता यानि चकृम । करोतु मामनेनसम् ॥
ऋतेन द्यावापृथिवी । ऋतेन त्वꣳ सरस्वति ।
ऋतान्मा मुञ्चताꣳहसः । यदन्यकृतमारिम ॥
सजातशꣳसादुत वा जामिशꣳसात् । ज्यायसः शꣳसादुत वा कनीयसः ।
अनाज्ञातं देवकृतं यदेनः । तस्मात्त्वमस्माञ्जातवेदो मुमुग्धि ॥
यद्वाचा यन्मनसा । बाहुभ्यामूरुभ्यामष्ठीवद्भ्याम् ।
शिश्नैर्यदनृतं चकृमा वयम् । अग्निर्मा तस्मादेनसः । [ गार्हपत्यः प्रमुञ्चतु ।
दुरिता यानि चकृम । करोतु मामनेनसम् ॥ ]
यद्धस्ताभ्यां चकर किल्बिषाणि । अक्षाणां वग्नुमुपजिघ्नमानः ।
दूरेपश्या च राष्ट्रभृच्च । तान्यप्सरसावनुदत्तामृणानि ॥
अदीव्यन्नृणं यदहं चकार । यद्वादास्यन्त्संजगारा जनेभ्यः ।
अग्निर्मा तस्मादेनसः । [ गार्हपत्यः प्रमुञ्चतु ।
दुरिता यानि चकृम । करोतु मामनेनसम् ॥ ]
यन्मयि माता गर्भे सति । एनश्चकार यत्पिता ।
अग्निर्मा तस्मादेनसः । [ गार्हपत्यः प्रमुञ्चतु ।
दुरिता यानि चकृम । करोतु मामनेनसम् ॥ ]
यदा पिपेष मातरं पितरम् । पुत्रः प्रमुदितो धयन् ।
अहिꣳसितौ पितरौ मया तत् । तदग्ने अनृणो भवामि ॥
यदन्तरिक्षं पृथिवीमुत द्याम् । यन्मातरं पितरं वा जिहिꣳसिम ।
अग्निर्मा तस्मादेनसः । [ गार्हपत्यः प्रमुञ्चतु ।
दुरिता यानि चकृम । करोतु मामनेनसम् ॥ ]
यदाशसा निशसा यत्पराशसा । यदेनश्चकृमा नूतनं यत् पुराणम् ।
अग्निर्मा तस्मादेनसः । [ गार्हपत्यः प्रमुञ्चतु ।
दुरिता यानि चकृम । करोतु मामनेनसम् ॥ ]

अतिक्रामामि दुरितं यदेनः । जहामि रिप्रं परमे सधस्थे ।
यत्र यन्ति सुकृतो नापि दुष्कृतः । तमारोहामि सुकृतां नु लोकम् ॥
त्रिते देवा अमृजतैतदेनः । त्रित एतन्मनुष्येषु मामृजे ।
ततो मा यदि किंचिदानशे । अग्निर्मा तस्मादेनसः ।
गार्हपत्यः प्रमुञ्चतु । दुरिता यानि चकृम । करोतु मामनेनसम् ॥
दिवि जाता अप्सु जाताः । या जाता ओषधीभ्यः ।
अथो या अग्निजा आपः । ता नः शुन्धन्तु शुन्धनीः ॥
यदापो नक्तं दुरितं चराम । यद्वा दिवा नूतनं यत् पुराणम् ।
हिरण्यवर्णास्तत उत्पुनीत नः ॥
इमं मे वरुण [श्रुधी हवमद्या च मृडय । त्वामवस्युरा चके ॥]
तत्त्वा यामि [ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्र मोषीः ॥]
त्वं नो अग्ने [वरुणस्य विद्वान् देवस्य हेडोऽव यासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्र मुमुग्ध्यस्मत् ॥]
स त्वं नो अग्ने [ऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अव यक्ष्व नो वरुणꣳ रराणो वीहि मृडीकꣳ सुहवो न एधि ॥]
त्वमग्ने अयासि । [अयासन् मनसा हितः ।
अयासन् हव्यमूहिषे । अया नो धेहि भेषजम् ॥]

[ ३.७.७.१ ]—

दीक्षासि तपसो योनिः । तपोऽसि ब्रह्मणो योनिः । ब्रह्मासि क्षत्रस्य योनिः । क्षत्रमस्यृतस्य योनिः । ऋतमसि भूरारभे । श्रद्धां मनसा । दीक्षां तपसा । विश्वस्य भुवनस्याधिपत्नीम् । सर्वे कामा यजमानस्य सन्तु ॥

[ १.५.९ ]— तस्मा एतमाग्नावैष्णवमेकादशकपालं दीक्षणीयं निरवपन् ० तान् पत्नीसंयाजान्त उपानयन् ० एवꣳ हि देवा अकुर्वत ० इत्यु वै मनुष्याः कुर्वते ॥

[ २.२.२ ] दीक्षिष्यमाणः । [1]सप्तहोतारं मनसानुद्रुत्याहवनीये जुहुयात् ॥

मैसं [ १.२.१ ]—

आपो देवीः शुन्धत मा मधुमन्तं मधुमतीर्देवयज्यायै ॥ ओषधे त्रायस्वैनम् ॥

---

१. द्रष्टव्यं श्रौ. १ पृ. १२५ ।

स्वधिते मैनꣳ हिꣳसीः ॥ या ते शिवतमा तनूस्तयैनमुपस्पृश ॥ देवश्रुदिमान् प्रवपे ॥ स्वस्त्युत्तरं अशीय ॥

हिरण्यवर्णाः शुचयः पावकाः प्रचक्रमुर्हित्वावद्यमापः ।
शतं पवित्रा विततान्यासु तेभिर्मा देवः सविता पुनातु ॥
आपो मा मातरः सूदयन्तु घृतेन मा घृतप्वः पुनन्तु ।
विश्वꣳ हि रिप्रं प्रवहन्तु देवीः ॥
उदिदाभ्यः शुचिरा पूत एमि ॥ विष्णोः शर्मासि शर्म मे यछ ॥ ऊर्जे त्वा ॥ महीनां पयोऽस्यपामोषधीनाꣳ रसः ॥ वर्चोधा असि वर्चो मे धेहि ॥ वृत्रस्यासि कनीनिका चक्षुषो मे वयोधा अन्तरहं त्वया द्वेषो अन्तररातीर्दधे महता पर्वतेन । चक्षुष्पा असि चक्षुर्मे पाहि ॥

चित्पतिस्त्वा पुनातु [ अछिद्रेण पवित्रेण । वसोः सूर्यस्य रश्मिभिः ॥ ]
वाचस्पतिस्त्वा पुनातु [ अछिद्रेण पवित्रेण । वसोः सूर्यस्य रश्मिभिः ॥ ]
देवस्त्वा सविता पुनात्वछिद्रेण पवित्रेण । वसोः सूर्यस्य रश्मिभिः ॥
तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयम् ॥

[ ३.६.१ ]– वेदिमति दीक्षते ॥

[ ३.६.२–३ ]–केशश्मश्रु वपते दतो धावते नखान्निकृन्तते स्नाति० यदप्सु स्नाति० यत्तृणमन्तर्दधाति० अश्नाति० दीक्षित आङ्क्तेऽभ्य क्ते वासः परिधत्ते० नवनीतेनाभ्यङ्क्ते दर्भपिञ्जूलाभ्याꣳ समायौति० प्रस्त्राङ्क्ते० ईषीकयाङ्क्ते० सतूल्याङ्क्ते० दक्षिणं पूर्वमाङ्क्ते० त्रिरन्यत्त्रिरन्यदाङ्क्ते० न पुनर्निषेवयति० तदाञ्जनं त्रैककुभमाङ्क्ते० ऊर्ध्वं चावाञ्चं च पावयति० यं द्विष्यात् तमक्षणया पावयेत्० तस्माद् दर्भः पवित्रम्। द्वाभ्यां पावयति० त्रिः पावयति० सप्तभिः पावयति० एकविꣳशत्या पावयति० ॥

[ ३.६.१ ]–आग्नावैष्णवमेकादशकपालं निर्वपेत्० चरू कुर्वन्ति० ॥

[ १.९.८ ] [1]एतैरेव जुहुयात् पुरस्ताद्दीक्षायाः ।

**कासं [ २.१ ]—**

आर्द्रदानवस्स्थ जीवदानवस्स्थोन्दतीरिह मावत ॥ आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे ॥ ओषधे त्रायस्वैनम् ॥ स्वधिते मैनं हिंसीः ॥ देवायुरिमान् प्रवपे ॥ स्वस्त्युत्तरीं अशीय ॥

---

१. सैभारयजुर्भिः । द्रष्टव्यं श्रौ १ पृ.१२९ ।

शं न आपो धन्वन्याश्शं नस्सन्त्वनूप्याः ।
शं नस्समुद्रिया आपश्शमु नस्सन्तु कूप्याः ॥
आपो अस्मान् मातरस्सूदयन्तु घृतेन मा घृतप्वः पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्ति देवीः ॥ उदिदाभ्यः शुचिरा पूत एमि ॥

सोमस्य दात्रमसि तनूरसि तन्वं मे पाहि ॥ महीनां पयोऽस्यपामोषधीनां रसो वर्चोधा असि वर्चो मे धेहि ॥ मित्रस्यासि कनीनिकान्तरहं त्वया द्वेषमन्तरराती र्दधे चक्षुर्धा असि चक्षुर्मे धेहि ॥ चित्पतिस्त्वा पुनातु [ अच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ ] वाक्पतिस्त्वा पुनातु [ अच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ ] देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयम् ॥

[ २२.१३ ]—आग्नावैष्णवमेकादशकपालं निर्वपति० चरुर्घृते स्यात् प्रजाकामस्य वा पशुकामस्य वा० आङ्क्तेऽभ्यङ्क्तेऽश्नाति वासः परिधत्ते० केशश्मश्रु वपते नखान् निकृन्तते दतो धावते० स्नाति० ग्रीवादघ्ने स्नेयम्० न वहन्तीभिस्स्नायात्० न कूप्याभिस्स्नायात्० स्थावराभिस्स्नेयम्० ॥

[ २३.१ ]—यदभ्यनक्ति० यन्नवनीतेनाभ्यङ्क्ते० वासः परिधत्ते० आङ्क्ते० द्विर्दक्षिणमाङ्क्ते० सकृत् सव्यम्० त्रिर्दक्षिणमाङ्क्ते द्विस्सव्यम्० दक्षिणं पूर्वमाङ्क्ते० यजुषाङ्क्ते० इषीकयाङ्क्ते० सतूला भवति० पावयति० यद्दर्भपिञ्जूलैः पावयति० द्वाभ्यां पावयति० त्रिभिः पावयति० पञ्चभिः पावयति० सप्तभिः पावयति० नवभिः पावयति० एकविंशत्या पावयति० अन्वञ्चं पावयति० बहिष्पावयति० ॥

[ ९.१६ ]—दीक्षिष्यमाणस्सप्तहोत्रा पुरस्ताज्जुहुयात् ॥

कपिसं [ १.१३ ]—

आर्द्रदानव स्थ जीवदानव स्थ ॥ आप उन्दन्तु....॥---॥ देवायुरिमान् प्रवपेत् ॥ ---॥ आपो अस्मान्....प्रवहन्तु....॥ शं न आपो.... समुद्रियाः सन्तु....॥---॥ वृत्रस्यासि कनीनिका .... । --- ॥

[ ३५.६ ] ≡ कासं २२.१३
[ ३५.७ ] ≡ कासं २३.१

वामासं —

एदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्वे ।
ऋक्सामाभ्यां संतरन्तो यजुर्भी रायस्पोषेण समिषा मदेम ॥
इमा आपः शमु मे सन्तु देवीः ॥ ओषधे त्रायस्व ॥ स्वधिते मैनं हिंसीः ॥

आपो अस्मान् मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।
विश्वꣳ हि रिप्रं प्रवहन्ति देवीः ॥

उदिदाभ्यः शुचिरा पूत एमि ॥ दीक्षातपसोस्तनूरसि तां त्वा शिवाꣳ शग्मां परिदधे भद्रं वर्णं पुष्यन् ॥ महीनां पयोऽसि वर्चोदा असि वर्चो मे देहि ॥ वृत्रस्यासि कनीनकश्चक्षुर्दा असि चक्षुर्मे देहि ॥ चित्पतिर्मा पुनातु [अच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥ ] वाक्पतिर्मा पुनातु [अच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥ ] देवो मा सविता पुनात्वच्छिद्रेण । पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् ॥

आ वो देवास ईमहे वामं प्रयत्यध्वरे ।
आ वो देवास आशिषो यज्ञियासो हवामहे ॥

स्वाहा यज्ञं मनसः ॥ स्वाहोरोरन्तरिक्षात् ॥ स्वाहा द्यावापृथिवीभ्याम् ॥ स्वाहा वातादारभे ॥ स्वाहा ॥ ४.१–६

माशब्रा [ ३.१.१.११ ]– अथारणी पाणौ कृत्वा शालामध्यवस्यति । स पूर्वार्ध्यꣳ स्थूणाराजमभिपद्यैतद्यजुराह एदमगन्म....इति ० ॥

[ ३.१.२–३ ]– अपराह्णे दीक्षेत । पुरा केशश्मश्रोर्वपनाद्यत् कामयेत तदश्नीयात् । यद्वा संपद्येत । व्रतꣳ ह्येवास्यातोऽशनं भवति । यद्यु नाशिशिषेदपि कामं नाश्नीयात् । अथोत्तरेण शालां परिश्रयन्ति । तदुदकुम्भमुपनिदधति । तन्नापित उपतिष्ठते । तत् केशश्मश्रु च वपते नखानि च निकृन्तते० तद्धैके सर्व एव वपन्ते० तदु तथा न कुर्यात्० स वै नखान्येवाग्रे निकृन्तते । दक्षिणस्यैवाग्रे० अङ्गुष्ठयोरेवाग्रे० स दक्षिणमेवाग्रे गोदानं वितारयति० स दक्षिणमेवाग्रे गोदानमभ्युनत्ति इमा आपः शमु मे सन्तु देवीरिति० अथ दर्भतरुणकमन्तर्दधाति ओषधे त्रायस्वेति० अथ क्षुरेणाभिनिदधाति स्वधिते मैनꣳ हिꣳसीरिति० प्रच्छिद्योदपात्रे प्रास्यति । तूष्णीमेवोत्तरं गोदानमभ्युनत्ति । तूष्णीं दर्भतरुणकमन्तर्दधाति । तूष्णीं क्षुरेणाभिनिधाय प्रच्छिद्योदपात्रे प्रास्यति । अथ नापिताय क्षुरं प्रयच्छति । स केशश्मश्रु वपति । स यदा केशश्मश्रु वपति । अथ स्नाति० स स्नाति आपो अस्मान् मातरः शुन्धयन्तु .... इति ० अथ प्राङिवोदङ्ङुत्क्रामति उदिदाभ्यः शुचिरापूत एमीति० अथ वासः परिधत्ते० तद्वा अहतꣳ स्यात्० अथो यदिदꣳ स्नातवस्त्रं निहितमपल्पूलनकृतं भवति तेनो हापि दीक्षेत । तत्परिधत्ते दीक्षातपसोस्तनूरसि....इति० अथैनꣳ शालां प्रपादयति । स धेन्वै चानडुहश्च नाश्नीयात्० तदु होवाच याज्ञवल्क्यः– अश्नाम्येवाहमꣳसलं चेद् भवतीति ॥ अपः प्रणीयाग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपति०

तद्वैके आदित्येभ्यश्चरुं निर्वपन्ति० तस्य सप्तदश सामिधेन्यो भवन्ति । उपांशु देवते यजति । पञ्च प्रयाजा भवन्ति त्रयोऽनुयाजाः। संयाजयन्ति पत्नीः सर्वत्वायैव । समिष्टयजुरेव न जुहोति० अथाग्रेण शालां तिष्ठन्नभ्यङ्क्ते० तद्वै नवनीतं भवति० तमभ्यनक्ति शीर्षतोऽग्रे आ पादाभ्यामनुलोमं महीनां पयोसि....इति० अथाक्ष्यावानक्ति० त्रैककुदं भवति० यदि त्रैककुदं न विन्देदप्यत्रैककुदमेव स्यात्० शरेषीकयानक्ति० सतूला भवति० स दक्षिणमेवाग्र आनक्ति० स आनक्ति वृत्रस्यासि कनीनकः.... इति० स दक्षिणं सकृद्यजुषानक्ति सकृत्तूष्णीम् । अथोत्तरं सकृद्यजुषानक्ति द्विस्तूष्णीम्० पञ्च कृत्व आनक्ति । अथैनं दर्भपवित्रेण पावयति० अथो अपि त्रीणि स्युः० अथो अपि सप्त स्युः० तं सप्तभिः सप्तभिः पावयति चित्पतिर्मा पुनातु....इति० अथाशिषामारम्भं वाचयति आ वो देवास....हवामह इति० अथाङ्गुलीर्न्यचति स्वाहा यज्ञं मनस इति द्वे, स्वाहोरोरन्तरिक्षादिति द्वे, स्वाहा द्यावापृथिवीभ्यामिति द्वे, स्वाहा वातादारभ इति मुष्टीकरोति० अथ यत् स्वाहा स्वाहेति करोति० अत्रो एव वाचं प्रच्छति० अथैनं शालां प्रपादयति । स जघनेनाहवनीयमेति । अग्रेण गार्हपत्यं सोऽस्य संचरो भवत्या सुत्यायै० ॥

**वाकासं [ ४.१–२ ] —**

**---॥ वृत्रस्य कनीनकासि .... ॥ ---॥ स्वाहा वातादारभे ॥**

काशब्रा [ ४.१.१.७ ] ≡ माशब्रा [ ३.१.१.११ ]

[ ४.१.२-३ ] – --- स एतेनैव त्रिः पवयति० नव कृत्वः पवयति० ---॥

ऐब्रा [ १.१ ]–आग्नावैष्णवं पुरोळाशं निर्वपन्ति दीक्षणीयमेकादशकपालम्० घृते चरुं निर्वपेत योऽप्रतिष्ठितो मन्येत० आमावास्येन वा हविषेष्ट्वा पौर्णमासेन वा तस्मिन्नेव हविषि तस्मिन् बर्हिषि दीक्षेत० ॥

[ १.३ ]– पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्ति । अद्भिरभिषिञ्चन्ति० नवनीतेनाभ्यञ्जन्ति० आञ्जन्त्येनम्० एकविंशत्या दर्भपिञ्जूलैः पावयन्ति० दीक्षितविमितं प्रपादयन्ति० ॥

**अशौसं—**

**अभ्यञ्जनं सुरभि सा समृद्धिर्हिरण्यं वर्चस्तदु पूत्रिममेव ।**
**सर्वा पवित्रा वितताध्यस्मत्तन्मा तारीन्निर्ऋतिर्मो अरातिः ॥ ६.१२४.३**
**पुनन्तु मा देवजनाः पुनन्तु मनवो धिया ।**
**पुनन्तु विश्वा भूतानि पवमानः पुनातु मा ॥ ६.१९.१**

अपैसं—

अभ्यञ्जनं स्वत्याधिवासश्चन्द्रं (?) हिरण्यमधियोऽत्र सद्यत।
सर्वा पवित्रा वितताध्यस्मिन् शतं जीवाति शरदस्तवायम् ॥ १९.४०.६
पुनन्तु मा.... पवमानः पुनातु माम् ॥ १९.७.११

## ६. दीक्षणीयेष्टिहौत्रम्

ऋसं—

अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः॥ ६.१६.३४
त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतुः ॥१.९१.५
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ।
त्वां शश्वन्त उप यन्ति वाजाः ॥ ७.१.३
इमो अग्ने वीततमानि हव्याजस्रो वक्षि देवतातिमच्छ।
प्रति न ईं सुरभीणि व्यन्तु ॥ ७.१.१८

ऐब्रा [ ३.४५ ]—तस्मादेतेषु पूर्वेषु कर्मसु[1] शनैस्तरां शनैस्तरामिवानुब्रूयात्।

[ १.१ ]—सप्तदश सामिधेनीरनुब्रूयात्।

[ १.४-६ ]— **त्वमग्ने सप्रथा असि** ( ऋसं ५.१४.४ ) **सोम यास्ते मयोभुवः** (ऋसं १.९१.९) इत्याज्यभागयोः पुरोनुवाक्ये अनुब्रूयाद्यः पूर्वमनीजानः स्यात् तस्मै० **अग्निः प्रत्नेन मन्मना** ( ऋसं ८.४४.१२ ) **सोम गीर्भिष्ट्वा वयम्** ( ऋसं १.९१.११ ) इति यः पूर्वमीजानः स्यात् तस्मै० तत्तन्नादृत्यम्। अग्निर्वृत्राणि जङ्घनत्, त्वं सोमासि सत्पतिरिति वार्त्रघ्नावेव कुर्यात्० **अग्निर्मुखं प्रथमो देवतानाम्, अग्निश्च विष्णो तप उत्तमं महः** इत्याग्नावैष्णवस्य हविषो याज्यानुवाक्ये भवतः० गायत्र्यौ स्विष्टकृतः संयाज्ये कुर्वीत तेजस्कामो ब्रह्मवर्चसकामः० उष्णिहा वायुष्कामः कुर्वीत० अनुष्टुभौ स्वर्गकामः कुर्वीत० बृहत्यौ श्रीकामो यशस्कामः कुर्वीत० पङ्क्ती यज्ञकामः कुर्वीत० त्रिष्टुभौ वीर्यकामः कुर्वीत० जगत्यौ पशुकामः कुर्वीत० विराजावन्नाद्यकामः कुर्वीत० विराजावेव कर्तव्ये प्रेद्धो अग्ने, इमो अग्न इत्येते ॥

शांब्रा [ ७.१-३ ]—आग्नावैष्णवमेकादशकपालं पुरोलाशं निर्वपति०तद्यत्प्रयाजानुयाजैश्चरन्ति० पञ्चदश सामिधेनीरन्वाह० वार्त्रघ्नावाज्यभागौ भवतः० त्रिष्टुभौ हविषो

---

१. दीक्षणीयाद्युपसदन्तेषु।

याज्यापुरोनुवाक्ये० अथातो हविषो याज्यापुरोनुवाक्ये । **उप वां जिह्वा घृतमाचरण्यत्** इत्यावती तत्पुरोनुवाक्यारूपम् । **प्रति वां जिह्वा घृतमुच्चरण्यत्** इत्युद्वती तद्याज्यारूपम् । त्रिष्टुभौ संयाज्ये० **आगुर उदृचम्** इतीळायां सूक्तवाके चाह० न वेदे पत्नीं वाचयति । नैनं स्तृणाति० ॥

[ ८.२ ]– पत्नीसंयाजान्ता दीक्षणीया० ॥

**तैत्रा [ २.४.३.३–४ ]—**

**[1]अग्निरग्रे प्रथमो देवतानां॑ संयातानामुत्तमो विष्णुरासीत् ।**
**यजमानाय परिगृह्य देवान् दीक्षयेद॑ हविरागच्छतं नः ॥**
**[2]अग्निश्च विष्णो तप उत्तमं महो दीक्षापालेभ्यो वनतं॑ हि शक्रा ।**
**विश्वैर्देवैर्यज्ञियैः संविदानौ दीक्षामस्मै यजमानाय धत्तम् ॥**

## ७. दीक्षणीयेष्ट्यौद्गात्रम्

साम्रा [ १.१.३–५ ]–तद्योऽसौ क्रुष्टतम इव साम्नः स्वरस्तं देवा उपजीवन्ति । योऽवरेषां प्रथमस्तं मनुष्या यो द्वितीयस्तं गन्धर्वाप्सरसो यस्तृतीयस्तं पशवो यश्चतुर्थस्तं पितरो ये चाण्डेषु शेरते यः पञ्चमस्तमसुररक्षाᳪसि योऽन्त्यस्तमोषधयो वनस्पतयो यच्चान्यज्जगत् । तस्मादाहुः सामैवान्नमिति । साम ह्येषामुपजीवनं प्रायच्छत् ० ऋचि साम प्रतिष्ठितम् । स यदा गायत्रं बृहत्यां गायति बार्हतं जगत्यां जागतं त्रिष्टुभि समतां चापद्यते । तस्मादेतत् सामेत्याह । समा उ ह वा अस्मिᳪश्छन्दाᳪसि साम्यादिति तत् साम्नः सामत्वम् ॥

### तार्क्ष्यं[3]

साकौसं [ १.४.१.५.१ ]—

त्यमू षु वाजिनं देवजूतᳪ सहोवानं तरुतारᳪ रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुᳪ स्वस्तये तार्क्ष्यमिहा हुवेम ॥

५ र २र १ १ १ २र र ३ ५ र ३र २ १ २
**ओम् त्यमूषू । वाजि । ना३४५म् । देवजूता२३४म् । सहोवानन्ता । रुता३ ।**

२ ३ ४ ५ २ ३ ५ २ २ ३र ५ २ १ र २ ३
**रᳪरथानाम् । अरिष्टना२३४इमीम् । पृतना३४३जमाशुम् । स्वस्त । याइ । तार्क्ष्यमि-**

२ २ ४
**हा३४३ । हू३वा५इमा६५६ ॥**

---

१. प्रधानहविषः पुरोनुवाक्या ।
२. याज्या ।
३. प्रधानयागकाले प्रस्तोतृसामनी ।

१र २ र र ४ २ ३र५ ३ ५४५र ३ ५र
ईयइया३हाइ। त्यमूषुवाजिना३न्दे३वजूतम्। ई४यइया। हा२३४इ। सहो-

३र२१ ४ २^३४५ २र २ १ २ १
वानन्ता। रुता३। र२^रथानाम्। ईयइया३हाइ। अरिष्टा३। नाइ। मी३म्पृत।

२^३४५ ३ ५४५र ३११११ २ १ र२३२ २ ४
नाजमाशूम्। ई४यइया। हा२३४५इ। स्वस्त। याइ। तार्क्ष्यमिहा३४३। हू३वा-

५इमा६५६॥ [ग्राम ९.१.१-२]

आदित्ये द्वे तार्क्ष्ये वा

सात्रैसं [१.३५.१] ≡ साकौसं [१.४.१:५.१]

त्यमूषूवाजिनान्देवजू ता म्।सहोवानन्तारूतार२^रा था नाम्।अरिष्टानाइमीम्[।]
खि खि ग्र खखी श क्य ध्यकीकि वी(१)खी श खी श

पृतना ज मा शुम्। स्वस्तायाइताक्ष्यामि हा हू वा इमा ॥ म ॥
खखी खीखा श खिखा ख्यखा श श त्र

इ[या]इयाहाइ त्यमूषु वाजिना न्दे व जू ताम्। ई या [।] ईया हाइ।
त ता (षा) खि ख ख्यखी श फ फफाखा त श

सहोवानन्तारूतार२^र र था नाम्। इ या हाआरिष्टनाइमीं पातानाज मा शुम्। ई या
क्य ध्य कि खीखि श तती च फ य कि ख्यखा श फ्यफा

हा इ। स्वस्तयाइताक्ष्यामि हा हुवा इमा ॥ म ॥ [ग्राम २.३.३.१-२]
त श खिखा श त्र

## ८. यजमानदीक्षा

तैसं [१.२.२-३]-

आकूत्यै प्रयुजेऽग्नये स्वाहा ॥ मेधायै मनसेऽग्नये स्वाहा ॥ दीक्षायै तपसेऽग्नये स्वाहा ॥ सरस्वत्यै पूष्णेऽग्नये स्वाहा ॥ आपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहा ॥ विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा ॥ ऋक्सामयोः शिल्पे स्थस्ते वामा रभे ते मा पातमास्य यज्ञस्योदृचः ॥

इमां धियꣳ शिक्षमाणस्य देव क्रतुं दक्षं वरुण सꣳशिशाधि ।
ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावꣳ रुहेम ॥

ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ पाहि मा मा मा हिꣳसीः ॥ विष्णोः शर्मासि शर्म यजमानस्य शर्म मे यच्छ ॥ नक्षत्राणां मातीकाशात् पाहि ॥ इन्द्रस्य योनिरसि ॥ मा मा हिꣳसीः ॥ कृष्यै त्वा सुसस्यायै ॥ सुपिप्पलाभ्यस्त्वौषधीभ्यः ॥ सूपस्था देवो वनस्पतिः ॥ ऊर्ध्वो मा पाह्योदृचः ॥ स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात् स्वाहा यज्ञं वातादारभे ॥ दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुपारा नो असद् वशे ॥ ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ॥ अग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहि गोपाय नः स्वस्तये प्रबुधे नः पुनर्ददः॥

त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः ॥

विश्वे देवा अभि मा मावृत्रन् पूषा सन्या सोमो राधसा देवः सविता वसोर्वसुदावा ॥ रास्वेयत् सोमा भूयो भर मा पृणन् पूर्त्या वि राधि माहमायुषा ॥ चन्द्रमसि मम भोगाय भव ॥ वस्त्रमसि मम भोगाय भव ॥ उस्रासि मम भोगाय भव ॥ हयोऽसि मम भोगाय भव ॥ छागोऽसि मम भोगाय भव ॥ मेषोऽसि मम भोगाय भव ॥ वायवे त्वा ॥ वरुणाय त्वा ॥ निर्ऋत्यै त्वा ॥ रुद्राय त्वा ॥

[ ६.१.२-४ ]— स्रुवेण चतस्रो जुहोति० स्रुचा पञ्चमीम्० ऋचा जुहोति० अनुष्टुभा जुहोति० तस्माद् द्वादशभिर्वात्सबन्धविदो दीक्षयन्ति० पूर्णया जुहोति० न्यूनया जुहोति० एष वा ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्यैष साम्नो यत् कृष्णमृक्सामयोः शिल्पे स्थ इत्याह० कृष्णाजिनेन दीक्षयति० न पुरा सोमस्य क्रयादपोर्ण्वीत० यच्छरमयी मेखला भवति० मध्यतः सं नह्यति० त्रिवृद् भवति० पृथ्वी भवति० मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीम्० इन्द्रस्य योनिरसि मा मा हिꣳसीरिति कृष्णविषाणां प्र यच्छति० कृष्णविषाणया कण्डूयतेऽपिगृह्य स्मयते० न पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामव चृतेत्० यद्दीक्षितदण्डं प्र यच्छति० औदुम्बरो भवति० मुखेन संमितो भवति० मुष्टी करोति वाचं यच्छति० अदीक्षिष्टायं ब्राह्मणः इति त्रिरुपाꣳश्वाह० त्रिरुच्चैः० न पुरा नक्षत्रेभ्यो वाचं वि सृजेत्० उदितेषु नक्षत्रेषु व्रतं कृणुत इति वाचं वि सृजति० यदि वि सृजेद्वैष्णवीमृचमनुब्रूयात्० ॥

[ ३.५.६ ]—

सं त्वा नह्यामि पयसा घृतेन सं त्वा नह्याम्यप ओषधीभिः ।
सं त्वा नह्यामि प्रजयाहमद्य सा दीक्षिता सनयो वाजमस्मे ॥

[ ३.१.१ ]– यत् तपस्तप्त्वा दीक्षितवादं वदति० यद्वै दीक्षितोऽमेध्यं पश्यत्यपास्माद् दीक्षा क्रामति नीलमस्य हरो व्येति। **अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाँ श्रेष्ठो दीक्षे मा मा हासीः** इत्याह० यद्वै दीक्षितमभिवर्षति दिव्या आपोऽशान्ता ओजो बलं दीक्षां तपोऽस्य निर्घ्नन्ति। **उन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्ट** इत्याह० ॥

तैब्रा [ ३.७.७.२–९ ]–

**वातं प्राणं मनसान्वारभामहे। प्रजापतिं यो भुवनस्य गोपाः।**

**स नो मृत्योस्त्रायतां पात्वँहसः। ज्योग्जीवा जरामशीमहि॥**

**इन्द्र शाक्वर गायत्रीं प्रपद्ये। तां ते युनज्मि। इन्द्र शाक्वर त्रिष्टुभं प्रपद्ये। तां ते युनज्मि। इन्द्र शाक्वर जगतीं प्रपद्ये। तां ते युनज्मि। इन्द्र शाक्वरानुष्टुभं प्रपद्ये। तां ते युनज्मि। इन्द्र शाक्वर पङ्क्तिं प्रपद्ये। तां ते युनज्मि॥**

**आहं दीक्षामरुहमृतस्य पत्नीम्। गायत्रेण छन्दसा ब्रह्मणा च। ऋतँ सत्येऽधायि। सत्यमृतेऽधायि। ऋतं च मे सत्यं चाभूताम्। ज्योतिरभूवँ सुवरगमम्। सुवर्गं लोकं नाकस्य पृष्ठम्। ब्रध्नस्य विष्टपमगमम्॥**

**पृथिवी दीक्षा। तयाग्निर्दीक्षया दीक्षितः। ययाग्निर्दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। अन्तरिक्षं दीक्षा। तया वायुर्दीक्षया दीक्षितः। यया वायुर्दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। द्यौर्दीक्षा। तयादित्यो दीक्षया दीक्षितः। ययादित्यो दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। दिशो दीक्षा। तया चन्द्रमा दीक्षया दीक्षितः। यया चन्द्रमा दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। आपो दीक्षा। तया वरुणो राजा दीक्षया दीक्षितः। यया वरुणो राजा दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। ओषधयो दीक्षा। तया सोमो राजा दीक्षया दीक्षितः। यया सोमो राजा दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। वाग्दीक्षा। तया प्राणो दीक्षया दीक्षितः। यया प्राणो दीक्षया दीक्षितः। तया त्वा दीक्षया दीक्षयामि। पृथिवी त्वा दीक्षमाणमनु दीक्षताम्। अन्तरिक्षं त्वा दीक्षमाणमनु दीक्षताम्। द्यौस्त्वा दीक्षमाणमनु दीक्षताम्। दिशस्त्वा दीक्षमाणमनु दीक्षन्ताम्। आपस्त्वा दीक्षमाणमनु दीक्षन्ताम्। ओषधयस्त्वा दीक्षमाणमनु दीक्षन्ताम्। वाक्त्वा दीक्षमाणमनु दीक्षताम्। ऋचस्त्वा दीक्षमाणमनु दीक्षन्ताम्। सामानि त्वा दीक्षमाणमनु दीक्षन्ताम्। यजूँषि त्वा दीक्षमाणमनु दीक्षन्ताम्। अहश्च रात्रिश्च। कृषिश्च वृष्टिश्च। त्विषिश्चापचितिश्च। आपश्चौषधयश्च। ऊर्क् च सूनृता च। तास्त्वा दीक्षमाणमनु दीक्षन्ताम्॥**

स्वे दक्षे दक्षपितेह सीद । देवानाꣳ सुम्नो महते रणाय । स्वासस्थस्तनुवा संविशस्व । पितेवैधि सूनव आसुशेवः । शिवो मा शिवमाविश । सत्यं म आत्मा । श्रद्धा मेऽक्षितिः । तपो मे प्रतिष्ठा । सवितृप्रसूता मा दिशो दीक्षयन्तु । सत्यमस्मि ॥

तैआ [ ५.१ ]—तस्मादीक्षितेनापिगृह्य स्मेतव्यम् ॥

[ २.७ ]—पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्यामिक्षा वैश्यस्य । अथो सौम्येऽप्यध्वर एतद् व्रतं ब्रूयात् । यदि मन्येतोपदस्यामीत्योदनं धानाः सक्तून् घृतमित्यनुव्रतयेदात्मनोऽनुपदासाय ॥

मैसं [ १.२.२–३ ]–

आकूत्यै प्रयुजे अग्नये स्वाहा ॥ मेधायै मनसे अग्नये स्वाहा ॥ दीक्षायै तपसे अग्नये स्वाहा ॥ सरस्वत्यै पूष्णे अग्नये स्वाहा ॥ आपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उरो अन्तरिक्ष । बृहस्पतिर्नो हविषा वृधातु स्वाहा ॥

विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।

विश्वो राय इषुध्यति द्युम्नꣳ वृणीत पुष्यसे स्वाहा ॥

ऋक्सामयोः शिल्पे स्थस्ते वामारभा आ मोदृचः पातम् ॥ विष्णोः शर्मासि शर्म मे यछ नमस्ते अस्तु मा मा हिꣳसीः ॥ इमां धियꣳ शिक्षमाणस्य .... रुहेयम् ॥ सूर्याग्नी द्यावापृथिवी उरो अन्तरिक्षापः ॥ ओषधया उप मा दीक्षायां दीक्षापतयो ह्वयध्वं देव सवितस्त्वं दीक्षायां दीक्षापतिरसीत्थं मा सन्तं पाहि ॥ ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मयि धेहि ॥ इन्द्रस्य योनिरसि गोपाय मा नमस्ते अस्तु मा मा हिꣳसीः ॥ कृषिꣳ सुसस्यामुत्कृषे ॥ सुपिप्पला ओषधीस्कृधि ॥ विषाणे विष्यैतं ग्रन्थिꣳ यदस्य गुष्पितꣳ हृदि मनो यदस्य गुष्पितम् ॥ बृहन्नसि वानस्पत्यः सुद्युम्नो द्युम्नꣳ यजमानाय धेहि ॥ नक्षत्राणां मातीकाशात् पाहि ॥

आ वो देवास ईमहे वामं प्रयत्यध्वरे ।

यद्वो देवास आगुरि यज्ञियासो हवामहे ॥

स्वाहा यज्ञं मनसः॥ स्वाहा दिवः॥ स्वाहा पृथिव्याः॥ स्वाहोरोरन्तरिक्षात् ॥ स्वाहा वातात् परिगृह्णामि स्वाहा ॥ नक्षत्राणाꣳ सकाशान्मा यौषम् ॥ व्रतं चरत ॥

दैवीं धियं मनामहे सुमृडीकामभिष्टये ।

वर्चोधाꣳ यज्ञवाहसꣳ सुतीर्था नो असद्वशे ॥

ये देवा मनुजाता मनोयुजः सुदक्षा दक्षपितरस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥

शिवाः पीता भवत यूयमापो अस्माकꣳ योना उदरे सुशेवाः ।
इरावतीरनमीवा अनागसः शिवा नो भवत जीवसे ॥
कामो हविषां मन्दिष्टोऽग्ने त्वꣳ सु जागृहि वयꣳ सु मन्थिषीमहि ।
गोपाय नः स्वस्तये प्रबुधे नः पुनस्कृधि ॥
पुनर्मनः पुनरायुर्ना आगात् पुनः प्राणः पुनराकूतमागात् ।
वैश्वानरोऽदब्धस्तनूपा अपबाधतां दुरितानि विश्वा ॥
त्वमग्ने व्रतपा असि देवा आ मर्त्येष्वा ।
त्वꣳ यज्ञेष्वीड्यो व्रतमस्मासु धारय ॥

पूषा सनीनाꣳ सोमो राधसां मा पृणन् पूर्त्या विराधिष्ट मा वयमायुषा वर्चसा च रास्वेयत् सोमाभूयो भर ॥ देवः सविता वसोर्वसुदावा वायुर्गोपास्त्वष्टाधिपतिः पूषा प्रतिग्रहीता ॥ याः पशूनामृषभे वाचस्ताः सूर्यो अग्रे शुक्रो अग्रे ताः प्रहिणोमि यथाभागꣳ वो अत्र शिवा नः पुनरायन्तु वाचः ॥ वायवे त्वा ॥ वरुणाय त्वा ॥ रुद्राय त्वा ॥ निर्ऋत्यै त्वा ॥ इन्द्राय त्वा ॥ मरुद्भ्यस्त्वा ॥

[ ३.६.४–१० ]— तद्य एवꣳ विद्वानाधीतयजूꣳषि जुहोति० पञ्चभिर्जुहोति० षड्भिर्जुहोति० तस्माद् वात्सबन्धविदो द्वादशभिरौद्ग्रभणं जुह्वति० यदौद्ग्रभणं जुहोति० तस्मादारुणिविद ऋचौद्ग्रभणं जुह्वति० अनुष्टुभा जुहोति० एकया जुहोति० अनिरुक्तया जुहोति० पूर्णया जुहोति० तस्माद्दीक्षितो न ददाति न पचति० आहिताग्निर्वा एष सन्नाग्निहोत्रं जुहोति न दर्शपूर्णमासौ यजते० तन्नाश्नीयात्० यदि कुर्यान्नक्तं कुर्यात्० य उताज्ञानोऽभ्यज्ञानोऽथ दीक्षितवादꣳ वदति स वाव दीक्षित इति० अतिनीय सायमशनमतिनीय प्रातरशनꣳ व्रतꣳ व्रतयति० अथ वा एतमाहुः **व्रतमुपेहि व्रत्य** इति० अभ्यर्धो वा ऋक्सामे यज्ञादास्ताम्। तयोर्यौ महिमाना आस्तां ता अपिनिधाय यज्ञमुपावर्तेताम्। तौ महिमाना अहोरात्रे अभवताम्, तयोर्वा एतद्रूपꣳ यत् कृष्णाजिनस्य। यच्छुक्लं तदह्नो रूपꣳ यत् कृष्णं तद्रात्रेः । तौ वा एतन्महिमाना अन्वारभते संपारणाय० द्वे विषूची प्रतिमुच्ये० यद्येकꣳ स्यादन्तं प्रतिभुजेत्० यदन्यत्र कृष्णाजिनादासीत यथा हविः स्कन्नमेवꣳ स्यात् । यथा हविषे स्कन्नाय प्रायश्चित्तिमिछन्त्येवमस्मै प्रायश्चित्तिमिछेयुः० प्रोर्णुते० वासः परिधत्ते० क्षौमेण दीक्षयन्ति० प्राचीनमात्रा पत्नी दीक्षयन्ति० तस्माद्दीक्षितेन दीक्षितविमितान्नानृतुभिः क्रम्यम्० तस्मान्नानृतु स्मेतव्यम्० यत् त्रिवृन्मेखला भवति० यन्मेखलां पर्यस्यते० यं द्विष्यात्तं तर्हि मनसा ध्यायेत्० तस्माच्छरमयी० योक्त्रेण पत्नी संनह्यते मेखलया दीक्षितः० तस्मादस्याश्लीलं न कीर्तयितव्यम् । तस्माद्दीक्षितवासोऽभर्तव्यम्० कृषिꣳ सुसस्यामुत्कृषा इति विषाणया भूम्यामुपहन्ति०

यजुषा कण्डूयते० सुपिप्पला ओषधीस्कृधीति शिरः कण्डूयते० दण्डं प्रयच्छति० आस्यदघ्नं प्रयच्छति० तं श्वः सुत्यायां मैत्रावरुणाय प्रयच्छति० वाचं यच्छति० यद्वाचं विसृजेद्यज्ञं विसृजेत्० वैष्णवीमनूच्य वाग्यन्तव्या० आग्नावैष्णवीमनूच्य वाग्यन्तव्या० सारस्वतीमनूच्य वाग्यन्तव्या० बार्हस्पत्यामनूच्य वाग्यन्तव्या० **दीक्षितोऽयमसा आमुष्यायणः** इत्युद्वदति वा आह० त्रिराह० नक्षत्रं दृष्ट्वा वाचं विसृजते। **व्रतं चरत** इति वाचं विसृजते० दैवीं धियं मनामहा इति यजुषा हस्ता अवनेनिक्ते० ये देवा मनुजाता मनोयुजा इति व्रतं व्रतयति० त्वमग्ने व्रतपा असीति वदेत् स्वप्स्यन्त्सुप्त्वा वा प्रबुध्य यदि वा दीक्षितवादं वदेत्० नोत्तानः शयीत० नाग्नेरधि पराङ् पर्यावर्तेत० नान्यत्र दीक्षितं दीक्षितविमितात् सूर्योऽभिनिम्रोचेन्नाभ्युदियात्० यद् भूतिं वनुते यज्ञस्य संभूत्यै० वायवे त्वेति नष्टामनुदिशति । वरुणाय त्वेत्यप्सु मग्नाम् । रुद्राय त्वेति महादेवाहताम् । निर्ऋत्यै त्वेत्यवसन्नाम् । इन्द्राय त्वेति श्लेष्कहतां या वा सं शीर्येत । मरुद्भ्यस्त्वेति ह्रादुनिहताम्० ॥

**कासं [ २.२-४ ]–**

**आकूत्यै प्रयुजे अग्नये स्वाहा ॥ मेधायै मनसे अग्नये स्वाहा ॥ दीक्षायै तपसे अग्नये स्वाहा ॥ सरस्वत्यै पूष्णे अग्नये स्वाहा ॥ आपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उरो अन्तरिक्ष बृहस्पतये हविषा विधेम स्वाहा ॥**

**विश्वो देवस्य नेतुर्मर्तो वरेत सख्यम् ।**
**विश्वो राय इषुध्यति द्युम्नं वरेत पुष्यतु स्वाहा ॥**

**इन्द्राग्नी द्यावापृथिवी आप ओषधय उरो अन्तरिक्षानु मे दीक्षां दीक्षापतयो मन्यध्वमनु तपस्तपस्पतयोऽग्निश्च देव सूर्येषमूर्जं दधातन देव सवितस्त्वं दीक्षाणां दीक्षापतिरसीत्थं मा सन्तं पाह्या मोदृचः पाहि ॥ ऋक्सामयोश्शिल्पे स्थस्ते वामारभ आ मोदृचः पातम् ॥ शर्मासि शर्म मे यच्छ नमस्ते अस्तु मा मा हिंसीः ॥ इमां धियं शिक्षमाणस्य.... ॥**

**इमां सु नावमारुहमरित्रां पारयिष्णुम् । शतारित्रां स्वस्तये ॥**
**सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।**
**दैवीं नावं स्वरित्रामनागसमस्रवन्तीमारुहेम स्वस्तये ॥**

**ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मयि धेहि मा मा हिंसीः॥ सोमस्य नीविरसि मा मा हिंसीः॥ इन्द्रस्य योनिरसि मा मा हिंसीः॥ कृष्यै त्वा सुसस्यायै ॥ कृषिं सुसस्याः कृधि ॥ विष्णोश्शर्मासि शर्म यजमानस्य शर्म मे यच्छ नमस्ते अस्तु मा मा हिंसीः॥ नक्षत्राणां मातीकाशात् पाहि ॥ सुपस्थावा वनस्पत ऊर्ध्वो मा पाह्योदृचः॥**

स्वाहा यज्ञमनसः ॥ स्वाहा दिवः ॥ स्वाहा पृथिव्याः ॥ स्वाहोरोरन्तरिक्षात् ॥ स्वाहा वातात् प्रतिगृह्णामि यज्ञम् ॥ व्रतं कृणुत तच्छकेयम् ॥

दैवीं धियं मनामहे सुमृडीकामभिष्टये ।
वर्चोधां विश्वधायसीं सुतीर्था नो असद्वशे ॥
ये देवा मनुजाता मनुयुजस्सुदक्षा दक्षपितरः ।
ते नः पान्तु ते नोऽवन्तु तेभ्यस्स्वाहा ॥
अग्ने त्वं सु जागृहि वयं सु मन्दिषामहे ।
गोपाय नो अप्रयुच्छन् प्रबुधे नः पुरस्कृधि ॥

त्वमग्ने व्रतपा असि.... ॥ पूषा सनीनी सोमो राधसां रास्वेयत् सोमा भूयो भर ॥ देवस्सविता वसोर्वसुदावा मा पृणन् पूर्त्या विराधिष्ट माहमायुषा वर्चसा विराधिषि ॥

कासं [ २३.२-६ ]–दीक्षितं नान्यत्र दीक्षितविमितात् सूर्योऽभिनिम्रोचेन्नान्यत्राभ्युदियात्० अग्नये स्वाहाग्नये स्वाहेति जुहोति० पञ्चैतानि जुहोत्यौदग्रभणी षष्ठम्० ऋचौदग्रभणं जुह्वति० द्वादशभिर्ह स्म वै कारुद्वेषिण औदग्रभणं जुह्वति । एतदेव स द्वादशगृहीतं कृत्वा जुहुयात्० पूर्णया स्रुचा जुहोति० अनुष्टुभौदग्रभणं जुहोति० शुक्लं साम कृष्णमृग् । यत् कृष्णाजिनेन दीक्षते० ऋक्सामे एवालभते तस्मात् कृष्णाजिनमध्यास्ते० न निष्ठीवति० द्वे समस्येदन्तर्मांसे बहिर्लोम्नी । यद्येकं स्यात् पादं प्रतिषीव्येत्० यद् दीक्षितवसनं परिधत्ते० महत् कार्यम्० न प्रत्यक्षं वदेद्वाचः० यच्छरमयी मेखला भवति० नाभिं प्रति परिव्ययति० त्रिवृद्भवति० यं द्विष्यात्तं परिव्ययन् ध्यायेत्० मेखला पुंसो भवति योक्त्रं स्त्रियाः० यद्विषाणा भवति० पञ्चावृद्भवति० यजुषा कण्डूयते० यद्दण्डो भवति० आस्यदघ्नः कार्यः० यो वृक्षः फलग्रहिस्तस्य कुर्यात्० तं यत्वास्ते० यद्विसृजेत्०गायत्रीं वैष्णवीमनुब्रूयात्० बार्हस्पत्यामुत्तरामनुब्रूयात्० त्वमग्ने व्रतपा असीत्यग्नयेऽनुब्रूयात्० अदीक्षिष्टायमसा आमुष्यायणः इति त्रिरुपांश्वाह त्रिरुच्चैः० नक्षत्रं दृष्ट्वा वाचं विसृजते० व्रतं कृणुत इति० नोत्तानो दीक्षितश्शयीत० न न्यङ् शयीत० तिर्यङ्ङेव शयीत० नाग्नेः पराङ् शयीत० अग्निमेवाभ्यावृत्य शयीत० दैवीं धियं मनामह इति मार्जयते० ये देवा मनुजाता इति व्रतयति० अग्ने त्वं सु जागृहीति स्वप्स्यन्नग्निमभिमन्त्रयेत० त्वमग्ने व्रतपा असीति प्रबुध्याग्निमभिमन्त्रयेत० न दीक्षितेन होतव्यम्० तस्माद् दीक्षितस्य नान्नमद्यान्नाश्लीलं कीर्तयेन्न नाम गृह्णीयात्० तस्माद् द्वादश रात्रीर्दीक्षितो भृतिं वन्वीत० देवेभ्यो वा अन्या दक्षिणा नीयन्ते मनुष्येभ्योऽन्याः । ता एता अनुदिशति । वायवे त्वा इति या नश्यति । निर्ऋत्यै त्वा इति यावसीदति । रुद्राय त्वा इति यां रुद्रो हन्ति या सीशीर्यते । वरुणाय त्वा इति याप्सु या श्लेष्मेण । यमाय त्वा इति यान्येन मृत्युना० ॥

कपिसं [ १.१४-१६ ]–

आकूत्यै प्रयुजेऽग्नये स्वाहा ॥ मेधायै मनसेऽग्नये स्वाहा ॥ दीक्षायै तपसेऽग्नये स्वाहा ॥ सरस्वत्यै पूष्णेऽग्नये स्वाहा ॥---॥ विश्वो....वुरीत.... द्युम्नं वुरीत.... ॥ ---॥ शर्मासि शर्म यजमानस्य नमस्ते अस्तु .... ॥ इमां धियं शिक्षमाणस्य .... वरुण संशिशाधि .... ॥ इमां सु .... स्वस्तये ॥ ऊर्गस्या ....॥ ---॥ कृष्यै त्वा सुसस्यायै ॥ उत्कृधि ॥ विष्णोः .... यजमानस्य नमस्ते .... ॥ नक्षत्राणां मातिकाशात् पाहि ॥ --- स्वाहा वातात् प्रतिगृह्णामि ॥ व्रतं कृणुतेदं शकेयम् ॥ --- ॥ ये देवा....मनोयुजः....नः पान्तु तेभ्यः स्वाहा ॥ अग्ने त्वं....पुनस्कृधि ॥---॥

कपिसं [ ३५.८-९; ३६.१-२ ] ≡ कासं

वामासं—

आकूत्यै प्रयुजेऽग्नये स्वाहा ॥ मेधायै मनसेऽग्नये स्वाहा ॥ दीक्षायै तपसेऽग्नये स्वाहा ॥ सरस्वत्यै पूष्णेऽग्नये स्वाहा ॥ आपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उरो अन्तरिक्ष । बृहस्पतये हविषा विधेम स्वाहा ॥

विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् ।
विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ॥

ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृचः॥ शर्मासि शर्म मे यच्छ नमस्ते अस्तु मा मा हिꣳसीः ॥ ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मयि धेहि ॥ सोमस्य नीविरसि ॥ विष्णोः शर्मासि शर्म यजमानस्य ॥ इन्द्रस्य योनिरसि ॥ सुसस्याः कृषीस्कृधि ॥ उच्छ्रयस्व वनस्पत ऊर्ध्वो मा पाह्यꣳहस आस्य यज्ञस्योदृचः॥ व्रतं कृणुत ॥ अग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः ॥ दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुतीर्था नो असद्वशे ॥ ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥

श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः ।
ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः ॥

इयं ते यज्ञिया तनूः । अपो मुञ्चामि न प्रजाम् । अꣳहोमुचः स्वाहाकृताः पृथिवीमा विशत ॥ पृथिव्या संभव ॥

अग्ने त्वꣳ सुजागृहि वयꣳ सुमन्दिषीमहि ।
रक्षा णो अप्रयुच्छन् प्रबुधे नः पुनस्कृधि ॥

पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आगन् पुनश्चक्षुः पुनः श्रोत्रं म आगन् । वैश्वानरो अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यात् ॥ त्वमग्ने व्रतपा असि....॥ रास्वेयत्सोमाभूयो भर देवो नः सविता वसोर्दाता वस्वदात् ॥ ४.७–१६

माशब्रा [ ३.१.४–३.२.२ ]—सर्वाणि ह वै दीक्षाया यजूꣳष्यौद्ग्रभणानि॰ ततो यानि त्रीणि स्रुवेण जुहोति। तान्याधीतयजूꣳषीत्याचक्षते। संपद एव कामाय चतुर्थꣳ हूयते। अथ यत् पञ्चमꣳ स्रुचा जुहोति तदेव प्रत्यक्षमौद्ग्रभणम्। अनुष्टुभा हि तञ्जुहोति॰ तानि वै पञ्च जुहोति॰ अथातो होमस्यैव। आकूत्यै प्रयुजेऽग्नये स्वाहेति॰ मेधायै मनसेऽग्नये स्वाहेति॰ दीक्षायै तपसेऽग्नये स्वाहेति। अन्वेवैतदुच्यते नेत्तु हूयते। सरस्वत्यै पूष्णेऽग्नये स्वाहेति॰ अथ चतुर्थीं जुहोति आपो देवीर् .... विधेम स्वाहेति॰ अथ यां पञ्चमीꣳ स्रुचा जुहोति॰ अनुष्टुभा हि तां जुहोति॰ अथ यद् ध्रुवायामाज्यं परिशिष्टं भवति तञ्जुह्वामानयति। त्रिः स्रुवेणाज्यविलापन्या अधि जुह्वां गृह्णाति। यत्तृतीयं गृह्णाति तत्स्रुवमभिपूरयति। स जुहोति विश्वो देवस्य .... पुष्यसे स्वाहेति॰ तां वै यद्येकां जुहुयात् पूर्णां जुहुयात्॰ दक्षिणेनाहवनीयं प्राचीनग्रीवे कृष्णाजिने उपस्तृणाति। तयोरेनमधि दीक्षयति॰ संबद्धान्ते भवतः॰ तर्ह्यसमुते पश्चाद्भवतः॰ यद्यु एकं भवति॰ अन्तकमु तर्हि पश्चात् प्रत्यस्येत्॰अथ जघनेन कृष्णाजिने पश्चात् प्राङ् जान्वाक्न उपविशति। स यत्र शुक्लानां च कृष्णानां च संधिर्भवति तदेवमभिमृश्य जपति ऋक्सामयोः शिल्पे स्थः .... इति॰ अथ दक्षिणेन जानुना-रोहति शर्मासि शर्म मे यच्छ.... इति॰ स वै जघनार्ध इवैवाग्र आसीत॰ अथ मेखलां परिहरते॰ सा वै शाणी भवति॰ सा वै त्रिवृद्भवति॰ मुञ्जवल्शेनान्वस्ता भवति। स्तुकासर्गꣳ सृष्टा भवति॰ तां परिहरते ऊर्गस्याङ्गिरसी .... इति ॰ अथ नीविमुद्गूहते सोमस्य नीविरसीति॰ अथ प्रोर्णुते॰ स प्रोर्णुते विष्णोः शर्मासि शर्म यजमानस्येति॰ अथ कृष्ण-विषाणाꣳ सिचि बध्नीते॰ तां वा उत्तानामिव बध्नाति॰ अथ दक्षिणां भ्रुवमुपर्युपरि ललाटमुपस्पृशति इन्द्रस्य योनिरसीति॰ अथोल्लिखति सुसस्याः कृषीस्कृधीति॰ अथ न दीक्षितः काष्ठेन वा नखेन वा कण्डूयेत॰ दीक्षितः कृष्णविषाणयैव कण्डूयेत नान्येन कृष्ण-विषाणायाः। अथास्मै दण्डं प्रयच्छति॰ औदुम्बरो भवति॰ मुखसंमितो भवति॰ तमुच्छ्रयति उच्छ्रयस्व वनस्पत ....यज्ञस्योदृच इति॰ अत्र हैके अङ्गुलीश्च न्यचन्ति वाचं च यच्छन्ति॰ तदु तथा न कुर्यात्॰ अमुत्रैवाङ्गुलीर्न्यचेदमुत्र वाचं यच्छेत्॰ अथ यद्वाचंयमो व्याहरति॰ तत्रो वैष्णवीमृचं वा यजुर्वा जपेत्॰ तस्यो हैषा प्रायश्चित्तिः। अथैक उद्वदति **दीक्षितोऽयं ब्राह्मणो दीक्षितोऽयं ब्राह्मणः** इति॰ त्रिष्कृत्व आह॰ राजन्यं वा वैश्यं वा **ब्राह्मणः** इत्येव ब्रूयात्॰ स वाचंयम आस्त आस्तमयात्॰ तामस्तमिते वाचं विसृजते॰ तद्धैके नक्षत्रं दृष्ट्वा वाचं विसर्जयन्ति॰ तदु तथा न कुर्यात्॰ यत्रैवानुष्ठ्यास्तमितं मन्येत तदेवं वाचं विसर्जयेत्। अनेनो हैके वाचं विसर्जयन्ति **भूर्भुवः स्वः** इति॰ तदु तथा न कुर्यात्॰ अनेनैव वाचं विसर्जयेत् व्रतं कृणुत॰ त्रिष्कृत्व आह॰ अथाग्निमभ्यावृत्य वाचं विसृजते॰ अथास्मै व्रतꣳ श्रपयन्ति॰ तद्धैके प्रथमे व्रत उभौ व्रीहियवावावपन्ति॰ तदु तथा न कुर्यात्॰ अन्यतरमेवावपेत्॰ तद्धैके

प्रथमे व्रते सर्वौषधꣳ सर्वसुरभ्यावपन्ति० तदु तथा न कुर्यात्० अथास्मै व्रतं प्रयच्छति। अतिनीय मानुषं कालम्। सायं दुग्धमपररात्रे प्रातर्दुग्धमपराह्णे० अथास्मै व्रतं प्रदास्यन्नप उपस्पर्शयति दैवीं धियं....असद्वश इति० स यावत्कियच्च व्रतं व्रतयिष्यन्नप उपस्पृशेत्। एतेनैवोपस्पृशेत्। अथ व्रतं व्रतयति ये देवा....तेभ्यः स्वाहेति० अथ व्रतं व्रतयित्वा नाभिमुपस्पृशति श्वात्राः पीता .... ऋतावृध इति० स यावत्कियच्च व्रतं व्रतयित्वा नाभिमुपस्पृशेत्। एतेनैवोपस्पृशेत्० अथ यत्र मेक्ष्यन् भवति तत् कृष्णविषाणया लोष्टं वा किंचिद्वोपहन्ति इयं ते यज्ञिया तनूः....इति० अथ पुनर्लोष्टं न्यस्यति पृथिव्या संभवेति० अथाग्नये परिदाय स्वपिति० अग्ने त्वꣳ सुजागृहि.... इति ० अथ यत्र सुप्त्वा पुनर्नावद्रास्यन् भवति तद्वाचयति पुनर्मनः....इति० अथ यद्दीक्षितोऽव्रत्यं वा व्याहरति क्रुध्यति वा तन्मिथ्या करोति। व्रतं प्रमीणाति। अक्रोधो ह्येव दीक्षितस्य। अग्निर्वै देवानां व्रतपतिः। तमेवैतदुपधावति त्वमग्ने.... यज्ञेष्वीड्य इति। तस्यो हैषा प्रायश्चित्तिः० अथ यद्दीक्षितायाभिहरन्ति तस्मिन् वाचयति रास्वेयत्सोमा भूयो भर.... इति० पुरास्तमयादाह **दीक्षित वाचं यच्छ** इति। तामस्तमिते वाचं विसृजते। पुरोदयादाह **दीक्षित वाचं यच्छ** इति। तामुदिते वाचं विसृजते० नैनमन्यत्र चरन्तमभ्यस्तमियात्। न स्वपन्तमभ्युदियात्० न पुरावभृथादपोऽभ्यवेयात्। नैनमभिवर्षेत्० अथ परिह्वालं वाचं वदति। न मानुषीं प्रसृताम्० ॥

[ ३.१.१.७ ]—तस्मादु ह न प्रतीचीनशिराः शयीत० ॥

[ ३.१.१.९-१० ]—तन्न सर्व इवाभिप्रपद्येत० स वै न सर्वेणेव संवदेत० ब्राह्मणेन वैव राजन्येन वा वैश्येन वा। ते हि यज्ञियाः। तस्माद्यद्येनꣳ शूद्रेण संवादो विन्देदेतेषामेवैकं ब्रूयात् **इममिति विचक्ष्व इममिति विचक्ष्व** इति। एष उ तत्र दीक्षितस्योपचारः ॥

**वाकासं—**

**आकूत्यै .... ॥---॥ आपो देवीर् .... उर्वन्तरिक्ष ।....॥ ---॥ ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ ॥---॥ व्रतं कृणुत व्रतं कृणुत व्रतं कृणुत ॥---॥ दैवीं धियं .... वर्चोदाँ विश्वधायसꣳ सुतीर्था .... ॥ ---॥ पुनर्मनः पुनरायुर्म आगात् पुनश्चक्षुः पुनः श्रोत्रं म आगात्। पुनः प्राणः पुनरात्मा म आगात्। वैश्वानरो अदब्धस्तनूपा अग्निर्मा पातु दुरितादवद्यात् ॥---॥** ४.३–५

काशब्रा [ ४.१.४–२.२ ] ≡ माशब्रा ३.१.४–३.२.२

[ ४.१.१.४ ] ≡ माशब्रा ३.१.१.७

[ ४.१.१.६ ] ≡ माशब्रा ३.१.१.९–१०

ऐब्रा [ १.३ ]— तस्माद् ध्रुवाद्योनेरास्ते च चरति च० तस्माद्दीक्षितं नान्यत्र दीक्षितविमितादादित्योऽभ्युदियाद्वाभ्यस्तमियाद्वा। अपि वाभ्याश्रावयेयुः। वाससा प्रोर्णुवन्ति० कृष्णाजिनमुत्तरं भवति० मुष्टी कुरुते०॥

[ १.६ ]– दीक्षितेन सत्यमेव वदितव्यम्० विचक्षणवतीं वाचं वदेत्० ॥

शांब्रा [ ७.३–४ ]–यदु सोऽन्यस्य नाम न गृह्णाति० यमेव द्विष्यात्तस्य दीक्षितः सन्नाम प्रसेतैव० अथ यमिच्छेद्विचक्षणवत्या वाचा तस्य नाम गृह्णीयात्। सो तत्र प्रायश्चित्तिः० तदाहुः कस्माद्दीक्षितस्याशनं नाश्नन्तीति० कामं प्रसुतेऽश्नीयात्० कस्माद्दीक्षितोऽग्निहोत्रं न जुहोतीति० तद्यत्सायंप्रातर्व्रतं प्रदीयतेऽग्निहोत्रं हैव० अथातः कैशिनी दीक्षा० स यत्राध्वर्यु-रौद्ग्रभणानि जुहोति तदुप यजमानः पञ्चाहुतीर्जुहुयात् मनो मे मनसा दीक्षतां स्वाहा इति प्रथमां वाङ् मे वाचा दीक्षतां स्वाहा इति द्वितीयां प्राणो मे प्राणेन दीक्षतां स्वाहा इति तृतीयाम्० चक्षुर्मे चक्षुषा दीक्षतां स्वाहा इति चतुर्थीं श्रोत्रं मे श्रोत्रेण दीक्षतां स्वाहा इति पञ्चमीम् । तदु ह स्माह कौषीतकिर्न होतव्या अतिरिक्ता आहुतयः स्युः। यद्भूयेरन्नध्वर्युमेव जुह्वतमन्वारभ्य प्रतीकैरनुमन्त्रयेत मनो मे मनसा दीक्षतामिति प्रथमां वाङ् मे वाचा दीक्षतामिति द्वितीयां प्राणो मे प्राणेन दीक्षतामिति तृतीयाम्० चक्षुर्मे चक्षुषा दीक्षतामिति चतुर्थीं श्रोत्रं मे श्रोत्रेण दीक्षतामिति पञ्चमीम्० अपराह्णे दीक्षते० ॥

अशौसं—

सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।
दैवीं नावं स्वरित्रामनागसो अस्रवन्तीमा रुहेमा स्वस्तये ॥ ७.७.३
अस्तंयते नमोऽस्तमेष्यते नमोऽस्तमिताय नमः ।
विराजे नमः स्वराजे नमः सम्राजे नमः ॥ १७.१.२३
विमृग्वरीं पृथिवीमा वदामि क्षमां भूमिं ब्रह्मणा वावृधानाम् ।
ऊर्जं पुष्टं बिभ्रतीमन्नभागं घृतं त्वाभि नि षीदेम भूमे ॥ १२.१.२९
यास्ते शिवास्तन्वः काम भद्रा याभिः सत्यं भवति यद्वृणीषे ।
ताभिष्ट्वमस्माँ अभिसंविशस्वान्यत्र पापीरप वेशया धियः ॥ ९.२.२५
यच्छयानः पर्यावर्ते दक्षिणं सव्यमभि भूमे पार्श्वम् ।
उत्तानास्त्वा प्रतीचीं यत्पृष्टीभिरधिशेमहे ।
मा हिंसीस्तत्र नो भूमे सर्वस्य प्रतिशीवरि ॥ १२.१.३४
सत्यं बृहदृतमुग्रं दीक्षा तपो ब्रह्म यज्ञः पृथिवीं धारयन्ति ।
सा नो भूतस्य भव्यस्य पत्न्युरुं लोकं पृथिवी नः कृणोतु ॥
असंबाधं बध्यतो मानवानां यस्या उद्वतः प्रवतः समं बहु ।
नानावीर्या ओषधीर्या बिभर्ति पृथिवी नः प्रथतां राध्यतां नः ॥
यस्यां समुद्र उत सिन्धुरापो यस्यामन्नं कृष्टयः संबभूवुः ।
यस्यामिदं जिन्वति प्राणदेजत् सा नो भूमिः पूर्वपेये दधातु ॥

यस्याश्चतस्रः प्रदिशः पृथिव्या यस्यामन्नं कृष्टयः संबभूवुः ।
या बिभर्ति बहुधा प्राणदेजत् सा नो भूमिर्गोष्वप्यन्ने दधातु ॥
यस्यां पूर्वे पूर्वजना विचक्रिरे यस्यां देवा असुरानभ्यवर्तयन् ।
गवामश्वानां वयसश्च विष्ठा भगं वर्चः पृथिवी नो दधातु ॥
विश्वंभरा वसुधानी प्रतिष्ठा हिरण्यवक्षा जगतो निवेशनी ।
वैश्वानरं बिभ्रती भूमिरग्निमिन्द्रऋषभा द्रविणे नो दधातु ॥
यां रक्षन्त्यस्वप्ना विश्वदानीं देवा भूमिं पृथिवीमप्रमादम् ।
सा नो मधु प्रियं दुहामथो उक्षतु वर्चसा ॥
यार्णवेऽधि सलिलमग्र आसीद्यां मायाभिरन्वचरन् मनीषिणः ।
यस्या हृदयं परमे व्योमन्त्सत्येनावृतममृतं पृथिव्याः ।
सा नो भूमिस्त्विषिं बलं राष्ट्रे दधातूत्तमे ॥
यस्यामापः परिचराः समानीरहोरात्रे अप्रमादं क्षरन्ति ।
सा नो भूमिर्भूरिधारा पयो दुहामथो उक्षतु वर्चसा ॥ १२.१.१–९
शन्तिवा सुरभिः स्योना कीलालोध्नी पयस्वती ।
भूमिरधि ब्रवीतु मे पृथिवी पयसा सह ॥ १२.१.५९
उदायुषा समायुषोदोषधीनां रसेन ।
व्यहं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥
आ पर्जन्यस्य वृष्ट्योदस्थामामृता वयम् ।
व्यहं सर्वेण .... ॥ ३.३१.१०–११
उद्वयं तमसस्परि रोहन्तो नाकमुत्तमम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ ७.५५.७
उदीराणा उतासीनास्तिष्ठन्तः प्रक्रामन्तः ।
पद्भ्यां दक्षिणसव्याभ्यां मा व्यथिष्महि भूम्याम् ॥ १२.१.२८
यावत्तेऽभि विपश्यामि भूमे सूर्येण मेदिना ।
तावन्मे चक्षुर्मा मेष्टोत्तरामुत्तरां समाम् ॥ १२.१.३३
पुनः प्राणः पुनरात्मा न ऐतु पुनश्चक्षुः पुनरसुर्न ऐतु ।
वैश्वानरो नो अदब्धस्तनूपा अन्तस्तिष्ठाति दुरितानि विश्वा ॥ ६.५३.२
उद्यते नम उदायते नम उदिताय नमः ॥
विराजे नमः स्वराजे नमः सम्राजे नमः ॥ १७.१.२२

यद्स्मृति चकृम किं चिदग्न उपारिम चरणे जातवेदः ।
ततः पाहि त्वं नः प्रचेतः शुभे सखिभ्यो अमृतत्वमस्तु नः ॥ ७.१११.१
सत्यं बृहदृतमुग्रं दीक्षा .... ॥ १२.१.१
शुद्धा न आपस्तन्वे क्षरन्तु यो नः सेदुरप्रिये तं नि दध्मः ।
पवित्रेण पृथिवी मोत्पुनामि ॥ १२.१.३०
य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
संधाता संधिं मघवा पुरुवसुर्निष्कर्ता विह्रुतं पुनः ॥ १४.२.४७
परोऽपेहि मनस्पाप किमशस्तानि शंससि ।
परेहि न त्वा कामये वृक्षां वनानि सं चर गृहेषु गोषु मे मनः ॥
अवशसा निःशसा यत्पराशसोपारिम जाग्रतो यत्स्वपन्तः ।
अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद्धातु ॥
यदिन्द्र ब्रह्मणस्पतेऽपि मृषा चरामसि ।
प्रचेता न आङ्गिरसो दुरितात् पात्वंहसः ॥ ६.४५
यो न जीवोऽसि न मृतो देवानाममृतगर्भोऽसि स्वप्न ।
वरुणानी ते माता यमः पितारुरुर्नामासि ॥
विद्म ते स्वप्न जनित्रं देवजामीनां पुत्रोऽसि यमस्य करणः। अन्तकोऽसि मृत्युरसि।
तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात् पाहि ॥
यथा कलां यथा शफं यथर्णं संनयन्ति ।
एवा दुष्वप्न्यं सर्वं द्विषते सं नयामसि ॥ ६.४६
दिवो नु मां बृहतो अन्तरिक्षादपां स्तोको अभ्यपप्तद् रसेन ।
समिन्द्रियेण पयसाहमग्ने छन्दोभिर्यज्ञैः सुकृतां कृतेन ॥
यदि वृक्षादभ्यपप्तत् फलं तद्यद्यन्तरिक्षात् स उ वायुरेव ।
यत्रास्पृक्षत् तन्वो यच्च वासस आपो नुदन्तु निर्ऋतिं पराचैः ॥
अभ्यञ्जनं सुरभि सा समृद्धिर्हिरण्यं वर्चस्तदु पूत्रिममेव ।
सर्वा पवित्रा वितताध्यस्मत् तन्मा तारीन्निर्ऋतिर्मो अरातिः ॥ ६.१२४
परोऽपेह्यसमृद्धे वि ते हेतिं नयामसि ।
वेद त्वाहं निमीवन्तीं नितुदन्तीमराते ॥ ५.७.७
अश्मन्वती रीयते सं रभध्वं वीरयध्वं प्र तरता सखायः ।
अत्रा जहीत ये असन् दुरेवा अनमीवानुत्तरेमाभि वाजान् ॥

उत्तिष्ठता प्र तरता सखायोऽश्मन्वती नदी स्यन्दत इयम् ।
अत्रा जहीत ये असन्नशिवाः शिवान्त्स्योनानुत्तरेमाभि वाजान्॥१२.२.२६-२७
अपः समुद्राद्दिवमुद्वहन्ति दिवस्पृथिवीमभि ये सृजन्ति ।
ये अद्भिरीशाना मरुतश्चरन्ति ते नो मुञ्चन्त्वंहसः ॥ ४.२७.४
अव ज्यामिव धन्वनो मन्युं तनोमि ते हृदः ।
यथा संमनसौ भूत्वा सखायाविव सचावहै ॥ ६.४२.१
पर्वताद्दिवो योनेरङ्गादङ्गात् समाभृतम् ।
शेपो गर्भस्य रेतोधाः सरौ पर्णमिवा दधत् ॥
यथेयं पृथिवी मही भूतानां गर्भमादधे ।
एवा दधामि ते गर्भं तस्मै त्वामवसे हुवे ॥
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनोभा धत्तां पुष्करस्रजा ॥
गर्भं ते मित्रावरुणौ गर्भं देवो बृहस्पतिः ।
गर्भं न इन्द्रश्चाग्निश्च गर्भं धाता दधातु ते ॥
विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥
यद्वेद राजा वरुणो यद्वा देवी सरस्वती ।
यदिन्द्रो वृत्रहा वेद तद्गर्भकरणं पिब ॥
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ।
गर्भो विश्वस्य भूतस्य सो अग्ने गर्भमेह धाः ॥
अधि स्कन्द वीरयस्व गर्भमा धेहि योन्याम् ।
वृषासि वृष्ण्यावन् प्रजायै त्वा नयामसि ॥
वि जिहीष्व बार्हत्सामे गर्भस्ते योनिमा शयाम् ।
अदुष्टे देवाः पुत्रं सोमपा उभयाविनम् ॥
धातः श्रेष्ठेन रूपेणास्या नार्या गवीन्योः ।
पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ॥
त्वष्टः श्रेष्ठेन रूपेणास्या० ॥
सवितः श्रेष्ठेन रूपेणास्या० ॥
प्रजापते श्रेष्ठेन रूपेणास्या० ॥ ५.२५

शमीमश्वत्थ आरूढस्तत्र पुंसुवनं कृतम् ।
तद्वै पुत्रस्य वेदनं तत्स्त्रीष्वा भरामसि ॥
पुंसि वै रेतो भवति तत्स्त्रियामनु षिच्यते ।
तद्वै पुत्रस्य वेदनं तत्प्रजापतिरब्रवीत् ॥
प्रजापतिरनुमतिः सिनीवाल्यचीक्लृपत् ।
स्त्रैषूयमन्यत्र दधत्पुमांसमु दधदिह ॥ ६.११
यन्तासि यच्छसे हस्तावप रक्षांसि सेधसि ।
प्रजां धनं च गृह्णानः परिहस्तो अभूदयम् ॥
परिहस्त वि धारय योनिं गर्भाय धातवे ।
मर्यादे पुत्रमा धेहि तं त्वमा गमयागमे ॥
यं परिहस्तमबिभरदितिः पुत्रकाम्या ।
त्वष्टा तमस्या आ बध्नाद्यथा पुत्रं जनादिति ॥ ६.८१

अपैसं—

सुत्रामाणं .... सुविदत्रामनागसम् .... ॥ २०.१.९ ॥ अस्तंयते नमो ....॥ १८.३२.७ ॥ विमृग्वरीं .... वावृधानः । ऊर्जं पुष्टिं .... नि षीदामि भूमे ॥ १७.३.१० ॥ यास्ते शिवास्तन्वः....।....अस्मानपसंविशस्वान्यत्र ....॥१६.७८.७॥ यच्छयानः....सव्यमपि ....।....प्रतीची पृष्ट्या यदधिशेमहे ।....॥ १७.४.५ ॥ सत्यं बृहद् .... ॥ असंबाधं बध्यतो मानवेषु .... ॥ यस्यां समुद्र .... यस्यां देवा अमृतमन्वविन्दन् । या बिभर्ति बहुधा प्राणदेजत् सा नो भूमिर्गोष्वश्वेषु पिन्वे कृणोतु ॥ यस्यां पूर्वे .... । यस्यामिदं जीवति विश्वमेजत् सा नो भूमिः पूर्वपेये दधातु ॥ यस्यां चतस्रः .... । गवामश्वानां वयसश्च विष्ठा भगं वर्चः पृथिवी नो दधातु ॥ विश्वंभरा वसुधानी .... ॥ यस्यामापः .... ॥ यां रक्षन्त्यस्वप्नाः .... ॥ यार्णवे अधि सलिलम् .... ॥ १७.१.१-९ ॥ शन्तिवा.... । भूमिर्नोऽधि ब्रवीतु पृथिवी .... ॥ १७.६.७ ॥ उद्वयं .... ज्योतिष्पश्यन्त उत्तरम् । .... ॥ २०.१०.३ ॥ उदीराणा उतासीनाः .... ॥ १७.३.९ ॥ यावत्तेऽभि .... ॥ १७.४.३ ॥ पुनर्मनः पुनरायुर्न आगन् पुनश्चक्षुः पुनराकूतिरागन् । .... अन्तस्तिष्ठासि दुरितादवद्यात् ॥ १९.८.२ ॥ उद्यते नम .... ॥१८.३२.६॥ यदस्मृति चकृमा किं च तेनोपारिम चरणैर्जातवेदः । तस्मात् पाहि .... ॥ २०.७.९ ॥ सत्यं बृहद् .... ॥ १७.१.१ ॥ शुद्धा म.... क्षरन्ति यो मे .... ॥ १७.३.११ ॥ यदृते .... पुरोवसुर्निष्कर्ता विहृतं पुनः ॥ १८.११.७॥

अपेहि मनसस्पते किमशस्तानि शंसतु। .... सं चरः॥ अवशसा ....यज्जाग्रतो....॥ यदिन्द्र .... यदीर्ष्या चरामसि। .... द्विषतस्पातु तेभ्यः ॥ १९.३६.४-६ ॥ यो न जीवोऽसि .... यमः पिता ॥ यथा कलां .... अप्रिये सं नयामसि ॥ दुडुनामासि तं त्वा स्वप्न तथा विद्म। स नः स्वप्न सुष्वप्न्यान् देहि ॥ १९.४६.१०-१२ ॥ एतद्विवो नु .... वयोधा अपां .... रसाय। .... अग्न ऋषीणां यज्ञैः....॥ यद् वृक्षाद् ....तदभ्यन्तरिक्षात्तदु .... । समिन्द्रियेण पयसाहमग्न ऋषीणां यज्ञैः सुकृतां कृतेन ॥ अभ्यञ्जनं .... ॥ १९.४०.४-६ ॥

परो मेह्यसमृद्धे वि ते हेतिं नयामसि ।
यं द्विष्मस्तं विश्वकन्या भूत्वा सृग्मणी रुक्मणी दृशेत् ॥
नमस्ते अस्तु समृद्धे मा माहं पुरोधि कृण्वथ वर्मी त्वाहम् ।
नमीवन्तीं नुतदन्तीं मा ते मर्त्यां ससन्त्येभ्यो अधि निर्वदन्तीम् ॥७.९.६-७॥

अश्मन्वती .... ॥ उत्तिष्ठता.... सखायो अश्मन्वती रीयते सं रभध्वम् ।.... ॥ १७.३२.६-७ ॥ अपः समुद्राद् .... ॥ ४.३५.४ ॥ अव ज्यामिव धन्वनः शुष्मं .... मिथः । .... सखीकेव सचावहै ॥ १९.८.१० ॥

यथेयमुर्वी पृथिवी विद्धेव गर्भं .... ॥ पर्वताद्दिवो योनेर्गात्राद्गात्रात् समाश्रितम् । रेतो देवस्य देवः सरौ पर्णमिवा धात् ॥ विष्णुर्योनिं .... ॥ गर्भं धेहि.... । गर्भं योन्यामश्विनास्यामा धत्तं .... ॥ गर्भं ते राजा वरुणो.... ॥ गर्भोऽस्योषधीनां.... ॥ यदोषधयो गर्भिणीः पशवो येन गर्भिणः । एषां गर्भस्य यो गर्भस्तेन त्वं गर्भिणी भव ॥ वि ते ग्रन्थिं चृतामसि धाता गर्भं दधातु ते । आ योनिं पुत्रो रोहतु जननं प्रति जायताम् ॥ जनिष्ठा इह मैजाथो अन्यं समुद्या चर ।अधा सोम इव भक्षणमा गर्भः सीददृत्वियम् ॥ सवितः श्रेष्ठेन रूपेणास्या नार्या गवीन्योः । पुमांसं पुत्रमा धेहि दशमे मासि सूतवे ॥ [ .... ] श्रेष्ठेन० ॥ विष्णो श्रेष्ठेन०॥ त्वष्टः श्रेष्ठेन० ॥ भग श्रेष्ठेन० ॥ अधि क्रन्द.... । वृषाणं वृष्ण्यावन्तं....॥ यद्वेद राजा वरुणो वेद देवो बृहस्पतिः। इन्द्रो यद् वृत्रहा वेद तदु गर्भकरणं पिबा ॥ वि जिहीष्व.... । ददन् ते पुत्रं देवाः सोमपा उभयाविनम्॥ सोमस्य दृत्वियोनपैम गर्भकृत्वानम् । ततस्ते पुत्रो जायतां कर्तवै वीर्येभ्यः ॥ १३.२ ॥

शमीमश्वत्थ .... पुंसवनं कृतम् । तदेव तस्य भेषजं यत् स्त्रीष्वा हरन्ति तत् ॥ पुंसि वै.... ॥ प्रजापतिरन्वमंस्त .... । स्त्रीषूयम् .... ॥१९.१२.१-३॥ यन्तासि .... परिहस्तो भूदयम् ॥ परिहस्त .... कर्तवे । मर्यादे .... ॥ यं परिहस्तम् .... पुत्रं सुवादिति ॥ १९.१७.१-३ ॥

गोब्रा [ १.३.१९-२२ ]– अथातो दीक्षा० कस्य स्विद्धेतोर्दीक्षितोऽप्रत्युत्थायिको भवत्यनभिवादुकः प्रत्युत्थेयोऽभिवाद्यः० यदात्मनश्च परेषां च नामानि न गृह्णाति० विचक्षणवतीं वाचं भाषन्ते चनसितवतीम्०कस्य स्विद्धेतोर्दीक्षितोऽनाश्यन्नो भवति नास्य नाम गृह्णन्ति० तस्याजातस्याविज्ञातस्याक्रीतसोमस्याभोजनीयं भवतीत्याहुः। स दीक्षाणां प्रातर्जायते सोमं क्रीणन्ति तस्य जातस्य विज्ञातस्य क्रीतसोमस्य भोजनीयं भवतीत्याहुः० न ह वै दीक्षितोऽग्निहोत्रं जुहुयात्। न पौर्णमासेन यज्ञेन यजेत नामावास्येन। अस्मिन् वसीत। न पितृयज्ञेन यजेत। न तत्र गच्छेद्यत्र मनसा जिगमिषेत्। नेष्ट्या यजेत। न वाचा यथाकथाचिदभिभाषेत। न मिथुनं चरेत्। नान्नस्य यथाकाममुपयुञ्जीत। न पशुबन्धेन यज्ञेन यजेत। न तत्र गच्छेद्यत्र चक्षुषा परापश्येत्। कृष्णाजिनं वसीत। कुरीरं धारयेत। मुष्टी कुर्यात्। अङ्गुष्ठप्रभृतयस्तिस्र उच्छ्रयेत्। मृगशृङ्गं गृह्णीयात्तेन कषेत। अथ यस्य दीक्षितस्य वाग्वायता स्यान्मुष्टी वा विसृष्टौ स एतानि जपेत् अग्निहोत्रं च मा पौर्णमासश्च यज्ञः पुरस्तात्प्रत्यञ्चमुभौ कामप्रौ भूत्वाक्षित्या सहाविशताम्। वसतिश्च मामावास्यश्च यज्ञः पश्चात् प्राञ्चमुभौ इति समानम्। मनश्च मा पितृयज्ञश्च यज्ञो दक्षिणत उदञ्चमुभौ इति समानम्। वाक्च मेष्टिश्चोत्तरतो दक्षिणाञ्चमुभौ इति समानम्। रेतश्च मान्नं चेत ऊर्ध्वमुभौ इति समानम्। चक्षुश्च मा पशुबन्धश्च यज्ञोऽमुतोऽर्वाञ्चमुभौ कामप्रौ भूत्वाक्षित्या सहाविशताम् इति० ॥

[ २.२.२३ ]–तस्माद्विचक्षणवतीं वाचं भाषन्ते चनसितवतीम्० ॥

## ९. प्रयाणं प्रायणीयेष्टिश्च

**तैसं [ १.२.३ ]—**

**देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं वो माव क्रमिषमच्छिन्नं तन्तुं पृथिव्या अनु गेषम् ॥ भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्तु ॥ अथेमव स्य वर आ पृथिव्याः ॥ आरे शत्रून् कृणुहि सर्ववीरः ॥ एदमगन्म देवयजनं पृथिव्या विश्वे देवा यदजुषन्त पूर्व ऋक्सामाभ्यां यजुषा संतरन्तो रायस्पोषेण समिषा मदेम ॥**

[ ६.१.५ ]– तस्मादादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयः। पञ्च देवता यजति० पथ्या९ स्वस्तिमयजन् प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणा सोमेन प्रतीची९ सवित्रोदीचीमदित्योर्ध्वाम्। पथ्या९ स्वस्तिं यजति० पथ्या९ स्वस्तिमिष्ट्वाग्नीषोमौ यजति० अग्नीषोमाविष्ट्वा सवितारं यजति० सवितारमिष्ट्वादितिं यजति० अदितिमिष्ट्वा मारुती-

ऋचमन्वाह० ब्रह्मवादिनो वदन्ति प्रयाजवदननूयाजं प्रायणीयं कार्यमनूयाजवदप्रयाजमुदयनीयमिति० तत् तथा न कार्यम्० प्रयाजवदेवानूयाजवत् प्रायणीयं कार्यम्० ॥

[३.५.५]—

कविर्यज्ञस्य वि तनोति पन्थां नाकस्य पृष्ठे अधि रोचने दिवः ।
येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान् ॥

तैब्रा [३.७.७.१०]—

अहं त्वदस्मि मदसि त्वमेतत् । ममासि योनिस्तव योनिरस्मि ।
ममैव सन् वह हव्यान्यग्ने । पुत्रः पित्रे लोककृज्जातवेदः ॥
आजुह्वानः सुप्रतीकः पुरस्तात् । अग्ने स्वां योनिमासीद साध्या ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् । विश्वे देवा यजमानश्च सीदत ॥

[१.५.९]— ते प्रायणीयमभिसमारोहन्० ताञ्छंय्वन्त उपानयन्० एवꣳ हि देवा अकुर्वत । इति देवा अकुर्वत । इत्यु वै मनुष्याः कुर्वते ॥

[२.२.८.१]—[1]षड्ढोत्रा प्रायणीयमासादयति० ॥

तैसं [६.१.९]— ब्रह्मवादिनो वदन्ति विचित्यः सोमा३ न विचित्या३ इति० सोमविक्रयिन्त्सोमꣳ शोधय इत्येव ब्रूयात्० ॥

मैसं [१.२.३]—

देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तꣳ वो मा क्रमीषन् ॥

[३.६.९]— तस्मान्नावगाहेत । यद्यवगाहेत लोष्टꣳ विमृणꣳस्तरेत्० अरणिभ्याꣳ सह तरति० रथाङ्गेन सह तरति० ॥

[३.७.१-२]— स एष आदित्यश्चरुः० पथ्याꣳ यजति० यदग्निम्० यत्सोमम्० यत्सवितारम्० य एवꣳ विद्वान् प्रायणीयेन चरति० जुषाणेनान्य आज्यभागा इज्यन्तेऽथात्र ऋचोभयतो यजति० सप्तदश सामिधेनीः कार्याः० तदाहुः पञ्चदश सामिधेनीः कार्या न सप्तदश०तत्र सूक्ष्यꣳ सप्तदशैव कार्याः। प्रयाजवत् स्यात् प्रायणीयमननुयाजम् । अनुयाजवत् स्यादुदयनीयमप्रयाजम्० निष्कासं च मेक्षणं च निदधाति० पयसि प्रायणीयः स्यात् पयस्युदयनीयः० आदित्यः प्रायणीयः स्यादादित्य उदयनीयः०॥

कासं [२.४]—

देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावाꣳस्तं वो मा क्रमिषं सक्षेहि या ते यज्ञिया तनूस्तयारोह ॥

१. द्रष्टव्यं श्रौ, १. पृ. १३५.

**अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।**
**तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥**
**एदमगन्म देवयजनं पृथिव्या यत्र देवा अजुषन्त विश्वे ।**
**ऋक्सामाभ्यां संतरन्तो यजुर्भी रायस्पोषेण समिषा मदेम ॥**

[ २३.६–९ –] देवीरापो अपां नपादित्यपोऽतिगाहते० यजुषातिगाहते० यदि नाव्यां तरेदरणी च रथं चाधाय तरेत्० एदमगन्म देवयजनं पृथिव्या इति देवयजनमध्यवस्यति० द्विव्रतो दीक्षितस्स्यात्० आदित्यं प्रायणीयं भवत्यादित्यमुदयनीयम्० पथ्यां स्वस्ति यजति० अग्निं यजति० सोमं यजति० सवितारं यजति० अदितिं यजति० पञ्चैता देवता यजति० अग्नये षष्ठमवद्यति० प्रयाजवती एवानुयाजवती स्याताम्० सैंस्थाप्या३न्न सैंस्थाप्या३मिति मीमांसन्ते० सैंस्थाप्यमेव। पत्नीं तु न संयाजयेत्०॥

**कपिसं [ १·१६ ]—**

**देवीरापो .... क्रमिषं सखेहि .... ॥ --- ॥ एदमगन्म .... संचरन्तो .... ॥**

[ ३६.३-६ ] = कासं

माशब्रा [ ३.२.३ ]– आदित्यं चरुं प्रायणीयं निर्वपति० तस्मादेष आदित्य एव प्रायणीयो भवत्यादित्य उदयनीयः० अथैभ्यः पथ्या स्वस्तिः प्रारोचत तामयजन्० अथैभ्योऽग्निः प्रारोचत तमयजन्० अथैभ्यः सोमः प्रारोचत तमयजन्० अथैभ्यः सविता प्रारोचत तमयजन्० अथ यस्यै देवतायै हविर्निरुप्तमासीत् तामयजन्। ता वा एताः पञ्च देवता यजति० तदाहुः यदेव प्रायणीये क्रियेत तदुदयनीये क्रियेत। यदेव प्रायणीयस्य बर्हिर्भवति तदुदयनीयस्य बर्हिर्भवतीति। तदपोद्धृत्य निदधाति। ताँ स्थालीँ सक्षामकर्षं प्रमृज्य मेक्षणं निदधाति। य एव प्रायणीयस्यर्त्विजो भवन्ति त उदयनीयस्यर्त्विजो भवन्ति। तद्यदेतत् समानं यज्ञे क्रियते० तेन सरूपौ। तदु तथा न कुर्यात्। काममेवैतद्बर्हिरनुप्रहरेत्। एवं मेक्षणं निर्णिज्य स्थालीं निदध्यात्। य एव प्रायणीयस्यर्त्विजो भवन्ति त उदयनीयस्यर्त्विजो भवन्ति। यद्यु ते विप्रेताः स्युरप्यन्य एव स्युः० स वै पञ्च प्रायणीये देवता यजति पञ्चोदयनीये। तच्छंय्वन्तं भवति। न पत्नीः संयाजयन्ति० ॥

काशब्रा [ ४.२.३ ] = माशब्रा

**अशौसं—**

**पथ्या रेवतीर्बहुधा विरूपाः सर्वाः संगत्य वरीयस्ते अक्रन् ।**
**तास्त्वा सर्वाः संविदाना ह्वयन्तु दशमीमुग्रः सुमना वशेह ॥** ३.४.७
**वेदः स्वस्तिर्द्रुघणः स्वस्तिः परशुर्वेदिः परशुर्नः स्वस्ति ।**
**हविष्कृतो यज्ञिया यज्ञकामास्ते देवासो यज्ञमिमं जुषन्ताम् ॥** ७.२९.१

अपैसं—

पथ्या रेवतीर्बहुधा .... ॥ ३.१.७ ॥ वेदः स्वस्तिर्द्रविणः .... हविरिदं जुषध्वम् ॥ २०.३०.४

## १०. प्रायणीयेष्टिहौत्रम्

ऋसं—

[1]स्वस्ति नः पथ्यासु धन्वसु स्वस्त्यप्सु वृजने स्वर्वति ।
स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ॥
[2]स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।
सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा ॥ १०.६३.१५-१६
[3]अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १.१८९.१
[4]आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोळ्हुम् ।
अग्निर्विद्वान्त्स यजात् सेदु होता सो अध्वरान्त्स ऋतून् कल्पयाति॥१०.२.३
[5]अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥ १.१८९.२
[6]त्वं सोम प्र चिकितो मनीषा त्वं रजिष्ठमनु नेषि पन्थाम् ।
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः॥ १.९१.१
[7]या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ।
तेभिर्नो विश्वैः सुमना अहेळन् राजन्त्सोम प्रति हव्या गृभाय ॥ १.९१.४
[8]आ विश्वदेवं सत्पतिं सूक्तैरद्या वृणीमहे । सत्यसवं सवितारम् ॥ ५.८२.७
[9]य इमा विश्वा जातान्याश्रावयति श्लोकेन । प्र च सुवाति सविता ॥ ५.८२.९
[10]तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥३.६२.१०
[11]सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।
दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये ॥ १०.६३.१०

१. पथ्यायाः स्वस्तेः पुरोनुवाक्या । २. पथ्यायाः स्वस्तेर्याज्या । ३. अग्नेः पुरोनुवाक्या ।
४. अग्नेर्याज्या । ५. शाङ्खा० अग्नेर्याज्या । ६. सोमस्य पुरोनुवाक्या ।
७. सोमस्य याज्या । ८. सवितुः पुरोनुवाक्या । ९. सवितुर्याज्या ।
१०. शाङ्खा० सवितुः पुरोनुवाक्या । ११. अदितेः पुरोनुवाक्या ।

[1]सेदग्निरग्नीँरत्यस्त्वन्यान् यत्र वाजी तनयो वीळुपाणिः ।
सहस्रपाथा अक्षरा समेति ॥
[2]सेदग्निर्यो वनुष्यतो निपाति समेद्धारमंहस उरुष्यात् ।
सुजातासः परि चरन्ति वीराः ॥ ७.१.१४-१५
[3]त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः ।
शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे ॥ १.४५.६
[4]यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।
महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥ ५.२५.७

ऐब्रा [ १.७-११ ]– आदित्यश्चरुः प्रायणीयो भवत्यादित्य उदयनीयः० पथ्यां यजति० अग्निं यजति० सोमं यजति० सवितारं यजति० उत्तमामदितिं यजति० पञ्च देवता यजति० यस्तेजो ब्रह्मवर्चसमिच्छेत् प्रयाजाहुतिभिः प्राङ् स इयात्०योऽन्नाद्यमिच्छेत् प्रयाजाहुतिभिर्दक्षिणा स इयात्० यः पशूनिच्छेत् प्रयाजाहुतिभिः प्रत्यङ् स इयात्० यः सोमपीथमिच्छेत् प्रयाजाहुतिभिरुदङ् स इयात्० स्वर्ग्यैवोर्ध्वा दिक्० स्वस्ति नः पथ्यासु धन्वसु, स्वस्तिरिद्धि प्रपथे श्रेष्ठेति पथ्यायाः स्वस्तेस्त्रिष्टुभौ। अग्ने नय सुपथा राये अस्मान्, आ देवानामपि पन्थामगन्मेत्यग्नेस्त्रिष्टुभौ, त्वं सोम प्रचिकितो मनीषा, या ते धामानि दिवि या पृथिव्यामिति सोमस्य त्रिष्टुभौ। आ विश्वदेवं सत्पतिं, य इमा विश्वा जातानीति सवितुर्गायत्र्यौ। सुत्रामाणं पृथिवीं द्यामनेहसं, महीमू षु मातरं सुव्रतानाम्[5] इत्यदितेर्जगत्यौ० विराजावेतस्य हविषः स्विष्टकृतः संयाज्ये स्यातां ये त्रयस्त्रिंशदक्षरे सेदग्निरग्नीँरत्यस्त्वन्यान्, सेदग्निर्यो वनुष्यतो निपातीत्येते० प्रयाजवदेवानुयाजवत् कर्तव्यम्। पत्नीर्न संयाजयेत्। संस्थितयजुर्न जुहुयात्० प्रायणीयस्य निष्कासं निदध्यात्। तमुदयनीयेनाभिनिर्वपेत्०॥

शांब्रा [ ७.५-९ ]–य एव प्रायणीयस्यर्त्विजस्त उदयनीयस्य स्युः० समे एव स्यातां प्रायणीयोदयनीये शंय्वन्तं प्रायणीयं शंय्वन्तमुदयनीयम्। पथ्यां स्वस्तिं प्रथमां प्रायणीये यजत्यथाग्निमथ सोममथ सवितारमथादितिम्० ता वै पञ्च देवता यजति० तासां याज्यापुरोनुवाक्यास्ता वै स्वस्तिमत्यः पथिमत्यः पारितवत्यः प्रवत्यो नीतवत्यो भवन्ति० त्वां चित्रश्रवस्तम, यद्वाहिष्ठं तदग्नय इत्यनुष्टुभौ संयाज्ये० शंय्वन्तं भवति० ॥

तैब्रा [ २.५.३.३ ]––

[6]सेदग्निरग्नीँरत्येत्यन्यान् यत्र वाजी तनयो वीडुपाणिः ।
सहस्रपाथा अक्षरा समेति ॥

---

१. स्विष्टकृतः पुरोनुवाक्या। २. स्विष्टकृतो याज्या। ३. शाङ्खा० स्विष्टकृतः पुरोनुवाक्या
४. शाङ्खा० स्विष्टकृतो याज्या। ५. तैसं १.५.११.५. ६. स्विष्टकृतः पुरोनुवाक्या।

तैसं [ ६.१.५ ]– याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः करोति ॥
मैसं [ ३.७.२ ]– याः प्रायणीयेऽनुवाक्यास्ता उदयनीये याज्याः स्युः। या उदयनीयेऽनुवाक्यास्ताः प्रायणीये याज्याः स्युः ॥
कासं [ २३.८-९]– दश याज्यानुवाक्या भवन्ति० स्विष्टकृते द्वादशी भवतः० सप्तदश सामिधेन्यो भवन्ति०याः प्रायणीयस्यानुवाक्यास्ता उदयनीयस्य याज्या या याज्यास्ता अनुवाक्याः०॥
कपिसं [ ३६.६ ] ≡ कासं

## ११. प्रायणीयेष्ट्यौद्गात्रम्

### प्रवद्भार्गवम्[1]

साकौसं [ १.६.२.२.४; २.४.२.७.१–३ ]—

प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतꣳ सखा सख्युर्न प्र मिनाति सङ्गिरम् ।
मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा ॥
प्र वो धियो मन्द्रयुवो विपन्युवः पनस्युवः संवरणेष्वक्रमुः ॥
हरिं क्रीडन्तमभ्यनूषत स्तुभोऽभि धेनवः पयसेदशिश्रयुः ॥
आ नः सोम संयतं पिप्युषीमिषमिन्दो पवस्व पवमान ऊर्मिणा ।
या नो दोहते त्रिरहन्नसश्चुषी क्षुमद्वाजवन्मधुमत्सुवीर्यम् ॥

२र १र २ १ – २ र १ २ १
प्रोअयासाइत् । इन्दुरिन्द्रा । स्या२निष्कृताम् । सखासख्यूः । नप्रमिना
– १ २ १ २ १ १ – २र १ २र १
ता२इसङ्गिराम् । मर्यइवा । युवतिभाइः । सा२मर्षताइ । सोमःकला । शेशतया ।
– १र २ २ र १ २ १ – १ २ १
मा२नापथा२१३ ॥ [१] प्रवोधियो । मन्द्रयुवो । वा२इपन्युवाः । पनस्युवाः ।
२ १ – १ २ १र २ १ – १ २ १र २ १
संवरणाइ । षू२वक्रमूः । हरिङ्क्रीडा । तमभ्यनू । षा२तस्तुभाः । अभिधेना । वःपय-
– १ २ १ २र १र २ १ – १र
साइत् । आ२शिश्रयू३राउ ॥ [ २ ] आनःसोमा । संयतम्पायि । प्यू२षीमिषाम् ।
२ र १ २ १ – १र २र र १र २र १ – १
इन्दोपवा । स्वपवमा । ना२ऊर्मिणा । यानोदोहा । तेत्रिरहान् । आ२सश्चुषाइ ।
१ १र २ १ – १र २ १ १ १ १ १
क्षुमद्वाजा । वन्मधुमात् । सू२वीरिया३माउ । वा२३४५ ॥ [ ३ ] [ग्राम १६.२.१६; ऊह ४.१.७ ]

1. प्रधानयागकाले प्रस्तोतृसाम ।

प्रवद्भार्गवम्

साजैसं [ १.५७.४ ] ≡ साकौसं [ १.६.२.२.४ ]

प्रोयासायिदिन्दुरिन्द्रास्यनिष्कृताम् । स खा स ख्यु र्नप्रमिनातायीसङ्गि-
श टी चिचा क्यका क्यकि इ

राम् । मारी य इ व युवतिभायिस्स म र्षतायि । सोमःकलाशेशतयामनापाथा बु।
चीचा थ्यथ इयश किष भ चा चिचाशा थ श की श भी च्यकिच श

वा ॥ [ ग्राम ३.९.१४ ]
तटख

## १२. सोमक्रयः

तैसं [ १.२.४–९ ]—

इयं ते शुक्र तनूरिदं वर्चस्तया सं भव भ्राजं गच्छ ॥ जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहा ॥ शुक्रमस्यमृतमसि वैश्वदेवꣳ हविः ॥ सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो विपश्चिता ॥ चिदसि मनासि धीरसि दक्षिणासि यज्ञियासि क्षत्रियास्यदितिरस्युभयतःशीर्ष्णी सा नः सुप्राची सुप्रतीची सं भव मित्रस्त्वा पदि बध्नातु पूषाऽध्वनः पात्विन्द्रायाऽध्यक्षायानु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः सा देवि देवमच्छेहीन्द्राय सोमꣳ रुद्रस्त्वावर्तयतु मित्रस्य पथा स्वस्ति सोमसखा पुनरेहि सह रय्या ॥ वस्व्यसि ॥ रुद्रासि ॥ अदितिरसि ॥ आदित्यासि ॥ शुक्रासि ॥ चन्द्रासि ॥ बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो वसुभिरा चिकेतु ॥ पृथिव्यास्त्वा मूर्धन्ना जिघर्मि देवयजन इडायाः पदे घृतवति स्वाहा ॥ परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि ॥ अस्मे रायः ॥ त्वे रायः ॥ तोते रायः ॥ सं देवि देव्योर्वश्या पश्यस्व ॥ त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव संदृशि ॥ माहꣳ रायस्पोषेण वि योषम् ॥ अꣳशुना ते अꣳशुः पृच्यतां परुषा परुर्गन्धस्ते काममवतु मदाय रसो अच्युतोऽमात्योऽसि शुक्रस्ते ग्रहः ॥ अभि त्यं देवꣳ सवितारमूण्योः कविक्रतुमर्चामि सत्यसवसꣳ रत्नधामभि प्रियं मतिमूर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा सुवः ॥ प्रजाभ्यस्त्वा ॥ प्राणाय त्वा ॥ व्यानाय त्वा ॥ प्रजास्त्वमनु प्राणिहि प्रजास्त्वामनु प्राणन्तु ॥

सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तमभिमातिषाह१ँ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन सम्यत्ते गोः ।। अस्मे चन्द्राणि ।। तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामि ।। अस्मे ते बन्धुः।। मयि ते रायः श्रयन्ताम् ।। अस्मे ज्योतिः ।। सोमविक्रयिणि तमः ।। मित्रो न एहि सुमित्रधाः ।। इन्द्रस्योरुमा विश दक्षिणमुशन्नुशन्त१ँ स्योनः स्योनम् ।। स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान् रक्षध्वं मा वो दभन् ।।

उदायुषा स्वायुषोदोषधीना१ँ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृता१ँ अनु ।।
उर्वन्तरिक्षमन्विहि ।। अदित्याः सदोऽसि ।। अदित्याः सद आसीद ।।
अस्तभ्नाद् द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्याः ।
आसीदद् विश्वा भुवनानि सम्राड् विश्वेत्तानि वरुणस्य व्रतानि ।।
वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्नियासु ।
हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्रौ ।।
उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ।।

उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनौ ।। वरुणस्य स्कम्भनमसि ।। वरुणस्य स्कम्भसर्जनमसि ।। प्रत्यस्तो वरुणस्य पाशः ।। प्र च्यवस्व भुवस्पते विश्वान्यभि धामानि मा त्वा परिपरी विदन् मा त्वा परिपन्थिनो विदन् मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुरा दघच्छ्येनो भूत्वा परा पत यजमानस्य नो गृहे देवैः स१ँस्कृतम् ।। यजमानस्य स्वस्त्ययन्यस्यपि पन्थामगस्महि स्वस्तिगामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ।।

नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृत१ँ सपर्यत ।
दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय श१ँसत ।।
वरुणस्य स्कम्भनमसि ।। वरुणस्य स्कम्भसर्जनमसि ।। उन्मुक्तो वरुणस्य पाशः ।।

[ ६.१.६–११ ]– तिस्रो रात्रीः क्रीतः सोमो वसति० एकहायन्या क्रीणाति० अकूटयाकर्णयाकाणयाश्लोणयासप्तशफया क्रीणाति० यच्छ्वेतया क्रीणीयाद्दुश्चर्मा यजमानः स्यात् । यत् कृष्णयानुस्तरणी स्यात् प्रमायुको यजमानः स्यात् । यद् द्विरूपया वार्त्रघ्नी स्यात् स वान्यं जिनीयात् तं वान्यो जिनीयात् । अरुणया पिङ्गाक्ष्या क्रीणाति० यद्धिरण्यं घृतेऽवधाय जुहोति० बद्धमव दधाति० निष्टर्क्यं बध्नाति० यदबद्धा स्यादयता स्यात् । यत् पदिबद्धानुस्तरणी स्यात् प्रमायुको यजमानः स्यात् । यत् कर्णगृहीता वार्त्रघ्नी स्यात् स वान्यं जिनीयात् तं वान्यो जिनीयात्० षट् पदान्यनु नि क्रामति० सप्तमे पदे जुहोति० हिरण्यमुपास्य जुहोति० अस्मे राय इति सं वपति० त्वे राय इति यजमानाय प्र यच्छति० तोते राय इति पत्न्यै० उभयोरुप

वपति० पशूनां चर्मन् मिमीते० यं कामयेतापशुः स्यादित्यृक्षतस्तस्य मिमीते० यं कामयेत पशुमान्त्स्यादिति लोमतस्तस्य मिमीते० अपामन्ते क्रीणाति० अनसाच्छ याति० यत्र खलु वा एतꣳ शीर्ष्णा हरन्ति० अभि त्यं देवꣳ सवितारमित्यतिच्छन्दसर्चा मिमीते० एकयैकयोत्सर्गं मिमीते० सर्वास्वङ्गुष्ठमुप नि गृह्णाति० पञ्च कृत्वो यजुषा मिमीते० पञ्च कृत्वस्तूष्णीम्० प्रजाभ्यस्त्वेत्युप समूहति० वाससोप नह्यति० प्राणाय त्वेत्युप नह्यति० व्यानाय त्वेत्यनु शृन्थति० यत् कलया ते [क्रीणानि] शफेन ते क्रीणानि इति पणेतागोअर्घꣳ सोमं कुर्यात्० गवा ते क्रीणानि इत्येव ब्रूयात्० अजया क्रीणाति० हिरण्येन क्रीणाति० धेन्वा क्रीणाति० ऋषभेण क्रीणाति० अनडुहा क्रीणाति० मिथुनाभ्यां क्रीणाति० वाससा क्रीणाति० येन हिरण्येन सोमं क्रीणीयात् तदभीषहा पुनरा ददीत० इदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उप ग्रथ्नामि इत्याह० यदेतेभ्यः सोमक्रयणाननुदिशति० वारुण्यर्चा सादयति० वाससा पर्यानह्यति० उदु त्यं जातवेदसमिति सौर्यर्चा कृष्णाजिनं प्रत्यानह्यति० वारुण्यर्चा परि चरति०॥

[ ६.१.३ ]– क्रीते सोमेऽपोर्णुते० ॥

[ ६.१.४ ]– क्रीते सोमे मैत्रावरुणाय दण्डं प्र यच्छति० ॥

[ ३.१.२ ]– एष ते गायत्रो भाग इति मे सोमाय ब्रूतात् । एष ते त्रैष्टुभो [भाग इति मे सोमाय ब्रूतात् । एष ते] जागतो भाग इति मे सोमाय ब्रूतात् । छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतात्० पुरस्तात् सोमस्य क्रयादेवमभि मन्त्रयेत०॥

तैब्रा [ ३.७.७.११ ]—

एकमिषे विष्णुस्त्वान्वेतु । द्वे ऊर्जे विष्णुस्त्वान्वेतु । त्रीणि व्रताय विष्णुस्त्वान्वेतु । चत्वारि मायो भवाय विष्णुस्त्वान्वेतु । पञ्च पशुभ्यो विष्णुस्त्वान्वेतु । षड्रायस्पोषाय विष्णुस्त्वान्वेतु । सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वान्वेतु ॥

सखायः सप्तपदा अभूम । सख्यं ते गमेयम् ।
सख्यात्ते मा योषम् । सख्यान्मे मा योष्ठाः ॥

[ २.५.८.३ ]—

वयः सुपर्णा उपसेदुरिन्द्रम् । प्रियमेधा ऋषयो नाधमानाः ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुः । मुमुग्ध्यस्मान्निधयेव बद्धान् ॥

मैसं [ १.२.४–६ ]–

इयं ते शुक्र ....॥ जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा ॥ शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि ॥ चिदसि मनासि.... सुप्रतीची भव मित्रस्त्वा पदि बध्नातु पूषाध्वनः पात्विन्द्रायाध्यक्षाय ॥

१ १र र १र २ १२र १र २१ २र र र १र र
इहस्त्ववैंश्वानरायप्रदिशोज्योतिर्बृहत् । यद्दूरेसन्निहाभुवाः । भुवाः । भुवाः । भुवोवा ।
२१र र २१र र २ १र र २ २ १र र २ १र ९ २ १ २र र
भुवोवा । भुवोवा । भुवोवाहाइ । भुवोवाहाइ । भुवोवा३हाउ । वा । इहस्त्ववैंश्वा-
१र २ १ २र १र २१ २ २ २ २र १ २र १
नरायप्रदिशोज्योतिर्बृहत् । ओ३१म् । ओ३१म् । ओ३१म् । आयूः । आयूः ।
२र १ २र १ २र १ २र १ २र १र र २र १र र २र १र र
आयूः । ज्योतीः । ज्योतीः । ज्योतीः । ज्योतोवा । ज्योतोवा । ज्योतोवा ।
२र १र र २ २र १र र २ र १र ९ २ १र २र
ज्योतोवाहाइ । ज्योतोवाहाइ । ज्योतो३वा३हाउ । वा । घर्मोमरुद्भिर्भुवनेषुचक्रदत् ।
१ १ १ १
इट्इडा२३४५ ॥ [ आरण्य ६.१.४ ]

## इन्द्रस्य सधस्थम्

स्तोभपदपाठः [ २.१० ]—

अदिद्युतत् । विश्वम् । भूतम् । सहः । बृहत् । अदिद्युतत् । अभ्राट् । प्र । अभ्राट । अदिद्युतत् । घर्मः । अरूरुचत् । अदिद्युतत् । घर्मः । उषसः । अरोचयः ॥

२र र र १ र २र १ र २र १ र २र र १र र २र १र र २र
हाउहाउहाउ । सहोभ्राज । सहोभ्राज । सहोभ्राजा । पोभ्राजा । पोभ्राजा ।
१र र २ १ र २र १ र २र १ र २र १ २र र १ २र र
पोभ्राज । अभ्राजीत् । अभ्राजीत् । अभ्राजीत् । व्यभ्राजीत् । व्यभ्राजीत् ।
१ २र र १ २ १ २ १ २ १ र
व्यभ्राजीत् । अदिद्युतत् । अदिद्युतत् । अदिद्युतत् । अदिद्युतद्विश्वम्भूत६
र - १ र - १ र १
सहोबृ२हात् । अदिद्युतदभ्राट्प्रा२भ्राट् । अदिद्युतद्घर्मोअरू२चात् । अदिद्युतद्घर्म-
र र - १ २र र र १ र २र १ र २र १ र २र र
उषसोअरोचा२याः । हाउहाउहाउ । सहोभ्राज । सहोभ्राज । सहोभ्राजा ।
१र र २र १र र २र १र र २ १ र २र १ र २र १ र २र १ २र र
पोभ्राजा । पोभ्राजा । पोभ्राज । अभ्राजीत् । अभ्राजीत् । अभ्राजीत् । व्यभ्राजीत् ।
१ २र र १ २र र १ २ १ २ १ २ २
व्यभ्राजीत् । व्यभ्राजीत् । अदिद्युतत् । अदिद्युतत् । अदिद्युता२त् । हाउवा ।
र १ २ १र २र १ र २ १ र २र १ २र ३ १ १ १
ए । अदिद्युतद्घर्मोअरूरुचदुषसान्दिविसूर्योविभाती २३४५ ॥ [ आरण्य ६.२.५ ]

## पश्चानुगानम्

साकौसं [ आरण्य २.७ ]—

यज्जायथा अपूर्व्य मघवन् वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥

१र र १र र १र र २ १ २ १ २ १
हाउहोहाइ । हाउहोहाइ । हाउहोहाइ । अन्तरिक्ष६ँसुवर्द्दिवञ्जग । न्मा ।
२ १ २ १ २ १ २ १ २ १ २ १ र र२
अन्तरिक्ष६ँसुवर्द्दिवञ्जग । न्मा । अन्तरिक्ष६ँसुवर्द्दिवञ्जग । न्मा । परात्परमैरय ।
१ र र २ १ र र १ १र ३र २ र
ता । परात्परमैरय । ता । परात्परमैरय । त । औहोवाहाउ । वा । ए ।
१र २ १र२र१र र २ १र २र १र र
यज्ञोदिवोमूर्द्धादेवमादनोघर्मोज्योतिः ॥ १

१र र १र र १र र २ १ २ १ २ १
हाउहोहाइ । हाउहोहाइ । हाउहोहाइ । अन्तरिक्ष६ँसुवर्द्दिवञ्जग । न्मा ।
२ १ २ १ २ १ २ १ २ १ २ १ र र२
अन्तरिक्ष६ँसुवर्द्दिवञ्जग । न्मा । अन्तरिक्ष६ँसुदर्द्दिवञ्जग । न्मा । परापत्परमैरय ।
१ र र २ १ र र २ १र ३र२ र
ता । परात्परमैरय । ता । परात्परमैरय । त । औहोवाहाउ । वा । ए ।
१ २ १र र २ १र २ १र र२ १ र २र र १र र
पृथिव्यन्तरिक्षन्द्यौरापःकनिक्रदात्सिन्धुरापोमरुतोमादयन्ताङ्घर्मोज्योतिः ॥ २

१र र १र र १र र २ १ २ १ २ १
हाउहोहाइ । हाउहोहाइ । हाउहोहाइ । अन्तरिक्ष६ँसुवर्द्दिवञ्जग । न्मा ।
२ १ २ १ २ १ २ १ २ १ २ १र र २ १ र
अन्तरिक्ष६ँसुवर्द्दिवञ्जग । न्मा । अन्तरिक्ष६ँसुर्द्दिवञ्जग । न्मा । परात्परमैरय । ता । परात्प-
र २ २ र र २ १ १र र र र२ १ २ ५
रमैरय । ता । परात्परमैरय । ता । दिवोमूर्द्धान६ँसमैरयन् । होये३ । हो२३४वा ।
१ र २ १र र र२ १ २ ५ १र र २ १र र
यशोघर्म्मोज्योतिः । यशःसमैरयन् । होये३ । हो२३४वा । तेजोघर्म्मोज्योतिः ।
र र२ १ २ ५ १ र १र र र२ १ २
तेजःसमैरयन् । होये३ । हो२३४वा । सुवर्घर्म्मोज्योतिः । सुवःसमैरयन् । होये३ ।
५ १र २ १र र र२ १ २
हो२३४वा । ज्योतिर्घर्म्मोज्योतिः । ज्योतिःसमैरयन् । होये३ । हो२३४५वा६५६ ।
२ १र २ १र र
घर्म्मोघर्म्मोज्योतिः ॥ ३

विश्वेभ्यो देवेभ्य ऋतून् कल्पय दक्षिणाः कल्पय यथर्षि यथादेवतम् ॥ आस्माकोऽसि शुक्रस्ते ग्रहः ॥ अभि त्यं देवं सवितारमोण्योः .... सत्यसवं .... कृपा स्वः ॥ प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु ॥ प्रजास्त्वमनु प्राणिहि ॥ सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तं बह्वर्षं शोभमानम् ॥ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन शक्म यत्ते गोरस्मे ते चन्द्राणि ॥ तपसस्तनूरसि प्रजापतेर्वर्णस्सहस्रपोषं पुष्यन्ती परमेण पशुना क्रीयसे ॥ अस्मे ते बन्धुः ॥ मित्रो न एहि सुमित्रधाः ॥ इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तं स्योनस्स्योनम् ॥ स्वानभ्राडङ्घारे बम्भारे हस्त सुहस्त कृशान एते वस्सोमक्रयणास्तान् रक्षध्वं मा वो दभन् ॥

उदायुषा स्वायुषोद्रसेनौषधीनाम् । उत्पर्जन्यस्य वृष्ट्योदस्थाममृतौ अनु ॥

उर्वन्तरिक्षं वीहि ॥ अपि पन्थामगन्महि ....॥ अदित्यास्त्वगसि ॥ अदित्यास्सदने सीद ॥ अस्तभ्नाद् द्यामृषभो विश्ववेदा अमिमीत वरिमाणं .... ॥ वनेषु व्यन्तरिक्षं.... ॥ सूर्यस्य चक्षुरारुहम् .... ॥ उस्रा एतं धूर्षाधा अवीरहणा अनश्रू ब्रह्मचोदनौ यज्ञस्यायुः प्रतिरन्तौ स्वस्ति गृहान् गच्छतम् ॥ धूरसि धूर्व धूर्वन्तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामस्तं च धूर्व ॥ वारुणमसि ॥ वरुणस्य स्कम्भन्यसि ॥ प्रच्यवस्व भुवनस्पते विश्वान्यभि धामानि मा त्वा परिपरिणो विदन् मा परिपन्थिनो मा त्वा वृका अघायवो विदन् ॥ श्येनो भूत्वा परापत यजमानस्य नो गृहे संस्कृतम् ॥ नमो मित्रस्य वरुणस्य .... ॥ वारुणमसि ॥ वरुणस्त्वोत्तभ्नातु ॥ वरुणस्य स्कम्भसर्जन्यसि ॥ प्रमुक्तो वरुणस्य पाशः ॥ वरुणोऽसि धृतव्रतोऽच्छिन्नपत्रः प्रजा उपावरोह ॥ वरुणस्यर्तसदनमसि ॥ अदित्यास्त्वगसि ॥ अदित्यास्सदने सीद ॥ निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय सुक्रतुः ॥ वारुणमसि ॥ वरुणाय त्वा ॥

[२४.१-७]—या श्येताक्षी कृष्णवाला कृष्णशफा न तया क्रीणीयात्० पितृदेवत्या सा प्रमायुकस्स्याद्या द्विरूपा न तया क्रीणीयाद् वार्त्रघ्नी सा जिनाति वा जीयते वोत तया राजन्यस्य क्रीणीयात्० या बभ्रुरेकहायनी तया क्रीणीयात्० तिस्रो रात्रीस्सोमः क्रीतो वसति० चतुर्गृहीतमाज्यं भवति० इयं ते शुक्र तनूरिदं वर्च इति हिरण्यं घृतेऽवदधाति० बद्ध्वावदधाति० निष्टर्क्यं बध्नाति० यजुषावदधाति । यजुषोद्धरति० जूरसीति० पश्यन् सोमक्रयणीं जुहोति० देव सूर्य सोमं क्रेष्याम इत्यमुष्मा एवादित्याय प्रोच्य सोमं क्रीणाति० यत् पदि बद्धा स्यात् पितृदेवत्या स्यात्० यत् कर्णगृहीता स्याद्वार्त्रघ्नी स्यात्० दक्षिणेन पदा दक्षिणानि पदान्यनुनिक्रामति० षट् पदान्यनुनिक्रामति० सप्तमं पदमभिगृह्णाति० स्फ्येन पदं परिलिखति० स्थाल्यां पदं संवपति० यद्धिरण्यमुपास्य जुहोति०

यद्पो निनयति० सोमक्रयण्या पत्नी^ संख्यापयति० न पूर्वस्मिन् पदमुपक्रपेत् गार्हपत्य उपवपति० हस्ते हिरण्यं कृत्वा मिमीते० अतिच्छन्दसा मिमीते० एकैकया मिमीते० अङ्गुष्ठेन प्रतिमिमीते० द्विर्मिमीते० दश कृत्वो मिमीते० अपरिमितं मिमीते० रोहिते चर्मन् मिमीते० न विचीयमानस्योपद्रष्टा स्यात्० अपामन्ते क्रीणाति० हिरण्येन क्रीणाति० अजया क्रीणाति० धेन्वा क्रीणाति० अनडुहा क्रीणाति० वत्सतरेण च वत्सतर्या च क्रीणाति० ऋषभेण क्रीणाति० य एव कश्च साण्डस्स्यादरेतास्तेन क्रीणीयात्० दशभिः क्रीणाति० न कलाशः पणेत० अपोर्णुते० स्वान्नभ्राडिति सोमक्रयणाननुदिशति० सोमविक्रयी न पुष्यति यदि कृच्छ्रायेतोपैव हरेत्० अनसाच्छ यन्ति० अनसा वहन्ति० यजुषैव युनक्ति० यच्छीर्णा हरेयुः० यद्वारुण्या सादयति० वनेषु व्यन्तरिक्षं ततानेति वाससा पर्यानह्यति० सूर्यस्य चक्षुरारुहमिति कृष्णाजिनं पुरस्तात् प्रत्यानह्यन्ति० आसन्दीमुद्गृह्णन्ति० यजुषा विमुञ्चति० ॥

**कपिसं [ १.१७–१९, २.१ ]—**

**---॥ चिदसि मनासि .... ॥---॥ इदमहं रक्षसो ग्रीवा अपिकृन्तामि ॥---॥ मे रायः॥ माहं रायस्पोषेण वियोषम् ॥ सं देवी....त्वष्टृमन्तस्त्वा सपेम ॥ आस्माकोऽसि .... ॥ अभि त्यं .... सत्यसवसं .... मतिं कविमूर्ध्वा .... ॥ प्रजाभ्यस्त्वा प्रजास्त्वानुप्राणन्तु ॥ सोमं ते .... वीर्यवन्तं बह्वर्घम् ॥ शुक्रं ते शुक्रेण चन्द्रं चन्द्रेणामृतममृतेन क्रीणामि शक्म .... ॥---॥ स्वान भ्राजाङ्घारे .... कृशानवेते .... ॥---॥ अस्तभ्नाद् द्यामसुरो .... ॥---॥ सूर्यस्य .... यदेतशोभिरीयसे .... ॥ उस्रावेतं धूर्षाधावनीरहणावनास्यौ ब्रह्मचोदनौ ॥ वारुणमसि ॥ --- ॥ अदित्यास्सदने सीद ॥ वारुणमसि ॥ --- ॥**

[३७.१-८]— --- यत्कर्णगृहीता स्यात् पितृदेवत्या स्याद्वार्त्रघ्नी स्यात् --- यावद् घृतं विधावेत्तावदभिपरिलिखेत् --- अङ्गुष्ठेन परिमिमीते --- न विचेतवा अनुमन्येत। न विचीयमानस्योपद्रष्टा स्यात् --- ॥

**वामासं—**

**एषा ते शुक्र तनूरेतद्वर्चस्तया संभव भ्राजं गच्छ ॥ जूरसि धृता मनसा जुष्टा विष्णवे। तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा ॥ शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि ॥ चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतःशीर्ष्णी। सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि बध्नीतां पूषाध्वनस्पात्विन्द्रायाध्यक्षाय। अनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः। सा देवि देवमच्छेहीन्द्राय सोमं रुद्रस्त्वावर्तयतु स्वस्ति सोमसखा पुनरेहि ॥ वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासि । बृहस्पतिष्ट्वा सुम्ने**

रक्ष्णातु रुद्रो वसुभिराचके ॥ अदित्यास्त्वा मूर्धन्नाजिघर्मि देवयजने पृथिव्या इडायास्पदमसि घृतवत्स्वाहा ॥ अस्मे रमस्व ॥ अस्मे ते बन्धुः ॥ त्वे रायः ॥ मे रायः॥ मा वयꣳ रायस्पोषेण वियौष्म ॥ तोतो रायः॥ समख्ये देव्या धिया संदक्षिण्योरुचक्षसा। मा म आयुः प्रमोषीर्मो अहं तव। वीरं विदेय तव देवि संदृशि ॥ एष ते गायत्रो....। एष ते त्रैष्टुभो....। एष ते जागतो....। छन्दोनामानाꣳ....॥ आस्माकोऽसि शुक्रस्ते ग्रह्यो विचितस्त्वा विचिन्वन्तु ॥ अभि त्यं देवꣳ सवितारमोण्योः.... प्रियं मतिं कविम्। ऊर्ध्वा यस्यामतिर्भा.... कृपा स्वः॥ प्रजाभ्यस्त्वा॥ प्रजास्त्वानुप्राणन्तु प्रजास्त्वमनुप्राणिहि॥ शुक्रं त्वा शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन ॥ सग्मे ते गोः॥ अस्मे ते चन्द्राणि ॥ तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुषेयम्॥ मित्रो न एहि सुमित्रधः ॥ इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनम्॥ स्वान भ्राजाङ्घारे बम्भारे.... मा वो दभन्॥ परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज॥ उदायुषा स्वायुषोदस्थाममृताँ अनु ॥ प्रति पन्थामपद्महि स्वस्तिगामनेहसम्। येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥ अदित्यास्त्वगसि ॥ अदित्यै सद आसीद ॥ अस्तभ्नाद् द्यां वृषभो....॥ वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु.... ॥

सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकम्।
यत्रैतशेभिरीयसे भ्राजमानो विपश्चिता ॥

उस्रावेतं धूर्षाहौ युज्येथामनश्रू अवीरहणौ ब्रह्मचोदनौ। स्वस्ति यजमानस्य गृहान् गच्छतम् ॥ भद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि। मा त्वा परिपरिणो विदन् मा त्वा परिपन्थिनो विदन् मा त्वा वृका अघायवो विदन्। श्येनो भूत्वा परापत यजमानस्य गृहान् गच्छ तन्नौ सꣳस्कृतम् ॥ नमो मित्रस्य वरुणस्य चक्षसे.... ॥ वरुणस्योत्तम्भनमसि ॥ वरुणस्य स्कम्भसर्जनी स्थः ॥ ४.१७-३६

माशब्रा [ ३.२.४.१–३.३.४.२५ ]—– स यत् सोमं क्रीणाति० अथ यद् ध्रुवायामाज्यं परिशिष्टं भवति तत् जुह्वां चतुष्कृत्वो विगृह्णाति। बर्हिषा हिरण्यं प्रबध्य अवधाय जुहोति० स हिरण्यमवदधाति एषा ते शुक्र तनूरेतद्वर्चः....इति० स जुहोति जूरसि....इति० अथ हिरण्यमपोद्धरति० सोऽपोद्धरति शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसीति० प्रमुच्य तृणं बर्हिष्यपिसृजति। सूत्रेण हिरण्यं प्रबध्नीते। अथापरं चतुर्गृहीतमाज्यं गृहीत्वा **अन्वारभस्व यजमान** इत्याह। अपोर्णुवन्ति शालायै द्वारे। दक्षिणतः सोमक्रयण्युपतिष्ठते० अथोपनिष्क्रम्याभिमन्त्रयते चिदसि मनासि.... इति० तामुदीचीमत्याकुर्वन्ति० सप्त पदान्यनु निक्रामति० वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासि...इति० अथ

सप्तमं पदं पर्युपविशन्ति। स हिरण्यं पदे निधाय जुहोति० स जुहोति अदित्यास्त्वा मूर्धन्नाजिघर्मि....इति० अथ स्फ्यमादाय परिलिखति० त्रिष्कृत्वः परिलिखति० स परिलिखति अस्मे रमस्वेति० अथ समुल्लिख्य पदꣳ स्थाल्याꣳ संवपति अस्मे ते बन्धुरिति० अथाप उपनिनयति० अथ यजमानाय पदं प्रयच्छति त्वे राय इति० तद् यजमानः प्रतिगृह्णाति मे राय इति० अथाध्वर्युरात्मानमुपस्पृशति मा वयꣳ रायस्पोषेण वियौष्मेति० अथ पत्न्यै पदं प्रतिपराहरन्ति० तां नेष्टा वाचयति तोतो राय इति। अथैनाꣳ सोमक्रयण्या संख्यापयति० स संख्यापयति समख्ये देव्या धिया....संदृशीति० सा या बभ्रुः पिङ्गाक्षी। सा सोमक्रयणी० अथ या रोहिणी श्वेताक्षी सा पितृदेवत्या० यदि बभ्रुं पिङ्गाक्षीं न विन्देदरुणा स्यात्। यद्यरुणां न विन्देद् रोहिणी वार्त्रघ्नी स्यात्० सा स्यादप्रवीता० सा स्यादखण्डाकूटाकाणाकर्णालक्षितासप्तशफा० पदꣳ समुप्य पाणी अवनेनिक्ते० अथास्याꣳ हिरण्यं बध्नीते०।

अथ संप्रेष्यति **सोमोपनहनमाहर सोमपर्याणहनमाहर उष्णीषमाहर** इति० यद्युष्णीषं विन्देदुष्णीषः स्यात्। यद्युष्णीषं न विन्देत् सोमपर्याणहनस्यैव द्व्यङ्गुलं वा त्र्यङ्गुलं वावकृन्तेदुष्णीषभाजनम्। अध्वर्युर्वा यजमानो वा सोमोपनहनमादत्ते। य एव कश्च सोमपर्याणहनम्। अथाग्रेण राजानं विचिन्वन्ति। तदुदकुम्भ उपनिहितो भवति। तद् ब्राह्मण उपास्ते। तदभ्यायन्ति प्राञ्चः। तदायत्सु वाचयति एष ते गायत्रो....ब्रूतादिति० अथैत्य प्राङुपविशति। सोऽभिमृशति आस्माकोऽसि....इति० अत्र हैके तृणं वा काष्ठं वा विस्वापास्यन्ति। तदु तथा न कुर्यात्० अभ्येव मृशेत्० अथ वासो द्विगुणं वा चतुर्गुणं वा प्राग्दशं वोदग्दशं वोपस्तृणाति। तद्राजानं मिमीते० सावित्र्या मिमीते० अतिच्छन्दसा मिमीते० स मिमीते अभि त्यं देवम्....कृपा स्वरिति। एतया सर्वाभिः। एतया चतसृभिः। एतया तिसृभिः। एतया द्वाभ्याम्। एतयैकया। एतयैवैकया। एतया द्वाभ्याम्। एतया तिसृभिः। एतया चतसृभिः। एतया सर्वाभिः। समस्याञ्जलिनाध्यावपति० दश कृत्वो मिमीते। अथ सोमोपनहनस्य समुत्पार्यान्तानुष्णीषेण विग्रथ्नाति प्रजाभ्यस्त्वेति० अथ मध्येऽङ्गुल्याकाशं करोति प्रजास्त्वानुप्राणन्त्विति० तꣳ सोमविक्रयिणे प्रयच्छति। अथातः पणनस्यैव। स वै राजानं पणते० स आह **सोमविक्रयिन् क्रय्यस्ते सोमो राजा३** इति। **क्रय्यः** इत्याह सोमविक्रयी। **तं वै क्रीणानि** इति। **क्रीणीहि** इत्याह सोमविक्रयी। **कलया ते क्रीणानि** इति। **भूयो वा अतः सोमो राजार्हति** इत्याह सोमविक्रयी। **भूय एवातः सोमो राजार्हति महाꣳस्त्वेव गोर्महिमा** इत्यध्वर्युः० **शफेन ते क्रीणानि** इति। **भूयो वा अतः सोमो राजार्हति** इत्याह सोमविक्रयी। **भूय एवातः सोमो राजार्हति महाꣳस्त्वेव गोर्महिमा** इत्यध्वर्युः। एतान्येव दश वीर्याण्युदाख्यायाह **पदा ते [क्रीणामि]। अर्धेन ते [क्रीणामि]। गवा ते क्रीणामि** इति। **क्रीतः सोमो राजा** इत्याह सोमविक्रयी **वयाꣳसि प्रब्रूहि** इति। स आह **चन्द्रं ते वस्त्रं ते छागा ते**

**धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्याः** इति० अथ यदध्वर्युरेव गोर्वीर्याण्युदाचष्टे। न सोमस्य सोमविक्रयी० अथ यत्पञ्च कृत्वः पणते० अथ हिरण्ये वाचयति शुक्रं त्वा शुक्रेण क्रीणामि....इति० अथ सोमविक्रयिणमभिप्रकम्पयति सग्मे ते गोरिति० तद्यजमानमभ्याहृत्य न्यस्यति अस्मे ते चन्द्राणीति० तत्ततः सोमविक्रय्यादत्ते। अथाजायां प्रतीचीनमुल्यां वाचयति तपसस्तनूरसि.... इति० स वा अनेनैवाजां प्रयच्छति। अनेन राजानमादत्ते०।

अथ राजानमादत्ते मित्रो न एहि सुमित्रध इति० तं यजमानस्य दक्षिण ऊरौ प्रत्युह्य वासो निदधाति इन्द्रस्योरुमाविश दक्षिणम् .... इति० अथ सोमक्रयणाननुदिशति स्वान भ्राजाङ्घारे.... दभन्निति० अथात्रापोर्णुते० अथ वाचयति परि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भजेति० अथ राजानमादायोत्तिष्ठति उदायुषा स्वायुषोदस्थाममृताँ अन्विति० अथ राजानमादायारोहणमभिप्रैति प्रति पन्थामपद्महि .... वस्विति० तं वा इति हरन्ति। अनसा परिवहन्ति० अथ यदपामन्ते क्रीणाति० अथ यद्धिरण्यं भवति० अथ यद् वासो भवति० अथ यदजा भवति० अथ यद्धेनुर्भवति० अथ यन्मिथुनौ भवतः० तं वै दशभिरेव क्रीणीयात्। नादशभिः० नीडे कृष्णाजिनमास्तृणाति अदित्यास्त्वगसीति० अथैनमासादयति अदित्यै सद आसीदेति० अथैवमभिपद्य वाचयति अस्तभ्नाद् द्यां वृषभो अन्तरिक्षम्....इति० अथ सोमपर्याणहनेन पर्याणह्यति० स पर्याणह्यति वनेषु व्यन्तरिक्षं ततान .... इति० अथ यदि द्वे कृष्णाजिने भवतः। तयोरन्यतरत् प्रत्यानह्यति प्रतीनाहभाजनम्। यद्यु एकं भवति। कृष्णाजिनग्रीवा एवावकृत्य प्रत्यानह्यति प्रतीनाहभाजनम्। सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः .... विपश्चितेति० उद्धते प्रउगे फलके भवतः। तदन्तरेण तिष्ठन्त्सुब्रह्मण्यः प्राजति० पलाशशाखया प्राजति० अथानड्वाहावाजति। तौ यदि कृष्णौ स्याताम्। अन्यतरो वा कृष्णः। तत्र विद्याद्वर्षिष्यत्यैषमः पर्जन्यः० अथ युनक्ति उस्रावेतं धूर्षाहौ.... इति० अथ पश्चात् परिक्रम्य अपालम्बमभिपद्याह **सोमाय क्रीतायानुब्रूहि** इति **सोमाय पर्युह्यमाणाय** इति वा। अतो यतरथा कामयेत। अथ वाचयति भद्रो मेऽसि प्रच्यवस्व भुवस्पते .... इति० अथ सुब्रह्मण्यामाह्वयति[1]० **सुब्रह्मण्यो३म् सुब्रह्मण्यो३म्** इति० त्रिष्कृत्व आह० **इन्द्रागच्छ** इति० **हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने। गौरावस्कन्दिन्नहल्यायै जार** इति० **कौशिक ब्राह्मण गौतम ब्रुवाण** इति० **इत्यहे सुत्याम्** इति यावदहे सुत्या भवति। **देवा ब्रह्माण आगच्छत** इति० अथ प्रतिप्रस्थाताग्रेण शालामग्नीषोमीयेण पशुना प्रत्युपतिष्ठते० तद्धैके आहवनीयादुल्मुकमाहरन्ति० तदु तथा न कुर्यात्० स[2] वै द्विरूपो भवति०

---

१. केषुचिच्छाखान्तरेषु क्रीते सोमे सुब्रह्मण्या नोक्ता। २. अग्नीषोमीयः पशुः।

कृष्णसारङ्गः स्यादित्याहुः० यदि कृष्णसारङ्गं न विन्देदथो अपि लोहितसारङ्गः स्यात् । तस्मिन् वाचयति नमो मित्रस्य.... शꣳसतेति० अथाध्वर्युरारोहणं विमुञ्चति वरुणस्योत्तम्भनमसीति । उपस्तम्भनेनोपस्तभ्नाति । वरुणस्य स्कम्भसर्जनी स्थ इति शम्ये उद्वृहति० ॥

**वाकासं—**

**एषा ते शुक्र....॥ जूरसि....तनू यन्त्रमशीय स्वाहा ॥ चन्द्रमसि शुक्रमस्यमृतमसि वैश्वदेवमसि ॥ चिदसि मनासि धीरसि....सुप्रतीची भव ....॥--- ॥ त्वे रायः ॥ अस्मे रायः ॥ --- ॥ समख्ये.... दक्षिणयोरुचक्षसा ।....वीरान् विदेय....॥ --- ॥ छन्दोमानानाꣳ साम्राज्यं गच्छतादिति मे ....॥ --- ॥ चन्द्रं त्वा चन्द्रेण क्रीणामि शुक्रꣳ शुक्रेणामृतममृतेन ॥ --- ॥ अस्तभ्नाद् द्यामृषभो.... ॥ --- ॥ सूर्यस्य .... कनीनकाम् । .... ॥ उस्रा एतं धूर्वाहौ .... ॥ --- ॥ ४.६.१–१०.७**

काशब्रा [ ४.२.४.१–४.३.४.१८ ]– --- प्रदाय स्रुचमुपोद्धृत्य हिरण्यꣳ स्फ्येन परिलिखति --- सोमक्रयण्याः पदं पत्न्यै प्रयच्छति० स प्रयच्छति तोतो राय इति --- तौ प्राञ्चौ जपन्तावितः एष ते गायत्रो भाग.... इति० अथ जघनेन जान्वक्ण उपविशति आस्माकोऽसीति । --- शिरोऽपावृत्य जपति स्वानभ्राजाङ्घारे .... इति --- एकेऽनड्वाहं वान्यं वा गां प्रयच्छन्ति --- अथाभिमृशति अस्तभ्नाद् द्यां .... इति --- स दक्षिणमेवाग्रे युनक्ति । अथ सव्यम्० तावभिमन्त्रयते उस्रा एतं धूर्वाहौ ....इति --- तद्धैक आहवनीयादुल्मुकमादाय प्रत्युपतिष्ठन्ते० तदु तथा न कुर्यात् --- तं दक्षिणेनाहवनीयं निदधति । तं नान्तरेण संचरेत् --- ॥

ऐब्रा [ १.१२ ] प्राच्यां दिशि क्रीयते० ॥

[ १.२७ ] अस्कन्नां वत्सतरीमाजन्ति सोमक्रयणीम् । तया सोमꣳ राजानं क्रीणन्ति । तां पुनर्निष्क्रीणीयात्० ॥

[ ६.३ ]– सोमे राजनि क्रीते सुब्रह्मण्यामाह्वयन्ति० तदाहुर्यदन्तर्वेदीतर ऋत्विज आर्त्विज्यं कुर्वन्तीति बहिर्वेदि सुब्रह्मण्या कथमस्यान्तर्वेद्यार्त्विज्यं कृतं भवतीति । वेदेर्वा उत्करमुत्किरन्ति । यद्देवोत्करे तिष्ठन्नाह्वयतीति ब्रूयात्तेनेति० ॥

शांब्रा [ ७.१० ]– तं वै चतुर्भिः क्रीणाति गवा चन्द्रेण वस्त्रेण छागया० ॥

[ ७.६ ]– सोमं क्रीतं दक्षिणा परिवहन्ति० ॥

**अशौसं—**

**यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ।**
**उरु विष्णो वि क्रमस्वोरु क्षयाय नस्कृधि ।**
**घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर ॥ ७.२७.३**

दिवं च रोह पृथिवीं च रोह राष्ट्रं च रोह द्रविणं च रोह ।
प्रजां च रोहामृतं च रोह रोहितेन तन्वं सं स्पृशस्व ॥ १३.१.३४
इडायास्पदं घृतवत् सरीसृपं जातवेदः प्रति हव्या गृभाय ।
ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानां मयि रन्तिरस्तु ॥ ३.१०.६
अभि त्यं देवं सवितारमोण्योः कविक्रतुम् ।
अर्चामि सत्यसवं रत्नधामभि प्रियं मतिम् ॥
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि ।
हिरण्यपाणिरमिमीत सुक्रतुः कृपात्स्वः ॥
सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै ।
अथास्मभ्यं सवितर्वार्याणि दिवोदिव आ सुवा भूरि पश्वः ॥
दमूना देवः सविता वरेण्यो दधद्रत्नं दक्षं पितृभ्य आयूंषि ।
पिबात् सोमं ममददेनमिष्टे परिज्मा चित् क्रमते अस्य धर्मणि ॥ ७.१५
अयं सहस्रमा नो दृशे कवीनां मतिर्ज्योतिर्विधर्मणि ॥ ७.२३.१
उदायुषा समायुषोदोषधीनां रसेन ।
व्यहं सर्वेण पाप्मना वि यक्ष्मेण समायुषा ॥ ३.३१.१०
इन्द्रस्य बाहू स्थविरौ वृषाणौ चित्रा इमा वृषभौ पारयिष्णू ।
तौ योक्षे प्रथमो योग आगते याभ्यां जितमसुराणां स्वर्यत् ॥
आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः ॥
संक्रन्दनेनानिमिषेण जिष्णुनायोध्येन दुश्च्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥
स इषुहस्तैः स निषङ्गिभिर्वशी संस्रष्टा स युध इन्द्रो गणेन ।
संसृष्टजित् सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥
बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः ।
अभिवीरो अभिषत्वा सहोजिज्जैत्रमिन्द्र रथमा तिष्ठ गोविदन् ॥
इमं वीरमनु हर्षध्वमुग्रमिन्द्रं सखायो अनु सं रभध्वम् ।
ग्रामजितं गोजितं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ॥
अभि गोत्राणि सहसा गाहमानोऽदाय उग्रः शतमन्युरिन्द्रः ।
दुश्च्यवनः पृतनाषाडयोध्योऽस्माकं सेना अवतु प्र युत्सु ॥
बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः ।

प्रभञ्जञ्छत्रून् प्रमृणन्नमित्रानस्माकमेध्यविता तनूनाम् ॥
इन्द्र एषां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्तु मध्ये ॥
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम्।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु।
अस्माकं वीरा उत्तरे भवन्त्वस्मान् देवासोऽवता हवेषु ॥ १९.१३

अपैसं—

यस्योरुषु त्रिषु .... ॥ २०.६.१० ॥ उरु विष्णो वि क्रमस्वोरु .... ॥ २०.६.७॥ दिवं च रोह पृथिवीं ....॥ १८.१८.४ ॥ इडायास्पदं.... ॥१.१०५.२॥ अभि त्वा देवं ....॥ ऊर्ध्वा यस्यामतिरुद्भा .... कृपा स्वः ॥२०.४.८-९॥ सावीर्हि ....दिवेदिव....॥२०.३.१॥ दमूना देवः ....। .... ममददेनमिष्टये परिज्मा चिद्रमते अस्य धर्मणि ॥२०.३.३॥ अयं सहस्रमा....। ब्रध्नः समीचीरुषसः समीरय ॥२०.४.१०

इन्द्रस्य बाहू....। तौ योक्ष्ये....॥ आशुः शिशानो ....॥ संक्रन्दनेनानिमिषेण ....॥ स इषुहस्तैः .... । .... बाहुशर्ध्यूर्ध्वधन्वा.... ॥ बलविज्ञायः....। .... अभिसत्वा .... गोविदम् ॥ इमं वीरमनु .... सत्वानो .... ॥ अभि गोत्राणि .... ॥ बृहस्पते परि .... ॥ इन्द्र एषां नेता .... ॥ इन्द्रस्य वृष्णो वरुणस्य .... ॥ अस्माकमिन्द्रः .... ॥ ७.४

गोब्रा [ २.१.१८ ]– अथ हैतदप्रतिरथम् इन्द्रस्य बाहू स्थविरौ वृषाणाविति० संग्रामे जुहुयात्० यं कामयेत राष्ट्री स्यादिति तमेतेन संनह्येत्० दशैतान्वाह० तदु हैक एकादशान्वाहुः० तस्माद् ब्रह्माप्रतिरथं जपन्नेति० ॥

## १३. सोमक्रयहौत्रम्

ऋसं —

सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे। ताभिर्नोऽविता भव ॥
इमं यज्ञमिदं वचो जुजुषाण उपागहि। सोम त्वं नो वृधे भव ॥
सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः। सुमृळीको न आ विश ॥१.९१.९-११
सर्वे नन्दन्ति यशसागतेन सभासाहेन सख्या सखायः।
किल्बिषस्पृत् पितुषणिर्ह्येषामरं हितो भवति वाजिनाय ॥ १०.७१.१०
आगन् देव ऋतुभिर्वर्धतु क्षयं दधातु नः सविता सुप्रजामिषम्।
स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयिमस्मे समिन्वतु ॥ ४.५३.७

**या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ।**
**गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान् ॥ १.९१.१९**
**इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सं शिशाधि ।**
**ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेम ॥ ८.४२.३**

ऐब्रा [ १.२७ ]– तस्मादुपांशु वाचा चरितव्यं सोमे राजनि क्रीते० ॥

[ १.१२-१३ ]– एतेषु कर्मस्वष्टावष्टावनूच्यन्ते० **सोमाय क्रीताय प्रोह्यमाणाया-नुब्रूहि** इत्याहाध्वर्युः । **भद्रादभि श्रेयः प्रेहि**[1] इत्यन्वाह० सोम यास्ते मयोभुव इति तृचं सौम्यं गायत्रमन्वाह सोमे राजनि प्रोह्यमाणे० सर्वे नन्दन्ति यशसागतेनेत्यन्वाह० आगन् देव इत्यन्वाह० या ते धामानि हविषा यजन्तीत्यन्वाह० इमां धियं शिक्षमाणस्य देवेति वारुण्या परिदधाति० ता एता अष्टावन्वाह रूपसमृद्धाः० तासां त्रिः प्रथमामन्वाह त्रिरुत्तमाम्० ॥

**ऋसं—**

**इमां धियं .... ॥ ८.४२.३ ॥ वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु । हृत्सु क्रतुं वरुणो अप्स्वग्निं दिवि सूर्यमदधात् सोममद्रौ ॥ ५.८५.२ ॥ सोम यास्ते मयोभुव.... ॥ १.९१.९–११ ॥ गयस्फानो अमीवहा वसुवित् पुष्टि-वर्धनः । सुमित्रः सोम नो भव ॥ १.९१.१२ ॥ या ते धामानि.... ॥१.९१.१९॥ आगन् देव.... ॥ ४.५३.७ ॥**

शांब्रा [ ७.६ ]– दक्षिणा तिष्ठन्नभिष्टौति० ॥

[ ७.१० ]– तस्मै क्रीताय नवान्वाह० **भद्रादभि श्रेयः प्रेहि** इति प्रवर्तीं प्रवर्त्य-मानायान्वाह० इमां धियं शिक्षमाणस्य देव, वनेषु व्यन्तरिक्षं ततानेति त्रिष्टुभौ वारुण्यावन्वाह० सोम यास्ते मयोभुव इति चतस्रो गायत्रीः सौमीरन्वाह० उत्तमाया अर्धर्चमुक्त्वोपरमति० या ते धामानि हविषा यजन्तीति प्रवर्तीं प्रपाद्यमानायान्वाह । आगन् देव ऋतुभिर्वर्धतु क्षयमित्या-गतवत्यर्तुमत्या परिदधाति० अभिरूपा अन्वाह० ता वै नवान्वाह० त्रिः प्रथमया त्रिरुत्तमया०॥

[ ७.६ ]– दक्षिणा तिष्ठन् परिदधाति० ॥

## १४. आतिथ्येष्ट्यादि

**तैसं** [ १.२.१०-११ ]—

**अग्नेरातिथ्यमसि विष्णवे त्वा ॥ सोमस्यातिथ्यमसि विष्णवे त्वा ॥ अतिथे-रातिथ्यमसि विष्णवे त्वा ॥ अग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा ॥ श्येनाय त्वा सोमभृते विष्णवे त्वा ॥**

1. तैसं १.२.३.३

या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ॥
गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान् ॥

अदित्याः सदोऽसि ॥ अदित्याः सद आसीद ॥ वरुणोऽसि धृतव्रतो वारुणमसि ॥ शंयोर्देवानाꣳ सख्यात् ॥ मा देवानामपसश्छित्स्महि ॥ आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि शाक्कराय त्वा गृह्णामि शक्मन्नोजिष्ठाय त्वा गृह्णामि ॥ अनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यम् ॥ अनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुपगेषꣳ सुविते मा धाः ॥ अꣳशुरꣳशुस्ते देव सोमा प्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व ॥ आ प्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय ॥ एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्यै ॥ अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियꣳ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानि ॥ या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहा ॥

[ ६.२.१-५ ]– विमुक्तोऽन्योऽनड्वान् भवत्यविमुक्तोऽन्योऽथातिथ्यं गृह्णाति० पत्न्यन्वारभते० पञ्च कृत्वो गृह्णाति० नवकपालः पुरोडाशो भवति० यदाश्ववालः प्रस्तरो भवत्यैक्षवी तिरश्ची० यत् कार्ष्मर्यमयाः परिधयो भवन्ति० सꣳस्पर्शयति० न पुरस्तात् परि दधाति० ऊर्ध्वे समिधावा दधाति० यजुषान्यां तूष्णीमन्याम्० द्वे आ दधाति० यद्धविरासाद्याग्निं मन्थति० यः सतानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिमार्च्छति। यत् तानूनप्त्रꣳ समवद्यति० पञ्च कृत्वोऽव द्यति० यत् तानूनप्त्रेण प्रचरन्ति अꣳशुरꣳशुस्ते देव सोमा प्यायता मित्याह यदेवास्यापुवायते यन्मीयते तदेवास्यैतेना प्याययति० अग्निमिव खलु वा एष प्र विशति योऽवान्तरदीक्षामुपैति० संतरां मेखलाꣳ समायच्छते० तप्तव्रतो भवति। मदन्तीभिर्मार्जयते० आराग्रामवान्तरदीक्षामुपेयाद्यः कामयेतास्मिन् मे लोकेऽर्धुकꣳ स्यादिति। एकमग्रेऽथ द्वावथ त्रीनथ चतुर एषा वा आराग्रावान्तरदीक्षा० परोवरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन् मे लोकेऽर्धुकꣳ स्यादिति। चतुरोऽग्रेऽथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षा० अथैकꣳ स्तनं व्रतमुपैत्यथ द्वावथ त्रीनथ चतुर एतद्वै क्षुरपवि नाम व्रतम्० चतुरोऽग्रे स्तनान् व्रतमुपैत्यथ त्रीनथ द्वावथैकमेतद्वै सुजघनं नाम व्रतम्० यवागू राजन्यस्य व्रतम्० आमिक्षा वैश्यस्य० पयो ब्राह्मणस्य० यदस्य मध्यंदिने मध्येरात्रे व्रतं भवति० न प्रवस्तव्यम्० दक्षिणतः शये० अग्निमभ्यावृत्य शये० ॥

[ ३.१.२.२ ]– त्रिरव जिघ्रेत् प्रजापतौ त्वा मनसि जुहोमि इति० ॥

तैब्रा [ १.५.९ ]– त आतिथ्यमभिसमारोहन् ० तानिडान्त उपानयन् ० एत्र[१] हि देवा अकुर्वत । इति देवा अकुर्वत । इत्यु वै मनुष्याः कुर्वते ॥

[ २.२.८.२ ] [१]चतुर्होत्रातिथ्यम् ० ॥

[ २.२.२.६ ]– यत्संभारा[२] भवन्ति० आतिथ्यमासाद्य व्याचष्टे[३]०॥

मैसं [ १.२.६-७ ]—

अग्नेस्तनूरसि विष्णवे त्वा ॥ सोमस्य तनूरसि विष्णवे त्वा ॥ अतिथेरातिथ्यमसि विष्णवे त्वा ॥ अग्नये त्वा रायस्पोषदे विष्णवे त्वा ॥ श्येनाय त्वा सोमभृते विष्णवे त्वा ॥ वारुणमसि ॥ वरुणोऽसि धृतव्रतः ॥ वरुणस्य ऋतसदनमासीद ॥ वरुणाय त्वा ॥ अग्नेर्जनित्रमसि ॥ वृषणौ स्थः ॥ उर्वश्यसि ॥ आयुरसि ॥ पुरूरवा असि ॥ गायत्रमसि त्रिष्टुबसि जगदसि ॥

भवतं नः समनसौ समोकसौ सचेतसा अरेपसौ ।
मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥
अग्ना अग्निश्चरति प्रविष्टा ऋषीणां पुत्रो अधिराज एषः ।
तस्मै विधेम हविषा वयं मा देवानाꣳ यूयुपाम भागधेयम् ॥

आपतये त्वा गृह्णामि ॥ परिपतये त्वा गृह्णामि ॥ तनूनप्त्रे [त्वा गृह्णामि] ॥ शक्मने शाक्वराय शक्मना ओजिष्ठाय [त्वा गृह्णामि] ॥ अनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यम् । अनु म इदꣳ व्रतꣳ व्रतपतिर्मन्यतामनु दीक्षां दीक्षापतिरञ्जसा सत्यमुपागाꣳ सुविते मा धाः ॥ अग्ने व्रतपते या मम तनूरेषा सा त्वयि ॥ अग्ने व्रतपते या तव तनूरियꣳ सा मयि ॥ सह नौ व्रतपते व्रतिनोर्व्रतानि ॥ अꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदा आ त्वमिन्द्राय प्यायस्वा तुभ्यमिन्द्रः प्यायतामाप्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय स्वस्त्युदृचम् ॥ एष्टा राया एष्टा वामानि प्रेषे भगाय ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्यै ॥

[ ३.७.९-१० ] – युक्तोऽन्योऽनड्वान् भवति विमुक्तोऽन्योऽथातिथ्यं निर्वपति० पत्न्या हस्तान्निर्वपति० वैष्णवो नवकपालो भवति० ते वै त्रयस्त्रिकपालाः० इडान्तमेव कार्यम्० आश्ववारः प्रस्तरः। कार्ष्मर्यमयाः परिधयो भवन्ति० यो नस्तत्र पाद्यो नोऽन्योन्यस्मै द्रुह्यादित एव सं निर्ऋछात् इति० य एवꣳ विद्वाꣳसः समवमृशन्ति० यं कामयेत ऋध्नुयादिति तं प्रथममवमर्शयेत्० यदि कामयेत सर्वे सदृशाः स्युरिति

१. द्रष्टव्यं श्रौ. १. पृ. १२५   २. द्रष्टव्यं श्रौ. १. पृ. १२६   ३. यजमानः ।

सर्वान्त्सहावमर्शयेत्० तस्मात् सतानूनप्त्रिणे न द्रोग्धवै० चतुर्गृह्णाति० आत्मानमेव दीक्षया स्पृणोति प्रजामवान्तरदीक्षया। संतरां मेखलामायछते। कनीयो व्रतमुपैति० द्विव्रतेन भवितव्यम्० या ते अग्ने रुद्रिया तनूः इति व्रत॰ व्रतयति०॥

[१.९.८]– [1]एतैरेवातिथ्यमभिमृशेत्०॥

**कासं [२.८]—**

**अग्नेस्तनूरसि विष्णवे त्वा॥ सोमस्य तनूरसि विष्णवे त्वा॥ अतिथेरातिथ्यमसि विष्णवे त्वा॥ अग्नये त्वा रायस्पोषदे विष्णवे त्वा॥ श्येनाय त्वा सोमभृते विष्णवे त्वा॥ आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शक्मने शाक्कराय शक्मन्नोजिष्ठाय॥ अनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यमञ्जसा सत्यमुपागीं सुविते मा धाः॥ अग्ने व्रतपा अस्मे व्रतपास्त्वे व्रतपाः पुनर्व्रतपा व्रतिनां व्रतानि याग्ने मम तनूरेषा सा त्वयि या तव तनूरियँ सा मयि सह नौ व्रतपा व्रतिनां व्रतानि॥ या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यै ते स्वाहा॥ अँशुरँशुस्ते देव सोमाप्यायतामिन्द्रायैकधन आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वाप्यायय सखीन् सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय स्वस्त्योदृचम्॥ एष्टा राय एष्टा वामानि प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्यै॥**

[२४.८-९]—विमुक्तोऽन्योऽनड्वान् भवत्यविमुक्तोऽन्योऽथातिथ्यं निरुप्यते० पत्नीमन्वारम्भयित्वा निर्वपति० पञ्च कृत्वो निर्वपति० वैष्णवः पुरोडाशो भवति० नवकपालो भवति० अग्निं मन्थन्ति० आश्ववालः प्रस्तारो भवत्यैक्षवा उद्यावौ० यत् कार्ष्मर्यमयाः परिधयो भवन्ति० इडान्तं भवति० अननुयाजं भवति० तस्मात् सतानूनप्त्रिणे न द्रोग्धवै० अँशुरँशुस्ते देव सोमाप्यायतामिति। यदेवास्य घ्नन्ति यन्मितमयन्ति तदाप्याययन्ति० एष्टा रायः प्रेषे भगायेति० नमो दिवे नमः पृथिव्या इति। आभ्यामेव निह्नुते० संतरां मेखलामायच्छते। कनीयो व्रतमुपैति० मदन्तीनां मार्जयते मदन्तीनां व्रतयति० या ते अग्ने रुद्रिया तनूरिति व्रतयति०॥

**कपिसं [२.२]—**

**---॥ अनाधृष्टम्....सत्यमुपगेषं....॥ अग्ने व्रतपा अस्मे व्रतपास्त्वे व्रतपा व्रतिनां....। या मम....॥---॥ अँशुरँशुस्ते.... सुत्यामशीय॥ एष्टा राय....॥**

कपिसं [३८·१-२] ≡ कासं

[1] संभारयजुर्भिः।

वामासं —

वरुणस्य ऋतसदन्यसि ।। वरुणस्य ऋतसदनमसि ।। वरुणस्य ऋतसदनमासीद ।।
या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् ।
गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्यान् ।। ४.३६-३७

अग्नेस्तनूरसि विष्णवे त्वा ।। सोमस्य तनूरसि विष्णवे त्वा ।। अतिथेरातिथ्यमसि विष्णवे त्वा ।। श्येनाय त्वा सोमभृते विष्णवे त्वा ।। अग्नये त्वा रायस्पोषदे विष्णवे त्वा ।। अग्नेर्जनित्रमसि ।। वृषणौ स्थः ।। उर्वश्यसि ।। आयुरसि ।। पुरूरवा असि ।। गायत्रेण त्वा छन्दसा मन्थामि ।। त्रैष्टुभेन त्वा छन्दसा मन्थामि ।। जागतेन त्वा छन्दसा मन्थामि ।। भवतं नः समनसौ सचेतसावरेपसौ । मा यज्ञ‍ँ.... ।।

अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अभिशस्तिपावा ।
स नः स्योनः सुयजा यजेह देवेभ्यो हव्य‍ँ सदमप्रयुच्छन्त्स्वाहा ।।

आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वन ओजिष्ठाय ।। अनाधृष्टमस्यनाधृष्यं देवानामोजोऽनभिशस्त्यभिशस्तिपा अनभिशस्तेन्यमञ्जसा सत्यमुपगेष‍ँ स्विते मा धाः ।। अग्ने व्रतपास्त्वे व्रतपा या तव तनूरिय‍ँ सा मयि यो मम तनूरेषा सा त्वयि । सह नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिः।। अ‍ँशुर‍ँशुष्टे देव.... आप्याययास्मान् सखीन् सन्या मेधया.... ।। एष्टा रायः प्रेषे भगाय ऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्याम् ।। ५.१–७

माशब्रा [ ३.३.४.२६-३१ ]—अथ चत्वारो राजासन्दीमाददते० औदुम्बरी भवति० नाभिदघ्ना भवति० तामभिमृशति वरुणस्य ऋतसदन्यसीति। अथ कृष्णाजिनमास्तृणाति वरुणस्य ऋतसदनमसीति। अथैनमासादयति वरुणस्य ऋतसदनमासीदेति० अथैन‍ँ शालां प्रपादयति। स प्रपादयन् वाचयति या ते धामानि .... दुर्यानिति० अत्र हैके उदपात्रमुपनिनयन्ति० तदु तथा न कुर्यात्० ।।

[ ३.४.१-३ ]— शिरो वै यज्ञस्यातिथ्यम्० तद्वा अन्यतर एव विमुक्तः स्यादन्यतरोऽविमुक्तोऽथ गृह्णीयात्० तदु तथा न कुर्यात्। विमुच्यैव प्रपाद्य गृह्णीयात्० स त्वै संत्वरमाण इव गृह्णीयात्० तत् पत्न्यन्वारभते० स वा अन्येनैव ततो यजुषा गृह्णीयात्० स गृह्णाति अग्नेस्तनूरसि विष्णवे त्वेति० अथ यत् पञ्च कृत्वो गृह्णाति० नवकपालः पुरोडाशो भवति० कार्ष्मर्यमयाः परिधयः० आश्ववालः प्रस्तरः० ऐक्षव्यौ विधृती० अथोत्पूयाज्य‍ँ सर्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णाति। न ह्यत्रानुयाजा भवन्ति। आसाद्य हवी‍ँष्यग्निं मन्थति० सोऽधिमन्थन‍ँ शकलमादत्ते अग्नेर्जनित्रमसीति० अथ दर्भतरुणके निदधाति

वृषणौ स्थ इति० अथाधरारणिं निदधाति उर्वश्यसीति। अथोत्तरारण्याज्यविलापनीमुपस्पृशति आयुरसीति। तामभिनिदधाति पुरूरवा असीति० अथाह अग्नये मथ्यमानायानुब्रूहि इति। स मन्थति गायत्रेण त्वा....मन्थामीति० जातायानुब्रूहि इत्याह यदा जायते। प्रह्रियमाणाय इत्यनुप्रहरन्। सोऽनुप्रहरति भवतं नः समनसौ ....भवतमद्य न इति० अथ स्रुवेणोपहत्याज्यमग्निमभिजुहोति अग्नावग्निश्चरति .... सदमप्रयुच्छन्त्स्वाहेति० तदिडान्तं भवति। नानुयाजान् यजन्ति० अथातो [1]गृह्णात्येव आपतये त्वा परिपतये गृह्णामीति० अथातः समवमृशन्त्येव० ते समवमृशन्ति अनाधृष्टमस्यनाधृष्यं देवानामोज....इति० यजमानायैव व्रतमभ्युत्सिच्य प्रयच्छेयुः० आतिथ्येन वै देवा इष्ट्वा तान् समदविन्दत्। ते तानूनप्त्रैः समशाम्यन्। त एतस्य प्रायश्चित्तिमैच्छन् यदन्योन्यं पापमवदन्। नाह पुरावभृथात् पुनर्दीक्षामवाकल्पयन्। त एतामवान्तरां दीक्षामपश्यन्० स वै समिधमेवाभ्यादधदवान्तरदीक्षामुपैति। स समिधमभ्यादधाति अग्ने व्रतपास्त्वे व्रतपा .... इति० तदवान्तरां दीक्षामुपैति। संतरामङ्गुलीरचते संतरां मेखलाम्० अथैनमतो मदन्तीभिरुपचरन्ति० अथ मदन्तीरुपस्पृश्य राजानमाप्याययन्ति० तदाहुः यस्मा एतदाप्यायनं क्रियते आतिथ्यँ सोमाय तमेवाग्र आप्याययेयुरथावान्तरदीक्षाम्। अथ तानूनप्त्राणीति। तदु तथा न कुर्यात्० त आप्याययन्ति अँशुरँशुष्टे देव सोमाप्यायताम्....इति० अथ प्रस्तरे निह्नुवते० ते निह्नुवते एष्टा रायः प्रेषे भगाय ऋतमृतवादिभ्य.... इति० अथाह समुल्लुप्य प्रस्तरम् अग्नीन्मदन्त्यापा३ इति। मदन्ति इत्यग्नीदाह। ताभिरेहि इत्युपर्युपर्यग्निमतिहरति० तमग्नीधे प्रयच्छति। तमग्नीन्निदधाति॥

**वाकासं—**

**---॥ वरुणस्य ऋतसदनीमासीद ॥ --- ॥ भवतं नः....सचेतसा अरेपसौ। .... ॥ अग्ना अग्निश्चरति .... ॥ आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि। तनूनप्त्रे शाक्वराय शक्मन्नोजिष्ठाय ॥ अनाधृष्टमस्यनाधृष्यं .... सुविते मा धाः ॥ अग्ने व्रतपास्त्वे.... या मम तनूरेषा.... ॥ अँशुरँशुष्टे .... सुत्यामुदृचमशीय ॥ एष्टा रायः .... नमो दिवे नमः पृथिव्यै ॥ ४.१०.७-८; ५.१.१-२.७**

काशब्रा [ ४.३.४.१९-२२ ] ≡ माशब्रा ३.२.४.२६-३१

[ ४.४.१-३ ]— संतरां मेखलामूहते संतरामङ्गुलीरचति संतरां नीविम्। --- आप्यायनमेवाग्रे० अथ तानूनप्त्रमथावान्तरदीक्षेति। तदु तथा न कुर्यात्० तानूनप्त्रमेवाग्रेऽथावान्तरदीक्षाथाप्यायनम्॥

**अशौसं—**

**ध्रुवं ध्रुवेण हविषाव सोमं नयामसि।**
**यथा न इन्द्रः केवलीर्विशः संमनसस्करत् ॥ ७.९९.१**

१. तानूनप्त्रम्।

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥ ७.५.१
विष्णोर्नु कं प्रा वोचं वीर्याणि यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ ७.२७.१

अपैसं—
ध्रुवं ध्रुवेण हविषाभि सोमं मृशामसि ।
अत्रा त इन्द्रः केवलीर्विशो बलिहृतस्करत् ॥ १९.६.४
यज्ञेन यज्ञम् .... ॥ २०.२.२ ॥ विष्णोर्नु कं प्र वोचं ....॥ २०.६.९ ॥

गोब्रा [ २.२.२-४ ]—यत्तानूनप्त्रं समवद्यति० पञ्च कृत्वोऽवद्यति० आपतये त्वा गृह्णामि इत्याह० परिपतये त्वा इत्याह० तनूनप्त्रे इत्याह० शाक्कराय इत्याह० शक्मन् ओजिष्ठाय इत्याह० अनाधृष्टम् इत्याह० अनाधृष्यम् इत्याह० देवानामोजः इत्याह० अभिशस्तिपा इत्याह० अनभिशस्तेन्यम् इत्याह० अनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुपगेषं स्विते मा धाः इत्याह० अंशुरंशुष्टे देव सोमाप्यायता-मिन्द्रायैकधनविद इत्याह० आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व इत्याह० आप्याययास्मान्त्सखीन्त्सन्या मेधया प्रजया धनेन इत्याह० स्वस्ति ते देव सोम सुत्यामुदृचमशीय इत्याह० एष्टा राय एष्टा वामानि प्रेषे भगाय ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्यै इति० ॥

## १५. आतिथ्येष्टिहौत्रम्

ऋसं—
[1]समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतन ॥८.४४.१
आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥१.९१.१६
[2]इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे ॥१.२२.१७
[3]तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥ १.१५४.५
[4]विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥

१. आज्यभागयोः पुरोनुवाक्ये । २. विष्णोः पुरोनुवाक्या । ३. याज्या ।
४. शाङ्खा० विष्णोः पुरोनुवाक्या ।

[1]प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ १.१५४.१-२
[2]होतारं चित्ररथमध्वरस्य यज्ञस्ययज्ञस्य केतुं रुशन्तम् ।
प्रत्यर्धिं देवस्यदेवस्य मह्ना श्रिया त्वग्निमतिथिं जनानाम् ॥ १०.१.५
[3]प्रप्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भाः ।
अभि यः पूरुं पृतनासु तस्थौ द्युतानो दैव्यो अतिथिः शुशोच ॥ ७.८.४
[4]यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन ।
तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग् जुजोषत् ॥ ४.४.१०

ऐब्रा [ १.१४-१७ ]— अन्यतरोऽनड्वान् युक्तः स्यादन्यतरो विमुक्तोऽथ राजानमुपावहरेयुः० देवासुरा वा एषु लोकेषु समयतन्त०. त उदीच्यां प्राच्यां दिश्ययतन्त । ते ततो न पराजयन्त । सैषा दिगपराजिता । तस्मादेतस्यां दिशि यतेत वा यातयेद्वा० हविरातिथ्यं निरुप्यते सोमे राजन्यागते० नवकपालो भवति० वैष्णवो भवति० अग्निं मन्थन्ति सोमे राजन्यागते० अग्नये मथ्यमानायानुब्रूहि इत्याहाध्वर्युः [5]अभि त्वा देव सवितरिति सावित्रीमन्वाह० मही द्यौः पृथिवी च न इति द्यावापृथिवीयामन्वाह० त्वामग्ने पुष्करादधीति तृचमाग्नेयं गायत्रमन्वाहाग्नौ मथ्यमाने० स यदि न जायेत यदि चिरं जायेत रक्षोघ्न्यो गायत्र्योऽनूच्याः अग्ने हंसि न्यत्रिणमित्येताः० स यद्येकस्यामेवानूक्तायां जायेत यदि द्वयोरथ उत ब्रुवन्तु जन्तव इति जाताय जातवतीमभिरूपामनुब्रूयात्० आ यं हस्ते न खादिनमिति० प्र देवं देववीतये भरता वसुवित्तममिति प्रह्रियमाणायाभिरूपा० आ जातं जातवेदसीति० अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्य इत्यभिरूपा० त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सतेति० तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनमिति० यज्ञेन यज्ञमयजन्त देवा इत्युत्तमया परिदधाति० ता एतास्त्रयोदशान्वाह रूपसमृद्धाः० तासां त्रिः प्रथमामन्वाह त्रिरुत्तमाम्० समिधाग्निं दुवस्यत, आ प्यायस्व समेतु त इत्याज्यभागयोः पुरोनुवाक्ये भवत आतिथ्यवत्यौ रूपसमृद्धे० तयोर्जुषाणेनैव यजति । इदं विष्णुर्वि चक्रमे, तदस्य प्रियमभि पाथो अश्यामिति वैष्णव्यौ । त्रिपदामनूच्य चतुष्पदया यजति० होतारं चित्ररथमध्वरस्य, प्र प्रायमग्निर्भरतस्य शृण्व इति स्विष्टकृतः संयाज्ये भवत आतिथ्यवत्यौ रूपसमृद्धे० इळान्तं भवति० प्रयाजानेवात्र यजन्ति नानुयाजान्० ॥

---

१. शाङ्खा० याज्या । २. स्विष्टकृतः पुरोनुवाक्या । ३. याज्या ।
४. शाङ्खा० स्विष्टकृतो याज्या ।
५. एतदादयस्त्रयोदश अग्निमन्थनीयाः श्रौतकोशस्य प्रथमखण्डे ५६१-६२ पृष्ठयोर्द्रष्टव्याः ।

शांब्रा [ ८.१–२ ]— आसन्ने हविष्यातिथ्येऽग्निं मन्थन्ति० द्वादशाग्निमन्थनीया अन्वाह० अभि त्वा देव सवितरिति सावित्रीं प्रथमामन्वाह० मही द्यौः पृथिवी च न इति द्यावापृथिवीयामन्वाह० त्वामग्ने पुष्करादधीति मथितवन्तं तृचं मथ्यमानायान्वाह। उत ब्रुवन्तु जन्तव इति जातवतीं जाताय। आ यं हस्ते न खादिनमिति हस्तवतीं हस्तेन धार्यमाणाय। प्र देवं देववीतय इति प्रवतीं प्रह्रियमाणाय। आ जातं जातवेदसीत्यावतीमाह्रूयमानाय। अग्निनाग्निः समिध्यते, त्वं ह्यग्ने अग्निनेति समिद्धवत्यौ समिध्यमानाय। तं मर्जयन्त सुक्रतुमिति परिदधाति स्वेषु क्षयेषु वाजिनमित्यन्तवत्या० त्रिः प्रथमया त्रिरुत्तमया० एतया न्वत्र च चातुर्मास्येषु च० सप्तदश सामिधेनीरन्वाह० वार्त्रघ्नावाज्यभागौ भवतः० अतिथिमन्तौ हैके कुर्वन्ति। वार्त्रघ्नौ त्वेव स्थितौ। ऋग्याज्यौ स्यातामिति हैक आहुः० जुषाणयाज्यौ त्वेव स्थितौ० त्रिष्टुभौ हविषो याज्यापुरोनुवाक्ये० होतारं चित्ररथमध्वरस्य, यस्त्वा स्वश्वः सुहिरण्यो अग्न इति संयाज्ये अतिथिमत्यौ रथवत्यौ त्रिष्टुभावाग्नेय्यौ० इलान्तं भवति० उपांशुहविष एता इष्टयो भवन्ति दीक्षणीयाप्रायणीयातिथ्योपसदः० ॥

कासं [ २४.८ ]—सप्तदश सामिधेन्यो भवन्ति० ॥

## १६. आतिथ्येष्ट्यौद्गात्रम्

### औशनम्[1]

साकौसं [ १.१.१.१.५; २.५.१.१८.१–३ ]–

प्रेष्ठं वो अतिथिꣳ स्तुषे मित्रमिव प्रियम्। अग्ने रथं न वेद्यम् ॥

कविमिव प्रशꣳस्यं यं देवास इति द्विता। नि मर्त्येष्वादधुः ॥

त्वं यविष्ठ दाशुषो नॄꣳः पाहि शृणुही गिरः। रक्षा तोकमुत त्मना ॥

१र२१ २ १र२र२ १ २ १ २ २
प्रेष्ठंवाः। अता२३इथीम्। स्तौषेमित्रम्। इवप्रा२३याम्। अग्नाइरा३था३म्।
१ २ १ ५ ५ १२ १ २१ २
नावा२३हा३४३इ। दा२३४योꣳहाइ ॥ [ १ ] कविमिवा। प्रशꣳसा२३याम्।
१ र २र १ २ १ २ २ १ २ १ ५
यान्देवासः। इतिद्वा२३इता। निमार्त्ती३ये३। षूवा२३हा३४३इ। दा२३४योꣳ-
५ १२ १ २१र २ १ र२ १र २ १ २
हाइ ॥ [ २ ] तुवंयवाइ। ष्ठदाशू२३षाः। नृꣳपाहिशृ। णुहीगा२३इराः। रक्षातो-
२ १ २ १ ५ ५
३का३म्। ऊता२३हा३४३इ। त्मा२३४नोꣳहाइ॥ [३] [ग्राम १.१.९; ऊह ५.१.११]

1, प्रधानयागकाले प्रस्तोतृसाम।

## औशनम्

साजैसं [ १.१.५ ] ≡ साकौसं [ १.१.१.१.५ ]

प्रेष्ठंवाः । अ॑ता॑यिथीम् । स्तो॑षे मित्रमिवप्रायाम् । अग्नायिराथान्नावाहायि ।
ति टीव्य त व्यव टुटी त भीत व्य खश

दायाम् । हायि ॥ [ ग्राम १.१.९ ]
प प्या श

## १७. प्रथमपौर्वाह्णिकप्रवर्ग्यप्रचारः

तैआ [ ४.४-७ ]--

ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामः । होतर्घर्ममभिष्टुहि । अग्नीद्रौहिणौ पुरोडाशावधिश्रय । प्रतिप्रस्थातर्विहर । प्रस्तोतः सामानि गाय ॥ यजुर्युक्त॰ सामभिराक्तखं त्वा । विश्वैर्देवैरनुमतं मरुद्भिः । दक्षिणाभिः प्रततं पारयिष्णुम् । स्तुभो वहन्तु सुमनस्यमानम् । स नो रुचं धेह्यहृणीयमानः । भूर्भुवः सुवः । ओमिन्द्रवन्तः प्रचरत ॥ ब्रह्मन् प्रचरिष्यामः । होतर्घर्ममभिष्टुहि ॥ यमाय त्वा मखाय त्वा । सूर्यस्य हरसे त्वा ॥ प्राणाय स्वाहा व्यानाय स्वाहापानाय स्वाहा । चक्षुषे स्वाहा श्रोत्राय स्वाहा । मनसे स्वाहा वाचे सरस्वत्यै स्वाहा ॥ दक्षाय स्वाहा क्रतवे स्वाहा । ओजसे स्वाहा बलाय स्वाहा ॥ देवस्त्वा सविता मध्वानक्तु ॥ पृथिवीं तपसस्त्रायस्व ॥ अर्चिरसि शोचिरसि ज्योतिरसि तपोऽसि ॥

स॰सीदस्व महा॰ असि । शोचस्व देववीतमः ।
वि धूममग्ने अरुषं मियेध्य । सृज प्रशस्त दर्शतम् ॥
अञ्जन्ति यं प्रथयन्तो न विप्राः । वपावन्तं नाग्निना तपन्तः ।
पितुर्न पुत्र उपसि प्रेष्ठः । आ घर्मो अग्निमृतयन्नसादीत् ॥

अनाधृष्या पुरस्तात् । अग्नेराधिपत्ये । आयुर्मे दाः ॥ पुत्रवती दक्षिणतः । इन्द्रस्याधिपत्ये । प्रजां मे दाः ॥ सुषदा पश्चात् । देवस्य सवितुराधिपत्ये । प्राणं मे दाः ॥ आश्रुतिरुत्तरतः । मित्रावरुणयोराधिपत्ये । श्रोत्रं मे दाः ॥ विधृतिरुपरिष्टात् । बृहस्पतेराधिपत्ये । ब्रह्म मे दाः क्षत्त्रं मे दाः । तेजो मे धा वर्चो मे धाः । यशो मे धास्तपो मे धाः । मनो मे धाः ॥ मनोरश्वासि भूरिपुत्रा । विश्वाभ्यो मा नाष्ट्राभ्यः पाहि । सूपसदा मे भूया मा मा हि॰सीः ॥

तपो ष्वग्ने अन्तरा॰ अमित्रान् । तपा श॰समररुषः परस्य ।
तपा वसो चिकितानो अचित्तान् । वि ते तिष्ठन्तामजरा अयासः ॥

चितः स्थ परिचितः । स्वाहा मरुद्भिः परिश्रयस्व ॥ मा असि ॥ प्रमा असि ॥ प्रतिमा असि ॥ संमा असि ॥ विमा असि ॥ उन्मा असि ॥ अन्तरिक्षस्यान्तर्धिरसि ॥ दिवं तपसस्त्रायस्व ॥

आभिर्गीर्भिर्यदतो न ऊनम् । आप्यायय हरिवो वर्धमानः ।
यदा स्तोतृभ्यो महि गोत्रा रुजासि । भूयिष्ठभाजो अध ते स्याम ॥
शुक्रं ते अन्यद्यजतं ते अन्यत् । विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावः । भद्रा ते पूषन्निह रातिरस्तु ॥
अर्हन् बिभर्षि सायकानि धन्व । अर्हन्निष्कं यजतं विश्वरूपम् ।
अर्हन्निदं दयसे विश्वमब्भुवम् । न वा ओजीयो रुद्र त्वदस्ति ॥
गायत्रमसि ॥ त्रैष्टुभमसि ॥ जागतमसि ॥ मधु मधु मधु ॥
दश प्राचीर्दश भासि दक्षिणा । दश प्रतीचीर्दश भास्युदीचीः ।
दशोर्ध्वा भासि सुमनस्यमानः । स नो रुचं धेह्यहृणीयमानः ॥

अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु गायत्रेण छन्दसा । स मा रुचितो रोचय ॥ इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसा। स मा रुचितो रोचय ॥ वरुणस्त्वादित्यैः पश्चाद्रोचयतु जागतेन छन्दसा । स मा रुचितो रोचय ॥ द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचयत्वानुष्टुभेन छन्दसा । स मा रुचितो रोचय ॥ बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद् रोचयतु पाङ्क्तेन छन्दसा । स मा रुचितो रोचय ॥ रोचितस्त्वं देव घर्म देवेष्वसि । रोचिषीयाहं मनुष्येषु ॥ सम्राड् घर्म रुचितस्त्वं देवेष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चस्यसि। रुचितोऽहं मनुष्येष्वायुष्माꣳस्तेजस्वी ब्रह्मवर्चसी भूयासम् ॥ रुगसि । रुचं मयि धेहि । मयि रुक् ॥ दश पुरस्ताद्रोचसे । दश दक्षिणा । दश प्रत्यङ् । दशोदङ् । दशोर्ध्वो भासि सुमनस्यमानः । स नः सम्राडिषमूर्जं धेहि । वाजी वाजिने पवस्व । रोचितो घर्मो रुचीय ॥

अपश्यं गोपामनिपद्यमानम् । आ च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसानः । आवरीवर्ति भुवनेष्वन्तः ॥

अत्र प्रावीः । मधुमाध्वीभ्यां मधुमाधूचीभ्याम् । अनु वां देववीतये ॥ समग्निरग्निना गत । सं दैवेन सवित्रा सꣳ सूर्येण रोचते ॥ स्वाहा समग्निस्तपसा गत । सं दैवेन सवित्रा । सꣳ सूर्येणारोचिष्ट ॥ धर्ता दिवो विभासि रजसः । पृथिव्या धर्ता । उरोरन्तरिक्षस्य धर्ता । धर्ता देवो देवानाम् । अमर्त्यस्तपोजाः ॥ हृदे त्वा मनसे त्वा। दिवे त्वा सूर्याय त्वा । ऊर्ध्वमिममध्वरं कृधि। दिवि देवेषु होत्रा यच्छ ॥

विश्वासां भुवां पते । विश्वस्य भुवनस्पते । विश्वस्य मनसस्पते । विश्वस्य वचसस्पते । विश्वस्य तपसस्पते । विश्वस्य ब्रह्मणस्पते ॥ देवश्रूस्त्वं देव घर्म देवान् पाहि ॥ तपोजां वाचमस्मे नियच्छ देवायुवम् । गर्भो देवानाम् । पिता मतीनाम् । पतिः प्रजानाम् । मतिः कवीनाम् । सं देवो देवेन सवित्रायतिष्ट । सꣳ सूर्येणारुक्त । आयुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असि । पिता नोऽसि पिता नो बोध ॥ आयुर्धास्तनूधाः पयोधाः । वर्चोदा वरिवोदा द्रविणोदाः । अन्तरिक्षप्र उरोर्वरीयान् । अशीमहि त्वा मा मा हिꣳसीः ॥ त्वमग्ने गृहपतिर्विशामसि । विश्वासां मानुषीणाम् । शतं पूर्भिर्यविष्ठ पाह्यꣳहसः । समेद्धारꣳ शतꣳ हिमाः । तन्द्राविणꣳ हार्दिवानम् । इहैव रातयः सन्तु ॥ त्वष्टीमती ते सपेय । सुरेता रेतो दधाना । वीरं विदेय तव संदृशि । माहꣳ रायस्पोषेण वियोषम् ॥

[ ५.४–६ ]— मदन्तीभिः प्रोक्षति० अभिपूर्वं प्रोक्षति० त्रिः प्रोक्षति० यन्मौञ्जो वेदो भवति० प्राणाहुतीर्जुहोति० सप्त जुहोति० पृथिवीं तपसस्त्रायस्वेति हिरण्यमुपास्यति० प्रलवानादीप्योपास्यति० अप्रतिशीर्णाग्रं भवति० मनोरश्वासि भूरिपुत्रेतीमामभिमृशति० यद्वैकङ्कताः परिधयो भवन्ति० द्वादश भवन्ति० यत् त्रयोदशः परिधिर्भवति० दिवं तपसस्त्रायस्वेत्युपरिष्टाद्धिरण्यमधि निदधाति० गायत्रमसि त्रैष्टुभमसि जागतमसीति धवित्राण्यादत्ते० मधु मध्विति धूनोति० त्रिः परियन्ति० त्रिः पुनः परियन्ति० त्रिः परीत्य न चतुर्थं परीयात्० अव्यतिषङ्गं धून्वन्ति० विनिषद्य धून्वन्ति० ऊर्ध्वं धून्वन्ति० सर्वतो धून्वन्ति० अथ यदेनमेतैर्यजुर्भी रोचयित्वा रुचितो घर्मः इति प्राह०पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति०त्रिः प्रवृणक्ति०द्वादशकृत्वः प्रवृणक्ति०अथो खलु । सकृदेव प्रवृज्यः० अग्निष्टोमे प्रवृणक्ति०ऋत्विजोऽवेक्षन्ते० रुचितमवेक्षन्ते० अधीयन्तोऽवेक्षन्ते० न पत्न्यवेक्षेत० तिरस्कृत्य यजुर्वाचयति० ॥

मैसं [ ४.९.२-६ ]—

गायत्रीं छन्दः प्रपद्ये त्रिष्टुभं छन्दः प्रपद्ये जगतीं छन्दः प्रपद्येऽनुष्टुभं छन्दः प्रपद्ये पङ्क्तिं छन्दः प्रपद्ये छन्दाꣳसि छन्दः प्रपद्ये । तानि नोऽवन्तु तानि नः पालयन्तु तानि सा ऋछतु यो अस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो होतर्घर्ममभिष्टुह्यग्नीद्रजनरौहिणौ पुरोडाशावधिश्रय प्रतिप्रस्थातर्विहर प्रस्तोतः सामानि गाय ॥

यजुर्युक्तꣳ सामभिर्ऋक्तखन्ता विश्वाभिर्धीभिः संभृतं दक्षिणाभिः ।
प्रततं पारयिष्णुꣳ स्तुभो वहन्तु सुमनस्यमानाः ॥

भूर्भुवः स्वर्देवस्य सवितुः प्रसवे बृहस्पतिप्रसूता । ओमिन्द्रवन्तः प्रचरत ॥ यमाय त्वा ॥ मखाय त्वा ॥ सूर्यस्य हरसे त्वा ॥ देवस्त्वा सविता मध्वानक्तु ॥

पृथिव्याः संपृचस्पाहि ॥ अर्चिषे त्वा ॥ शोचिषे त्वा ॥ ज्योतिषे त्वा ॥ तपसे त्वा ॥ आर्चिरसि शोचिरसि ज्योतिरसि तपोऽसि ॥ सूर्यस्य तपस्तपः ॥

सꣳसीदस्व महं असि शोचस्व देववीतमः ।

वि धूममग्ने अरुषं मेध्य सृज प्रशस्त दर्शतम् ॥

अञ्जन्ति यं प्रथयन्तो .... अग्निरमृतो न सादि ॥ अनाधृष्टासि पुरस्तादग्नेराधिपत्या आयुर्मे दाः ॥ पुत्रवती दक्षिणत ....॥ सुषदा पश्चात् सवितुराधिपत्ये चक्षुर्मे दाः ॥ आश्रुतिरुत्तरतो ....॥ विधृतिरुपरिष्टाद् बृहस्पतेराधिपत्ये वाचं मे दाः । ब्रह्म मे दाः क्षत्रं मे दाः पयो मे दाः ॥ मनोरश्वासि भूरिपुत्रा सूपसदना विश्वाभ्यो मा दꣳष्ट्राभ्यस्पाहि ॥ चिदसि ॥ स्वाहा मरुद्भ्यः परिश्रयस्व ॥ मासि ॥ प्रमासि ॥ प्रतिमासि ॥ विमासि ॥ संमासि ॥ उन्मासि ॥ अन्तरिक्षस्यान्तर्धिरसि ॥ दिवः संपृचस्पाहि ॥

अर्हन् बिभर्षि सायकानि धन्वा । अर्हन्निष्कꣳ यजतꣳ विश्वरूपम् ।

अर्हन्निदं दयसे विश्वमा धन्वा । ओजीयो रुद्रस्तदस्ति ॥

गायत्रोऽसि ॥ त्रैष्टुभोऽसि ॥ जागतमसि ॥ मधु ॥ मधु ॥ मधु ॥ रुचितो घर्मः॥ दश प्राचीर्दश भासि....॥ सा नः प्रजां पशून् पाह्यरणीयमानः ॥ अग्निष्ट्वा वसुभिः पुरस्ताद्रोचयतु स मा रुचितो रोचय ॥ पितरस्त्वा यमराजानः पितृभिर्दक्षिणतो रोचयन्तु स मा रुचितो रोचय ॥ सविता त्वादित्यैः पश्चाद्रोचयतु स मा रुचितो रोचय ॥ मित्रावरुणौ त्वोत्तरतो मरुद्भी रोचयेताꣳ स मा रुचितो रोचय ॥ बृहस्पतिष्ट्वा विश्वैर्देवैरुपरिष्टाद्रोचयतु स मा रुचितो रोचय ॥ देव घर्म रुचितस्त्वं देवेष्वा सुरुचितं मां देवमनुष्येषु कुरु रुचं मयि धेहि । रुचिरसि रुचोऽसि स यथा त्वꣳ रुच्या रोचस एवमहꣳ रुच्या रोचिषीय तवेव मे रोचमानस्य रोचो भूयासुः। भ्राजिरसि भ्राजोऽसि स यथा त्वं भ्राज्या भ्राजस एवमहं भ्राज्या भ्राजिषीय तवेव मे भ्राजमानस्य भ्राजो भूयासुः। भ्राजिरसि भ्राजोऽसि स यथा त्वं भ्राज्या भ्राजस एवमहं भ्राज्या भ्राजिषीय तवेव मे भ्राजमानस्य भ्राजो भूयासुः ॥ अपश्यं गोपामनिपद्यमानमा....॥ गर्भो देवानां जनिता मतीनां मतिः कवीनां पतिः प्रजानां धर्ता क्षत्रस्य ॥ सं देवो देवेन सवित्रा यजत्र सꣳ सूर्येण रोचते ॥ हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ॥ ऊर्ध्वमिममध्वरं दिवि देवेषु होत्रा यछ ॥ धर्ता दिवो रजसो विभाति धर्ता पृथिव्या धर्तोरोरन्तरिक्षस्य धर्ता ॥ देवो देवानाममर्त्यस्तपोजा अप्सु प्रावीः ॥ विश्वासां भुवां पते विश्वस्य भुवनस्पते विश्वस्य मनसस्पते विश्वस्य वचसस्पते विश्वस्य ब्रह्मणस्पते ॥ देवश्रुत्त्वं देव घर्म देवान् पाहि तपोजान् ॥ वाजमस्मिन्निधेहि

देवायुवम् ॥ मधु माध्वीभ्यां मधु माधूचीभ्यां मधुमान् देववीतये ॥ समग्निरग्निनागत सं देवो देवेन सवित्रा यजत्र सᳪ सूर्येणारोचिष्ट स्वाहा ॥ समग्निस्तपसागत सं देवो देवेन सवित्रा यजत्र सᳪ सूर्येणायुक्तायुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असि पितासि पिता नो बोधिषीमहि त्वा नमस्ते अस्तु मा मा हिᳪसीः ॥ त्वष्टृमन्तस्त्वा सपेम ॥

वामासं—

यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे ॥ देवस्त्वा सविता मध्वानक्तु ॥ पृथिव्याः सᳪस्पृशस्पाहि ॥ अर्चिरसि शोचिरसि तपोऽसि ॥ अनाधृष्टा पुरस्तादग्नेराधिपत्य आयुर्मे दाः । पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये प्रजां मे दाः । सुषदा पश्चाद्देवस्य सवितुराधिपत्ये चक्षुर्मे दाः । आश्रुतिरुत्तरतो धातुराधिपत्ये रायस्पोषं मे दाः । विधृतिरुपरिष्टाद् बृहस्पतेराधिपत्य ओजो मे दाः॥ विश्वाभ्यो मा नाष्ट्राभ्यस्पाहि ॥ मनोरश्वासि ॥ स्वाहा मरुद्भिः परिश्रीयस्व ॥ दिवः सᳪस्पृशस्पाहि ॥ मधु मधु मधु ॥ गर्भो देवानां पिता मतीनां पतिः प्रजानाम् । सं देवो देवेन सवित्रा गत सᳪ सूर्येण रोचते ॥ समग्निरग्निना गत सं दैवेन सवित्रा सᳪ सूर्येणारोचिष्ट । स्वाहा समग्निस्तपसा गत सं दैव्येन सवित्रा सᳪ सूर्येणारूरुचत ॥ धर्ता दिवो विभाति तपसस्पृथिव्यां धर्ता देवो देवानाममर्त्यस्तपोजाः । वाचमस्मे नियच्छ देवायुवम् ॥ अपश्यं गोपामनिपद्यमानमा .... ॥ विश्वासां भुवां पते विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पते । देवश्रुत्त्वं देव घर्म देवो देवान् पाह्यत्र प्रावीरनु वां देववीतये । मधु माध्वीभ्यां मधु माधूचीभ्याम् ॥ हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वो अध्वरं दिवि देवेषु धेहि ॥ पिता नोऽसि पिता नो बोधि नमस्ते अस्तु मा मा हिᳪसीः ॥ त्वष्टृमन्तस्त्वा सपेम पुत्रान् पशून् मयि धेहि प्रजामस्मासु धेह्यरिष्टाहᳪ सह पत्या भूयासम् ॥ अहः केतुना जुषताᳪ सुज्योतिर्ज्योतिषा स्वाहा ॥ ३७.११–२१

माशब्रा [ १४.१.३–२.१ ]— स यदैतदातिथ्येन प्रचरति । अथ प्रवर्ग्येण चरिष्यन् पुरोपसदोऽग्रेण गार्हपत्यं प्राचः कुशान्त्सᳪस्तीर्य द्वन्द्वं पात्राण्युपसादयति । उपयमनीं महावीरं परीशासौ पिन्वने रौहिणकपाले रौहिणहवन्यौ स्रुचौ । यदु चान्यद्भवति । तद्दश० अथाध्वर्युः प्रोक्षणीरादायोपोत्तिष्ठन्नाह ब्रह्मन् प्रचरिष्यामः होतरभिष्टुहि इति० प्रतिपद्यते होता ब्रह्म जज्ञानं प्रथमं पुरस्तात् इति० अथ प्रोक्षति० स प्रोक्षति यमाय त्वा .... इति० पूर्वया द्वारा स्थूणां निर्हृत्य दक्षिणतो निभिन्वन्ति यथैनाᳪ होताभिष्टुवन् परापश्येत्०

अग्रेणाहवनीयं सम्राडासन्दीं पर्याहृत्य दक्षिणतः प्राचीमासादयत्युत्तराᳬं राजासन्द्यै। औदुम्बरी भवति० अᳬंसदघ्ना भवति० बाल्वजीभी रज्जुभिर्व्युता भवति० स यत्रैताᳬं होतान्वाह अञ्जन्ति यं प्रथयन्तो न विप्राः इति तदेतं प्रचरणीयं महावीरमाज्येन समनक्ति देवस्त्वा सविता मध्वानक्त्विति० अथोत्तरतः सिकता उपकीर्णा भवन्ति। तद्रजतᳬं हिरण्यमधस्तादुपास्यति पृथिव्याः सᳬंस्पृशस्पाहीति० स यत्रैताᳬं होतान्वाह सᳬंसीदस्व महाँ असि इति तदुभयत आदीप्ता मौञ्जाः प्रलवा भवन्ति। तानुपास्य तेषु प्रवृणक्ति० तस्मिन् प्रवृज्यमाने पत्नी शिरः प्रोर्णुते० स प्रवृणक्ति अर्चिरसि शोचिरसि तपोऽसीति० अथास्यामाशिष आशास्ते० अनाधृष्टा पुरस्तात् .... इति० अथ दक्षिणत उत्तानेन पाणिना निह्नुते विश्वाभ्यो मा नाष्ट्राभ्यस्पाहीति० अथेमामभिमृश्य जपति मनोरश्वासीति० अथ वैकङ्कतौ शकलौ परिश्रयति प्राञ्चौ स्वाहा मरुद्भिः परिश्रीयस्वेति० तूष्णीमुदञ्चौ। तूष्णीं प्राञ्चौ। तूष्णीमुदञ्चौ। तूष्णीं प्राञ्चौ। त्रयोदश संपादयति० अथ सुवर्णᳬं हिरण्यमुपरिष्टान्निदधाति दिवः सᳬंस्पृशस्पाहीति० अथ धवित्रैराधूनोति मधु मध्विति त्रिः० त्रीणि भवन्ति० अथापसलवि त्रिर्धून्वन्ति० पुनः प्रसलवि त्रिर्धून्वन्ति० स यदार्चिर्जायतेऽथ हिरण्यमादत्ते। स यत्रैताᳬं होतान्वाह अप्नस्वतीमश्विना वाचमस्मे इति तदध्वर्युरुपोत्तिष्ठन्नाह रुचितो घर्मः इति० स यदैतदध्वर्युरुपोत्तिष्ठन्नाह रुचितो घर्म इति तदुपोत्थाय अवकाशैरुपतिष्ठन्ते० षडुपतिष्ठन्ते० गर्भो देवानाम् .... इति० अथ पत्न्यै शिरोऽपावृत्य महावीरमीक्षमाणां वाचयति त्वष्टृमन्तस्त्वा सपेम.... इति० अथातो रौहिणौ जुहोति। अहः केतुना जुषताᳬं सुज्योतिर्ज्योतिषा स्वाहेति। उभावेतेन यजुषा प्रातः ॥

**वाकासं—**

---॥ त्वष्टृमन्तस्त्वा.... मयि धेह्यरिष्टाहᳬं सह ...॥ ---॥३७.२.१-३.७

काशब्रा [ १६.१.३.१–२.१.५ ] ≡ माशब्रा

**अशौसं—**

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः ॥
इयं पित्र्या राष्ट्र्येत्वग्रे प्रथमाय जनुषे भुवनेष्ठाः।
तस्मा एतं सुरुचं ह्वारमह्यं घर्मं श्रीणन्तु प्रथमाय धास्यवे ॥ ४.१.१–२

रुचिरसि रोचोऽसि। स यथा त्वं रुच्या रोचोऽस्येवाहं पशुभिश्च ब्राह्मणवर्चसेन च रुचिषीय ॥ १७.१.२१

**अपैसं—**

घर्मं तपाम्यमृतस्य धारया देवेभ्यो हव्यं परिदां सवित्रे।
शुक्रं देवाः श्रृतमदन्तु हव्यमासन् जुह्वानममृतस्य योनौ ॥ ५.१६.२

देवानामधिरा एतु घर्मं ऋतेन भ्राजन्नमृतं वि चष्टे ।
हिरण्यवर्णो नभसो देव सूर्यो घर्मो भ्राजन् दिवोऽन्तान् पर्येषि विश्वतः॥१६.१५०.६
वैश्वानरः समुद्रं पर्येति शुक्रो घर्मो भ्राजन् तेजसा रोचमानः ।
नुदन् शत्रून् प्रदहन् मे सपत्नानादित्यो द्यामध्यरुक्षद्विपश्चित्॥१६.१५०.१०
वि द्योतते द्योतत आ द्योतते चाप्स्वन्तरमृतो घर्म उद्यन् ।
हन्ता वृत्रस्य हरितामनीकमनाधृष्टास्तन्वः सूर्यस्य ॥
घर्मः पश्चादुत घर्मः पुरस्तादयोदंष्ट्राय द्विषतोऽपि दध्मः ।
वैश्वानरश्च शीतरूरे वसानः सपत्नान् मे द्विषतो हन्तु सर्वान् ॥
ऋतूनृतुभिः शमयति ब्रह्मणैकवीरो घर्मः शुचानः समिधा समिद्धः ।
ब्रह्म त्वा तपति ब्रह्मगा तेजसा च ॥ १६.१५१.५–७
घर्मः साहस्रः समिधा समिद्धोऽसपत्नाः प्रदिशो मे भवन्तु ।
सपत्नान् सर्वान् मे सूर्यो हन्तु वैश्वानरो हरिः।
घर्मस्तप्तः प्र दहतु भ्रातृव्यान् द्विषतो वृषा ॥
उद्यन्मे शुक्र आदित्यो विमृधो वच्मि सूर्यः ।
वैश्वानरः प्र दहतु भ्रातृव्यान् द्विषतो मम ॥ १६.१५२.५–६

ब्रह्म जज्ञानं प्रथमं .... ॥ ५.२.२ ॥ इयं पित्रे राष्ट्र्येत्यग्रे .... भूमनेष्ठाः । .... प्रथमस्य धासेः ॥ ५.२.१ ॥ रुचिरसि रोचोऽसि । स एवाहं प्रजया पशुभिर्ब्राह्मणवर्चसेन रोचिषीय ॥ १८.३२.५

गोब्रा [ २.२.६ ]— तं संभृत्योचतुः ब्रह्मन् घर्मेण प्रचरिष्यामो होतर्घर्ममभिष्टुह्युद्गातः सामानि गाय इति । प्रचरत घर्मम् इत्यनुजानाति० घर्मं तपामि, ब्रह्म जज्ञानम्, इयं पित्र्या राष्ट्र्येत्वग्र इति घर्मं ताप्यमानमुपासीत शस्त्रवदर्धर्चश आहावप्रतिगरवर्जं रूपसमृद्धाभिः० अन्तर्धाय प्रचरन्ति० तदाहुर्न प्रथमयज्ञे प्रवर्ग्यं कुर्वीतानुपनामुका ह वा एनमुत्तरे यज्ञक्रतवो भवन्तीति । कामं तु योऽनूचानः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्यात्० प्रवर्ग्यवतैव याजयेन्नाप्रवर्ग्येण० ॥

## १८. प्रथमपौर्वाह्णिकप्रवर्ग्यप्रचारहौत्रम्

ऋसं—

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि .... ॥
इयं पित्रे राष्ट्र्येत्यग्रे प्रथमाय जनुषे भूमनेष्ठाः ।
तस्मा एतं सुरुचं ह्वारमह्यं घर्मं श्रीणन्ति प्रथमाय धास्यवे ॥

महान् मही अस्तभायद्विजातो द्यां पिता सद्म पार्थिवं च रजः ।
स बुध्न्यादाष्ट जनुषाभ्युग्रं बृहस्पतिर्देवता तस्य सम्राट् ॥
अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि
सत्यसवं रत्नधामभि प्रियं मतिं कविम् ।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि
हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥ खिल ३.२२.१–४
सं सीदस्व महाँ असि....॥१.३६.९॥ अञ्जन्ति यं प्रथयन्तो....॥५.४३.७॥
पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः ।
समुद्रे अन्तः कवयो वि चक्षते मरीचीनां पदमिच्छन्ति वेधसः ॥
पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तः ।
तां द्योतमानां स्वर्यं मनीषामृतस्य पदे कवयो नि पान्ति ॥१०.१७७.१-२
यो नः सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो वनुष्यात् ।
तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वान् ॥
यस्ते यज्ञेन समिधा य उक्थैरर्केभिः सूनो सहसो ददाशत् ।
स मर्त्येष्वमृत प्रचेता राया द्युम्नेन श्रवसा वि भाति ॥ ६.५.४–५
भवा नो अग्ने सुमना उपेतौ सखेव सख्ये पितरेव साधुः ।
पुरुद्रुहो हि क्षितयो जनानां प्रति प्रतीचीर्दहतादरातीः ॥
तपो ष्वग्ने अन्तराँ अमित्रान् .... ॥ ३.१८.१-२ ॥
कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥
तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः ।
तपूंष्यग्ने जुह्वा पतङ्गानसंदितो वि सृज विष्वगुल्काः ॥
प्रति स्पशो वि सृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धः ।
यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षीत् ॥
उदग्ने तिष्ठ प्रत्या तनुष्व न्यमित्राँ ओषतात् तिग्महेते ।
यो नो अरातिं समिधान चक्रे नीचा तं धक्ष्यतसं न शुष्कम् ॥
ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने ।
अव स्थिरा तनुहि यातुजूनां जामिमजामिं प्र मृणीहि शत्रून् ॥ ४.४.१-५
परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥ १.१०.१२

अधि द्वयोरदधा उक्थ्यं वचो यतस्रुचा मिथुना या सपर्यतः ।
असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वते ॥ १.८३.३
शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥ ६.५८.१
अपश्यं गोपामनिपद्यमानमा .... ॥ १०.१७७.३ ॥
स्रक्के द्रप्सस्य धमतः समस्वरन्नृतस्य योना समरन्त नाभयः ।
त्रीन्त्स मूर्ध्नो असुरश्चक्र आरभे सत्यस्य नावः सुकृतमपीपरन् ॥
सम्यक् सम्यञ्चो महिषा अहेषत सिन्धोरूर्मावधि वेना अवीविपन् ।
मधोर्धाराभिर्जनयन्तो अर्कमित् प्रियामिन्द्रस्य तन्वमवीवृधन् ॥
पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम् ।
महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम् ॥
सहस्रधारेऽव ते समस्वरन् दिवो नाके मधुजिह्वा असश्चतः ।
अस्य स्पशो न नि मिषन्ति भूर्णयः पदेपदे पाशिनः सन्ति सेतवः ॥
पितुर्मातुरध्या ये समस्वरन्नृचा शोचन्तः संदहन्तो अव्रतान् ।
इन्द्रद्विष्टामप धमन्ति मायया त्वचमसिक्नीं भूमनो दिवस्परि ॥
प्रत्नान्मानादध्या ये समस्वरञ्छ्लोकयन्त्रासो रभसस्य मन्तवः ।
अपानक्षासो बधिरा अहासत ऋतस्य पन्थां न तरन्ति दुष्कृतः ॥
सहस्रधारे वितते पवित्र आ वाचं पुनन्ति कवयो मनीषिणः ।
रुद्रास एषामिषिरासो अद्रुहः स्पशः स्वञ्चः सुदृशो नृचक्षसः ॥
ऋतस्य गोपा न दभाय सुक्रतुस्त्री ष पवित्रा हृद्यन्तरा दधे ।
विद्वान्त्स विश्वा भुवनाभि पश्यत्यवाजुष्टान् विध्यति कर्ते अव्रतान् ॥
ऋतस्य तन्तुर्विततः पवित्र आ जिह्वाया अग्रे वरुणस्य मायया ।
धीराश्चित् तत् समिनक्षन्त आशतात्रा कर्तमव पदात्यप्रभुः ॥ ९.७३
अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥ १०.१२३.१
पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत् समाशत ॥
तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधि तिष्ठन्ति चेतसा ॥ ९.८३.१–२

वि यत् पवित्रं धिषणा अतन्वत घर्मं शोचन्तं प्रणवेषु बिभ्रतः ।
समुद्रे अन्तराय वो विचक्षणं त्रिरह्नो नाम सूर्यस्य मन्वत ॥ आश्वश्रौ ४.६.३

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥

देवाश्चित् ते असुर्य प्रचेतसो बृहस्पते यज्ञियं भागमानशुः ।
उस्राइव सूर्यो ज्योतिषा महो विश्वेषामिज्जनिता ब्रह्मणामसि ॥

आ विबाध्या परिरापस्तमांसि च ज्योतिष्मन्तं रथमृतस्य तिष्ठसि ।
बृहस्पते भीममभित्रदम्भनं रक्षोहणं गोत्रभिदं स्वर्विदम् ॥

सुनीतिभिर्नयसि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवत् ।
ब्रह्मद्विषस्तपनो मन्युमीरसि बृहस्पते महि तत् ते महित्वनम् ॥

न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनः ।
विश्वा इदस्माद् ध्वरसो वि बाधसे यं सुगोपा रक्षसि ब्रह्मणस्पते ॥

त्वं नो गोपाः पथिकृद्विचक्षणस्तव व्रताय मतिभिर्जरामहे ।
बृहस्पते यो नो अभि ह्वरो दधे स्वा तं मर्मर्तु दुच्छुना हरस्वती ॥

उत वा यो नो मर्चयादनागसोऽरातीवा मर्तः सानुको वृकः ।
बृहस्पते अप तं वर्तया पथः सुगं नो अस्यै देववीतये कृधि ॥
त्रातारं त्वा तनूनां हवामहेऽवस्पर्तरधिवक्तारमस्मयुम् ।
बृहस्पते देवनिदो नि बर्हय मा दुरेवा उत्तरं सुम्नमुन्नशन् ॥
त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि ।
या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः ॥
त्वया वयमुत्तमं धीमहे वयो बृहस्पते पप्रिणा सस्निना युजा ।
मा नो दुःशंसो अभिदिप्सुरीशत प्र सुशंसा मतिभिस्तारिषीमहि ॥
अनानुदो वृषभो जग्मिराहवं निष्टप्ता शत्रुं पृतनासु सासहिः ।
असि सत्य ऋणया ब्रह्मणस्पत उग्रस्य चिद् दमिता वीळुहर्षिणः ॥
अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति ।
बृहस्पते मा प्रणक् तस्य नो वधो नि कर्म मन्युं दुरेवस्य शर्धतः ॥
भरेषु हव्यो नमसोपसद्यो गन्ता वाजेषु सनिता धनंधनम् ।
विश्वा इदर्यो अभिदिप्स्वो मृधो बृहस्पतिर्वि ववर्हा रथाँइव ॥

तेजिष्ठया तपनी रक्षसस्तप ये त्वा निदे दधिरे दृष्टवीर्यम् ।
आविस्तत् कृष्व यदसत् त उक्थ्यं बृहस्पते वि परिरापो अर्दय ॥
बृहस्पते अति यदर्यो अर्हाद् द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥
मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः ।
आ देवानामोहते वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः ॥
विश्वेभ्यो हि त्वा भुवनेभ्यस्परि त्वष्टाजनत् साम्नःसाम्नः कविः ।
स ऋणचिदृणया ब्रह्मणस्पतिर्द्रुहो हन्ता मह ऋतस्य धर्तरि ॥
तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः ।
इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवम् ॥
ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व ।
विश्वं तद्भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीराः ॥ २.२३
प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत् ।
धातुर्द्युतानात् सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः ॥
अविन्दन् ते अतिहितं यदासीद्यज्ञस्य धाम परमं गुहा यत् ।
धातुर्द्युतानात् सवितुश्च विष्णोर्भरद्वाजो बृहदा चक्रे अग्नेः ॥
तेऽविन्दन् मनसा दीध्याना यजुः ष्कन्नं प्रथमं देवयानम् ।
धातुर्द्युतानात् सवितुश्च विष्णोरा सूर्यादभरन् घर्ममेते ॥ १०.१८१
अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् ।
इह प्रजामिह रयिं रराणः प्र जायस्व प्रजया पुत्रकाम ॥
अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम् ।
उप मामुच्चा युवतिर्बभूयाः प्र जायस्व प्रजया पुत्रकामे ॥
अहं गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः ।
अहं प्रजा अजनयं पृथिव्यामहं जनिभ्यो अपरीषु पुत्रान् ॥ १०.१८३
का राधद्धोत्राश्विना वां को वां जोष उभयोः । कथा विधात्यप्रचेताः ॥
विद्वांसाविद् दुरः पृच्छेदविद्वानित्थापरो अचेताः । नू चिन्नु मर्ते अक्रौ ॥
ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्म वोचेतमद्य ।
प्रार्चद्दयमानो युवाकुः ॥

वि पृच्छामि पाक्या न देवान् वषट्कृतस्याद्भुतस्य दस्रा ।
पातं च सह्यसो युवं च रभ्यसो नः ॥

प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियो वाम् ।
प्रैषयुर्न विद्वान् ॥

श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वाम् ।
आक्षी शुभस्पती दन् ॥

युवं ह्यास्तं महो रन् युवं वा यन्निरततंसतम् ।
ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः ॥

मा कस्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः ।
स्तनाभुजो अशिश्वीः ॥

दुहीयन् मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै ।
इषे च नो मिमीतं धेनुमत्यै ॥ १.१२०.१-९

आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः ।
अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छ ॥

न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।
दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शंभविष्ठा ॥

उता यातं संगवे प्रातरह्नो मध्यंदिन उदिता सूर्यस्य ।
दिवा नक्तमवसा शंतमेन नेदानीं पीतिरश्विना ततान ॥

इदं हि वां प्रदिवि स्थानमोक इमे गृहा अश्विनेदं दुरोणम् ।
आ नो दिवो बृहतः पर्वतादाद्भ्यो यातमिषमूर्जं वहन्ता ॥

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ ५.७६

ग्रावाणेव तदिदर्थं जरेथे गृध्रेव वृक्षं निधिमन्तमच्छ ।
ब्रह्माणेव विदथ उक्थशासा दूतेव हव्या जन्या पुरुत्रा ॥

प्रातर्यावाणा रथ्येव वीराजेव यमा वरमा सचेथे ।
मेने इव तन्वा शुम्भमाने दम्पतीव क्रतुविदा जनेषु ॥

शृङ्गेव नः प्रथमा गन्तमर्वाक्छफाविव जर्भुराणा तरोभिः ।
चक्रवाकेव प्रति वस्तोरुस्रार्वाञ्चा यातं रथ्येव शक्रा ॥

नावेव नः पारयतं युगेव नभ्येव न उपधीव प्रधीव ।
श्वानेव नो अरिषण्या तनूनां खृगलेव विस्रसः पातमस्मान् ॥
वातेवाजुर्या नद्येव रीतिरक्षीइव चक्षुषा यातमर्वाक् ।
हस्ताविव तन्वे शंभविष्ठा पादेव नो नयतं वस्यो अच्छ ॥
ओष्ठाविव मध्वास्ने वदन्ता स्तनाविव पिप्यतं जीवसे नः ।
नासेव नस्तन्वो रक्षितारा कर्णाविव सुश्रुता भूतमस्मे ॥
हस्तेव शक्तिमभि संददी नः क्षामेव नः समजतं रजांसि ।
इमा गिरो अश्विना युष्मयन्तीः क्ष्णोत्रेणेव स्वधितिं सं शिशीतम् ॥
एतानि वामश्विना वर्धनानि ब्रह्म स्तोमं गृत्समदासो अक्रन् ।
तानि नरा जुजुषाणोप यातं बृहद्वदेम विदथे सुवीराः ॥ २.३९
ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये ।
याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम् ॥
युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे ।
याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु .... ॥
युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना ।
याभिर्धेनुमस्वं पिन्वथो नरा ताभिरू षु .... ॥
याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति ।
याभिस्त्रिमन्तुरभवद्विचक्षणस्ताभिरू षु ....॥
याभी रेभं निवृतं सितमद्भ्य उद्वन्दनमैरयतं स्वर्दृशे ।
याभिः कण्वं प्र सिषासन्तमावतं ताभिरू षु .... ॥
याभिरन्तकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुः ।
याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरू षु .... ॥
याभिः शुचन्तिं धनसां सुषंसदं तप्तं घर्ममोम्यावन्तमत्रये ।
याभिः पृश्निगुं पुरुकुत्समावतं ताभिरू षु .... ॥
याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथः ।
याभिर्वर्तिकां ग्रसिताममुञ्चतं ताभिरू षु .... ॥
याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतम् ।
याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु .... ॥
याभिर्विश्पलां धनसामथर्व्यं सहस्रमीळ्ह आजावजिन्वतम् ।
याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु .... ॥

याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत् ।
कक्षीवन्तं स्तोतारं याभिरावतं ताभिरू षु .... ॥
याभी रसां क्षोदसोद्रः पिपिन्वथुरनश्वं याभी रथमावतं जिषे ।
याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु .... ॥
याभिः सूर्यं परियाथः परावति मन्धातारं क्षैत्रपत्येष्वावतम् ।
याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु .... ॥
याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शम्बरहत्य आवतम् ।
याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु .... ॥
याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथः ।
याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु .... ॥
याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुः ।
याभिः शारीराजतं स्यूमरश्मये ताभिरू षु .... ॥
याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना ।
याभिः शर्यातमवथो महाधने ताभिरू षु .... ॥
याभिरङ्गिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसः ।
याभिर्मनुं शूरमिषा समावतं ताभिरू षु .... ॥
याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतम् ।
याभिः सुदास ऊहथुः सुदेव्यं ताभिरू षु .... ॥
याभिः शंताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम् ।
ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु .... ॥
याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतम् ।
मधु प्रियं भरथो यत् सरड्भ्यस्ताभिरू षु .... ॥
याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथः ।
याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु .... ॥
याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतम् ।
याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु .... ॥
अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषाम् ।
अद्यूत्येऽवसे नि ह्वये वां वृधे च नो भवतं वाजसातौ ॥ १.११२.१-२४
अरूरुचदुषसः पृश्निरग्रिय उक्षा बिभर्ति भुवनानि वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा दधुः ॥ ९.८३.३

द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः ।
तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ १.११२.२५

ऐब्रा [१.१८-२१]– तं संभृत्याहतुः **ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो होतरभिष्टुहि** इति । ब्रह्म जज्ञानं प्रथमं पुरस्तादिति प्रतिपद्यते० इयं पित्रे राष्ट्र्येत्यग्र इति० महान्मही अस्तभायद्वि जात इति ब्राह्मणस्पत्या० अभि त्यं देवं सवितारमोण्योरिति सावित्री० संसीदस्व महाँ असीति० अञ्जन्ति यं प्रथयन्तो न विप्रा इत्यज्यमानाय० पतङ्गमक्तमसुरस्य मायया, यो नः सनुत्यो अभिदासदग्ने, भवा नो अग्ने सुमना उपेताविति द्वे द्वे अभिरूपे० कृणुष्व पाजः प्रसितिं न पृथ्वीमिति पञ्च राक्षोघ्न्यः० परि त्वा गिर्वणो गिरः, अधि द्वयोरदधा उक्थ्यं वचः, शुक्रं ते अन्यद्यजतं ते अन्यत्, अपश्यं गोपामनिपद्यमानमिति चतस्र एकपातिन्यः । ता एकविंशतिर्भवन्ति० स्रक्वे द्रप्सस्य धमतः समस्वरन्निति नव पावमान्यः० अयं वेनश्चोदयत्पृश्निगर्भा इति० पवित्रं ते विततं ब्रह्मणस्पते, तपोष्पवित्रं विततं दिवस्पदे, **वि यत् पवित्रं धिषणा अतन्वत** इति० गणानां त्वा गणपतिं हवामहे इति ब्राह्मणस्पत्यम्० प्रथश्च यस्य सप्रथश्च नामेति घर्मतन्वः० अपश्यं त्वा मनसा चेकितानमिति प्रजावान् प्राजापत्यः० का राधद्धोत्राश्विना वामिति नव विच्छन्दसः० आ भात्यग्निरुषसामनीक-मिति सूक्तम्० ग्रावाणेव तदिदर्थं जरेथे इति सूक्तम्० ईळे द्यावापृथिवी पूर्वचित्तय इति सूक्तम्० अरूरुचदुषसः पृश्निरग्रिय इति रुचितवती० द्युभिरक्तुभिः परि पातमस्मानित्युत्तमया परिदधाति० इति नु पूर्वं पटलम् ॥

**ऋसं—**

**ब्रह्म जज्ञानं .... ॥** ( खिल ) **३.२२.१ ॥ इयं पित्रे .... ॥** ( खिल ) **३.२२.२ ॥ अभि त्यं देवं .... ॥** ( खिल ) **३.२२.४ ॥ अञ्जन्ति यं .... ॥ ५.४३.७ ॥ सं सीदस्व .... ॥ १.३६.९ ॥ भवा नो अग्ने .... ॥ ३.१८.१–२ ॥ यो नः सनुत्यो अभिदासद् .... ॥ ६.५.४ ॥ कृणुष्व पाजः .... ॥ ४.४.१–५ ॥ परि त्वा .... ॥ १.१०.१२ ॥ अधि द्वयोरदधा .... ॥ १.८३.३ ॥**

**अर्हन् बिभर्षि सायकानि धन्वार्हन् निष्कं यजतं विश्वरूपम् ।
अर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्ति ॥ २.३३.१०**

**पतङ्गमक्तम् .... ॥ १०.१७७.१–३ ॥ अपश्यं त्वा.... ॥ १०.१८३.१–३ ॥ स्रक्वे द्रप्सस्य .... ॥ ९.७३.१–९ ॥ पवित्रं ते .... ॥ ९.८३.१–२ ॥** वि यत् पवित्रं .... **॥** शांश्रौ ५.९.१६ **॥ अयं वेनश्चोदयत् .... ॥ १०.१२३.१ ॥**

समुद्रादूर्मिमुदियर्ति वेनो नभोजाः पृष्ठं हर्यतस्य दर्शि ।
ऋतस्य सानावधि विष्टपि भ्राट् समानं योनिमभ्यनूषत व्राः ॥
समानं पूर्वीरभि वावशानास्तिष्ठन् वत्सस्य मातरः सनीळाः ।
ऋतस्य सानावधि चक्रमाणा रिहन्ति मध्वो अमृतस्य वाणीः ॥
जानन्तो रूपमकृपन्त विप्रा मृगस्य घोषं महिषस्य हि ग्मन् ।
ऋतेन यन्तो अधि सिन्धुमस्थुर्विदद्गन्धर्वो अमृतानि नाम ॥
अप्सरा जारमुपसिष्मियाणा योषा बिभर्ति परमे व्योमन् ।
चरत् प्रियस्य योनिषु प्रियः सन्त्सीदत् पक्षे हिरण्यये स वेनः ॥१०.१२३.२-५
ऊर्ध्वो गन्धर्वो अधि नाके अस्थात् प्रत्यङ् चित्रा बिभ्रदस्यायुधानि ।
वसानो अत्कं सुरभिं दृशे कं स्वर्ण नाम जनत प्रियाणि ॥
द्रप्सः समुद्रमभि यज्जिगाति पश्यन् गृध्रस्य चक्षसा विधर्मन् ।
भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ॥ १०.१२३.७-८
गणानां त्वा .... ॥ २.२३.१–१९ ॥ का राधद्धोत्रा .... ॥ १.१२०.१–९ ॥
आ नो विश्वाभिरूतिभिरश्विना गच्छतं युवम् ।
दस्रा हिरण्यवर्तनी पिबतं सोम्यं मधु ॥
आ नूनं यातमश्विना रथेन सूर्यत्वचा ।
भुजी हिरण्यपेशसा कवी गम्भीरचेतसा ॥
आ यातं नहुषस्पर्यान्तरिक्षात् सुवृक्तिभिः ।
पिबाथो अश्विना मधु कण्वानां सवने सुतम् ॥ ८.८.१–२
विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावा धत्तां पुष्करस्रजा ॥
हिरण्ययी अरणी यं निर्मन्थतो अश्विना ।
तं ते गर्भं हवामहे दशमे मासि सूतवे ॥ १०.१८४.१–३
प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः ।
प्रातर्हि यज्ञमश्विना दधाते प्र शंसन्ति कवयः पूर्वभाजः ॥
प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम् ।
उतान्यो अस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान् ॥

हिरण्यत्वङ्मधुवर्णो घृतस्नुः पृक्षो वहन्ना रथो वर्तते वाम् ।
मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वा ॥
यो भूयिष्ठं नासत्याभ्यां विवेष चनिष्ठं पित्वो ररते विभागे ।
स तोकमस्य पीपरच्छमीभिरनूर्ध्वभासः सदमित् तुतुर्यात् ॥
समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ ५.७७.१–५

ईळे द्यावापृथिवी ....॥ १.११२.१–२४ ॥ अरूरुचदुषसः ....॥ ९.८३.३ ॥ द्युभिरक्तुभिः ....॥ १.११२.२५ ॥

शांब्रा [ ८.३–६ ]— तमेकशतेनाभिष्टुयात्० अनवानमभिष्टुयात्० उच्चैर्निरुक्तमभिष्टुयात्० सावित्रीः प्रथमा अभिष्टौति० ब्रह्म जज्ञानं प्रथमं पुरस्तादिति० अञ्जन्ति यं प्रथयन्तो न विप्राः, सं सीदस्व महाँ असीत्यक्तवतीं च संनवतीं चाभिरूपे अभिष्टौति । भवा नो अग्ने सुमना उपेतौ, तपोष्वग्ने अन्तराँ अमित्रान्, यो नः सनुत्यो अभिदासदग्न इति तिस्रस्तपस्वतीरभिरूपा अभिष्टौति० कृणुष्व पाजः प्रसितिं न पृथ्वीमिति राक्षोघ्नीरभिष्टौति० ता वै पञ्च भवन्ति० परि त्वा गिर्वणो गिरः, अधि द्वयोरदधा उक्थ्यं वच इत्यैन्द्र्यावभिरूपे अभिष्टौति० शुक्रं ते अन्यद्यजतं ते अन्यत्, अर्हन् बिभर्षि सायकानि धन्वेति पौष्णीं च रौद्रीं चाभिरूपे अभिष्टौति० पतङ्गमक्तमसुरस्य माययेति० अपश्यं त्वा मनसा चेकितानमित्येतदस्यायतने प्रजाकामस्याभिष्टुयात्० स्रक्वे द्रप्सस्य धमतः समस्वरन्निति सर्वम् । पवित्रं ते विततं ब्रह्मणस्पत इति द्वे । वि यत् पवित्रं धिषणा अतन्वत इत्येका । ता द्वादश पावमान्यः० अयं वेनश्चोदयत् पृश्निगर्भा इति० तस्यैकामुत्सृजति नाके सुपर्णमुप यत्पतन्तमिति० तामुत्तरासु करोति० उभयतोवेनं पापोक्तस्य पावमानीरभिष्टुयात्० गणानां त्वा गणपतिं हवामह इति ब्राह्मणस्पत्या अभिरूपा अभिष्टौति० स यत्रोपाधिगच्छेत् बृहद्वदेम विदथे सुवीरा इति तद्वीरकामायै वीरं ध्यायात्० का राधद्धोत्राश्विना वामिति नवाकूध्रीष्यः० आ नो विश्वाभिरूतिभिरित्यानुष्टुभं तृचम्० विष्णुर्योनिं कल्पयत्वित्येतदस्यायतने प्रजाकामस्याभिष्टुयात्० प्रातर्यावाणा प्रथमा यजध्वमिति पूर्वाह्णे सूक्तम् । आ भात्यग्निरुषसामनीकमित्यपराह्णे त्रैष्टुभे पञ्चर्चे० ईळे द्यावापृथिवी पूर्वचित्तय इति जागतं पञ्चविंशम्० रुचितो घर्मः इत्युक्ते अरूरुचदुषसः पृश्निरग्रिय इति रुचितवतीमभिरूपामभिष्टौति । द्युभिरक्तुभिः परि पातमस्मानिति परिवत्या परिदधाति० ता एकशतमृचो भवन्ति० अथ यदप उपस्पृशति० यदवकाशैरुपतिष्ठते० अथ यदप उपस्पृशति० त्रयस्त्रिंशदुत्तराः० ॥

तैआ [ ५.४ ]—होतान्वाह० अनवानम्० त्रिष्टुभः सतीर्गायत्रीरिवान्वाह० संततमन्वाह० अपरिमिता अन्वाह० ॥

# १९. प्रथमपौर्वाह्णिकप्रवर्ग्यप्रचारौद्गात्रम्

## शार्ङ्गम्[1]

साकौसं [ १.६.२.२.११ ]—

अञ्जते व्यञ्जते समञ्जते क्रतुꣳ रिहन्ति मध्वाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षणꣳ हिरण्यपावाः पशुमप्सु गृभ्णते ॥

४ ५ १ ३ ४ ५ २ ३ ४ ५ २ १ ३ २ १ ३ २
हावाञ्जा । ता२३४इ । वियञ्जतेसमञ्जते । एहिया । एहिया३४ ।

५ १ ३ ४ २ ३ ४ ५ २ १ ३ २ १ ३ २
हाउक्रतुम् । रा२३४इ । हन्तिमधुआभियञ्जते । एहिया । एहिया३४ । हाउ-

५ १ ४२ ३२४३ ४ ५ ४५ १ ३ २ १ ३ २
सिन्धोः । ऊ२३४ त् । श्वासेपतयन्तमुक्षणम् । एहिया । एहिया३४ ।

५ १ २ ३२ ४ ३ ४ ३ ४ ५ २ १ ३ २ १ ३ २
हाउहाइरा । ण्या२३४ । पावाःपशुमप्सुगृभ्णते । एहिया । एहिया३४ ।

५ ४
हा३ । हो५इ । डा ॥ [ ग्राम १६.२.३३ ]

## शुक्रम्[2]

साकौसं [ आरण्य २.६ ]—

नियुत्वान् वायवा गह्ययꣳ शुक्रो अयामि ते । गन्तासि सुन्वतो गृहम् ॥

२र र र २ १ २ १ २ १ २ १ २ २ १ २ २ १
हाउहाउहाउ । शुक्रम् । शुक्रम् । शुक्रम् । शुक्रꣳशुक्रम् । शुक्रꣳशुक्रम् । शुक्रꣳ-

२ ३ २ १ २^ ३ २ १ २^ ३ २ १ २^ २ र र १ २ —
शुक्रम् । शुक्रꣳशूक्रम् । शुक्रꣳशूक्रम् । शुक्रꣳशूक्रम् । नियुत्वान्वाया३वागा१ ही २ ।

२ र १ २ — २ र १२ २र र र
अयꣳशुक्रोआ२ यामा१ इता २ इ । गन्तासिसुन्वा ३ तोगृ १ हा २३ म् । हाउहाउहाउ ।

---

१. महावीरेऽज्यमाने प्रस्तोतृसाम । त्रिर्गायेत् । कौथुमग्रामगाने शार्ङ्गाणि त्रीणि ( १६.२.३१–३३ ) उपलभ्यन्ते । ‘ अञ्जन्ति घर्मं तत्र शार्ङ्गम् ’ ( लाट्याश्रौ १.६.२३ ) इति लाट्यायनः । अतः प्रत्यहं भिन्नं शार्ङ्गं गेयमुत एकमेव सर्वत्र गायेदित्यत्र सूत्रकारस्याशयः स्पष्टं न ज्ञायते । प्रयोगकारैस्तु ‘ हावाञ्जा ’ इत्येकमेव साम सर्वत्र गेयमित्युक्तम् । तदनुरोधेन तदेवात्रोद्धृतम् ।

२. रजतरुक्म उपधीयमाने प्रस्तोतृसाम । सकृद् गायेत् ।

२ १ २ १ २ १ २ १ २ २ १ २ २ १ २^
शुक्रम् । शुक्रम् । शुक्रम् । शुक्र३ शुक्रम् । शुक्र३ शुक्रम् । शुक्र३ शुक्रम् ।

३ २ १ २ ३ २ १ २ ३ २ १^ ३ ५र र २र २ १
शुक्र३ शूक्रम् । शुक्र३ शूक्रम् । शुक्रम् । शू२ । क्रा२३४ । औहोवा । ए । शुक्रम् ।

२र १ २र १
ए । शुक्रम् । ए । शुक्रम् ॥ [ आरण्य ३.२.७ ]

## चन्द्रम्[१]

साकौसं [ १.२.२.१.३ ]—

अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् । इत्था चन्द्रमसो गृहे ॥

२र र र २ १ २ १ २ १ २ १ २ २ १ २
हाउहाउहाउ । चन्द्रम् । चन्द्रम् । चन्द्रम् । चन्द्रश्चन्द्रम् । चन्द्रश्चन्द्रम् ।

२ १ २^ ३ २ १ २ ३ २ १ २ ३ २ १ २ २ र र १ २
चन्द्रश्चन्द्रम् । चन्द्रश्चान्द्रम् । चन्द्रश्चान्द्रम् । चन्द्रश्चान्द्रम् । अत्राहगोरा३मान्वा-

२र १ २ २ र १ २
१ ता २ । नामत्वष्टुरा ३ पाइचा१ या२म् । इत्थाचन्द्रमा ३ सोगृ १हा २३इ ।

२र र र २ १ २ १ २ १ २ १ २ २ १ २
हाउहाउहाउ । चन्द्रम् । चन्द्रम् । चन्द्रम् । चन्द्रञ्चन्द्रम् । चन्द्रञ्चन्द्रम् ।

२ १ २^ ३ २ १ २^ ३ २ १ २^ ३ २ १ ^ ३ ५र र
चन्द्रञ्चन्द्रम् । चन्द्रञ्चान्द्रम् । चन्द्रञ्चान्द्रम् । चन्द्रम् । चा२ । द्रा२३४ । औहोवा ।

२र २ १ २र १ २र १
ए । चन्द्रम् । ए । चन्द्रम् । ए । चन्द्रम् ॥ [ आरण्य ३.२.८ ]

## घर्मतनू[२]

साकौसं [ १.६.१.३.४ ]—

प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥

१. हिरण्यरुक्म उपधीयमाने प्रस्तोतृसाम । सकृद् गायेत् । २. प्रज्वलनकाले प्रस्तोतृसामनी । सकृद् गायेत् ।

२र र र २ र र १ १ २र र र २ १र
हाउहाउहाउ । प्रसोमदेवा ३ वाइता १ या २३इ । हाउहाउहाउ । सिन्धुर्न्नपिप्ये-
१ २ २र र र २ र र र १ २
३ आर्णा १ सा २३ । हाउहाउहाउ । अꣳशोःपयसामदिरोना ३ जागृ १ वी २३ः ।
२र र र २ र र १ १ २ऽ ऽ ऽ २ २१
हाउहाउहाउ । अच्छाकोशम्मा ३ धूश्चू १ ता २३म् । हाउहाउहाउ । वा । घर्मः-
२ १र २२र १र १११
प्रवृक्तस्तन्वासमानृधेवृधेसुवा २३४५ः ॥

१र१ २ १र१ २ १र१ २ १ २ १ २ १ १
औहो ३ वा । औहो ३ वा । औहो ३ वा । ई ३ या । ई ३ या । ई ३ या ।
१ – १ – १ – २ र र १ ^ ३ ५
आइही २ । आइही २ । आइही २ । प्रसोमदे । ववा २ इता २३४ याइ ।
२ १र ^ ३ ५ २ र र १ ^ ३ ५
सिन्धुर्न्नपि । प्येआ २ र्णा २३४ सा । अꣳशोःपयसामदिरः । नजा २ गृ २३४ वीः ।
२ र र १ ^ ३ ५ १र१ २ १र१ १ १र१ २
अच्छाकोशम् । मधू २ श्चू २३४ ताम् । औहो ३ वा । औहो ३ वा । औहो ३ वा ।
१ २ १ २ १ २ १ – १ १ ^ ३
ई३या । ई३या । ई३या । आइही २ । आइही २३ । आ २ इ । हा २३४ ।
५र २ २१ २ १र र २२१र ११११
औहोवा ॥ घर्मःप्रवृक्तस्तन्वासमानशेमहेसुवा २३४५ः ॥ [आरण्य२.२.१५–१६]

## घर्मलिङ्गानि सामानि[1]

### महावैश्वानरव्रतम्

साकौसं [१.१.१.५.९]—

काYमानो वना त्वं यन्मातॄरजगन्नपः ।
न तत्ते अग्ने प्रमृषे निवर्तनं यद् दूरे सन्निहाभुवः ॥

१. घर्मतन्वोर्गानानन्तरम् अवसरे प्राप्ते घर्मलिङ्गानि सामानि प्रस्तोता सकृद् गायेत् । तानि इत्थम् — महावैश्वानरव्रतम् इन्द्रस्य सधस्थं पञ्चानुगानं द्व्यनुगानं चतुरनुगानं चेति । तथा च द्राह्यायणश्रौतसूत्रटीकायां (२.२.७) धन्वी–'अत्र केचिद् घर्मतन्वौ गीत्वा तदनन्तरं महावैश्वानरव्रतादीनि कानिचित् सामानि घर्माभिरूपत्वाद्गेयान्याहुः । तच्चिन्त्यं सूत्रकारेणानुक्तत्वादिति' । लाट्यायनेनापि एतेषां गानानां विनियोगो नोक्तः । तथापि आरण्यगानपठितानामेतेषां गानानामत्र प्रयोगदर्शनात् तेषां संग्रहोऽत्र कृतः ।

२ २ २ २र १ २र १ २र १ २र १
ओ३१म् । ओ३१म् । ओ३१म् । आयूः । आयूः । आयूः । ज्योतीः

२र १ २र १ १र १र र २र १र र २र १र र २र१र र २
ज्योतीः । ज्योतीः । ज्योतोवा । ज्योतोवा । ज्योतोवा । ज्योतोवाहाइ ।

२र १र र २ र १र ९ २ १ २र र १र २ १ २र १र २ १
ज्योतोवाहाइ । ज्योतोवा३हाउ । वा । इहस्ववैंश्वानरायप्रदिशोज्योतिर्बृहत् ।

२ १ र र १ २ १ २ १ २ १र र २ १र र २ १र र
इन्दुरिडासत्यम् । सत्यम् । सत्यम् । सत्योवा । सत्योवा । सत्योवा ।

२ १र र २ २ १र र २ १र ९ २ १ २र र १र २ १ २र
सत्योवाहाइ । सत्योवाहाइ । सत्योवा३हाउ । वा । इहस्ववैंश्वानरायप्रदिशो-

१र २ १ २र र र र १र र २ १र र २ १र र
ज्योतिर्बृहत् । कायमानोवनातुवाम् । तुवाम् । तुवाम् । तुवोवा । तुवोवा । तुवोवा ।

२ १र र २ २ १र र २ १र ९ २ १ २र र १र २ १ २र १र
तुवोवाहाइ । तुवोवाहाइ । तुवोवा३हाउ । वा । इहस्ववैंश्वानरायप्रदिशोज्यो-

२ १ र २र१२ १र २ १र २ १र २ १र र २ १र र
तिर्बृहत् । द्यौर्भूतम्पृथिवी । पृथिवी । पृथिवी । पृथिव्योवा । पृथिव्योवा ।

२ १र र २ १र र २ २ १र र २ १र ९ २
पृथिव्योवा । पृथिव्योवाहाइ । पृथिव्योवाहाइ । पृथिव्योवा३हाउ । वा ।

१ २र र १र २ १ २र १र २ १ २१र२ १र२ २ १र २र १र र
इहस्ववैंश्वानरायप्रदिशोज्योतिर्बृहत् । सहस्तेजआपः । आपः । आपः । आपोवा ।

२र १र र २र १र र २र १र र २ २ र१र र २ र १र ९ २
आपोवा । आपोवा । आपोवाहाइ । आपोवाहाइ । आपोवा३हाउ । वा ।

१ २र र १र २ १ २र १र २ १ २ र र र
इहस्ववैंश्वानरायप्रदिशोज्योतिर्बृहत् । नतत्तेअग्नेप्रमृषेनिवर्तनाम् । तनाम् । तनाम् ।

२ १र र २ १र र २ १र र २ १र र २ १र र २ १र ९ २ १ २र
तनोवा । तनोवा । तनोवा । तनोवाहाइ । तनोवाहाइ । तनोवा३हाउ । वा । इहस्ववैं-

र १र २ १ २र १र १र र र र र र २र १र र
श्वानरायप्रदिशोज्योतिर्बृहत् । उषादिशोज्योतिः । ज्योतिः । ज्योतिः । ज्योतोवा ।

२र १र र २र १र र २र १र र २ २र १र र २ र १र ९ २
ज्योतोवा । ज्योतोवा । ज्योतोवाहाइ । ज्योतोवाहाइ । ज्योतोवा३हाउ । वा ।

१ १२२१२ २१२२ १२ २१ २२२ २ १२ २
इहस्ववैश्वानरायप्रदिशोज्योतिर्बृहत् । यद्दूरेसन्निहाभुवाः । भुवाः । भुवाः । भुवोवा ।
२१२ २ २१२ २ २ १२२२ २ १२२२ १२९ २ १ २२ २
भुवोवा । भुवोवा । भुवोवाहाइ । भुवोवाहाइ । भुवोवा३हाउ । वा । इहस्ववैश्वा-
१२ २ १ २२ १२ २१ १ २ २ २२ १ २२ १
नरायप्रदिशोज्योतिर्बृहत् । ओ३१म् । ओ३१म् । ओ३१म् । आयूः । आयूः ।
२२ १ २२ १ २२ १ २२ १ २२ १२ २ २२ १२ २ २२ १२ २
आयूः । ज्योतीः । ज्योतीः । ज्योतीः । ज्योतोवा । ज्योतोवा । ज्योतोवा ।
२२ १२ २ २ २२ १२ २ १ २ १२ ९ २ १२ २२
ज्योतोवाहाइ । ज्योतोवाहाइ । ज्योतोआ३हाउ । वा । घर्मोमरुद्भिर्भुवनेषुचक्रदत् ।
१ १ १ १
इट्इडा२३४५ ॥ [ आरण्य ६.१.४ ]

## इन्द्रस्य सधस्थम्

स्तोभपदपाठः [ २.१० ]—

अदिद्युतत् । विश्वम् । भूतम् । सहः । बृहत् । अदिद्युतत् । अभ्राट् । प्र । अभ्राट । अदिद्युतत् । घर्मः । अरूरुचत् । अदिद्युतत् । घर्मः । उषसः । अरोचयः ॥

२२ २ २ १ २ २२ १ २ २२ १ २ २२ २ १२ २ २२ १२ २ २२
हाउहाउहाउ । सहोभ्राज । सहोभ्राज । सहोभ्राजा । पोभ्राजा । पोभ्राजा ।
१२ २ १ १ २ २२ १ २ २२ १ २ २२ १ २२ २ १ २२ २
पोभ्राज । अभ्राजीत् । अभ्राजीत् । अभ्राजीत् । व्यभ्राजीत् । व्यभ्राजीत् ।
१ २२ २ १ २ १ २ १ २ १ २
व्यभ्राजीत् । अदिद्युतत् । अदिद्युतत् । अदिद्युतत् । अदिद्युतद्विश्वम्भूत६
२ - १ २ - १ २ १
सहोबृ२हात् । अदिद्युतदभ्राट्प्रा२भ्राट् । अदिद्युतद्धर्मोअरू२चात् । अदिद्युतद्धर्म्म-
२ २ - १ २२ २ २ १ २ २२ १ २ २२ १ २ २२ २
उषसोअरोचा२याः । हाउहाउहाउ । सहोभ्राज । सहोभ्राज । सहोभ्राजा ।
१२ २ २२ १२ २ २२ १२ २ १ १ २ २२ १ २ २२ १ २ २२ १ २२ २
पोभ्राजा । पोभ्राजा । पोभ्राज । अभ्राजीत् । अभ्राजीत् । अभ्राजीत् । व्यभ्राजीत् ।
१ २२ २ १ २२ २ १ २ १ २ १ २ २
व्यभ्राजीत् । व्यभ्राजीत् । अदिद्युतत् । अदिद्युतत् । अदिद्युता३त् । हाउवा ।
२ १ २ १२ २२ १ २ २ १ २ २२ १ २२ ३ १ १ १
ए । अदिद्युतद्धर्मोअरूरुचदुषसान्दिविसूर्योविभाती २३४५ ॥ [ आरण्य ६.२.५ ]

## पश्चानुगानम्

साकौसं [ आरण्य २.७ ]—

यज्जायथा अपूर्व्य मघवन् वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥

१र र १र र १र र २ १ २ १ २ १
हाउहोहाइ । हाउहोहाइ । हाउहोहाइ । अन्तरिक्षꣳसुवर्द्दिवञ्जग । न्मा ।
२ १ २ १ २ १ २ १ २ १ २ १ २ २ २
अन्तरिक्षꣳसुवर्द्दिवञ्जग । न्मा । अन्तरिक्षꣳसुवर्द्दिवञ्जग । न्मा । परात्परमैरय ।
१ र र २ १ र र १ १र ३र २ र
ता । परात्परमैरय । ता । परात्परमैरय । त । औहोवाहाउ । वा । ए ।
१र २ १र२र१रर २ १र २र १र र
यज्ञोदिवोमूर्द्धादेवमादनोघर्मोज्योतिः ॥ १

१र र १र र १र र २ १ २ १ २ १
हाउहोहाइ । हाउहोहाइ । हाउहोहाइ । अन्तरिक्षꣳसुवर्द्दिवञ्जग । न्मा ।
२ १ २ १ २ १ २ १ २ १ २ १ र र२
अन्तरिक्षꣳसुवर्द्दिवञ्जग । न्मा । अन्तरिक्षꣳसुवर्द्दिवञ्जग । न्मा । परापत्परमैरय ।
१ र र २ १ र र२ १र ३र २ र
ता । परात्परमैरय । ता । परात्परमैरय । त । औहोवाहाउ । वा । ए ।
१ २ १रर २ १र २ १रर२१रर२र र १र र
पृथिव्यन्तरिक्षन्द्यौरापःक्रनिक्रदातिसन्धुरापोमरुतोमादयन्ताङ्घर्मोज्योतिः ॥ २

१र र १र र १र र २ १ २ १ २ १
हाउहोहाइ । हाउहोहाइ । हाउहोहाइ । अन्तरिक्षꣳसुवर्द्दिवञ्जग । न्मा ।
२ १ २ १ २ १ २ १ २ १ २ १र र २ १ र
अन्तरिक्षꣳसुवर्द्दिवञ्जग । न्मा । अन्तरिक्षꣳसुर्द्दिवञ्जग । न्मा । परात्परमैरय । ता । परात्प-
र २ २ र र २ १ १रर र र२ १२ ५
रमैरय । ता । परात्परमैरय । ता । दिवोमूर्द्धानꣳसमैरयन् । होये३ । हो२३४वा ।
१र२ १र र र२ १२ ५ १रर २ १र र
यशोघर्म्मोज्योतिः । यशःसमैरयन् । होये३ । हो२३४वा । तेजोघर्म्मोज्योतिः ।
र र२ १२ ५ १ र १र र र२ १२
तेजःसमैरयन् । होये३ । हो२३४वा । सुवर्घर्म्मोज्योतिः । सुवःसमैरयन् । होये३ ।
५ १र २ १र र र२ १२
हो२३४वा । ज्योतिर्घर्म्मोज्योतिः । ज्योतिःसमैरयन् । होये३ । हो२३४५वा६५६ ।
२ १र २ १र र
घर्म्मोघर्म्मोज्योतिः ॥ ३

१र र १र र १र र २ १ २ १ २ १
हाउहोहाइ। हाउहोहाइ। हाउहोहाइ। अन्तरिक्षᳬसुवर्द्दिवञ्जग। न्मा।
२ १ २ १ २ १ २ १ २ १ २ १ र र२
अन्तरिक्षᳬसुवर्द्दिवञ्जग। न्मा। अन्तरिक्षᳬसुवर्द्दिवञ्जग। न्मा। परात्परमैरय।
१ र र२ १ र र२ १र ३र२ र
ता। परात्परमैरय। ता। परात्परमैरय। त। औहोवाहाउ। वा। ए।
१र२ १ २ र १२१रर२ र १र २ १र २ र
इडांयच्छहस्कृतिंयच्छ। ए। मनओजोयच्छ। ए। मनोमहिमानंयच्छ। ए।
१ २ र २१र र२ र २१र २ र १२१
यशःस्त्विषिंयच्छ। ए। प्रजांवर्च्चोयच्छ। ए। पशून्विशंयच्छ। ए। ब्रह्मक्षत्रं-
२ र १ र २
यच्छ। ए। स्वर्ज्योतिर्यच्छ॥ ४

१र र १र र १र र २ १ २ १ २ १
हाउहोहाइ। हाउहोहाइ। हाउहोहाइ। अन्तरिक्षᳬसुवर्द्दिवञ्जग। न्मा।
२ १ २ १ २ १ २ १ २ १ २ १ र र२
अन्तरिक्षᳬसुवर्द्दिवञ्जग। न्मा। अस्तरिक्षᳬसुवर्द्दिवञ्जग। न्मा। परात्परमैरय।
१ र र२ १ र र२ १ २ र र र१२
ता। परात्परमैरय। ता। परात्परमैरय। ता। यज्जायथाअपूर्वीया।
१ २ र र १ २ र र १ २
मघवन्वृत्रहत्याया। तत्पृथिवीमप्राथायाः। तदस्तभ्नाउतोदाइवाम्।
१र र १र र १र र २ १ २ १ २ १
हाउहोहाइ। हाउहोहाइ। हाउहोहाइ। अन्तरिक्षᳬसुवर्द्दिवञ्जग। न्मा।
२ १ २ १ २ १ २ १ २ १ २ १ र र १
अन्तरिक्षᳬसुवर्द्दिवञ्जग। न्मा। अन्तरिक्षᳬसुवर्द्दिवञ्जग। न्मा। परात्परमैरय।
१ र र२ १ र र २ १र ३र२ र १र र२१
ता। परात्परमैरय। ता। परात्परमैरय। त। औहोवाहाउ। वा। ए। तेजोघर्मः-
र२र १ २ र र१र२र१र २ र १ १ १ २र १ १ १ १
सङ्क्रीडन्तेशिशुमतीर्वायुर्गोपास्तेजस्वतीर्म्मरुद्भिर्भुवनानिचक्रदुः। इट्इडा२३४५
३ १ १ १
ई२३४५॥ ५ [आरण्य ३.२.१५-१९]

## द्व्यनुगानम्

१र र १र र १र र र र २ १ र र २ १
हाउहोवा। हाउहोवा। हाउहोवा। परात्परमैरय। ता। परात्परमैरय। ता।
र र २ १र ३र २ १ र २र १ १ र २र १ १ र २र १
परात्परमैरय। त। औहोवाहाउ। वा। इन्द्रोधेनुः। इन्द्रोधेनुः। इन्द्रोधेनुः।
र र २र १ र र २र १ र र २र १ र २र १ र २र १ र २र १
आपोधेनुः। आपोधेनुः। आपोधेनुः। भूमिर्धेनुः। भूमिर्धेनुः। भूमिर्धेनुः।
२ १ २ र १ २ १ २ र १ २ १ २ र १ र १र १ र २र १ र १र १
अन्तरिक्षन्धेनु। अन्तरिक्षन्धेनु। अन्तरिक्षन्धेनु। द्यौर्धेनुः। द्यौर्धेनुः। द्यौर्धेनुः।
२र १ २र १ २र १ २ १२र १ २ १२र १ २ १२र १ २ १र१ २ १२र १
परन्धेनु। परन्धेनु। परन्धेनु। व्रतन्धेनु। व्रतन्धेनु। व्रतन्धेनु। सत्यन्धेनु। सत्यन्धेनु।
२ १२र १ २र १ १र १ २र १ र २र १ र २र १ र १र १
सत्यन्धेनु। ऋतन्धेनु। ऋतन्धेनु। ऋतन्धेनु। इडाधेनुः। इडाधेनुः। इडाधेनुः।
२र १ २र १ १र १ १र २र १ १र २र १ १र १र १
स्वर्धेनुः। स्वर्धेनुः। स्वर्धेनुः। ज्योतिर्धेनुः। ज्योतिर्धेनुः। ज्योतिर्धेनुः॥१॥

१र र १र र १र र र र २ १ र र २ १
हाउहोवा। हाउहोवा। हाउहोवा। परात्परमैरय। ता। परात्परमैरय। ता।
र र २ १ २ १र १र २ १र २ १र २ १ २ ३ ५
परात्परमैरय। ता। यज्जायथाः। अपूर्विया। अपूर्विया३। आपूर्वा२३४या।
१ २ १ र २ १ र २ १ २ ३ ५ १ २ १र २
मघवन्वृ। त्रहत्याया। त्रहत्याया३। त्राहत्या२३४या। तत्पृथिवीम्। अप्राथयाः।
१ २ १ २ ३ ५ १ २ र २१र २
अप्राथया३ः। आप्राथा२३४याः। तदस्तभ्नाः। उतोदिवाम्।
१र २ १ २ ३ ५ १र र १र र १र र
उतोदिवा३म्। ऊतोदा२३४इवाम्। हाउहोवा। हाउहोवा। हाउहोवा।
र र २ १ र र २ १ र र १ १र ३र २
परात्परमैरय। ता। परात्परमैरय। ता। परात्परमैरय। त। औहोवाहाउ। वा।
१ १र र २ १ २ २ र र १ र १र १र र र १ २ १ २र
ए।– तेजोगर्भःसह्वक्रीडन्तेवायुनोपास्तेअस्वतीमरुद्भिर्भुवनानिचक्रदुः॥२ [ आरण्य ६.२.२०–२१ ]

## चतुरनुगानम्

हा२ऊवाक् । हा२ऊवाक् । हा२ऊवाक् । होवा । होवा । होवा३ । हाउवा । ए । तोकम्प्रजाङ्गर्भोनोयमद्ध्वह्याचपराचपथिभिश्चरन्त २३४५: ॥ १

हा२ऊवाक् । हा२ऊवाक् । हा२ऊवाक् । होवा । होवा । होवा । अयꣳसशिङ्क्ते३ । होइ । यस्माद्यावापृथिवीभुवनानिचक्रदुः । होइ । अयꣳसशिङ्क्ते३ । होइ । यस्मादापओषधयोभुवनानिचक्रदुः । होइ । अयꣳसशिङ्क्ते३ । होइ । यस्मात्समुद्रियाभुवनानिचक्रदुः । होइ । अयꣳसशिङ्क्ते३ । होइ । यस्माद्विश्वाभूताभुवनानिचक्रदुः । होइ । हा२ऊवाक् । हा२ऊवाक् । हा२ऊवाक् । होवा । होवा । होवा३ । हाउवा । ए । आपः । आपः । आपा२३४५: ॥ २

हा२ऊवाक् । हा२ऊवाक् । हा२ऊवाक् । होवा । होवा । होवा । येभिर्विया । श्वमैराया२: । तेभिर्विया । स्नुहीमादा२म् । येभिर्भूताम् । सहस्साहा२: । तेभिस्तेजआपः । आपा२ । येभिर्व्यन्तरिक्षमै रया३: । हाउवा । ए । आपः । आपः । आपा२३४५: ॥ ३

हा२ऊवाक् । हा२ऊवाक् । हा२ऊवाक् । होवा । होवा । होवा । यज्जायथाअपूहो२ । र्वाया२ । मघवन्वृत्रहाहो२ । स्याया२ । तत्पृथिवीमप्राहो२ ।

१ – १ र – १ – –१ –१
थाया२ः। तदस्तभ्नाउतोहो२इ। दाइवा२म्। हा२ऊवाक्। हा२ऊवाक्।
–१ १ २ १ २ १ २ २ र १र२२१ र२ र
हा२ऊवाक्। होवा। होवा। होवा३। हाउवा। ए। तेजोघर्मःसङ्क्रीडन्ते-
१ २ र२१ र२र१र २ र १ २ १ २र ३ १११
शिशुमतीर्वायुगोपास्तेजस्वतीमरुद्भिर्भुवनानिचक्रदू२३४५ः॥४[आरण्य ३.२.२२–२५]

## घर्मस्य रोचनम् इन्द्रस्य रोचनं वा[1]

स्तोभपदपाठः [ २.१० ]—

उद्यन्। उत्। यन्। लोकान्। अरोचयः। इमान्। लोकान्। अरोचयः।
प्रजाः। प्र। जाः। भूतम्। अरोचयः। विश्वम्। भूतम्। अरोचयः॥

२ १ र र २र १ २१र र र २र १ २ १रर २र
उद्यँल्लोकानरोचयः। होइ। इमाँल्लोकानरोचयः। होइ। प्रजाभूतमरोचयः।
१ १ २र१ २र १ ३ ५रर २१र र ३ १११
होइ। विश्वम्भूतमरोचयः। हो२। हा२३४औहोवा। घर्मोज्योती२३४५ः॥
[ आरण्य ६.२. १० ]

## राजनम्[2]

साकौसं [ १.४.१.३.६ ]—

इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः।
शूरो नृषाता श्रवसश्च काम आ गोमति व्रजे भजा त्वं नः॥

१ ३र २र ३र २र ३र २र ३र २र
हुम्। हुम्। हुम्। हो। हो। हो। हुँ। हुँ। हुँ। ओहा। ओहा। ओहा। औहोइ।
३र २र ३र २र २ १ २ १ २र३४ ५ २ १ २ १
औहोइ। औहोइ। इन्द्रन्नरो। ने३मधि। ताहवन्ताइ। इन्द्रन्नरो। ने३मधि।
र३४ ५ २ १ २ १ र३४ ५ १ र२१ १र२१
ताहवन्ताइ। इन्द्रन्नरो। ने३मधि। ताहवन्ताइ। वयोबृहत्। वयोबृहत्।
१ र२१ १ र २र१ २र १ र२र१ २र १ र२र१ २र २१र
वयोबृहत्। विभ्राष्टयेविधर्मणे। विभ्राष्टयेविधर्मणे। विभ्राष्टयेविधर्मणे। यत्पारियाः।

१ 'रुचितो घर्मः' इत्युक्ते प्रस्तोतृसाम।
२. दक्षिणरौहिणपुरोडाशहोमकाले प्रस्तोतृसाम।

२ १ २ ३ ४ ५ २ १र २ १ २ ३ ४ ५ २ १र
युनज । ताइधियस्ताः । यत्पारियाः । युनज । ताइधियस्ताः । यत्पारियाः ।

२ १ २ ३ ४ ५ २ १ र २ १ र २ १ र १
युनज । ताइधियस्ताः । सत्यमोजः । सत्यमोजः । सत्यमोजः । रजःसुवः ।

१ १ २र१र २ १ २ ३ ४र ५ २र १र २ १
रजःसुवः । रजःसुवः । शूरोनृषा । ता३श्रव । सश्वकामाइ । शूरोनृषा । ता३श्रव ।

२ ३ ४र ५ २र१र २ १ २ ३ ४र ५ २ १ र २ १ र
सश्वकामाइ । शूरोनृषा । ता३श्रव । सश्वकामाइ । भद्र्ँसुधा । भद्र्ँसुधा ।

२ १ र १र १ र १ र २र१र २१र २र ३ ४ ५
भद्र्ँसुधे । षमूर्जम् । इषमूर्जम् । इषमूर्जम् । आगोमताइ । व्रजेभ । जातुवन्नाः ।

२र १र २ १र २र ३ ४ ५ २र १र २ १र २र ३ ४ ५
आगोमताइ । व्रजेभ । जातुवन्नाः । आगोमताइ । व्रजेभ । जातुवन्नाः ।

२ १ २ १ २ १ २ १ २ १ २ १ २ १ २ १ २
बृहद्यशः । बृहद्यशः । बृहद्यशः । दिविदधे३हस् । दिविदधे३हस् । दिविदधे३ ।

२ १र र र र र र२ ३ १ १ १
हाउवा । वागीडासुवोबृहद्भा२३४५ः ॥ [आरण्य ४.२.१९]

## ऋतुसाम[1]

साजैसं [१.३३.९]—

ब्रह्म जज्ञानं प्रथमं पुरस्ताद् वि सीमतः सुरुचो वेन आवत् ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥

ब्रह्माब्राह्मा । जज्ञानम्प्राथामम्पुरास्तात् । विसायिवायिसी । मतस्सु-
टि त चिच तिकु भ्या ट्या तता

रूचोऽनआवात् । साबूसाबू । ध्न्याउपमाअस्यवायिष्ठाः । सातस्साताः ।
कूसा थ भ्या श टि त चि कु श क भि भा ट्य त

चयोनिमासाताश्चवायिवाः । ओयिळा ॥ [ग्राम २.३.१.१७]
च्यचु किक पीण प्य

१. अध्वर्युप्रेषितो ब्रह्मणानुज्ञातः प्रस्तोता ऋतुसाम गायेत् । द्रष्टव्यं कौग्राम ८.२.१५

## शार्ङ्गम्[१]

साजैसं [ १.५७.११ ] ≡ साकौसं [ १.६.२.२.११ ]

अञ्जतायिञ्यञ्जतायिसमञ्जातायि । क्रतुं६ रिहान्तीमध्वाभ्यञ्जतायि ।
ककी कि त्य क टय श क्यका किल्या कि टय श

सिन्धोरुच्छ्वासेप त यान्तामुक्षाणाम् । हिरण्यपावाःपशुमाप्सुगृभ्णता बु । वा ॥
कि की टया क्यका किका कीकि चिचाश तख

[ ग्राम ३.९.३१ ]

## शुक्रम्[२]

साजैसं [ १.४५.१ ]—

अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि । युधेदापित्वमिच्छसे ॥

हाबुहाबुहाबु । शुक्र६ शुक्र६ शुक्रम् । अंभ्रातृव्योअनातुवाम् । अनापि-
त टू च्य

रिन्द्रजनुषासनादासायि । युधेदापित्वमायिच्छासायि । हाबुहाबुहाबु । शुक्र६ शुक्र६-
टू च्य टू चि श कू श कू श कू श च्य च्य

शुक्राऔहोवा । एशुक्रमेशुक्रमेशुक्रम् ॥ [ आरण्य ३.६.९ ]
रच्य शि तच चि चि च्य

## चन्द्रम्[३]

हाबुहाबुहाबु । चन्द्रश्चन्द्रश्चन्द्रम् । हाबुहाबुहावुवा । अभ्रातृव्योअनात्व-
कू क्य क्य क्य च तृ क्यच च्य च्य

मनापिरिन्द्रजनुषासनादसि । युधेदापित्वमिच्छसे । हाबुहाबुहाबु । चन्द्रश्चन्द्र-
शू चि च्य श्य च्य श्य कीख कू क्य क्य

श्चन्द्रम् । हाबुहाबुहावुवा । एचन्द्रमेचन्द्रमेचन्द्रम् ॥ [ आरण्य ३.६.१० ]
क्य च तृ तचक

## घर्मतनू[४]

साजैसं [ १.५३.४ ] ≡ साकौसं [ १.६.१.३.४ ]

---

१. प्रथमदिने महावीरेऽज्यमाने प्रस्तोतृसाम । द्रष्टव्यं कौग्राम १६.२.३१

२. रजतरुक्म उपधीयमाने प्रस्तोतृसाम ।

३. हिरण्यरुक्म उपधीयमाने प्रस्तोतृसाम ।

४. प्रज्वलनकाले प्रस्तोतृसामनी ।

हाबुहाबुहाबुप्रसोम दे॑ववायितायायि । हाबुहाबुहाबुसिन्धुर्नापिप्येआर्णासा ।
चृ किच क्य य्य ट श चू क्य च य ट

हाबुहाबुहाबुवर्ँशोःपयसामदि॑रो॑नजागृवीः । हाबुहाबुहाबुवच्छाकोशम्मधुश्चूताम् ।
कू कच क्य य ट कृ थ्यच क्थ य ट

हाबुहाबुहाबुवा । घर्मःप्रवृक्तस्तन्वासमानृधेवृधेसुवाः ॥
तृ कृ कू न्य

औहोवाऔहोवाऔहोवा इ॒याइ॒याइ॒या आयिहिआयिहिआयिहि । प्रसोम-
टि टि टय टय टयश कि कि कि क्य

देववायितायायि । सिन्धुर्नपि॑प्येआर्णासा । अर्ँशोःपयसामदिरोनजागृर्वीःअच्छाकोश-
टी ख्य ण श चि ख्य च य ट कृ टय ख ण क्य थ्यच

म्मधुश्चूताम् । औहोवाऔहोवाऔहोवा इ॒याइ॒याइ॒या आयिहि आयिहि आयिहीया
क्य य ट टि टि टय टय टयश टि टि टि ख

औहोवा । एघर्मःप्रवृक्तस्तन्वासमावृधेम हेसुवाः ॥ [ आरण्य ३.२.३–४ ]
शि तच कृ कृच क्य न्य

## घर्मव्रते[1]

साजैसं [ २.४.६ ]—

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावापृथिवी अन्तरिक्षँ सूर्य आत्मा जगतस्तस्थुषश्च ॥

हाबुहाबुहाबु । सहोराजासहोराजासहोराजा । अपोराजाअपोराजाअपोराजा ।
कू श कू श कू श च्य च्य च्य च्य च्य च्य श कि श कि श कि

अराजीदराजीदराजीत् । अदिद्युतददिद्युतददिद्युतत् । चित्रन्देवानामुदगादनीकम् ।
कि कि कि की की की ट च

चक्षुर्मित्रस्यवरुणस्याग्नायिः । आप्राद्यावापृथिवीअन्तरिक्षम् । सूर्यआत्माजगतस्त-
ट च श टा च

स्थुषाश्चा । हाबुहाबुहाबु । सहोराजासहोराजासहोराजा । अपोराजाअपोराजा-
टा च कू श कू श कू श च्य च्य च्य च्य च्य च्य श कि श कि

अपोराजा । अराजीदराजीदराजीत् । अदिद्युतददिद्युतत् । अदायिद्युतावुवा ।
श कि कि कि कि की की ट श कि

एअदिद्युतद्घर्मोअदिद्युतदुपसान्दिविसूर्योविभाती ॥
तच ऊ कू कु ख

1. प्रज्वलनकाल इमे अपि प्रस्तोतृसामनी ।

हाबुहाबुहावु । आभीजितावाभीजितावाभीजितौ । स्वर्गलोकौस्वर्गलोकौ-
कि थ्य ची ची ची चि चि

स्वर्गलोकौ । सहोराजीत्सहोराजीत्सहोराजीत् । अपोराजीदपोराजीदपोराजीत् ।
चि चिश चिश चिश

व्यराजीद्व्यराजीद्व्यराजीत् । व्यदिद्युतद्व्यदिद्युतद्व्यदिद्युतत् । चित्रन्देवाना-
कि कि कि की की की कि

मुदगादनीकञ्चक्षुर्मित्रस्यवरुणस्याग्नेः । आप्राद्यावापृथिवीअन्तरिक्षꣳसूर्यआत्मा-
ऊच क की की क्य क्य कि की की

जगतास्तस्थुषश्चा । हाबुहाबुहावु । आभीजितावाभीजितावाभीजितौ । स्वर्गलोकौ-
कि की कि थ्य ची ची ची चि

स्वर्गलोकौस्वर्गलोकौ । सहोराजीत्सहोराजीत्सहोराजीत् । अपोराजीदपोराजी-
चि चि चिश चिश चिश

दपोराजीत् । व्यराजीद्व्यराजीद्व्यराजीत् । व्यदिद्युतद्व्यदिद्युतत् । व्यदायिद्युता-
कि कि की की की टथ कि

वुवा । एꣳव्यदिद्युतद्धर्मोꣳव्यदिद्युतदुषसान्दिविसूर्योविभाती ॥ [आरण्य १.९.१६-१७]
टथ तच कू कृ कुख

## घर्मलिङ्गानि सामानि[1]

## वायोर्नवानुगानम्

साजैसं [ २.६.१ ]—

यज्जायथा अपूर्व्य मघवन् वृत्रहथाय ।
तत् पृथिवीमप्रथयस्तदस्तभ्ना उत दिवम् ॥

हाबुहोहायिहाबुहोहायिहाबुहोहायि । अन्तरिक्षात्स्वर्दिवञ्जगन्मान्तरिक्षा-
टि टि टुचश क कि कू कि

त्स्वर्दिवञ्जगन्मान्तरिक्षात्स्वर्दिवञ्जगन्म । परात्परमैरयन्तपरात्परमैरयन्तपरात्पर-
क कि कि चि शृ चि शृ चि

मैरयन्त । औहोवाहावुवा । एꣳयज्ञोदिवोमूर्धादेवमादनोघर्मोज्योतीः ॥ १
शृ क टथ ति तच च्य च्य कि कीचक टथख

हाबुहोहायिहाबुहोहायिहाबुहोहायि । अन्तरिक्षात्स्वर्दिवञ्जगन्मान्तरिक्षा-
टि टि टुचश क कि कू कि

---

१. घर्मव्रतयोर्गानानन्तरमवसरे प्राप्ते घर्मलिङ्गानि सामानि प्रस्तोता सकृद् गायेत् । तानि इत्थम् — वायोर्नवानुगानम् इन्द्रस्य द्व्यनुगानं मृत्योश्चतुरनुगानं वैश्वानरव्रतं चेति ।

त्स्वर्दिवञ्जगन्मान्तरिक्षात्स्वर्दिवञ्जगन्म । परात्परमैरयन्तपरात्परमैरयन्तपरात्पर-
कू कि कि चि शृ चि शृ चि

मैरयन्त । औहोवाहावुवा । एपृथिव्यन्तरिक्षन्द्यौरापाःकनिक्रदात्सिन्धुरापोमरुतो-
शृ क टय ति तच वय की कि की की

मादयन्ताङ्घर्मोज्योतीः ॥ २
कृच क टय ख

हाबुहोहायिहाबुहोहायिहाबुहोहायि । अन्तरिक्षात्स्वर्दिवञ्जगन्मान्तरिक्षा-
टि टि टुच श क कि कू कि

त्स्वर्दिवञ्जगन्मान्तरिक्षात्स्वर्दिवञ्जगन्म । परात्परमैरयन्तपरात्परमैरयन्तपरात्पर-
कू कि कि चि शृ चि शृ चि

मैरयन्त । औहोवाहावुवा । दिवोमूर्धानꣳ समैरयद्धोयेहोवा । यशोघर्मोज्योतीः ॥ ३
शृ क टय ति की कीखण क थ्य ट टय ख

यशस्समैरयद्धोयेहोवा । तेजोघर्मोज्योतीः ॥ ४
की कीखण क थ्य टय ख

तेजस्समैरयद्धोयेहोवा । सुवर्घर्मोज्योतीः ॥ ५
की कीखण क थ्य टय ख

सुवस्समैरयद्धोयेहोवा । ज्योतिर्घर्मोज्योतीः ॥ ६
की कीखण क थ्य टय ख

ज्योतिस्समैरयद्धोयेहोवा । घर्मोघर्मोज्योतीः ॥ ७
की कीखण क थ्य टय ख

हाबुहोहायिहाबुहोहायिहाबुहोहायि । अन्तरिक्षात्स्वर्दिवञ्जगन्मान्तरिक्षा-
टि टि टुच श क कि कू कि

त्स्वर्दिवञ्जगन्मान्तरिक्षात्स्वर्दिवञ्जगन्म । परात्परमैरयन्तपरात्परमैरयन्तपरात्पर-
कू कि कि चि शृ चि शृ चि

मैरयन्त । औहोवाहावुवा । एइळांयच्छाहस्तुतियच्छ । एमनोमहिमानंयच्छ ।
शृ क टय ति तच की कु तच क्य तकु

एत्विषीमोजोयच्छ । एआयुःप्राणंयच्छ । एचक्षुश्श्रोत्रंयच्छ । एप्रजांवर्चोयच्छ ।
तच क्य की तच कि कि तच कि कि तच च्य श्य

एपशून्विशंयच्छ । एब्रह्माक्षत्रंयच्छ । एस्वर्ज्योतिर्यच्छ ॥ ८
तच च्य च्य श्य तच च्य च्य श्य तच नु

हाबुहोऽायिहाबुहोहायिहाबुहोहायि । अन्तरिक्षात्स्वर्दिवञ्जगन्मान्तरिक्षा-
टि टि ट्ठु च श क कि कू कि

त्स्वर्दिवञ्जगन्मान्तरिक्षात्स्वर्दिवञ्जगन्म । परात्परमैरयन्तपरात्परमैरयन्तपरात्पर-
कू किं कि चि शृ चि शृ चि

मैरयन्त । औहोवाहाबुवा । यज्जायथाअपूर्वायामघवन्वृत्रहाथाया । तत्पृथिवीम-
शृ क टय ति ट्टू च श ट्टू च श

प्राथायाः । तदस्तभ्नाउतादायिवम् । हाबुहोहायिहाबुहोहायिहाबुहोहायि ।
टू च श ट्टू च श टि टि ट्ठु च श

अन्तरिक्षात्स्वर्दिवञ्जगन्मान्तरिक्षात्स्वर्दिवञ्जगन्मान्तरिक्षात्स्वर्दिवञ्जगन्म । परा-
क कि कू कि कू कि कि चि

त्परमैरयन्तपरात्परमैरयन्तपरात्परमैरयन्त । औहोवाहाबुवा । एतेजोधर्मस्सङ्क्रीळन्ते
शृ चि शृ चि शृ क टय ति तच कृ तृ

शिशुमतीर्वायुगोपास्तेजस्वतीर्मरुद्धीर्भुवनानिचक्रदुः । इट्इळा ॥ ९ [आरण्य ४.१.१०]
कृ की की कृ

## इन्द्रस्य द्व्यनुगानम्

हाबुहोहाहाबुहोहाहाबुहोहा । परात्परमैरयन्तपरात्परमैरयन्तपरात्परमैरयन्त ।
टि टी च टि कृ कृ च शृ

औहोवाहाबुवा । एइन्द्रोधेनुरिन्द्रोधेनुरिन्द्रोधेनुः । आपोधेनुरापोधेनुरापोधेनुः ।
क टय ति तच क्यक कि च कि च कि च कि च कि च

द्यौर्धेनुर्द्यौर्धेनुर्द्यौर्धेनुः । अन्तरिक्षन्धेनुरन्तरिक्षन्धेनुरन्तरिक्षन्धेनुः । भूमिर्धेनुर्भूमिर्धेनु-
क्य क्य क्य कृ च कृ च कृ च क्य क्य

र्भूमिर्धेनुः । स्वरन्धेनुस्स्वरन्धेनुस्स्वरन्धेनुः । व्रतन्धेनुर्व्रतन्धेनुर्व्रतन्धेनुः । ऋतन्धेनु-
क्य कि च कि च कि च कि च कि च कि च

र्ऋतन्धेनुर्ऋतन्धेनुः । सत्यन्धेनुस्सत्यन्धेनुस्सत्यन्धेनुः । अर्कोधेनुरर्कोधेनुरर्कोधेनुः ।
क च क च क च कि च कि च कि च

इळाधेनुरिळाधेनुरिळाधेनुः । स्वर्धेनुस्स्वर्धेनुस्स्वर्धेनुः । ज्योतिर्धेनुर्ज्योतिर्धेनुर्ज्योतिर्धेनुः ।
कि च कि च कि च कि च कि च कि च क्य च्य क्य च्य क्य च्य

धेनुर्धेनुर्धेनूः ॥ १
क्यच क्यच क्यच श

हाबुहोहाहाबुहोहाहाबुहोहा । परात्परमैरयन्तपरात्परमैरयन्तपरात्परमैरयन्त ।
टि टीच टि कृ कृच शृ
औहोत्राहावुवा । यज्जायथाअपूर्होवाया । मघवन्नृत्रहाहोथाया । ततृपृथिवीम-
क टय ति टृच टृचश
प्राहोथायाः । तदस्तभ्नाउताहोदायिवम् । हाबुहोहाहाबुहोहाहाबुहोहा । परात्परमै-
टृचश टृच श्य टि टीच टि
रयन्तपरात्परमैरयन्तपरात्परमैरयन्त । औहोत्राहावुवा । एतेजोधर्मस्सङ्क्री-
कृ कृच शृ क टय ति चत कि
ळन्तेवायुगोपास्तेजस्वतीर्मरुद्भीर्भुवनानिचक्रदुः । इट्इळा ॥ २ [आरण्य ४.१.११]
कृच कि की क कृ नि

## मृत्योश्चतुरनुगानम्

होवावूहोवावूहोवावू । होवाहोवाहोवाहावुवा । एआपापापाः । होवावू
चककचककचक कचय टय चत किख चकक
होवावूहोवावू । होवाहोवाहोवाहावुवा । एआपापापाः । होवावूहोवावूहोवावूः ।
चककचक कचय टय चत किख चककचककचक
होवाहोवाहोवाहावुवा । एआपापापाः । होवाहोवाहोवा । एतोकम्प्रजाङ्गर्भोनो-
कचय टय चत किख चशचशचश तच
यमदादद्याचापराचापथिभिश्चरन्ताम् ॥ १
कु की कि कि क्य किख

होवावूहोवावूहोवावू । होवाहोवाहोवाहावुवा । एआपापापाः । होवावू
चककचककचक कचय टय चत किख चकक
होवावूहोवावू । होवाहोवाहोवाहावुवा । ए॑आपापापाः । होवावूहोवावूहोवावू ।
चककचक कचय टय चत किख चककचककचक
होवाहोवाहोवाहावुवा । एआपापापाः । होवाहोवाहोवा । येभिर्व्योश्चमैरयाः ।
कचय टय चत किख चशचशचश च्य टय
तेभिर्व्योश्नुहीमदाम् । येभिर्भूतर्ँसहस्साहाः । तेभिस्तेजोअपोआपाः । होवावू
ति च्य टय ती चि ट ती च्य टय चकक
होवावूहोवावू । होवाहोवाहोवाहावुवा । एआपापापाः । होवावूहोवावूहोवावू ।
चककचक कचय टय चत किख चककचककचक
होवाहोवाहोवाहावुवा । एआपापापाः । होवावूहोवावूहोवावू । होवाहोवाहोवा-
कचय टय चत किख चककचककचक कच
हावुवा । एआपापापाः । होवाहोवाहोवा । येभिर्व्यन्तरिक्षमैरयाः ॥ २
य टय चत किख चशचशचश ति की टय

होवाव्रूहोवाव्रूहोवावू । होवाहोवाहोवाऽऽवुवा । एआपापापाः । होवावू-
च क क च क क च क कच य टय चत किख चकक
होवावूहोवावू । होवाहोवाहोवाऽऽवुवा । एआपापापाः । होवावूहोवावूहोवावू ।
च क क च क कच य टय चत किख च क क च क क च क
होवाहोवाहोवाहाव्रुवा । एआपापापाः । होवाहोवाहोवा । अयꣳसशिङ्क्तेहोयि-
कच य टय चत किख च श च श च श क्रु
यस्माद्द्यावापृथिवीभुवनानिचक्रदुर्होयि । अयꣳसशिङ्क्तेहोयियस्मादन्तरिक्षा-
की क्रु कि की च श क्रु की क
भुवनानिचक्रदुर्होयि । अयꣳसशिङ्क्तेहोयि यस्मादाप ओषधयो भुवनानिचक्रदुर्होयि ।
कि की च श क्रु की क कि की च श
अयꣳसशिङ्क्तेहोयियस्मात्समुद्रियाआपोभुवनानिचक्रदुर्होयि । अयꣳसशिङ्क्तेहोयि
क्रु की कु कि की च श क्रु
यस्माद्विश्वाभूताभुवनानिचक्रदुर्होयि ॥ ३
की की कि की च श

होवावूहोवावूहोवावू । होवाहोवाहोवाहावुवा । एआपापापाः । होवावूहोवावू-
च क क च क क च क कच य टय चत किख च क क च क क
होवावू । होवाहोवाहोवाहावुवा । एआपापापाः । होवावूहोवावूहोवावू ।
च क कच य टय चत किख च क क च क क च क
होवाहोवाहोवाहावुवा । एआपापापाः । होवाहोवाहोवा । यज्जायथाअपूर्विया-
कच य टय चत किख च श च श च श च्य श्य च्य श्य
अपूर्वियाअपूर्वीया । मघवन्वृत्रहाथायात्रहाथायात्रहाथाया । तात्पृथिवीम्
च्य श्य क्य ख ण चि श चो ची क्य ख ण च कि
अप्राथायाअप्राथायाअप्राथायाः । तदस्तभ्नाउतदिवमुतदिवमुतादायिवम् ।
च्य श्य च्य श्य क्य ख ण श्य ची ची क्य ख ण्य
होवावूहोवावूहोवावू । होवाहोवाहोवाहाव्रुवा । एआपापापाः । होवावूहोवाव्रूहोवावू ।
च क क च क क च क कच य टय चत किख च क क च क क च क
होवाहोवाहोवाहावुवा । एआपापापाः । होवावूहोवावूहोवावू । होवाहोवाहोवा-
कच य टय चत किख च क क च क क च क कच
हावुवा । एआपापापाः । होवाहोवाहोवा । एतेजोधर्मस्सङ्क्रीळन्तेशिशुमतीर्वा-
य टय चत किख च श च श च श त क्रु क्रु
युगोपास्तेजस्वतीर्मरुद्भीर्भुवनानिचाक्रदूः ॥ ४ [ आरण्य ४.१.१२ ]
क्रि की च्यक क्रु ख्य

## वैश्वानरव्रतम्

साजैसं [ १.५.९ ] = साकौसं [ १.१.१.५.९ ]

ओम्ओम्ओम् । आयुरायुरायुर्ज्योतिर्ज्योतिर्ज्योतीः । ज्योतोवाज्योतोवा–
कच कच कच क च कच कच कच च कच च कच च क च श क च श

ज्योतोवा । ज्योतोवाहायिज्योतोवाहायि ज्योतोवाहाउवा । इहस्ववैंश्वान·रा·य
क च श की श की श यी टय कुच च्यचा श

प्रदिशोज्योतिर्बृहात् । इन्दुरिळासत्यम्सत्यम्सत्यम् । सत्योवासत्योवासत्योवा ।
चिचा कश क किच च शशि चचा चचा चचा चचा श चचा श चचा श

सत्योवाहायिसत्योवाहायि । सत्योवाहाउवा । इहस्ववैंश्वान रा यप्रदिशोज्योतिर्बृहात् ।
की श की श यी टय कुच च्यचा श चिचा कश क किच

कायमानोवना·तु वाम् । तुवाम्तुवाम् । तुवोवातुवोवातुवोवा । तुवोवाहायि
चीचृ क्यक च्यचा च्यचा च्य चा च्य श च्य श च्य श की श

तुवोवाहायि । तुवोवाहाउवा । इहस्ववैंश्वान·रा·य प्रदिशोज्योतिर्बृहात् । द्यौर्भूतम्पृथिवी ।
की श यी टय कुच च्यचा श चिचा कश क किच क्य च चि

पृथिवीपृथिवी । पृथिव्योवापृथिव्योवापृथिव्योवा । पृथिव्योवाहायिपृथिव्योवाहायि ।
चि चि चि श चि श चि श तु श तु श

पृथिव्योवाहाउवा । इहस्ववैंश्वान··रा··य प्रदिशोज्योतिर्बृहात् । यन्मात्ररजगन्नापाः ।
यु टय कुच च्यचा श चिचा कश क किच चूचृ क च्यचा

आपाआपाः । अपो·वा··अपो·वा··अपोवा । अपोवाहाअपोवाहाअपोवाहाउवा । इहस्ववैंश्वा–
क च्यचा क च्यचा चचा शचि चचा शचि चचा शचि की की यी टय कुच

न·राय प्रदिशोज्योतिर्बृहात् । सहस्तेजा अपाः । अपाअपाः । अपोवाअपोवाअपोवा ।
च्यचा श चिचा कश क किच

अपोवाहाअपोवाहाअपोवाहाउवा । इहस्ववैंश्वान·रा·यप्रदिशोज्योतिर्बृहात् । नतत्ते-
यी टय कुच च्यचा श चिचा कश क किच

अग्नेप्रमृषेनिवर्तनाम् । तनाम्तनाम् । तनोवातनो वातनोवा । तनोवाहायि–
चै च्यच च्यच च्यचा श च्यचा श च्यचा श की श

तनोवाहायि । तनोवाहाउवा । इहस्ववैंश्वान·रा·यप्रदिशोज्योतिर्बृहात् । उषादिशो-
की श यी टय कुच च्यचा श चिचा कश क किच की

ज्योतिः । ज्योतिर्ज्योतिः । ज्योतोवाज्योतोवाज्योतोवा । ज्योतोवाहायिज्योतोवा-
का क्य क्य च्य श च्य श च्य श की श

हायि । ज्योतोवाहा३उवा । इहस्वैंवश्वान'रा'यप्रदिशोज्योतिर्बृहात् । यद्दूरे-
की श यी टच कुच च्यचा श चिचा कश क किच

सन्निहाभुवाः । भुवाभुवाः । भुवोवाभुवोवाभुवोवा । भुवोवाहायिभुवोवाहायि
चूचृ च्य च्य च्य च्य श च्य श च्य श की श की श

भुवोवाहा३उवा । इहस्वैंवैश्वानरायप्रदिशोज्योतिर्बृहात् । ओम्ओम्ओम् । आयुरायुरायु-
यी टच कुच च्यचाश चिचा कश क किच कच कच कच क च क च क च

र्ज्योतिर्ज्योतिर्ज्योतीः । ज्योतोवाज्योतोवाज्योतोवा । ज्योतोवाहायिज्योतोवाहायि ।
कच च कच च कच च क च श क च श क च श की श की श

ज्योतोवाहा३उवा । घर्मोमरुद्भीर्भुवनानिचक्रदत् । इट्इळा ॥ [ आरण्य १.४.७ ]
यी टच कृकू ल्या

## घर्मरोचनम्[1]

साजैसं [ १.१.१ ]—

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥

हाबुहाबुहाबु । हाबुहाबुहाबुवा । प्रागन्यदनुवर्ततेरजोपागन्यत्तमू'पे'षतीभ्यसा ।
कू श कू श कू श कु कृकू की कीकू श च चीश

हाबुहाबूदुत्यञ्जातावायिदासाम् । दे'वं'वहन्तीकायितावाः । दृशेविश्वायासूरायाम् ।
कृष्यु थ्यच क थ्ययि ट च्यची क्यक क्यक थ्ययी ट चि कच क्यक याट

हाबुहाबुहाबु । हाबुहाबुहा३उवा । एअरूरुचद्धर्मोअरूरुचादुषसान्दिविसूर्योविभाती ॥
कू श कू श कू श तृकु तच कृकू कृकू कुकू ख

[ आरण्य १.५.१ ]

## राजनम्[2]

साजैसं [ १.३३.६ ]—

इन्द्रं नरो .... युनजन्ते धियस्ताः । .... ॥

हिम्हिम्हिम्होहोहोहाहाहाओहाओहाओहा । एऔहोऔहोऔहोवा । इन्द्रन्नरो-
कू कृ तृ क

नेमधिताहवन्तायि । इन्द्रन्नरोनेमधिताहवन्तायि । इन्द्रन्नरोनेमधिताहवन्तायि ।
की कुच क की कुच क की कुच श

१. ' रुचितो घर्मः ' इत्युक्ते प्रस्तोतृसाम ।

२. पूर्वरौहिणपुरोडाशहोमकाले प्रस्तोतृसाम ।

बयोबृहद्वयोबृहद्वयोबृहत् । विश्राष्टेविधर्मणि विश्राष्टेविधर्मणि विश्राष्टेविधर्मणि ।
क्य की क्र क्य च्य कि क्य श्य कि क्य श्य

यत्पार्यायुनाजन्तायिधियस्ताः । यत्पार्यायुनाजन्तायिधियस्ताः । यत्पार्या-
च्यचा श चीचा किच च्यचा श चीचा किच च्यचा श

युनाजन्तायिधियस्ताः । सत्यामोजस्सत्यामोजस्सत्यामोजाः । रजस्वो-
चीचा किच चि क चि श चि श चि

रजस्वोरजस्वाः । शूरोनृषाताश्रवसश्रकामायि । शूरोनृषाताश्रवसश्रकामायि ।
चि चि क की कु श क की कु श

शूरोनृषाताश्रवसश्रकामायि । भद्रं सुधाभद्रं सुधाभद्रं सुधा । इषामूर्जमिषामूर्ज-
क की कु श च्य श्य च्य श्य चचा शसा चचा शशा चचा

मिषा मू र्ज म् । हिम्हिम्हिम् होहोहो हाहाहाओहाओहाओहा । एऔहोऔहोऔहोवा
शशा चचा शश कू कृ तृ

आगोमतायिव्राजेभजात्वन्नाः । आगोमतायिव्राजेभजात्वन्नाः । आगोमतायि-
कृ कृ कृ कृ

व्राजेभजात्वन्नाः । बृहद्यशोबृहद्यशोबृहद्यशाः । दिविदधेहासुदिविदधेहासुदिविदधे-
कृ कृ ची ची ची की च की च

हावुवा । वागीळा । सुवोबृहाद्भाः ॥ [ आरण्य १.६.९ ]
कृ त्य कुकृ खाखी

## २०. प्रथमपौर्वाह्णिकघर्मयागः

तैआ [ ४.८–१० ]—

देवस्य त्वा सवितुः प्रसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्यामाददे ॥ अदित्यै रास्नासि ॥ इड एहि । अदित एहि । सरस्वत्येहि ॥ असावेहि । असावेहि । असावेहि ॥ अदित्या उष्णीषमसि ॥ वायुरस्यैडः ॥ पूषा त्वोपावसृजतु । अश्विभ्यां प्रदापय ॥

यस्ते स्तनः शशयो यो मयोभूः । येन विश्वा पुष्यसि वार्याणि ।

यो रत्नधा वसुविद्यः सुदत्रः । सरस्वति तमिह धातवेऽकः ॥

उस्र घर्मं शिंष । उस्र घर्मं पाहि । घर्माय शिंष ॥ बृहस्पतिस्त्वोपसीदतु ॥ दानवः स्थ पेरवः । विष्वग्वृतो लोहितेन ॥ अश्विभ्यां पिन्वस्व । सरस्वत्यै पिन्वस्व । पूष्णे पिन्वस्व । बृहस्पतये पिन्वस्व । इन्द्राय पिन्वस्व ।

इन्द्राय पिन्वस्व ॥ गायत्रोऽसि ॥ त्रैष्टुभोऽसि ॥ जागतमसि ॥ सहोर्जो भागेनोप मेहि । इन्द्राश्विना मधुनः सारघस्य । घर्मं पात वसवो यजता वट् ॥ स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमि ॥ मधु हविरसि । सूर्यस्य तपस्तप ॥ द्यावा-पृथिवीभ्यां त्वा परिगृह्णामि ॥ अन्तरिक्षेण त्वोपयच्छामि ॥ देवानां त्वा पितॄणाम-नुमतो भर्तुꣳ शकेयम् ॥ तेजोऽसि तेजोऽनुप्रेहि । दिविस्पृङ् मा मा हिꣳसीः । अन्तरिक्षस्पृङ् मा मा हिꣳसीः । पृथिविस्पृङ् मा मा हिꣳसीः । सुवरसि सुवर्मे यच्छ । दिवं यच्छ दिवो मा पाहि ॥ समुद्राय त्वा वाताय स्वाहा । सलिलाय त्वा वाताय स्वाहा । अनाधृष्याय त्वा वाताय स्वाहा । अप्रतिधृष्याय त्वा वाताय स्वाहा । अवस्यवे त्वा वाताय स्वाहा ॥ दुवस्वते त्वा वाताय स्वाहा । शिमिद्वते त्वा वाताय स्वाहा ॥ अग्नये त्वा वसुमते स्वाहा । सोमाय त्वा रुद्रवते स्वाहा । वरुणाय त्वादित्यवते स्वाहा । बृहस्पतये त्वा विश्वदेव्यावते स्वाहा । सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहा । यमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ विश्वा आशा दक्षिणसत् ॥ विश्वान् देवानयाडिह ॥ स्वाहाकृतस्य घर्मस्य । मधोः पिबत-मश्विना । स्वाहाग्नये यज्ञियाय । शं यजुर्भिः ॥ अश्विना घर्मं पातꣳ हार्दिवानम् । अहर्दिवाभिरूतिभिः । अनु वां द्यावापृथिवी मꣳसाताम् ॥ स्वाहेन्द्राय ॥ स्वाहेन्द्रा वट् ॥ घर्ममपातमश्विना हार्दिवानम् । अहर्दिवाभिरूतिभिः । अनु वां द्यावापृथिवी अमꣳसाताम् । तं प्राव्यं यथावट् । नमो दिवे । नमः पृथिव्यै । दिवि धा इमं यज्ञम् । यज्ञमिमं दिवि धाः । दिवं गच्छ । अन्तरिक्षं गच्छ । पृथिवीं गच्छ । पञ्च प्रदिशो गच्छ । देवान् घर्मपान् गच्छ । पितॄन् घर्मपान् गच्छ ॥ इषे पीपिहि । ऊर्जे पीपिहि । ब्रह्मणे पीपिहि । क्षत्त्राय पीपिहि । अद्भ्यः पीपिहि । ओषधीभ्यः पीपिहि । वनस्पतिभ्यः पीपिहि । द्यावापृथिवीभ्यां पीपिहि । सुभूताय पीपिहि । ब्रह्मवर्चसाय पीपिहि । यजमानाय पीपिहि । मह्यं ज्यैष्ठ्याय पीपिहि ॥ त्विष्यै त्वा । द्युम्नाय त्वा । इन्द्रियाय त्वा भूत्यै त्वा ॥ धर्मासि सुधर्मा मे न्यस्मे । ब्रह्माणि धारय । क्षत्त्राणि धारय । विशं धारय । नेत् त्वा वातः स्कन्दयात् ॥ अमुष्य त्वा प्राणे सादयामि । अमुना सह निरर्थं गच्छ । योऽस्मान् द्वेष्टि । यं च वयं द्विष्मः ॥ पूष्णे शरसे स्वाहा ॥ ग्रावभ्यः स्वाहा ॥ प्रतिरेभ्यः स्वाहा ॥ द्यावापृथिवीभ्याꣳ स्वाहा ॥ पितृभ्यो घर्मपेभ्यः स्वाहा ॥ रुद्राय रुद्रहोत्रे स्वाहा ॥ अहर्ज्योतिः केतुना जुषताम् । सुज्योतिर्ज्योतिषाꣳ स्वाहा ॥ भूः स्वाहा ॥ हुतꣳ हविः । मधु हविः । इन्द्रतमेऽग्नौ । पिता नोऽसि मा मा हिꣳसीः । अश्याम ते देव घर्म । मधुमतो वाजवतः पितुमतः । अङ्गिरस्वतः स्वधाविनः । अशीमहि त्वा मा मा हिꣳसीः ॥ स्वाहा त्वा सूर्यस्य रश्मिभ्यः ॥

[ ४.१५-१६ ]—

प्राणाय स्वाहा व्यानाय स्वाहापानाय स्वाहा। चक्षुषे स्वाहा श्रोत्राय स्वाहा। मनसे स्वाहा वाचे सरस्वत्यै स्वाहा ॥ पूष्णे स्वाहा पूष्णे शरसे स्वाहा। पूष्णे प्रपथ्याय स्वाहा पूष्णे नरंधिषाय स्वाहा। पूष्णेऽङ्घृणये स्वाहा पूष्णे नरुणाय स्वाहा। पूष्णे साकेताय स्वाहा ॥

[ ५.७-८ ]—देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते प्रसूत्यै० गायत्रोऽसि त्रैष्टुभोऽसि जागतमसीति शफोपयमानादत्ते० उद्यत्य वातनामान्याह० अनवानम्० पञ्चाह० यद्रौहिणौ भवतः० आश्राव्याह **घर्मस्य यज** इति। वषट्कृते जुहोति० अनुयजति० प्राञ्च-मुदञ्चं पिन्वयति० सर्वा अनु दिशः पिन्वयति० अन्तःपरिधि पिन्वयति० यद्यभिचरेत्। अमुष्य त्वा प्राणे सादयाम्यमुना सह निरर्थं गच्छेति ब्रूयाद् यं द्विष्यात्० सर्वतः समनक्ति० उदञ्चं निरस्यति० अप उपस्पृशति० नान्वीक्षेत० भूः स्वाहेत्येव होतव्यम्। यथापूर्वमाहुती जुहोति० प्राश्नन्ति० संवत्सरं न मांसमश्नीयात्। न रामामुपेयात्। न मृन्मयेन पिबेत्। नास्य राम उच्छिष्टं पिबेत्० स्वाहा त्वा सूर्यस्य रश्मिभ्यः इति प्रातः संसादयति० ॥

मैसं [ ४.९.७-९ ]—

देवस्य त्वा .... ॥ अदित्या रास्नासि ॥ इडा एहि ॥ असावेहि ॥ अदिता एहि ॥ असावेहि ॥ सरस्वत्येहि ॥ असावेहि ॥ यस्ते स्तनः....वार्याणि ॥ अदित्या उष्णीषमसि ॥ पूषा त्वोपावसादतु ॥ वायुरस्यश्विभ्यां प्रधापय ॥ घर्माय शंस्व ॥ बृहस्पतिष्ट्वोपसादतु ॥ दानवः स्थ प्रेरवः स्थ ॥ अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्वेन्द्राय पिन्वस्वेन्द्राय पिन्वस्व ॥ उप मेहि सहोर्जो भागेन ॥ मधुहविरसि स्वाहा त्वा वाताय सूर्यस्य रश्मये सिता वृष्टिसनये संजुहोमि स्वाहा ॥ इन्द्राश्विना मधुनः सारघस्य घर्मं पात वसवो यजत्रा वेट् ॥ गायत्रमसि ॥ त्रैष्टुभमसि ॥ जागतासि ॥ द्यावापृथिवीभ्यां त्वा परिगृह्णामि ॥ अन्तरिक्षेणोपयच्छामि ॥ दिविस्पृङ् मा मा हिंसीः ॥ अन्तरिक्षस्पृङ् मा मा हिंसीः ॥ पृथिवीस्पृङ् मा मा हिंसीः ॥ तेजोऽसि तेजोऽनुप्रेहि ॥ सलिलाय त्वा वाताय स्वाहा ॥ अर्णवाय त्वा वाताय स्वाहा। सिन्धवे त्वा वाताय स्वाहा ॥ समुद्राय त्वा वाताय स्वाहा ॥ शिमिद्वते त्वा वाताय स्वाहा ॥ कुमुद्वते त्वा वाताय स्वाहा ॥ अवस्यवे त्वा वाताय स्वाहा ॥ दुवस्यवे त्वा वाताय स्वाहा ॥ अनाधृष्याय त्वा वाताय स्वाहा ॥ अप्रतिधृष्याय त्वा वाताय स्वाहा ॥ अग्नये त्वा वसुमते स्वाहा ॥ सोमाय त्वा रुद्रवते स्वाहा ॥ इन्द्राय त्वा मरुत्वते स्वाहा ॥ यमाय त्वा पितृमतेऽङ्गिरस्वते स्वाहा ॥ सवित्रे त्वर्भूमते विभूमते वाजवते बृहस्पतिवते विश्वदेव्यावते स्वाहा ॥ अहः केतुना जुषतां स्वर्ज्योतिर्जुषतां स्वाहा ॥

दिवि धा इम॑ँ यज्ञमिम॑ँ यज्ञं दिवि धाः स्वस्ति घर्माय स्वस्ति घर्मपित्वे ॥ विश्वा आशा दक्षिणसत् ॥ विश्वान् देवानयाडिह ॥ ओं श्रावय ॥ अस्तु श्रौषट् ॥ घर्मस्य यज ॥ अश्विना घर्मं पिबत॑ँ हार्द्वानुमनु मां द्यावापृथिवी अनु मेऽम॑ँ-सातामिहैव रातयः सन्ति स॑ँ यजुर्भिः स्वाहेन्द्राय ॥ स्वाहेन्द्राय वट् ॥ स्वाहा-कृतस्य घर्मस्य मधोः पिबतमश्विना घर्ममपातमश्विना वहद्दिव्याभिरूतिभिः स्वं पेद्रव॑ँ यथा वेट् ॥ इषे पिपीहि ॥ ऊर्जे पिपीहि ॥ अस्मै ब्रह्मणे पिपीहि ॥ अस्मै क्षत्राय पिपीहि ॥ इष ऊर्जे पिपीहि ॥ सुभूताय पिपीहि ॥ ब्रह्मवर्चसाय पिपीहि ॥ अस्यै विशे मह्यं ज्यैष्ठ्याय पिपीहि ॥ घर्मोऽसि घर्ममेभ्यस्मे ब्रह्माणि धारय । क्षत्रं धारय । विशं धारय ॥ पूष्णे शरसि स्वाहा ॥ ग्रावभ्यः स्वाहा ॥ प्रतिरवेभ्यः स्वाहा ॥ द्यावापृथिवीभ्या॑ँ स्वाहा ॥ पितृभ्यो घर्मपेभ्यः स्वाहा ॥ रुद्राय रुद्रहोत्रे स्वाहा ॥ हुत॑ँ हविर्मधुहविरसीन्द्रतमेऽग्नौ स्वाहा ॥ अश्याम ते देव घर्म ऋभूमतो विभूमतो वाजवतो बृहस्पतिवतो विश्वदेव्यावतः पितृमतोऽङ्गिरस्वत उशीमहि त्वा नमस्ते अस्तु मा मा हि॑ँसीः ॥ स॑ँसाद्यमानायानुब्रूहि ॥ अह्ने स्वाहा ॥

[ ४.९.२७ ]—

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥
ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् ।
अपो यातामभेषजं ता नः कृण्वन्तु भेषजम् ॥
कया नश्चित्र आभुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥
कस्त्वा सत्यो मदानां म॑ँहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु ॥
अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतिभिः ॥
त्रातारमिन्द्रमवितारमिन्द्र॑ँ हवे हवे सुहव॑ँ शूरमिन्द्रम् ।
हुवे नु शक्रं पुरुहूतमिन्द्र॑ँ स्वस्ति नो मघवा धात्विन्द्रः ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥
यथादित्या अ॑ँशुमाप्याययन्ति यथाक्षितिमक्षितयः पिबन्ति ।
एवास्मानिन्द्रो वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः॥
उद्वयं तमसस्परि ज्योतिः पश्यन्ता उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥

मित्रस्य वश्चक्षुषा समीक्षामहे ॥ मित्रस्य वश्चक्षुषा समीक्षध्वम् ॥
ब्रह्मण उपस्तरणमसि ब्रह्मणे त्वोपस्तृणामि ॥

वामासं —

देवस्य त्वा .... हस्ताभ्यामाददेऽदित्यै रास्नासि ॥ इड एह्यदित एहि सरस्वत्येहि । असावेह्यसावेह्यसावेहि ॥ अदित्यै रास्नासीन्द्राण्या उष्णीषः ॥ पूषासि ॥ घर्माय दीष्व ॥ अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्वेन्द्राय पिन्वस्व ॥ स्वाहेन्द्रवत्स्वाहेन्द्रवत्स्वाहेन्द्रवत् ॥ यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः ॥ उर्वन्तरिक्षमन्वेमि ॥ गायत्रं छन्दोऽसि ॥ त्रैष्टुभं छन्दोऽसि ॥ द्यावापृथिवीभ्यां त्वा परिगृह्णामि ॥ अन्तरिक्षेणोपयच्छामि ॥ इन्द्राश्विना मधुनः सारघस्य घर्मं पात वसवो यजत वाट् । स्वाहा सूर्यस्य रश्मये वृष्टिवनये ॥ समुद्राय त्वा वाताय स्वाहा । सरिराय त्वा वाताय स्वाहा । अनाधृष्याय त्वा वाताय स्वाहा । अप्रतिधृष्याय त्वा वाताय स्वाहा । अवस्यवे त्वा वाताय स्वाहा । अशिमिदाय त्वा वाताय स्वाहा । इन्द्राय त्वा वसुमते रुद्रवते स्वाहा । इन्द्राय त्वादित्यवते स्वाहा । इन्द्राय त्वाभिमातिघ्ने स्वाहा । सवित्रे त्व ऋभुमते विभुमते वाजवते स्वाहा । बृहस्पतये त्वा विश्वदेव्यावते स्वाहा । यमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा घर्माय ॥ स्वाहा घर्मः पित्रे ॥ विश्वा आशा दक्षिणसद्विश्वान् देवानयाडिह । स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना ॥ दिवि धा इमं यज्ञमिमं यज्ञं दिवि धाः ॥ स्वाहाग्नये यज्ञियाय शं यजुर्भ्यः ॥ अश्विना घर्मं पातꣳ हार्द्वानमहर्दिवाभिरूतिभिः । तन्त्रायिणे नमो द्यावापृथिवीभ्याम् ॥ अपातामश्विना घर्ममनु द्यावापृथिवी अमꣳसाताम् । इहैव रातयः सन्तु ॥ इषे पिन्वस्वोर्जे पिन्वस्व ब्रह्मणे पिन्वस्व क्षत्राय पिन्वस्व द्यावापृथिवीभ्यां पिन्वस्व ॥ धर्मासि सुधर्मा ॥ अमेन्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रं धारय विशं धारय ॥ स्वाहा पूष्णे शरसे । स्वाहा ग्रावभ्यः । स्वाहा प्रतिरवेभ्यः । स्वाहा पितृभ्य ऊर्ध्वबर्हिर्भ्यो घर्मपावभ्यः । स्वाहा द्यावापृथिवीभ्याम् । स्वाहा विश्वेभ्यो देवेभ्यः । स्वाहा रुद्राय रुद्रहूतये ॥ स्वाहा सं ज्योतिषा ज्योतिः ॥ अहः केतुना जुषताꣳ सुज्योतिर्ज्योतिषा स्वाहा ॥ मधु हुतमिन्द्रतमे अग्नावश्याम ते देव घर्म नमस्ते अस्तु मा मा हिꣳसीः ॥ अभीमं महिमा दिवं विप्रो बभूव सप्रथाः । उत श्रवसा पृथिवीꣳ सꣳ सीदस्व महाँ असि .... ॥ ३८.१–१७

माशब्रा [ १४.२.१.६–२.५५ ]– अथ रज्जुमादत्ते देवस्य त्वा....रास्नासीति० अथ गामाह्वयति जघनेन गार्हपत्यं यन् इड एहि, अदित एहि, सरस्वत्येहीति० अथोच्चैराह्वयति नाम्ना असावेहि असावेहीति त्रिः । तामागतामभिदधाति अदित्यै रास्नासीन्द्राण्या उष्णीष इति० अथ वत्समुपार्जति पूषासीति० अथोन्नयति घर्माय दीष्वेति । अथ पिन्वने पिन्वयति अश्विभ्यां पिन्वस्व....इति० अथ विप्रुषोऽभिमन्त्रयते स्वाहेन्द्रवत्स्वाहेन्द्रवदिति० त्रिष्कृत्व आह० अथास्यै स्तनमभिपद्यते यस्ते स्तनः शशयो यो मयोभूः...इति० अथ गार्हपत्यस्यार्धमैति उर्वन्तरिक्षमन्वेमीति० अथ शफावादत्ते गायत्रं छन्दोऽसि त्रैष्टुभं छन्दोऽसीति० द्यावापृथिवीभ्यां त्वा परिगृह्णामीति । इमे वै द्यावापृथिवी परीशासावादित्यः प्रवर्ग्यः । अमुं तदादित्यमाभ्यां द्यावापृथिवीभ्यां परिगृह्णाति । अथ मौञ्जेन वेदेनोपमार्ष्टि० अथोपयमन्योपगृह्णाति अन्तरिक्षेणोपयच्छामीति० अथाजाक्षीरमानयति० तस्मिन् शान्ते गोक्षीरमानयति इन्द्राश्विना....इति ।

स यत्रैताᳬ होतान्वाह **प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता** इति तदध्वर्युः प्राङुदायन् वातनामानि जुहोति० समुद्राय त्वा वाताय स्वाहा....इति० द्वादशैतानि नामानि भवन्ति० अथोपयमन्या महावीर आनयति स्वाहा घर्मायेति० आनीते जपति स्वाहा घर्मः पित्र इति० नानुवाक्यामन्वाह० अतिक्रम्याश्राव्याह **घर्मस्य यज** इति । वषट्कृते जुहोति विश्वा आशा दक्षिणसत्....इति० अथ हुत्वोर्ध्वमुत्कम्पयति दिवि धा इमं यज्ञमिमं यज्ञं दिवि धा इति० अनुवषट्कृते जुहोति स्वाहाग्नये यज्ञियाय....इति० अथ ब्रह्मानुमन्त्रयते० अश्विना घर्मं पातम्.... इति० अथ यजमानः० अपातामश्विना घर्मम्.... इति० अथ पिन्वमानमनुमन्त्रयते इषे पिन्वस्व .... इति० यदा शाम्यन्ति विप्रुषोऽथ प्राङिवोदङुत्क्रामति धर्मासि सुधर्मेति० अथ खरे सादयति अमेन्यस्मे नृम्णानि धारय .... इति० अथ शाकलैर्जुहोति० स्वाहा पूष्णे शरस इति० हुत्वा मध्यमे परिधा उपश्रयति । स्वाहा ग्रावभ्य इति० हुत्वा मध्यमे परिधा उपश्रयति । स्वाहा प्रतिरवेभ्य इति० हुत्वा मध्यमे परिधा उपश्रयति । स्वाहा पितृभ्य ऊर्ध्वबर्हिर्भ्यो घर्मपावभ्य इति । अहुत्वैव उदङ्ङीक्षमाणो दक्षिणार्धे बर्हिष उपगूहति० स्वाहा द्यावापृथिवीभ्यामिति० हुत्वा मध्यमे परिधा उपश्रयति । स्वाहा विश्वेभ्यो देवेभ्य इति० हुत्वा मध्यमे परिधा उपश्रयति। स्वाहा रुद्राय रुद्रहूतय इति । अहुत्वैव दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति । तᳬ स उत्तरतः शालाया उदञ्चं निरस्यति । सप्तैता आहुतयो भवन्ति० अथ महावीरादुपयमन्यां प्रायानयति स्वाहा सं ज्योतिषा ज्योतिरिति० अथ रौहिणौ जुहोति अहः केतुना जुषताᳬ सुज्योतिर्ज्योतिषा स्वाहेति० अथ यजमानाय घर्मोच्छिष्टं प्रयछति । स उपहवमिष्ट्वा भक्षयति मधु हुतमिन्द्रतमे अग्नौ .... इति० अथ दक्षिणतः सिकता उपकीर्णा भवन्ति तन्मार्जयन्ते० अनुप्रहरति शाकलान् । अथोपसदा चरन्ति० ।

तं न प्रथमयज्ञे प्रवृञ्ज्यात्० द्वितीये वैव तृतीये वा० तं न सर्वस्मा इव प्रवृञ्ज्यात्० योऽन्वेव ज्ञातः । तस्मै प्रवृञ्ज्यात् । यो वास्य प्रियः स्यात् । यो वानूचानः० सहस्रे प्रवृञ्ज्यात्० सर्ववेदसे प्रवृञ्ज्यात्० विश्वजिति सर्वपृष्ठे प्रवृञ्ज्यात्० वाजपेये राजसूये प्रवृञ्ज्यात्० सत्रे प्रवृञ्ज्यात्० एतान्यस्य प्रवर्जनानि । अतो नान्यत्र० ॥

**वाकासं—**

**--- ॥ विश्वा आशा .... सर्वान् देवानयाळिह । .... ॥ --- ॥ मधु हुतमिन्द्रतमे अग्ना अश्याम .... ॥ --- ॥३८.१.१–४.१**

काशब्रा [ १६.२.१.६–२.४२ ] ≡ माशब्रा

**ऋसं—**

**पावकशोचे तव हि क्षयं परि होतर्यज्ञेषु वृक्तबर्हिषो नरः ।**

**अग्ने दुव इच्छमानास आप्यमुपासते द्रविणं धेहि तेभ्यः ॥ ३.२.६**

ऐब्रा [ १.२२ ]—**विश्वा आशा दक्षिणसात्** इति ब्रह्मा जपति० पावकशोचे तव हि क्षयं परीति भक्षमाकाङ्क्षते । **हुतं हविर्मधु हविरिन्द्रतमेऽग्नावश्याम ते देव घर्म । मधुमतः पितुमतो वाजवतोऽङ्गिरस्वतो नमस्ते अस्तु मा मा हिंसीः** इति घर्मस्य भक्षयति० ॥

**अशौसं—**

**उत्तिष्ठताव पश्यतेन्द्रस्य भागमृत्वियम् ।**

**यदि श्रातं जुहोतन यद्यश्रातं ममत्तन ॥ ७.७५.१**

**श्रातं मन्य ऊधनि श्रातमग्नौ सुशृतं मन्ये तदृतं नवीयः ।**

**माध्यंदिनस्य सवनस्य दध्नः पिबेन्द्र वज्रिन् पुरुकृज्जुषाणः ॥ ७.७६**

**समिद्धो अग्निर्वृषणा रथी दिवस्तप्तो घर्मो दुह्यते वामिषे मधु ।**

**वयं हि वां पुरुदमासो अश्विना हवामहे सधमादेषु कारवः ॥**

**समिद्धो अग्निरश्विना तप्तो वां घर्म आ गतम् ।**

**दुह्यन्ते नूनं वृषणेह धेनवो दस्रा मदन्ति वेधसः ॥**

**स्वाहाकृतः शुचिर्देवेषु यज्ञो यो अश्विनोश्चमसो देवपानः ।**

**तमु विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना रिहन्ति ॥**

**यदुस्रियास्वाहुतं घृतं पयोऽयं स वामश्विना भाग आ गतम् ।**

**माध्वी धर्तारा विदथस्य सत्पती तप्तं घर्मं पिबतं रोचने दिवः ॥**

तप्तो वां घर्मो नक्षतु स्वहोता प्र वामध्वर्युश्चरतु पयस्वान् ।
मधोर्दुग्धस्याश्विना तनाया वीतं पातं पयस उस्रियायाः ॥
उप द्रव पयसा गोधुगोषमा घर्मे सिञ्च पय उस्रियायाः ।
वि नाकमख्यत्सविता वरेण्योऽनुप्रयाणमुषसो वि राजति ॥
उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् ।
श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचत् ॥
हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसा न्यागन् ।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥
जुष्टो दमूना अतिथिर्दुरोण इमं यज्ञमुप याहि विद्वान् ।
विश्वा अग्ने अभियुजो विहत्य शत्रूयतामा भरा भोजनानि ॥
अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।
सं जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांसि ॥
सूयवसाद्भगवती हि भूया अधा वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥ ७.७७

अपैसं—

समिद्धो अग्निरश्विना रथी .... ॥ २०.११.७ ॥ समिद्धो अग्निरश्विना .... कारवः ॥ २०.११.६ ॥ स्वाहाकृतः शुचिर्देवेषु घर्मो यो .... ॥ २०.१२.१ ॥ यदुस्रियास्वाहुतम् .... ॥ तप्तो वां घर्मो भक्षति .... चरति पयस्वान् । .... ॥ उप द्रव .... वरेण्योऽनु द्यावापृथिवी सुप्रणीतिः ॥ २०.११.८–१० ॥ उप ह्वये .... प्र वोचम् ॥ हिङ्कृण्वती .... मनसाभ्यागात् । .... ॥ २०.११.१–२ ॥ अग्ने शर्ध .... ॥ २०.८.७ ॥ सूयवसाद्भगवती हि भूया अथो .... ॥ २०.११.४ ॥

## २१. प्रथमपौर्वाह्णिकघर्मयागहौत्रम्

ऋसं —

उप ह्वये सुदुघां .... प्र वोचम् ॥
हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥ १.१६४.२६–२७
अभि त्वा देव सवितरीशानं वार्याणाम् । सदावन् भागमीमहे ॥ १.२४.३

समीं वत्सं न मातृभिः सृजता गयसाधनम् ।
देवाव्यं मदमभि द्विशवसम् ॥ ९.१०४.२
सं वत्सइव मातृभिरिन्दुर्हिन्वानो अज्यते ।
देवावीर्मदो मतिभिः परिष्कृतः ॥ ९.१०५.२
यस्ते स्तनः शशयो .... ॥ १.१६४.४९
गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ ।
सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥ १.१६४.२८
नमसेदुप सीदत दध्नेदभि श्रीणीतन । इन्दुमिन्द्रे दधातन ॥ ९.११.६
संजानाना उप सीदन्नभिज्ञु पत्नीवन्तो नमस्यं नमस्यन् ।
रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणाः ॥ १.७२.५
आदर्शाभर्विवस्वत इन्द्रः कोशमचुच्यवीत् । खेदया त्रिवृता दिवः ॥८.७२.८
दुहन्ति सप्तैकामुप द्वा पञ्च सृजतः । तीर्थे सिन्धोरधि स्वरे ॥ ८.७२.७
समिद्धो अग्निरश्विना तप्तो वां घर्म आ गतम् ।
दुह्यन्ते गावो वृषणेह धेनवो दस्रा मदन्ति कारवः ॥
समिद्धो अग्निर्वृषणारतिर्दिवस्तप्तो घर्मो दुह्यते वामिषे मधु ।
वयं हि वां पुरुतमासो अश्विना हवामहे सधमादेषु कारवः ॥ आश्वश्रौ ४.७.४
तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः ।
उपह्वरे यदुपरा अपिन्वन् मध्वर्णसो नद्यश्चतस्रः ॥ १.६२.६
आत्मन्वन्नभो दुह्यते घृतं पय ऋतस्य नाभिरमृतं वि जायते ।
समीचीनाः सुदानवः प्रीणन्ति तं नरो हितमव मेहन्ति पेरवः ॥ ९.७४.४
उत्तिष्ठ ब्रह्मणस्पते .... ॥ १.४०.१
अधुक्षत् पिप्युषीमिषमूर्जं सप्तपदीमरिः । सूर्यस्य सप्त रश्मिभिः ॥ ८.७२.१६
उप द्रव पयसा गोधुगोषमा घर्मे सिञ्च पय उस्रियायाः ।
वि नाकमख्यत्सविता वरेण्योऽनु द्यावापृथिवी सुप्रणीतिः ॥ आश्वश्रौ ४.७.४
आ नूनमश्विनोर्ऋषिः स्तोमं चिकेत वामया ।
आ सोमं मधुमत्तमं घर्मं सिञ्चादथर्वणि ॥ ८.९.७
आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियम् । रसा दधीत वृषभम् ॥८.७२.१३
समु त्ये महतीरपः सं क्षोणी समु सूर्यम् । सं वज्रं पर्वशो दधुः ॥ ८.७.२२
उदु ष्य देवः सविता हिरण्यया बाहू अयंस्त सवनाय सुक्रतुः ।
घृतेन पाणी अभि प्रुष्णुते मखो युवा सुदक्षो रजसो विधर्मणि ॥ ६.७१.१
प्रैतु ब्रह्मणस्पतिः .... ॥ १.४०.३

गन्धर्व इत्था पदमस्य रक्षति पाति देवानां जनिमान्यद्भुतः ।
गृभ्णाति रिपुं निधया निधापतिः सुकृत्तमा मधुनो भक्षमाशत ॥ ९.८३.४
नाके सुपर्णमुप यत् पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ १०.१२३.६
[1]तप्तो वां घर्मो नक्षति स्वहोता प्र वामध्वर्युश्चरति प्रयस्वान् ।
मधोर्दुग्धस्याश्विना तनाया वीतं पातं पयस उस्रियायाः ॥ आश्वश्रौ ४.७.४
[1]उभा पिबतमश्विनोभा नः शर्म यच्छतम् । अविद्रियाभिरूतिभिः॥१.४६.१५
स्वाहाकृतः शुचिर्देवेषु घर्मो यो अश्विनोश्चमसो देवपानः ।
तमीं विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना रिहन्ति ॥ आश्वश्रौ ४.७.४
समुद्रादूर्मिमुदियर्ति वेनो नभोजाः पृष्ठं हर्यतस्य दर्शि ।
ऋतस्य सानावधि विष्टपि भ्राट् समानं योनिमभ्यनूषत व्राः॥ १०.१२३.२
द्रप्सः समुद्रमभि यज्जिगाति पश्यन् गृध्रस्य चक्षसा विधर्मन् ।
भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ॥ १०.१२३.८
सखे सखायमभ्या ववृत्स्वाशुं न चक्रं रथ्येव रंह्यास्मभ्यं दस्म रंह्या ।
अग्ने मृळीकं वरुणे सचा विदो मरुत्सु विश्वभानुषु ।
तोकाय तुजे शुशुचान शं कृध्यस्मभ्यं दस्म शं कृधि ॥ ४.१.३
ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥
ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह ।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥ १.३६.१३-१४
तं घेमित्था नमस्विन उप स्वराजमासते ।
अर्थं चिदस्य सुधितं यदेतव आवर्तयन्ति दावने ॥ ८.६९.१७
श्येनो न योनिं सदनं धिया कृतं हिरण्ययमासदं देव एषति ।
ए रिणन्ति बर्हिषि प्रियं गिराश्वो न देवाँ अप्येति यज्ञियः ॥ ९.७१.६
आ यस्मिन्त्सप्त वासवा रोहन्तु पूर्व्या रुहः ।
ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः ॥ आश्वश्रौ ४.७.४
सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥ १.१६४.४०

१. याज्ये ।

ऐन्द्रा [१.२२]—अथोत्तरम्। उपह्वये सुदुघां धेनुमेतां, हिंकृण्वती वसुपत्नी वसूनाम्, अभि त्वा देव सवितः, समी वत्सं न मातृभिः, सं वत्सइव मातृभिः, यस्ते स्तनः शशयो यो मयोभूः, गौरमीमेदनु वत्सं मिषन्तं, नमसेदुप सीदत, संजानाना उप सीदन्नभिज्ञु, आ दशभिर्विवस्वतः, दुहन्ति सप्तैकां, समिद्धो अग्निरश्विना, समिद्धो अग्निर्वृषणारतिर्दिवः, तदु प्रयक्षतममस्य कर्म, आत्मन्वन्नभो दुह्यते घृतं पयः, उत्तिष्ठ ब्रह्मणस्पते, अधुक्षत् पिप्युषीमिषम्, उप द्रव पयसा गोधुगोषम्, आ सुते सिञ्चत श्रियम्, आ नूनमश्विनोर्ऋषिः, समु त्ये महतीरप इत्येकविंशतिरभिरूपाः० । उदु ष्य देवः सविता हिरण्ययेत्यनूत्तिष्ठति । प्रैतु ब्रह्मणस्पतिरित्यनुप्रैति । गन्धर्व इत्था पदमस्य रक्षतीति खरमवेक्षते । नाके सुपर्णमुप यत्पतन्तमित्युपविशति । तप्तो वां घर्मो नक्षति स्वहोता, उभा पिबतमश्विनेति पूर्वाह्णे यजति। अग्ने वीहि इत्यनुवषट्करोति० स्वाहाकृतः शुचिर्देवेषु घर्मः, समुद्रादूर्मिमुदियर्ति वेनः, द्रप्सः समुद्रमभि यज्जिगाति, सखे सखायमभ्याववृत्स्व, ऊर्ध्व ऊ षु ण ऊतये, ऊर्ध्वो नः पाह्यंहसः, तं घेमित्था नमस्विन इत्यभिरूपाः० श्येनो न योनिं सदनं धिया कृतम्, आ यस्मिन्त्सप्त वासवाः इति संसाद्यमानायान्वाह० सूयवसाद्भगवती हि भूया इत्युत्तमया परिदधाति०॥

ऋसं—

उप ह्वये सुदुघां .... ॥ १.१६४.२६–२७॥ अभि त्वा देव ....॥१.२४.३॥ समी वत्सं न मातृभिः....॥ ९.१०४.२ ॥ सं वत्सइव .... ॥ ९.१०५.२ ॥ यस्ते स्तनः शशयो .... ॥ १.१६४.४९॥ गौरमीमेदनु .... १.१६४.२८ ॥ नमसेदुप सीदत .... ॥ ९.११.६ ॥ संजानाना उप .... ॥ १.७२.५॥

दोहेन गामुप शिक्षा सखायं प्र बोधय जरितर्जारमिन्द्रम् ।
कोशं न पूर्णं वसुना न्यृष्टमा च्यावय मघदेयाय शूरम् ॥ १०.४२.२

दुहन्ति सप्तैकामुप .... ॥ ८.७२.७ ॥ आ दशभिर्विवस्वत .... ॥८.७२.८॥ आत्मन्वन्नभो .... ॥ ९.७४.४ ॥ समिद्धो अग्निर्वृषणा रयिर्दिवस्तप्तं .... ॥ समिद्धो अग्निरश्विना .... ॥ शांश्रौ ५.१०.८ ॥ तदु प्रयक्षतममस्य ....॥ १.६२.६ ॥ अधुक्षत् पिप्युषीमिषमूर्जं .... ॥ ८.७२.१६ ॥ उत्तिष्ठ ब्रह्मणस्पते .... ॥ १.४०.१ ॥ उप द्रव पयसा गोधुगोषमा .... सविता दमूना ॥ शांश्रौ ५.१०.१० ॥ आ सुते सिञ्चत .... ॥ ८.७२.१३ ॥ आ नूनमश्विनोर्ऋषिः .... ॥ ८.९.७ ॥ उदु ष्य देवः सविता .... ॥ ६.७१.१ ॥ प्रैतु ब्रह्मणस्पतिः .... ॥ १.४०.३ ॥ नाके सुपर्णमुप .... ॥१०.१२३.६॥ [1]उभा पिबतमश्विनोभा .... ॥१.४६.१५॥ [1]तप्तो वां

[1] याज्ये।

घर्मो .... ॥ शांश्रौ ५.१०.१८ ॥ स्वाहाकृतः शुचिः .... ॥ शांश्रौ ५.१०.२२ ॥ सखे सखायमभ्या .... ॥ ४.१.३ ॥ गन्धर्व इत्था .... ॥ ९.८३.४ ॥ तं घेमित्था .... ॥ ८.६९.१७ ॥

हविर्हविष्मो महि सद्म दैव्यं नभो वसानः परि यास्यध्वरम् ।
राजा पवित्ररथो वाजमारुहः सहस्रभृष्टिर्जयसि श्रवो बृहत् ॥ ९.८३.५
आ यस्मिन्सप्त वासवा रोहन्ति .... ॥ शांश्रौ ५.१०.३२ ॥ सूयवसाद्भगवती .... ॥ १.१६४.४०

शांब्रा [८.७]—अभिरूपा दोहनीया अभिष्टौति० आ सुते सिञ्चत श्रियम्, आ नूनमश्विनोर्ऋषिरित्यासिक्तवत्यावभिरूपे अभिष्टौति । उदु ष्य देवः सविता हिरण्ययेत्युद्यम्यमान उद्यनवतीमभिरूपामभिष्टौति । प्रैतु ब्रह्मणस्पतिरिति प्रव्रजत्सु प्रवतीं ब्राह्मणस्पत्यामभिरूपामभिष्टौति । नाके सुपर्णमुप यत् पतंन्तमिति व्रजत्सु पतन्तमित्यभिरूपामभिष्टौति । द्वाभ्यां यजेत्० त्रिष्टुब्वतीभ्यां पूर्वाह्णे० विपर्यस्य दाशतयीभ्यां वषट्कुर्यादिति हैक आहुः। यथाम्नातमिति त्वेव स्थितम् । अथोत्तरा अभिरूपा अभिष्टौति० हविर्हविष्मो महि सद्म दैव्यमिति पुराहुतेः प्रापणात्० सूयवसाद्भगवती हि भूया इत्याशीर्वत्या परिदधाति० अथ यदप उपस्पृशति० ॥

## २२. प्रथमपौर्वाह्णिकघर्मयागौद्रात्रम्

### घेनु[1]

साकौसं [ १.५.२.४.२ ]—

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ।

२र र र^ ३र२र^ ३र२र^ ३र२र^ १ २ १ २ १ २^
हाउहाउहाउ । ओहा । ओहा । ओहाइ । इयाहाउ । इयाहाउ । इयाहाउ ।
३र २ ३र २ ३र २ १ १ २र १ २र १
औहो१इ । औहो१इ । औहो१इ । भूवत् । इडा । स्वादिष्ठया । मादिष्ठया ।
१ १ २ १ २र १र १ १ २ र १ २र १
जनत् । इडा । पवस्वसो । माधारया । वृधत् । इडा । इन्द्रायपा । तावाइसुताः ।
१ १ २र र र^ ३र २र^ ३र २र^ ३र २र^ १ २ १ २
करत् । इडा२३ । हाउहाउहाउ । ओहा । ओहा । ओहाइ । इयाहाउ । इयाहाउ ।
१ २^ ३र २ ३र २ ३र २ ^ ३ ५र र २ २र १
इयाहाउ । औहो१इ । औहो१इ । औहो१२ । या२३४औहोवा । ए३ । धेनु ॥
[ आरण्य ३.१.७ ]

1. वत्सवर्करयोरुपसृज्यमानयोः प्रस्तोतृसाम । सकृद् गायेत् ।

## पयः[1]

साकौसं [ १.१.१.३.५ ]—

अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्त्याशवः ॥

२ २ १ –१ २ २ २र र २र
इयो३ । इया । इयो२इया । इयो३इया । अग्नेयुङ्क्ष्वाही३येतवा ।
२ १र २र १र २ र र २र २ २ ·१ –
अग्नेयुङ्क्ष्वा । हीयेतवा । अग्नेयुङ्क्ष्वाही३येतवा । इयो३ । इया । इयो२ ।
१ २ २ २ र र र २र २ १र र २र १र
इया । इयो३ । इया । अश्वासोदाइवा३साधवाः । अश्वासोदाइ । वासाधवाः ।
२ र र र २र २ २ १ –१ २ २
अश्वासोदाइवा३साधवाः । इयो३ । इया । इयो२इया । इयो३ । इया ।
२ र २र २१ २र १र २ र २र २
अरंवहान्ती३आशवाः । अरंवहा । तीयाशवाः । अरंवहान्ती३आशवाः । इयो३
२ १ –१ २ र २ १ – १ – १ – १ २
इया । इयो२इया । इयोइया३उवा३ । आ२ । आ२ । आ२ । हस् । ए३ ।
१ १११
पया२३४५ः ॥[ आरण्य ३·१·८ ]

## सिन्धु[2]

साकौसं [ १.३.१.१.४ ]—

आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः । न त्वामिन्द्राति रिच्यते ॥

५र र ५ २ १ ११ २ २ १ ११ २
आत्वाविशन्त्विन्दा६वाः । समुद्रमिवसिन्धवः । समुद्रमि । वसिन्धा२३वाः ।
१ र र २ र २ १र २ १ २ १
नत्वामिन्द्रातिरिच्यते । नत्वामा२३इन्द्रा । तिरिच्या२३ता३४३ इ । ओ२३४५ई ।

डा ॥ [ ग्राम ५·२·२३ ]

१. पयसोराहरणकाले प्रस्तोतृसाम । सकृद् गायेत् ।

२. आसेचनकाले प्रस्तोतृसाम । सकृद् गायेत् ।

## वसिष्ठशफौ[1]

साकौसं [ आरण्य २.५ ]—

प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत् ।

धातुर्द्युतानात् सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः ॥

१ २ १ २ २ २ २र२ १र२ २र२
हाउप्राथाः । चयस्यसप्रथः । चना२ । मा३उवा३ । ईहा । ईहा । ईहा ।

१ ३ ५ ३ ५ १२ २ १२ १ – २ २
हुवाइ । ओ२३४वा । ई२३४डा । आनुष्टुभस्यहविषः । हवा२इः । या३उवा३ ।

२र२ २र२ २र२ १ ३ ५ ३ ५ २र१ र२र १
ईहा । ईहा । ईहा । हुवाइ । ओ२३४वा । ई२३४डा । धातुर्द्युतानात्सवितुः ।

२ – २ २ २र२ २र२ २र२ १ ३ ५ ३ ५
चवा२इ । ष्णा३उवा३ । ईहा । ईहा । ईहा । हुवाइ । ओ२३४वा । ई२३४डा ।

२ १र २र२ १ – २ २ २र२ २र२ २र२ १ ३ ५
रथन्तरमाजभारा । वसा२इ । ष्ठा३उवा३ । ईहा । ईहा । ईहा । हुवाइ । ओ२३४वा ।

३ ५ २ १
ई२३४डा । ए३ । द्युत् ॥ १ ॥

१ २ १ २ – २र२ १र२
प्राथाः । चयस्यसप्रथः । चना२ । मा३१उवा२३ । ईडा । ईडा ।

२र२ १ २र ३ ५ १र २ १२ १ –
ईडा । होइ । हो । वाहा३१उवा२३ । ई२३४हा । आनुष्टुभस्यहविषः । हवा२इः ।

२ २र२ २र२ १र२ १ १र ३ ५
या३१उवा२३ । ईडा । ईडा । ईडा । होइ । हो । वाहा३१उवा२३ । ई२३४हा ।

२र१ र२र १ २ – २ १र२ १र२ १र२ १
धातुर्द्युतानात्सवितुः । चवा२इ । ष्णा३१उवा२३ । ईडा । ईडा । ईडा । होइ ।

२र ३ ५ २ १र २र२ – १
हो । वाहा३१उवा२३ । ई२३४ हा । रथन्तरमाजभारा । वसा२इ । ष्ठा३१उवा२३ ।

1. शफाभ्यां महावीरे परिगृह्यमाणे प्रस्तोतृसामनी । सकृद् गायेद् ।

२र र २र र २र र १ २र ३ ५ २
ईडा। ईडा। ईडा। होइ। हो। वाहा३१उवा२३। ई२३४हा। ए३।
१३ ११११
घृता२३४५ः ॥ २ ॥ [ आरण्य ३.२.५–६ ]

## व्रतपक्षौ[1]

साकौसं [ १.४.१.३.६ ]—

इन्द्रं नरो नेमधिता हवन्ते यत् पार्या युनजते धियस्ताः ।
शूरो नृषाता श्रवसश्च काम आ गोमति व्रजे भजा त्वं नः ॥

२र र र १ २ १ २ १ २ २र र र
हाउहाउहाउ। हुईहुईहुईहुई। हुईहुईहुईहुई। हुईहुईहुईहुई। हाउहाउहाउ।
२१ २ १ २र ३४ ५ २ १र २ १ २ ३ ४ ५
इन्द्रन्नरो। ने३मधि। ताहवन्ताइ। यत्पारियाः। युनज। ताइधियस्ताः।
२र१र २ १ १ ३ ४र ५ २र १र २ १र २र ३ ४ ५
शूरोनृषा। ता३श्रव। सश्वकामाइ। आगोमताइ। व्रजेभ। जातुवन्नाः।
२र र र १ २ १ २ १ २ २ऽ ऽ ऽ
हाउहाउहाउ। हुईहुईहुईहुई। हुईहुईहुईहुई। हुईहुईहुईहुई। हाउहाउहाउ।
२ ३१११११
वा३। ई२३४५ ॥ १ ॥

२र र र १ १ २ १ १ २ १ १ :२
हाउहाउहाउ। इहा। हुईहुईहुई। इहा। हुईहुईहुई। इहा। हुईहुईहुई।
२र र र २ १ २ २र३४ ५ २ १र २ १
हाउहाउहाउ। इन्द्रन्नरो। ने३मधि। ताहवन्ताइ। यत्पारियाः। युनज।
२ ३ ४ ५ २र१र २ १ २ ३ ४र ५ २र १र २ १र
ताइधियस्ताः। शूरोनृषा। ता३श्रव। सश्वकामाइ। आगोमताइ। व्रजेभ।
२र ३ ४ ५ २र र र १ १ २ १ १ २ १
जातुवन्नाः। हाउहाउहाउ। इहा। हुईहुईहुई। इहा। हुईहुईहुई। इहा।
१ २ २ऽ ऽ ऽ २ ३११११
हुईहुईहुई। हाउहाउहाउ। वा३। ई२३४५ ॥ [ आरण्य २.२.५–६ ]

---

१. घर्मे ह्रियमाणे प्रस्तोतृसामनी। सकृद् गायेत।

## अश्विनोर्व्रते[1]

साकौसं [ १.४.१.२.२ ]—

इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशꣳ हि गच्छथः ॥

१र १र २र २र २र २र
होइहा३ । इहोइहा३ । होइहा३ । इहोइहा३ । होइहा३ । इहोइहा३ ।
२ र र र १ २ २ र र र १ २ २ र र र र र
इमाउवान्दिविष्टयाओहाउ । उस्राहवन्तेअश्विनाओहाउ । अयंवामह्वेवसेशचीवसू-
१ २ २ र १ २ २र २र १र
ओहाउ । विशंविशꣳहिगच्छथाओहाउ । होइहा३ । इहोइहा३ । होइहा३ ।
१र २र १र ५र र १ऽ १ २र३र२
इहोइहा३ । होइहा३ । इहोइहा३४ । औहोवा । ई५हीहीहीहोहि ॥ १ ॥

१३२ १ ३२ १३२ १ ३२ १३२ १ ३२ २र र
होइहा । इहोइहा । होइहा । इहोइहा । होइहा । इहोइहा । इमाउवान्दि-
र १ २ २ र र र १ २ २ र र र र र १ २
विष्टयाहोहाउ । उस्राहवन्तेअश्विनाहोहाउ । अयंवामह्वेवसेशचीवसूहोहाउ ।
२ र १ २ १ ३२ १ ३१ १ ३२ १ ३१ १ ३२
विशंविशꣳहिगच्छथाहोहाउ । होइहा । इहोइहा । होइहा । इहोइहा । होइहा ।
१ ३ २ ५रर १- १- १-
इहोइहा३४ । औहोवा । ई२ । ई२ । ई२ ॥ २ ॥ [ आरण्य ४.१.१५–१६ ]

## रौहिणम्[2]

साकौसं [ १.४.१.३.६ ]—

इन्द्रं नरो नेमधिता .... ॥

२र र र १ २ १ २ १ २ १ २ १ २
हाउहाउहाउ । आइही । आइही । आइही । आइहिया । आइहिया
१ २ १ २ १ २ १ २ १२ १ २ १ २ १ २
आइहिया । आसाउ । आसाउ । आसाउ । आयाम् । आयाम् । आयाम् । नामाः

1. घर्मे हुते प्रस्तोतृसामनी । सकृद् गायेत ।
2. उत्तररौहिणपुरोडाशहोमकाले प्रस्तोतृसाम । सकृद् गायेत ।

१ २ १ २ १ १ २२ २ - १ १ २२
नामाः। नामाः। किम्। किम्। इन्द्रनरोनेमधिताहवा२न्ताइ। यत्पार्यायुन-
२ - १ १२२ २ २ - १ १२ २ २ २ - १
जतेधियार२स्ताः। शूरोनृषाताश्रवसश्चका२माइ। आग:मतिव्रजेभजातुवा२न्नाः।
१ १ १२ १ १ १ १२ १ १२ १
मना२३होइ। प्राणा२३होइ। चक्षु२३होइ। श्रोत्रा२३ᳲहोइ। घोषा२३होइ।
१ १ १२ १ १२ १ १ १२ १
व्रता२३ᳲहोइ। भूता२३ᳲहोइ। पाना२३ᳲहोइ। चित्ता२३ᳲहोइ। धीता२३ᳲहोइ।
१ १ १२ १^ ३ ५२२ ३ ११११
सुवा२३होइ। ज्योता२३इहो२। वा२३४औहोवा। ऊ२३४५॥
[ आरण्य ४.२.२० ]

## आरूढवदाङ्गिरसम्[1]

साकौसं [ १.१.२.५.२ ]—

इत एत उदारुहन् दिवः पृष्ठान्यारुहन्।
प्रभूर्जयो यथा पथो द्यामङ्गिरसो ययुः॥

१२९ २ १२ ९ २ १२ ९ २ २ २ १२ -
आरो३हान्। आरो३हान्। आरो३हान्। इतएतऊ३दारू१हा२न्।
२ १२ - २ २ १ २ - २ १ २ -
दिवःपृष्ठानी३यारू१हा२न्। प्रभूर्जयोया३थापा१था२। उद्यामङ्गिरा३सोया१यू२ः।
१२९ २ १२९ २ १ १^ ३ ५२२ ३ ५
आरो३हान्। आरो३हान्। आ२३। रो२। हा२३४। औहोवा। सू२३४वाः॥
[ ग्राम ३.१.२ ]

## धेनु[2]

साजैसं [ १.४९.२ ] = साकौसं [ १.५.२.४.२ ]

हाबुहाबुहाबुहा। ओहाओहाओहा। इयाइयाइया। औहोऔहोऔहोयि।
कु च्य च्य टीच क टच कटच

---

१. घर्मपात्रेषु सम्राडासन्द्यां समारोप्यमाणेषु प्रस्तोतृसाम। त्रिर्गायेत्।

२. गव्युपसृष्टायां प्रस्तोतृसाम। सकृद् गायेत्।

भुवदिळा । स्वादिष्ठयामदीष्ठयाजनदिळा । पवस्वसोमाधारयावृधदिळा ।
की की कि ची ची क्य क्य ची
इन्द्रायपातवायिसुताःकरदिळा । इन्द्रायपातवायिसुताः । हाबुहाबुहाबुहा ।
क्य थ्य क्य चि ची च थ्य क्य चि
ओहाओहाओ३ा । इयाइयाइया । औहोऔहोऔहोवाहुवाहावुवा । ए॑धेनूः ॥
कु थ्य थ्य टीच क टच क ख्य शी ति तच क्य श
[ आरण्य ३.४.७ ]

## मरुतां संवेशीयं ककुभं वा[1]

साजैसं [ १.४५.६ ]–
गावश्चिद्घा समन्यवः सजात्येन मरुतः सबन्धवः । रिहते ककुभो मिथः ॥
गावश्चिद्घासामन्यवाः । सजात्येनमरुतस्सबन्धवाहोयि । रिहतेककुभोमिथा-
कूकु ति काषा टट्यू च श कि पु श
औहोवा । हो३ळा ॥ [ ग्राम २·४·७·९ ]
टि ख प्य प्या श्यश

## श्यावाश्वम्[2]

साजैसं [ १.१६.५ ]—
गौर्धयति मरुताᳬ श्रवस्युर्माता मघोनाम् । युक्तावह्नी रथानाम् ॥
गौर्धयाए । तिमरुताᳬश्रावस्युर्मातामघोनाम् । युक्तावह्नायिरथा नामा
ति त तीच क ति खि श ची श क्य टटल्या ख
औहोवा । ऊपा ॥ [ ग्राम २.१.४.८ ]
शि ख श

## दोहादोहीयम्[3]

साजैसं [ १.४९.१ ]—
उच्चा ते जातमन्धसा दिवि सद्भूम्या ददे । उग्रᳬ शर्म महि श्रवः ।
उच्चातेजातमन्धसादोहायिदोहाये । दिविसद्भूम्याददेदो३ायिदोहाये ।
पी कू तितीतत कृलृ ट त थ्य त त
उग्रᳬशर्मादोहायिदोहाये । महिश्रावाः । ओ३ळा ॥ [ ग्राम ३.१.४ ]
टि त त थ्य त त टिथ्य खण पथ्य प्य

१. गव्युपसृष्टायां वैकल्पिकं प्रस्तोतृसाम । सकृद् गायेत् । द्रष्टव्यं कौग्राम ११.१.६
२. गवि प्रस्तायां प्रस्तोतृसाम । सकृद् गायेत् । द्रष्टव्यं कौग्राम ४.२.८
३. गवि दुह्यमानायां प्रस्तोतृसाम । सकृद् गायेत् । द्रष्टव्यं कौग्राम ११.२.११

पयः[1]

साजैसं [ १.३.५ ] ≡ साकौसं [ १.१.१.३.५ ]

इयोइयाइयोइयाइयोइया । अग्नेयुङ्क्ष्वाहीयेतवा । अग्नेयुङ्क्ष्वाहीयेतवा-
च टच की चश कु त

ग्नेयुङ्क्ष्वाहीयेतवा । इयोइयाइयोइयाइयोइया । अश्वासोदेवासाधवाः । अश्वासो-
टचे चि च टच की चश कु ति

देवासाधवाश्वासोदे'वासाधवाः । इयोइयाइयोइयाइयोइया । अरंवहन्तीयाशवाः ।
टच चि च टच की च श क

अरंवहन्तीयाशवोरंवहन्तीयाशवाः । इयोइयाइयोइयाइयोइया । आहस् । एपयाः ॥
टे चि च टच की चश चश तच न्य

[ आरण्य ३.४.८ ]

आसितं सिन्धु वा[2]

साजैसं [ १.२१.४ ] ≡ साकौसं [ १.३.१.१.४ ]

आत्वाविशन्त्विन्दावाः । सामुद्रमीवासिन्धव'स्सामुद्रमीवासिन्धावाः । नत्वा-
कु ताकू त कीका किकि कु ल्य की क टच त

मिन्द्रातिरिच्यतेनत्वामायिन्द्रातीरि'च्यातायि । ओइळा ॥ [ ग्राम २.१.९.४ ]
च कुच ल्या ट टचता टिटच खण श प प्या

वसिष्ठशफौ[3]

साजैसं [ २.५.७ ] ≡ साकौसं [ आरण्य २.५ ]

हाबुप्रथाः । चयस्यसप्रथश्चनामाबुवा । इळाइळाइळाहोयिहोवाहाबुवाईहा ।
की ङ्चय टच चू कीचय टचखश

आनुष्टुभस्यहाविषोहवायियोबुवा । इळाइळाइळाहोयिहोवाहाबुवाईहा । धातुर्द्युतानात्-
कू टच टच चू कीचय टचखश क कि

सवितुश्चवायिष्णाबुवा । इळाइळाइळाहोयिहोवाहाबुवा'ईहा । राथन्तरामाजभारावसा-
कि टि च्य टच चू कीचय टचखश कय चिश टच

यिष्ठाबुवा । इळाइळाइळाहोयिहोवाहाबुवा'ईहा । एद्युताः ॥१॥
टच टच चू कीचय टचखश तट ख

१. पयस्याह्रियमाणे प्रस्तोतृसाम । सकृद् गायेत् ।

२. पयस्यासिच्यमाने प्रस्तोतृसाम । सकृद् गायेत् ।

३. शफाभ्यां महावीरे परिगृह्यमाणे प्रस्तोतृसामनी । सकृद् गायेत् ।

प्रथाः । चयस्यसप्रथश्नामावुवा । इहाइहाइहावुहुवायोवाईळा । आनुष्टुभस्य-
क्य इचटय टय चू ख्‌णखश

हविषोहवायिर्यावुवा । इहाइहाइहावुहुवायोवाईळा । धातुर्द्युतानात्सावितुश्र-
कृ घ्य टय चू खूणखश क कि

वायिष्णावुवा । इहाइहाइहावुहुवायोवाईळा । राथन्तरामाजभारावसायिष्ठावुवा ।
टि घ्य टय चू खूणखश कथ चिश घ्य घ्य घ्य टय

इहाइहाइहावुहुवायोवाईळा । एह्युत् ॥ २॥ [आरण्य ३·३·१०–११]
चू खूणखश तच

## बार्हस्पत्यं ब्राह्मणस्पत्यं वा[1]

साजैसं [ १.६.२ ]—

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥

प्रैतुब्राह्माणास्पातीः । प्रदायि॰व्ये॰तुसूनृ॰ता॰अच्छावायिरम् । नर्यम्पङ्क्ती-
खि शप्यीप्य टिटुचक किल्य टयख ण तीतिच

रा॰धा॰सान्देवा॰याज्ञम् । नायाऔहोवा । न्तुनाः ॥ [ ग्राम १.६.२ ]
क्ययजि ट टटयखण टक शि खशप्य

## व्रतपक्षौ[2]

साजैसं [ १.३३.६ ]—

इन्द्रं नरो .... युनजन्ते धियस्ताः । .... ॥

हाबुहाबुहाबु । हाहाहाहाहाबु । हाहाहाहाहाबु । हाहाहाहाहाबु । इन्द्रन्नरो-
कुशकुशकुश च क्यफप्यश च क्यफप्यश च क्यफप्यश

नेमधिताहवन्तायि । यत्पार्यायुनजन्तायिधियस्ताः । शूरोनृषाताश्रवसश्चकामायि ।
कुश चिश चीश कि किच शि किश

आगोमतायिव्राजेभजात्वन्नः । हाबुहाबुहाबु । हाहाहाहाहाबु । हाहाहाहाहाबु ।
कृचश कुशकुशकुश च क्यफप्यश च क्यफप्यश

हाहाहाहाहाबु । हाबुहाबुहावुवा ॥१॥
च क्यफप्यश तृ

---

१. घर्मे ह्रियमाणे प्रस्तोतृसाम । सकृद् गायेत् । इत्यन्यं कौग्राम २.१.२५

२. घर्मे ह्रियमाणे वैकल्पिके प्रस्तोतृसामनी । सकृद् गायेत् ।

हाबुहाबुहा। वीहाहाहाहाहा। वीहाहाहाहाहा। वीहाहाहाहाहा। बु।
कु च्य त्यफप्य च्य त्यफप्य च्य त्यफप्य श

इन्द्रन्नरोनेमधिताहवन्तायि। यत्पार्यायुनजन्तायिधियस्ताः। शूरोनृषाताश्रवसश्च-
कु श चिश चीश कि किच शि

कामायि। आगोमतायिव्राजेभजात्वन्नः। हाबुहाबुहा। वीहाहाहाहाहा। वीहा-
किश कृचशं कु च्य त्यफप्य च्य

हाहाहा। वीहाहाहाहाहा। बु। हाबुहाबुहावुवा। यी॥ २ [ आरण्य ३.१.५–६ ]
त्यफप्य च्य त्यफप्य श तृ ख

## अश्विनोर्व्रते[१]

साजैसं [ १.३२.२ ] ≡ साकौसं २ [ १.४.१.२.२ ]

होइहाइहोइहा। होइहाइहोइहा। होइहाइहोइहा। इमावुवान्दिविष्टयाओहा।
ति ती ति ती ति ती खृ प्या

उस्राहवन्तेअश्विनाओहा। अयंवामह्वयवसेशचीवसूओहा। विशंविशꣳहिगच्छथाओहा।
खृ प्य षखैखू प्या खृ प्या

होइहा इहोइहा। होइहाइहोइहा। होइहाइहोइहा औहोवा। ईहीहि हिंहींहिही॥१॥
ति ती ति ती ति खी शि क्यका खी

हो इ हैहो यी हा। हो इ है हो यी हा। हो इहैहो यी हा। इमावुवान्दिविष्टयाहो-
टचच टचल्यशपीह्यू टचच टचल्यशपीह्यू टचच टचल्यशपीह्यू खृ

हाबु। उस्राहवन्तेअश्विनाहोहाबु। अयंवामह्वयवसेशचीवसूहोहाबु। विशंविशꣳहिगच्छ-
टचश तृपीह्याश षूह्र चैश षीचृह्यू

थाहोहाबु। होयीहैहोयी हा। हो यी हैहोयी हा। हो यी है होयीहाऔहोवा।
श टचच टचल्याश टचच टचल्याश टचचकल्या टखश शिख

ई॥ २ ॥ [ आरण्य १.१.९–१० ]
खटच

## रौहिणकम्[२]

साजैसं [ १.३३.६ ]—

इन्द्रं नरो .... युनजन्ते धियस्ताः। .... ॥

१. घर्मे हुते प्रस्तोतृसामनी। सकृद् गायेत्।

२. उत्तररौहिणपुरोडाशहोमकाले प्रस्तोतृसाम। सकृद् गायेत्।

हाबुहाबु हा वायि हीआयिहीआयिही । आयिहीयाआयिहीयाआयिहीया ।
चुचि किक कि कि

आसावसावसा वु । आयामाया मा यान्न मो न मो नामः । कीट् कीट् कीट् कीट् कीट्-
त्यका त्यका क्यका त्यश क्यर क्यका क्यका क्यका च श शेषशौ शेषशौ शेषशौ शेषशौ शेषशौ

कीट् कीट् कीट् कीट् कीट् कीट् कीट् कीट् । इन्द्रन्नरोनेमधिताह व न्तायि । यत्पार्या-
शेषशौ शेषशौ शेषशौ शेषशौ शेषशौ शेषशौ शेषशौ शेषशौ षी टूट्यु त श षी

युनजन्तायिधियास्ताः । शूरोनृषाताश्रवसश्चकामायि । आगोमतिव्रजेभजातुवान्नाः ।
टूट्यु त टूरे त श रो टू त

हाबुहाबुहावायिहीआयिहीआयिही । आयिहीयाआयिहीयाआयिहीया । आसा-
चुचि किक कि कि त्यका

वसावसावु । आयामायामा या न्न मो न मो नामः । कीट् कीट् कीट् कीट् कीट् कीट्-
त्यका क्यका त्यश वयर क्यका क्यका क्यका च श शेषशौ शेषशौ शेषशौ शेषशौ शेषशौ शेषशौ

कीट् कीट् कीट् कीट् कीट् कीट् कीट् । मनोवाहोयिप्राणोवाहोयिचक्षोवाहोयिश्रो-
शेषशौ शेषशौ शेषशौ शेषशौ शेषशौ शेषशौ शेषशौ ची शौ शौ

त्रोवाहोयिघोषोवाहोयिव्रातोवाहोयिचित्तोवाहोयिभूतोवाहोयिधीतोवाहोयिपानोवाहोयि
शू च्य श शु शु च श

सूवोवाहोयिज्योतोवाहो वा औहोवा । ऊ ॥ [आरण्य १.६.१०]
चृकू ट टट ख शिश ख

## आरूढवदाङ्गिरसम्[1]

साजैसं [ १.१०.२ ] = साकौसं [ १.१.२.५.२ ]

आ र इहन्ना र इ हन्ना र इ हन् । इतएता ऊदारुहन् दिवःपृष्ठानी या रूहन्-
त्यच क ल्य त्यच क ल्य टय कश चिचक चीयट चची श्यक त्यचक यट

प्र भू जे यो याथा पा था उ द्यामङ्गी रासोयायूः । आरुहन्नारुहन्ना रू हाओ हो वा ।
कयचि कयचक त्य यजा ट च्यचि क त्यचजा क य ट टयच ल्य ख शिश

ऊ प ॥[ ग्राम १.१०.२ ]
ख श

१. घर्मपात्रेषु साद्यमानेषु प्रस्तोतृसाम । त्रिर्गायेत् ।

## कावम्[1]

साजैसं [ १.५७.१ ]—

अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।

आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥

आभीप्रीयाणिपावातायि । चनोहि तो नामानीयाह्वोआधीये । षूवर्धतायेखिश खिणश टिल्य खिश खिण क भी

आसूरीयास्याबृहाताः । बृहन्नधायिरथांवायिष्वा श्वामा रु हात् । विचाहा वु वा खिश खिण क भी खि श्यशा खिखण त्यता टिट्था

क्षाणाः ॥ [ ग्राम २.९.१ ] ख प्य

## वामदेव्यम्[2]

साजैसं [ १.१८.५ ]—

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥

कायान श्चा यि त्रा याभूवत् ।ओ ती सा दा वृधस्सखा औहो हा यिकयाश चा यि ण फफा फ्यफा ख्यखा शि क्यकी क्यशा कुकि त्यता टिव्या त्यता श

ष्ठयौहोहिम्मा । वार्तोहायि ॥ [ ग्राम २.१.६.१६ ] टि टथ ट ख तृ श

## २३. प्रथमपौर्णाह्णिकोपसदादि

तैसं [ १.२.११ ]—

या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा ॥

[ ६.२.३ ]– यदुपसद उपसद्यन्ते० नान्यामाहुतिं पुरस्ताज्जुहुयात्० स्रुवेणाघारमाघारयति० पराङतिक्रम्य जुहोति० पुनरत्याक्रम्योपसदं जुहोति० यत्सायं प्रातरुपसद उपसद्यन्ते० तिस्र उपसद उपैति ०॥

[ ६.२.५ ]–तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य यज्ञस्य० ॥

तैब्रा [१.५.९.५]–ते देवा ऊचुः० उपाꣳशूपसदा चराम० तथो एवैतदेवंविद्यजमानः। तिस्र एव सामिधेनीरनूच्य । स्रुवेणाघारमाघार्य । तिस्रः पराचीराहुतीर्हुत्वा । स्रुवेणोपसदं जुहोति०॥

[ २.२.२.६ ]— पत्नीर्व्याचष्टे[3]० उपसत्सु व्याचष्टे०॥

१. घर्मपात्रेषु साद्यमानेषु वैकल्पिकं प्रस्तोतृसाम । त्रिर्गायेत् । द्रष्टव्यं कौग्राम १६.२.१

२. प्रवर्ग्यशान्त्यर्थं प्रस्तोतृसाम । द्रष्टव्यं कौग्राम ५.१.२५

३. आग्नीध्रः । द्रष्टव्यं श्रौ. १ पृ. १२६

**मैसं [ १.२.७ ]—**

**या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा । त्वेषं वचो अपावधीरुग्रं वचो अपावधीः स्वाहा ॥ या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यै ते स्वाहा ॥**

[ ३.८.१–२ ]— तदुपसदामुपसत्त्वम्० यत्प्रातरुपसदमुपायन्० अष्टौ कृत्वो जुह्वां गृह्णाति चतुरुपभृति० सकृत् पराङतिक्रामति० अतिक्रम्याश्रावयति० स्रुवेणोपसदो जुहोति० एकामेकाहं जुहोत्येकामेकाहम्० तिस्र उपसदो जुहोति० अयः प्रथमायामवधाय जुहोति रजतं मध्यमायां हरितमुत्तमायाम्० यत्र पुरं युध्येयुस्तदेताभिर्जुहुयात्० यत्किंच प्राचीनमग्नीषोमीयात्तदुपांशु चरन्ति० सर्वे ऋत्विजा आप्याययन्ति० न होतारं वृणीते नार्षेयम्। **सीद होतः** इत्येवाह । चतुर्व्रतस्तिस्रः० त्रिव्रतस्तिस्रः० द्विव्रतस्तिस्रः० एकव्रतस्तिस्रः० एषा वै परोवरीयसी दीक्षा । कनीयो व्रतमुपैति० एकव्रतस्तिस्रो द्विव्रतस्तिस्रस्त्रिव्रतस्तिस्रश्चतुर्व्रतस्तिस्रः० एषा वा उत्क्रामन्ती स्वर्गकामस्य० तिस्र एवाग्निष्टोमस्योपसदः कार्या द्वादशाहीनस्य०॥

[ १.९.८ ]— [1]तान्येवाग्नीधेऽनुब्रूयात्० ॥

**कासं [ २.८ ]—**

**या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठा वर्षिष्ठा गह्वरेष्ठा उग्रं वचोऽपावधीत् त्वेषं वचोऽपावधीत् स्वाहा ॥**

[ २४.१० ]— य एवं विद्वानुपसद उपैति० द्वादशाहीनस्य कुर्यात्० तिस्रोऽग्निष्टोमस्य० ॥

[ २५.१ ]— सकृदेव पराङतिक्रम्याश्रावयति० न प्रयाजा भवन्ति नानुयाजाः० चतुर्व्रतो भवति० त्रिव्रतो भवति० द्विव्रतो भवति० एकव्रतो भवति० तिस्र उपसदो भवन्ति०॥

**कपिसं [ २.३ ] ≡ कासं २.८**

[ ३८.३–४ ] ≡ कासं २४.१०; २५.१

**वामासं—**

**या ते अग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत् त्वेषं वचो अपावधीत् स्वाहा ॥ ५.८**

माशब्रा [ ३.४.४.१–२७ ]—यदि प्रवर्ग्यवान् भवति । प्रवर्ग्येण प्रचर्याथोपसद्भिः प्रचरन्ति० ता वा आज्यहविषो भवन्ति० स वा अष्टौ कृत्वो जुह्वां गृह्णाति चतुरुपभृति० अथो इतरथाहुः । चतुरेव कृत्वो जुह्वां गृह्णीयात् अष्टौ कृत्व उपभृतीति० अन्यतरमेवाघारमाघारयति यद्वै स्रुवेण० अथाश्राव्य न होतारं प्रवृणीते । **सीद होतः** इत्येवाह । उपविशति होता होतृ-

1. देवपत्नीयजूंषि । द्रष्टव्यं श्रौ. १ पृ. १२९

षदने। उपविश्य प्रसौति। प्रसूतोऽध्वर्युः स्रुचावादत्ते। स आहातिक्रामन् **अग्नयेऽनुब्रूहि** इति। आश्राव्याह **अग्निं यज** इति। वषट्कृते जुहोति। अथाह **सोमायानुब्रूहि** इति। आश्राव्याह **सोमं यज** इति। वषट्कृते जुहोति। अथ यदुपभृत्याज्यं भवति। तत्समानयमान आह **विष्णवे-ऽनुब्रूहि** इति। आश्राव्याह **विष्णुं यज** इति। वषट्कृते जुहोति। स यत् समानत्र तिष्ठन् जुहोति। न यथेदं प्रचरन्त्संचरति० स वै तिस्र उपसद उपेयात्० द्विरेकया प्रचरति द्विरेकया। ताः षट् संपद्यन्ते० यद्यु द्वादशोपसद उपेयात्० द्विरेकया प्रचरति द्विरेकया। ताश्चतुर्विंशतिः संपद्यन्ते० स यत् सायंप्रातः प्रचरति० स यत् पूर्वाह्णे प्रचरति० अथ यज्जुहोति० स जुहोति यया द्विरेकस्याह्नः प्रचरिष्यन् भवति या ते अग्ने....अपावधीत् स्वाहेति० यद्यु द्वादशोपसद उपेयात् चतु-रहमेकया प्रचरेच्चतुरहमेकया। अथातो व्रतोपसदामेव। परउर्वीर्वा अन्या उपसदः परोऽह्वीरन्याः। स यासामेकं प्रथमाहं दोग्धि। अथ द्वौ। अथ त्रीन् ताः परउर्वीः। अथ यासां त्रीन् प्रथमाहं दोग्धि। अथ द्वौ अथैकं ताः परोऽह्वीः० तस्मादु परोऽह्वीरेवोपसद उपेयात्। यद्यु द्वादशो-पसद उपेयात् त्रींश्चतुरहं दोहयेत्। द्वौ चतुरहम्। एकं चतुरहम्॥

## वाकासं [ ५.२.८ ] ≡ वामासं

काशव्रा [ ४.४.४ ]– स यत् सायंप्रातः प्रचरति० यत् प्रातः प्रचरति० अथ यज्जु-होति० स प्रथमया द्विरेकया द्विरेकया प्रचरति ---॥

ऐव्रा [ १.२३–२६ ]–– देवासुरा वा एषु लोकेषु समयतन्त। ते वा असुरा इमानेव लोकान् पुरोऽकुर्वत यथौजीयांसो बलीयांस एवम्। ते वा अयस्मयीमेवेमामकुर्वत रजतामन्तरिक्षं हरिणीं दिवम्। ते तथेमाँल्लोकान् पुरोऽकुर्वत। ते देवा अब्रुवन् पुरो वा इमेऽसुरा इमाँल्लोकानक्रत पुर इमाँल्लोकान् प्रतिकरवामहा इति। तथेति। ते सद एवास्याः प्रत्यकुर्वताग्नीध्रमन्तरिक्षाद्धविर्धाने दिवः। ते तथेमाँल्लोकान् पुरः प्रत्यकुर्वत। ते देवा अब्रुवन्नुपसद उपायाम। उपसदा वै महापुरं जयन्तीति। तथेति। ते यामेव प्रथमामुप-सदमुपायंस्तयैवैनानस्माल्लोकादनुदन्त यां द्वितीयां तयान्तरिक्षाद्यां तृतीयां तया दिवः। तांस्तथैभ्यो लोकेभ्योऽनुदन्त। ते वा एभ्यो लोकेभ्यो नुत्ता असुरा ऋतूनश्रयन्त। ते देवा अब्रुव-न्नुपसद एवोपायामेति। तथेति। त इमास्तिस्रः सतीरुपसदो द्विर्द्विरेकैकामुपायन्। ताः षट् समपद्यन्त। षड् वा ऋतवः। तान् वा ऋतुभ्योऽनुदन्त। ते वा ऋतुभ्यो नुत्ता असुरा मासान-श्रयन्त। ते देवा अब्रुवन्नुपसद एवोपायामेति। तथेति। त इमाः षट् सतीरुपसदो द्विर्द्विरेकै-कामुपायन्। ता द्वादश समपद्यन्त। द्वादश वै मासाः। तान् वै मासेभ्योऽनुदन्त। ते वै मासेभ्यो नुत्ता असुरा अर्धमासानश्रयन्त। ते देवा अब्रुवन्नुपसद एवोपायामेति। तथेति। त इमा द्वादश सतीरुपसदो द्विर्द्विरेकैकामुपायन्। ताश्चतुर्विंशतिः समपद्यन्त। चतुर्विंशतिर्वा

अर्धमासाः। तान् वा अर्धमासेभ्योऽनुदन्त। ते वा अर्धमासेभ्यो नुत्ता असुरा अहोरात्रे अश्रयन्त। ते देवा अब्रुवन्नुपसदावेवोपायामेति। तथेति। ते यामेव पूर्वाह्ण उपसदमुपायं-स्तयैवैनानह्नोऽनुदन्त यामपराह्णे तया रात्रेः। तांस्तथोभाभ्यामहोरात्राभ्यामन्तरायन्। तस्मात्सुपूर्वाह्ण एव पूर्वयोपसदा प्रचरितव्यं स्वपराह्णेऽपरया० ते देवा अबिभयुरस्माकं विप्रेमाणमन्विदमसुरा आभविष्यन्तीति। ते व्युत्क्रम्यामन्त्रयन्त। अग्निर्वसुभिरुदक्रामदिन्द्रो रुद्रैर्वरुण आदित्यै-र्बृहस्पतिर्विश्वैर्देवैः ते तथा व्युत्क्रम्यामन्त्रयन्त। तेऽब्रुवन् हन्त या एव न इमाः प्रियतमा-स्तन्वस्ता अस्य वरुणस्य राज्ञो गृहे संनिदधामहै ताभिरेव नः स न संगच्छातै यो न एतदति-क्रामाद्य आलुलोभयिषादिति। तथेति। ते वरुणस्य राज्ञो गृहे तनूः संन्यदधत। ते यद्वरुणस्य राज्ञो गृहे तनूः संन्यदधत तत्तानूनप्त्रमभवत्। तत्तानूनप्त्रस्य तानूनप्त्रत्वम्। तस्मादाहुर्न सतानूनप्त्रिणे द्रोग्धव्यमिति० शिरो वा एतद्यज्ञस्य यदातिथ्यं ग्रीवा उपसदः। समानबर्हिषी भवतः० एता आज्यहविषो भवन्ति। सकृदतिक्रम्याश्रावयति० चतुरोऽग्रे स्तनान् व्रतमुपैत्युपसत्सु० त्रीन् स्तनान् व्रतमुपैत्युपसत्सु० द्वौ स्तनौ व्रतमुपैत्युपसत्सु० एकं स्तनं व्रतमुपैत्युपसत्सु० तद्यत् **अंशुरंशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वाप्याययास्मान्त्सखीन्। सन्या मेधया स्वस्ति ते देव सोम सुत्यामुदृचमशीय** इति राजानमाप्याययन्ति० तद्यत् **एष्टा राय एष्टा वामानि प्रेषे भगाय। ऋतमृतवादिभ्यो नमो दिवे नमः पृथिव्यै** इति प्रस्तरे निह्नवते०[१] ॥

शांब्रा [ ८.९ ]–आज्यहविषो देवताः पयोव्रतो यजमानः० ताः परोवरीयसीरभ्युपेयात् त्रीनग्रे स्तनानथ द्वावथैकम्० नाभ्युन्नयेत० सम्राजोऽस्मै भक्षे दध्यानयेयुर्न व्रते० ते यदि संक्रीणीयुर्या मध्यमोपसत्तया द्व्यहमन्यतरे चरेयुः० ॥

गोब्रा [ २.२.७–९ ]— द्वादशाहीनस्य कुर्यात्० तिस्रोऽग्निष्टोमस्योपसदः स्युः० अथ यत्राहाध्वर्युः **अग्नीद्देवपत्नीर्व्याचक्ष्व सुब्रह्मण्य सुब्रह्मण्यामाह्वय** इति तदपरेण गार्हपत्यं प्राङ्मुखस्तिष्ठन्ननवानन्नाग्नीध्रो देवपत्नीर्व्याचष्टे **पृथिव्यग्नेः पत्नी वाग्वातस्य पत्नी सेनेन्द्रस्य पत्नी धेना बृहस्पतेः पत्नी पथ्या पूष्णः पत्नी गायत्री वसूनां पत्नी त्रिष्टुब् रुद्राणां पत्नी जगत्यादित्यानां पत्न्यनुष्टुम्मित्रस्य पत्नी विराड्वरुणस्य पत्नी पङ्क्ति-र्विष्णोः पत्नी दीक्षा सोमस्य राज्ञः पत्नी** इति० ॥

१. तानूनप्त्रविषयकः सोमाप्यायनविषयकश्च अत्रत्योंऽशः ६२ पृष्ठमारभ्य मुद्रिते 'आतिथ्येष्ट्यादि' इतिसंज्ञके चतुर्दशे प्रकरणे यथास्थानमनुसंधेयः।

## २४. प्रथमपौर्वाह्णिकोपसद्धौत्रम्

ऋसं—

[1]उपसद्याय मीळ्हुष आस्ये जुहुता हविः। यो नो नेदिष्ठमाप्यम् ॥
यः पञ्च चर्षणीरभि निषसाद दमेदमे। कविर्गृहपतिर्युवा ॥
स नो वेदो अमात्यमग्नी रक्षतु विश्वतः। उतास्मान् पात्वंहसः ॥७.१५.१-३
[2]अग्निर्वृत्राणि जङ्घनद्‌द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुतः॥६.१६.३४
[3]य उग्र इव शर्यहा तिग्मशृङ्गो न वंसगः। अग्ने पुरो रुरोजिथ॥ ६.१६.३९
[4]त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतुः॥ १.९१.५
[5]गयस्फानो अमीवहा वसुवित् पुष्टिवर्धनः। सुमित्रः सोम नो भव॥१.९१.१२
[6]त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं दक्षैः सुदक्षो विश्ववेदाः।
त्वं वृषा वृषत्वेभिर्महित्वा द्युम्नेभिर्द्युम्न्यभवो नृचक्षाः ॥ १.९१.२
[7]अषाळ्हं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम्।
भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोम॥ १.९१.२१
[8]इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्। समूळ्हमस्य पांसुरे॥
[9]त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः।अतो धर्माणि धारयन्॥१.२२.१७-१८
[10]यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति।
यो जातमस्य महतो महि ब्रवत् सेदु श्रवोभिर्युज्यं चिदभ्यसत्॥ १.१५६.२
[11]तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन।
आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे॥ १.१५६.३

ऐब्रा [ १·२५ ]—उपसद्याय मीळ्हुषे० तिस्रः सामिधेन्यो रूपसमृद्धाः० जघ्निवतीर्याज्यानुवाक्याः कुर्यात् अग्निर्वृत्राणि जङ्घनत्, य उग्र इव शर्यहा, त्वं सोमासि सत्पतिः, गयस्फानो अमीवहा, इदं विष्णुर्वि चक्रमे, त्रीणि पदा वि चक्रम इत्येताः० सच्छन्दसः कर्तव्या न विच्छन्दसः० ॥

शांब्रा [ ८·८–९ ]— उपसद्याय मीळ्हुष इत्येतं तृचं पूर्वाह्णेऽनुब्रूयात्० अनवानमनुब्रूयात्० त्रिश्चिरेकैकामनुब्रूयात्० नैतं निगदं ब्रूयाद्य एष सामिधेनीषु० नावाहयेच्चनेति[12]

१. तिस्रः सामिधेन्यः। २. अग्नेः पुरोनुवाक्या। ३. याज्या। ४. सोमस्य पुरोनुवाक्या। ५. याज्या। ६. शाङ्खा० सोमस्यपुरोनुवाक्या। ७. शाङ्खा० सोमस्य याज्या। ८. विष्णोः पुरोनुवाक्या। ९. याज्या। १०. शाङ्खा० विष्णोः पुरोनुवाक्या। ११. शाङ्खा० याज्या। १२. '०चनेदिति' इति मुद्रितपाठः। परं कस्मिंश्चिल्लिखितपुस्तके '०च्चनेति' इति पाठ उपलभ्यते। स साधीयानिति स्वीकृतः।

हैक आहुः० ऋच एवावाहयेत् अग्निमावह सोममावह विष्णुमावह इति० । ता वै तिस्रो देवता यजति गायत्र्याग्नेय्यौ० त्रिष्टुभौ सौम्यौ० जगत्यौ वैष्णव्यौ० ॥

कासं [ २४·१० ]—सच्छन्दसो याज्यानुवाक्याः कुर्यात्० भिद्वतीः० ॥

कपिसं [ ३८·४ ] ≡ कासं

## २५. प्रथमपौर्वाह्णिकोपसदौद्गात्रं सुब्रह्मण्याह्वानं च

### अग्नेर्व्रतम्[1]

साजैसं [ १·३·७ ]—

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपा꣡रेता꣡सि जिन्वति ॥

**भ्राजावुवोवा भ्राजावुवो३ा भ्राजावुवोवा । अग्निर्मूर्धादीवःकाकुत्पतिःपृथिव्या-**
कीश कीश कीश थ्यच क्ययट चि क्यक

**आयम् । अपा꣡रेता꣡सिजायिन् वा तायि । भ्राजावु वो वा भ्राजावुवोवा भ्राजावुवोवा।**
यट क्य थ्यच क थ्ययिटश खितीश खितीश खि तृ

**एविश्वास्याज्जगतोज्योतीः ॥** [ आरण्य १.५.३ ]
त कि किल्या ख

### सोमव्रतम्[2]

साजैसं [ २·१·२ ]—

सं ते पया꣡सि समु यन्तु वाजाः सं वृष्णियान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवा꣡स्युत्तमानि धिष्व ॥

**ओओओसन्तेपया꣡सिसमुयन्तुवाजाः । संवृष्णियानीअभिमा तिषाहः ।**
टटट क की कुक्कु क किच चिचा शिशी

**आप्यायमानोअमृतायसोम । दिविश्रवा꣡र्सा उत्तमानिधात्स्वाओओआओहो वा ।**
क कीच चिरेशि कुक्कु क लूटथ टथट ट ख शिश

**ऊ ॥** [ आरण्य १.२.१ ]
ख

१. प्रधानयागकाले प्रस्तोतृसाम । त्रिर्गायेत् । द्रष्टव्यं कौआरण्य ६.१.१.

२. प्रधानयागकाले प्रस्तोतृसाम । त्रिर्गायेत् । द्रष्टव्यं कौआरण्य ४.१.१.

विष्णोर्व्रतम्[1]

साजैसं [ २.२.३ ]—

प्रक्षस्य वृष्णो अरुषस्य नू महः प्र नु वोचो विदथा जातवेदसे।
वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारुरग्नये ॥

हा'बुहा''बुहा''बु वूवूवूवुवा''हावुवा हास् । आहास् । अर्चिश्शोचिस्तपोहरः-
शुतु श शुतु श शुतु श ट ट ट ट्टिया ति च्य त चि पृ शृ
प्रक्षस्यवृष्णोअरुषस्यनूमाहाः । प्रनुवोचोविदथाजातवेदा'सायि। वैश्वानरायमति-
टे त ष टेटू त श
र्नव्यसेशुचीः । सोमइवपवतेचारुरग्नायायि । हा'बुहा''बुहा'बु वूवूवूवु'वा'हावुवा हास्।
रे टे त टे त शशि शुतु श शुतु श शुतु श ट ट ट ट्टिया ति च्य
आहास् । अर्चिश्शोचिस्तपोहरोहावुवा । ई ॥ [ आरण्य १.४.४ ]
त चि ष ट्टयू ती ख

षब्रा [ १.१–२ ]—उत्करे तिष्ठन्त्सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति सुब्रह्मण्यो३६ सुब्रह्मण्यो३६ सुब्रह्मण्यो३म् इति० इन्द्रागच्छ इति० हरिव आगच्छ इति० मेधातिथेर्मेष इति० वृषणश्वस्य मेने इति० गौरावस्कन्दिन् इति० अहल्यायै जार इति० कौशिकब्राह्मण इति० गौतमब्रुवाण इति० इत्यहे[2] सुत्यामागच्छ मघवन् इति० देवा ब्रह्माणः इति० सुब्रह्मण्यामाहूय यजमानं वाचयति सासि सुब्रह्मण्ये तस्यास्ते पृथिवी पादः इत्याह० सासि सुब्रह्मण्ये तस्यास्तेऽन्तरिक्षं पादः इत्याह० सासि सुब्रह्मण्ये तस्यास्ते द्यौः पादः इत्याह० सासि सुब्रह्मण्ये तस्यास्ते दिशः पादः इत्याह० परोरजास्ते पञ्चमः पादः इत्याह० सा न इषमूर्जं धुक्ष्व इत्याह० वीर्यमन्नाद्यं धेहि इत्याह०॥

तैब्रा [ ३.७.७.१२ ]—

[3]सासि सुब्रह्मण्ये । तस्यास्ते पृथिवी पादः । सासि सुब्रह्मण्ये । तस्यास्तेऽन्तरिक्षं पादः । सासि सुब्रह्मण्ये । तस्यास्ते द्यौः पादः । सासि सुब्रह्मण्ये । तस्यास्ते दिशः पादः । परोरजास्ते पञ्चमः पादः । सा न इषमूर्जं धुक्ष्व । तेज इन्द्रियम् । ब्रह्मवर्चसमन्नाद्यम् ॥

अशौसं—

यस्यां सदोहविर्धाने यूपो यस्यां निमीयते ।
ब्रह्माणो यस्यामर्चन्त्यृग्भिः साम्ना यजुर्विदः ।
युज्यन्ते यस्यामृत्विजः सोममिन्द्राय पातवे ॥

१. प्रधानयागकाले प्रस्तोतृसाम । त्रिर्गायेत् । द्रष्टव्यं कौआरण्य ४.२.७.
२. यावदहः तस्योहो यथा त्र्यहे, द्व्यहे । ३. यजमानो जपति ।

यस्यां पूर्वे भूतकृत ऋषयो गा उदानृचुः ।
सप्त सत्रेण वेधसो यज्ञेन तपसा सह ॥
सा नो भूमिरा दिशतु यद्धनं कामयामहे ।
भगो अनुप्रयुङ्क्तामिन्द्र एतु पुरोगवः ॥ १२.१.३८–४०

अपैसं—

ब्रह्माणो यस्या .... । सा नो भूमिर्दक्षिणायां सुशेवा यज्ञे दधातु सुमनस्यमाना ॥ यस्यां पूर्वे .... । सा नः पशून् विश्वरूपान् दधातु जरदष्टिं मा पृथिवी कृणोतु ॥ १७.४.९–१० ॥ सा नो भूमिरा .... इन्द्रो यातु पुरोगवः ॥१७.४.८॥

## २६. प्रथमापराह्णिकप्रवर्ग्यः

तैआ [ ४.१० ]—

रात्रिर्ज्योतिः केतुना जुषताम् । सुज्योतिर्ज्योतिषा॒ स्वाहा ॥ अपीपरो माह्नो रात्रियै मा पाहि । एषा ते अग्ने समित् । तया समिध्यस्व । आयुर्मे दाः । वर्चसा माञ्जीः ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥ स्वाहा त्वा नक्षत्रेभ्यः ॥

[ ५.८ ]—स्वाहा त्वा नक्षत्रेभ्य इति सायम् ॥

मैसं [ ४.९.८,९ ]—

रात्रिः केतुना जुषता॑ स्वर्ज्योतिर्जुषता॑ स्वाहा ॥ रात्र्यै स्वाहा ॥

[ ४.९.२७ ]—

शं नो वातोऽभिवातु शं नस्तपतु सूर्यः ।
अहानि शं भवन्तु नः श॑ रात्री प्रतिधीयताम् ॥

पृथिवी शान्तिः सौषधीभिः शान्तिरन्तरिक्ष॑ शान्तिस्तद्वायुना शान्तिर्द्यौः शान्तिः सा वृष्ट्या शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिर्ब्राह्मणाः शान्तिः शान्तिः सर्वशान्तिस्त्वयाह॑ शान्त्या सर्वशान्त्या मह्यं द्विपदे च चतुष्पदे च शान्तिं करोमि शान्तिर्बभूव शान्तिरसि शान्तिर्नो अस्त्वभयं नो अस्तु ॥

वामासं—

रात्रिः केतुना जुषता॑ सुज्योतिर्ज्योतिषा स्वाहा ॥ ३७.२१, ३८.१६

माशब्रा [१४.२.१.१; १४.२.२.४१]—अथातो रौहिणौ जुहोति॰ रात्रिः केतुना जुषता॑ सुज्योतिर्ज्योतिषा स्वाहेति । उभावेतेन यजुषा सायम् ॥

वाकासं—[ ३७.३.७; ३८.३.२ ] = वामासं

काशब्रा [ १६.२.१.१-५; १६.२.२.३१ ] = माशब्र

## २७. प्रथमापराह्णिकप्रवर्ग्यहौत्रम्

ऋसं—

यदुस्रियास्वाहुतं घृतं पयोऽयं स वामश्विना भाग आगतम् ।
माध्वी धर्तारा विदथस्य सत्पती तप्तं घर्मं पिबतं सोम्यं मधु ॥ आश्वश्रौ ४.७.४
अस्य पिबतमश्विना युवं मदस्य चारुणः । मध्वो रातस्य धिष्ण्या ॥८.५.१४
तं घेमित्था नमस्विन उप स्वराजमासते ।
होत्राभिरग्निं मनुषः समिन्धते तितिर्वांसो अति स्रिधः ॥ १.३६.७

ऐब्रा [१.२२]–यः यदुस्रियास्वाहुतं घृतं पयः, अस्य पिबतमश्विनेत्यपराह्णे यजति। अग्ने वीहि इत्यनुवषट्करोति० ॥

ऋसं—

आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः ।
अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छ ॥
न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।
दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शंभविष्ठा ॥
उता यातं संगवे प्रातरह्नो मध्यंदिन उदिता सूर्यस्य ।
दिवा नक्तमवसा शंतमेन नेदानीं पीतिरश्विना ततान ॥
इदं हि वां प्रदिवि स्थानमोक इमे गृहा अश्विनेदं दुरोणम् ।
आ नो दिवो बृहतः पर्वतादाद्भ्यो यातमिषमूर्जं वहन्ता ॥
समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम ।
आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानि ॥ ५.७६
अस्य पिबतमश्विना .... ॥ ८.५.१४ ॥ यदुस्रियास्वाहुतं .... सु वामश्विना ... । माध्वी .... पिबतं रोचने दिवः ॥ शांश्रौ ५.१०.२१

शांब्रा [ ८.६–७ ]–आ भात्यग्निरुषसामनीकमित्यपराह्णे० जगद्वतीभ्यामपराह्णे ॥

## २८. प्रथमापराह्णिकोपसदादि

माशब्रा [ ३.४.४.२१-२३ ]–स यत् सायंप्रातः प्रचरति० अथ यदपराह्णे प्रचरति० अथ यज्जुहोति० स जुहोति यया द्विरेकस्याह्नः प्रचरिष्यन् भवति या ते अग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत् स्वाहेति ॥

काशब्रा [ ४.४.४.१०–११ ]— अथ यत्सायं प्रचरति० अथ यज्जुहोति० स प्रथमया द्विरेकया द्विरेकया प्रचरति । स जुहोति यां ते अग्नेऽयःशया....इति ॥

## २९. प्रथमापराह्णिकोपसद्धौत्रम्

ऋसं—

इमां मे अग्ने समिधमिमामुपसदं वनेः । इमा उ षु श्रुधी गिरः ॥
अया ते अग्ने विधेमोर्जो नपादश्वमिष्टे । एना सूक्तेन सुजात ॥
तं त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः । सपर्येम सपर्यवः ॥ २.६.१–३

ऐब्रा [ १.२३ ]—सुपूर्वाह्ण एव पूर्वयोपसदा प्रचरितव्यं स्वपराह्णेऽपरया० ॥

[ १.२५ ]—इमां मे अग्ने समिधमिमामुपसदं वनेरिति० तिस्रः सामिधेन्यो रूपसमृद्धाः० विपर्यस्ताभिरपराह्णे यजति ॥

शां । [ ८.८ ]—इमां मे अग्ने समिधमित्यपराह्णे० ॥

[ ८.९ ]—ता वै विपर्यस्यति । याः पूर्वाह्णे पुरोनुवाक्यास्ता अपराह्णे याज्याः करोति या याज्यास्ताः पुरोनुवाक्याः० ॥

तैसं [ ६.२.३ ]—यत्सायं प्रातरुपसद उपसद्यन्ते० याः प्रातर्याज्याः स्युस्ताः सायं पुरोनुवाक्याः कुर्यात्० ॥

मैसं [ ३.८.१ ]—यत्सायमुपसदमुपायन्० याः सायमनुवाक्यास्ताः प्रातर्याज्याः स्युर्याः प्रातरनुवाक्यास्ताः सायँ याज्याः स्युः ॥

माशब्रा [३.४.४.२]—तद्याः पूर्वाह्णेऽनुवाक्या भवन्ति ता अपराह्णे याज्या या याज्यास्ता अनुवाक्याः० ॥

काशब्रा [ ४.४.४ ] ≡ माशब्रा

## ३०. प्रथमापराह्णिकोपसदौद्गात्रं सुब्रह्मण्याह्वानं च

### अग्नेर्व्रतम्[1]

### सोमव्रतम्[2]

साजैसं [ २.१.२ ]—

सं ते पयाँसि समु यन्तु वाजाः सं वृष्णियान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवाँस्युत्तमानि धिष्व ॥

१. १३५ पृष्ठे मुद्रितं प्रथमपौर्वाह्णिकोपसदि गेयं साम अत्रापि गेयम् ।
२. प्रधानयागकाले प्रस्तोतृसाम । त्रिर्गायेत् । द्रष्टव्यं कौआरण्य ५.१.११

एएएसंतेपयार्ंसिसमुयन्तुवाजाः । संवृष्णियानीअभिमातिषाहः ।
टटट कको कुकु किच चिचा शिशी
आप्यायमानोअमृतायसोम । दिविश्रवार्ंसीउत्तमानि धात्स्व ए एंआओहोवा ।
क कीच चिरे शि कुकु कलू टय टयटट क शि
ई ॥ [ आरण्य १.२.२ ]
ख

## विष्णोर्व्रतम्[1]

## ३१. मध्यमपौर्वाह्णिकप्रवर्ग्योपसदौ

तैआ [ ४.१० ]—

अहर्ज्योतिः केतुना जुषताम् । सुज्योतिर्ज्योतिषा२ स्वाहा ॥

अपीपरो मा रात्रिया अह्नो मा पाहि । एषा ते अग्ने समित् । तया समिध्यस्व । आयुर्मे दाः । वर्चसा माञ्जीः ॥ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ॥

तैसं [ १.२.११ ]—

या ते अग्ने रजाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधी२ स्वाहा ॥

मैसं [ १.२.७ ]—

या ते अग्ने रजाशया तनूर्वर्षिष्ठा गहनेष्ठा । त्वेषꣳ वचो अपावधीरुग्रꣳ वचो अपावधीः स्वाहा ॥

कासं [ २.८ ]—

या ते अग्ने रजाशया तनूर्वर्षिष्ठा गहनेष्ठा वर्षिष्ठा गह्वरेष्ठा उग्रं वचोऽपावधीत् त्वेषं वचोऽपावधीत् स्वाहा ॥

कपिसं [ २.३ ] ≡ कासं

वामासं—

या ते अग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत् स्वाहा ॥ ५.८

माशब्रा [ ३.४.४.२४ ]—अथ जुहोति । यया द्विरेकस्याह्नः प्रचरिष्यन् भवति या ते अग्ने.... अपावधीत् स्वाहेति ॥

१. १३६ पृष्ठे मुद्रितं प्रथमपौर्वाह्णिकोपसदि गेयं साम अत्रापि गेयम् ।

वाकासं [ ५.२.८ ] ≡ वामासं

काशश्रा [ ४.४.४.११,१२ ] अथापरया द्विरेकया द्विरेकया प्रचरति । स जुहोति या ते अग्ने रजःशया.... इति ॥

शांश्रा [ ८.८ ]–अथ द्वितीयेऽहनि इमां मे अग्ने समिधमिति पूर्वाह्ने० अहरहर्विपर्यासमनुब्रूयात्० ॥

## शार्ङ्गम्[1]

साजैसं [ १.५७.११ ]—

अञ्जते व्यञ्जते समञ्जते क्रतुꣳ रिहन्ति मध्वाभ्यञ्जते ।

सिन्धोरुच्छ्वासे पतयन्तमुक्षणꣳ हिरण्यपावाः पशुमप्सु गृभ्णते ॥

अञ्जाहोतया॰॰होयि॰॰व्य॰ञ्ज॰ते॰सामञ्जतायि । क्रतुꣳ॰होयिरिहाहोन्तिमध्वाभिय-
त्यता च क्यता क्थकि ख्यखा चचा फ श ट्य च श त्य क्य
ञ्जतायि । सिन्धो हों॰उच्छ्वाहोसे॰पतयान्तमुक्षाणम् । हिरा॰॰होण्यपाहोवाः॰पशुमप्सु-
क फ श तचता क्यका खि चा क फ क्यता च त्यता क्यका
गृभ्णातायि ॥ [ ग्राम ३.९.२२ ]
खू तृ श

## ३२. महावेदिकरणम् उत्तरवेदिनिवपनं च

तैसं [ १.२.१२ ]—

वित्तायनी मेऽसि ॥ तिक्तायनी मेऽसि ॥ अवतान्मा नाथितम् ॥ अवतान्मा व्यथितम् ॥ विदेरग्निर्नभो नामाग्ने अङ्गिरो योऽस्यां पृथिव्यामसि ॥ आयुषा नाम्नेहि ॥ यत् तेऽनाधृष्टं नाम यज्ञियं तेन त्वादधे ॥ [विदेरग्निर्नभो नाम ] अग्ने अङ्गिरो यो द्वितीयस्यां [पृथिव्यामसि ॥ आयुषा नाम्नेहि ॥ यत् तेऽनाधृष्टं नाम यज्ञियं तेन त्वादधे ॥ विदेरग्निर्नभो नामाग्ने अङ्गिरो यस्] तृतीयस्यां पृथिव्यामसि ॥ आयुषा नाम्नेहि ॥ यत् तेऽनाधृष्टं नाम यज्ञियं तेन त्वादधे ॥ सिꣳहीरसि महिषीरसि ॥ उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् ॥ ध्रुवासि ॥ देवेभ्यः शुन्धस्व ॥ देवेभ्यः शुम्भस्व ॥

[ ६.२.४ ]–त्रिꣳशत् पदानि पश्चात् तिरश्ची भवति षट्त्रिꣳशत् प्राची चतुर्विꣳशतिः पुरस्तात् तिरश्ची० उद्धन्ति० बर्हिः स्तृणाति० उत्तरं बर्हिष उत्तरबर्हिः स्तृणाति० ॥

[ ६.२.७ ]–शम्यया परि मिमीते० त्रिर्हरति० तूष्णीं चतुर्थꣳ हरति० ध्रुवासीति सꣳहन्ति० देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्वेत्यव चोक्षति प्र च किरति० ॥

1. महावीरेऽज्यमाने प्रस्तोतुः साम । द्रष्टव्यं कौमांसं १६.२.३२

तैब्रा [ ३.७.७.१३–१४ ]—

विमिमे त्वा पयस्वतीम् । देवानां धेनु सुदुघामनपस्फुरन्तीम् ।
इन्द्रः सोमं पिबतु । क्षेमो अस्तु नः ॥

इमां नराः कृणुत वेदिमेत्य । वसुमतीं रुद्रवतीमादित्यवतीम् । वर्ष्मन् दिवः । नाभा पृथिव्याः । यथायं यजमानो न रिष्येत् । देवस्य सवितुः सवे ॥

चतुःशिखण्डा युवतिः सुपेशाः । घृतप्रतीका भुवनस्य मध्ये ।
तस्यां सुपर्णावधि यौ निविष्टौ । तयोर्देवानामधि भागधेयम् ॥

[ १.५.१० ]—एष वाव स समुद्रः यच्चात्वालः० तस्मात्तं त्रिवितस्तं खनन्ति ॥

मैसं [ १.२.८ ]—

तप्तायनी मेऽसि ॥ वित्तायनी मेऽसि ॥ अवतान्मा नाथितम् ॥ अवताद्व्यथितम् ॥ अग्ने अङ्गिरो योऽस्यां पृथिव्यामध्यसि ॥ आयुना नाम्नेहि ॥ वसवस्त्वा हरन्तु गायत्रेण छन्दसा वित्स्व यज्ञपतेर्यत्तेऽनाधृष्टं धामानाधृष्यं तेन त्वादधे ॥ अग्ने अङ्गिरो यो द्वितीयस्यां पृथिव्यामध्यसि ॥ आयुना नाम्नेहि ॥ रुद्रास्त्वा हरन्तु त्रैष्टुभेन छन्दसा वित्स्व यज्ञपतेर्यत्तेऽनाधृष्टं धामानाधृष्यं तेन त्वादधे ॥ अग्ने अङ्गिरो यस्तृतीयस्यां पृथिव्यामध्यसि ॥ आयुना नाम्नेहि ॥ आदित्यास्त्वा हरन्तु जागतेन छन्दसा वित्स्व यज्ञपतेर्यत्तेऽनाधृष्टं धामानाधृष्यं तेन त्वादधे ॥ विदेरग्ने नभो नाम यत्ते ॥ सिंहीरसि महिषीरसि ॥ देवेभ्यः शुन्धस्व ॥ देवेभ्यः शुम्भस्व ॥

[३.८.३–४]—महती कार्या ज्यायसी ज्यायसी० तद्य एवं विद्वान् वेदिं चोत्तरवेदिं च कुरुते० षट्त्रिंशत्प्रक्रमाः प्राची चतुर्विंशतिरग्रेण त्रिंशज्जघनेन० ॥

कासं [ २.९ ]—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसि ॥ इदमहं रक्षसो ग्रीवा अपिकृन्तामीदमहं यो नस्समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्तामि ॥ तप्तायन्यसि ॥ वित्तायन्यसि ॥ अवतान्मा नाथितम् ॥ अवताद् व्यथितम् ॥ अग्ने अङ्गिरो योऽस्यां पृथिव्यामस्यायुना नाम्नेहि यत्तेऽनाधृष्टं नामानाधृष्यं तेन त्वादधे ॥ अग्ने अङ्गिरो यो द्वितीयस्यां [ पृथिव्यामस्यायुना नाम्नेहि यत्तेऽनाधृष्टं नामानाधृष्यं तेन त्वादधे ॥ अग्ने अङ्गिरो] यस्तृतीयस्यां पृथिव्यामस्यायुना नाम्नेहि यत्तेऽनाधृष्ट नामानाधृष्यं तेन त्वादधे ॥ विदेदग्निर्नभो नाम ॥ सिंह्यसि महिष्यसि ॥ देवेभ्यः प्रथस्व ॥ देवेभ्यः कल्पस्व ॥ देवेभ्यः शुन्धस्व ॥ देवेभ्यः शुम्भस्व ॥ विभ्राड् बृहत् पिबतु सोम्यं मध्वायुर्दधद्यज्ञपता अविहुतम् । वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा विराजति ॥

[२५.४–६]– वेदिं विमिमीते त्रिंशता पश्चात् प्रक्रमैर्मिमीते षट्त्रिंशता प्राचीं चतुर्विंशत्या पुरस्तात्० स्फ्येन स्तम्बयजुर्हरति० त्रिर्हरति० तूष्णीं चतुर्थं हरति० मूलं छिनत्ति० उद्घ्नन्ति० नातिखेयेति । आ प्रतिष्ठायाः खनेत्० दक्षिणत उद्वनं कुर्यात्० पुरीषवतीम्० स्फ्येन वेदिं परिगृह्णाति० वसवस्त्वा परिगृह्णन्तु गायत्रेण च्छन्दसा इति दक्षिणतः० रुद्रास्त्वा परिगृह्णन्तु त्रैष्टुभेन च्छन्दसा इति पश्चात्० आदित्यास्त्वा परिगृह्णन्तु जागतेन च्छन्दसा इत्युत्तरात्० पुरा क्रूरस्य विसृपो विरप्शिन् इति० दश पश्चात् तिरश्ची पदानि भवन्ति दशोभयतः प्राची । अपरिमिता पुरस्तात्० यदुत्तरवेदिं निर्वपति० जानुदघ्नं खेयम्० देवेभ्यः प्रथस्वेति प्रथयति० देवेभ्यः कल्पस्वेति कल्पयति० देवेभ्यश्शुन्धस्वेति शुन्धति० देवेभ्यश्शुम्भस्वेति शुम्भति० विभ्राड् बृहत् पिबतु सोम्यं मध्वित्यन्तान् कल्पयति० यन्निस्सारयति० ॥

कपिसं [२.३]–

---॥ इदमहं रक्षसो ग्रीवा अपिकृन्तामि ॥ तप्तायन्यसि ॥---॥ अवतान्मा व्यथितम् ॥ --- ॥ विभ्राड् .... यज्ञपतावविहृतम् । .... अभिरक्षतु त्मना प्रजां .... विराजति ॥ पितॄणां भागधेयी स्थ ॥

कपिसं [३९.१–४] ≡ कासं

वाम्रासं —

तप्तायनी मेऽसि ॥ वित्तायनी मेऽसि ॥ अवतान्मा नाथितात् ॥ अवतान्मा व्यथितात् ॥ विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहि ॥ योऽस्यां पृथिव्यामसि ॥ यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादधे ॥ विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहि ॥ यो द्वितीयस्यां पृथिव्यामसि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादधे ॥ विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहि ॥ यस्तृतीयस्यां पृथिव्यामसि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादधे ॥ अनु त्वा देववीतये ॥ सिꣳह्यसि सपत्नसाही देवेभ्यः कल्पस्व ॥ सिꣳह्यसि सपत्नसाही देवेभ्यः शुन्धस्व ॥ सिꣳह्यसि सपत्नसाही देवेभ्यः शुम्भस्व ॥ ५.९–१०

माशब्रा [३.५.१]— तद् य एष पूर्वार्ध्यो वर्षिष्ठः स्थूणाराजो भवति । तस्माद् प्राङ् प्रक्रामति त्रीन् विक्रमान् तच्छङ्कुं निहन्ति सोऽन्तःपातः । तस्मान्मध्यमाच्छङ्कोः दक्षिणा पञ्चदश विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति सा दक्षिणा श्रोणिः । तस्मान्मध्यमाच्छङ्कोरुदङ् पञ्चदश विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति सोत्तरा श्रोणिः । तस्मान्मध्यमाच्छङ्कोः प्राङ् षट्त्रिंशतं विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति स पूर्वार्धः । तस्मा-

न्मध्यमाच्छङ्कोर्दक्षिणा द्वादश विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति स दक्षिणोऽंसः। तस्मान्मध्यमाच्छङ्कोरुदङ् द्वादश विक्रमान् प्रक्रामति तच्छङ्कुं निहन्ति स उत्तरोऽंसः। एषा मात्रा वेदेः। अथ यत् त्रिंशद्विक्रमा पश्चाद् भवति० अयो अपि त्रयस्त्रिंशत् स्युः०. अथ यत् षट्त्रिंशद्विक्रमा प्राची भवति० अथ यत् चतुर्विंशतिविक्रमा पुरस्ताद्भवति० अथ यत् पश्चाद्वरीयसी भवति० नासिका ह वा एषा यज्ञस्य यदुत्तरवेदिः। अथ यदेनामुत्तरां वेदेरुपकिरति तस्मादुत्तरवेदिर्नाम० अथ यदुत्तरवेदिमुपकिरति० तां वै युगशम्येन विमिमीते० अथ शम्यां च स्फ्यं चादत्ते। तद् य एष पूर्वार्ध्ये उत्तरार्ध्यः शङ्कुर्भवति तस्मात् प्रत्यङ् प्रक्रामति त्रीन् विक्रमान्। तच्चात्वालं परिलिखति। सा चात्वालस्य मात्रा। नात्र मात्रास्ति। यत्रैव स्वयं मनसा मन्येताग्रेणोत्करं तच्चात्वालं परिलिखेत्। स वेद्यन्तादुदीचीं शम्यां निदधाति। स परिलिखति तप्तायनी मेऽसीति० अथ पुरस्तादुदीचीं शम्यां निदधाति स परिलिखति वित्तायनी मेऽसीति० अथानुवेद्यन्तं प्राचीं शम्यां निदधाति। स परिलिखति अवतान्मा नाथितादिति० अथोत्तरतः प्राचीं शम्यां निदधाति। स परिलिखति अवतान्मा व्यथितादिति० अथ हरति। यत्र हरति तद् अग्नीदुपसीदति० स प्रहरति विदेदग्निर्नभो नामाग्ने अङ्गिर आयुना नाम्नेहीति० योऽस्यां पृथिव्यामसीति हृत्वा निदधाति यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वादध इति० अनु त्वा देववीतय इति चतुर्थं हरति० अथानुव्यूहति सिंह्यसि सपत्नसाही देवेभ्यः कल्पस्वेति० तां वै युगमात्रीं वा सर्वतः करोति। यजमानस्य वा दशदश पदानि० मध्ये नाभिकामिव करोति० तामद्भिरभ्युक्षति० सोऽभ्युक्षति सिंह्यसि सपत्नसाही देवेभ्यः शुन्धस्वेति। अथ सिकताभिरनुविकिरति० सोऽनुविकिरति सिंह्यसि सपत्नसाही देवेभ्यः शुम्भस्वेति। अथैनां छादयति सा छन्नैतां रात्रिं वसति॥

बाकासं—

--- ॥ अवतान्मा व्यथितम् ॥ अवतान्मा नाथितम् ॥ विदेरग्नेर्नभो नाम .... ॥ विदेरग्नेर्नभो नाम.... ॥ विदेरग्नेर्नभो नाम.... ॥ --- ॥ ५.३.१–२

काशब्रा [ ४.५.१ ] --- अथ द्वितीयं प्रहरति विदेरग्नेर्नभो नाम .... इति० तदेनं समीरयति यो द्वितीयस्यां पृथिव्यामसीति० तं हरति पराहृत्य निदधाति यत्तेऽनाधृष्टं नाम .... इति० अथ तृतीयं प्रहरति विदेरग्नेर्नभो नाम .... इति० तदेनं समीरयति यस्तृतीयस्यां पृथिव्यामसीति० तं हरति पराहृत्य निदधाति यत्तेऽनाधृष्टं नाम .... इति० अनु त्वा देववीतय इति चतुर्थं हरति --- ॥

अशौसं—

वि मिमीष्व पयस्वतीं घृताचीं देवानां धेनुरनपस्पृगेषा ।
इन्द्रः सोमं पिबतु क्षेमो अस्त्वग्निः प्र स्तौतु वि मृधो नुदस्व ॥ १३.१.२७
यस्यां वेदिं परिगृह्णन्ति भूम्यां यस्यां यज्ञं तन्वते विश्वकर्माणः ।
यस्यां मीयन्ते स्वरवः पृथिव्यामूर्ध्वाः शुक्रा आहुत्याः पुरस्तात् ।
सा नो भूमिर्वर्धयद्वर्धमाना ॥ १२.१.१३

अपैसं—

वि मिमीष्व .... ॥ १८.१७.७ ॥ यस्यां वेदिं परिगृह्णन्तु .... भूमिर्वर्धयातु वर्धमाना ॥ १७.२.४

## ३३. मध्यमापराह्णिकप्रवर्ग्योपसदौ

तैआ [ ४.१० ]—

रात्रिर्ज्योतिः केतुना जुषताम् । सुज्योतिर्ज्योतिषा॑ स्वाहा ॥

अपीपरो माह्नो रात्रियै मा पाहि ॥ एषा ते अग्ने समित् । तया समिध्यस्व । आयुर्मे दाः । वर्चसा माञ्जीः ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥ स्वाहा त्वा नक्षत्रेभ्यः ॥

[ ५.८ ]—स्वाहा त्वा नक्षत्रेभ्य इति सायम्० ॥

शांब्रा [ ८.८ ]—( अथ द्वितीयेऽहनि ) उपसद्याय मीळ्हुष इत्यपराह्णे० ॥

## ३४. उत्तमपौर्वाह्णिकापराह्णिकप्रवर्ग्योपसदौ

तैसं [ १.२.११ ]—

या ते अग्ने हराशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधी॑ स्वाहा ॥

मैसं [ १.२.७ ]—

या ते अग्ने हराशया तनूर्वर्षिष्ठा गह्वरेष्ठा । त्वेष॑ वचो अपावधीरुग्र॑ वचो अपावधीः स्वाहा ॥

कासं [ २.८ ]—

या ते अग्ने हराशया तनूर्वर्षिष्ठा गह्वरेष्ठा वर्षिष्ठा गह्वरेष्ठा उग्रं वचोऽपावधीत् त्वेषं वचोऽपावधीत् स्वाहा ॥

कपिसं [ २.३ ] ≡ कासं

वामासं—

या ते अग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा । उग्रं वचो अपावधीत् त्वेषं वचो अपावधीत् स्वाहा ॥ ५.८

माशब्रा [ ३.४.४.२५ ]—अथ जुहोति यया द्विरेकस्याह्नः प्रचरिष्यन् भवति । या ते अग्ने हरिशया ..... अपावधीत् स्वाहेति ॥

वाकासं—

या ते अग्ने हरीशया .... ॥ ५.२.८

काशब्रा [ ४.४.४.१२-१३ ]—अथापरया द्विरेकया द्विरेकया प्रचरति। स जुहोति या ते अग्ने हरीशया .... इति ॥

ऋसं—

हविर्हविष्मो महि सद्म दैव्यं नभो वसानः परि यास्यध्वरम् ।
राजा पवित्ररथो वाजमारुहः सहस्रभृष्टिर्जयसि श्रवो बृहत् ॥ ९.८३.५

ऐब्रा [ १.२२ ]—हविर्हविष्मो महि सद्म दैव्यमिति यदहरुत्सादयिष्यन्तो भवन्ति ॥

शार्ङ्गम्[१]

साजैसं [ १.५७.११ ]—

अञ्जते व्यञ्जते समञ्जते क्रतुꣳ रिहन्ति मध्वाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षणꣳ हिरण्यपावाः पशुमप्सु गृभ्णते ॥

हावञ्जातायि । व्यञ्जतेसमञ्जताएहियाए हिया'' हाबुक्रतुम् । रायिहन्ति-
ति पा शणा तहु व्यट ख्यखा शी प

मध्वाभ्यञ्जाताएहियाएहियाहाबुसायिन्धोः । उच्छ्वासेपतयन्तमुक्षाणम्एहिया-
ण चृहु व्य ता ट खा शु प णा चृह्यु व्य ता

एहियाहाबुहायिरा । ण्यापावाःपशुमप्सुगृभ्णाताएहिया एहियाहाबु। होयिळा ॥
ट खा शु प णा ह्यु चृ टय त ट खा प्य श ण्या शश्य

[ ग्राम ३.९.३३ ]

---

१. महावीरेऽज्यमाने प्रस्तोतृसाम । त्रिर्गायेत् । द्रष्टव्यं कौग्राम १६.१.३३

## ३५. प्रवर्ग्योद्वासनम्

तैआ [ ४.११-१३ ]—

घर्म या ते दिवि शुक् । या गायत्रे छन्दसि । या ब्राह्मणे । या हविर्धाने । तां त एतेनावयजे स्वाहा ॥ घर्म या तेऽन्तरिक्षे शुक् । या त्रैष्टुभे छन्दसि । या राजन्ये । याग्नीध्रे । तां त एतेनावयजे स्वाहा ॥ घर्म या ते पृथिव्याꣳ शुक् । या जागते छन्दसि । या वैश्ये । या सदसि । तां त एतेनावयजे स्वाहा ॥

अनु नोद्यानुमतिर् [ यज्ञं देवेषु मन्यताम् ।
अग्निश्च हव्यवाहनो भवतां दाशुषे मयः ॥ ]
अन्विदनुमते त्वं [ मन्यासै शं च नः कृधि ।
क्रत्वे दक्षाय नो हिनु प्र ण आयूꣳषि तारिषः ॥ ]

दिवस्त्वा परस्पायाः । अन्तरिक्षस्य तनुवः पाहि । पृथिव्यास्त्वा धर्मणा । वयमनुक्रामाम सुविताय नव्यसे ॥ ब्रह्मणस्त्वा परस्पायाः । क्षत्रस्य तनुवः पाहि । विशस्त्वा धर्मणा । वयमनुक्रामाम सुविताय नव्यसे ॥ प्राणस्य त्वा परस्पायै । चक्षुषस्तनुवः पाहि । श्रोत्रस्य त्वा धर्मणा । वयमनुक्रामाम सुविताय नव्यसे ॥ वल्गुरसि शंयुधायाः । शिशुर्जनधायाः । शं च वक्षि परि च वक्षि ॥ चतुःस्रक्तिर्नाभिर्ऋतस्य । सदो विश्वायुः शर्म सप्रथाः । अप द्वेषो अप ह्वरः । अन्यद् व्रतस्य सश्चिम ॥ घर्मैतत्तेऽन्नमेतत् पुरीषम् । तेन वर्धस्व चा च प्यायस्व । वर्धिषीमहि च वयम् । आ च प्यासिषीमहि ॥ रन्तिर्नामासि दिव्यो गन्धर्वः । तस्य ते पद्वद्धविर्धानम् । अग्निरध्यक्षाः । रुद्रोऽधिपतिः । समहमायुषा । सं प्राणेन । सं वर्चसा । सं पयसा । सं गौपत्येन । सꣳ रायस्पोषेण । व्यसौ । योऽस्मान् द्वेष्टि । यं च वयं द्विष्मः ॥ अचिक्रदद् वृषा हरिः । महान् मित्रो न दर्शतः । सꣳ सूर्येण रोचते । चिदसि समुद्रयोनिः । इन्दुर्दक्षः श्येन ऋतावा । हिरण्यपक्षः शकुनो भुरण्युः । महान्त्सधस्थे ध्रुव आनिषत्तः । नमस्ते अस्तु मा मा हिꣳसीः ॥ विश्वावसुꣳ सोमगन्धर्वम् । आपो ददृशुषीः । तदृतेना व्यायन् । तदन्ववैत् । इन्द्रो रारहाण आसाम् । परि सूर्यस्य परिधीꣳरपश्यत् । विश्वावसुरभि तन्नो गृणातु । दिव्यो गन्धर्वो रजसो विमानः । यद्वा घा सत्यमुत यन्न विद्म । धियो हिन्वानो धिय इन्नो अव्यात् । सस्निमविन्दच्चरणे नदीनाम् । अपावृणोद् दुरो अश्मव्रजानाम् । प्रासां गन्धर्वो अमृतानि वोचत् । इन्द्रो दक्षं परिजानादहीनम् ॥ एतत्त्वं देव घर्म देवो देवानुपागाः । इदमहं मनुष्यो मनुष्यान् । सोमपीथानु मेहि । सह प्रजया सह

रायस्पोषेण ॥ सुमित्रा न आप ओषधयः सन्तु ॥ दुर्मित्रास्तस्मै भूयासुः । योऽस्मान् द्वेष्टि । यं च वयं द्विष्मः ॥

उद्वयं तमसस्परि [ पश्यन्तो ज्योतिरुत्तरम् ।

देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ ]

उदु त्यं [ जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम् ॥ ]

चित्रं [देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।

आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ॥ ]

इममू षु त्यमस्मभ्यꣳ सनिम् । गायत्रं नवीयाꣳसम् । अग्ने देवेषु प्रवोचः ॥ महीनां पयोऽसि विहितं देवत्रा । ज्योतिर्भा असि वनस्पतीनामोषधीनाꣳ रसः । वाजिनं त्वा वाजिनोऽवनयामः ॥ ऊर्ध्वं मनः सुवर्गम् ॥

[ ५.९-१२ ]—घर्म या ते दिवि शुगिति तिस्र आहुतीर्जुहोति० इत्यग्रे जुहोति । अथेयत्यथेयति० प्राञ्चमुद्वासयति० शफोपयमान् भवित्राणि धृष्टी इत्यन्ववहरन्ति० औदुम्बराणि भवन्ति० साम्ना प्रस्तोतान्ववैति० त्रिर्निधनमुपैति० पुरुषः पुरुषो निधनमुपैति० हिरण्यं निधायोद्वासयति० वल्गुरसि शंयुधाया इति त्रिः परिषिञ्चन् पर्येति० त्रिः पुनः पर्येति० घर्मैतत्तेऽन्नमेतत् पुरीषमिति दध्ना मधुमिश्रेण पूरयति० उदु त्यं, चित्रमिति सौरीभ्यामृग्भ्यां पुनरेत्य गार्हपत्ये जुहोति० प्रजापतिं वै देवाः शुक्रं पयोऽदुह्रन् । तदेभ्यो न व्यभवत् । तदग्निर्व्यकरोत् । तानि शुक्रियाणि सामान्यभवन् । तेषां यो रसोऽत्यक्षरत् । तानि शुक्रयजूꣳष्यभवन्० उत्तरवेद्यामुद्वासयेत् तेजस्कामस्य० उत्तरवेद्यामुद्वासयेदन्नकामस्य० पुरो वा पश्चाद्वोद्वासयेत्० अपां मध्य उद्वासयेत्० यं द्विष्यात् । यत्र स स्यात् । तस्यां दिश्युद्वासयेत्० औदुम्बर्याꣳ शाखायामुद्वासयेत्० इदमहममुष्यामुष्यायणस्य शुचा प्राणमपि दहामि इत्याह० यत्र दर्भा उपदीकसंतताः स्युः । तदुद्वासयेद् वृष्टिकामस्य० असौ खलु वावैष आदित्यः। यत्प्रवर्ग्यः० प्रजापतिर्वा एष द्वादशधा विहितः । यत्प्रवर्ग्यः० यत्पुरस्तादुपसदां प्रवृज्यते० यदुपरिष्टादुपसदां प्रवृज्यते० ॥

मैसं [ ४.९.१०–११ ]—

पशूनां ज्योतिरसि विभृतं देवत्रा ज्योतिर्भा असि ॥ वनस्पतीनामपामोषधीनाꣳ रसो वाजिनं त्वा वाजिन्यवनयाम्यूर्ध्वं मनः स्वर्ग्यम् ॥ पयोऽसि पयस्वी भूयासम् ॥ घर्म या ते दिवि शुग्या दिवि या बृहति या स्तनयित्नौ या जागते छन्दसीयं ते तामवयजे तस्यै ते स्वाहा ॥ घर्म या तेऽन्तरिक्षे शुग्यान्तरिक्षे या वाते या वामदेव्ये या त्रैष्टुभे छन्दसीयं ते तामवयजे तस्यै ते स्वाहा ॥ घर्म या ते पृथिव्याꣳ शुग्या पृथिव्याꣳ

याग्नौ या रथन्तरे या गायत्रे छन्दसीयं ते तामवयजे तस्यै ते स्वाहा ॥ प्रस्तोतः साम गाय ॥ अन्वद्य नो [ अनुमतिर्यज्ञं देवेषु मन्यताम् । अग्निश्च हव्यवाहनो भवतं दाशुषे मयः॥ ] इत्येषा । ब्रह्मणस्त्वा परस्पाय क्षत्रस्य तन्वस्पाहि विशस्त्वा धर्मणा वयमनु परिक्रामाम सुविताय नव्यसे ॥ प्रस्तोतः साम गाय ॥ अन्वद्य न .... इत्येषा । प्राणस्य त्वा परस्पाय चक्षुषस्तन्वस्पाहि श्रोत्रस्य त्वा धर्मणा वयमनु परिक्रामाम सुविताय नव्यसे ॥ प्रस्तोतः साम गाय ॥ अन्वद्य न .... इत्येषा । दिवस्त्वा परस्पायान्तरिक्षस्य तन्वस्पाहि पृथिव्यास्त्वा धर्मणा वयमनु परिक्रामाम सुविताय नव्यसे ॥ चतुःस्रक्तिर्नाभिर्ऋतस्य नाभिः सदो घर्मो विश्वायुः शर्म सप्रथाः ॥ अप द्वेषो अप ह्वरो अन्यव्रतस्य सश्चिम ॥ वल्गुरसि शंयोर्धायाः शिशुर्जनधायाः शं च वक्षि परि च वक्षि ॥ घर्मैतत्तेऽन्नमेतत् पुरीषं....प्यायिषीमहि च॥ व्यसौ यो अस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ रन्तिर्नामासि दिव्यो गन्धर्वस्तस्य ते पद्वद्धविर्धानमग्निरध्यक्षो रुद्रो अधिपतिर्विश्वावसुं सोम गन्धर्वमापो ददृशुषी-स्तदृतेनान्ववायंस्तदिन्द्रस्य वै रुद्रो रारहाण आसां परि सूर्यस्य परिधींरपोर्णु वीरेभिरधि तन्नो गृणानो रजसो विमानो यद्वा घा सत्यमुत यन्न विद्म धिय इन्वानो धिय इन्नो अव्यात् ॥ सस्निमविन्दच्चरणे नदीनामपावृणोद्दुरो अस्मव्रजा-नाम् ॥ प्रासां गन्धर्वो अमृतानि वोचत् ॥ इन्दुं दक्षं परिददादहीनाम् ॥ वार्षाहरं साम गाय ॥ चिदसि समुद्रयोनिः॥ इन्दुर्दक्षः श्येन ऋतावा....॥ सोमपीथानु मेहि ॥ इष्टाहोत्रीयं साम गाय ॥ पुनरूर्जा [ निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यंहसः ॥ ] सह [रय्या निवर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्न्या विश्वतस्परि ॥] इत्येके । श्यैतं साम गाय ॥ उदु त्यं [ जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥ ] चित्रं [ देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥ ] इत्येके ॥ वामदेव्यं साम गाय ॥ इममु षु त्वमस्माकं सनिं गायत्रं नव्यांसम् ॥ अग्निर्देवेषु प्र वोच ॥ भूः स्वाहा ॥

वामासं—

या ते घर्म दिव्या शुग्या गायत्र्याँ हविर्धाने । सा त आ प्यायतां निष्ट्या-यतां तस्यै ते स्वाहा ॥ या ते घर्मान्तरिक्षे शुग्या त्रिष्टुभ्याग्नीध्रे । सा त आ प्यायतां निष्ट्यायतां तस्यै ते स्वाहा ॥ या ते घर्म पृथिव्याँ शुग्या जगत्याँ सदस्या । सा त आ प्यायतां निष्ट्यायतां तस्यै ते स्वाहा ॥ क्षत्रस्य त्वा परस्पाय ब्रह्मणस्तन्वं पाहि । विशस्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे ॥ चतुः-स्रक्तिर्नाभिर्ऋतस्य सप्रथाः स नो विश्वायुः सप्रथाः स नः सर्वायुः सप्रथाः । अप

द्वेषो अप ह्वरोऽन्यव्रतस्य सश्चिम ॥ घर्मैतत्ते पुरीषं तेन वर्धस्व चा च प्यायस्व । वर्धिषीमहि च वयमा च प्यासिषीमहि ॥

अचिक्रदद् वृषा हरिर्महान् मित्रो न दर्शतः ।
स१ सूर्येण दिद्युतदुदधिर्निधिः ॥

सुमित्रिया न आप ओषधयः सन्तु । दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥

उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥

एधोऽस्येधिषीमहि ॥ समिदसि तेजोऽसि तेजो मयि धेहि ॥ ३८.१८-२५

माशब्रा [ १४.३.१ ] – स वै तृतीयेऽहन् षष्ठे वा द्वादशे वा प्रवर्ग्योपसदौ समस्य प्रवर्ग्यमुत्सादयति० तद्यदेतमभितो भवति० तत्सर्व१ समादायाग्रेण शालामन्तर्वेद्युपसमायन्ति । अथाग्नीध्र आहवनीये त्रीञ्छालाकानुपकल्पयते । तेषामेकमुज्ज्वलय्य मुखदघ्ने धारयमाणो जुहोति० या ते घर्म दिव्या शुक् .... इति० अथ द्वितीयमुज्ज्वलय्य नाभिदघ्ने धारयमाणो जुहोति० या ते घर्मान्तरिक्षे शुक् .... इति० अथ तृतीयमभ्याधाय तस्मिन्नासीनो जुहोति० या ते घर्म पृथिव्या१ शुक् .... इति० अथोपनिष्क्रामति क्षत्रस्य त्वा परस्पाय .... इति० अथाह **साम गाय** इति। साम ब्रूहीति वा। गायेति त्वेव ब्रूयात्० त उदञ्चो निष्क्रामन्ति जघनेन चात्वालमग्रेणाग्नीध्रम्० स यस्यां ततो दिश्यापो भवन्ति तद्यन्ति । तं वै परिष्यन्द उत्सादयेत्० उत्तरवेदौ त्वेवोत्सादयेत्० उत्तरनाभ्या स१स्पृष्टं प्रथमं प्रवर्ग्यमुत्सादयति० चतुःस्रक्तिः .... इति० पुरस्तादुपशयां मृदम्० तदभितः परीशासौ० अभितः परे रौहिणहवन्यौ स्रुचौ० उत्तरतोऽभ्रिम्० दक्षिणतः सम्राडासन्दीम्० उत्तरतः कृष्णाजिनम्० सर्वतो धवित्राणि० अथैतद्रज्जुसंदानमुपयमन्यामाधाय पश्चात्प्राचीमासादयति० तदभितः पिन्वने० पश्चात् स्थूणामयूखम्० पश्चाद्रौहिणकपाले० पश्चाद्धृष्टी० उत्तरतः खरौ प्रचरणीयौ० दक्षिणतो मार्जालीयम्० अथास्मिन् पय आनयति घर्मैतत्ते पुरीषम् .... इति० अर्धं वा भूयो वा परिशिनष्टि। तस्मिन्नपराह्णे यजमानाय व्रतमभ्युत्सिच्य प्रयच्छति० अथैनमद्भिः परिषिञ्चति० सर्वतः परिषिञ्चति० त्रिष्कृत्वः परिषिञ्चति० अथाह **वार्षाहर१ साम गाय** इति० अथ चात्वाले मार्जयन्ते । सुमित्रिया न आप ओषधयः सन्त्वित्यञ्जलिनाप उपाचति० दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्म इति यामस्य दिशं द्वेष्यः स्यात् तां दिशं परासिञ्चेत्० अथ प्राङिवोदङुत्क्रामति उद्वयं तमसस्परि .... इति० अनपेक्षमेत्य आहवनीये समिधमभ्यादधाति समिदसि तेजोऽसि तेजो मयि धेहीति० अथातो दक्षिणानाम् । सुवर्ण१ हिरण्य१ शतमानं ब्रह्मणे ददाति० अथ

यैषा घर्मदुघा तामध्वर्यवे ददाति० अथ यैषा यजमानस्य व्रतदुघा ताꣳ होत्रे ददाति० अथ यैषा पत्न्यै व्रतदुघा तामुद्गातृभ्यो ददाति० ॥

**वाकासं [ ३८.५.१–७ ] ≡ वामासं**

**काशब्रा [ १६.२.३ ] ≡ माशब्रा**

## ३६. प्रवर्ग्योद्वासनौद्गात्रम्

### अग्नेर्वैश्वानरस्य राक्षोघ्नं बार्हस्पत्यं वा[1]

**साकौसं [ १.५.२.३.९ ]–**

अग्निꣳ होतारं मन्ये दास्वन्तं वसोः सूनुꣳ सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥

२ ^ ३ २^ ३४५ २^ ३ १ १ २र ४
**त्यग्नाइः । प्रतिदहती । हाउहो५हाउ । अग्निर्ꣳहो । तारम्मा३न्ये३-**
२र ३ ५ २ ^ ३ २^ ३४५ २^ ३ २ १ २र र ४
**दास्वन्तम् । त्यग्नाइः । प्रतिदहती । हाउहो५हाउ । वसोः । सूनुꣳसहसोजा३ता३-**
१र३५ २ ^ ३ २^ ३४५ २^ ३ २ १ २ ४ २र ३ ५
**वेदसम् । त्यग्नाइः । प्रतिदहती । हाउहो५हाउ । विप्राम् । नजा३ता३वे दसम् ।**
२ ^ ३२^ ३४५ २^ ३ २ १ २ ४ २ ४ ५ २ ^
**त्यग्नाइः । प्रतिदहती । हाउहो५हाउ । यऊ । ध्वया३सू३वध्वरः । त्यग्नाइः ।**
३२^ ३४५ २^ ३ २र १ २र ४ १र ३ ५ १ ^ ३२^ ३४५
**प्रतिदहती । हाउहो५हाउ । देवो । देवा३ची३याकृपा । त्यग्नाइः । प्रतिदहती ।**
२^ ३ २ १ २ र ४ २र ४ ५ २ ^ ३१^ ३४५
**हाउहो५हाउ । घृता । स्यविभ्राष्टिमनुशू३क्रा३शोचिषः । त्यग्नाइः । प्रतिदहती ।**
२^ ३ २र १ २र ४ २ ३ ५ १ ^ ३१^ ३४५ २^ ३
**हाउहो५हाउ । आजू । ह्वाना३स्या३सर्पिषः । त्यग्नाइः । प्रतिदहती । हाउहो५हाउ ।**
१ १ १ १ २^ ३ ११११
**वा । ए३ । विश्वꣳसमत्रिणन्दहा२३४५ ॥**

२ १ १ १ १ ३ ११११ १ १ १ १ १^ ३ ११११
***....ए३ । विश्वंन्यत्रिणन्दहा२३४५॥....। ए३*। विश्वन्न्यत्रिणन्दहा२३४५ ॥**

[ ग्राम १२.१.४१ ]

१. एतत् प्रवर्ग्यसाम इत्यप्युच्यते । प्रवर्ग्योद्वासनकाले प्रस्तोता सकृद् गायेत् ।

* त्यग्नाइः इत्यादि 'हाउहो ५ हाउ । वा ।' इत्यन्तं गीत्वा एतन्निधनं ब्रूयात् ।

## वार्षाहरम्[१]

साकौसं [ १.६.१.२.१ ]–

अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः । सꣳ सूर्येण दिद्युते ॥

२ १ २ ४ २ र १ र २

अचिक्रदा३त् । आचिक्रदा२त् । अचिक्रदा५दे । वृषाहरा३इ । वार्षाहरा३इ ।

४ र २ र १ र २ ४ र २

वृषाहरा५ए । महान्मित्रा३ः । माहान्मित्रा३ः । महान्मित्रा५ए । नदर्शता३ः ।

१ २ ४ २ र १ र २^ ४ र

नादर्शता३ः । नदर्शता५ए । सꣳसूरिया३इ । साꣳसूरिया३इ । सꣳसूरिया५ए ।

२ १ २ ४

णदिद्युता३इ । णादिद्युता३इ । णदा५इद्युताउ । वा ॥ [ ग्राम १४.१.१ ]

## इष्टाहोत्रीयम्[२]

साकौसं [ १.२.२.१.७ ]—

इष्टा होत्रा असृक्षतेन्द्रं वृधन्तो अध्वरे । अच्छावभृथमोजसा ॥

५ र ४ ५ १ २ ३ ५ २ १ ७^ ३ ५ १ २

इष्टाहोत्राः । आसृक्षा२३४ता । इन्द्रंवृधा । तो२ध्वा२३४ राइ । आच्छा-

४ ५ ३ र ४ २ २ १ २

३वोभृ । थमो२जा५सा६५६ । ए३ । उदभिर्णिधी१ः । [ ग्राम ४.२.१२ ]

## श्यैतम्[३]

साकौसं [ १.३.१.५.३; २.२.१.१३.१–२ ]–

अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।

यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥

शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।

गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः ॥

---

१. घर्मे परिषिच्यमाने प्रस्तोतृसाम । त्रिर्गायेत् ।

२. परिषिक्ते घर्मे प्रस्तोतृसाम । त्रिर्गायेत् ।

३. पत्नीशालां प्रत्यागमने प्रस्तोतृसाम । एकस्यामृचि तृचे वा ।

४३ ४५र ३ २ ३र४र५ १ २ १७
अभिप्रवःसुरा । धसा३४औहोवा । आयिन्द्रमर्च्च । यथाविदा२३४इ ।
५ ५ १र २१ २ १ २ १ ^ ३ ५ २१र २ २
ओ६हा । योजरितृभ्यः । माघा२३ वा । पुरू२ । वा२३४ सूः । सहस्रेणाइवा३शा ।
१ ^३ ५र र ४ ३ र४र५ ३ ३ ३र४र ५
हुम्माइ । क्षा२ता२३४ औहोवा ॥ [१] सहस्रेणेवशि । क्षता३४ औहोवा ।
१ २र र १ ७ ५ ५ २१र र२र १ २ १ ^
साहस्रेणे । वशाइक्षता२३४इ । ओ६हा । शतानीकेव । प्राजा२३इगा । तिधा२ ।
३ ५ १ २ २ १ ^३ ५र र
ष्णू२३४ या । हन्तिवृत्राणी३दा । हुम्माइ । शू२षा२३४ औहोवा ॥ [२]
३ ४ ३र ४ ५र ३ २ ३र ४र ५ १ २ र १ ७ ५ ५
हन्तिवृत्राणिदा । शुषा३४ औहोवा । हान्तिवृत्रा । णिदाशुषा२३४इ । ओ६हा ।
२ १र २ १ २ १ ^ ३ ५ १ र २ २ १
गिरेरिवप्र । रासा२३ आ । स्यपा२इ । न्वा२३४इराइ । दत्राणिपूरू३भो । हुम्माइ ।
^३ ५र र ३ ५
जा२सा२३४ औहोवा । वा२३४ सू ॥ [३] [ग्राम ६.१.३०; ऊह २.१.३ ]

## वामदेव्यम्[1]

साकौसं [ १.२.२.३.५; २.१.१.१२.१-३ ]—

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥
कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु ॥
अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतये ॥

३ र ४ २ ४र ५ १ र२ १र २ १ २ र २
का५या । नश्चा३इत्रा३आभुवात् । ऊ । तीसदावृधःस । खा । औ३होहाइ ।
१ २^ ३ र २ १ — २ ३ र
कया२३शचाइ । ष्ठयौहो३ । हुम्मा२ । वा२र्चों३५हाइ ॥ [१] का५स्त्वा ।
४ २ ४ ५ १ २र१ २ १ १ र २ १ २^
सत्यो३मा३दानाम् । मा । हिष्ठोमात्सादन्ध । सा । औ३होहाइ । दृढा२३चिदा ।

1. पश्चाद्वार्हपत्यस्य स्थित्वा प्रस्तोत्रा गेयं साम ।

३ २ २ १ - १ २ ३ २ ४ १ ४५
हजौहो३। हुम्मा२। वा३सो३५हाइ॥ [२] आ५भी। षुणा२ःसा३खीनाम्।
१ १२ २ १ १ २ २ १ १ ३ २ २ १ -
आ। विताजरायितॄ। णाम्। औ२३होहाइ। शता२३म्भवा। सियौहो३। हुम्मा२।
१ २
ता२यो३५हाइ॥ [३] [ग्राम ५.१.२५; ऊह १.१.५]

## बार्हस्पत्यम् अग्नेर्वा राक्षोघ्नम्[1]

साजैसं [१.४८.१०]--

अग्निꣳ होतारं .... सहसा जातवेदसं .... ॥

त्यग्नायिःप्रातिदाह ति हाबुहोहाबु। अग्निꣳहोतारम्मान्येदास्वन्तम्।
चचा श फीफु खि शू कि ख्यखा चचा क फ

त्य ग्ना यिःप्रातिदाह तिहाबुहोहाबु। वसोस्सूनुꣳसाहसाजातवेद स म्। त्यग्नायिः
चचा श फीफु खि शू किकी पख चचा क फ्यफ चचा श

प्रातिदाहतिहाबुहोहाबु। विप्रान्न जा त वेदा स म्। त्यग्नायिः प्रातिदाहति हाबुहोहाबु।
फीफु खि शू चचा खखा चचा क फ्यफ चचा श फीफु खि शू

य ऊ र्ध्वं या सु अध्वाराः। त्यग्नायिः प्रातिदाहति हाबुहोहाबु। देवो दे वा चियाकृपा।
चचा ख्यखा चचा फ्यफ चचा श फीफु खि शू क किका खक चच्या क फ

त्यग्नायिःप्रातिदाहति हाबुहोहाबु। घृतस्यविभ्राष्टिमनुशुक्राशो चिषा ः। त्यग्नायिः
चचा श फीफु खि शू कू श खि चचा क फ्यफ चचा श

प्रातिदाहति हाबुहोहाबु। आजुह्वानस्यासर्पि षा ः। त्यग्नायिःप्रातिदाह ति हाबु-
फीफु खि शू क का ख चचा क फ्यफ चचा श फीफु

हो हाबुवा। एविश्वꣳसमत्रिणन्दहा॥
खीकी शिशा त क्यका टकी ख

*....एविश्वंव्यत्रिणन्दहा॥*...एविश्वन्न्यत्रिण न्दहा॥ [ग्राम २.४.१०.१६]
क्य रे ट ख तका टकी खा

१. प्रवर्ग्योद्वासनकाले प्रस्तोता सकृद्गायेत्।

* त्यग्नायिः इत्यादि गीत्वा एतन्निधनं ब्रूयात्।

### वार्षाहरम्[1]

साजैसं [ १.५२.१ ] ≡ साकौसं [ १.६.१.२.१ ]

अचिक्रदाद चि''क्रदादचिक्रदादे। वृषाहरायित्रार्षा'''हरायिवृषाहाराये।
ती क्यचका क ख प्या श ती श क्यचरे क ख प्यु

महान्मित्रोम हा'''न्मित्रोमहान्मित्राये। नदर्शतानदर्शातानदर्शताये। सर्ड्सूर्यायि
ती किचरे कख ख्य प्यु रो प्यु

सर्ड्सूरियायिसर्ड्सर्याये। णादिद्युतायिणा''दी''द्युतायि णादायिद्युता''बु'''वा ॥
क ख रौ प्यु ती श त्यचका क ख शि प्युल्लाशि श

[ ग्राम ३.१.४ ]

### अप्सरसां च इष्टाहोत्रीयं वा अपां वा निधिः[2]

साजैसं [ १.१६.७ ] ≡ साकौसं [ १.२.२.१.७ ]

इष्टाहोत्राः। आसृक्षा''ता। इन्द्रंवृधन्तोऽ'''ध्वारायि। आच्छावाभा
ती च ख्यखा ण क टीटया खयल ण श टय ख श

र्थमोजासा। ए उदधिर्नि धो''ः॥ [ ग्राम २.१.४.१२ ]
खि त्रा त का टीटयाखु

### श्यैतम्[3]

साजैसं [ १.२५.३ ] ≡ साकौसं [ १.३.१.५.३ ]

अभिप्रवस्सुराधस''औहो''वा। आयिन्द्रमा''र्चयथा विदाओहायि। योज''रि-
फु ख्यखा ण फप प्या टीटयो चिह्यु टय ख ण श च क्यकू

तृभ्योमाघावापुरोवासूः। सहस्रे णायिवाशाहिम्मायि क्षाताऔहोवा। वासूः॥
च इवा प्य श टय ख ण फिप्यु त प्य श टीट ख थि ख श

[ ग्राम २.२.१.७ ]

माशब्रा [१४.३.१.११-१२ ]—आग्नेय्यां गायति० अतिच्छन्दसि गायति० स गायति अग्निष्टपति प्रतिदहत्यहावोऽहावः इति ॥

काशब्रा [१६.२.३.६-७ ] ≡ माशब्रा

---

१. घर्मे परिषिच्यमाने प्रस्तोतृसाम्। त्रिर्गायेत्।

२. घर्मे परिषिच्यमाने प्रस्तोतृसाम। त्रिर्गायेत्।

३. पत्नीशालां प्रत्यागमने प्रस्तोतृसाम। सकृद्गायेत्।

## ३७. अग्निप्रणयनादिहविर्धानप्रवर्तनान्तम्

तैसं [ १.२.१२–१३ ]—

इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पातु ॥ मनोजवास्त्वा पितृभिर्दक्षिणतः पातु ॥ प्रचेतास्त्वा रुद्रैः पश्चात् पातु ॥ विश्वकर्मा त्वादित्यैरुत्तरतः पातु ॥ सिꣳहीरसि सपत्नसाही स्वाहा ॥ सिꣳहीरसि सुप्रजावनिः स्वाहा ॥ सिꣳहीरसि रायस्पोषवनिः स्वाहा ॥ सिꣳहीरस्यादित्यवनिः स्वाहा ॥ सिꣳहीरस्या वह देवान् देवयते यजमानाय स्वाहा ॥ भूतेभ्यस्त्वा ॥ विश्वायुरसि पृथिवीं दृꣳह ॥ ध्रुवक्षिदस्यन्तरिक्षं दृꣳह ॥ अच्युतक्षिदसि दिवं दृꣳह ॥ अग्नेर्भस्मास्यग्नेः पुरीषमसि ॥

युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥
सुवाग्देव दुर्याꣳ आ वद देवश्रुतौ देवेष्वा घोषेथाम् ॥
आ नो वीरो जायतां कर्मण्यो यꣳ सर्वेऽनुजीवाम यो बहूनामसद्वशी ॥
इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूढमस्य पाꣳसुरे ॥
इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे यशस्ये ।
व्यस्कभ्नाद् रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः ॥

प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जीह्वरतम् ॥ अत्र रमेथां वर्ष्मन् पृथिव्याः ॥ दिवो वा विष्णवुत वा पृथिव्या महो वा विष्णवुत वान्तरिक्षाद्धस्तौ पृणस्व बहुभिर्वसव्यैरा प्र यच्छ दक्षिणादोत सव्यात् ॥

विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजाꣳसि ।
यो अस्कभायदुत्तरꣳ सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥

[ ६.२.७-९ ]—इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पात्वित्याह दिग्भ्य एवैनां प्रोक्षति० यदेवमुत्तरवेदिं प्रोक्षति० यत् प्रोक्षणीनामुच्छिष्येत तद्दक्षिणत उत्तरवेद्यै नि नयेत्० यं द्विष्यात् तं ध्यायेत्० उत्तरवेदिं पूर्वामग्नेर्व्याघारयन्ति० ॥ पञ्च कृत्वो व्याघारयति० अक्ष्णया व्याघारयति० भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति० पौतुद्रवान् परिधीन् परि दधाति० सोऽग्निरबिभेत्० स निलायत स यां वनस्पतिष्ववसत् तां पूतुद्रौ यामोषधीषु ताꣳ सुगन्धितेजने यां पशुषु तां पेत्वस्यान्तरा शृङ्गे० स यान्यस्थान्यशातयत तत् पूतुद्रवभवद्यन्माꣳसमुप भृतं तद् गुल्गुलु यदेतान्त्संभारान्त्संभरति० ॥ बद्धमवस्यति० प्र णेनेक्ति० सावित्रियर्चा हुत्वा हविर्धाने प्र वर्तयति० यद्युत्सर्जेत्० सुवाग्देव दुर्याꣳ आ वदेत्याह० पत्न्युपानक्ति० वैष्णवीभ्यामृग्भ्यां

वर्त्मनोर्जुहोति० हिरण्यमुपास्य जुहोति० दिवो वा विष्णवुत वा पृथिव्या इत्याशीर्पदयर्चा दक्षिणस्य हविर्धानस्य मेथीं नि हन्ति० ॥

[ ३.१.३ ]——यज्ञं वा एतत् सं भरन्ति यत् सोमक्रयण्यै पदं यज्ञमुखꣳ हविर्धाने। यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यात्०॥

तैब्रा [ २.५.८.११–१२ ]—

अग्ने बाधस्व वि मृधो नुदस्व। अपामीवा अप रक्षाꣳसि सेध।
अस्मात् समुद्राद् बृहतो दिवो नः। अपां भूमानमुप नः सृजेह॥
यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा। वसूनि पुरुधा विशन्तु।
दीर्घमायुर्यजमानाय कृण्वन्। अधामृतेन जरितारमङ्ग्धि॥

[ ३.७.७.१४ ]—

अप जन्यं भयं नुद। अप चक्राणि वर्तय। गृहꣳ सोमस्य गच्छतम्॥

मैसं [ १.२.८–९ ]—

इन्द्रघोषास्त्वा पुरस्ताद्वसुभिः पान्तु॥ पितरस्त्वा मनोजवा दक्षिणतः पान्तु॥ रुद्रास्त्वा प्रचेतसः पश्चात् पान्तु॥ विश्वकर्मा त्वादित्यैरुत्तरात् पातु॥ सिꣳहीरसि सपत्नसाही स्वाहा॥ सिꣳहीरसि रायस्पोषवनिः स्वाहा॥ सिꣳहीरसि सुप्रजावनिः स्वाहा॥ सिꣳहीरस्यादित्यवनिः सजातवनिः स्वाहा॥ सिꣳहीरस्यावह देवान् देवायते यजमानाय स्वाहा॥ भूतेभ्यस्त्वा॥ विश्वायुरसि पृथिवीं दृꣳह॥ ध्रुवक्षितिरस्यन्तरिक्षं दृꣳह॥ अच्युतक्षिदसि दिवं दृꣳह॥ अग्नेर्भस्मास्यग्नेः पुरीषमसि॥ अग्नेः कुलायमसि॥ विभ्राड् बृहत् पिबतु सोम्यं मध्वायुर्दधद्यज्ञपता अविहुतम्। वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा विराजति॥ देवश्रुतौ देवेष्वाघोषेथाम्॥ युञ्जते मन युञ्जते .... ॥

अप जन्यं भयं नुद मा चक्रा आवृत्सत।
गृहꣳ सोमस्य गछतं गछदिन्द्रस्य निष्कृतम्॥
इदꣳ विष्णुर्विचक्रमे त्रेधा निदधे पदा। समूढमस्य पाꣳसुरे॥
इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे यशस्ये।
व्यष्कभ्ना रोदसी विष्ण एते दाधर्थ पृथिवीमभितो मयूखैः॥

सुवागावद देव दुर्यं अरिष्यन्नरिष्यतः। आ नो वीरो जायतां कर्मण्योऽभिशस्तिपा अनभिशस्तेन्यः। यं बहवोऽनुजीवान् यो बहूनामसद्वशी॥ वैष्णवमसि॥ विष्णुस्त्वोत्तभ्नातु॥ दिवो विष्ण उत वा पृथिव्या उरोर्वा विष्णो बृहतो अन्तरिक्षात्। हस्तौ पृणस्व बहुभिर्वसव्यैरा प्रयछ दक्षिणादोत सव्यात्॥ विष्णोर्नु कꣳ वीर्याणि....॥

[ ३.८.५–७ ]—तद्य एव॰ विद्वानेतां पूर्वामग्नेर्व्याघारयति॰ सा वा उत्तरवेदिः॰ निःसारयति॰ यथादेवतमेवैनां प्रौक्षीत्॰ भूतेभ्यस्त्वेत्युद्दिशति॰ यां पशुष्ववसत् तामना-छिन्नस्तुकस्यान्तरा शृङ्गमवसद्या॰ वनस्पतिषु पूतुद्रौ यामोषधीषु ता॰ सुगन्धितेजने यत्संभारा-न्त्संभरति॰ यानि वा अदोऽग्निरस्थान्यधूनुत; स पूतुद्रुरभवद् यन्मा॰सं तद् गुग्गुलु यत् पूयित-मुपश्लिष्ट॰ स सुगन्धितेजनो यदेते संभारा भवन्ति॰ एतावती वा इयं पृथिवी यावती वेदिः॰ यत्प्रोक्षति॰ यद्बर्हिः स्तृणाति॰ यत्प्रस्तरमुत्तरं बर्हिषः सादयति॰ अथ यत्तृणे अन्तर्दधाति॰ बहुलं बर्हिः स्तृणाति॰ प्राचीनं बर्हिः स्तृणाति॰ सन्धिं प्रतिजुहोति॰ ये पुरा ग्रन्थयो भवन्ति तान् विस्र॰सयन्ति॰ प्रणेनिजति॰ युञ्जते मन उत युञ्जते धिया इति जुहोति॰ साविक्या जुहोति॰ यदुपानक्ति॰ अथो अभिवृत्ते एव पत्न्युपानक्ति॰ प्राचीनमुपानक्ति॰ त्रिरन्यत्त्रिरन्यदुपानक्ति॰ दक्षिणत उपानक्ति॰ तदनुगृह्णन्तो यन्ति यद्युत्क्ष्वेदेत् सुवागावद देव दुर्यानिति वदेत्॰ स्तीर्त्वा वै बर्हिर्हविरासादयन्ति तस्मात् प्रस्तर॰ स्तीर्त्वा प्रवर्तयन्ति॰ अनूच्यमानासु वै सामिधेनीषु हविरासादयन्ति तस्मात् प्रवर्त्यमानयोर्होतान्वाह॰ यद्वर्त्मनि जुहोति॰ वैष्णव्या जुहोति॰ यद् गायत्र्या जुहोति॰ यत्त्रिष्टुभा॰ अथ यदाहवनीयं गछतः॰ त्रीन् प्रक्रमान् प्रतिविक्रमते॰ दिवो विष्ण उत वा पृथिव्या इति दक्षिणस्य हविर्धानस्य मेथीं-निहन्ति॰ यमध्वर्युः प्रथमं ग्रन्थिं ग्रथ्नाति तं प्रथम॰ विस्र॰सयति॰ विष्णोर्नु क॰ वीर्याणि प्रवोचमित्युत्तरस्य हविर्धानस्य मेथीं निहन्ति वैष्णव्या॰॥

**कासं [ २.९–१० ]—**

**इन्द्रघोषास्त्वा वसवः पुरस्तात् पान्तु ॥ मनोजवास्त्वा पितरो दक्षिणतः पान्तु ॥ प्रचेतास्त्वा रुद्रैः पश्चात् पातु ॥ विश्वकर्मा त्वादित्यैरुत्तरात् पातु ॥ त्वष्टा त्वा रूपैरुपरिष्टात् पातु ॥ सि॰ह्यसि सपत्नसाही स्वाहा ॥ सि॰ह्यसि रायस्पोष-वनिस्स्वाहा ॥ सि॰ह्यसि सुप्रजावनिस्स्वाहा ॥ सि॰ह्यस्यादित्यवनिस्स्वाहा ॥ सि॰ह्यस्यावह देवान् देवायते यजमानाय स्वाहा ॥ भूतेभ्यस्त्वा ॥ विश्वायुरसि पृथिवी॰ स्कभान ॥ अच्युतक्षिदस्यन्तरिक्षं स्कभान ॥ ध्रुवक्षिदसि दिवं स्कभान ॥ अग्नेः कुलायमस्यग्नेः पुरीषमसि ॥ यज्ञः प्रत्यष्ठात् ॥**

**मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि ।**
**अग्ने मनुष्वदङ्गिरो देवान् देवयते यज ॥**

**युञ्जते मन उत युञ्जते....॥ देवश्रुतौ देवेष्वाघोषेथाम् ॥ इदं विष्णुर्विचक्रमे....॥**
**इडावती धेनुमती हि भूतं सूयवसिनी मानुषे यशस्ये ।**
**व्यष्टभ्ना रोदसी विष्ण एते दाधर्थ पृथिवीमभितो मयूखैः ॥**

वैष्णवमसि ॥ विष्णुस्त्वोत्तभ्नातु ॥
दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात् ।
हस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणादोत सव्यात् ॥
विष्णोर्नु कं वीर्याणि .... ॥

[ २५.६–८ ]—प्रोक्षति० यद्व्याघारयति० यदेतैः परिधीन् परिदधाति० ऊर्णास्तुका भवति० पीतुदारुर्भवति० सुगन्धितेजनो भवति० तद् गुल्गुल्वभवत्० यदेते संभारा भवन्ति० स्थविष्ठं मध्यमं कुर्याद्वर्षिष्ठं दक्षिणार्ध्यं क्रभिष्ठमुत्तरार्ध्यम्। स्थविष्ठं प्रथमं परिदधाति० वर्षिष्ठं दक्षिणार्ध्यं० पश्चेवोत्तरार्ध्यम्० हविर्धाने प्रणेनेक्ति० ग्रन्थीन् विचृतन्ति० स्तीर्णे बर्हिषि हविर्धाने प्रवर्तयन्ति। पत्न्युपानक्ति० त्रिः प्राचीनमुपानक्ति० यजुषोपानक्ति० दक्षिणत उपानक्ति० युञ्जते मन इति सावित्र्या जुहोति० यदभ्यनक्ति० शुष्को वा एष निर्ऋतिगृहीतो यदक्षः० यत् क्ष्वेदेत्० अनुगृह्णन्तो यन्ति० वैष्णव्या वर्त्मञ्जुहोति० यद्धिरण्यमुपास्य जुहोति० गायत्र्या दक्षिणस्य वर्त्मञ्जुहोति० त्रिष्टुभोत्तरस्य० आहवनीयं गमयति० त्रीन् पुरस्तात् प्रक्रमानुच्छिँषति० दिवो वा विष्ण उत वा पृथिव्या इति दक्षिणस्य हविर्धानस्य मेथीमुपमिनोति० विष्णोर्नु कं वीर्याणि प्रवोचमित्युत्तरस्य० ॥

कपिसं [ २.३–४ ]—

इन्द्रघोषास्त्वा पुरस्ताद्वसवः पान्तु ॥ मनोजवसस्त्वा दक्षिणतः पितरः पान्तु ॥ प्रचेतास्त्वा पश्चाद्रुद्रैः पातु ॥ विश्वकर्मा त्वोत्तरादादित्यैः पातु ॥ सिंह्यसि....॥ ---॥ यज्ञः प्रत्यष्ठात् ॥ युञ्जते .... ॥---॥ इरावती .... मनुषे दशस्ये। व्यस्तभ्ना रोदसी विष्णवेते .... ॥---॥ दिवो वा विष्णवुत .... विष्णवुरोरन्तरिक्षात् .... ॥ --- ॥

कपिसं [ ३९.४-५, ४०.१ ] = कासं

वामासं—

इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पातु ॥ प्रचेतास्त्वा रुद्रैः पश्चात् पातु ॥ मनोजवास्त्वा पितृभिर्दक्षिणतः पातु ॥ विश्वकर्मा त्वादित्यैरुत्तरतः पातु ॥ इदमहं तप्तं वार्बहिर्धा यज्ञान्निःसृजामि ॥ सिँह्यसि स्वाहा ॥ सिँह्यस्यादित्यवनिः स्वाहा ॥ सिँह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहा ॥ सिँह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहा ॥ सिँह्यस्यावह देवान् यजमानाय स्वाहा ॥ भूतेभ्यस्त्वा ॥ ध्रुवोऽसि पृथिवीं दृँह ॥ ध्रुवाक्षिदस्यन्तरिक्षं दृँह ॥ अच्युतक्षिदसि दिवं दृँह ॥ अग्नेः पुरीषमसि ॥ युञ्जते मन उत युञ्जते .... परिस्रुतिः स्वाहा ॥ इदं विष्णुर्विचक्रमे .... पाँसुरे स्वाहा ॥

इरावती धेनुमती हि भूत सूयवासिनी मनवे दशस्या ।
व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा ॥

देवश्रुतौ देवेष्वाघोषतम् ॥ प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जिह्वरतम् ॥ स्वं गोष्ठमावदतं देवी दुर्ये आयुर्मा निर्वादिष्टं प्रजां मा निर्वादिष्टम् ॥ अत्र रमेथां वर्ष्मन् पृथिव्याः ॥ विष्णोर्नु कं वीर्याणि .... । विष्णवे त्वा ॥

दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात् ।
उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्यात् ।
विष्णवे त्वा ॥ ५.११–१९

माशब्रा [३.५.२]—इध्ममभ्यादधति । उपयमनीरुपकल्पयन्ति । आज्यमधिश्रयति । स्रुवं च स्रुचं च संमार्ष्टि । अथोत्पूयाज्यं पञ्चगृहीतं गृह्णीते । यदा प्रदीप्त इध्मो भवति, अथोद्यच्छन्तीध्मम् । उपयच्छन्त्युपयमनीः । अथाह अग्नये प्रह्रियमाणायानुब्रूहि । एकस्फ्यया-नूदेहि इति । अनूदैति प्रतिप्रस्थातैकस्फ्यया । एतस्मान्मध्यमाच्छङ्कोर्य एष वेदेर्जघनार्धे भवति० तद्धैके औत्तरवेदेरनूदायन्ति । तदु तथा न कुर्यात् । एवैतस्मान्मध्यमाच्छङ्कोरनूदेयात् । त आयन्ति । आगच्छन्त्युत्तरवेदिम् । प्रोक्षणीरध्वर्युरादत्ते । स पुरस्तादेवाग्रे प्रोक्षत्युदङ् तिष्ठन् इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पात्विति० अथ पश्चात् प्रोक्षति प्रचेतास्त्वा रुद्रैः पश्चात् पात्विति० अथ दक्षिणतः प्रोक्षति मनोजवास्त्वा पितृभिर्दक्षिणतः पात्विति० अथोत्तरतः प्रोक्षति विश्वकर्मा त्वादित्यैरुत्तरतः पात्विति० अथ याः प्रोक्षण्यः परिशिष्यन्ते तद् ये एते पूर्वे स्रक्ती तयोर्या दक्षिणा ता न्यन्तेन बहिर्वेदि निनयति इदमहं तप्तं वार्बहिर्धा यज्ञान्निःसृजामीति० यदि नाभिचरेत् । यद्यु अभिचरेदादिशेद् इदमहं तप्तं वारमुमभि निःसृजामि इति० स यद्धार्यमाणेऽग्ना उत्तरवेदिं व्याघारयति० अथ यैषां मध्ये नाभिर्भवति तस्यै ये पूर्वे स्रक्ती तयोर्या दक्षिणा तस्यामाघारयति सिंहासि स्वाहेति । अथापरयोरुत्तरस्याम् सिंहास्यादित्यवनिः स्वाहेति । अथापरयोर्दक्षिणस्याम् । सिंहासि ब्रह्मवनिः क्षत्रवनिः स्वाहेति० अथ पूर्वयोरुत्तरस्याम् सिंहासि सुप्रजावनी रायस्पोषवनिः स्वाहेति । अथ मध्य आघारयति सिंहास्यावह देवान् यजमानाय स्वाहेति० अथ स्रुचमुद्यच्छति भूतेभ्यस्त्वेति० अथ परिधीन् परिदधाति ध्रुवोऽसि पृथिवीं दृंहेति मध्यमम् । ध्रुवक्षिदस्यन्तरिक्षं दृंहेति दक्षिणम् । अच्युतक्षिदसि दिवं दृंहेत्युत्तरम् । अग्नेः पुरीषमसीति संभारानुपनिवपति० तद् यत् पैतुदारवाः परिधयो भवन्ति० तद् यत् गुल्गुलु भवति० तद् यत् सुगन्धितेजनं भवति० अथ यद् वृष्णेः स्तुका भवति० तस्माद्या शीर्ष्णो नेदिष्ठं स्यात् तामाच्छिद्याहरेत् । यद्यु तां न विन्देदपि यामेव कां चाहरेत्० ॥

[ ३.५.३.१०–२२ ] अथ पुनः प्रपद्य चतुर्गृहीतमाज्यं गृहीत्वा सावित्रं प्रसवाय जुहोति० स जुहोति युञ्जते मन उत युञ्जते धियः....इति० अथापरं चतुर्गृहीतमाज्यं गृहीत्वोपनिष्क्रामति । दक्षिणया द्वारा पत्नीं निष्क्रामयन्ति । स दक्षिणस्य हविर्धानस्य दक्षिणायां वर्तन्याँ हिरण्यं निधाय जुहोति इदं विष्णुर्विचक्रमे.... स्वाहेति । सँस्रवं पत्न्यै पाणावानयति साक्षस्य सन्तापमुपानक्ति देवश्रुतौ देवेष्वाघोषतमिति । प्रयच्छति प्रतिप्रस्थात्रे स्रुचं च आज्यविलापनीं च । पर्याणयन्ति पत्नीमुभौ जघनेनाग्नी । चतुर्गृहीतमाज्यं गृहीत्वा प्रतिप्रस्थातोत्तरस्य हविर्धानस्य दक्षिणायां वर्तन्याँ हिरण्यं निधाय जुहोति इरावती धेनुमती....स्वाहेति । सँस्रवं पत्न्यै पाणावानयति । साक्षस्य सन्तापमुपानक्ति देवश्रुतौ देवेष्वाघोषतमिति० तद्वैष्णवीभ्यामृग्भ्यां जुहोति० अथाह **हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहि** इति । अथ वाचयति प्राची प्रेतमध्वरं कल्पयन्ती .... इति० समुद्गृह्येव प्रवर्तयेयुर्यथा नोत्सर्जेताम्० यद्युत्सर्जेतामेतद्वाचयेत् स्वं गोष्ठमावदतं देवी .... निर्वादिष्टमिति । तदाहुरुत्तरवेदेः प्रत्यङ् प्रक्रामेत् त्रीन् विक्रमाँस्तद्धविर्धाने स्थापयेत् सा हविर्धानयोर्मात्रेति । नात्र मात्रास्ति । यत्रैव स्वयं मनसा मन्येत नाहैव सत्रात्यन्तिके नो दूरे तत् स्थापयेत् । ते अभिमन्त्रयते अत्र रमेथां वर्ष्मन् पृथिव्या इति० नभ्यस्थे करोति० अथोत्तरेण पर्येत्याध्वर्युर्दक्षिणँ हविर्धानमुपस्तभ्नाति विष्णोर्नु कं वीर्याणि.... विष्णवे त्वेति । मेथीमुपनिहन्तीतरतस्ततो यदु च मानुषे । अथ प्रतिप्रस्थाता उत्तरँ हविर्धानमुपस्तभ्नाति दिवो वा विष्ण उत .... सव्याद्विष्णवे त्वेति । मेथीमुपनिहन्तीतरतस्ततो यदु च मानुषे० ॥

**वाकासं—**

---॥ **अग्नेर्भस्मास्यग्नेः पुरीषमसि ॥ युञ्जते मन .... परिष्टुतिः ॥ इदं विष्णुर् ....। समूळ्हमस्य ....॥ इरावती .... विष्ण एते ....॥** ---॥ ५.४.१-५,७

काशब्रा [ ४.५.२ ]— --- वृष्णे स्तुकाम्० यद्यु तां न विन्देदपि यत एव कुतश्चाहरेत्० अथाह **व्युत्क्रामत** इति । अथोत्तरं परिग्राहं परिगृह्णाति । दक्षिणमेवाग्रे । अथ पश्चात् । अथोत्तरतः । अथ प्रतियैति यत्रासौ जघनार्धे शङ्कुर्भवति । अथ प्रोक्षणीरासादयति । इध्माबर्हिरुपसादयन्ति । स प्रोक्षणीरादायेध्ममेवाग्रे प्रोक्षति । अथ वेदिम् । अथास्मै बर्हिः प्रयच्छन्ति । तत् प्रोक्ष्योपनिनीय संनहनमुपसंगृह्योत्तरवेदे स्तृणन्नेति न वा एतामुत्तरेण परिग्राहेण परिगृहीतामवमृशन्ति० ॥

[ ४.५.३.८-२० ] ≡ माशब्रा ३.५.३.१०-२२

**अशौसं—**

**अग्ने प्रेहि प्रथमो देवतानां चक्षुर्देवानामुत मानुषाणाम् ।**
**इयक्षमाणा भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्ति ॥** ४.१४.५

इदं विष्णुर्वि चक्रमे .... पदा। .... ॥
त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः। इतो धर्माणि धारयन् ॥७.२७.४-५
इतश्च मामुतश्चावतां यमे इव यतमाने यदैतम् ।
प्र वां भरन्मानुषा देवयन्तो आ सीदतां स्वमु लोकं विदाने ॥
स्वासस्थे भवतमिन्दवे नो युजे वां ब्रह्म पूर्व्यं नमोभिः ।
वि श्लोक एति पथ्येव सूरिः शृण्वन्तु विश्वे अमृतास एतत् ॥१८.३.३८-३९
विष्णोर्नु कं प्रा वोचं वीर्याणि यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ ७.२७.१

अपैसं—

अग्ने प्रेहि प्रथमो देवयतां .... मर्त्यानाम् । .... सजोषसः ....॥ ३.३८.३॥
विष्णोर्नु कं प्र वोचं .... ॥ २०.६.९

## २८. अग्निप्रणयनादिहविर्धानप्रवर्तनान्तं हौत्रम्

ऋसं—

युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोक एतु पथ्येव सूरेः ।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ १०.१३.१
प्रेतां यज्ञस्य शंभुवा युवामिदा वृणीमहे । अग्निं च हव्यवाहनम् ॥
द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम् ॥
आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः। इहाद्य सोमपीतये ॥२.४१.१९-२१
यमे इव यतमाने यदैतं प्र वां भरन् मानुषा देवयन्तः ।
आ सीदतं स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नः ॥ १०.१३.२
अधि द्वयोरदधा उक्थ्यं वचो यतस्रुचा मिथुना या सपर्यतः ।
असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वते ॥ १.८३.३
विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे ।
वि नाकमख्यत् सविता वरेण्योऽनु प्रयाणमुषसो वि राजति ॥ ५.८१.२
परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥ १.१०.१२

ऐब्रा [ १.२८–२९ ]—अग्नये प्रणीयमानायानुब्रूहि इत्याहाध्वर्युः। [1]प्र देवं देव्या धिया भरता जातवेदसम्। हव्या नो वक्षदानुषगिति गायत्रीं ब्राह्मणस्यानुब्रूयात्० इमं महे

१. अग्निप्रणयनीया ऋचः श्रौ. १ पृ. ५५८–५५९ इत्यत्र द्रष्टव्याः।

विदथ्याय शूषमिति त्रिष्टुभं राजन्यस्यानुब्रूयात्० अयमिह प्रथमो धायि धातृभिरिति जगतीं वैश्यस्यानुब्रूयात्० अयमु ष्य प्र देवयुरिति अनुष्टुभि वाचं विसृजते० अयमग्निरुरुष्यतीति० इळायास्त्वा पदे वयं नाभा पृथिव्या अधीति० अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनिमिति० सीद होतः स्व उ लोके चिकित्वानिति० नि होता होतृषदने विदान इति० त्वं दूतस्त्वमु नः परस्पा इत्युत्तमया परिदधाति० ता एता अष्टावन्वाह रूपसमृद्धाः० तासां त्रिः प्रथमामन्वाह त्रिरुत्तमाम्०। हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूहि इत्याहाध्वर्युः। युजे वां ब्रह्म पूर्व्यं नमोभिरित्यन्वाह० प्रेतां यज्ञस्य शंभुवेति तृचं द्यावापृथिवीयमन्वाह० यमे इव यतमाने यदैतमिति० अधि द्वयोरदधा उक्थ्यं वच इति० विश्वा रूपाणि प्रतिमुञ्चते कविरिति विश्वरूपामन्वाह। स रराटयामीक्षमाणोऽनुब्रूयात्० परि त्वा गिर्वणो गिर इत्युत्तमया परिदधाति। स यदैव हविर्धाने संपरिश्रिते मन्येताथ परिदध्यात्० तौ यदैवाध्वर्युश्च प्रतिप्रस्थाता चोभयतो मेथ्यौ निहन्यातामथ परिदध्यात्० ता एता अष्टावन्वाह० तासां त्रिः प्रथमामन्वाह त्रिरुत्तमाम्० ॥

ऋसं—

**प्रेतां यज्ञस्य.... ॥ २.४१.१९–२० ॥ तयोरिद् घृतवत् पयो विप्रा रिहन्ति धीतिभिः। गन्धर्वस्य ध्रुवे पदे ॥१.२२.१४॥ यमे इव यतमाने.... ॥१०.१३.२॥ अधि द्वयोरदधा.... ॥ १.८३.३ ॥ विश्वा रूपाणि प्रति.... ॥ ५.८१.२ ॥ आ वामुपस्थमद्रुहा.... ॥ २.४१.२१ ॥ परि त्वा गिर्वणो.... ॥ १.१०.१२ ॥**

शांब्रा [ ९.१–४ ]—उपवसथे प्राञ्चमग्निं प्रणयन्ति। वि धिष्ण्यान् हरन्ति० प्र देवं देव्या धियेति प्रवन्तं तृचं प्रह्रियमाणायान्वाह। इलायास्त्वा पदे वयमिति० जातवेदो नि धीमहीति निहितवतार्धर्चेन निधीयमानमनुस्तौति। अग्ने विश्वेभिः स्वनीक देवैः, सीद होतः स्व उ लोके चिकित्वान्, नि होता होतृषदने विदान इति सन्नवतीभिः सन्नमनुस्तौति। त्वं दूतस्त्वमु नः परस्पा इति दूतवत्या परिदधाति। अभिरूपा अन्वाह० ता वा अष्टान्वाह० त्रिः प्रथमया त्रिरुत्तमया० यद्धविर्धाने प्रवर्तयन्ति० द्वे हविर्धाने भवतश्छदिस्तृतीयमभिनिदधति० प्रेतां यज्ञस्य शंभुवेति प्रवतीं प्रवर्त्यमानाभ्यामन्वाह। द्यावा नः पृथिवी इमं, तयोरिद् घृतवत्पय इत्याशीर्वती पूर्वाथो द्विदेवत्या। द्वयोर्हविर्धानयोर्यामध्वर्युर्वर्त्मन्याहुतिं जुहोति तां पूर्वयानुवदति यद्धविर्धाने प्रवर्तयन्ति तदुत्तरया। यमे इव यतमाने यदैतमित्यभिरूपया हविर्धाने अनुस्तौति० अधि द्वयोरदधा उक्थ्यं वचः, विश्वा रूपाणि प्रति मुञ्चते कविरिति यच्छदिस्तृतीयमभिनिदधति तत्पूर्वयानुवदति यद्धविर्धाने परिश्रयन्ति तदुत्तरया। अथो रराटयामेवोत्तरया। ते यदा मन्येतात्र नेङ्गयिष्यन्तीति यदैने नभ्यस्थे कुर्युरथ आवामुपस्थमद्रुहेति० परि त्वा गिर्वणो गिर इति परिवत्या परिदधाति। अभिरूपा अन्वाह० ता वा अष्टौ भवन्ति० त्रिः प्रथमया त्रिरुत्तमया०

संप्रेषितः पुरर्चः प्रतिवदनाद्दक्षिणस्य पादस्य प्रपदेन 'प्रत्यञ्चं लोगमपास्यति अपेतो जन्यं भयमन्यजन्यं च वृत्रहन्। अप चक्रा अवृत्सत इति० स प्राच्यं दक्षिणस्य हविर्धानस्योत्तरं वर्त्मोपनिश्रयेत० यत्र तिष्ठन् परिदध्यान्न तत इति वेति वेयात्० परिधाय दक्षिणं बाहुमन्वावृत्य वाचंयमो यथेतं प्रत्येत्य यत्र तिष्ठन् प्रथमामन्ववोचत् तत्स्थित्वात्र चाग्निप्रहरणे चाथ यथावसथमभ्युपेयात् ॥

## ३९. अग्निप्रणयनौद्गात्रम्

### अग्नेर्व्रतम्[१]

साकौसं [ १.१.१.३.७ ]—

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति ॥

२र र र^ ३र२र३र र ३र२र३र र ३र२र ३र र २ र र
हाउहाउहाउ। आजाओवा। आजाओवा। आजाओवा। अग्निर्मूर्द्धादी३-
१ २ − २ र १ २ − २ र र र १ २
वाःका१कू२त्। पतिःपृथीवी३याआ१या२म्। अपाꣳरेताꣳसी३जाइन्वा१ती२३।
२र र २र^ ३र २र ३र र ३र २र ३र र ३र २ ४ २र १ २
हाउहाउहाउ। आजाओवा। आजाओवा। आजा३ओ५वा६५६। ए। विश्वस्य-
१ २र १र ३ १११
जगतो ज्योती२३४५ः॥ [ आरण्य ६.१.१ ]

### अग्नेर्व्रतम्[२]

साजैसं [ १.३.७ ] ≡ साकौसं [ १.१.१.३.७ ]

## ४०. सदोहविर्धानादिनिर्माणम्

तैसं [ १.२.१३ ]—

विष्णो रराटमसि ॥ विष्णोः पृष्ठमसि ॥ विष्णोः श्नप्त्रे स्थः ॥ विष्णोः स्यूरसि ॥ विष्णोर्ध्रुवमसि ॥ वैष्णवमसि विष्णवे त्वा ॥

[ १.३.१–३ ]—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ अभ्रिरसि नारिरसि ॥ परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि

१. अग्निप्रणयनकाले प्रस्तोतृसाम। त्रिर्गायेत्।

२. अग्निप्रणयनकाले प्रस्तोतृसाम। त्रिर्गायेत्। द्रष्टव्यं पृ. १३५

कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि ॥ दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा ॥ शुन्धतां लोकः पितृषदनः ॥ यवोऽसि यवयास्मद् द्वेषो यवयारातीः ॥ पितृणाꣳ सदनमसि ॥ उद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीं दृꣳह ॥ द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणा ॥ ब्रह्मवनि त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि ॥ ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह ॥ घृतेन द्यावापृथिवी आ पृणेथाम् ॥ इन्द्रस्य सदोऽसि ॥ विश्वजनस्य छाया ॥ परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ॥ इन्द्रस्य स्यूरसि ॥ इन्द्रस्य ध्रुवमसि ॥ ऐन्द्रमसीन्द्राय त्वा ॥ रक्षोहणो वलगहनो वैष्णवान् खनामि ॥ इदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो योऽसमानोऽरातीयति ॥ गायत्रेण छन्दसा ॥ अवबाढो वलगः ॥ किमत्र ॥ भद्रम् ॥ तन्नौ सह ॥ विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभिमातिहा विश्वाराडसि विश्वासां नाष्ट्राणाꣳ हन्ता ॥ रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान् ॥ रक्षोहणो वलगहनोऽव नयामि वैष्णवान् ॥ यवोऽसि यवयास्मद् द्वेषो यवयारातीः॥ रक्षोहणो वलगहनोऽव स्तृणामि वैष्णवान्॥ रक्षोहणो वलगहनोऽभि जुहोमि वैष्णवान् ॥ रक्षोहणौ वलगहनावुप दधामि वैष्णवी ॥ रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी ॥ रक्षोहणौ वलगहनौ परि स्तृणामि वैष्णवी ॥ रक्षोहणौ वलगहनौ वैष्णवी ॥ बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वद ॥ विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा हिꣳसीः ॥ वह्निरसि हव्यवाहनो रौद्रेणानीकेन....॥ श्वात्रोऽसि प्रचेता रौद्रेणानीकेन....॥ तुथोऽसि विश्ववेदा रौद्रेणानीकेन.... ॥ उशिगसि कवी रौद्रेणानीकेन.... ॥ अङ्घारिरसि बम्भारी रौद्रेणानीकेन....॥ अवस्युरसि दुवस्वान् रौद्रेणानीकेन....॥ शुन्ध्यूरसि मार्जालीयो रौद्रेणानीकेन....॥ सम्राडसि कृशानू रौद्रेणानीकेन....॥ परिषद्योऽसि पवमानो रौद्रेणानीकेन.... ॥ प्रतक्कासि नभस्वान् रौद्रेणानीकेन....॥ असंमृष्टोऽसि हव्यसूदो रौद्रेणानीकेन.... ॥ ऋतधामासि सुवर्ज्योती रौद्रेणानीकेन.... ॥ ब्रह्मज्योतिरसि सुवर्धामा रौद्रेणानीकेन.... ॥ अजोऽस्येकपाद् रौद्रेणानीकेन.... ॥ अहिरसि बुध्नियो रौद्रेणानीकेन.... ॥

[ ६.२.९–११ ]—यत् तृतीयं छदिर्हविर्धानयोरुदाह्रियते० यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत् तं न विस्रꣳसयेदमेहेनाध्वर्युः प्र मीयेत तस्मात् स विस्रस्यः । देवस्य त्वा सवितुः प्रसव इत्यभ्रिमा दत्ते० परस्तादर्वाचीं प्रोक्षति० यत् खनत्यपोऽव नयति० यवमतीरव नयति० यजमानेन संमितौदुम्बरी भवति० पितृणाꣳ सदनमसीति बर्हिरव स्तृणाति० बर्हिरवस्तीर्य

मिनोति० घृतेन द्यावापृथिवी आ पृणेथामित्यौदुम्बर्यां जुहोति० आन्तमन्ववस्रावयति० ऐन्द्रमसि इति छदिरधि नि दधाति० नवछदि तेजस्कामस्य मिनुयात्० एकादशछदीन्द्रियकामस्य० पञ्चदशछदि भ्रातृव्यवतः० सप्तदशछदि प्रजाकामस्य० एकवि॰ँशतिछदि प्रतिष्ठाकामस्य० मध्यत औदुम्बरीं मिनोति० दक्षिणान्युत्तराणि करोति० अन्तर्वर्तान् करोति० यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत् तं न विस्र॰ँसयेदमेहेनाध्वर्युः प्र मीयेत तस्मात् स विस्रस्यः। शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवाः। हविर्धाने खायन्ते० अधस्तात् खायन्ते० बाहुमात्राः खायन्ते०० संतृणत्ति० न सं भिनत्ति० अपोऽव नयति० यवमतीरव नयति० बर्हिरव स्तृणाति० आज्येन व्याघारयति० हनू वा एते यज्ञस्य यदधिषवणे न सं तृणत्ति० अथो खलु दीर्घसोमे संतृद्ये० हविर्धाने चर्मन्नधि ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति० ॥

[ ६.३.१ ]—चात्वालाद्धिष्णियानुप वपति० न्यन्ये धिष्णिया उप्यन्ते नान्ये। यान् निवपति तेन तान् प्रीणाति। यान् न निवपति यदनुदिशति तेन तान् ॥

**मैसं [ १.२.९–१२ ]—**

विष्णोः पृष्ठमसि ॥ विष्णो रराटमसि ॥ विष्णोः श्निप्रे स्थः ॥ विष्णोः स्यूरसि ॥ विष्णोर्ध्रुवोऽसि ॥ वैष्णवमसि विष्णवे त्वा ॥

प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ अभ्रिरसि नारिरसि ॥ इदमह॰ँ रक्षसो ग्रीवा अपिकृन्तामीदमह॰ँ यो मे समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्तामि॥ बृहन्नसि बृहद्रावा बृहतीमिन्द्राय वाच॰ँ वद रक्षोहण॰ँ वलगहन॰ँ वैष्णवीम् ॥ सम्राडसि सपत्नहेदमहं तान् वलगानुद्वपामि यान्मे समानो यानसमानो निचखान ये कुल्फदघ्ने निरस्तो वलगः ॥ स्वराडस्यभिमातिहेदमहं तान् वलगानुद्वपामि यान्मे सजातो यानसजातो निचखान ये जानुदघ्ने निरस्तो वलगः ॥ विराडसि रक्षोहेदमहं तान् वलगानुद्वपामि यान्मे सबन्धुर्यानसबन्धुर्निचखान ये नाभिदघ्ने निरस्तो वलगः॥ सत्रराडस्यशस्तिहेदमहं तान् वलगानुद्वपामि यान्मे भ्रातृव्यो यानभ्रातृव्यो निचखान ये अ॰ँसदघ्ने निरस्तो वलगः ॥ सर्वराडस्यरातीयतो हन्तेदमहं तान् वलगानुद्वपामि यान्मे सजन्यो यानसजन्यो निचखान ये शीर्षदघ्ने निरस्तो वलगः ॥ संमृश इमानायुषे वर्चसे च देवानां निधिरसि द्वेषोयवनः। युयोध्यस्मद् द्वेषा॰ँसि यानि कानि च चकृम। देवानामिदं निहित॰ँ यदस्त्यथा भाहि प्रदिशश्चतस्रः। कृण्वानो अन्यं अधरान्त्सपत्नान् ॥ पृथिव्यै त्वा ॥ अन्तरिक्षाय त्वा ॥ दिवे त्वा ॥ शुन्धन्तां लोकाः पितृषदनाः ॥ यवोऽसि

यवय द्वेषो अस्मद्यवयारातिम् ॥ पितृषदनं त्वा लोकमवस्तृणामि ॥ उच्छ्रयस्व वनस्पते सजूर्देवेन बर्हिषा ॥ नितानस्त्वा मारुतो निहन्तु मित्रावरुणौ ध्रुवेण धर्मणा ॥ ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामि ॥ ब्रह्म दृꣳह क्षत्रं दृꣳह रायस्पोषं दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय दृꣳह ॥ घृतेन द्यावापृथिवी आपृण ॥ विश्वजनस्य छायासि ॥ परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः। वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः॥ इन्द्राय त्वा ॥ इन्द्रस्य स्यूरसि ॥ इन्द्रस्य ध्रुवोऽसि ॥ ऐन्द्रमसीन्द्राय त्वा ॥ रक्षोघ्नो वो वलगघ्नः प्रोक्षामि वैष्णवान् ॥ रक्षोहणं त्वा वलगहनमवसिञ्चामि वैष्णवम् ॥ रक्षोहणं त्वा वलगहनमवस्तृणामि वैष्णवम् ॥ रक्षोघ्नी वाꣳ वलगघ्नी उपदधामि वैष्णवी ॥ रक्षोघ्नी वाꣳ वलगघ्नी पर्यूहामि वैष्णवी ॥ रक्षोहणं त्वा वलगहनमास्तृणामि वैष्णवम् ॥ विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा नमस्ते अस्तु मा मा हिꣳसीः॥ वह्निरसि हव्यवाहनो रौद्रेणानीकेन....॥ श्वात्रोऽसि प्रचेता रौद्रेणानीकेन ....॥ तुथोऽसि विश्ववेदा रौद्रेणानीकेन....॥ अवस्युरसि दुवस्वान् रौद्रेणानीकेन....॥ अङ्गारिरसि बम्भारी रौद्रेणानीकेन ....॥ उशिगसि कवी रौद्रेणानीकेन....॥ शुन्ध्युरसि मार्जालीयो रौद्रेणानीकेन....॥ सम्राडसि कृशानू रौद्रेणानीकेन....॥ परिषद्योऽस्यास्तव्यो रौद्रेणानीकेन....॥ नभोऽसि प्रतक्वा रौद्रेणानीकेन....॥ असंमृष्टोऽसि हव्यसूदनो रौद्रेणानीकेन....॥ सगरोऽसि विश्ववेदा रौद्रेणानीकेन....॥ ऋतधामासि स्वर्ज्योती रौद्रेणानीकेन....॥ समुद्रोऽसि विश्वव्यचा रौद्रेणानीकेन....॥ अजोऽस्येकपाद्रौद्रेणानीकेन....॥ अहिरसि बुध्न्यो रौद्रेणानीकेन ....॥ कव्योऽसि कव्यवाहनो रौद्रेणानीकेन....॥

[ ३.८.७–१० ]—हविर्धानꣳ संमिनोति० आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः। इहाद्य सोमपीतये इति० यच्छदिरभिनिदधाति० प्र तद्विष्णुः स्तवते वीर्येणेति प्राङुत्क्रम्य वदति० प्राणा वा उपरवाः शिरो हविर्धानम्० तस्माद्धविर्धाने० तस्मादन्तः० तस्माच्चत्वारः संतृण्णाः परः० विधृता उपरिष्टात्० तस्माद्दक्षिणे हविर्धाने० बाहुमात्रं खेयम्० यदवसिञ्चति० यदवस्तृणाति० हनू अधिषवणे शिरो हविर्धानम्० तस्माद्धविर्धाने० तस्मादन्तः० यत्संतृद्यात्० द्व्यङ्गुलमन्तरा कार्यम्० पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेति प्रोक्षति० त्रिः प्रोक्षति० यद्यत्रमतीभिः प्रोक्षति० यदवसिञ्चति० यदवस्तृणाति० यद्यवमवास्यति० यदौदुम्बरी० तस्मादुद्गातान्वारभते यजमानो वा। औदुम्बरी वर्षिष्ठा कार्या० विश्वजनस्य छायासीति छदिरभिनिदधाति० यदन्येनान्येन संमिनोति० अथ यत् तिरश्चीनं मिनोति० समीचीनं मिनोति० समानꣳ साङ्काशिनं कार्यम्० यं द्विष्यात् तस्याक्षणया मिनुयात्० यदि कामयेत वर्षेत् पर्जन्या इति नीचैः सदो मिनुयात्० यदि कामयेत न वर्षेत्

पर्जन्या इत्युच्चैः सदो मिनुयात्० नवच्छदिरग्निष्टोमे स्यात्० प्राचीनवꣳशꣳ हविर्धानं मिनोति० प्राचीनवꣳशमाग्नीध्रम्० तिरश्चीनवꣳशꣳ सदः० यजुषा हविर्धानं मिनोति० यजुषा सदः० अयजुषाग्नीध्रम्० अर्धमाग्नीध्रस्यान्तर्वेदि मिनोत्यर्धं बहिर्वेदि० चात्वालाद्विह्रियन्ते० ॥

क्रमं [ २.१०–१३ ]—

विष्णोः पृष्ठमसि ॥ विष्णो रराटमसि ॥ विष्णोश्श्नप्त्रे स्थः ॥ विष्णोस्स्यूरसि ॥ विष्णोर्ध्रुवोऽसि ॥ वैष्णवमसि विष्णवे त्वा ॥ प्र तद्विष्णुस्स्तवते वीर्येण.... ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ इदमहं रक्षसो ग्रीवा अपिकृन्तामीदमहं यो नस्समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्तामि ॥ बृहन्नसि बृहद्ग्रावा.... ॥ रक्षोहणं वलगहनं वैष्णवीम् ॥ इदमहं तान् वलगानुद्वपामि यान्नस्समानो यानसमानो निचखान ॥ इदमहं तान् वलगानुद्वपामि यान्नस्सबन्धुर्यानसबन्धुर्निचखान ॥ इदमहं तान् वलगानुद्वपामि यान्नस्सनाभिर्यानसनाभिर्निचखान ॥ इदमहं तान् वलगानुद्वपामि यान्नस्स्वो यानरणो निचखान ॥ राडसि विराडसि सम्राडसि स्वराडसि ॥ गायत्रेण च्छन्दसाववाढो यं द्विष्मः ॥ त्रैष्टुभेन [च्छन्दसाववाढो यं द्विष्मः ॥] जागतेन [च्छन्दसाववाढो यं द्विष्मः ॥] आनुष्टुभेन [च्छन्दसाववाढो यं द्विष्मः ॥] पाङ्क्तेन च्छन्दसाववाढो यं द्विष्मः ॥ किमत्र ॥ भद्रम् ॥ तन्नौ सह ॥ निरस्तो वलगोऽववाढो दुरस्युः ॥ रक्षोघ्नो वलगघ्नः प्रोक्षामि वैष्णवान् ॥ रक्षोघ्नो वलगघ्नोऽवसिञ्चामि वैष्णवान् ॥ रक्षोघ्नो वलगघ्नोऽवस्तृणामि वैष्णवान् ॥ रक्षोहणौ वलगहनौ प्रोक्षामि वैष्णवी ॥ रक्षोहणौ वलगहना उपदधामि वैष्णवी ॥ रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी ॥ रक्षोहा त्वा वलगहा प्रोक्षामि वैष्णवम् ॥ रक्षोहा त्वा वलगहा स्तृणामि वैष्णवम् ॥ रक्षोघ्नो वलगघ्नस्सीसादयामि वैष्णवान् ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ इदमहं रक्षसो ग्रीवा अपिकृन्तामीदमहं यो नस्समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्तामि ॥ दिवे त्वा ॥ अन्तरिक्षाय त्वा ॥ पृथिव्यै त्वा ॥ शुन्धन्तां लोकाः पितृषदनाः ॥ यवोऽसि यावयास्मद् द्वेषं यावयारातिम् ॥ पितृषदनं त्वा लोकमास्तृणामि ॥ उद् द्यां स्तभानान्तरिक्षं पृण दृꣳहस्व पृथिव्याम् ॥ नितानस्त्वा मारुतो निहन्तु मित्रावरुणयोर्ध्रुवेण धर्मणा ॥ ब्रह्मवनिं त्वा क्षत्रवनिं देववनिं सजातवनिं रायस्पोषवनिं पर्यूहामि ॥ ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह ॥ घृतेन द्यावापृथिवी आपृणेथाम् ॥ विश्वजनस्य च्छायासि ॥ इन्द्रस्य स्यूरसि ॥ इन्द्रस्य ध्रुवोऽसि ॥ ऐन्द्रमसीन्द्राय त्वा ॥ परि त्वा गिर्वणो गिर.... ॥ विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि माग्ने नमस्ते अस्तु मा मा हिꣳसीः ॥ वह्निरसि हव्यवाहनो रौद्रेणानीकेन.... ॥ श्वात्रोऽसि प्रचेता रौद्रेणा-

नीकेन....॥ तुथोऽसि विश्ववेदा रौद्रेणानीकेन....॥ उशिगसि कवी रौद्रेणानीकेन....॥ अङ्घारिरसि बम्भारी रौद्रेणानीकेन.... ॥ अवस्युरसि दुवस्वान् रौद्रेणानीकेन.... ॥ शुन्ध्युरसि मार्जालीयो रौद्रेणानीकेन.... ॥ सम्राडसि कृशानू रौद्रेणानीकेन.... ॥ परिषद्योऽस्यास्तव्यो रौद्रेणानीकेन.... ॥ नभोऽसि प्रतक्वा रौद्रेणानीकेन .... ॥ असंमृष्टोऽसि हव्यसूदनो रौद्रेणानीकेन....॥ ऋतधामासि स्वर्ज्योती रौद्रेणानीकेन....॥ समुद्रोऽसि विश्वव्यचा रौद्रेणानीकेन .... ॥ अजोऽस्येकपाद्रौद्रेणानीकेन.... ॥ अहिरसि बुध्न्यो रौद्रेणानीकेन.... ॥ कव्योऽसि कव्यवाहनो रौद्रेणानीकेन.... ॥

[ २५.८–१० ]— विष्णोः पृष्ठमसीति च्छदिरुपरिष्टादधिनिदधाति० विष्णो रराटमसीति पुरस्तात्० विष्णोश्श्नप्त्रे स्थ इत्यभितः० तिर्यञ्चं पुरस्ताद्वंशं विषीव्यन्ति० यं प्रथमं ग्रन्थिं ग्रथ्नीयात् तं प्रथमं विचृतेत्० उपरिष्टाच्छम्यास्संनह्यन्ति पश्चादुपमिन्वन्ति० पुरस्तात् वर्षीयो भवति पश्चात् ऋधीयः० वैष्णवमसि विष्णवे त्वेति संमितमभिमन्त्रयते० प्र तद्विष्णु-स्स्तवते वीर्येणेति त्रीन् प्रक्रमान् यजमानं प्राञ्चं प्रक्रमयति० शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवाः। दक्षिणस्य हविर्धानस्याधस्तात् परिलिखति० चतुरः परिलिखति० प्रादेशं प्रादेशं विपरिलिखति० असंभिन्दन्तः खनन्ति० तान् पर एकधा संतृन्दन्ति० देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते० बाहुमात्राः खेयाः० आमयाविनमनुमर्शयन्ति सम्राडसि स्वराडसीति० अवसिञ्चत्यत्र च स्तृणाति० यदद्भिः प्रोक्षति० हनू वा एते यज्ञस्य यदधिषवणे। अवितृण्णे भवतः० पुरस्ताद्दीहीयसी पश्चाद्वरीयसी० द्व्यङ्गुलमन्तराधिषवणे भवति० पर्यूहति० यत् सदस्यौदुम्बरीं मिनोति० इतः पराञ्चं यूपं प्रोक्षत्यमुतोऽर्वाचीमौदुम्बरीम्० देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते० यवमतीरवसिञ्चति० घृतेनौदुम्बरीमभिजुहोति० औदुम्बरीमभि च्छदींषि संमुखानि कुर्यात्० च्छदिर्भवत्यथान्तर्वर्तः० अथ पर्शुः० तिर्यङ् मिन्वन्ति० यत्सद उभयतश्छिद्रम्० विषीव्यन्ति० ऐन्द्रमसीन्द्राय त्वेति संमितमभिमन्त्रयते० नव च्छदींषि कुर्याद्यद्यग्निष्टोमस्स्यात्० एकविंशतिं प्रतिष्ठाकामस्य कुर्यात्० या अन्ततस्स्थूणास्ताः ऋधिष्ठाः कुर्याद्यदि कामयेत वर्षेदिति० ता वर्षिष्ठाः कुर्याद् यदि कामयेत न वर्षेदिति० यानि दक्षिणानि च्छदींषि तान्युत्तराणि कुर्यात्० ॥

[ २६.१ ]—धिष्ण्या न्युप्यन्ते० न्यन्य उप्यन्ते नान्ये० जानुदघ्नं खेयम्० चात्वालान्निवपति० प्राचीनमाग्नीध्रात् प्रतीचीनं चात्वालात् तेन संचरेत्० न प्रत्यङ् सदोऽतीयादध्वर्युः० यद्यतीयादैन्द्र्या संचरेत्० न प्राङ् हविर्धानम्० यद्यतीयाद्वैष्णव्या संचरेत्० तदाहुः क्षैत्रपत्ययैव संचरेत्० ॥

कपिसं [ २.४-७ ]—

--- ॥ इदमहं तान्.... यान् नः समानो .... ॥ --- ॥ सम्राडसि सपत्नहा स्वराडस्यभिमातिहा सत्राराडसि रक्षोहा विश्वाराडस्यरातीयतो हन्ता ॥ गायत्रेण....॥ --- ॥ रक्षोहणौ .... पर्यूहामि वैष्णवी ॥ रक्षोहा त्वा वलगहा स्तृणामि वैष्णवम् ॥ देवस्य त्वा.... ॥ इदमहं रक्षसो ग्रीवा अपिकृन्तामि ॥ दिवे त्वा ॥ --- ॥ यवोऽसि यवयास्मद् द्वेषं यवयारातिम् ॥ --- ॥ घृतेन द्यावापृथिवी आपृणाताम् ॥ --- ॥ ऐन्द्रमसीन्द्राय त्वा ॥ विभूरसि .... ॥ --- ॥ अंहारिरसि बम्भारी ....॥ --- ॥ ऋतधामासि स्वर्योनीः .... ॥ --- ॥

कपिसं [४०.१-४]— --- घृतेनौदुम्बरीमभिजुहोति० आन्तमन्ववस्रावयति ---॥

वामासं —

प्र तद्विष्णुः स्तवते वीर्येण .... ॥ विष्णो रराटमसि ॥ विष्णोः श्नप्त्रे स्थः ॥ विष्णोः स्यूरसि ॥ विष्णोर्ध्रुवोऽसि ॥ वैष्णवमसि विष्णवे त्वा ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसि ॥ इदमहꣳ रक्षसां ग्रीवा अपि कृन्तामि ॥ बृहन्नसि बृहद्रवा बृहतीमिन्द्राय वाचं वद रक्षोहणं वलगहनं वैष्णवीम् ॥ इदमहं तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखान ॥ इदमहं तं वलगमुत्किरामि यं मे समानो यमसमानो निचखान ॥ इदमहं तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखान ॥ इदमहं तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखान ॥ उत्कृत्यां किरामि ॥ स्वराडसि सपत्नहा । सत्रराडस्यभिमातिहा । जनराडसि रक्षोहा । सर्वराडस्यमित्रहा ॥ रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान् ॥ रक्षोहणो वो वलगहनोऽवनयामि वैष्णवान् ॥ रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान् ॥ रक्षोहणौ वां वलगहना उपदधामि वैष्णवी ॥ रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी ॥ वैष्णवमसि ॥ वैष्णवाः स्थ ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसि ॥ इदमहꣳ रक्षसां ग्रीवा अपिकृन्तामि ॥ यवोऽसि यवयास्मद् द्वेषो यवयारातीः ॥ दिवे त्वा । अन्तरिक्षाय त्वा । पृथिव्यै त्वा ॥ शुन्धन्तां लोकाः पितृषदनाः ॥ पितृषदनमसि ॥ उद्दिवꣳ स्तभानान्तरिक्षं पृण दृꣳहस्व पृथिव्याम् ॥ द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणौ ध्रुवेण धर्मणा ॥ ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि ॥ ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳह ॥ ध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया [ भूयात् ॥ ध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने ] पशुभिर्भूयात् ॥ घृतेन द्यावापृथिवी पूर्येथाम् ॥

इन्द्रस्य च्छदिरसि विश्वजनस्य छाया ॥ परि त्वा गिर्वणो .... ॥ इन्द्रस्य स्यूरसि ॥ इन्द्रस्य ध्रुवोऽसि ॥ ऐन्द्रमसि ॥ वैश्वदेवमसि ॥ विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि माग्ने गोपाय मा नमस्ते अस्तु मा मा हिꣳसीः ॥ वह्निरसि हव्यवाहनो रौद्रेणानीकेन.... ॥ श्वात्रोऽसि प्रचेता रौद्रेणानीकेन.... ॥ तुथोऽसि विश्ववेदा रौद्रेणानीकेन.... ॥ उशिगसि कवी रौद्रेणानीकेन.... ॥ अङ्घारिरसि बम्भारी रौद्रेणानीकेन.... ॥ अवस्यूरसि दुवस्वान् रौद्रेणानीकेन.... ॥ शुन्ध्यूरसि मार्जालीयो रौद्रेणानीकेन.... ॥ सम्राडसि कृशानू रौद्रेणानीकेन.... ॥ परिषद्योऽसि पवमानो रौद्रेणानीकेन .... ॥ नभोऽसि प्रतक्वा रौद्रेणानीकेन.... ॥ मृष्टोऽसि हव्यसूदनो रौद्रेणानीकेन.... ॥ ऋतधामासि स्वर्ज्योती रौद्रेणानीकेन .... ॥ समुद्रोऽसि विश्वव्यचा रौद्रेणानीकेन.... ॥ अजोऽस्येकपाद्रौद्रेणानीकेन .... ॥ अहिरसि बुध्न्यो रौद्रेणानीकेन.... ॥ ५.२०–२३

माशब्रा [ ३.५.३.२२–४.२४ ]—अथ मध्यमं छदिरुपस्पृश्य वाचयति प्र तद्विष्णुः स्तवते .... विश्वेति० अथ रराट्यामुपस्पृश्य वाचयति विष्णो रराटमसीति० अथोच्छ्राय्या उपस्पृश्य वाचयति विष्णोः श्नप्त्रे स्थ इति० अथ लस्पूजन्या स्यन्द्यया प्रसीव्यति विष्णोः स्यूरसीति। अथ ग्रन्थिं करोति विष्णोर्ध्रुवोऽसीति० तन्निष्ठितमभिमृशति वैष्णवमसीति० उपरवान् खनति। स दक्षिणस्य हविर्धानस्याधोऽधः प्रउगं खनति। सोऽभ्रिमादत्ते देवस्य त्वा .... नार्यसीति० तान् प्रादेशमात्रं विना परिलिखति इदमहꣳ रक्षसां ग्रीवा अपि कृन्तामीति० तद् यावेतौ पूर्वौ तयोर्दक्षिणमेवाग्रे परिलिखेत्। अथापरयोरुत्तरम्। अथापरयोर्दक्षिणम्। अथ पूर्वयोरुत्तरम्। अथो इतरथाहुः। अपरयोरेवाग्र उत्तरं परिलिखेत् अथ पूर्वयोर्दक्षिणम् अथापरयोर्दक्षिणम् अथ पूर्वयोरुत्तरमिति। अथो अपि समीच एव परिलिखेत्। एतं त्वेवोत्तमं परिलिखेद् य एष पूर्वयोरुत्तरो भवति। तान् यथापरिलिखितमेव यथापूर्वं खनति बृहन्नसि बृहद्रवा .... इति० तान् यथाखातमेवोत्किरति इदमहं तं वलगमुत्किरामि .... इति० उत् कृत्यां किरामीत्यन्तत उद्वपति० तान् बाहुमात्रान् खनेत्० तानक्ष्णया सन्तृन्दन्ति। यद्यक्ष्णया न शक्नुयात् अपि समीचः० तान् यथाखातमेवावमर्शयति स्वराडसि सपत्नहा .... इति० अथाध्वर्युश्च यजमानश्च संमृशेते। पूर्वयोर्दक्षिणेऽध्वर्युर्भवति। अपरयोरुत्तरे यजमानः। सोऽध्वर्युः पृच्छति **यजमान किमत्र** इति। **भद्रम्** इत्याह। **तन्नौ सह** इत्युपाꣳश्वध्वर्युः। अथापरयोर्दक्षिणेऽध्वर्युर्भवति। पूर्वयोरुत्तरे यजमानः। स यजमानः पृच्छति **अध्वर्यो किमत्र** इति। **भद्रम्** इत्याह। **तन्मे** इति यजमानः० अथ प्रोक्षति० स प्रोक्षति रक्षोहणो वो वलगहनः .... इति० अथ याः प्रोक्षण्यः परिशिष्यन्ते ता अवटेष्ववनयति० सोऽवनयति रक्षोहणो वो वलगहनोऽवनयामि

वैष्णवानिति। अथ बर्हीᳪषि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति० सोऽवस्तृणाति रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवानिति। अथ बर्हीᳪषि तनूनीवोपरिष्टात् प्रच्छादयति० अथाधिषवणे फलके उपदधाति रक्षोहणौ वां वलगहना उपदधामि वैष्णवी इति० अथ पर्यूहति रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी इति० अथाधिषवणं परिकृत्तं भवति सर्वरोहितम्० तन्निदधाति वैष्णवमसीति० अथ ग्राव्ण उपावहरति० तान् निदधाति वैष्णवाः स्थेति।

[ ३.५.३.१–९ ]—पुरुषो वै यज्ञः० शिर एवास्य हविर्धानम्० मुखमेवास्याहवनीयः० स्तुप एवास्य यूपः० बाहू एवास्याग्नीध्रीयश्च मार्जालीयश्च। उदरमेवास्य सदः० अथ यावेतौ जघनेनाग्नी पादावेवास्यैतौ० उभयतोद्वारᳪ हविर्धानं भवति० उभयतोद्वारᳪ सदः० प्रणिक्ते हविर्धाने उपतिष्ठते। ते समववर्तयन्ति दक्षिणेनैव दक्षिणमुत्तरेणोत्तरम्। यद्वर्षीयस्तद्दक्षिणᳪ स्यात्। तयोः समववृत्तयोः छदिरधि निदधति। यदि छदिर्न विन्देयुश्छदिःसंमितां वा भित्तिं प्रत्यानह्यन्ति। रराट्यां परिश्रयन्ति। उच्छ्रायीभ्यां छदिः पश्चादधि निदधति छदिःसंमितां वा भित्तिम्।

[ ३.६.१–२ ]—उदरमेवास्य सदः० तन्मध्य औदुम्बरीं मिनोति० अथ य एष मध्यमः शङ्कुर्भवति वेदेर्जघनार्धे तस्मात् प्राङ् प्रक्रामति षड् विक्रमान् दक्षिणा सप्तममपक्रामति० तदवटं परिलिखति। सोऽभ्रिमादत्ते देवस्य त्वा .... नार्यसीति० अथावटं परिलिखति इदमहᳪ रक्षसां ग्रीवा अपिकृन्तामीति० अथ खनति। प्राञ्चमुत्करमुत्किरति। यजमानेन संमायौदुम्बरीं परिवासयति। तामग्रेण प्राचीं निदधाति। एतावन्मात्राणि बर्हीᳪषि उपरिष्टादधि निदधाति। अथ यवमत्यः प्रोक्षण्यो भवन्ति० स यवानावपति यवोऽसि यवयास्मद्द्वेषो यवयारातीरिति० अथ प्रोक्षति० स प्रोक्षति दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति० अथ याः प्रोक्षण्यः परिशिष्यन्ते ता अवटेऽवनयति शुन्धन्तां लोकाः पितृषदना इति० अथ बर्हीᳪषि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति पितृषदनमसीति० तामुच्छ्रयति उद्दिवᳪ स्तभानान्तरिक्षं पृण दृᳪहस्व पृथिव्यामिति० अथ मिनोति द्युतानस्त्वा मारुतो मिनोतु .... इति० अथ पर्यूहति ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामीति० अथ पर्यूषति ब्रह्म दृᳪह क्षत्रं दृᳪहायुर्दृᳪह प्रजां दृᳪहेति० अथाप उपनिनयति० अथैवमभिपद्य वाचयति ध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया भूयादिति। पशुभिरिति वा० अथ स्रुवेणोपहत्याज्यं विष्टपमभि जुहोति घृतेन द्यावापृथिवी पूर्येथामिति० अथ च्छदिरधि निदधाति इन्द्रस्य च्छदिरसि .... इति० तदुभयतश्छदिषी उपदधाति उत्तरतस्त्रीणि परस्त्रीणि तानि नव भवन्ति० तदुदीचीनवᳪशᳪ सदो भवति। प्राचीनवᳪशᳪ हविर्धानम्। एतद्वै देवानां निष्केवल्यं यद्धविर्धानम्। तस्मात्तत्र नाश्नन्ति न भक्षयन्ति० अथैते मिश्रे यदाग्नीध्रं च सदश्च। तस्मात् तयोरश्नन्ति तस्माद्भक्षयन्ति० तत्परिश्रयन्ति परि त्वा गिर्वणो गिर .... जुष्टय इति० अथ

लस्पूजन्या स्पन्द्यया प्रसीव्यति इन्द्रस्य स्यूरसीति । अथ ग्रन्थिं करोति इन्द्रस्य ध्रुवोऽसीति० तन्निष्ठितमभिमृशति ऐन्द्रमसीति० अथ हविर्धानयोर्जघनार्धं समन्वीक्ष्योत्तरेणाग्नीध्रं मिनोति । तस्यार्धमन्तर्वेदि स्यादर्धं बहिर्वेदि । अथो अपि भूयोऽर्धादन्तर्वेदि स्यात् कनीयो बहिर्वेदि । अथो अपि सर्वमेवान्तर्वेदि स्यात् । तन्निष्ठितमभिमृशति वैश्वदेवमसीति० विजामानो हैवास्य धिष्ण्याः० तस्मादध्वर्युः समया धिष्ण्यान्नातीयात्० तस्माद् यद्यध्वर्योः शालायामर्थः स्यादुत्तरेणैवाग्नीध्रीयं संचरेत्० तेषां वा अर्धानुपकिरन्त्यर्धाननुदिशन्ति० ॥

**वाकासं—**

**--- ॥ इदमहं रक्षसो ग्रीवा अपिकृन्तामि ॥ --- ॥ इदमहं तं वलगमुद्वपामि यन्नो निष्ट्यो.... ॥ इदमहं तं वलगमुद्वपामि यं नः समानो.... ॥ इदमहं तं वलगमुद्वपामि यं नः सबन्धुर्.... ॥ इदमहं तं वलगमुद्वपामि यं नः सजातो.... ॥ उत् कृत्यां किरामि ॥ स्वराळसि सपत्नहा । सत्रराळस्यभिमातिहा । जनराळसि रक्षोहा । सर्वराळस्यमित्रहा ॥ रक्षोहणौ वलगहनः .... ॥ रक्षोहणो वलगहनो.... ॥ रक्षोहणो वलगहनो....॥ रक्षोहणौ वलगहना .... ॥ रक्षोहणौ वलगहनौ.... ॥ --- ॥ इदमहं रक्षसो ग्रीवा अपिकृन्तामि ॥ --- ॥ ध्रुवासि ध्रुवोऽस्मिन् यजमान आयतने भूयात् ॥ --- ॥ विभूरसि प्रवाहणो रौद्रेणानीकेन.... पिपृहि माग्ने नमस्ते.... ॥ --- ॥ शुन्ध्यूरसि मार्जालीयो....॥ ऋतधामासि स्वर्ज्योती....॥---॥ अहिरसि बुध्न्यो.... ॥ सम्राळसि कृशानू.... ॥ --- ॥ मृष्टोऽसि हव्यसूदनो....॥ ५.५.८–८.४**

काशब्रा [ ४.५.३.२१–४.१९ ]— --- तान् प्रादेशसंमितान् परिलिखति० स इममेवाग्रे परिलिखत्यथेममथेममथेमम् । तान् यथापरिलिखितं खनति --- ॥

[ ४.५.३.१–७ ] ≡ माशब्रा ३.५.३.१–९

[ ४.६.१–२ ] --- अथ विष्टपेऽभिजुहोति घृतेन द्यावापृथिवी पूर्येथामिति० संततमवनयेत् --- ॥

**तांब्रा [ १.१.२–५ ]—**

**देवो देवमेतु सोमः सोममेत्वृतस्य पथा ॥ विहाय दौष्कृत्यम् ॥ बद्धा नामासि सृतिः सोमसरणी सोमं गमेयम् ॥ पितरो भूः पितरो भूः पितरो भूः ॥**

[ ६.४.१–१२ ] यदुद्गातौदुम्बरीं प्रथमेन कर्मणान्वारभते० तामुच्छ्रयति द्युतानस्त्वा मारुत उच्छ्रयतूद्दिवं स्तभानान्तरिक्षं पृण दृंह पृथिवीम् । तामन्वारभते आयोष्ट्वा सदने सादयाम्यवतश्छायायां समुद्रस्य हृदये इति० **नमः समुद्राय नमः समुद्रस्य**

चक्षुषे इत्याह० मा मा यूनर्वा हासीत् इत्याह० ऊर्गस्यूर्जोदा ऊर्जं मे देह्यूर्जं मे धेह्यन्नं मे देह्यन्नं मे धेहि० ॥

षब्रा [ ४.३ ]—प्रजापतिर्देवेभ्य औदुम्बरीमुच्छ्रयत्यसुषिरमूलामग्रन्थि पृथुबुघ्नीमेकजाम्। यजमानमात्र्यौदुम्बरी भवति। अथ कुब्जा वामना यजमाना ह्रस्वाश्चोर्ध्वबाहवः प्रच्छेदनं कुर्युः। कतिच्छदनौदुम्बरी भवति। नवच्छदनाग्निष्टोमसाद्यस्क्रेषु० ॥

जैब्रा [ १.७० ]— यदुद्गाता प्रथमेन कर्मणौदुम्बरीमन्वारभते० तामन्वारभते आयोष्ट्वा सदने सादयाम्यवतश्छायायाᳲ समुद्रस्य हृदये। नमः समुद्राय नमः समुद्रस्य चक्षसे। मा मा योनोर्वा हासीः इति० ॥

[१.७२]—उद्दिवᳲ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृᳲह द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणा घृतेन द्यावापृथिवी आ प्रीणीथाᳲ सुपिप्पला ओषधीः कृधि स्वाहा इत्यौदुम्बरीमभिजुहोति० ॥

अशौसं—

मन्वे वां द्यावापृथिवी सुभोजसौ सचेतसौ ये अप्रथेथाममिता योजनानि।
प्रतिष्ठे ह्यभवतं वसूनां ते नो मुञ्चतमंहसः ॥ ४.२६.१

अपैसं—

मन्वे वां.... सुभोजसौ ये अप्रथेताममिता.... ॥ ४.३६.१

## ४१. सदोहविर्धाननिर्माणौद्गात्रम्

### हविर्धाने[१]

साजैसं [ १.११.४ ]—

अग्ने यजिष्ठो अध्वरे देवान् देवयते यज। होता मन्द्रो वि राजस्यति स्रिधः ॥

अग्नायि·या·यि·या। यजिष्ठोअध्वरायिदेवानूदेवयतेहाबुहोवा। याजाहोता-
फा श्यखा खं श षि तू टि की टच त्य

मन्द्रोवि··रा·ज·सीआतियाऔहोवा। स्रीधाः ॥ १
ध्यटच कच प्यम्या ष ट खा शि ख प्या

अग्नयाओ·वा। यजिष्ठोअध्वरायिदेवानूदा·यि·वा। अयाते·याजाहोतावुवा।
कुकू टट्ट टता चियि टच प्य श

मन्द्रो·वीरा·जा·साऔहो·वा। आतिस्रीधाः ॥ २ [ ग्राम १.११.११—१२ ]
ध्यच का क्य टट खट शशि थ टया ख

---

१. हविर्धाने शकटयोः स्थापितयोः प्रस्तोत्रा त्रिर्गेये सामनी। द्रष्टव्यं कौग्राम ३.१.१८-१९.

सदः[१]

अग्नेयजिष्ठोअध्वराये । देवानूदे्व'य'ता'यि'या'जाहु'वाहो'वा । होता'म'न्द्रो
तृ त चीछिक्य यजी ट त्यता क्यका च्यछिय ध्यच
विरा'जा'सि हुवाहोवा । आति'स्ना'यिधाः । ओयिळा ॥ [ग्राम १.११.१०]
क्य यजि ट ता का टिटध खण प प्या

## ४२. अग्नीषोमप्रणयनम्

तैसं [१.३.४]—

त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहा ॥ जुषाणो अप्तुराज्यस्य वेतु स्वाहा ॥

अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयꣳ शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ ॥
उरु विष्णो वि क्रमस्वोरु क्षयाय नः कृधि ।
घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर ॥

सोमो जिगाति गातुविद् देवानामेति निष्कृतमृतस्य योनिमासदम् ॥ अदित्याः सदोऽसि ॥ अदित्याः सद आ सीद ॥ एष वो देव सवितः सोमस्तꣳ रक्षध्वं मा वो दभत् ॥ एतत् त्वꣳ सोम देवो देवानुपागा इदमहं मनुष्यो मनुष्यान्त्सह प्रजया सह रायस्पोषेण ॥ नमो देवेभ्यः ॥ स्वधा पितृभ्यः ॥ इदमहं निर्वरुणस्य पाशात् ॥ सुवरभि वि ख्येषं वैश्वानरं ज्योतिः ॥ अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानि ॥

[६.३.२]—सुवर्गाय वा एतानि लोकाय हूयन्ते यद्वैसर्जनानि । द्वाभ्यां गार्हपत्ये जुहोति० आग्नीध्रे जुहोति० आहवनीये जुहोति० आ सोमं ददत आ ग्राव्ण आ वायव्यान्या द्रोणकलशमुत् पत्नीमा नयन्त्यन्वनाꣳसि प्र वर्तयन्ति० नयवत्यर्चाग्नीध्रे जुहोति० ग्राव्णो वायव्यानि द्रोणकलशमाग्नीध्र उप वासयति० सौम्यर्चा प्र पादयति ॥

[३.२.६]—

महीनां पयोऽसि ॥ विश्वेषां देवानां तनूः ॥ ऋध्यासमद्य पृषतीनां ग्रहं पृषतीनां ग्रहोऽसि ॥ विष्णोर्हृदयमसि ॥ एकमिष विष्णुस्त्वानु वि चक्रमे ॥

१. सदसि औदुम्बर्यामुच्छ्रितायां प्रस्तोतृसाम । त्रिर्गायेत् । द्रष्टव्यं कौग्राम ३.१.१७.

[ ३.१.३ ]—प्राञ्चमग्निं प्र हरन्त्युत् पत्नीमा नयन्त्यन्वनाꣳसि प्र वर्तयन्ति ॥

तैब्रा [ २.५.८.४ ]—

एवा वन्दस्व वरुणं बृहन्तम् । नमस्या धीरममृतस्य गोपाम् ।
स नः शर्म त्रिवरूथं वियꣳसत् । यूयं पात स्वस्तिभिः सदा नः ॥

मैसं [ १.२.१३ ]—

त्वꣳ सोम तनूकृद्भ्यो.... ॥ जुषाणो अप्तुराज्यस्य वेतु स्वाहा ॥ अग्ने नय सुपथा राये अस्मान्.... ॥

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।
घृतं घृतवने पिब प्र प्र यज्ञपतिं तिर स्वाहा ॥

एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम् ।
स नः शर्म त्रिवरूथꣳ वियꣳसत् पातं नो द्यावापृथिवी उपस्थे ॥

उर्वन्तरिक्षꣳ वीहि ॥ अदित्याः सदा आसीद ॥ देव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन् दुश्चक्षास्ते मावक्शत् ॥ एतत्त्वं देव सोम देवानुपावृत्त ॥ इदमहं मनुष्यान्त्सह रायस्पोषेण प्रजया चोपावर्ते ॥ नमो देवेभ्यः स्वधा पितृभ्यः ॥ निर्वरुणस्य पाशादमुक्षि ॥ स्वरभिव्यक्शं ज्योतिर्वैश्वानरम् ॥ अग्ने व्रतपते या तव तनूर्मय्यभूदेषा सा त्वयि ॥ अग्ने व्रतपते या मम तनूस्त्वय्यभूदियꣳ सा मयि ॥ पुनर्नौ व्रतपते व्रतिनोर्व्रतानि यथायथं नौ व्रतपते व्रतिनोर्व्रतानि वि व्रतानि सृजावहै ॥

[ ३.९.१ ]—अथ यद् गृहीत्वाज्यानि मणयन्ति० प्राञ्चः सोमेन प्रयन्ति प्राची पत्नी पूर्वमग्निमभ्युदैति० द्वाभ्यां गार्हपत्ये जुहोति० आग्नेय्याग्नीध्रे० वैष्णव्या हविर्धाने[१]० यदप्तुमत्या जुहोति० यत्सौम्या जुहोति० अग्रेण प्रणयेद्व्रतश्रीः[२]० पश्चादेव प्राङ् प्रणीयः० ॥

कासं [ ३.१ ]—

ज्योतिरसि विश्वरूपं मरुतां पृषती देवेभ्यस्त्वा यज्ञियेभ्यो गृह्णामि ॥ त्वꣳ सोम तनूकृद्भ्यो.... ॥ जुषाणो अप्तुराज्यस्य वेतु स्वाहा ॥ अग्ने नय सुपथा राये अस्मान् .... ॥

---

१. अयं पाठोऽसमीचीनः प्रतिभाति । ' अद एव प्राप्य ' इत्यनन्तरं ब्राह्मणवाक्यं भवति । ' अग्निना वै मुखेन देवा इमांल्लोकानजयन् गार्हपत्येनेमं लोकमाग्नीध्रेणान्तरिक्षमाहवनीयेनामुं लोकम् ' इत्यपि ब्राह्मणमग्रे वर्तते । अतः ' वैष्णव्याहवनीये ' इति पाठः साधुर्भवेत् । ' उरु विष्णो विक्रमस्वेत्याहवनीये हुत्वा... ' इति मानवश्रौतसूत्रमपि ( २.२.४.३१ ) अत्रावधारणीयम् ।

२. सोमम् ।

उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।
घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिर स्वाहा ॥

उर्वन्तरिक्षं वीहि ॥ अदित्यास्त्वगसि ॥ अदित्यास्सदने सीद ॥ देव सवितरेष ते सोमस्तं रक्षस्व मा त्वा दभन् ॥ एतत्त्वं देव सोम देवानुपागा इदमहं मनुष्यान् सह प्रजया सह रायस्पोषेण ॥ नमो देवेभ्यः ॥ स्वधा पितृभ्यः ॥ निर्द्रुहो निर्वरुणस्य पाशान्मुक्षीय ॥ स्वरभिव्यख्यं ज्योतिर्वैश्वानरम् ॥ अग्ने व्रतपा अस्मे व्रतपास्त्वे व्रतपा व्रतिनां व्रतानि ॥ याग्ने मम तनूस्त्वय्यभूदियं सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नो व्रतपा व्रतिनां व्रतानि ॥ स्वाहा यज्ञं मनसि स्वाहा दिवि स्वाहा पृथिव्यां स्वाहोरा अन्तरिक्षे स्वाहा वाते वाचि विसृजे ॥

[ २६.२ ]—प्राञ्चं सोममिमे प्रणयन्ति प्राचीं पत्नीमुदानयन्ति० द्वाभ्यां गार्हपत्ये जुहोति० त्वं सोमेति सौम्या गार्हपत्ये जुहोति० यदाग्नेय्याग्नीध्रे जुहोति० यद्वैष्णव्याहवनीये जुहोति० आग्नीध्रे प्रातरनुवाक्यानि सादयति । प्राञ्चं सोमं प्रणयति० पश्चात् प्राञ्चः प्रपद्यन्ते० पुरस्ताद्व्रतश्रीः प्रपद्येत० पश्चात् सोमं प्रपादयन्ति पुरस्ताद्यजमानः प्रपद्यते० ॥

**कपिसं [ २.८ ]**–

---॥ उरु विष्णो .... घृतवने .... ॥ अदित्यास्त्वगसि ॥---॥ अग्ने व्रतपा अस्मे व्रतपास्त्वे व्रतपाः पुनर्व्रतपा व्रतिनां व्रतानि ॥ या मम .... ॥ स्वाहा यज्ञं .... स्वाहोरावन्तरिक्षे .... ॥

[ ४०.५ ] ≡ कासं

**वामासं**—

ज्योतिरसि विश्वरूपं विश्वेषां देवाना꣡ꣳ समित् ॥ त्व꣡ꣳ सोम तनूकृद्भ्यो .... ॥ जुषाणो अप्तुराज्यस्य वेतु स्वाहा ॥ अग्ने नय सुपथा राये .... ॥

अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयं वाजाञ्जयतु वाजसातावय꣡ꣳ शत्रूञ्जयतु जर्हृषाणः स्वाहा ॥

उरु विष्णो विक्रमस्वोरु .... ॥ देव सवितरेष ते सोमस्त꣡ꣳ रक्षस्व मा त्वा दभन् ॥ एतत्त्वं देव सोम देवो देवाँ उपागा इदमहं मनुष्यान् सह रायस्पोषेण ॥ स्वाहा निर्वरुणस्य पाशान्मुच्ये ॥ अग्ने व्रतपास्त्वे व्रतपा या तव तनूर्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदिय꣡ꣳ सा मयि । यथायथं नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिरम꣡ꣳस्तानु तपस्तपस्पतिः ॥ ५.३५–४०

माशब्रा [ ३.६.३ ]—यद्वैसर्जनानि जुहोति० तस्माद्योऽपिव्रतः स्यात् सोऽन्वारभेत। यद्यु अन्यत्र चरेन्नाद्रियेत० सोऽपराह्णे वेदिँस्तीत्वार्धव्रतं प्रदाय संप्रपद्यन्ते। इध्ममभ्यादधति। उपयमनीरुपकल्पयन्ति। आज्यमधिश्रयति। स्रुचः संमार्ष्टि। उपस्थे राजानं यजमानः कुरुते। अथ सोमक्रयण्यै पदं जघनेन गार्हपत्यं परिकिरति० तद्धैके चतुर्धा कुर्वन्ति। यत्राहवनीय-मुद्धरन्ति तासूपयमनीषु चतुर्भागम्। अक्षं चतुर्भागेणोपाञ्जन्ति। एतासूपयमनीषु चतुर्भागम्। जघनेन गार्हपत्यं चतुर्भागं परिकिरति। तदु तथा न कुर्यात्। सार्धमेव परिकिरेज्जघनेन गार्हपत्यम्। अथोत्पूयाज्यं चतुर्गृहीते जुह्वां चोपभृति च गृह्णाति। पञ्चगृहीतं पृषदाज्यं ज्योतिरसि विश्वरूपं विश्वेषां देवानाँ समिदिति०यदा प्रदीप्त इध्मो भवत्यथ जुहोति त्वँ सोम तनूकृद्भ्यो.... वरूथँ स्वाहेति० अथास्वे द्वितीयामाहुतिं जुहोति जुषाणो अप्तुराज्यस्य वेतु स्वाहेति० उद्यच्छन्तीध्मम्। उपयच्छन्त्युपयमनीः। अथाह **अग्नये प्रह्रियमाणायानुब्रूहि, सोमाय प्रणीयमानाय** इति वा। **अग्नये प्रह्रियमाणायानुब्रूहि** इति त्वेव ब्रूयात्। आददते ग्राव्णो द्रोणकलशं वायव्यानीध्मं कार्ष्मर्यमयान् परिधीनाश्ववालं प्रस्तरमैक्षव्यौ विधृती। तद् बर्हिरुपसंनद्धं भवति। वपाश्रपण्यौ रशने अरणी अधिमन्थनः शकलो वृषणौ तद् समादाय प्राञ्च आयन्ति० तदायत्सु वाचयति अग्ने नय....विधेमेति० त आयन्ति। आगच्छ-न्त्याग्नीध्रम्। तमाग्नीध्रे निदधाति। स निहिते जुहोति अयं नो अग्निर्....जर्हृषाणः स्वाहेति० तदेव निदधाति ग्राव्णो द्रोणकलशं वायव्यानि। अथेतरमादायायन्ति तदुत्तरेणाहवनीयमुप-सादयन्ति। प्रोक्षणीरध्वर्युरादत्ते। स इध्ममेवाग्रे प्रोक्षत्यथ वेदिम्। अथास्मै बर्हिः प्रयच्छन्ति तत्पुरस्ताद्ग्रन्थ्यासादयति। तत्प्रोक्ष्योपनिर्नीय विस्रँस्य ग्रन्थिम्। आश्ववालः प्रस्तर उपसंनद्धो भवति। तं गृह्णाति। गृहीत्वा प्रस्तरमेकवृद्बर्हिः स्तृणाति। स्तीर्त्वा बर्हिः कार्ष्मर्यमयान् परिधीन् परिदधाति। परिधीय परिधीन् समिधावभ्यादधाति। अभ्याधाय समिधावथ जुहोति उरु विष्णो.... तिर स्वाहेति० वैष्णव्यर्चा जुहोति। अथासाद्य स्रुचोऽप उपस्पृश्य राजानं प्रपादयति० स दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति। तदेनमासादयति देव सवितरेष ते.... दभन्निति० अथानुसृज्योपतिष्ठते एतत् त्वं देव सोम .... रायस्पोषेणेति० अथोपनिष्क्रामति स्वाहा निर्वरुणस्य पाशान्मुच्य इति० अथेत्याहवनीये समिधमभ्यादधाति अग्ने व्रतपास्त्वे व्रतपाः....इति० तस्मादस्यात्राश्नन्ति० तस्मादस्यात्र नाम गृह्णन्ति० अयात्राङ्गुली-र्विसृजते॥

**वाकासं—**

**---॥ अयं नो अग्निर् .... वाजसाता अयँ .... ॥---॥ अग्ने व्रतपास्त्वे .... या मम तनूस्त्वय्यभूद् .... ॥ ५.९.१–७**

काशश्रा [ ४.६.३ ]— --- अथाह सोमाय प्रणीयमानायानुब्रूहि इति अग्नये प्रह्रियमाणाय इति वा । सोमाय इति त्वेव ब्रूयात् । --- अथ खरे प्रस्तरमासादयति तज्जुहूमासादयत्यथोपभृतमथ पृषदाज्यमासाद्य हवींषि संमृश्याप उपस्पृश्य राजानमादाय प्रपद्यते --- अस्य नामग्राहं सुब्रह्मण्यामाह्वयन्ति[१] असौ यजतेऽमुष्य पुत्रो यजते इति । --- ॥

**अशौसं—**

जीवा स्थ जीव्यासं सर्वमायुर्जीव्यासम् ॥
उपजीवा स्थोप जीव्यासं सर्वमायुर्जीव्यासम् ॥
संजीवा स्थ सं जीव्यासं सर्वमायुर्जीव्यासम् ॥
जीवला स्थ जीव्यासं सर्वमायुर्जीव्यासम् ॥ १९.६९.१–४
सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे ॥ ३.२०.४

**अपैसं—**

जीवस्तु जीव्यासं .... ॥ उपजीवस्तूपजीव्यासं .... ॥ संजीवस्तु सं जीव्यासं .... ॥ जीवलस्तु जीव्यासं .... ॥ १९.५४.११–१४ ॥ सोमं राजानम् .... ॥ ३.३४.६ ॥

## ४३. अग्नीषोमप्रणयनहौत्रम्

**ऋसं—**

[२]सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै ।
अथास्मभ्यं सवितः सर्वताता दिवेदिव आ सुवा भूरि पश्वः ॥ आश्वश्रौ ४.१०.१
प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ १.४०.३
होता देवो अमर्त्यः पुरस्तादेति मायया । विदथानि प्रचोदयन् ॥
वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते। विप्रो यज्ञस्य साधनः ॥
धिया चक्रे वरेण्यो भूतानां गर्भमा दधे । दक्षस्य पितरं तना ॥ ३.२७.७-९
उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि ॥
राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानं स्वे दमे ॥
स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥ १.१.७–९
उप प्रियं पनिप्नतं युवानमाहुतीवृधम् । अगन्म बिभ्रतो नमः ॥ ९.६७.२९

१. अग्नीषोमीयपशुयागे हुतायां वपायाम् ।
२. द्रष्टव्यम् अशौसं ७.१४.३

अग्ने जुषस्व प्रति हर्य तद्वचो मन्द्र स्वधाव ऋतजात सुक्रतो ।
यो विश्वतः प्रत्यङ्ङसि दर्शतो रण्वः संदृष्टौ पितुमाँइव क्षयः ॥ १.१४४.७
सोमो जिगाति गातुविद्देवानामेति निष्कृतम् । ऋतस्य योनिमासदम् ॥
सोमो अस्मभ्यं द्विपदे चतुष्पदे च पशवे । अनमीवा इषस्करत् ॥
अस्माकमायुर्वर्धयन्नभिमातीः सहमानः। सोमः सधस्थमासदत्॥३.६२.१३-१५
तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः ।
दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुते ॥ १.१५६.४
अन्तश्च प्रागा अदितिर्भवास्यवयाता हरसो दैव्यस्य ।
इन्दविन्द्रस्य सख्यं जुषाणः श्रौष्टीव धुरमनु राय ऋध्याः ॥ ८.४८.२
श्येनो न योनिं सदनं धिया कृतं हिरण्ययमासदं देव एषति ।
ए रिणन्ति बर्हिषि प्रियं गिराश्वो न देवाँ अप्येति यज्ञियः ॥ ९.७१.६
अस्तभ्नाद् द्यामसुरो विश्ववेदा अमिमीत वरिमाणं पृथिव्याः ।
आसीदद्विश्वा भुवनानि सम्राड् विश्वेत्तानि वरुणस्य व्रतानि ॥
एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम् ।
स नः शर्म त्रिवरूथं वि यंसत् पातं नो द्यावापृथिवी उपस्थे ॥ ८.४२.१-२

ऐब्रा [ १.३० ]—अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहि इत्याहाध्वर्युः । सावीर्हि देव प्रथमाय पित्रे इति सावित्रीमन्वाह० प्रैतु ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यामन्वाह० होता देवो अमर्त्य इति तृचमाग्नेयं गायत्रमन्वाह सोमे राजनि प्रणीयमाने० तस्माद्दस्याग्निं पुरस्ताद्धरन्ति । उप त्वाग्ने दिवेदिवे, उप प्रियं पनिप्नतमिति तिस्रश्चैकां चान्वाह० अग्ने जुषस्व प्रति हर्य तद्वच इत्याहुत्यां हूयमानायामन्वाह० सोमो जिगाति गातुविदिति तृचं सौम्यं गायत्रमन्वाह सोमे राजनि प्रणीयमाने० तदतिक्रम्यैवानुब्रूयात् पृष्ठत इवाग्नीध्रं कृत्वा। तमस्य राजा वरुणस्तमश्विनेति वैष्णवीमन्वाह० अन्तश्च प्रागा अदितिर्भवासीति प्रपाद्यमानेऽन्वाह । श्येनो न योनिं सदनं धिया कृतमित्यासन्ने० अस्तभ्नाद् द्यामसुरो विश्ववेदा इति वारुण्या परिदधाति० तं यद्युप वा धावेयुरभयं वेच्छेरन् एवा वन्दस्व वरुणं बृहन्तमित्येतया परिदध्यात्० ता एताः सप्तदशान्वाह रूपसमृद्धाः० तासां त्रिः प्रथमामन्वाह त्रिरुत्तमाम्० ॥

ऋसं—

सावीर्हि देव प्रथमाय .... ॥ शांश्रौ ५.१४.८ ॥
उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । .... .... ....
उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥ १.४०.१

प्रैतु ब्रह्मणस्पतिः .... १.४०.३ ॥ होता देवो अमर्त्यः .... ॥ ३.२७.७-९ ॥ उप त्वाग्ने दिवेदिवे .... ॥ १.१.७-९ ॥ अग्ने जुषस्व प्रति .... ॥ १.१४४.७ ॥ सोमो जिगाति गातुविद् .... ॥ ३.६२.१३-१५ ॥ उप प्रियं पनिप्नतं .... ॥ ९.६७.२९ ॥ तमस्य राजा .... ॥ १.१५६.४ ॥ अन्तश्च प्रागा .... ॥ ८.४८.२ ॥ श्येनो न योनिं .... ॥ ९.७१.६ ॥

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥२.२३.१
अस्तभ्नाद् द्यामसुरो .... ॥ ८.४२.१-२

शांब्रा [ ९.५-६ ]—तद्यदुपवसथेऽग्नीषोमौ प्रणयन्ति० तदु वा आहुरासीन एव होतैतां प्रथमामनुब्रूयात्० सावीर्हि देव प्रथमाय पित्रे इति सावित्रीं प्रथमामन्वाह० उत्तिष्ठ ब्रह्मणस्पत इत्युत्थापयति । प्रैतु ब्रह्मणस्पतिरिति प्रणयति । ब्राह्मणस्पत्ये अभिरूपे अन्वाह० होता देवो अमर्त्यः, उप त्वाग्ने दिवेदिव इति केवलाग्नेयौ तृचावन्वाह । अग्निं हि पूर्व्यं हरन्ति० स यत्रोपाधिगच्छेत् भूतानां गर्भमादध इति तद्गर्भकामायै गर्भं ध्यायात्० अथाग्नीध्रीयेऽग्निं निदधति । यदध्वर्युराहुतिं जुहोति तां संप्रत्येतामनुब्रूयात् अग्ने जुषस्व प्रति हर्य तद्वच इति० अथ केवलं सोमं प्राञ्चं हरन्ति तस्मात् केवलीः सौमीरन्वाह । सोमो जिगाति गातुविदितीतवत्तृचमनुब्रुवन्ननुसमेति । अथाध्वर्युराहवनीये पुनराहुतिं जुहोति तां संप्रत्येतामनुब्रूयात् उप प्रियं पनिप्नतमिति० अथ पूर्वया द्वारा राजानं प्रपादयन्ति । तस्मिन् प्रपाद्यमाने तमस्य राजा वरुणस्तमश्विनेति० अभिरूपां प्रपाद्यमानायान्वाह । अन्तश्च प्रागा अदितिर्भवासीति प्रवतीं प्रपन्नाय । श्येनो न योनिं सदनं धिया कृतम्, गणानां त्वा गणपतिं हवामहे, अस्तभ्नाद् द्यामसुरो विश्ववेदा इति सन्नवतीभिः सन्नमनुस्तौति । एवा वन्दस्व वरुणं बृहन्तमित्याशीर्वत्या परिदधाति । अभिरूपा अन्वाह० ता वै विंशतिमन्वाह० त्रिः प्रथमया त्रिरुत्तमया० एवं तु यदि पूर्वया द्वारा राजानं प्रपादयन्ति यद्यु वा अपरया तेनैव होतानुसमियात्० उत्तरतो दक्षिणा तिष्ठन् परिदधाति० ॥

## ४४. अग्नीषोमप्रणयनौद्गात्रम्

### अग्नेर्व्रतम्[1]
### सोमव्रतम्[2]

साकौसं [ आरण्य ३.२ ]—

सं ते पया꣡ꣳसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवा꣡ꣳस्युत्तमानि धिष्व ॥

1. अग्नीषोमप्रणयनकाले प्रस्तोतृसाम । त्रिर्गायेत् । द्रष्टव्यं पृ. १६४
2. अग्नीषोमप्रणयनकाले प्रस्तोतृसाम । त्रिर्गायेत् ।

१र - १र - १र - २ १र १ १ २ ३ ३र ५
ओवा२। ओवा२। ओवा२। सन्तेपया। सी३समु। यन्तुवाजाः।
२१ २ १ २र३ ४र ५ २र १र २ १ २र३४र ५
संवृष्णिया। नी३अभि। मातिषाहाः। आप्यायमा। नो३अमृ। तायसोमा।
२ १ २ १ २र ३ ४ ५ १र - १ - १ ३
दिविश्रवा। सी३उत्त। मानिधिष्वा। ओवा२। ओवा२। ओ२। वा२३४।
५र र
औहोवा। ण्ये ण्ये ण्ये ॥ [ आरण्य ४.१.९ ]

## अग्नेर्व्रतम्[१]

## सोमव्रतम्[२]

साजैसं [ २.१.३ ]--

त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमातनोरुर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्था ॥

हाबुहाबुहाबु। हौवाहौवाहौवा। हाहाहौवाहाहाहौवाहाहाहौवा। होवाहोवा-
कु श चू थ थि थ थि थ थि कू
होवा। हुवोउवोवाहुवोउवोवाहुवोउवोवाऔहोवा। त्वमिमाओषधीःसोमविश्वा-
क्य क्र क्र टी ख शि
स्त्वम॰पो॰॰अजन॰यस्त्वङ्गास्त्वमा॰तनो॰रु॰॰र्वं॰॰न्तरिक्षन्त्वञ्ज्योतिषावितमोव॰॰वर्था॰।
चिच चा की कुकू क चचा कि श कि कि खा थीषि
हाबुहाबुहाबु। हौवाहौवाहौवा। हाहाहौवाहाहाहौवाहाहाहौवा। होवाहोवाहोवा।
कु श चू थ थि थ थि थ थि कू क्य
हुवोउवोवाहुवोउवोवाहुवोउवोवाऔहोवा। एजनदिवमन्तरि॰॰क्ष॰म्पृथिवीं॰विश्वभोज-
क्र क्र टी ख शि त षी ळू चा किक की किच क क कू श
सम्पुरुरूपमजीजनः। इद् इळा॰॰ ॥ [ आरण्य १.२.३ ]
कु ल्या निख

---

१. अग्निप्रणयनकाले प्रस्तोतृसाम। त्रिर्गायेत्। द्रष्टव्यं पृ. १३५
२. दक्षिणहविर्धाने राजनि प्रपन्ने प्रस्तोतृसाम। त्रिर्गायेत्। द्रष्टव्यं कौआरण्य ४,१,१०

## ४५. अग्नीषोमीयपशुवपायागः

तैसं [ १.३.५–९ ]—

अत्यन्यानगां नान्यानुपागामर्वाक्त्वा परैरविदं परोऽवरैस्तं त्वा जुषे वैष्णवं देवयज्यायै ॥ देवस्त्वा सविता मध्वानक्तु ॥ ओषधे त्रायस्वैनम् ॥ स्वधिते मैनँ हिँसीः ॥ दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिँसीः पृथिव्या सं भव ॥ वनस्पते शतवल्शो वि रोह ॥ सहस्रवल्शा वि वयँ रुहेम ॥ यं त्वायँ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय ॥ अच्छिन्नो रायः सुवीरः ॥ पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा ॥ शुन्धतां लोकः पितृषदनः ॥ यवोऽसि यवयास्मद् द्वेषो यवयारातीः ॥ पितृणाँ सदनमसि ॥ स्वावेशोऽस्यग्रेगा नेतृणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्तात् ॥ देवस्त्वा सविता मध्वानक्तु ॥ सुपिप्पलाभ्यस्त्वौषधीभ्यः ॥ उद्दिवँ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृँह ॥

ते ते धामान्युश्मसी गमध्ये गावो यत्र भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य विष्णोः परमं पदमव भाति भूरेः ॥
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥
तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥

ब्रह्मवनिं त्वा क्षत्रवनिँ सुप्रजावनिँ रायस्पोषवनिं पर्यूहामि ॥ ब्रह्म दृँह क्षत्रं दृँह प्रजां दृँह रायस्पोषं दृँह ॥ परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमँ रायस्पोषो यजमानं मनुष्याः ॥ अन्तरिक्षस्य त्वा सानाववगूहामि ॥ इषे त्वा ॥ उपवीरस्युपो देवान् दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसु रण्व रेवती रमध्वम् ॥ अग्नेर्जनित्रमसि ॥ वृषणौ स्थः ॥ उर्वश्यस्यायुरसि पुरूरवाः ॥ घृतेनाक्ते वृषणं दधाथाम् ॥ गायत्रं छन्दोऽनु प्र जायस्व ॥ त्रैष्टुभं [छन्दोऽनु प्र जायस्व ॥] जागतं छन्दोऽनु प्र जायस्व ॥

भवतं नः समनसौ समोकसावरेपसौ ।
मा यज्ञँ हिँसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥
अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः ।
स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुया कर्भागधेयम् ॥

[देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ] आददे ॥ ऋतस्य त्वा देवहविः पाशेनारभे ॥ धर्षा मानुषान् ॥ अद्भ्यस्त्वौषधीभ्यः प्रोक्षामि ॥ अपां पेरुरसि ॥ स्वात्तं चित् सदेवँ हव्यमापो देवीः स्वदतैनम् ॥

सं ते प्राणो वायुना गच्छताम् ॥ सं यजत्रैरङ्गानि ॥ सं यज्ञपतिराशिषा ॥ घृतेनाक्तौ पशुं त्रायेथाम् ॥ रेवतीर्यज्ञपतिं प्रियधाविशतोरो अन्तरिक्ष सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञे यज्ञपतिं धाः ॥ पृथिव्याः संपृचः पाहि ॥ नमस्त आतान ॥ अनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेण ॥ आपो देवीः शुद्धायुवः शुद्धा यूयं देवाँ ऊढ्वँ शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्म ॥ वाक्त आ प्यायताम् ॥ प्राणस्त आ प्यायताम् ॥ चक्षुस्त आ प्यायताम् ॥ श्रोत्रं त आ प्यायताम् ॥ या ते प्राणाञ्छुग् जगाम या चक्षुर्या श्रोत्रं यत् ते क्रूरं यदास्थितं तत् त आ प्यायतां तत् त एतेन शुन्धताम् ॥ नाभिस्त आ प्यायताम् ॥ पायुस्त आ प्यायताम् ॥ शुद्धाश्चरित्राः शमद्भ्यः शमोषधीभ्यः शं पृथिव्यै ॥ शमहोभ्याम् ॥ ओषधे त्रायस्वैनम् ॥ स्वधिते मैनँ हिँसीः ॥ रक्षसां भागोऽसीदमहँ रक्षोऽधमं तमो नयामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमेनमधमं तमो नयामि ॥ इषे त्वा ॥ घृतेन द्यावापृथिवी प्रोर्ण्वाथाम् ॥ अच्छिन्नो रायः सुवीरः ॥ उर्वन्तरिक्षमन्विहि ॥ वायो वीहि स्तोकानाम् ॥ स्वाहोर्ध्वनभसं मारुतं गच्छतम् ॥

[ ६.३.३–९ ]—वैष्णव्यर्चा हुत्वा यूपमच्छैति० यः प्रथमः शकलः परापतेत् तमप्याहरेत्० वनस्पते शतवल्शो वि रोहेत्याव्रश्चने जुहोति० अनक्षसङ्गं वृश्चेत्० यं कामयेताप्रतिष्ठितः स्यादित्यारोहं तस्मै वृश्चेत्० यं कामयेतापशुः स्यादित्यपर्णं तस्मै शुष्काग्रं वृश्चेत्० यं कामयेत पशुमान्त्स्यादिति बहुपर्णं तस्मै बहुशाखं वृश्चेत्० प्रतिष्ठितं वृश्चेत् प्रतिष्ठाकामस्यैष वै वनस्पतीनां प्रतिष्ठितो यः समे भूम्यै स्वाद्योने रूढः० यः प्रत्यङ्ङुपनतस्तं वृश्चेत्०पञ्चारत्निं तस्मै वृश्चेद्यं कामयेतोपैनमुत्तरो यज्ञो नमेदिति० षडरत्निं प्रतिष्ठाकामस्य० सप्तारत्निं पशुकामस्य० नवारत्निं तेजस्कामस्य० एकादशारत्निमिन्द्रियकामस्य० पञ्चदशारत्निं भ्रातृव्यवतः० सप्तदशारत्निं प्रजाकामस्य० एकविँशत्यरत्निं प्रतिष्ठाकामस्य० अष्टाश्रिर्भवति० पराञ्चं प्रोक्षति० यत् खनति । अपोऽव नयति० यत्रमतीव नयति० यजमानेन यूपः संमितः०पितृणाँ सदनमसीति बर्हिरव स्तृणाति० बर्हिरवस्तीर्य मिनोति० यूपशकलमवास्यति०सुपिप्पलाभ्यस्त्वौषधीभ्य इति चषालं प्रति मुञ्चति० अनक्ति० यदग्निष्ठामश्रिमनक्ति० आन्तमनक्ति० सर्वतः परि मृशति० वैष्णव्यर्चा कल्पयति० द्वाभ्यां कल्पयति० यं कामयेत तेजसैनं देवताभिरिन्द्रियेण व्यर्धयेयमित्यग्निष्ठां तस्याश्रिमाहवनीयादित्थं वेत्थं वाति नावयेत्० यं कामयेत तेजसैनं देवताभिरिन्द्रियेण समर्धयेयमित्यग्निष्ठां तस्याश्रिमाहवनीयेन सं मिनुयात्० परि व्ययति० नाभिदघ्ने परि व्ययति० यं कामयेतोर्जैनं व्यर्धयेयमित्यूर्ध्वां वा तस्यावाचीं वावोहेत्० यदि कामयेत वर्षुकः

पर्जन्यः स्यादित्यग्राचीमवोहेत्० यदि कामयेतार्त्युकः स्यादित्यूर्ध्वामुदूहेत्० पुरस्तान्मिनोति० यदग्नावग्निं मथित्वा प्रहरति० उपाकृत्यैव मन्थ्यः० **अग्नये मथ्यमानायानु ब्रूहि** इत्याह० **जातायानु ब्रूहि, प्रह्रियमाणायानु ब्रूहि** इत्याह० अग्निं मथित्वा प्र हरति० प्रहृत्य जुहोति० आज्येन जुहोति० इषे त्वेति बर्हिरा दत्ते० देवस्य त्वा सवितुः प्रसवे इति रशनामा दत्ते० अक्ष्णया परि हरति० धर्षा मानुषानिति नि युनक्ति० उपरिष्टात् प्रोक्षति० पाययति० अधस्तादुपोक्षति० **अग्नये समिध्यमानायानु ब्रूहि** इत्याह० यत् तूष्णीमाघारमाघारयति० परिधीन्त्सं मार्ष्टि० त्रिस्त्रिः सं मार्ष्टि० यदाघारमाघारयति० आघारमाघार्य पशुꣳ समनक्ति० यदुपरिष्टात् पशुꣳ समनक्ति० एकादश प्रयाजान् यजति० वपामेकः परि शये० पर्यग्नि करोति० त्रिः पर्यग्नि करोति० वपाश्रपणीभ्यामन्वारभते० **उप प्रेष्य होतर्हव्या देवेभ्यः** इत्याह० अग्निना पुरस्तादेति० पृथिव्याः संपृचः पाहीति बर्हिरुपास्यति० पराङावर्ततेऽध्वर्युः पशोः संज्ञप्यमानात्० पश्चाल्लोका वा एषा प्राच्युदानीयते यत् पत्नी० शमहोभ्यामिति नि नयति० पार्श्वत आ च्छ्यति० तिरश्चीनमा च्छ्यति० रक्षसां भागोऽसीति स्थविमतो बर्हिरक्त्वापास्यति० इषे त्वेति वपामुत्खिदति० अन्ययोपतृणत्त्यन्यया न० वपाश्रपणी पुनरन्वारभते० अग्निना पुरस्तादेति० नान्तममङ्गारमति हरेत्० **स्वाहाकृतीभ्यः प्रेष्य** इत्याह० पृषदाज्यमभिघार्य वपामभिघारयति० वपाश्रपणी प्र हरति० विषूची प्र हरति० ॥

[ ६.१.११ ]—यदग्नीषोमीयं पशुमालभते० ॥

[ ३.१.४ ]—

**प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः ।**
**तस्मै प्रति प्र वेदय चिकित्वाꣳ अनु मन्यताम् ॥**
**इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये ।**
**अनु मन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम् ॥**
**प्रजानन्तः प्रति गृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम् ।**
**सुवर्गं याहि पथिभिर्देवयानैरोषधीषु प्रति तिष्ठा शरीरैः ॥**
**येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम् ।**
**निष्क्रीतोऽयं यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु ॥**
**ये बध्यमानमनु बध्यमाना अभ्यैक्षन्त मनसा चक्षुषा च ।**
**अग्निस्ताꣳ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संविदानः ॥**
**य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः ।**
**वायुस्ताꣳ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संविदानः ॥**

प्रमुञ्चमाना भुवनस्य रेतो गातुं धत्त यजमानाय देवाः ।
उपाकृतꣳ शशमानं यदस्थाज्जीवं देवानामप्येतु पाथः ॥
नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः ।
जीवं देवानामप्येतु पाथः सत्याः सन्तु यजमानस्य कामाः ॥
यत् पशुर्मायुमकृतोरो वा पद्भिराहते ।
अग्निर्मा तस्मादेनसो विश्वान् मुञ्चत्वꣳहसः ॥
शमितार उपेतन यज्ञं देवेभिरिन्वितम् ।
पाशात् पशुं प्र मुञ्चत बन्धाद् यज्ञपतिं परि ॥
अदितिः पाशं प्र मुमोक्त्वेतं नमः पशुभ्यः पशुपतये करोमि ॥
अरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन् प्रति मुञ्चामि पाशम् ॥
त्वामु ते दधिरे हव्यवाहꣳ शृतंकर्तारमुत यज्ञियं च ।
अग्ने सदक्षः सतनुर्हि भूत्वाथ हव्या जातवेदो जुषस्व ॥
जातवेदो वपया गच्छ देवान् त्वꣳ हि होता प्रथमो बभूथ ।
घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतꣳ हविरदन्तु देवाः ॥
स्वाहा देवेभ्यः ॥ देवेभ्यः स्वाहा ॥

[ ३.१.३ ]—यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणꣳ हरेत्० स वैव स्यान्निर्मन्थ्यं वा कुर्यात्० ॥

[ ३.१.५ ]—द्वाभ्यामुपाकरोति० उपाकृत्य पञ्च जुहोति० यत् पशुर्मायुमकृतेति जुहोति० त्वामु ते दधिरे हव्यवाहमिति वपामभि जुहोति० स्वाहा देवेभ्यो देवेभ्यः स्वाहेत्यभितो वपां जुहोति० ॥

तैब्रा [ ३.७.७.१४ ]—

न वा उवेतन्म्रियसे न रिष्यसि । देवाꣳ इदेषि पथिभिः सुगेभिः ।
यत्र यन्ति सुकृतो नापि दुष्कृतः । तत्र त्वा देवः सविता दधातु ॥

[ १.५.९.७ ]—तस्मादभिनीयैवाहः पशुमालभेत० तेनाभिनीयेव रात्रेः प्रचरेत्० स एष उपवसथीयेऽहन् द्विदेवत्यः पशुरालभ्यते० ॥

[ २.२.८.२ ]—[1]पञ्चहोत्रा पशुमुपसादयति ।

मैसं [ १.२.१४–१६ ]—

अत्यन्यानगां नान्यानुपागामर्वाक् त्वा परेभ्यः परोऽवरेभ्योऽविदं तं त्वा जुषामहे देवयज्यायै जुष्टं विष्णवे ॥ विष्णवे त्वा ॥ उरु विष्णो .... ॥ ओषधे

१. द्रष्टव्यं श्रौ. १ पृ. १२५

आयस्वैनम् ॥ स्वधिते मैनꣳ हिꣳसीः । या ते शिवतमा तनूस्तयैनमुपस्पृश ॥ यं त्वामयꣳ स्वधितिस्तिग्मतेजाः प्रणिनाय महते सौभगाय ॥ दिवमग्रेण मा हिꣳसीरन्तरिक्षं मध्येन पृथिव्याः संभव भ्राजं गच्छ ॥ वनस्पते शतवल्शो विरोह ॥ सहस्रवल्शा वि वयꣳ रुहेम ॥ पृथिव्यै त्वा । अन्तरिक्षाय त्वा ॥ दिवे त्वा ॥ शुन्धन्तां लोकाः पितृषदनाः॥ यवोऽसि यवय द्वेषो अस्मद्यवयारातिम् ॥ पितृषदनं त्वा लोकमवस्तृणामि ॥ स्वावेशोऽस्यग्रेगा नेतॄणामधि त्वा स्थास्यति तस्य वित्स्व ॥ घृतेन द्यावापृथिवी आपृण ॥ देवस्त्वा सविता मध्वानक्तु ॥ इन्द्रस्य चषालमसि ॥ सुपिप्पला ओषधीस्कृधि ॥ दिवमग्रेणोत्तभानान्तरिक्षं मध्येनापृण पृथिवीमुपरेण दृꣳह ॥

ता ते धामान्युश्मसि गमध्यै गावो यत्र भूरिशृङ्गा अयासः ।

अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरि ॥

विष्णोः कर्माणि पश्यत....॥ ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामि ॥ ब्रह्म दृꣳह क्षत्रं दृꣳह रायस्पोषं दृꣳह प्रजां दृꣳह सजातानस्मै यजमानाय दृꣳह ॥

तद्विष्णोः परमं पदꣳ शच्या पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥

परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ यजमानं मनुष्याः सह रायस्पोषेण प्रजया च व्ययन्ताम् ॥ दिवः सानूपेष ॥ इषे त्वा ॥ उपावीरसि ॥ उपो देवान् दैवीर्विशः प्रागुर्वह्नय उशिजो बृहस्पते धारया वसूनि हव्या ते स्वदं देव त्वष्टर्वसुरण्वे रेवती रमध्वं ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चाम्यमुष्मै त्वा जुष्टम् ॥ धर्षा मानुषाः ॥ अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि ॥ अनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्योऽनुमानावह देवान् देवायते यजमानाय ॥ अपां पेरुरसि ॥ स्वात्तꣳ सद्धविरापो देवीः स्वदन्तु ॥ सं ते वायुर्वातेन गच्छताम् ॥ सꣳ यजत्रैरङ्गानि ॥ सꣳ यज्ञपतिराशिषा ॥ घृतेनाक्तौ पशूꣳस्त्रायेथाम् ॥

ये बध्यमानमनु बध्यमाना अन्वैक्षन्त मनसा चक्षुषा च ।

अग्निष्टं अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया सꣳरराणः ॥

रेवति प्रेधा यज्ञपतिमाविश ॥ उरो अन्तरिक्ष सजूर्देवेन वातेन त्मनास्य हविषो यज ॥ समस्य तन्वा भव वर्षीयो वर्षीयसो यज्ञꣳ यज्ञपतौ धाः ॥ स्वर्विदसि स्वर्विक्त्वा स्वरिहि स्वर्मह्यꣳ स्वः पशुभ्यः । लोकविदसि लोकꣳ वित्त्वा लोकमिहि लोकं मह्यं लोकं पशुभ्यः । नाथविदसि नाथꣳ वित्त्वा नाथमिहि नाथं मह्यं नाथं पशुभ्यः । गातुविदसि गातुꣳ वित्त्वा गातुमिहि गातुं मह्यं गातुं पशुभ्यः ॥

न वा एतन्म्रियसे नोत रिष्यसि देवं इदेषि पथिभिः शिवेभिः ।
यत्र यन्ति सुकृतो नापि दुःकृतस्तत्र त्वा देवः सविता दधातु ॥

शमितार उपेतन .... ॥ अदितिः पाशान् प्रमुमोक्त्वेतान् पशोः पाशान् पशुपतेरधि ॥ यो नो द्वेष्ट्यधरः स पद्यतां तस्मिन् पाशान् प्रतिमुञ्चाम एतान् ॥ नमस्त आतान ॥ अनर्वाक् प्रेहि यजमानाय घृतस्य कुल्यामनु सह रायस्पोषेण ॥ देवीरापः शुद्धा यूयं देवान् युयुध्व॰ शुद्धा वय॰ सुपरिविष्टाः परिवेष्टारो वो भूयास्म ॥ वाचमस्य मा हि॰सीः ॥ प्राणमस्य मा हि॰सीः ॥ चक्षुरस्य मा हि॰सीः ॥ श्रोत्रमस्य मा हि॰सीः ॥ यत्ते क्रूर॰ यदास्थितं तदेतेन शुन्धस्व देवेभ्यः शुम्भस्व ॥ गात्राण्यस्य मा हि॰सीः ॥ चरित्रानस्य मा हि॰सीः ॥ नाभिमस्य मा हि॰सीः ॥ मेढ्रमस्य मा हि॰सीः ॥ पायुमस्य मा हि॰सीः ॥ शमद्भ्यः ॥ ओषधे त्रायस्वैनम् ॥ स्वधिते मैन॰ हि॰सीः । या ते शिवतमा तनूस्तयैनमुपस्पृश ॥ पृथिव्यै त्वा रक्षसां भागोऽसि ॥ इदमह॰ रक्षोऽवबाध इदमह॰ रक्षोऽधमं तमो नयामि ॥ इषे त्वा ॥ ऊर्जे त्वा ॥ देवेभ्यः शुन्धस्व ॥ देवेभ्यः शुम्भस्व ॥ घृतेन द्यावापृथिवी प्रोर्णुवाताम् ॥ अमुष्मै त्वा जुष्टम् ॥ नमः सूर्यस्य संदृशे ॥ उर्वन्तरिक्ष॰ वीहि ॥ प्रत्युष्ट॰ रक्षः प्रत्युष्टारातिः ॥ वायोः स्तोकानाम् ॥ प्रयुता द्वेषा॰सि ॥ स्वाहोर्ध्वनभसं मारुतं देवं गच्छतम् ॥

[ ३:७.८ ] तस्मादेषोऽग्नीषोमीयः० स्थूलः पीवा स्यात्० ॥

[३.९.२–१८]–न यूपमछेष्यता होतव्यम्० वैष्णवीमनूच्याछेत्यः० तदाहुर्होतव्यमेव । परुष्येव जुहोत्यायतना इति । तन्न सूर्क्ष्यम् । यूपस्यैवान्तेऽग्निं मथित्वाथ होतव्यम्० न दीक्षितस्याग्नौ जुहोति० विष्णवे त्वेति पर्यनक्ति० य ऋजुरूर्ध्वशल्कः स वाव मेधमुपस्थितो य ऋजुरुपरिष्टादुपावनतः० यो वा अस्या अधिजायते स योनिमान्० परुषि वृश्च्यः० अनक्षसङ्ग॰ स्थाणुरुच्छिष्यः० पञ्चारत्निः कार्यः० षडरत्निः कार्यः० सप्तारत्निः कार्यः० अष्टारत्निः कार्यः० नवारत्निः कार्यः० दशारत्निः कार्यः० एकादशारत्निः कार्यः० द्वादशारत्निः कार्यः० त्रयोदशारत्निः कार्यः० पञ्चदशारत्निः कार्यः० सप्तदशारत्निः कार्यः० एकवि॰शत्यरत्निः कार्यः० त्रयोवि॰शत्यरत्निः कार्यः० पञ्चवि॰शत्यरत्निः कार्यः० सप्तवि॰शत्यरत्निः कार्यः० एकत्रि॰शदरत्निः कार्यः० त्रयस्त्रि॰शदरत्निः कार्यः० यावान् पुरुष ऊर्ध्वबाहुस्तावान् कार्यः० यो बहुशाखो बहुपर्णः स कार्यः० यो वा एतस्याभिहतस्याग्रे शकलः परापतति तमस्य तेजोऽन्वपक्रामति यत्तं पुनराहरति सतेजस्त्वाय । प्राञ्चं प्रहापयति०यदाव्रश्चने जुहोति० पशुना संमितः कार्यः० अष्टाश्रिः कार्यः० पर्णमयः० खादिरः० बैल्वो ब्रह्मवर्चसकामेन कार्यः० पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेति प्रोक्षति० त्रिः प्रोक्षति० यद्यवमतीभिः प्रोक्षति० यद्यवमवास्यति० यदवसिञ्चति० यदवस्तृणाति०

यञ्शकमवास्यति० आन्तमविछिन्नमनक्ति० ता ते धामान्युश्मसि गमध्या इत्यवदधाति वैष्णव्या० विष्णोः कर्माणि पश्यतेति संकल्पयति० अपोऽनुपरिषिञ्चति०अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि० नोपरस्याविः कर्तवै० नातिस्थूलः कार्यः० नो अत्यणुः। उभयमेवान्तरा० यद्यूपः पुरस्तान्मीयेत० तद्विष्णोः परमं पदमिति समुन्मार्ष्टि० नाभिदघ्ने परिव्ययति० यदि कामयेत क्षुधं प्रजा नीयुरित्यरशनान् यूपान् मिनुयात्० यदि कामयेत वर्षेत् पर्जन्य ऊर्जा यजमानꣳ समर्धयेयमिति परिवीयोर्ध्वामुदूहेत्० यदि कामयेत न वर्षेत् पर्जन्य ऊर्जा यजमानꣳ व्यर्धयेयमिति परिवीयावाचीमवोहेत्० यदुपरिष्टाच्चषालस्याङ्गुलिमात्रं कार्यम्० यच्चषालं पृथुमात्रं कार्यम्० यदि कामयेतान्येऽस्य लोकमन्वारोहयेयुरित्यन्यस्य वृक्षस्य स्वरुं कुर्यात्० यदि कामयेत प्रजामनुसंतनुयादिति यूपस्य स्वरुं कुर्यात्०अग्निना सदृशं मेतव्यः० त्रिः परस्तादनक्ति त्रिरवस्तात्० यदग्निं मथित्वाग्नौ जुहोति० परिधयः परिधीयन्ते० स्रुवेणाभिजुहोति० अथैता आप्रियः० पशुꣳ स्नपयन्ति० पशुमुपाकृत्याग्निं मन्थन्ति० यत्पशुं नियुनक्ति० प्रत्यञ्चं नियुनक्ति० अथ यदुप गृह्णात्युप च सिञ्चति० यदाघारमाघार्य पशुना समनक्ति० यत्स्वधितिनानक्ति० याक्ता तया शृतस्यावद्यति० यत्पर्यग्निं करोति० त्रिः पर्यग्निं करोति० चात्वालमपि पर्येति० तस्मादाश्राव्योपप्रेष्यति० अग्निं पुरस्ताद्धरन्ति० अग्निं पुरस्तान्निदधाति० वपाश्रपणीभ्यामन्वारभते० यत्तृणमुपास्यति० प्रत्यञ्चꣳ संज्ञपयन्ति० उदीचीनपादम्० यद्दश प्रयाजाः० अथ य एष एकादशः० अथ यदेकादशानुयाजाः०॥

[ ३.१०.१ ] — यदद्भिरभिषिञ्चति० सर्वान् प्राणान्त्संमृशति सर्वाण्यङ्गानि० यत्र [1]तनिष्ठं तदुपतृन्द्यात्० कार्ष्मर्यमयी वपाश्रपणी भवतः० अग्निं पुरस्ताद्धरन्ति० चरमत उपप्रतिगृह्णाति० वायोः स्तोकानामिति तृणमुपास्यति० हविषो वा एते स्तोकाः। स्कन्दति वा एतद्धविर्यद्विश्चोतति यद्विलिप्यते । यदाह **जुषस्व सप्रथस्तमꣳ वचो देवप्सरस्तमम्। हव्या जुह्वान आसनि** इति तेनैवास्य ते हुता अस्कन्ना वषट्कृता भवन्ति० यर्हि श्येनीव शृता तर्ह्याग्नेयी तर्हि होतव्या० अथ यत् पृषदाज्यमभिघार्य वपामभिघारयति० **स्वाहा देवेभ्यः** इति पुरस्ताद्वपाया जुहुयात् **विश्वेभ्यो देवेभ्यः स्वाहा** इत्युपरिष्टात्० स्वाहोर्ध्वनभसं मारुतं देवं गछतमिति वपाश्रपणी अनुप्रास्यति० इमे वा एते विषूची अनुप्रास्यति० ॥

**कासं [ ३.२–६]—**

**उरु विष्णो विक्रमस्वोरु ....॥ अत्यन्यानगां नान्यानुपागां यान्नाजुजोषं परि तानवृजमर्वाक्त्वा परेभ्योऽविदं परोऽवरेभ्यस्तं त्वा जुषामहे वनस्पते देवयज्यायै जुष्टं विष्णवे॥ विष्णवे त्वा॥ देवस्त्वा सविता मध्वानक्तु॥ ओषधे त्रायस्वैनम्॥**

१. मुद्रितपुस्तके 'तन्निष्ठम्'। मानवश्रौतसूत्रं ( १.८.४.१२ ) द्रष्टव्यम्।

स्वधिते मैनं हिंसीः ।। द्यां मा लेखीरन्तरिक्षं मा हिंसीः पृथिव्या संभव ।। वनस्पते शतवल्शो विरोह ।। सहस्रवल्शा वि वयं रुहेम ।। यं त्वायं स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय ।। अच्छिन्नरायं सुवीरः ।। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ।। इदमहं रक्षसो ग्रीवा अपिकृन्तामीदमहं यो नस्समानो योऽसमानोऽरातीयति तस्य ग्रीवा अपिकृन्तामि ।। पृथिव्यै त्वा । अन्तरिक्षाय त्वा । दिवे त्वा ।। शुन्धन्तां लोकाः पितृषदनाः ।। यवोऽसि यावयास्मद् द्वेषं यावयारातिम् ।। पितृषदनं त्वा लोकमास्तृणामि ।। स्वावेशोऽस्यग्रेगा नेतॄणां वनस्पतिस्त्वाधिष्ठास्यति तस्य वित्तात् ।। घृतेन द्यावापृथिवी आपृणेथाम् ।। देवस्त्वा सविता मध्वानक्तु ।। सुपिप्पला ओषधीस्कृधि ।। द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृंहीः ।।

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरि ।।

विष्णोः कर्माणि पश्यत .... ।। ब्रह्मवनिं त्वा क्षत्रवनिं देववनिं सजातवनिं रायस्पोषवनिं पर्यूहामि ।। ब्रह्म दृंह क्षत्रं दृंह प्रजां दृंह रायस्पोषं दृंह ।।

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ।।

परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं रायो मनुष्यम् ।। अन्तरिक्षस्य सानूपेष ।। इषे त्वा ।। उपावीरस्युप देवान् दैवीर्विशः प्रागुर्वह्नय उशिजो बृहस्पते धारया वसूनि हव्या ते अस्वदन् देव त्वष्टर्वसु रण रेवती रमध्वम् ।। अग्नेर्जनित्रमसि ।। वृषणौ स्थः ।। उर्वश्यस्यायुरसि पुरूरवा असि ।। गायत्रं छन्दोऽनुप्रजायस्व ।। त्रैष्टुभं छन्दोऽनुप्रजायस्व ।। जागतं छन्दोऽनुप्रजायस्व ।।

भवतं नस्समनसौ समोकसा अरेपसौ ।
मा हिंसिष्टं यज्ञपतिं मा यज्ञं जातवेदसौ शिवौ भवतमद्य नः ।।
अग्ना अग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः ।
स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा देवेभ्यो हव्यं वहतु प्रजानन् ।।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ।। ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चाम्यमुष्मै जुष्टम् ।। धर्षा मानुषम् ।। अद्भ्यस्त्वौषधीभ्यः।। अनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्य आवह देवान् देवायते यजमानाय ।। अपां पेरुरसि ।। स्वात्तं हव्यं देवेभ्यो घृतवत् ।। सं ते वायुः प्राणेन गच्छताम् ।। सं यजत्रैरङ्गानि ।। सं यज्ञपतिराशिषा ।। घृतेनाक्तौ पशुं

त्रायेथाम् ॥ रेवति प्रेधा यज्ञपतिमाविश ॥ उरो अन्तरिक्ष सजूर्देवेन वातेनास्य हविषस्त्मना यज ॥ समस्य तन्वा भव वर्षीयो वर्षीयसो यज्ञं यज्ञपतौ धाः ॥ नमस्त आतान ॥ अनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेण ॥ देवीराप-श्शुद्धा यूयं देवान् यूढ्वं शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्म ॥ प्राणं ते मा हिँसिषम् ॥ चक्षुस्ते मा हिँसिषम् ॥ श्रोत्रं ते मा हिँसिषम् ॥ वाचं ते मा हिँसिषम् ॥ यत्ते क्रूरतरं यदास्थितं तत्त एतेन कल्पतां तत्ते मा हिँसिषम् ॥ चरित्रांस्ते मा हिँसिषम् ॥ नाभिं ते मा हिँसिषम् ॥ मेढ्रं ते मा हिँसिषम् ॥ पायुं ते मा हिँसिषम् ॥ देवेभ्यश्शुन्धस्व ॥ समङ्ग्ध्यः ॥ ओषधे त्रायस्वैनम् ॥ स्वधिते मैनं हिँसीः ॥ रक्षसां भागोऽसि ॥ इदमहं रक्षोऽवबाध इदमहं रक्षोऽधमं तमो नयामि ॥ इषे त्वोर्जे ॥ घृतेन द्यावापृथिवी प्रोर्णुवाथाम् ॥ देवेभ्यश्शुन्धस्व ॥ देवेभ्य-श्शुम्भस्व ॥ अमुष्मै त्वा जुष्टाम् ॥ उर्वन्तरिक्षं वीहि ॥ वायो वेष्टोकानाम् ॥ प्रत्युष्टं रक्षः प्रत्युष्टारातिः ॥ देवेभ्यः स्वाहा ॥ स्वाहा देवेभ्यः ॥ प्रयुता द्वेषाँसि ॥ स्वाहोर्ध्वनभसं मारुतं गच्छतम् ॥

[ ३०.८ ]—

प्रजापतेर्जायमानाः.... । ता अस्मै प्रतिवेदय चिकित्वी अनुमन्यताम् ॥
पशुपतेः पशवो विरूपास्सदृशा उत ।
तेषां यं वव्निरे देवास्तं स्वराडनुमन्यताम् ॥
प्रजानन्तः प्रतिगृह्णन्ति पूर्वे प्राणमङ्गेभ्यो अधिनिश्चरन्तम् ।
हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥
ये बध्यमानमनुबध्यमाना अन्वैक्षन्त.... ॥
य आरण्याः पशवो....। वायुष्टाँ अग्रे प्रमुमोक्तु देवो विश्वकर्मा प्रजया संरराणः॥
येषामीषे पशुपतिः पशूनां चतुष्पाद उत ये द्विपादः ।
निष्क्रीतास्ते यज्ञियं भागं यन्तु रायस्पोषा यजमानं विशन्तु ॥
प्रमुञ्चमाना भुवनस्य.... । .... यदस्थात् प्रियं.... ॥
नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिस्सह देवयानः ।
सम्यगायुर्यज्ञो यज्ञपतौ दधातु ॥
उपेत शमितारो देवानां दसितं हविः। पशोः पाशं प्रमुञ्चत पाशं यज्ञपतेरधि॥
अदितिः पाशान् प्रमुमोक्त्वेतान्नमः पशुभ्यः पशुपतयेऽस्तु ।
यो नो द्वेष्टयधरस्स पदीष्ट तस्मिन् पाशान् प्रतिमुञ्चाम एतान् ॥

त्वामु त्ये दधिरे प्रथमं विचक्ष्यै शृतंकर्तारमुत यज्ञियं च ।
अग्ने सदक्षस्सतनूर्हि भूत्वाथ वह हव्यं देवेभ्यो जातवेदः ॥
जातवेदो वपया गच्छ देवीस्त्वं हि होता प्रथमो बभूथ ।
घृतस्याग्ने तन्वा संभव सत्यास्सन्तु यजमानस्य कामाः ॥

[ २६.३-९ ]—न दीक्षितेन होतव्यम्० यदि क्रीतस्सोमस्स्यादीक्षितस्याग्नौ जुहुयात्०यद्यक्रीतोऽरणी चाज्यं चादाय परेत्याग्निं मथित्वा वैष्णव्यर्चा यूपस्यान्ते जुहुयात्० यः प्रथमश्शकलः परापतति तमाहरेत्०यो दक्षिणावृन्न तं वृश्चेत्०य उदङ्ङावृतो न तम्०य ऊर्ध्वशाख ऊर्ध्वशकलस्तं वृश्चेत्० योऽशुष्काग्रो बहुशाखो बहुपर्णस्तं वृश्चेत्० यश्शुष्काग्रोऽशाखोऽपर्णस्तं वृश्चेद्यं द्विष्यात् तस्य० य उदङ् प्राङुपनतस्तं वृश्चेत्०उदञ्चं प्राञ्चं प्रश्रयति० वनस्पते शतवल्शो विरोहेत्यावश्चने जुहोति० य आरोहस्तं वृश्चेद्यं द्विष्यात् तस्य० यस्स्वारुत् तं वृश्चेत्० गुल्फदघ्ने वृश्चेत्० जानुदघ्ने वृश्चेत्० यावत्यनक्षसङ्गस्स्यात् तावति वृश्चेत्० पशुसंमितो व्रष्टव्यो दशारत्निः० स्तोमसंमितो व्रष्टव्यो नवारत्निः० पञ्चदशारत्निर्व्रष्टव्यः० सप्तदशारत्निर्व्रष्टव्यः० एकविंशत्यरत्निर्व्रष्टव्यः० सप्तविंशत्यरत्निर्व्रष्टव्यः० त्रयस्त्रिंशदरत्निर्व्रष्टव्यः० छन्दस्संमितो व्रष्टव्यः पञ्चारत्निः० षडरत्निः० सप्तारत्निः० अष्टारत्निः० नवारत्निः० दशारत्निः० एकादशारत्निः० द्वादशारत्निः० त्रयोदशारत्निः० अपरिमितो व्रष्टव्यः० य एव कश्च पुरुषाद्वर्षीयान् स्यात् तं वृश्चेत्० चषालं भवति० इयद्भवति० न यूपस्यातिरेचयेत्० यावदुत्तममङ्गुलिकाण्डं तावदतिरेचयेत्० अन्यस्य वृक्षस्य चषालं कुर्याद्यस्य च यूपस्स्याद्यं कामयेत भ्रातृव्यमस्मै जनयेयम्० पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वेति यूपं प्रोक्षति० इतः पराञ्चं यूपं प्रोक्षत्यमुतोऽर्वाचीमौदुम्बरीम्० देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते० यवमतीरवसिञ्चति० स्वावेशोऽस्यग्रेगा नेतृणामिति यूपशकलमवास्यति० सुपिप्पला ओषधीस्कृधीति चषालं प्रतिमुञ्चति० घृतेनाग्निष्ठामनक्ति० आन्ती सन्ततमनक्ति० यं द्विष्यात् तस्य विच्छिन्द्यात्० सर्वतोऽनक्ति० ता वां वास्तूनीति वैष्णव्यावहरति० विष्णोः कर्माणि पश्यतेति वैष्णव्या कल्पयति० अग्निं प्रत्यग्निष्ठां कुर्यात्० यं द्विष्यात् तस्येत्थं वेत्थं वा नमयेत्० तद्विष्णोः परमं पदमिति वैष्णव्योदीक्षते० अर्धं वेद्यां यूपावटस्य कुर्यादर्धं बहिर्वेदि० नाविरुपरस्य कुर्यात्० नापरिवीतमवसृजेत्० मध्यं प्रतिपरिव्ययति० अरशनं मिनुयाद्यं द्विष्यात् तस्य० ऊर्ध्वामुदूहेदवाचीं यं द्विष्यात् तस्य० उपरि दूरे परिव्ययेद्यदि कामयेत वर्षेदिति० अधो दूरे परिव्ययेद्यदि कामयेत न वर्षेदिति० अन्तरिक्षस्य सानूपेवेति स्वरुमुपोहति० अग्नेरर्धादुपनतं यूपस्य कुर्याद्बहिष्ठान्निर्णतम्० यदग्निं मथित्वा पशुमालभते० तदाहुः पशुमालभ्याग्निर्मथितव्य इति० यार्द्रा बहुपर्णा तयोपाकुर्यात्० या शुष्कापर्णा तयोपाकुर्याद्यं द्विष्यात् तस्य० बर्हिषोपाकरोति० यद् घृतेनारणी समनक्ति० दक्षिणा वर्तयति० यदुपर्युपरि प्रहरेत्० संधिना वा प्रहरत्यग्रेण वातीर्थेनैव। स्रुवेण

जुहोति० देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते० यत् पशुं नियुनक्ति० यत् पुरस्तात् प्रत्यञ्चमाप्रीणन्ति० यदद्भिः प्रोक्षति० अपां पेरुरसीत्यप उपगृह्णाति० स्वात्तं हव्यं देवेभ्यो घृतवदित्युरः प्रत्युपोक्षति० सर्वत उपोक्षति० यदाघारमाघार्य पशुं समनक्ति० प्रयाजान् यजति० अनवानमाप्रीणीयाद्यं कामयेत सर्वमायुरियादिति० यदुत्तमाप्रीर्वपां परिशये० एकादश प्रयाजा एकादशानुयाजा एकादशोपयजः० ॥

[३०.९]–पञ्चैतानि जुहोति० यदवघ्रापयति० यद्यभिचरेत् यो नो द्वेष्ट्यधरस्स पदीष्ट तस्मिन् पाशान् प्रतिमुञ्चाम एतानिति स्तम्भं वा दारु वाभिदध्यात्०यत् पशुश्रपणं करोति०॥

[२५.५]–इध्माबर्हिषी प्रोक्षति० यदद्भिः प्रोक्षति० वेदिं प्रोक्षति० बर्हिस्स्तृणाति० सर्वां वेदिमनुस्तृणाति० बहुल स्तृणीयात्० बर्हिषि प्रस्तरं सादयति० उत्तरं सादयति० ॥

[२४.७]–यत् पशुमालभते० यस्तूपरश्शमश्रुणः० लोमशः पीवा पुरुषरूपः० तस्मादेषोऽग्नीषोमीय आलभ्यते० ॥

**कपिसं [२.९–१३]—**

**उरु विष्णो....घृतव्रने.... ॥---॥ अच्छिन्नरायः सुवीरः ॥---॥ इदमहं रक्षसो ग्रीवा अपिकृन्तामि ॥ पृथिव्यै त्वा....॥---॥ यवोऽसि यवयास्मद् द्वेषं यवयारातिम् ॥---॥ घृतेन द्यावापृथिवी आपृणाताम् ॥---॥ द्यामग्रेणास्तम्भीरान्तरिक्षं मध्येनाप्राः पृथिवीमपरेणादृंहीः ॥ ता वां ... वृष्णः परमं.... ॥---॥ उपावीरस्युप.... वह्नीनुशिजे.... ते स्वदं ....॥---॥ ऋषीणां पुत्रो अधिराज एषो अग्नावग्निश्चरति प्रविष्टः । इमा हव्या वहते कल्पयामो मा देवानां मूमुहो भागधेयम्॥ ---॥ भर्षा मानुषाः ॥---॥ अनर्वाक्प्रेहि .... ॥ देवीरापः .... देवान् युयुध्वं .... परिवेष्टारो भूयास्म ॥--- ॥ यत्ते क्रूरं .... ॥---॥ घृतेन द्यावापृथिवी प्रोर्णुवाताम् ॥---॥ प्रत्युष्टं रक्षः ॥ देवेभ्यः स्वाहा ॥---॥**

कपिसं [४१.१-७; ३९.२; ३७.८] ≡ कासं

**वामासं—**

**उरु विष्णो विक्रमस्वोरु .... ॥ अत्यन्याँ अगां नान्याँ उपागामर्वाक्त्वा परेभ्योऽविदं परोऽवरेभ्यः । तं त्वा जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा देवयज्यायै जुषन्ताम् ॥ विष्णवे त्वा ॥ ओषधे त्रायस्व ॥ स्वधिते मैनꣳ हिꣳसीः ॥ द्यां मा लेखीरन्तरिक्षं मा हिꣳसीः पृथिव्या संभव । अयꣳ हि त्वा स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाय ॥ अतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा वि वयꣳ रुहेम ॥ ५.४१–४३ ॥**

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे नार्यसि ॥ इदमहꣳ रक्षसां ग्रीवा अपिकृन्तामि ॥ यवोऽसि यवयास्मद् द्वेषो यवयारातीः ॥ दिवे त्वा । अन्तरिक्षाय त्वा । पृथिव्यै त्वा ॥ शुन्धन्तां लोकाः पितृषदनाः ॥ पितृषदनमसि ॥ अग्रेणीरसि स्वावेश उन्नेतृणामेतस्य वित्तादधि त्वा स्थास्यति । देवस्त्वा सविता मध्वानक्तु ॥ सुपिप्पलाभ्यस्त्वौषधीभ्यः ॥ द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृꣳहीः ॥

या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरि ॥

ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि ॥ ब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजां दृꣳह ॥ विष्णोः कर्माणि पश्यत....॥ तद्विष्णोः परमं....॥ परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं यजमानꣳ रायो मनुष्याणाम् ॥ दिवः सूनुरसि ॥ उपावीरस्युप देवान् दैवीर्विशः प्रागुरुशिजो वह्नितमान् । देव त्वष्टर्वसु रम हव्या ते स्वदन्ताम् । रेवती रमध्वं बृहस्पते धारया वसूनि ॥ ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चामि धर्षा मानुषः ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नीषोमाभ्यां जुष्टं नियुनज्मि ॥ अद्भ्यस्त्वौषधीभ्योऽनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि ॥ अपां पेरुरसि ॥ आपो देवीः स्वदन्तु स्वात्तं चित्सदेवहविः ॥ सं ते प्राणो वातेन गच्छताम् ॥ समङ्गानि यजत्रैः ॥ सं यज्ञपतिराशिषा ॥ घृतेनाक्तौ पशूꣳस्त्रायेथाम् ॥ रेवति यजमाने प्रियं धा आविश । उरोरन्तरिक्षात्सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भव ॥ वर्षो वर्षीयसि यज्ञे यज्ञपतिं धाः ॥ स्वाहा देवेभ्यः ॥ देवेभ्यः स्वाहा ॥ माहिर्भूर्मा पृदाकुः ॥ नमस्त आतानानर्वा प्रेहि घृतस्य कुल्या उप ऋतस्य पथ्या अनु । देवीरापः शुद्धा वोढ्वꣳ सुपरिविष्टा देवेषु सुपरिविष्टा वयं परिवेष्टारो भूयास्म ॥ वाचं ते शुन्धामि ॥ प्राणं ते शुन्धामि ॥ चक्षुस्ते शुन्धामि ॥ श्रोत्रं ते शुन्धामि ॥ नाभिं ते शुन्धामि ॥ मेढ्रं ते शुन्धामि ॥ पायुं ते शुन्धामि ॥ चरित्राꣳस्ते शुन्धामि ॥ मनस्त आप्यायताम् ॥ वाक्त आप्यायताम् ॥ प्राणस्त आप्यायताम् ॥ चक्षुस्त आप्यायताम् ॥ श्रोत्रं त आप्यायताम् ॥ यत्ते क्रूरं यदास्थितं तत्त आप्यायतां निष्ट्यायतां तत्ते शुध्यतु ॥ शमहोभ्यः ॥ ओषधे त्रायस्व ॥ स्वधिते मैनꣳ हिꣳसीः ॥ रक्षसां भागोऽसि ॥ निरस्तꣳ रक्षः ॥ इदमहꣳ रक्षोऽभितिष्ठामीदमहꣳ रक्षोऽवबाध इदमहꣳ

**रक्षोऽधमं तमो नयामि ।। घृतेन द्यावापृथिवी प्रोर्णुवाथाम् ।। वायो वेः स्तोकानाम् ।। अग्निराज्यस्य वेतु स्वाहा ।। स्वाहाकृते ऊर्ध्वनभसं मारुतं गच्छतम् ।।**

**इदमापः प्रवहतावद्यं च मलं च यत् ।**

**यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणम् ।।**

**आपो मा तस्मादेनसः पवमानश्च मुञ्चतु ।।** ६.१–१७

माशब्रा [ ३.६.४–७.१ ]—यूपं व्रक्ष्यन् वैष्णव्यर्चा जुहोति० स यदि स्रुचा जुहोति चतुर्गृहीतमाज्यं गृहीत्वा जुहोति । यद्यु स्रुवेण स्रुवेणैवोपहत्य जुहोति उरु विष्णो.... तिर स्वाहेति । यदाज्यं परिशिष्टं भवति तदादत्ते । यत्तक्ष्णः शस्त्रं भवति तत्तक्षादत्ते । त आयन्ति । स यं यूपं जोषयन्ते तमेवमभिमृश्य जपति । पश्चाद्धैव प्राङ् तिष्ठन्नभिमन्त्रयते अत्यन्याँ अगां नान्याँ उपागाम्.... इति० अथ स्रुवेणोपस्पृशति विष्णवे त्वेति० अथ दर्भतरुणकमन्तर्दधाति ओषधे त्रायस्वेति० अथ परशुना प्रहरति स्वधिते मैनꣳ हिꣳसीरिति० स यं प्रथमꣳ शकलमपच्छिनत्ति तमादत्ते । तं वा अनक्षस्तम्भं वृश्चेत्० तं प्राञ्चं पातयेत्० अथो उदञ्चम्० अथो प्रत्यञ्चम्० तं प्रच्यवमानमनुमन्त्रयते द्यां मा लेखीरन्तरिक्षं मा हिꣳसीः पृथिव्या संभव .... इति० अथाव्रश्चनमभिजुहोति० स जुहोति अतस्त्वं देव वनस्पते .... रुहेमेति० तं परिवासयति । स यावन्तमेवाग्रे परिवासयेत् तावान्त्स्यात् । पञ्चारत्निं परिवासयेत्० षडरत्निं परिवासयेत्० अष्टारत्निं परिवासयेत्० नवारत्निं परिवासयेत्० एकादशारत्निं परिवासयेत्० द्वादशारत्निं परिवासयेत्० त्रयोदशारत्निं परिवासयेत्० पञ्चदशारत्निं परिवासयेत्० अपरिमित एव स्यात्० स वा अष्टाश्रिर्भवति० अभ्रिमादत्ते देवस्य त्वा सवितुः.... नार्यसीति० अथावटं परिलिखति इदमहꣳ रक्षसां ग्रीवा अपिकृन्तामीति० अथ खनति । प्राञ्चमुत्करमुत्किरति । उपरेण संमायावटं खनति । तदग्रेण प्राञ्चं यूपं निदधाति । एतावन्मात्राणि बर्हीꣳष्युपरिष्टादधिनिदधाति । तदेवोपरिष्टाद्यूपशकलमधिनिदधाति । पुरस्तात्पार्श्वतश्चषालमुपनिदधाति । अथ यवमत्यः प्रोक्षण्यो भवन्ति० स यवानावपति यवोऽसि यवयास्मद् द्वेषो यवयारातीरिति० अथ प्रोक्षति० स प्रोक्षति दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वेति० अथ याः प्रोक्षण्यः परिशिष्यन्ते ता अवटेऽवनयति शुन्धन्तां लोकाः पितृषदना इति० अथ बर्हीꣳषि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति पितृषदनमसीति० अथ यूपशकलं प्रास्यति० स प्रास्यति अग्रेणीरसि स्वावेश उन्नेतृणाम्....इति० अथ स्रुवेणोपहत्याज्यमवटमभिजुहोति० अथ पुरस्तात्परीत्योदङ्ङासीनो यूपमनक्ति । स आह **यूपायाज्यमानायानुब्रूहि** इति । सोऽनक्ति देवस्त्वा सविता मध्वानक्त्विति० अथ चषालमुभयतः प्रत्यज्य प्रतिमुञ्चति सुपिप्पलाभ्यस्त्वौषधीभ्य इति० मध्ये संगृहीतमिव भवति । आन्तमग्निष्ठामनक्ति० अथ परि-

व्ययणं प्रति समन्तं परिमृशति। अथाह **उच्छ्रीयमाणायानुब्रूहि** इति। स उच्छ्रयति द्यामग्रेणास्पृक्ष आन्तरिक्षं मध्येनामाः पृथिवीमुपरेणादृँहीरिति॰ अथ मिनोति या ते धामान्युश्मसि....भूरीति। एतया त्रिष्टुभा मिनोति॰ संप्रत्यग्निमग्निष्ठां मिनोति॰ अथ पर्यूहति। अथ पर्यृषति। अथाप उपनिनयति। अथैवमभिपद्य वाचयति विष्णोः कर्माणि.... सखेति॰ अथ चषालमुदीक्षते तद्विष्णोः परमं पदँ.... चक्षुराततमिति॰ अथ परिव्ययति॰ तस्मादत्रैव परिव्ययति॰ त्रिवृता परिव्ययति॰ स परिव्ययति परिवीरसि परि त्वा .... मनुष्याणामिति॰ अथ यूपशकलमवगूहति दिवः सूनुरसीति॰ अथ यस्मात्स्वरुर्नाम॰ अथ यदूर्ध्वं चषालाद् द्व्यङ्गुलं वा त्र्यङ्गुलं वा॰ ॥

[३.७.३–८.२]—अथोपाकृत्य पशुमग्निं मथित्वा नियुनक्ति॰ अग्निं मथित्वाग्नावग्निं जुहोति॰ तदाहुर्नोपाकुर्यान्नाग्निं मन्थेद् रशनामेवादायाञ्जसोपपरेत्याभिधाय नियुञ्ज्यादिति। तदु तथा न कुर्यात्॰ अथ तृणमादायोपाकरोति॰ स तृणमादत्ते उपावीरसि .... इति॰ अथातो नियोजनस्यैव। पाशं कृत्वा प्रतिमुञ्चति ऋतस्य त्वा देवहविः....इति॰ अथ नियुनक्ति देवस्य त्वा .... नियुनज्मीति॰ अथ प्रोक्षति॰ स प्रोक्षति अद्भ्यस्त्वौषधीभ्यः .... इति॰ अथोपगृह्णाति अपां पेरुरसीति॰ अथाधस्तादुपोक्षति आपो देवीः स्वदन्तु स्वात्तं चित्सद्देवहविरिति॰ अथाह **अग्नये समिध्यमानायानुब्रूहि** इति। स उत्तरमाघारमाघार्यासँस्पर्शयन्त्स्रुचौ पर्येत्य जुह्वा पशुँ समनक्ति॰ स ललाटे समनक्ति सं ते प्राणो वातेन गच्छतामिति। समङ्गानि यजत्रैरित्यँसयोः। सं यज्ञपतिराशिषेति श्रोण्योः॰ सादयति स्रुचौ। अथ प्रवरायाश्रावयति॰ अथ द्वितीयमाश्रावयति॰ स मैत्रावरुणायाहैवाश्रावयति। यजमानं त्वेव प्रवृणीते **अग्निर्ह दैवीनां विशां पुर एता** इति॰ **अयं यजमानो मनुष्याणाम्** इति॰ **तयोरस्थूरि गार्हपत्यं दीदयच्छतँ हिमा द्वा यू** इति॰ **राधाँसीत्सम्पृञ्चानावसम्पृञ्चानौ तन्वः** इति॰ तद् यत्रैतत्प्रवृतो होता होतृषदन उपविशति तदुपविश्य प्रसौति। प्रसूतोऽध्वर्युः स्रुचावादत्ते। अथाग्नीभिश्चरन्ति॰ ते वा एत एकादश प्रयाजा भवन्ति॰ स आश्राव्याह **समिधः प्रेष्य** इति। **प्रेष्य, प्रेष्य** इति। चतुर्थे-चतुर्थे प्रयाजे समानयमानो दशभिः प्रयाजैश्चरति। दश प्रयाजानिष्ट्वाह **शासमाहर** इति॰ अथ यूपशकलमादत्ते। तावग्रे जुह्वा अक्त्वा पशोर्ललाटमुपस्पृशति घृतेनाक्तौ पशूँस्त्रायेथामिति॰ पुनर्यूपशकलमवगूहति। **एषा ते प्रज्ञाताश्रिरस्तु** इत्याह शासं प्रयच्छन्। सादयति स्रुचौ। अथाह **पर्यग्नयेऽनुब्रूहि** इति। उल्मुकमादायाग्नीत् पर्यग्निं करोति॰ तद् यत्रैनँ श्रपयन्ति तदभि परिहरति। तदाहुः पुनरेतदुल्मुकँ हरेत्। अथात्रान्यमेवाग्निं निर्मथ्य तस्मिन्नेनँ श्रपयेयुः॰ तदु तथा न कुर्यात्॰ तस्मादेतस्यैवोल्मुकस्याङ्गाराभिमृष्य तस्मिन्नेनँ श्रपयेयुः। अथोल्मुकमादायाग्नीत् पुरस्तात्

प्रतिपद्यते० पशुं नयन्ति । तं वपाश्रपणीभ्यां प्रतिप्रस्थातान्वारभते । प्रतिप्रस्थातारमध्वर्युः । अध्वर्युं यजमानः । तदाहुर्नैष यजमानेनान्वारभ्यः० तदन्वेवारभेत० अथ स्तीर्णायै वेदेर्द्वे तृणे अध्वर्युरादत्ते। स आश्राव्याह **उपप्रेष्य होतर्हव्या देवेभ्यः** इति० अथ वाचयति रेवति यजमाने .... इति० तद् यत्रैनं विशसन्ति तत् पुरस्तात्तृणमुपास्यति वर्षो वर्षीयसि यज्ञे यज्ञपतिं धा इति० अथ पुनरेत्याहवनीयमभ्यावृत्यासते० तस्य न कूटेन प्रघ्नन्ति० नो एव पश्चात्कर्णम्० अपिगृह्य वैव मुखं तमयन्ति । वेष्कं वा कुर्वन्ति । तत्राह **जहि मारय** इति० **संज्ञपय अन्वगन्** इति० तद् यत्रैनं निविध्यन्ति तत्पुरा संज्ञपनाज्जुहोति स्वाहा देवेभ्य इति । अथ यदा प्राह **संज्ञप्तः पशुः** इत्यथ जुहोति देवेभ्यः स्वाहेति० ते वा एते परिपशव्ये इत्याहुती । स यदि कामयेत जुहुयादेते यद्यु कामयेतापि नाद्रियेत । यदा प्राह **संज्ञप्तः पशुः** इत्यथाध्वर्युराह **नेष्टः पत्नीमुदानय** इति । उदानयति नेष्टा पत्नीं पान्नेजनं बिभ्रतीम् । तां वाचयति नमस्त आतान .... इति० अथ पशोः प्राणानद्भिः पत्न्युपस्पृशति० सोपस्पृशति वाचं ते शुन्धामीति मुखम् । प्राणं ते शुन्धामीति नासिके । चक्षुस्ते शुन्धामीत्यक्ष्यौ । श्रोत्रं ते शुन्धामीति कर्णौ । नाभिं ते शुन्धामीति योऽयमनिरुक्तः प्राणः । मेढ्रं ते शुन्धामीति वा । पायुं ते शुन्धामीति योऽयं पश्चात्प्राणः० अथ सꣳहृत्य पदः चरित्राꣳस्ते शुन्धामीति० अथ या आपः परिशिष्यन्तेऽर्धा वा यावत्यो वा ताभिरेनं यजमानश्च शीर्षतोऽग्रेऽनुषिञ्चतः० तावनुषिञ्चतः मनस्त आप्यायतां वाक्त आप्यायतां प्राणस्त आप्यायतां चक्षुस्त आप्यायताꣳ श्रोत्रं त आप्यायतामिति० तत् समीरयतः यत्ते क्रूरं यदास्थितं....इति० शमहोभ्य इति जघनेन पशुं निनयतः० अथोत्तानं पशुं पर्यस्यन्ति । स तृणमन्तर्दधाति ओषधे त्रायस्वेति० अथासिनाभिनिदधाति स्वधिते मैनꣳ हिꣳसीरिति० सा या प्रज्ञाताश्रिस्तयाभिनिदधाति० तद् यदग्रं तृणस्य तत्सव्ये पाणौ कुरुते । अथ यद् बुध्नं तद् दक्षिणेनादत्ते । स यत्राच्छ्यति यत एतल्लोहितमुत्पतति तदुभयतोऽनक्ति रक्षसां भागोसीति० तदुपास्याभितिष्ठति इदमहꣳ रक्षोऽभितिष्ठामि.... नयामीति० अथ वपामुत्खिदन्ति । तया वपाश्रपण्यौ प्रोर्णौति घृतेन द्यावापृथिवी प्रोर्णुवाथामिति० कार्ष्मर्यमय्यौ वपाश्रपण्यौ भवतः० तां परिवासयति । तां पशुश्रपणे प्रतपति० पुनरुल्मुकमग्नीदादत्ते । ते जघनेन चात्वालं यन्ति । त आयन्ति । आगच्छन्त्याहवनीयम् । स एतत्तृणमध्वर्युराहवनीये मास्यति वायो वेः स्तोकानामिति० अथोत्तरतस्तिष्ठन् वपां प्रतपति० तामन्तरेण यूपं चाग्निं च हरन्ति० दक्षिणतः परीत्य प्रतिप्रस्थाता श्रपयति । अथ स्रुवेणोपहत्याज्यमध्वर्युर्वपामभिजुहोति अग्निराज्यस्य वेतु स्वाहेति० अथाह **स्तोकेभ्योऽनुब्रूहि** इति० यदा शृता भवत्यथाह प्रतिप्रस्थाता **शृता प्रचर** इति० स्रुचावादायाध्वर्युरतिक्रम्याश्राव्याह **स्वाहाकृतिभ्यः प्रेष्य** इति । वषट्कृते जुहोति । हुत्वा वपामेवाग्रेऽभिघारयति । अथ पृषदाज्यम्० अथाज्यमुपस्तृणीते । अथ

हिरण्यशकलमवदधाति० अथ वपामवद्यन्नाह **अग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहि** इति० अथ हिरण्यशकलमवदधाति। अथोपरिष्टाद् द्विराज्यस्याभिघारयति० आश्राव्याह **अग्नीषोमाभ्यां छागस्य वपां मेदः प्रेष्य** इति। न प्रस्थितमित्याह। प्रसुते **प्रस्थितम्** इति। वषट्कृते जुहोति। हुत्वा वपाँ समीच्यौ वपाश्रपण्यौ कृत्वानुप्रास्यति स्वाहाकृते ऊर्ध्वनभसं मारुतं गच्छतमिति० अथ चात्वाले मार्जयन्ते ॥

**वाकासं—**

**उरु विष्णो....॥ अत्यन्याँ....परेभ्यः परोवरेभ्यः.... ॥ --- ॥ दिवं मा लेखी ....॥ --- ॥ इदमहँ रक्षसो ग्रीवा अपिकृन्तामि ॥ --- ॥ दिवमग्रेणास्पृक्ष ....॥ या ते धामान्युश्मसि...। अत्राहैतदुरुगायस्य....॥ --- ॥ ऋतस्य त्वा....धर्षान् मानुषः॥ ---॥ अद्भ्यस्त्वौषधीभ्यः प्रोक्षाम्यनु त्वां माता....॥ --- ॥ सं यजमान आशिषा ॥ --- ॥ नमस्त आतानानर्वा .... पथ्या उप.... ॥ --- ॥ यत्ते क्रूरं .... आप्यायतां तत्ते निष्ट्यायतां.... ॥ --- ॥ जुषाणो अग्निराज्यस्य वेतु स्वाहा ॥ स्वाहाकृते ऊर्ध्वनभसं मारुतं गच्छतम् ॥ ५.१०.१–६.३.७ ॥**

काशब्रा [ ४.६.४–७.१ ]— --- तया यूपावटं परिलिखत्यर्धमन्तर्वेद्यर्धं बहिर्वेदि इदमहँ रक्षसो .... इति० उपरसंमितं यूपावटं खनति --- **यूपायाज्यमानायानुब्रूहि** इति **यूपमञ्जमोऽनुब्रूहि** इति वा --- ॥

[ ४.७.३–८.२ ] = माशब्रा ३.७.३–८.२

ऐब्रा [ २.१ ]—तद्यद्यूप ऊर्ध्वो निमीयते० सोऽष्टाश्रिः कर्तव्यः० खादिरं यूपं कुर्वीत स्वर्गकामः० बैल्वं यूपं कुर्वीतान्नाद्यकामः पुष्टिकामः० पालाशं यूपं कुर्वीत तेजस्कामो ब्रह्मवर्चसकामः० ॥

[ २.३ ]—स यदग्नीषोमीयं पशुमालभते० तदाहुर्द्विरूपोऽग्नीषोमीयः कर्तव्यः० तत्तन्नादृत्यम्। पीव इव कर्तव्यः ॥

[ २.११ ]—पर्यग्नि कुर्वन्ति। तस्मात्पर्यग्नयेऽन्वाह। तं वा एतं पशुमाप्रीतं सन्तं पर्यग्निकृतमुदञ्चं नयन्ति। तस्योल्मुकं पुरस्ताद्धरन्ति० तं यत्र निहनिष्यन्तो भवन्ति तदध्वर्युर्बर्हिरधस्तादुपास्यति० तस्योवध्यगोहं खनन्ति० ॥

[ २.१४ ]—सा पञ्चावत्ता भवति। यद्यपि चतुरवत्ती यजमानः स्यादथ पञ्चावत्तैव वपा। आज्यस्योपस्तृणाति हिरण्यशल्को वपा हिरण्यशल्क आज्यस्योपरिष्टादभिघारयति। तदाहुर्यद्धिरण्यं न विद्येत कथं स्यादिति। द्विराज्यस्योपस्तीर्य वपामवदाय द्विरुपरिष्टादभिघारयति ॥

शांब्रा [१०.१-२]—तद्यदुपवसथे यूपमुच्छ्रयन्ति० स नापनत इव स्यात्० अथाहवनीयं पुनरभ्यावृत्तः० पालाशं ब्रह्मवर्चसकामः कुर्वीत बैल्वमन्नाद्यकामः खादिरं स्वर्गकामः। त्र्यरत्निः स्यात्० चतुररत्निः पञ्चारत्निः० षळरत्निः० सप्तारत्निः० अष्टारत्निः० नवारत्निः० दशारत्निः० एकादशारत्निः० द्वादशारत्निः० एता मात्राः संपदो यूपस्य तासामेकां संपदमभिसंपाद्य यूपं कुर्वीत। तदु वा आहुर्न मिमेद्यूपमपरिमित एव स्यात्० यत्रैव मनसा वेलां मन्येत तद्यूपस्य च वेदेश्चेति ह स्माह० सोऽष्टाश्रिर्निष्ठितो भवति० अथैतं प्रणेनिजति० अथैनमभ्यनक्ति० स्वभ्यक्तं स्वयमेव यजमानः कुर्वीत०। अथ य ऊर्ध्ववकलो द्रव्यः स मानुषः कामं तस्यापि कुर्वीत। अथ यस्य प्रसव्या आदित्यस्यान्वावृत्ता वकलाः स यूप्यः स स्वर्ग्यः। एकस्थो भ्रातृव्यः। यो वानुवृतः पलाशैरा मूलात् स्यात् सोऽनग्नः स पशव्यस्तं पशुकामः कुर्वीत ॥

[१०.३]—तमाहुर्द्विरूपः स्याच्छुक्लं च कृष्णं च० अथ लोहितं वा० पर्यग्नि पशुं करोति० त्रिः प्रसवि पर्यग्नि करोति० पुनः परीहि इत्यग्नीधं ब्रूयाद्यमिच्छेन्न प्रच्यवेतेति ॥

**तांब्रा [१.१.६]—**

[१]नृमण ऊर्ध्वभरसं त्वोर्ध्वभरा दृशेयम् ॥

षब्रा [४.४]—यूपं करोति सक्षीरं स्थूलं मूले बालाग्रमनुरूपम्० अष्टाश्रीः करोति० पञ्चदशसप्तदशैकविंशत्यरत्निं वा। पालाशं पुष्टिकामस्य। बैल्वं ब्रह्मवर्चसकामस्य। औदुम्बरमन्नाद्यकामस्य। खादिरं बलकामस्य। वैभीदकराजवृक्षौ भ्रातृव्यवतः। क्रमुकाश्वत्थपाषाणा यशस्कामस्य। यत् किं च यज्ञियं पशुकामस्य। तत्र वर्जनीया भवन्ति। गडुलो व्रणिलो व्यावृत्तः कुठिः कुब्जः शूलो दग्धः शुष्कः सुषिरो घुणदग्ध इत्यप्रशस्ताः। अथ प्रशस्ताः। शुद्धावृत्ता अनुपूर्वाः समाः प्रशस्ताः० मूलमरत्निं सत्वचं निखनेत्० यदूर्ध्वं चषालस्याङ्गुलमात्रं कार्यं० प्राचीं संनमति० ॥

गोब्रा [२.२.१६]—दक्षिणामुखस्तिष्ठन्नग्नीत् प्रत्याश्रावयति० ॥

## ४६. अग्नीषोमीयपशुवपायागहौत्रम्

**ऋसं—**

**[२]होता यक्षदग्निं समिधा सुषमिधा समिद्धं नाभा पृथिव्याः संगथे वामस्य। वर्ष्मन् दिव पळस्पदे वेत्वाज्यस्य होतर्यज ॥**

**होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपाम्। मध्वाद्य देवो देवेभ्यो देवयानान् पथो अनक्तु वेत्वाज्यस्य होतर्यज ॥**

१. अनेन यूपोच्छ्रयणमनुमन्त्रयेरन्नुद्गातारः। २. दश प्रयाजप्रैषाः।

[1]होता यक्षन्नराशंसं नृशस्तं नॄँः प्रणेत्रम् । गोभिर्वपावान् स्याद्वीरैः शक्तीवान् रथैः प्रथमयावा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज ॥

होता यक्षदग्निमिळ ईळितो देवो देवाँ आ वक्षद् दूतो हव्यवाळमूरः । उपेमं यज्ञमुपेमां देवो देवहूतिमवतु वेत्वाज्यस्य होतर्यज ॥

होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा अस्मिन् यज्ञे वि च प्र च प्रथतां स्वासस्थं देवेभ्यः । एमेनदद्य वसवो रुद्रा आदित्याः सदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज ॥

होता यक्षद् दुर ऋष्वाः कवष्यो कोषधावनीरुदाताभिर्जिहतां वि पक्षोभिः श्रयन्ताम् । सुप्रायणा अस्मिन् यज्ञे वि श्रयन्तामृतावृधो व्यन्त्वाज्यस्य होतर्यज ॥

होता यक्षदुषासानक्ता बृहती सुपेशसा नॄँः पतिभ्यो योनिं कृण्वाने । संस्मयमाने इन्द्रेण देवैरेदं बर्हिः सीदतां वीतामाज्यस्य होतर्यज ॥

होता यक्षद्दैव्या होतारा मन्द्रा पोतारा कवी प्रचेतसा । स्विष्टमद्यान्यः करदिषा स्वभिगूर्तमन्य ऊर्जा स्वतवसेमं यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य होतर्यज ॥

होता यक्षत्तिस्रो देवीरपसामपस्तमा अच्छिद्रमद्येदमपस्तन्वताम् । देवेभ्यो देवीर्देवमपो व्यन्त्वाज्यस्य होतर्यज ॥

होता यक्षत्त्वष्टारमचिष्टुमपाकं रेतोधां विश्रवसं यशोधाम् । पुरुरूपमकामकर्शनं सुपोषः पोषैः स्यात्सुवीरो वीरैर्वेत्वाज्यस्य होतर्यज ॥

होता यक्षद्वनस्पतिमुपाव स्रक्षद्धियो जोष्टारं शशमन्नरः । स्वदात् स्वधितिर्ऋतुथाद्य देवो देवेभ्यो हव्यवाड् वेत्वाज्यस्य होतर्यज ॥ खिल ५.७.१ ( अ–क )

[2]समिद्धो अग्निर्निहितः ....॥

[3]अग्निर्होता नो अध्वरे .... ॥ ४.१५.१–३

[4]अजैदग्निरसनद्वाजं नि देवो देवेभ्यो हव्यवाट् । प्राञ्जोभिर्हिन्वानो धेनाभिः कल्पमानो यज्ञस्यायुः । प्रतिरन्नुपप्रेष होतर्हव्या देवेभ्यः ॥ खिल ५.७.२ (अ)

[5]जुषस्व सप्रथस्तमं....॥१.७५.१॥ [5]इमं नो यज्ञममृतेषु धेहि....॥३.२१.१–५

[6]होता यक्षदग्निं स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकानां स्वाहा स्वाहा-

१. यजमानगोत्रानुसारेण 'होता यक्षत्तनूनपातम् ...' 'होता यक्षन्नराशंसं ...' इति वा द्वितीयः प्रयाजप्रैषो मैत्रावरुणेनोच्चारणीयः । २. यजमानगोत्रानुसारेण होत्रा दश प्रयाजयाज्याः तत्तत्प्रैषोत्तरं पठनीयाः । आप्रीसूक्तगता एता याज्याः 'समिद्धो अग्निर्निहितः...' इत्याद्याः श्रौ. १ पृ. ५६२–५६९ अत्र द्रष्टव्याः । ३. पर्यग्निकरणार्थी ऋचः । एतासां सकलपाठः श्रौ. १ पृ. ५६९ इत्यत्र द्रष्टव्यः। ४. उपप्रैषः । ५. स्तोकीया ऋचः । एतासां सकलपाठः श्रौ. १ पृ. ५७५ इत्यत्र द्रष्टव्यः । ६. एकादशः प्रयाजप्रैषः ।

कृतीनां स्वाहा हव्यसूक्तीनाम् । स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु होतर्यज ।। खिल ५.७.१ (ख)

[1]घृतं मिमिक्षे घृतमस्य .... ।।

[2]होता यक्षदग्निमाज्यस्य जुषतां हविर्होतर्यज ।।

होता यक्षत्सोममाज्यस्य जुषतां हविर्होतर्यज ।। खिल ५.७.२ ( आ–इ )

[3]अग्नीषोमाविमं सु मे शृणुतं वृषणा हवम् ।

प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः ।। १.९३.१

[4]होता यक्षदग्नीषोमौ च्छागस्य वपाया मेदसो जुषेतां हविर्होतर्यज ।।

खिल ५.७.२ (उ)

[5]युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ।

युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान् ।। १.९३.५

[6]इदमापः प्र वहत यत् किं च दुरितं मयि ।

यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ।।

आपो अद्यान्वचारिषं रसेन समगस्महि ।

पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ।।

सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।

विद्युर्मे अस्य देवा इन्द्रो विद्यात् सह ऋषिभिः ।। १.२३.२२-२४

ऐब्रा [ २.२ ]—अञ्ज्मो यूपमनुब्रूहि इत्याहाध्वर्युः । [7]अञ्जन्ति त्वामध्वरे देवयन्त इत्यन्वाह० उच्छ्रयस्व वनस्पत इत्युच्छ्रीयमाणायाभिरूपा० समिद्धस्य श्रयमाणः पुरस्तादिति० ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सवितेति० ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दहेति० जातो जायते सुदिनत्वे अह्नामिति० युवा सुवासाः परिवीत आगादित्युत्तमया परिदधाति० ता एताः सप्तान्वाह० त्रिः प्रथमामन्वाह त्रिरुत्तमाम्० ।।

[ २.४–७ ]—आप्रीभिराप्रीणाति० समिधो यजति० तनूनपातं यजति० नराशंसं यजति० इळो यजति० बर्हिर्यजति० दुरो यजति० उषासानक्ता यजति० दैव्या होतारा यजति०

१. एकादशी प्रयाजयाज्या होत्रा यजमानगोत्रानुसारेण पठनीया । श्रौ १ पृ. ५६३–५६९ इत्यत्र मुद्रितानामाप्रीसूक्तानामन्तिमासु ऋक्षु अभिप्रेता ऋक् याज्यारूपेण प्रयोक्तव्या । तत्र ' घृतं मिमिक्षे ...' इति प्रथमस्याप्रीसूक्तस्यान्तिमा ऋक् । २. आज्यभागयोः प्रैषौ । पुरोनुवाक्ये श्रौ. १ पृ. २०६ अत्र द्रष्टव्ये । आश्वश्रौ. १.५.२९ अनुसारेण ' जुषाणो अग्निराज्यस्य वेतु' ' जुषाणः सोम आज्यस्य हविषो वेतु ' इति याज्ये । ३. वपायागस्य पुरोनुवाक्या । ४. वपायागस्य प्रैषः । ५. वपायागस्य याज्या । ६. आश्वलायनमत इयमेकैव मार्जनार्था शाङ्खायनमते तु तिस्रो मार्जनार्थाः । ७.एतदाद्या ऋचः श्रौ. १ पृ. ५५९-५६० इत्यत्र द्रष्टव्याः ।

तिस्रो देवीर्यजति० त्वष्टारं यजति० वनस्पतिं यजति० स्वाहाकृतीर्यजति० ताभिर्यथऋष्या-प्रीणीयात्० **पर्यग्नये क्रियमाणायानुब्रूहि** इत्याहाध्वर्युः। अग्निर्होता नो अध्वर इति तृचमाग्नेयं गायत्रमन्वाह पर्यग्निक्रियमाणे० अतः **उपप्रेष्य होतर्हव्या देवेभ्यः** इत्याहाध्वर्युः। अजैदग्निरसनद्वाजमिति मैत्रावरुण उपप्रैषं प्रतिपद्यते० [1]**दैव्याः शमितार आरभध्वमुत मनुष्याः** इत्याह० **उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम्** इति० स यद्येकदेवत्यः पशुः स्यात् **मेधपतये** इति ब्रूयात्। यदि द्विदेवत्यः **मेधपतिभ्याम्** इति। यदि बहुदेवत्यः **मेधपतिभ्यः** इति० **प्रास्मा अग्निं भरत** इति० **स्तृणीत बर्हिः** इति० **अन्वेनं माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः** इति० **उदीचीनाँ अस्य पदो निधत्तात् सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरम्** इति० **एकधास्य त्वचमाच्छ्यतात् पुरा नाभ्या अपिशसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वात्** इति० **श्येनमस्य वक्षः कृणुतात् प्रशसा बाहू शला दोषणी कश्यपेवांसाच्छिद्रे श्रोणी कवषोरू स्रेकपर्णाष्ठीवन्ता षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयताद्गात्रं गात्रमस्यानूनं कृणुतात्** इति० **ऊवध्यगोहं पार्थिवं खनतात्** इत्याह० **अस्ना रक्षः संसृजतात्** इत्याह० तदाहुर्न यज्ञे रक्षसां कीर्तयेत्० तदु वा आहुः कीर्तयेदेव० स यदि कीर्तयेदुपांशु कीर्तयेत्० **वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रविता रवच्छमितारः** इति० **अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३उ** इति त्रिर्ब्रूयात् **अपाप** इति च० **शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद्दुष्कृतमन्यत्र तत्** इत्याह०॥

[ २.१२ ]— तस्य वपामुत्खिद्याहरन्ति। तामध्वर्युः स्रुवेणाभिघारयन्नाह **स्तोकेभ्योऽनुब्रूहि** इति० जुषस्व सप्रथस्तममित्यन्वाह० इमं नो यज्ञममृतेषु धेहीति सूक्तमन्वाह०॥

[ २.९ ]—युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम्। युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतानिति वपायै यजति०॥

[ ३.४५ ]—उपवसथे यावत्या वाचा कामयीत तावत्यानुब्रूयात्०॥

शांब्रा [ १०.२–५ ]—अञ्जन्ति त्वामध्वरे देवयन्त इत्यक्तवतीमभिरूपामाज्यमानायान्वाह। उच्छ्रयस्व वनस्पते, समिद्धस्य श्रयमाणः पुरस्तात्, जातो जायते सुदिनत्वे अह्नाम्, ऊर्ध्व ऊ षु ण ऊतये, ऊर्ध्वो नः पाह्यंहसो निकेतुनेत्युच्छ्रितवतीश्चोद्वतीश्चोच्छ्रियमाणायान्वाह। युवा सुवासाः परिवीत आगादिति परिवीतवत्या परिदधाति। अभिरूपा अन्वाह० ता वै समा-

1. अध्रिगुप्रैषः। आश्वश्रौ ३.३.१ द्रष्टव्यम्।

न्वाह० त्रिः प्रथमया त्रिरुत्तमया० इति न्वेकयूप एकपशौ च० तद्यदुपवसथेऽग्नीषोमीयं पशुमालभते० तस्यैकादश प्रयाजा एकादशानुयाजा एकादशोपयजः० ऋचा प्रयाजेषु यजति प्रतीकैरनुयाजेषु० आप्रीभिराप्रीणाति० **दैव्याः शमितार उत च मनुष्या आरभध्वमुपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम्** इति० **षड्विंशतिरस्य वङ्क्रयः** इति० नवकृत्वोऽध्रिगाववानिति० त्रिः परिदधाति० सकृत्पुरस्तादाह० परिधायोपांशु जपति **उभावपापश्च** इति० अथ स्तोकीया अन्वाह० स्वाहाकृतिभिश्चरित्वा वपया चरन्ति० न स्वाहाकृतीश्च वपां चान्तरेण वाचं विसृजेत० यदनुष्टुभोऽग्नीषोमीयस्य पशोः पुरोनुवाक्या भवन्ति० यत् त्रिष्टुभो याज्याः० ॥

[ ८.२ ]—अथ यत्र पशुरालभ्यते तदेतां[1] पराचीमनुष्य यज्ञेन यज्ञमयजन्त देवा इति त्रिष्टुभा परिदधाति[2]० ॥

[ २८.१-२ ]—मैत्रावरुण एव सर्वेभ्यः प्रेष्यति । स वै तिष्ठन् प्रेष्यति० कुवक्र इव प्रणतोऽनुब्रूयात्० एता वामदेवोऽभिरूपा अपश्यत् अग्निर्होता नो अध्वर इति । ताभिर्हाग्निं परिणिन्युः० जुषस्व सप्रथस्तममिति जुष्टवतीमभिरूपामन्वाह० इमं नो यज्ञममृतेषु धेहीति० ॥

तैसं [ ६.३.५, ७ ]— सावित्रीमृचमन्वाह० गायत्रीः सर्वा अन्वाह० सप्तदश सामिधेनीरन्वाह० ॥

**तैब्रा [ २.४.१.६ ]—**

**अग्नी रक्षाꣳसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्यः ॥**
**अग्ने रक्षा णो अꣳहसः प्रति ष्म देव रीषतः । तपिष्ठैरजरो दह ॥**
**अग्ने हꣳसि न्यत्रिणं दीद्यन्मर्त्येष्वा । स्वे क्षये शुचिव्रत ॥**

मैसं [ ३.९.५ ]—सावित्रीं प्रथमामन्वाह० अथ द्यावापृथिवीयाम्० गायत्रीरन्वाह० तस्माद्धर्मवती नानूच्या० ॥

कासं [ २६.८ ]—सावित्रीमन्वाह० न धूमवतीमनुब्रूयात्० यदि मथ्यमानो न जायेत रक्षोघ्नीमनुब्रूयात्० अनवानमनुब्रूयात्० गायत्रीं ब्राह्मणस्यानुब्रूयात्० त्रिष्टुभं राजन्यस्य० जगतीं वैश्यस्य० ॥

कपिसं [ ४१.६ ] ≡ कासं

---

१. तं मर्जयन्त सुक्रतुम् इत्यृचम् ।　　२. अग्निमन्थनीयासु ।

## ४७. अग्नीषोमीयपशुवपायागौद्गात्रं पितापुत्रीयसुब्रह्मण्याह्वानं च

### सोमसाम[१]

साजैसं [ १.३.८ ]—

इममू षु त्वमस्माकꣳ सनिं गायत्रं नव्याꣳसम् । अग्ने देवेषु प्र वोचः ॥

इममूषु । त्वमास्माकाम् । सानिꣳहोयिगायाहोत्र'नव्याꣳसाम् । अग्नेहोयिदेवा
ती टथा ता टथ टी थ्य टथ

हो''षु''प्रा''वोचाः । ओयिळा । [ ग्राम १.३.१३ ]
टथ टी ठटथा ख ण प प्या

### अश्वसूक्तम्[२]

साजैसं [ १.१३.८ ]—

यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् । स्तोता मे गोसखा स्यात् ॥

आबुहौहोवाहायियदिन्द्राहं यथात्वमैहीऐही । आयिशीय''व''स्वआयिकैदैही-
खटथ शू ति च कि क्यका टू

''ऐ''ही । ओयिस्तोऽामायि.गो''''सखा'सा''याऔहोवा । शुक्र आहु'ताः ॥
क्यचटिच कचथ्यथ्या टथ टिटटी ख शि किक्य थ्यखश

[ ग्राम २.१.१.१९ ]

### आग्नेयम्[२]

साजैसं [ १.५२.१२ ]—

अयं विचर्षणिर्हितः पवमानः स चेतति । हिन्वान आप्यं बृहत् ॥

आबुहौहोवाहायाविचा । षणार्थीर्हायिताः । आबुहौहोवाहायिपवमानाः ।
ख घी टी थ्यखा ख श

सचायीतातायी । आबुहौहोवाहायिहिन्वानया । पियौहौहाहोवाबृहात् । हा''यी ॥
टी ख श ख शू खि इयशा

[ ग्राम ३.४.२७ ] ( द्रष्टव्यं कौग्राम १४.२.१७ )

---

१. वपायागान्ते प्रस्तोतृसाम । द्रष्टव्यं कौग्राम १.२.१३ । २. वपायागान्ते प्रस्तोतृसाम । द्रष्टव्यं कौग्राम ३.२.१९ । जैमिनिशाखानुसारेण वपायागान्ते प्रस्तोत्रा त्रीणि सामानि गेयानि । तत्र द्वितीयमश्वसूक्तं साम गेयमिति अग्निष्टोमप्रयोगकारः । 'अयं विचर्षणिः ...' इति मन्त्रे आग्नेयं साम द्वितीयत्वेन गेयमिति तु केरलीयानां संप्रदायः । 'अग्नीषोमीयवपायाहुतेऽग्नेः (?) प्रत्यगास्थितः । गायेदाग्नेयसौम्यं च सौम्याग्नेयद्वयं तथा । इममूषु हायाविच तृतीय स्यात् प्रसोमदा ॥' इति कारिका तत्र प्रमाणम् । अत्र निर्णयस्य दुष्करत्वात् उभे अपि सामनी अत्र मुद्रिते ।

आग्नेयम्[1]

साजैसं [ १.५३.४ ]—

प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।

अꣳशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥

प्रसोमदा । वावीतायायि । सिन्धुर्नपायिप्ययाआवुवा । र्णासा आꣳशोः पाया ।
ती खी ण श क कि ति टि ख श खि ण

समदायि'रो'नजाआवुवा । गृवीरच्छाकोशम् । मधा'आवुवा । श्चुतम् ॥
क किपु टय टय ख श खि ण त्यता टया ख श

[ ग्राम ३.५.३९ ]

## ४८. वसतीवरीग्रहणम्

तैसं [ १.३.१२ ]—

हविष्मतीरिमा आपो हविष्मान् देवो अध्वरो हविष्माꣳ आ विवासति हविष्माꣳ अस्तु सूर्यः ॥ अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत्त ॥

[ ६.४.२ ]—वसतीवरीर्गृह्णाति० प्रतीपं तिष्ठन् गृह्णाति० वहन्तीनां गृह्णाति० नान्तमा वहन्तीरतीयात्० न स्थावराणां गृह्णीयात्० छायायै चातपतश्च संधौ गृह्णाति० अनुष्टुभा गृह्णाति० चतुष्पदयर्चा गृह्णाति ॥

मैसं [ १.३.१ ]—

हविष्मतीरिमा आपो हविष्मान् देवो अध्वरः । हविष्मं आविवासति हविष्मं अस्तु सूर्यः ॥ अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि देवानां भागधेयी स्थ ॥

[ ४.५.१ ]—यद्वहन्तीनां गृह्णाति० प्रतीपमुपमारयति० सूर्यस्यावकाशे गृह्णाति० आविःसूर्ये गृह्याः० अनुष्टुभा गृह्णाति० चतुर्भिर्गृह्णाति० यद्दिवा गृह्णाति० ॥

कासं [ ३.९ ]—

हविष्मतीरिमा आपो हविष्मान् देवो अध्वरः। हविष्मां अविवासति हविष्मानस्तु सूर्यः ॥ अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि सुम्नायवस्सुम्न्याय सुम्न्यं धत्त ॥

१. वपायागान्ते प्रस्तोतृसाम । द्रष्टव्यं कौग्राम १४.२.२०

कपिसं [ २.१६ ]—

हविष्मतीरिमा .... ॥ अग्नेर्वो .... सुम्नाय सुम्नं धत्त ॥

वामासं—

हविष्मतीरिमा आपो हविष्माँ आ विवासति हविष्मान् देवो अध्वरो हविष्माँ अस्तु सूर्यः ॥ अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि ॥ ६.२३–२४ ॥

माशब्रा [ ३.९.२.१–१३ ]—स यद्वसतीवरीरच्छैति० ता वै सर्वेषु सवनेषु विभजति० ता वै स्यन्दमानानां गृह्णीयात्० दिवा गृह्णीयात्० स यः पुरादित्यस्यास्तमया-द्वसतीवरीर्गृह्णाति० अथातो गृह्णात्येव हविष्मतीरिमा आपः .... इति० आहृत्य जघनेन गार्हपत्यꣳ सादयति अग्नेर्वोऽपन्नगृहस्य सदसि सादयामीति ॥

वाकासं [ ६.६.१–२ ] ≡ वामासं

काशब्रा [ ४.९.२.१–८ ] ≡ माशब्रा

## ४९. अग्नीषोमीयपशुपुरोडाशहविर्यागौ

तैसं [ १.३.१०–११ ]—

सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत् स्वाहा ॥ ऐन्द्रः प्राणो अङ्गेअङ्गे नि देध्यदैन्द्रोऽपानो अङ्गेअङ्गे वि बोभुवद् देव त्वष्टर्भूरि ते सꣳ समेतु विषुरूपा यत् सलक्ष्माणो भवथ देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु ॥ श्रीरस्यग्निस्त्वा श्रीणात्वापः समरिणन् वातस्य त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳ रोहिष्यै॥ घृतं घृतपावानः पिबत वसां वसापावानः पिबता-न्तरिक्षस्य हविरसि स्वाहा त्वान्तरिक्षाय ॥ दिशः प्रदिश आदिशो विदिश उद्दिशः स्वाहा दिग्भ्यो नमो दिग्भ्यः ॥ समुद्रं गच्छ स्वाहा ॥ अन्तरिक्षं गच्छ स्वाहा ॥ देवꣳ सवितारं गच्छ स्वाहा ॥ अहोरात्रे गच्छ स्वाहा ॥ मित्रावरुणौ गच्छ स्वाहा ॥ सोमं गच्छ स्वाहा ॥ यज्ञं गच्छ स्वाहा ॥ छन्दाꣳसि गच्छ स्वाहा ॥ द्यावा-पृथिवी गच्छ स्वाहा ॥ नभो दिव्यं गच्छ स्वाहा ॥ अग्निं वैश्वानरं गच्छ स्वाहा ॥ अद्भ्यस्त्वौषधीभ्यो मनो मे हार्दि यच्छ ॥ तनूं त्वचं पुत्रं नप्तारमशीय ॥

[ ६.३.१०–११ ]—पशुमालभ्य पुरोडाशं निर्वपति० वपया प्रचर्य पुरोडाशेन प्र चरति० पृषदाज्यस्योपहत्य त्रिः पृच्छति शृतꣳ हवी३ः शमितः इति० यत् पृषदाज्येन हृदयमभिघारयति० यत् प्लक्षशाखोत्तरबर्हिर्भवति० अन्तरा यूपं चाहवनीयं च हरति०

मनोतायै हविषोऽवदीयमानस्यानु ब्रूहि इत्याह० एकादशावदानान्यव द्यति० हृदयस्याग्रेऽव द्यत्यथ जिह्वाया अथ वक्षसः० यस्यैवमवदाय यथाकाममुत्तरेषामवद्यति० मध्यतो गुदस्याव द्यति० उत्तमस्याव द्यति० दोः पूर्वार्धस्य गुदं मध्यतः श्रोणिं जघनार्धस्य० यत् त्र्यङ्गाणाँ समवद्यति० अक्ष्णयाव द्यति० मेदसा स्रुचौ प्रोर्णोति० यूषन्नवधाय प्रोर्णोति० पार्श्वेन वसाहोमं प्रयौति० अर्धर्चे वसाहोमं जुहोति० दिशो जुहोति० यत् पृषदाज्यस्योपहत्याह वनस्पतयेऽनु ब्रूहि, वनस्पतये प्रेष्य इति० अन्यस्यान्यस्य समवत्तँ समवद्यति० यूष्णोप सिञ्चति० इडामुप ह्वयते० चतुरुप ह्वयते० यं कामयेतापशुः स्यादित्यमेदस्कं तस्मा आ दध्यात्० यं कामयेत पशुमान्त्स्यादिति मेदस्वत् तस्मा आ दध्यात्० एकादशानूयाजान् यजति० यत् पृषदाज्येनानूयाजान् यजति० ॥

[ ६.१.११.६ ]—यदग्नीषोमीयं पशुमालभत आत्मनिष्क्रयण एवास्य सः। तस्मात्तस्य नाश्यम्० यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एवास्य सः। तस्माद्वाश्यम् ॥

[ ६.४.१ ]—यदुपयज उपयजति० जघनार्धादव द्यति० स्थविमतोऽव द्यति० असंभिन्दन्नव द्यति० न पर्यावर्तयति० ॥

तैब्रा [ २.४.२.७ ]—

वयँ सोम व्रते तव। मनस्तनूषु बिभ्रतः। प्रजावन्तो अशीमहि ॥

मैसं [ १.२.१७-१८ ]

जुष्टं देवेभ्यो हव्यं घृतावदमुष्मै त्वा जुष्टम् ॥ रेडस्यग्निष्ट्वा श्रीणात्वापस्त्वा समरिण्वन् वातस्य त्वा ध्राज्यै पूष्णो रँह्या ऊष्मणोऽव्यथिषे ॥ अपामोषधीनाँ रसः॥ घृतं घृतपावानः पिबत वसाँ वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वा वाताय ॥ दिशः ॥ प्रदिशः ॥ आदिशः ॥ विदिशः ॥ उद्दिशः ॥ दिशः ॥ ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यदैन्द्रोऽपानो अङ्गे अङ्गे नियोभुवदैन्द्रो व्यानो अङ्गे अङ्गे विबोभुवत् ॥ देव त्वष्टर्भूरि ते सत्समेतु सलक्ष्म यद्विषुरूपं बभूव। देवत्रा यन्तमवसे सखायो अनु त्वा माता पितरो मदन्तु ॥ समुद्रं गछ स्वाहा ॥ अन्तरिक्षं गछ स्वाहा ॥ देवँ सवितारं गछ स्वाहा ॥ अहोरात्रे गछ स्वाहा ॥ मित्रावरुणौ गछ स्वाहा ॥ द्यावापृथिवी गछ स्वाहा ॥ छन्दाँसि गछ स्वाहा ॥ सोमं गछ स्वाहा ॥ यज्ञं गछ स्वाहा ॥ दिव्यं नभो गछ स्वाहा ॥ अग्निँ वैश्वानरं गछ स्वाहा ॥ मनो हार्दिँ यछ ॥ ओषधीभ्यस्त्वा ॥

[ ३.१०.२–४; ६ ]—यद् व्रीहिमयः पुरोडाशो भवति० द्वादशकपालो भवति० एकादशकपालः कार्यः० यत् प्लक्षशाखाया अवद्यति० पृषदाज्यस्योपहत्य परैति शृत॰ हविः शमितः इति० त्रिराह० उत्तरतः परीत्याभिघारयति० यत्पृषदाज्येन हृदयमनक्ति० यदुत्तरबर्हि-र्बर्हिः०यन्मनोताया अन्वाह० हृदयस्याग्रावद्यति० जिह्वाया अवद्यति० श्येनस्यावद्यति०दोष्णोऽवदाय पार्श्वयोरवद्यति० यक्नोऽवद्यति० मतस्नयोरवद्यति० श्रोण्या अवदाय गुदस्यावद्यति। तदु तस्यो-त्तमस्यावद्यति० एकादशकृत्वोऽवद्यति० एकादश वा एतान्यवदानानि तानि द्विर्द्विरवद्यति० यत् त्र्यङ्गाणामवद्यति० अक्ष्णयाङ्गानामवद्यति० यद्दोष्णः पूर्वार्धादग्नयेऽवद्यति गुदस्य मध्यतः श्रोण्या ज़घानतः० त्रेधा गुदं करोति० त्र्यङ्गाणि समवत्तमवदानानि० त्रेधा मेदः करोति० यद्धिरण्य-मवधाय जुहोति० वसाहोमं प्रयौति० स्वधितिना प्रयौति० पार्श्वेनापिदधाति० यत्पशु॰ संमृशति० यदाहुतीर्हुत्वा पशु॰ संमृशति० अर्धर्चे जुहोति० वनस्पति॰ यजति० यत्पृषदाज्यं जुहोति० दिग्भ्यो जुहोति० प्राचीमुत्तमां जुहोति० अध्यूध्नी॰ होत्रे हरन्ति० गुदेनोपयजति० स्थविमत उपयजति० असंभिन्दन्नुपयजति० यं द्विष्यात् तस्य संभिन्द्यात्० एकादशोपयजः० पशुश्रपणादग्निमाहरन्ति० यत एव पूर्वमवादात्ततोऽपरमवद्यति० अन्तराग्निं च यूपं च हृत्यः० ॥

[ ३.७.८ ]—अग्नीषोमीयस्य पशोर्नाशितव्यम्० अग्नीषोमीये सँस्थिते यजमानस्य गृहेऽशितव्यम्० नक्त॰ स॰स्थाप्यः० ॥

**कासं [ ३.७-८ ]—**

**रेडस्यग्निस्त्वा श्रीणातु ॥ आपस्समरिणन् वातस्य त्वा ध्राज्यै पूष्णो रँह्यै ॥ ऊष्मणोऽव्यथिष्यै ॥ अपामोषधीनां रोहिष्यै ॥ ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यदैन्द्रो व्यानो अङ्गे अङ्गे निदीध्यदैन्द्रोऽपानो अङ्गे अङ्गे निदीध्यत् ॥ देव त्वष्टर्भूरि ते सँ समेतु सलक्ष्म यद्विषुरूपं बभूव। देवत्रा यन्तमवसे सखायमनु त्वा माता पितरो मदन्तु ॥ घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा त्वा वाताय ॥ दिशः प्रदिश आदिशो विदिश उद्दिशो दिशः ॥ स्वाहा दिग्भ्यः ॥ नमो दिग्भ्यः ॥ समुद्रं गच्छ स्वाहा ॥ अन्तरिक्षं गच्छ स्वाहा ॥ देवं सवितारं गच्छ स्वाहा ॥ अहोरात्रे गच्छ स्वाहा ॥ मित्रावरुणौ गच्छ स्वाहा ॥ द्यावापृथिवी गच्छ स्वाहा ॥ छन्दो गच्छ स्वाहा ॥ सोमं गच्छ स्वाहा ॥ यज्ञं गच्छ स्वाहा ॥ नभो गच्छ स्वाहा ॥ अग्निं वैश्वानरं गच्छ स्वाहा ॥ मनो मे हार्दिं यच्छ पुत्रं नप्तारमशी-योषधीभ्यस्स्वाहा ॥**

[ २५.५ ]—अक्त्वा प्रस्तरं प्रहरति० नात्यग्रं प्रहरेत्० अग्रमग्र आदीपयति० ऋजुं प्रहरेत् स्वर्गकामस्य० यं द्विष्यात् तस्य हूर्छयेत्० न्यञ्चं प्रहरेद् वृष्टिकामस्य०

ऊर्ध्वं प्रहरेद्यदि कामयेत पुमानस्य पुत्रो जायेतेति० प्रथयित्वा प्रहरेद्यदि कामयेत स्त्री जायेतेति० यत् तृणमुपगृह्णाति० अनुप्रहरति० **अगानग्नी३त्** इति । **अगन्** इति० **श्रावय, श्रौषट्** इति०॥

**कपिसं [ २.१४–१५ ] ≡ कासं**

**[ ३९.२ ] ≡ कासं**

**वामासं—**

**सं ते मनो मनसा सं प्राणः प्राणेन गच्छताम् ॥ रेडस्यग्निष्ट्वा श्रीणात्वापस्त्वा समरिणन् वातस्य त्वा ध्राज्यै पूष्णो र९७ ह्या ऊष्मणो व्यथिषत् ॥ प्रयुतं द्वेषः ॥ घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा ॥ दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहा ॥ ऐन्द्रः प्राणो अङ्गे अङ्गे निदीध्यदैन्द्र उदानो अङ्गे अङ्गे निधीतः । देव त्वष्टर्भूरि ते स९ समेतु सलक्ष्मा यद्विषुरूपं भवाति । देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु ॥ समुद्रं गच्छ स्वाहा ॥ अन्तरिक्षं गच्छ स्वाहा ॥ देव९ सवितारं गच्छ स्वाहा ॥ मित्रावरुणौ गच्छ स्वाहा ॥ अहोरात्रे गच्छ स्वाहा ॥ छन्दा९ सि गच्छ स्वाहा ॥ द्यावापृथिवी गच्छ स्वाहा ॥ यज्ञं गच्छ स्वाहा ॥ सोमं गच्छ स्वाहा ॥ दिव्यं नभो गच्छ स्वाहा ॥ अग्निं वैश्वानरं गच्छ स्वाहा ॥ मनो मे हार्दि यच्छ ॥ ६.१८–२१**

माशाब्रा [ ३.८.३.१–५.७ ]— यद्देवत्यः पशुर्भवति तद्देवत्यं पुरोडाशमनुनिर्वपति० अथ यद् वपया प्रचर्यैतेन पुरोडाशेन प्रचरति० अथ पशुं विशास्ति **त्रिः प्रच्यावयतात् त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुतात्** इति० अथ शमितार९ स९शास्ति **यत्त्वा पृच्छात् भृत९ हविः शमितः** इति । **शृतमित्येव ब्रूतात्** । **न शृतं भगवो न शृत९ हि** इति । अथ जुह्वा पृषदाज्यस्योपहत्याध्वर्युरुपनिष्क्रम्य पृच्छति **शृत९ हविः शमितः** इति । **भृतम्** इत्याह । **तद्देवानाम्** इत्युपा९श्वध्वर्युः० त्रिष्कृत्वः पृच्छति० स हृदयमेवाग्रेऽभिघारयति० सोऽभिघारयति सं ते मनो मनसा सं प्राणः प्राणेन गच्छतामिति । न स्वाहाकरोति० उद्वासयन्ति पशुम् । तं जघनेन चात्वालमन्तरेण यूपं चाग्निं च हरन्ति० दक्षिणतो निधाय प्रतिप्रस्थातावद्यति । प्लक्षशाखा उत्तरबर्हिर्भवन्ति । ता अध्यवद्यति० अथाज्यमुपस्तृणीते जुह्वां चोपभृति च वसाहोमहवन्या९ समवत्तधान्याम् । अथ हिरण्यशकलाववदधाति जुह्वां चोपभृति च । अथ मनोतायै हविषोऽनुब्राच आह० स हृदयस्यैवाग्रेऽवद्यति० अथ जिह्वायै० अथ वक्षसः० अथैकचरस्य दोष्णः । अथ पार्श्वयोः ।

अथ तनिम्नः। अथ वृक्कयोः। गुदं त्रेधा करोति। स्थविमोपयड्भ्यः। मध्यं जुह्वां द्वेधा कृत्वावद्यति। अणिम त्र्यङ्गेषु। अथैकचरायै श्रोणेः। एतावन्नु जुह्वामवद्यति। अथोपभृति। त्र्यङ्गयस्य दोष्णो गुदं द्वेधा कृत्वावद्यति त्र्यङ्गयायै श्रोणेः। अथ हिरण्यशकलाववदधाति। अथोपरिष्टादाज्यस्याभिघारयति। अथ वसाहोमं गृह्णाति रेडसि .... इति० अथोपरिष्टाद् द्विराज्यस्याभिघारयति। अथ पार्श्वेन शासिना वा प्रयौति प्रयुतं द्वेष इति० अथ यद् यूष्परिशिष्यते तत् समवत्तधान्यामानयति। तद् हृदयं प्रास्यति। जिह्वां वक्षस्तनिम मतस्ने वनिष्ठुम्। अथोपरिष्टाद् द्विराज्यस्याभिघारयति० अथ यदक्षणयावद्यति० अथाह **अग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहि** इति। आश्राव्याह **अग्नीषोमाभ्यां छागस्य हविः प्रेष्य** इति। न प्रस्थितमित्याह। प्रसुते **प्रस्थितम्** इति। अन्तरेणार्धर्चौ याज्यायै वसाहोमं जुहोति० स जुहोति घृतं घृतपावानः पिबत .... स्वाहेति० वषट्कृते जुहोति यानि जुह्वामवदानानि भवन्ति। अथ जुह्वा पृषदाज्यस्योपघ्नन्नाह **वनस्पतयेऽनुब्रूहि** इति। आश्राव्याह **वनस्पतये प्रेष्य** इति। वषट्कृते जुहोति० तस्मादन्तरेणोभे आहुती जुहोति० अथ यान्युपभृत्यवदानानि भवन्ति तानि समानयमान आह **अग्नये स्विष्टकृतेऽनुब्रूहि** इति। आश्राव्याह **अग्नये स्विष्टकृते प्रेष्य** इति। वषट्कृते जुहोति। अथ यद्वसाहोमस्य परिशिष्यते तेन दिशो व्याघारयति दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः स्वाहेति० अथ पशुꣳ संमृशति० अत्रैव संमृशेत् ऐन्द्रः प्राणो अङ्गे अङ्गे .... इति० यदि कृशः स्यात् यदुदर्यस्य मेदसः परिशिष्येत तद् गुदे न्यृषेत्। अथ पृषदाज्यं गृह्णाति० तेनानुयाजेषु चरति० तेन पुरस्तादनुयाजेषु चरति० पश्चादुपयजति० स उपयजति समुद्रं गच्छ स्वाहेति० अन्तरिक्षं गच्छ स्वाहेति० देवꣳ सवितारं गच्छ स्वाहेति० मित्रावरुणौ गच्छ स्वाहेति० अहोरात्रे गच्छ स्वाहेति० छन्दाꣳसि गच्छ स्वाहेति० द्यावापृथिवी गच्छ स्वाहेति० अथात्युपयजति। सोऽत्युपयजति यज्ञं गच्छ स्वाहेति० सोमं गच्छ स्वाहेति० दिव्यं नभो गच्छ स्वाहेति० अग्निं वैश्वानरं गच्छ स्वाहेति० अथ मुखं विमृष्टे मनो मे हार्दि यच्छेति० अथ जाघन्या पत्नीः संयाजयन्ति० अन्तरतो देवानां पत्नीभ्योऽवद्यति उपरिष्टादग्नये गृहपतये ॥

**वाकासं—**

**सं ते मनो .... ॥ रेळस्यग्निष्ट्वा .... ॥ --- ॥ ऐन्द्रः प्राणो ....निधीत ऐन्द्र .... निदीधे। .... ॥ --- ॥ देवꣳ सवितारं गच्छ स्वाहा ॥ अन्तरिक्षं गच्छ स्वाहा ॥ --- ॥ सोमं गच्छ स्वाहा ॥ यज्ञं गच्छ स्वाहा ॥ नभो दिव्यं गच्छ स्वाहा ॥--- ॥ मनो मे हार्यच्छ ॥ ६.४.१–५.१**

काशब्रा [ ४.८.३.१–४.१७ ] ≡ माशब्रा

## ५०. अग्नीषोमीयपशुपुरोडाशहविर्यागहौत्रम्

ऋसं—

[1]अग्नीषोमा यो अद्य वामिदं वचः सपर्यति ।
तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यम् ॥ १.९३.२
[2]होता यक्षदग्नीषोमौ पुरोळाशस्य जुषेतां हविर्होतर्यज ॥ खिल ५.७.२ (ए)
[3]आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः ।
अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम् ॥१.९३.६
[4]अग्नीषोमा पिपृतमर्वतो न आ प्यायन्तामुस्रिया हव्यसूदः ।
अस्मे बलानि मघवत्सु धत्तं कृणुतं नो अध्वरं श्रुष्टिमन्तम् ॥ १.९३.१२
[5]इळामग्ने पुरुदंसं .... ॥ ३.२२.५
[6]होता यक्षदग्निं पुरोळाशस्य जुषतां हविर्होतर्यज ॥ आश्वश्री ३.५.९
[7]स्वदस्व हव्या समिषो .... ॥ ३.५४.२२
[8]अग्निं सुदीतिं सुदृशं .... ॥ ३.१७.४
[9]त्वं ह्यग्ने प्रथमो मनोता .... ६.१.१–१३
[10]अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिम् ।
स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत् ॥ १.९३.३

[11]होता यक्षदग्नीषोमौ च्छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्तां नूनं घासेअज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाग्नीषोमौ जुषेतां हविर्होतर्यज ॥ खिल ५.७.२ (ऐ)

[12]अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथाम् ।
सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः ॥ १.९३.७

१. पशुपुरोडाशस्य पुरोनुवाक्या । २. पशुपुरोडाशस्य प्रैषः । ३. पशुपुरोडाशस्य याज्या । ४. शाङ्खा० पशुपुरोडाशस्य याज्या । ५. पशुपुरोडाशस्विष्टकृतः पुरोनुवाक्या । द्रष्टव्यं श्रौ. १ पृ. ५७८ । ६. पशुपुरोडाशस्विष्टकृतः प्रैषः । ७. पशुपुरोडाशस्विष्टकृतो याज्या । द्रष्टव्यं श्रौ. १ पृ. ५७८ । ८. शाङ्खा० स्विष्टकृतो याज्या । द्रष्टव्यं श्रौ. १ पृ. ५७८ । ९. मनोतासूक्तम् । द्रष्टव्यं श्रौ. १ पृ. ५७८ । १०. हविषः पुरोनुवाक्या । ११. हविषः प्रैषः । १२. हविषो याज्या ।

[1]देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम् ।
प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभी रजिष्ठैः ॥

[2]होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्ठया रशनयाधित। यत्राग्नेराज्यस्य हविषः प्रिया धामानि यत्र सोमस्याज्यस्य हविषः प्रिया धामानि यत्राग्नीषोमयोश्छागस्य हविषः प्रिया धामानि यत्र वनस्पतेः प्रिया पाथांसि यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिव कृत्वी करदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ॥

[3]वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान् ।
वहा देवत्रा दधिषो हवींषि प्र च दातारममृतेषु वोचः॥ खिल ५.७.२ (ओ-अं)

[4]पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँर्ऋतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः ॥ १०.२.१

[5]होता यक्षदग्निं स्विष्टकृतमयाळग्निरग्नेराज्यस्य हविषः प्रिया धामान्ययाट् सोमस्याज्यस्य हविषः प्रिया धामान्ययाळग्नीषोमयोश्छागस्य हविषः प्रिया धामान्ययाड् वनस्पतेः प्रिया पाथांस्ययाड् देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज ॥ खिल ५.७.२ (अः)

[6]अग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा ।
ऋता यजासि महिना वि यद् भूर्हव्या वह यविष्ठ या ते अद्य ॥ ६.१५.१४

[7]देवं बर्हिः सुदेवं देवैः स्यात्सुवीरं वीरैर्वस्तोर्वृज्येताक्तोः प्रभ्रियेतात्यन्यान् राया बर्हिष्मतो मदेम वसुवने वसुधेयस्य वेतु यज ॥

[8]देवीर्द्वारः संघाते विड्वीर्यामञ्छथिरा ध्रुवा देवहूतौ वत्स ईमेनास्तरुणा आमिमीयात्कुमारो वा नवजातो मैना अर्वा रेणुककाटः प्रणग्वसुवने वसुधेयस्य व्यन्तु यज ॥

[9]देवी उषासानक्ता व्यस्मिन् यज्ञे प्रयत्यह्वेतामपि नूनं दैवीर्विशः प्रायासिष्टां सुप्रीते सुधिते वसुवने वसुधेयस्य वीतां यज ॥

[10]देवी जोष्ट्री वसुधिती ययोरन्याघा द्वेषांसि यूयवदान्या वक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज ॥

१. वनस्पतेः पुरोनुवाक्या । २. वनस्पतेः प्रैषः । ३. वनस्पतेर्याज्या । ४. स्विष्टकृत पुरोनुवाक्या । ५. स्विष्टकृतः प्रैषः । ६. स्विष्टकृतो याज्या । ७. प्रथमानूयाजप्रैषः । 'देवं बर्हिर्वसुवने वसुधेयस्य वेतु' इति याज्या । ८. द्वितीयानूयाजप्रैषः । 'देवीर्द्वारो वसुवने वसुधेयस्य व्यन्तु' इति याज्या । ९. तृतीयानूयाजप्रैषः । 'देवी उषासानक्ता वसुवने वसुधेयस्य वीताम्' इति याज्या । १०. चतुर्थानूयाजप्रैषः। 'देवी जोष्ट्री वसुवने वसुधेयस्य वीताम्' इति याज्या ।

[1]देवी ऊर्जाहुती इषमूर्जमन्या वक्षत् सग्धिं सपीतिमन्या नवेन पूर्वं दयमानाः स्याम पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज ॥

[2]देवा दैव्या होतारा पोतारा नेष्टारा हताघशंसावाभरद्वसू वसुवने वसुधेयस्य वीतां यज ॥

[3]देवीस्तिस्रस्तिस्रो देवीरिळा सरस्वती भारती द्यां भारत्यादित्यैरस्पृक्षत् सरस्वतीमं रुद्रैर्यज्ञमावीदिहैवेळया वसुमत्या सधमादं मदेम वसुवने वसुधेयस्य व्यन्तु यज ॥

[4]देवो नराशंसस्त्रिशीर्षा षळक्षः शतमिदेनं शितिपृष्ठा आदधति सहस्रमीं प्रवहन्ति मित्रावरुणेदस्य होत्रमर्हतो बृहस्पति स्तोत्रमश्विनाध्वर्यवं वसुवने वसुधेयस्य वेतु यज ॥

[5]देवो वनस्पतिर्वर्षप्रावा घृतनिर्णिग् द्यामग्रेणास्पृक्षदान्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृंहीद्वसुवने वसुधेयस्य वेतु यज ॥

[6]देवं बर्हिर्वारितीनां निधे धासि प्रच्युतीनामप्रच्युतं निकामधरणं पुरुस्पार्हं यशस्वदेना बर्हिषाण्या बर्हींष्यभिष्याम वसुवने वसुधेयस्य वेतु यज ॥

[7]देवो अग्निः स्विष्टकृत् सुद्रविणा मन्द्रः कविः सत्यमन्मायजी होता होतुर्होतुरायजीयानग्ने यान् देवानयाड् याँ अपिप्रेर्ये ते होत्रे अमत्सत । तां ससनुषीं होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होताभूर्वसुवने वसुधेयस्य नमोवाके वीहि यज ॥ खिल ५.७.३

[8]अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोळाशं गृह्णन्नग्नय आज्यं गृह्णन् सोमायाज्यं बध्नन्नग्नीषोमाभ्यां च्छागं सूपस्थाद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नीषोमाभ्यां च्छागेनाघत्तां तं मेदस्तः प्रति पचताग्रभीष्टामवीवृधेतां पुरोळाशेन त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आ संगतेभ्यः । एष मे देवेषु वसु वार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्स्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ॥ खिल ५.७.२ (क)

---

१. पञ्चमानूयाजप्रैषः । 'देवी ऊर्जाहुती वसुवने वसुधेयस्य वीताम्' इति याज्या । २. षष्ठानूयाजप्रैषः । 'देवा दैव्या होतारा वसुवने वसुधेयस्य वीताम्' इति याज्या । ३. सप्तमानूयाजप्रैषः । 'देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधेयस्य व्यन्तु' इति याज्या । ४. अष्टमानूयाजप्रैषः । 'देवो नराशंसो वसुवने वसुधेयस्य वेतु' इति याज्या । ५. नवमानूयाजप्रैषः । 'देवो वनस्पतिर्वसुवने वसुधेयस्य वेतु' इति याज्या । ६. दशमानूयाजप्रैषः । 'देवं बर्हिर्वारितीनां वसुवने वसुधेयस्य वेतु' इति याज्या । ७. एकादशानूयाजप्रैषः । 'देवो अग्निः स्विष्टकृत् ... वसुवने वसुधेयस्य नमोवाके वीहि' इति याज्या । ८. सूक्तवाकप्रैषः । एतदनन्तरं होता आश्वश्रौ १.९.१ अत्रस्थपाठानुसारेण यथास्थानं देवतादेशपूर्वकं सूक्तवाकं पठेत् ।

ऐब्रा [ २.८–१० ]—तद्यत् पशौ पुरोळाशमनुनिर्वपन्ति० आन्यं दिवो मातरिश्वा जभारेति पुरोळाशस्य यजति० स्वदस्व हव्या समिषो दिदीहीति पुरोळाशस्विष्टकृतो यजति० इळामुपह्वयते० **मनोतायै हविषोऽवदीयमानस्यानुब्रूहि** इत्याहाध्वर्युः । त्वं ह्यग्ने प्रथमो मनोतेति सूक्तमन्वाह० अग्नीषोमा हविषः प्रस्थितस्येति हविषो यजति० वनस्पतिं यजति० स्विष्टकृतं यजति० इळामुपह्वयते० ॥

[ २.३ ]—तदाहुर्नाग्नीषोमीयस्य पशोरश्नीयात्० तत्तन्नादृत्यं० तस्याशितव्यं चैव लीप्सितव्यं च ।

शांब्रा [ १०.५–६ ]—अथ वै पशुमालभ्यमानं पुरोलाशो निरुप्यते० अथ यत्र पुरोलाशो निरुप्यते तत्पुरोलाशस्विष्टकृदच्युतः० वैश्वामित्रीं पुरोलाशस्विष्टकृतः पुरोनुवाक्यामनूच्य वैश्वामित्र्या यजति० अथ मनोतामन्वाह० आग्नेयमेवान्वाहेति । ता वै त्रयोदश भवन्ति० त्रिः प्रथमया त्रिरुत्तमया० सप्तदश सामिधेनीरन्वाह० अथ यत्र पशुरालभ्यते तद्वनस्पतिरच्युतः० ॥

[२८.२]—वैश्वामित्रीं पुरोलाशस्विष्टकृतः पुरोनुवाक्यामन्वाह तस्या उक्तं ब्राह्मणम् ।

[ १०.३ ]— तद्यदुपवसथेऽग्नीषोमीयं पशुमालभते० तस्मादु तस्य नाश्नीयात्० काममेवाशितव्यम्० ॥

## ५१. वसतीवरीपरिहरणं पितापुत्रीयसुब्रह्मण्याह्वानं च

**तैसं [ १.३.१२ ]—**

**इन्द्राग्नियोर्भागधेयीः स्थ ॥ मित्रावरुणयोर्भागधेयीः स्थ ॥ विश्वेषां देवानां भागधेयीः स्थ ॥ यज्ञे जागृत ॥**

[ ६.४.२ ]—त्रिः सादयति० यद् गार्हपत्य उपसादयेदस्मिँल्लोके पशुमान्त्स्याद्यदाहवनीयेऽमुष्मिँल्लोके पशुमान्त्स्यादुभयोरुप सादयति० सर्वतः परि हरति० आग्नीध्र उप वासयति० न ह्येता ईलयन्त्या तृतीयसवनात् परि शेरे०॥

**मैसं [ १.३.१ ]—**

**इन्द्राग्न्योर्भागधेयीः स्थ [ सुम्नायुवः सुम्न्याय सुम्नं धत्त ॥ ] मित्रावरुणयोर्भागधेयीः स्थ [ सुम्नायुवः सुम्न्याय सुम्नं धत्त ॥ ] विश्वेषां देवानां भागधेयीः स्थ सुम्नायुवः सुम्न्याय सुम्नं धत्त ॥**

[ ४.५.१ ]—त्रिभिः सादयति० यदपः परिहरन्ति० आग्नीध्रे सादयति० यद्वसतीवरीर्गृहीत्वोपवसन्ति० ॥

कासं [ ३.९ ]—

इन्द्राग्न्योर्भागधेयीस्स्थ ॥ मित्रावरुणयोर्भागधेयीस्स्थ ॥ विश्वेषां देवानां भागधेयीस्स्थ सोमस्य वसतीवरीः ॥

कपिसं [ २.१६ ] = कासं

वामासं—

इन्द्राग्न्योर्भागधेयी स्थ ॥ मित्रावरुणयोर्भागधेयी स्थ ॥ विश्वेषां देवानां भागधेयी स्थ । अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् ॥ ६.२४

माशब्रा [ ३.९.२.१३–१७ ]—अथ यदाग्नीषोमीयः पशुः संतिष्ठते । अथ परिहरति । व्युत्क्रामत इत्याह । अग्रेण हविर्धाने यजमान आस्ते । ता आदत्ते । स दक्षिणेन निष्क्रामति । ता दक्षिणायाँ श्रोणौ सादयति इन्द्राग्न्योर्भागधेयी स्थेति० ताः पुनराहृत्याग्रेण पत्नीँ सादयति । स जघनेन पत्नीं पर्येत्य ता आदत्ते । स उत्तरेण निष्क्रामति ता उत्तरायाँ श्रोणौ सादयति मित्रावरुणयोर्भागधेयी स्थेति । नैवँ सादयेत्० इन्द्राग्न्योर्भागधेयी स्थेत्येव ब्रूयात्० ता आग्नीध्रे सादयति विश्वेषां देवानां भागधेयी स्थेति० ॥

वाकासं [ ६.६.२–३ ] = वामासं

काशब्रा [ ४.९.२.९–१३ ] = माशब्रा

ऐब्रा [ २.३६ ]—आग्नीध्र उपवसन्ति न सदसि ॥

अशौसं—

[1]पूर्णं नारि प्र भर कुम्भमेतं घृतस्य धाराममृतेन संभृताम् ।
इमां पातॄनमृतेना समङ्ग्धीष्टापूर्तमभि रक्षात्येनाम् ॥
इमा आपः प्र भराम्ययक्ष्मा यक्ष्मनाशनीः ।
गृहानुप प्र सीदाम्यमृतेन सहाग्निना ॥ ३.१२.८-९
अमूर्या यन्ति योषितो हिरा लोहितवाससः ।
अभ्रातर इव जामयस्तिष्ठन्तु हतवर्चसः ॥ १.१७.१

अपैसं—

[1]पूर्णं नारि प्र हरामि कुम्भमपां रसमोषधीनां घृतस्य ।
इमान् पातॄनमृतैरा समङ्ग्धि स्थिरा वीराः सुमनसो भवन्तु ॥ १७.३५.७
इमा आपः प्र हराम्ययक्ष्मा.... । गृहानभि .... ॥ १६.४१.३
अमूर्या यन्तु जामयः सर्वा .... । .... योषितस्तिष्ठन्ति .... ॥ १९.४.१५

१. वैतानसूत्रे (१६·१) अयं मन्त्रः ' पूर्णमध्वर्यो प्र भर... ' इत्येवमुद्धृतः ।

## प्रातःसवनम्

## ५२. सुत्योपक्रमः

तैसं [ १.३.१३ ]—

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिममध्वरं कृधि दिवि देवेषु होत्रा यच्छ ॥ सोम राजन्नेह्यव रोह मा भेर्मा सं विक्था मा त्वा हिँसिषं प्रजास्त्वमुपावरोह प्रजास्त्वामुपावरोहन्तु ॥

[ ६.४.३ ]—ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यः सोममुपावहरन्त्सर्वाभ्यो देवताभ्य उपावहरेत्० पुरा वाचः प्रवदितोः प्रातरनुवाकमुपाकरोति० अपोऽग्नेऽभिव्याहरति० ॥

[३.१.६–७]—आग्नेय्यर्चाग्नीध्रमभि मृशेद् वैष्णव्या हविर्धानमाग्नेय्या स्रुचो वायव्यया वायव्यान्यैन्द्रिया सदः० युनज्मि ते पृथिवीं ज्योतिषा सह ॥ युनज्मि वायुमन्तरिक्षेण ते सह ॥ युनज्मि वाचँ सह सूर्येण ते ॥ युनज्मि तिस्रो विपृचः सूर्यस्य ते ॥ अग्निर्देवता गायत्री छन्द उपाँशोः पात्रमसि ॥ सोमो देवता त्रिष्टुप् छन्दोऽन्तर्यामस्य पात्रमसि ॥ इन्द्रो देवता जगती छन्द इन्द्रवायुवोः पात्रमसि ॥ बृहस्पतिर्देवतानुष्टुप् छन्दो मित्रावरुणयोः पात्रमसि ॥ अश्विनौ देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि ॥ सूर्यो देवता बृहती छन्दः शुक्रस्य पात्रमसि ॥ चन्द्रमा देवता सतोबृहती छन्दो मन्थिनः पात्रमसि ॥ विश्वे देवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसि ॥ इन्द्रो देवता ककुच्छन्द उक्थानां पात्रमसि ॥ पृथिवी देवता विराट् छन्दो ध्रुवस्य पात्रमसि ०आसन्यान्मा मन्त्रात् पाहि कस्याश्चिदभिशस्त्याः इति पुरा प्रातरनुवाकाज्जुहुयात्० ॥

तैब्रा [२.२.३.६]—यः सुवर्गकामः स्यात् । स [1]पञ्चहोतारं पुरा प्रातरनुवाकादाग्नीध्रे जुहुयात्० ॥

[ २.४.५.७ ]—

आ घा ये अग्निमिन्धते । स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा ॥

[ २.५.८.१२ ]—

यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा । वसूनि पुरुधा विशन्तु ।
दीर्घमायुर्यजमानाय कृण्वन् । अधामृतेन जरितारमङ्ग्धि ॥

[ ३.७.९.१ ]—

अपां क्षया ऋतस्य गर्भाः । भुवनस्य गोपाः श्येना अतिथयः । पर्वतानां ककुभः प्रयुतो नपातारः । वग्नुनेन्द्रँ ह्वयत । घोषेणामीवाँश्चातयत । युक्ताः स्थ वहत ॥

१. द्रष्टव्यं श्री. १ पृ. १९५ ।

मैसं [ १.३.१ ]—

हृदे त्वा मनसे त्वा.... ॥

[ ४.५.९ ]—आग्नेयं प्रातःसवनमैन्द्रं माध्यन्दिन॰ सवन॰ वैश्वदेवं तृतीयसवनम्॰ ॥

[ ४.५.३ ]—देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि इति॰ ॥

[ १.९.५ ]—[1]सप्तहोत्रा सौम्यमध्वरमभिमृशेत्॰ ॥

काठसं [ ३.९ ]—

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छ ॥ सोम राजन् विश्वाः प्रजा उपावरोह विश्वास्त्वा प्रजा उपावरोहन्तु ॥

[ ३४.१४–१६ ]—

प्रजापतिर्मनसि सारस्वतो वाचि विसृष्टायां धाता दीक्षायां ब्रह्म व्रते सविता भृत्यामन्धोऽच्छेतो दिव्यस्सुपर्णः प्रतिख्यातोऽदितिः प्रायणीये पशुष्ठा न्युप्तो रुद्रो विचीयमानश्छन्दांसि मीयमानो वरुण उपनद्धः पूषा सोमक्रयण्यां भगः पण्यमानोऽसुरः क्रीतश्शिपिविष्ट ऊश आसाद्यमानो बृहस्पतिरुत्थितो वायुरधिह्रियमाणोऽधिपतिः प्रोह्यमाणोऽग्नीषोमीयः पश अतिथिर्दुरोणसदातिथ्ये वरुणस्सम्राडासन्द्यामासाद्यमान ऐन्द्राग्नोऽग्नौ मथ्यमान ऐन्द्राग्नोऽग्नौ प्रहियमाणे साम तानूनप्त्रे तपोऽवान्तरदीक्षायां पृथिव्युपसद्यन्तरिक्षमुपसदि द्यौरुपसदि यज्ञस्य प्रमाभिमोन्मा प्रतिमा वेद्यां क्रियमाणायां पशव उत्तरवेद्यां द्यौर्हविर्धानेऽन्तरिक्षमाग्नीध्रे पृथिवी सदसि । प्राण उपरवेषु भ्रातृव्या धिष्ण्येषु पशवो बर्हिषि वेद्यां स्तीर्णमाणायामप्तुर्वैसर्जने प्रजापतिः प्रणीयमानोऽग्निराग्नीध्रे वैष्णव आसन्नकर्मणि हस्तो विसृष्टो वैष्णवो यूप ओषधयो रशनायां मेध आप्रीषु हविः पर्यग्निकृतः पितृदेवत्यस्संज्ञप्यमाने यज्ञस्य मिथुनं पत्नेजनीषु रक्षसां भागधेयं वपायामुद्बृह्यमानायां यज्ञस्य संततिर्वसतीवरीषु परिह्रियमाणास्विन्द्राग्न्योर्धेनुर्दक्षिणायामुत्तरवेद्याश्श्रोण्यामासन्ना मित्रावरुणयोर्धेनुरुत्तरस्यामुत्तरवेद्याश्श्रोण्यामासन्ना विश्वेषां देवानामाग्नीध्रे छन्दाँस्युपवसथे हविरुपावहृतस्सारस्वतः प्रातरनुवाकेऽथ वा न्युप्तः प्रजापतिर्निभज्यमाना देवता विभक्त इन्द्रो वृत्रहेन्द्रोऽभिमातिहेन्द्रो वृत्रतूरुन्नीयमान आयुरुपांश्वन्तर्यामयोर्यमोऽभिषुतः । निभूयपूराधवनीये सुपूतपूः पूतभृति शुक्रश्रीः क्षीरश्रीः ककुहस्सक्तुश्रीः पात्रेषु वायुर्बहिष्पवमाने होत्राः प्रवरे वसवः प्रयाजेषु यद्देवत्यस्सोमस्तद्देवत्यः पशुर्वैश्वदेव उन्नीयमान ऐन्द्राग्न उन्नीतो रुद्रो हूयमानो वाग्घुतो मारुतो गणोऽभ्यावृत्तो मित्रः प्रतिख्यात इन्द्र आसन्नो भक्षो भक्ष्यमाणस्सखा भक्षितः पितरो नाराशंस आग्नेयं प्रातस्सवनमैन्द्रं

---

१. द्रष्टव्यं श्रौ. १ पृ. १२९ ।

**माध्यंदिनं सवनं यज्ञो दक्षिणायामैन्द्राणि पृष्ठानि वैश्वदेवं तृतीयसवनं वैश्वानरोऽग्नि-ष्टोम ऐन्द्रावारुणं मैत्रावरुणस्य स्तोत्रमैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसिन ऐन्द्रावैष्णव-मच्छावाकस्यैन्द्रष्षोडशी रात्री पत्न्याग्नेयो रथन्तरस्संधिस्सौर्यमाश्विनमहर्यज्ञ आदित्या अनुयाजेषु यदन्तरा क्रियते समुद्रो वरुणोऽवभृथे समुद्र ऋर्जीषे यदवारे तीर्थं तत् प्रायणीयं यत्पारे तीर्थं तदुदयनीयं वैष्णवो वशायां ब्रह्मा समिष्टयाम् ॥**

[ ३४.१७ ]—पुरा प्रचरितोराग्नीध्रे होतव्याः० यज्ञार्तिं प्रतिजुहुयात्० त्रयस्त्रिंशद्वै यज्ञस्य तन्वः० ॥

**कपिसं [ २.१६ ]— हृदे त्वा ....॥ सोम राजन् .... विश्वास्त्वां .... ॥**

**वामासं—**

**हृदे त्वा मनसे त्वा .... सोम राजन् विश्वास्त्वं प्रजा उपावरोह ॥ विश्वास्त्वां प्रजा उपावरोहन्तु ॥ ६.२५–२६**

माशब्रा [ ३.९.३.१–११ ]— तान्त्संप्रबोधयन्ति । तेऽप उपस्पृश्याग्नीध्रमुप-समायन्ति । त आज्यानि गृह्णते । गृहीत्वाज्यान्यायन्ति । आसाद्याज्यानि । अथ राजानमुपा-वहरति० अन्तरेणेषे उपावहरति० ग्रावसु संमुखेष्वधिनिदधाति० स उपावहरति **हृदे त्वा** मनसे त्वा .... इति० अथानुसृज्योपतिष्ठते विश्वास्त्वां प्रजा उपावरोहन्त्विति० उपसन्नो होता प्रातरनुवाकमनुवक्ष्यन् भवति । अथ समिधमभ्यादधदाह **देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि** इति० तदु हैक आहुः **देवेभ्योऽनुब्रूहि** इति० तदु तथा न ब्रूयात्० होता प्रातरनुवाकमन्वाह० जाग्रद्धैवाध्वर्युरुपासीत० यदि निद्रायादपि कामं स्वप्यात् ॥

[ ४.१.५.१९ ]—तानि वा एतानि श्लक्ष्णानि पात्राणि भवन्ति । रास्नावमैन्द्र-वायवपात्रम्० अजकावं मैत्रावरुणपात्रम्० औष्ठमाश्विनपात्रं भवति ॥

[ ४.३.३.६ ]—आश्वत्थे ऋतुपात्रे स्याताम् । कार्ष्मर्यमये त्वेव भवतः ॥

**वाकासं—**

**हृदे त्वा .... । ऊर्ध्वो अध्वरं .... ॥ विश्वास्त्वां.... ॥ ६.७.१–२ ॥**

काशब्रा [ ४.९.३.१–९ ] — --- तदु हैक आहुः **प्रातर्यावभ्योऽनुब्रूहि** इत्येव न **देवेभ्यः** इति । तदु तथा न ब्रूयात् --- ॥

[ ५.१.५.१४ ] ≡ माशब्रा ४.१.५.१९

[ ५.३.४.५ ] ≡ माशब्रा ४.३.३.६

गोब्रा [ २.२.१० ]—पुरा प्रचरितोराग्नीध्रीये होतव्याः० यज्ञार्तिं प्रतिजुहुयात्० त्रयस्त्रिंशद्वै यज्ञस्य तन्व इति ॥

## ५३. प्रातरनुवाकः[1]

ऋसं—

आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च।
रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयो धात् ॥१०.३०.१२

### आग्नेयः क्रतुः

गायत्रम्

उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये। आरे अस्मे च शृण्वते ॥....॥ १.७४
जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम्। हव्या जुह्वान आसनि ॥....॥ १.७५
अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि।
विश्वासु धीषु वन्द्य ॥ .... ॥ १.७९.७-१२
अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारं रत्नधातमम् ॥ .... ॥ १.१
अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम् ॥....॥१.१२
वसिष्वा हि मियेध्य वस्त्राण्यूर्जां पते। सेमं नो अध्वरं यज ॥....॥ १.२६

---

१. अग्निः उषाः अश्विनौ इति देवतात्रयमुद्दिश्य गायत्र्यादिषु सप्तसु छन्दःसु प्रातरनुवाकोऽनूच्य इति ऐतरेयशाङ्खायनब्राह्मणयोर्विहितम्। तत्र प्रतिदेवतं प्रतिच्छन्दश्च कानि सूक्तानि का वा ऋचोऽनूच्या इत्यत्र आश्वलायनशाङ्खायनश्रौतसूत्रे प्रमाणम्। एते सूत्रे अनुसृत्य प्रातरनुवाकरूपेणानूच्या ऋङ्मन्त्रा अत्र संक्षेपेणोद्धृताः। तत्रानूच्यानां मन्त्राणां संख्याविषये विकल्पाः ब्राह्मणयोः श्रौतसूत्रयोश्च प्रदर्शिताः। यजमानस्य वर्णविशेषमनुसंधायापि आग्नेयक्रतौ छन्दोविशेषस्याधिक्यं संपादनीयं भवति। मच्चनाचार्यादिभिः प्रयोगकारैः आश्वलायनश्रौतसूत्रमनुसृत्य ब्राह्मणयजमानस्यार्थे प्रातरनुवाकस्य क्लृप्तिः प्रदर्शिता सैवाद्यत्वे प्रायः स्वीक्रियते। सा चेत्थम् :—‘आपो रेवतीः’ इत्येका, ‘उपप्रयन्तो अध्वरम्’ इति सूक्तं, ‘जुषस्व सप्रथस्तमम्’ इति सूक्तम्, ‘अवा नो अग्ने’ इति षट्, ‘अग्निमीळे पुरोहितम्’ इति सूक्तम्, अग्निं दूतम्’ इति सूक्तं, ‘वसिष्वा हि’ इति सूक्तम्, ‘अश्वं न त्वा’ इति द्वादश, ‘त्वमग्ने वसूँरिह’ इति नव, ‘अबोध्यग्निः समिधा’ इति सूक्तम्, ‘अगन्म महा’ इति सूक्तम्, ‘एना वो अग्निम्’ इति सूक्तम्, ‘अग्ने वाजस्य गोमतः’ इति तिस्रः, ‘जनस्य गोपा’ इति सूक्तम्, ‘अग्निं तं मन्ये’ इति सूक्तं, ‘प्रति ष्या सूनरी’ इति सूक्तम्, ‘उषो भद्रेभिः’ इति सूक्तम्, ‘इदं श्रेष्ठं ज्योतिषाम्’ इति सूक्तं, ‘प्रत्यु अदर्श्या’ इति सूक्तम्, ‘उषस्तच्चित्रमा’ इति तिस्रः, ‘एता उ त्या’ इति चतस्रः, ‘महे नो अद्य’ इति सूक्तम्, ‘एषो उषा’ इति सूक्तं, ‘यदद्य स्थः’ इति सूक्तम्, ‘आ भात्यग्निरुषसाम्’ इति सूक्तम्, ‘अतारिष्म’ इति सूक्तम्, ‘इमा उ वां दिविष्टयः’ इति सूक्तम्, ‘अश्विनावर्तिरस्मदा’ इति तिस्रः, ‘अबोध्यग्निर्ज्म’ इति सूक्तम्, ‘ईळे द्यावापृथिवी’ इति सूक्तं, ‘प्रति प्रियतमं रथम्’ इति सूक्तं च। शाङ्खायनशाखानुसारेणानुवक्तव्यः प्रातरनुवाकोऽग्रे द्रष्टव्यः।

अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।
सम्राजन्तमध्वराणाम् ॥ .... ॥ १.२७.१–१२
त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः ॥....॥ ८.११.१-९
त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः ।
उत द्विषो मर्त्यस्य ॥ .... ॥ ८.७१.१–९
इमे विप्रस्य वेधसोऽग्नेरस्तृतयज्वनः । गिरः स्तोमास ईरते ॥ ....॥ ८.४३
समिधाग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन् हव्या जुहोतन॥....॥८.४४
युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिव । नि होता पूर्व्यः सदः॥....॥८.७५
प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम् । अग्निं रथं न वेद्यम् ॥ .... ॥ ८.८४
त्वमग्ने बृहद्वयो दधासि देव दाशुषे । कविर्गृहपतिर्युवा ॥....॥८.१०२.१-१८
अर्चन्तस्त्वा हवामहेऽर्चन्तः समिधीमहि । अग्ने अर्चन्त ऊतये ॥.... ॥ ५.१३
अग्निं स्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत्॥....॥५.१४
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च॥....॥५.२६
दूतं वो विश्ववेदसं हव्यवाहममर्त्यम् । यजिष्ठमृञ्जसे गिरा ॥....॥ ४.८
अग्ने मृळ महाँ असि य ईमा देवयुं जनम् । इयेथ बर्हिरासदम् ॥ .... ॥ ४.९
अग्निर्होता नो अध्वरे वाजी सन् परि णीयते ।
देवो देवेषु यज्ञियः ॥ .... ॥ ४.१५.१–३
अग्निर्होता पुरोहितोऽध्वरस्य विचर्षणिः । स वेद यज्ञमानुषक् ॥.... ॥ ३.११
अग्न इळा समिध्यसे वीतिहोत्रो अमर्त्यः ।
जुषस्व सू नो अध्वरम् ॥ .... ॥ ३.२४.२–५
प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या ।
देवाञ्जिगाति सुम्नयुः ॥ .... ॥ ३.२७
उपसद्याय मीळ्हुष आस्ये जुहुता हविः । यो नो नेदिष्ठमाप्यम् ॥....॥७.१५
त्वमग्ने यज्ञानां होता विश्वेषां हितः । देवेभिर्मानुषे जने ॥....॥६.१६.१–४५
अग्ने हंसि न्यत्रिणं दीद्यन् मर्त्येष्वा । स्वे क्षये शुचिव्रत ॥ .... ॥ १०.११८
अग्निं हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु ।
तेन जेष्म धनंधनम् ॥ .... ॥ १०.१५६
प्राग्नये वाचमीरय वृषभाय क्षितीनाम् । स नः पर्षदति द्विषः॥....॥१०.१८७
प्र नूनं जातवेदसमश्वं हिनोत वाजिनम् । इदं नो बर्हिरासदे ॥....॥१०.१८८

इमां मे अग्ने समिधमिमामुपसदं वनेः । इमा उ षु श्रुधी गिरः॥ .... ॥ २.६
श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर । वसो पुरुस्पृहं रयिम् ॥ .... ॥ २.७
वाजयन्निव नू रथान् योगाँ अग्नेरुप स्तुहि ।
यशस्तमस्य मीळ्हुषः ॥ .... ॥ २.८.१–५

आनुष्टुभम्

त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत ।
यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥ .... ॥ १.४५.१–९
त्वं हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे ।
त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥ .... ॥ ६.२.१–१०
अग्ना यो मर्त्यो दुवो धियं जुजोष धीतिभिः ।
भसन्नु ष प्र पूर्व्य इषं वुरीतावसे ॥ .... ॥ ६.१४.१–५
होताजनिष्ट चेतनः पिता पितृभ्य ऊतये ।
प्रयक्षञ्जेन्यं वसु शकेम वाजिनो यमम् ॥ .... ॥ २.५
प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै ।
गमद्देवेभिरा स नो यजिष्ठो बर्हिरा सदत् ॥ .... ॥ ३.१३
अग्ने कदा त आनुषग् भुवद्देवस्य चेतनम् ।
अधा हि त्वा जगृभ्रिरे मर्तासो विक्ष्वीड्यम् ॥ .... ॥ ४.७.२–६
सखायः सं वः सम्यञ्चमिषं स्तोमं चाग्नये ।
वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते ॥ .... ॥ ५.७
त्वामग्ने हविष्मन्तो देवं मर्तास ईळते ।
मन्ये त्वा जातवेदसं स हव्या वक्ष्यानुषक् ॥ .... ॥ ५.९
अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो ।
प्र नो राया परीणसा रत्सि वाजाय पन्थाम् ॥ .... ॥ ५.१०
बृहद्वयो हि भानवेऽर्चा देवायाग्नये ।
यं मित्रं न प्रशस्तिभिर्मर्तासो दधिरे पुरः ॥ .... ॥ ५.१६
आ यज्ञैर्देव मर्त्य इत्था तव्यांसमूतये ।
अग्निं कृते स्वध्वरे पूरुरीळीतावसे ॥ .... ॥ ५.१७
प्रातरग्निः पुरुप्रियो विशः स्तवेतातिथिः ।
विश्वानि यो अमर्त्यो हव्या मर्तेषु रण्यति ॥ .... ॥ ५.१८

यमग्ने वाजसातम त्वं चिन्मन्यसे रयिम् ।
तं नो गीर्भिः श्रवाय्यं देवत्रा पनया युजम् ॥ .... ॥ ५.२०

मनुष्वत्त्वा नि धीमहि मनुष्वत् समिधीमहि ।
अग्ने मनुष्वदङ्गिरो देवान् देवयते यज ॥ .... ॥ ५.२१

प्र विश्वसामन्नत्रिवदर्चा पावकशोचिषे ।
यो अध्वरेष्वीड्यो होता मन्द्रतमो विशि ॥ .... ॥ ५.२२

अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम् ।
विश्वा यश्चर्षणीरभ्यासा वाजेषु सासहत् ॥ .... ॥ ५.२३

अच्छा वो अग्निमवसे देवं गासि स नो वसुः ।
रासत् पुत्र ऋषूणामृतावा पर्षति द्विषः ॥ .... ॥ ५.२५

त्रैष्टुभम्

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥....॥ ५.१

कुमारं माता युवतिः समुब्धं गुहा बिभर्ति न ददाति पित्रे ।
अनीकमस्य न मिनज्जनासः पुरः पश्यन्ति निहितमरतौ ॥ .... ॥ ५.२

त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत् समिद्धः ।
त्वे विश्वे सहसस्पुत्र देवास्त्वमिन्द्रो दाशुषे मर्त्याय ॥ .... ॥ ५.३

त्वामग्ने वसुपतिं वसूनामभि प्र मन्दे अध्वरेषु राजन् ।
त्वया वाजं वाजयन्तो जयेमाभि ष्याम पृत्सुतीर्मर्त्यानाम् ॥ .... ॥ ५.४

प्राग्नये बृहते यज्ञियाय ऋतस्य वृष्णे असुराय मन्म ।
घृतं न यज्ञ आस्ये सुपूतं गिरं भरे वृषभाय प्रतीचीम् ॥ ....॥ ५.१२

प्र वेधसे कवये वेद्याय गिरं भरे यशसे पूर्व्याय ।
घृतप्रसत्तो असुरः सुशेवो रायो धर्ता धरुणो वस्वो अग्निः ॥....॥ ५.१५

त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळोऽव यासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत् ॥....॥ ४.१.४-२०

यो मर्त्येष्वमृत ऋतावा देवो देवेष्वरतिर्निधायि ।
होता यजिष्ठो मह्ना शुचध्यै हव्यैरग्निर्मनुष ईरयध्यै ॥....॥ ४.२

आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः ।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥....॥ ४.३

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥....॥ ४.४
ऊर्ध्वं ऊ षु णो अध्वरस्य होतरग्ने तिष्ठ देवताता यजीयान् ।
त्वं हि विश्वमभ्यसि मन्म प्र वेधसश्चित् तिरसि मनीषाम् ॥....॥ ४.६
ससस्य यद् वियुता सस्मिन्नूधन्नृतस्य धामन् रणयन्त देवाः ।
महाँ अग्निर्नमसा रातहव्यो वेरध्वराय सदमिदृतावा ॥....॥ ४.७.७–११
भद्रं ते अग्ने सहसिन्ननीकमुपाक आ रोचते सूर्यस्य ।
रुशद् दृशे ददृशे नक्तया चिदरूक्षितं दृश आ रूपे अन्नम् ॥....॥ ४.११
यस्त्वामग्न इनधते यतस्रुक् त्रिस्ते अन्नं कृणवत् सस्मिन्नहन् ।
स सु द्युम्नैरभ्यस्तु प्रसक्षत्तव क्रत्वा जातवेदश्चिकित्वान् ॥ ....॥ ४.१२
सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै ।
देवाँ अच्छा दीद्यद्युञ्जे अद्रिं शमाये अग्ने तन्वं जुषस्व ॥....॥ ३.१
प्रत्यग्निरुषसश्चेकितानोऽबोधि विप्रः पदवीः कवीनाम् ।
पृथुपाजा देवयद्भिः समिद्धोऽप द्वारा तमसो वह्निरावः ॥....॥ ३.५
प्र कारवो मनना वच्यमाना देवद्रीचीं नयत देवयन्तः ।
दक्षिणावाड् वाजिनी प्राच्येति हविर्भरन्त्यग्नये घृताची ॥....॥ ३.६
प्र य आरुः शितिपृष्ठस्य धासेरा मातरा विविशुः सप्त वाणीः ।
परिक्षिता पितरा सं चरेते प्र सर्स्राते दीर्घमायुः प्रयक्षे ॥....॥ ३.७
आ होता मन्द्रो विदथान्यस्थात् सत्यो यज्वा कवितमः स वेधाः ।
विद्युद्रथः सहसस्पुत्रो अग्निः शोचिष्केशः पृथिव्यां पाजो अश्रेत् ॥....॥ ३.१४
वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहं सुहवस्य प्रणीतौ ॥....॥ ३.१५
समिध्यमानः प्रथमानु धर्मा समक्तुभिरज्यते विश्ववारः ।
शोचिष्केशो घृतनिर्णिक् पावकः सुयज्ञो अग्निर्यजथाय देवान् ॥....॥ ३.१७
भवा नो अग्ने सुमना उपेतौ सखेव सख्ये पितरेव साधुः ।
पुरुद्रुहो हि क्षितयो जनानां प्रति प्रतीचीर्दहतादरातीः ॥....॥ ३.१८
अग्निं होतारं प्र वृणे मियेधे गृत्सं कविं विश्वविदममूरम् ।
स नो यक्षद्देवताता यजीयान् राये वाजाय वनते मघानि ॥....॥ ३.१९

अग्निमुषसमश्विना दधिक्रां व्युष्टिषु हवते वह्निरुक्थैः ।
सुज्योतिषो नः शृण्वन्तु देवाः सजोषसो अध्वरं वावशानाः ॥ ....॥ ३.२०

अयं सो अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः ।
सहस्रिणं वाजमत्यं न सप्तिं ससवान्त्सन्त्स्तूयसे जातवेदः ॥....॥ ३.२२

निर्मथितः सुधित आ सधस्थे युवा कविरध्वरस्य प्रणेता ।
जूर्यत्स्वग्निरजरो वनेष्वत्रा दधे अमृतं जातवेदाः ॥....॥ ३.२३

दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः ॥....॥ १०.४५.१–११

प्र होता जातो महान्नभोविन्नृषद्वा सीददपामुपस्थे ।
दधिर्यो धायि स ते वयांसि यन्ता वसूनि विधते तनूपाः ॥....॥ १०.४६

त्वं ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता ।
त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै ॥....॥ ६.१
अग्ने स क्षेषदृतपा ऋतेजा उरु ज्योतिर्नशते देवयुष्टे ।
यं त्वं मित्रेण वरुणः सजोषा देव पासि त्यजसा मर्तमंहः ॥....॥ ६.३
यथा होतर्मनुषो देवताता यज्ञेभिः सूनो सहसो यजासि ।
एवा नो अद्य समना समानानुशन्नग्न उशतो यक्षि देवान् ॥....॥ ६.४
हुवे वः सूनुं सहसो युवानमद्रोघवाचं मतिभिर्यविष्ठम् ।
य इन्वति द्रविणानि प्रचेता विश्ववाराणि पुरुवारो अध्रुक् ॥....॥ ६.५
प्र नव्यसा सहसः सूनुमच्छा यज्ञेन गातुमव इच्छमानः ।
वृश्चद्वनं कृष्णयामं रुशन्तं वीती होतारं दिव्यं जिगाति ॥....॥ ६.६
पुरो वो मन्द्रं दिव्यं सुवृक्तिं प्रयति यज्ञे अग्निमध्वरे दधिध्वम् ।
पुर उक्थेभिः स हि नो विभावा स्वध्वरा करति जातवेदाः ॥....॥ ६.१०
यजस्व होतरिषितो यजीयानग्ने बाधो मरुतां न प्रयुक्ति ।
आ नो मित्रावरुणा नासत्या द्यावा होत्राय पृथिवी ववृत्याः ॥....॥ ६.११
मध्ये होता दुरोणे बर्हिषो राळग्निस्तोदस्य रोदसी यजध्यै ।
अयं स सूनुः सहस ऋतावा दूरात् सूर्यो न शोचिषा ततान ॥....॥ ६.१२

त्वद्विश्वा सुभग सौभगान्यग्ने वि यन्ति वनिनो न वयाः ।
श्रुष्टी रयिर्वाजो वृत्रतूर्ये दिवो वृष्टिरीड्यो रीतिरपाम् ॥ .... ॥ ६.१३

तं सुप्रतीकं सुदृशं स्वञ्चमविद्वांसो विदुष्टरं सपेम ।
स यक्षद्विश्वा वयुनानि विद्वान् प्र हव्यमग्निरमृतेषु वोचत्॥....॥ ६.१५.१०-१५
हुवे वः सुद्योत्मानं सुवृक्तिं विशामग्निमतिथिं सुप्रयसम् ।
मित्र इव यो दिधिषाय्यो भूद्देव आदेवे जने जातवेदाः ॥....॥ २.४
नि होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत् सुदक्षः ।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रंभरः शुचिजिह्वो अग्निः ॥....॥ २.९
जोहूत्रो अग्निः प्रथमः पितेवेळस्पदे मनुषा यत् समिद्धः ।
श्रियं वसानो अमृतो विचेता मर्मृजेन्यः श्रवस्यः स वाजी ॥....॥ २.१०
त्रिमूर्धानं सप्तरश्मिं गृणीषेऽनूनमग्निं पित्रोरुपस्थे ।
निषत्तमस्य चरतो ध्रुवस्य विश्वा दिवो रोचनापप्रिवांसम् ॥....॥ १.१४६
कथा ते अग्ने शुचयन्त आयोर्ददाशुर्वाजेभिराशुषाणाः ।
उभे यत्तोके तनये दधाना ऋतस्य सामन् रणयन्त देवाः ॥....॥ १.१४७
मथीद्यदीं विष्टो मातरिश्वा होतारं विश्वाप्सुं विश्वदेव्यम् ।
नि यं दधुर्मनुष्यासु विक्षु स्वर्ण चित्रं वपुषे विभावम् ॥ .... ॥ १.१४८
वह्निं यशसं विदथस्य केतुं सुप्राव्यं दूतं सद्योअर्थम् ।
द्विजन्मानं रयिमिव प्रशस्तं रातिं भरद् भृगवे मातरिश्वा ॥....॥ १.६०
उप प्र जिन्वन्नुशतीरुशन्तं पतिं न नित्यं जनयः सनीळाः ।
स्वसारः श्यावीमरुषीमजुष्रञ्चित्रमुच्छन्तीमुषसं न गावः ॥....॥ १.७१
नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो नर्या पुरूणि ।
अग्निर्भुवद्रयिपती रयीणां सत्रा चक्राणो अमृतानि विश्वा ॥....॥ १.७२
रयिर्न यः पितृवित्तो वयोधाः सुप्रणीतिश्चिकितुषो न शासुः ।
स्योनशीरतिथिर्न प्रीणानो होतेव सद्म विधतो वि तारीत् ॥....॥ १.७३
का त उपेतिर्मनसो वराय भुवदग्ने शंतमा का मनीषा ।
को वा यज्ञैः परि दक्षं त आप केन वा ते मनसा दाशेम ॥....॥ १.७६
कथा दाशेमाग्नये कास्मै देवजुष्टोच्यते भामिने गीः ।
यो मर्त्येष्वमृत ऋतावा होता यजिष्ठ इत् कृणोति देवान् ॥....॥ १.७७
हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान् ।
शुचिभ्राजा उषसो नवेदा यशस्वतीरपस्युवो न सत्याः ॥ .... ॥ १.७९.१-३

अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु ।
नाना हनू विभृते सं भरेते असिन्वती बप्सती भूर्यत्तः ॥ १०.७९
अग्निः सप्तिं वाजंभरं ददात्यग्निर्वीरं श्रुत्यं कर्मनिःष्ठाम् ।
अग्नी रोदसी वि चरत् समञ्जन्नग्निर्नारीं वीरकुक्षिं पुरंधिम् ॥....॥ १०.८०
द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुप धापयेते ।
हरिरन्यस्यां भवति स्वधावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥....॥ १.९५
स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा ।
आपश्च मित्रं धिषणा च साधन् देवा अग्निं धारयन् द्रविणोदाम् ॥....॥१.९६
अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥....॥ १.१८९
अग्रे बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान् तमसो ज्योतिषागात् ।
अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥....॥ १०.१
पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँर्ऋतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः ॥....॥ १०.२
इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाँ अदर्शि ।
चिकिद्वि भाति भासा बृहतासिक्नीमेति रुशतीमपाजन् ॥....॥ १०.३
प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु ।
धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् ॥....॥ १०.४
एकः समुद्रो धरुणो रयीणामस्मद्धृदो भूरिजन्मा वि चष्टे ।
सिषक्त्यूधर्निण्योरुपस्थ उत्सस्य मध्ये निहितं पदं वेः ॥....॥ १०.५
अयं स यस्य शर्मन्नवोभिरग्नेरेधते जरिताभिष्टौ ।
ज्येष्ठेभिर्यो भानुभिर्ऋषूणां पर्येति परिवीतो विभावा ॥....॥ १०.६
स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव ।
सचेमहि तव दस्म प्रकेतैरुरुष्या ण उरुभिर्देव शंसैः ॥....॥ १०.७
प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति ।
दिवश्चिदन्ताँ उपमाँ उदानळपामुपस्थे महिषो ववर्ध ॥....॥ १०.८.१-६
त्वमग्ने सुहवो रण्वसंदृक् सुदीती सूनो सहसो दिदीहि ।
मा त्वे सचा तनये नित्य आ धङ् मा वीरो अस्मन्नर्यो वि दासीत् ॥ .... ॥
७.१.२१-२५

अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम् ।
यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः ॥ .... ॥ ७.३
प्र वः शुक्राय भानवे भरध्वं हव्यं मतिं चाग्नये सुपूतम् ।
यो दैव्यानि मानुषा जनूंष्यन्तर्विश्वानि विद्मना जिगाति ॥....॥ ७.४
प्र वो देवं चित् सहसानमग्निमश्वं न वाजिनं हिषे नमोभिः ।
भवा नो दूतो अध्वरस्य विद्वान् त्मना देवेषु विविदे मितद्रुः ॥.... ॥ ७.७
इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन ।
नरो हव्येभिरीळते सबाध आग्निरग्र उषसामशोचि ॥.... ॥ ७.८
अबोधि जार उषसामुपस्थाद्धोता मन्द्रः कवितमः पावकः ।
दधाति केतुमुभयस्य जन्तोर्हव्या देवेषु द्रविणं सुकृत्सु ॥....॥ ७.९
उषो न जारः पृथु पाजो अश्रेद्दविद्युतद्दीद्यच्छोशुचानः ।
वृषा हरिः शुचिरा भाति भासा धियो हिन्वान उशतीरजीगः ॥....॥ ७.१०
महाँ अस्यध्वरस्य प्रकेतो न ऋते त्वदमृता मादयन्ते ।
आ विश्वेभिः सरथं याहि देवैर्न्यग्ने होता प्रथमः सदेह ॥....॥ ७.११
अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे ।
चित्रभानुं रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥....॥ ७.१२

बार्हतम्

एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥ ... ॥ ७.१६
प्र वो यह्वं पुरूणां विशां देवयतीनाम् ।
अग्निं सूक्तेभिर्वचोभिरीमहे यं सीमिदन्य ईळते ॥ .... ॥ १.३६
अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥....॥ १.४४
सखायस्त्वा ववृमहे देवं मर्तास ऊतये ।
अपां नपातं सुभगं सुदीदितिं सुप्रतूर्तिमनेहसम् ॥ .... ॥ ३.९
अयमग्निः सुवीर्यस्येशे महः सौभगस्य ।
राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥.... ॥ ३.१६
अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे ।
आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥....॥ ८.६०

अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम् ।
अच्छा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये ॥....॥ ८.७१.१०-१५
अदर्शि गातुवित्तमो यस्मिन् व्रतान्यादधुः ।
उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्त नो गिरः ॥....॥ ८.१०३.१-७

औष्णिहम्

अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
अस्मे धेहि जातवेदो महि श्रवः ॥ .... ॥ १.७९.४-६
पुरु त्वा दाश्वान् वोचेऽरिरग्ने तव स्विदा ।
तोदस्येव शरण आ महस्य ॥ .... ॥ १.१५०
त्वामग्ने मनीषिणः सम्राजं चर्षणीनाम् ।
देवं मर्तास इन्धते समध्वरे ॥ .... ॥ ३.१०
ईळिष्वा हि प्रतीव्यं यजस्व जातवेदसम् ।
चरिष्णुधूममगृभीतशोचिषम् ॥ .... ॥ ८.२३

जागतम्

जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः ॥....॥ ५.११
त्वामग्न ऋतायवः समीधिरे प्रत्नं प्रत्नास ऊतये सहस्कृत ।
पुरुश्चन्द्रं जयतं विश्वधायसं दमूनसं गृहपतिं वरेण्यम् ॥ .... ॥ ५.८
इममू षु वो अतिथिमुषर्बुधं विश्वासां विशां पतिमृञ्जसे गिरा ।
वेतीद्दिवो जनुषा कच्चिदा शुचिर्ज्योक् चिदत्ति गर्भो यदच्युतम् ॥ .... ॥ ६.१५.१-९
त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥....॥ २.१
यज्ञेन वर्धत जातवेदसमग्निं यजध्वं हविषा तना गिरा ।
समिधानं सुप्रयसं स्वर्णरं द्युक्षं होतारं वृजनेषु धूर्षदम् ॥....॥ २.२
त्वमग्ने प्रथमो अङ्गिरा ऋषिर्देवो देवानामभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायन्त मरुतो भ्राजदृष्टयः ॥....॥ १.३१
नू चित् सहोजा अमृतो नि तुन्दते होता यद् दूतो अभवद्विवस्वतः ।
वि साधिष्ठेभिः पथिभी रजो मम आ देवताता हविषा विवासति ॥.... ॥ १.५८.१-५

वेदिषदे प्रियधामाय सुद्युते धासिमिव प्र भरा योनिमग्नये ।
वस्त्रेणेव वासया मन्मना शुचिं ज्योतीरथं शुक्रवर्णं तमोहनम् ॥....॥ १.१४०
बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि ।
यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ॥....॥ १.१४१
प्र तव्यसीं नव्यसीं धीतिमग्नये वाचो मतिं सहसः सूनवे भरे ।
अपां नपाद्यो वसुभिः सह प्रियो होता पृथिव्यां न्यसीदद्दृत्वियः॥....॥१.१४३
एति प्र होता व्रतमस्य माययोर्ध्वां दधानः शुचिपेशसं धियम् ।
अभि स्रुचः क्रमते दक्षिणावृतो या अस्य धाम प्रथमं ह निंसते ॥....॥ १.१४४
तं पृच्छता स जगामा स वेद स चिकित्वाँ ईयते सा न्वीयते ।
तस्मिन्त्सन्ति प्रशिषस्तस्मिन्निष्टयः स वाजस्य शवसः शुष्मिणस्पतिः ॥....॥
१.१४५

इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ .... ॥ १.९४
सं जागृवद्भिर्जरमाण इध्यते दमे दमूना इषयन्निळस्पदे ।
विश्वस्य होता हविषो वरेण्यो विभुर्विभावा सुषखा सखीयते ॥....॥१०.९१
चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावप्येति धातवे ।
अनूधा यदि जीजनदधा च नु ववक्ष सद्यो महि दूत्यं चरन् ॥....॥१०.११५
वसुं न चित्रमहसं गृणीषे वामं शेवमतिथिमद्विषेण्यम् ।
स रासते शुरुधो विश्वधायसोऽग्निर्होता गृहपतिः सुवीर्यम् ॥ .... ॥१०.१२२

पाङ्क्तम्

अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भर ॥ .... ॥५.६

## उषस्यः क्रतुः

गायत्रम्

प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः ।
दिवो अदर्शि दुहिता ॥ .... ॥ ४.५२
कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये ।
कं नक्षसे विभावरि ॥ .... ॥ १.३०.२०-२२

आनुष्टुभम्

उषो भद्रेभिरा गहि दिवश्चिद्रोचनादधि ।
वहन्त्वरुणप्सव उप त्वा सोमिनो गृहम् ॥ .... ॥ १.४९

त्रैष्टुभम्

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥ .... ॥ १.११३
पृथू रथो दक्षिणाया अयोज्यैनं देवासो अमृतासो अस्थुः ।
कृष्णादुदस्थादर्या विहायाश्चिकित्सन्ती मानुषाय क्षयाय ॥ .... ॥ १.१२३
उषा उच्छन्ती समिधाने अग्ना उद्यन्त्सूर्य उर्विया ज्योतिरश्रेत् ।
देवो नो अत्र सविता न्वर्थं प्रासावीद् द्विपत् प्र चतुष्पदित्यै ॥....॥ १.१२४
प्रत्यर्ची रुशदस्या अदर्शि वि तिष्ठते बाधते कृष्णमभ्वम् ।
स्वरुं न पेशो विदथेष्वञ्जञ्चित्रं दिवो दुहिता भानुमश्रेत् ॥....॥ १.९२.५-१२
घृतद्यामानं बृहतीमृतेन ऋतावरीमरुणप्सुं विभातीम् ।
देवीमुषसं स्वरावहन्तीं प्रति विप्रासो मतिभिर्जरन्ते ॥ .... ॥ ५.८०
उषो वाजेन वाजिनि प्रचेताः स्तोमं जुषस्व गृणतो मघोनि ।
पुराणी देवि युवतिः पुरंधिरनु व्रतं चरसि विश्ववारे ॥ .... ॥ ३.६१
इदमु त्यत् पुरुतमं पुरस्ताज्ज्योतिस्तमसो वयुनावदस्थात् ।
नूनं दिवो दुहितरो विभातीर्गातुं कृणवन्नुषसो जनाय ॥ .... ॥ ४.५१
उदु श्रिय उषसो रोचमाना अस्थुरपां नोर्मयो रुशन्तः ।
कृणोति विश्वा सुपथा सुगान्यभूदु वस्वी दक्षिणा मघोनी ॥ .... ॥ ६.६४
एषा स्या नो दुहिता दिवोजाः क्षितीरुच्छन्ती मानुषीरजीगः ।
या भानुना रुशता राम्यास्वज्ञायि तिरस्तमसश्चिदक्तून् ॥ .... ॥ ६.६५
व्युषा आवो दिविजा ऋतेनाविष्कृण्वाना महिमानमागात् ।
अप द्रुहस्तम आवरजुष्टमङ्गिरस्तमा पथ्या अजीगः ॥ .... ॥ ७.७५
उदु ज्योतिरमृतं विश्वजन्यं विश्वानरः सविता देवो अश्रेत् ।
क्रत्वा देवानामजनिष्ट चक्षुराविरकर्भुवनं विश्वमुषाः ॥ .... ॥ ७.७६
उपो रुरुचे युवतिर्न योषा विश्वं जीवं प्रसुवन्ती चरायै ।
अभूदग्निः समिधे मानुषाणामकर्ज्योतिर्बाधमाना तमांसि ॥ .... ॥ ७.७७

प्रति केतवः प्रथमा अदृश्रन्नूर्ध्वा अस्या अञ्जयो वि श्रयन्ते ।
उषो अर्वाचा बृहता रथेन ज्योतिष्मता वाममस्मभ्यं वक्षि ॥....॥ ७.७८
व्युषा आवः पथ्या जनानां पञ्च क्षितीर्मानुषीर्बोधयन्ती ।
सुसंदृग्भिरुक्षभिर्भानुमश्रेद्वि सूर्यो रोदसी चक्षसावः ॥ .... ॥ ७.७९
प्रति स्तोमेभिरुषसं वसिष्ठा गीर्भिर्विप्रासः प्रथमा अबुध्रन् ।
विवर्तयन्तीं रजसी समन्ते आविष्कृण्वतीं भुवनानि विश्वा ॥....॥ ७.८०

बार्हतम्

प्रत्यु अदर्श्यायत्युच्छन्ती दुहिता दिवः ।
अपो महि व्ययति चक्षसे तमो ज्योतिष्कृणोति सूनरी ॥....॥ ७.८१
सह वामेन न उषो व्युच्छा दुहितर्दिवः ।
सह द्युम्नेन बृहता विभावरि राया देवि दास्वती ॥....॥ १.४८

औष्णिहम्

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।
येन तोकं च तनयं च धामहे ॥....॥ १.९२.१३–१५

जागतम्

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥ .... ॥
१.९२.१-४

पाङ्क्तम्

महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥....॥ ५.७९

## आश्विनः क्रतुः

गायत्रम्

एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः ।
स्तुषे वामश्विना बृहत् ॥ .... ॥ १.४६
प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् ।
अस्य सोमस्य पीतये ॥....॥ १.२२.१–४
अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती ।
पुरुभुजा चनस्यतम् ॥....॥ १.३.१-३

आश्विनावश्वावत्येषा यातं शवीरया ।
गोमद्दस्रा हिरण्यवत् ॥....॥ १.३०.१७-१९
गोमदू षु नासत्याश्वावद्यातमश्विना । वर्ती रुद्रा नृपाय्यम् ॥....॥ २.४१.७-९
दूरादिहेव यत् सत्यरुणप्सुरशिश्वितत् । वि भानुं विश्वधातनत्॥....॥ ८.५.१-३६
वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा ।
युवाभ्यां भूत्वश्विना ॥ .... ॥ ८.२६.१६-१९
उदीराथामृतायते युञ्जाथामश्विना रथम् । अन्ति षद्भूतु वामवः ॥....॥ ८.७३
आ मे हवं नासत्याश्विना गच्छतं युवम् । मध्वः सोमस्य पीतये ॥....॥ ८.८५

आनुष्टुभम्

यदद्य स्थः परावति यदर्वावत्यश्विना ।
यद्वा पुरू पुरुभुजा यदन्तरिक्ष आ गतम् ॥ .... ॥ ५.७३
कूष्ठो देवावश्विनाद्या दिवो मनावसू ।
तच्छ्रवथो वृषण्वसू अत्रिर्वामा विवासति ॥ .... ॥ ५.७४
आ नो विश्वाभिरूतिभिरश्विना गच्छतं युवम् ।
दस्रा हिरण्यवर्तनी पिबतं सोम्यं मधु ॥ .... ॥ ८.८
त्यं चिदत्रिमृतजुरमर्थमश्वं न यातवे ।
कक्षीवन्तं यदी पुना रथं न कृणुथो नवम् ॥ .... ॥ १०.१४३

त्रैष्टुभम्

आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः ।
अर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छ ॥ .... ॥ ५.७६
प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः ।
प्रातर्हि यज्ञमश्विना दधाते प्र शंसन्ति कवयः पूर्वभाजः ॥ .... ॥ ५.७७
ग्रावाणेव तदिदर्थं जरेथे गृध्रेव वृक्षं निधिमन्तमच्छ ।
ब्रह्माणेव विदथ उक्थशासा दूतेव हव्या जन्या पुरुत्रा ॥ .... ॥ २.३९
नासत्याभ्यां बर्हिरिव प्र वृञ्जे स्तोमाँ इयर्म्यभ्रियेव वातः ।
यावर्भगाय विमदाय जायां सेनाजुवा न्यूहतू रथेन ॥ .... ॥ १.११६
मध्वः सोमस्याश्विना मदाय प्रत्नो होता विवासते वाम् ।
बर्हिष्मती रातिर्विश्रिता गीरिषा यातं नासत्योप वाजैः ॥ .... ॥ १.११७
आ वां रथो अश्विना श्येनपत्वा सुमृळीकः स्ववाँ यात्वर्वाङ् ।

यो मर्त्यस्य मनसो जवीयान् त्रिवन्धुरो वृषणा वातरंहाः ॥ .... ॥ १.११८
धेनुः प्रत्नस्य काम्यं दुहानान्तः पुत्रश्चरति दक्षिणायाः ।
आ द्योतनिं वहति शुभ्रयामोषसः स्तोमो अश्विनावजीगः ॥ .... ॥ ३.५८
क उ श्रवत् कतमो यज्ञियानां वन्दारु देवः कतमो जुषाते ।
कस्येमां देवीममृतेषु प्रेष्ठां हृदि श्रेषाम सुष्टुतिं सुहव्याम् ॥ .... ॥ ४.४३
तं वां रथं वयमद्या हुवेम पृथुज्रयमश्विना संगतिं गोः ।
यः सूर्यां वहति वन्धुरायुर्गिर्वाहसं पुरुतमं वसूयुम् ॥ .... ॥ ४.४४
स्तुषे नरा दिवो अस्य प्रसन्ताश्विना हुवे जरमाणो अर्कैः ।
या सद्य उस्रा व्युषि ज्मो अन्तान् युयूषतः पर्युरू वरांसि ॥ .... ॥ ६.६२
क्व त्या वल्गू पुरुहूताद्य दूतो न स्तोमोऽविदन्नमस्वान् ।
आ यो अर्वाङ् नासत्या ववर्त प्रेष्ठा ह्यसथो अस्य मन्मन् ॥ .... ॥ ६.६३
युवो रजांसि सुयमासो अश्वा रथो यद्वां पर्यर्णांसि दीयत् ।
हिरण्यया वां पवयः प्रुषायन् मध्वः पिबन्ता उषसः सचेथे ॥ .... ॥ १.१८०
कदु प्रेष्ठाविषां रयीणामध्वर्यन्ता यदुन्निनीथो अपाम् ।
अयं वां यज्ञो अकृत प्रशस्तिं वसुधिती अवितारा जनानाम् ॥....॥ १.१८१
तं युञ्जाथां मनसो यो जवीयान् त्रिवन्धुरो वृषणा यस्त्रिचक्रः ।
येनोपयाथः सुकृतो दुरोणं त्रिधातुना पतथो विर्न पर्णैः ॥ .... ॥ १.१८३
ता वामद्य तावपरं हुवेमोच्छन्त्यामुषसि वह्निरुक्थैः ।
नासत्या कुह चित् सन्तावर्यो दिवो नपाता सुदास्तराय ॥ .... ॥ १.१८४
प्रति वां रथं नृपती जरध्यै हविष्मता मनसा यज्ञियेन ।
यो वां दूतो न धिष्ण्यावजीगरच्छा सूनुर्न पितरा विवक्मि ॥....॥ ७.६७
आ वां रथो रोदसी बद्बधानो हिरण्ययो वृषभिर्यात्वश्वैः ।
घृतवर्तनिः पविभी रुचान इषां वोळ्हा नृपतिर्वाजिनीवान् ॥....॥ ७.६९
आ विश्ववाराश्विना गतं नः प्र तत् स्थानमवाचि वां पृथिव्याम् ।
अश्वो न वाजी शुनपृष्ठो अस्थादा यत् सेदथुर्ध्रुवसे न योनिम् ॥....॥ ७.७०
अप स्वसुरुषसो नग्जिहीते रिणक्ति कृष्णीररुषाय पन्थाम् ।
अश्वामघा गोमघा वां हुवेम दिवा नक्तं शरुमस्मद्युयोतम् ॥....॥ ७.७१
आ गोमता नासत्या रथेनाश्वावता पुरुश्चन्द्रेण यातम् ।
अभि वां विश्वा नियुतः सचन्ते स्पार्हया श्रिया तन्वा शुभाना ॥....॥ ७.७२

अतारिष्म तमसस्पारमस्य प्रति स्तोमं देवयन्तो दधानाः ।
पुरुदंसा पुरुतमा पुराजामर्त्या हवते अश्विना गीः ॥ .... ॥ ७.७३

बार्हतम्

इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥ ... ॥ ७.७४
अयं वां मधुमत्तमः सुतः सोम ऋतावृधा ।
तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥ .... ॥ १.४७
ओ त्यमह्व आ रथमद्या दंसिष्ठमूतये ।
यमश्विना सुहवा रुद्रवर्तनी आ सूर्यायै तस्थथुः ॥ .... ॥ ८.२२.१-७
द्युम्नी वां स्तोमो अश्विना क्रिविर्न सेक आ गतम् ।
मध्वः सुतस्य स दिवि प्रियो नरा पातं गौराविवेरिणे ॥ .... ॥ ८.८७
यत् स्थो दीर्घप्रसद्मनि यद्वादो रोचने दिवः ।
यद्वा समुद्रे अध्याकृते गृहेऽत आ यातमश्विना ॥ .... ॥ ८.१०

औष्णिहम्

अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत् ।
अर्वाग्रथं समनसा नि यच्छतम् ॥ .... ॥ १.९२.१६-१८
अश्विनावेह गच्छतं नासत्या मा वि वेनतम् ।
हंसाविव पततमा सुताँ उप ॥ .... ॥ ५.७८.१-३
युवोरु षू रथं हुवे सधस्तुत्याय सूरिषु ।
अतूर्तदक्षा वृषणा वृषण्वसू ॥ .... ॥ ८.२६.१-१५

जागतम्

अबोध्यग्निर्ज्म उदेति सूर्यो व्युषाश्चन्द्रा मह्यावो अर्चिषा ।
आयुक्षातामश्विना यातवे रथं प्रासावीद्देवः सविता जगत् पृथक् ॥....॥ १.१५७
एष स्य भानुरुदियर्ति युज्यते रथः परिज्मा दिवो अस्य सानवि ।
पृक्षासो अस्मिन् मिथुना अधि त्रयो दृतिस्तुरीयो मधुनो वि रप्शते ॥ .... ॥
॥ ४.४५
आ वां रथं पुरुमायं मनोजुवं जीराश्वं यज्ञियं जीवसे हुवे ।
सहस्रकेतुं वनिनं शतद्वसुं श्रुष्टीवानं वरिवोधामभि प्रयः ॥....॥ १.११९

अभूदिदं वयुनमो षु भूषता रथो वृषण्वान् मदता मनीषिणः ।
धियंजिन्वा धिष्ण्या विश्पलावसू दिवो नपाता सुकृते शुचिव्रता॥....॥१.१८२
यो वां परिज्मा सुवृदश्विना रथो दोषामुषासो हव्यो हविष्मता ।
शश्वत्तमासस्तमु वामिदं वयं पितुर्न नाम सुहवं हवामहे ॥....॥ १०.३९
रथं यान्तं कुह को ह वां नरा प्रति द्युमन्तं सुविताय भूषति ।
प्रातर्यावाणं विभ्वं विशेविशे वस्तोर्वस्तोर्वहमानं धिया शमि ॥....॥ १०.४०
समानमु त्यं पुरुहूतमुक्थ्यं रथं त्रिचक्रं सवना गनिग्मतम् ।
परिज्मानं विदथ्यं सुवृक्तिभिर्वयं व्युष्टा उषसो हवामहे ॥....॥ १०.४१
त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना ।
युवोर्हि यन्त्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ॥....॥ १.३४
ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये ।
याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतम् ॥....॥१.११२

पाङ्क्तम्

प्रति प्रियतमं रथं वृषणं वसुवाहनम् ।
स्तोता वामश्विनावृषिः स्तोमेन प्रति भूषति माध्वी मम श्रुतं हवम् ॥....॥५.७५

ऐब्रा [ २.१५–१८ ]—देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहि इत्याहाध्वर्युः० प्रातर्वै स तं देवेभ्योऽन्वब्रवीत्। यत् प्रातरन्वब्रवीत्तत्प्रातरनुवाकस्य प्रातरनुवाकत्वम्० महति रात्र्या अनूच्यः। पुरा वाचः प्रवदितोरनूच्यः० पुरा शकुनिवादादनुब्रूयात्० अथो खलु यदैवाध्वर्युरुपाकुर्यादथानुब्रूयात्० प्रजापतौ वै स्वयं होतरि प्रातरनुवाकमनुवक्ष्यति सर्वा देवता आशंसन्त मामभि प्रतिपत्स्यति मामभीति। स प्रजापतिरैक्षत यद्येकां देवतामादिष्टामभि प्रतिपत्स्यामीतरामेकेन देवता उपाप्ता भविष्यन्तीति। स एतामृचमपश्यद् आपो रेवतीरिति० सर्वा हास्मिन् देवताः प्रातरनुवाकमनुब्रुवति प्रमोदन्ते० एषा वाव त्रिरनूक्ता० शतमनूच्यमायुष्कामस्य० त्रीणि च शतानि षष्टिश्चानूच्यानि यज्ञकामस्य० सप्त च शतानि विंशतिश्चानूच्यानि प्रजापशुकामस्य० अष्टौ शतान्यनूच्यान्यब्राह्मणोक्तस्य यो वा दुरुक्तोक्तः शमलगृहीतो यजेत० सहस्रमनूच्यं स्वर्गकामस्य० अपरिमितमनूच्यम्० सप्ताग्नेयानि छन्दांस्यन्वाह० सप्तोषस्यानि छन्दांस्यन्वाह० सप्ताश्विनानि छन्दांस्यन्वाह० तिस्रो देवता अन्वाह० तदाहुः कथमनूच्यः प्रातरनुवाक इति। यथाछन्दसमनूच्यः प्रातरनुवाकः० अर्धर्चश एवानूच्यः० अभूदुषा रुशत्पशुरित्युत्तमया परिदधाति० ॥

[ ५.३३ ]—ब्रह्मोपाकृते प्रातरनुवाके वाचंयमः स्यादोपांश्वन्तर्यामयोर्होमात् ।

ऋसं[1]

आपो रेवतीः क्षयथा.... ॥ १०.३०.१२

## आग्नेयः क्रतुः

गायत्रम्

उपप्रयन्तो अध्वरं .... ॥१.७४ ॥ अग्निमीळे पुरोहितं .... ॥ १.१ ॥ अग्निं दूतं वृणीमहे .... ॥ १.१२ ॥ अश्वं न त्वा .... ॥ १.२७.१–१० ॥ जुषस्व सप्रथस्तमं .... ॥ १.७५

अभि त्वा गोतमा गिरा जातवेदो विचर्षणे ।
द्युम्नैरभि प्र णोनुमः ॥.... ॥ १.७८

अग्निर्होता पुरोहितो .... ॥ ३.११॥ दूतं वो विश्ववेदसं .... ॥४.८ ॥ अग्ने मृळ महाँ .... ॥ ४.९ ॥ अर्चन्तस्त्वा हवामहे .... ॥ ५.१३ ॥ अग्निं स्तोमेन बोधय .... ॥ ५.१४ ॥ उपसद्याय मीळ्हुषे .... ॥ ७.१५ ॥ इमे विप्रस्य वेधसो .... ॥ ८.४३ ॥ समिधाग्निं दुवस्यत ....॥ ८.४४॥ अग्निं हिन्वन्तु नो ....॥१०.१५६॥ प्राग्नये वाचमीरय .... ॥ १०.१८७ ॥ त्वमग्ने यज्ञानां होता .... ॥ ६.१६.१-२६

आनुष्टुभम्

[2]ते ते अग्ने त्वोता इषयन्तो विश्वमायुः ।
तरन्तो अर्यो अरातीर्वन्वन्तो अर्यो अरातीः ॥ ६.१६.२७

होताजनिष्ट चेतनः .... ॥ २.५ ॥ त्वं हि क्षैतवद्यशो .... ॥ ६.२.१-९ ॥ अग्ने कदा त .... ॥ ४.७.२-६

त्रैष्टुभम्

ससस्य यद् वियुता.... ॥ ४.७.७-११॥ यो मर्त्येष्वमृत ऋतावा.... ॥४.२॥ आ वो राजानमध्वरस्य .... ॥ ४.३ ॥ कृणुष्व पाजः प्रसितिं .... ॥ ४.४ ॥ प्र वो देवं चित् .... ॥ ७.७ ॥ इन्धे राजा समर्यो .... ॥ ७.८ ॥ अबोधि जार उषसाम्.... ॥ ७.९ ॥ उषो न जारः पृथु.... ॥ ७.१० ॥ महाँ अस्यध्वरस्य .... ॥ ७.११ ॥ अग्ने बृहन्नुषसाम् .... ॥ १०.१ ॥ पिप्रीहि देवाँ उशतो.... ॥ १०.२ ॥ इनो राजन्नरतिः .... ॥ १०.३ ॥ प्र ते यक्षि प्र त इयर्मि .... ॥ १०.४ ॥ एकः

---

१. शाङ्खायनमतानुसारेण ।

२. आश्वलायनमते गायत्रे त्वमग्ने यज्ञानामिति पञ्चचत्वारिंशत्सु ऋक्षु इयं विनियुक्ता ।

समुद्रो धरुणो .... ॥ १०.५॥ अयं स यस्य शर्मन् ....॥१०.६॥ स्वस्ति नो दिवो अग्ने .... ॥ १०.७ ॥ अगन्म महा नमसा .... ॥ ७.१२

बार्हतम्

एना वो अग्निं नमसोर्जो .... ॥ ७.१६ ॥ प्र वो यह्वं पुरूणां....॥ १.३६॥ अग्ने विवस्वदुषसः .... ॥ १.४४.१–१२ ॥ सखायस्त्वा ववृमहे .... ॥३.९.१–८॥ अदर्शि गातुवित्तमो .... ॥ ८.१०३.१–४

समिद्धश्चित् समिध्यसे देवेभ्यो हव्यवाहन ।
आदित्यै रुद्रैर्वसुभिर्न आ गहि मृळीकाय न आ गहि ॥....॥ १०.१५०.१-३
अयमग्निः सुवीर्यस्येशे .... ॥ ३.१६

औष्णिहम्

त्वामग्ने मनीषिणः .... ॥ ३.१० ॥ ईळिष्वा हि प्रतीव्यं . .. ॥ ८.२३ ॥ पुरु त्वा दाश्वान् .... ॥ १.१५०

जागतम्

वेदिषदे प्रियधामाय....॥१.१४०.१–७॥ एति प्र होता व्रतमस्य....॥१.१४४॥ यज्ञेन वर्धत जातवेदसम् .... ॥ २.२ ॥ जनस्य गोपा अजनिष्ट .... ॥ ५.११

पाङ्क्तम्

अग्निं तं मन्ये यो .... ॥ ५.६

उषस्यः क्रतुः

गायत्रम्

कस्त उषः कधप्रिये....॥१.३०.२०–२२॥ प्रति ष्या सूनरी जनी....॥४.५२

आनुष्टुभम्

उषो भद्रेभिरा गहि .... ॥ १.४९

त्रैष्टुभम्

उपो रुरुचे युवतिर्न .... ॥ ७.७७ ॥ प्रति केतवः प्रथमा .... ॥ ७.७८ ॥ व्युषा आवः पथ्या जनानां .... ॥ ७.७९ ॥ प्रति स्तोमेभिरुषसं .... ॥ ७.८०

बार्हतम्

प्रत्यु अदर्श्यायत्युच्छन्ती .... ॥ ७.८१ ॥ सह वामेन न उषो ....॥१.४८

औष्णिहम्

उषस्तच्चित्रमा .... ॥ १.९२.१३–१५

जागतम्

एता उ त्या उषसः .... ॥ १.९२.१–४

पाङ्क्तम्

महे नो अद्य बोधयोषो .... ॥ ५.७९

आश्विनः क्रतुः

गायत्राम्

अश्विना यज्वरीरिषो .... ॥ १.३.१-३ ॥ प्रातर्युजा वि बोधय .... ॥ १.२२.१-४ ॥ अश्विनावश्वावत्येषा .... ॥ १.३०.१७-१९ ॥ एषो उषा अपूर्व्या ॥ १.४६ ॥ गोमदू षु नासत्या .... ॥ २.४१.७,८ ॥ दूरादिहेव यत् .... ॥ ८.५.१-३६ ॥ उदीराथामृतायते .... ॥८.७३॥ आ मे हवं नासत्या ॥ .... ॥८.८५

आनुष्टुभम्

आ नो विश्वाभिरूतिभिः .... ॥८.८ ॥ यदद्य स्थः परावति .... ॥ ५.७३॥ कूष्ठो देवावश्विनाद्या .... ॥ ५.७४

त्रैष्टुभम्

आ भात्यग्निरुषसामनीकम् .... ॥ ५.७६ ॥ प्रातर्यावाणा प्रथमा यजध्वं .... ॥ ५.७७ ॥ नासत्याभ्यां बर्हिरिव प्र .... ॥ १.११६ ॥ मध्वः सोमस्याश्विना मदाय .... ॥ १.११७ ॥ आ वां रथो अश्विना श्येनपत्वा .... ॥ १.११८ ॥

वसू रुद्रा पुरुमन्तू वृधन्ता दशस्यतं नो वृषणावभिष्टौ ।

दस्रा ह यद्रेक्ण औचथ्यो वां प्र यत् सस्राथे अकवाभिरूती ॥ .... ॥ १.१५८.१–३

युवो रजांसि सुयमासो .... ॥ १.१८० ॥ कदु प्रेष्ठाविषां रयीणाम् .... ॥ १.१८१ ॥ तं युञ्जाथां मनसो यो .... ॥ १.१८३ ॥ ता वामद्य तावपरं हुवेम .... ॥ १.१८४ ॥ ग्रावाणेव तदिदर्थं जरेथे .... ॥ २.३९ ॥ धेनुः प्रत्नस्य काम्यं .... ॥ ३.५८ ॥ क उ श्रवत् कतमो यज्ञियानां .... ॥ ४.४३ ॥ तं वां रथं वयमद्या हुवेम .... ॥ ४.४४ ॥ स्तुषे नरा दिवो अस्य .... ॥ ६.६२ ॥ क्व त्या वल्गू पुरुहूताद्य .... ॥ ६.६३.१–९॥ आ वां रथो रोदसी बद्बधानो.... ॥ ७.६९ ॥ आ विश्ववाराश्विना गतं नः .... ॥ ७.७० ॥ अप स्वसुरुषसो नग्जिहीते .... ॥ ७.७१ ॥ आ गोमता नासत्या .... ॥ ७.७२ ॥ अतारिष्म तमसस्पारमस्य .... ॥ ७.७३

बार्हतम्

इमा उ वां दिविष्टय .... ॥ ७.७४ ॥ अयं वां मधुमत्तमः .... ॥१.४७.१ ॥
अश्विना मधुमत्तमं पातं सोममृतावृधा ।
अथाद्य दस्रा वसु बिभ्रता रथे दाश्वांसमुप गच्छतम् ॥ १.४७.३ ॥
याभिः कण्वमभिष्टिभिः प्रावतं युवमश्विना ।
ताभिः ष्वस्माँ अवतं शुभस्पती पातं सोममृतावृधा ॥ १.४७.५ ॥

औष्णिहम्

युवोरु षू रथं हुवे .... ॥ ८.२६.१–५ ॥

जागतम्

त्रिश्चिन्नो अद्या भवतं .... ॥ १.३४ ॥ ईळे द्यावापृथिवी पूर्वचित्तये .... ॥ १.११२ ॥ यो वां परिज्मा सुवृदश्विना .... ॥ १०.३९ ॥ रथं यान्तं कुह को ह वां .... ॥ १०.४० ॥ समानमु त्यं पुरुहूतमुक्थ्यं .... ॥ १०.४१ ॥

पाङ्क्तम्

प्रति प्रियतमं रथं .... ॥ ५.७५ ॥
[1]अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ ६.१७.१५ ॥

शांब्रा [ ११.१–८ ]—अथातः प्रातरनुवाकः । यदेवैनं प्रातरन्वाह तत्प्रातरनुवाकस्य
प्रातरनुवाकत्वम् । अथ यत्प्रपदो जपति यदाहुतीर्जुहोति० हिङ्कृत्य प्रातरनुवाकमन्वाह० उच्चै-
र्निरुक्तमनुब्रूयात्०अर्धर्चशोऽनुब्रूयात्०अथ वै पङ्क्तेः पञ्च पदानि कथं सार्धर्चशोऽनूक्ता भवतीति।
प्रणव उत्तरयोस्तृतीयः तथा सार्धर्चशोऽनूक्ता भवति । आग्नेयं क्रतुमन्वाह० उषस्यमन्वाह०आश्विन-
मन्वाह० गायत्रीमन्वाह० अनुष्टुभमन्वाह० त्रिष्टुभमन्वाह० बृहतीमन्वाह० उष्णिहमन्वाह०
जगतीमन्वाह० पङ्क्तिमन्वाह० अनिरुक्तया प्रतिपद्यते० आपो रेवतीरिति प्रतिपद्यते० उप-
प्रयन्तो अध्वरमित्युपसंदधाति० यत्र वा समानस्यार्षेयः स्यात्तदनवानं संक्रामेत्० शुद्धः
प्रणवः स्यात्प्रजाकामानां मकारान्तः प्रतिष्ठाकामानाम् । मकारान्तः प्रणवः स्यादिति हैक आहुः।
शुद्ध इति त्वेव स्थितः । मीमांसितः प्रणवोऽथात इह शुद्ध इह पूर्ण इति। शुद्ध एव प्रणवः
स्याच्छस्त्रानुवचनयोर्मध्य इति ह स्माह कौषीतकिः० समानोदर्काण्युत्तमानि क्रतूनां पाङ्क्तान्य-
न्वाह० अभूदुषा रुशत्पशुरित्याशीर्वत्या परिदधाति० तस्यां वाचमुत्सृजति० अया वाजं देवहितं
सनेमेति द्विपदामभ्यस्यति० त्रिःसप्तानि क्रतूनां छन्दांस्यन्वाह तदेकविंशतिः० शतमात्रमनु-
ब्रूयात्० विंशतिशतमनुब्रूयात्० त्रीणि षष्टिशतान्यनुब्रूयात्० सप्तविंशतिशतान्यनुब्रूयात्०

1. होता जपति ।

सहस्रमनुब्रूयात्० त्रीणि वा एतानि साहस्राण्यधियज्ञं प्रातरनुवाक आश्विनं[1] महदुक्थं[2] महाव्रतमुपाकुर्यात् पुरा वाचो विसर्गात्० न प्रातरनुवाकं चोपांश्वन्तर्यामौ चान्तरेण वाचं विसृजेत० तद्धैके छन्दसां योग इति जपित्वाथापो रेवतीरिति प्रतिपद्यन्ते। नापो रेवत्यै पुरस्तात् किंचन परिहरेदिति तदिह स्थितम्०॥

तैसं [ ६.४.३ ]—सर्वाणि छन्दाꣳस्यन्वाह० गायत्रिया तेजस्कामस्य परि दध्यात् त्रिष्टुभेन्द्रियकामस्य जगत्या पशुकामस्यानुष्टुभा प्रतिष्ठाकामस्य पङ्क्त्या यज्ञकामस्य विराजान्नकामस्य॥

तैब्रा [१.५.९.७]— तꣳ सप्तभिश्छन्दोभिः प्रातरह्वयन्। तस्मात् सप्त चतुरुत्तराणि छन्दाꣳसि प्रातरनुवाकेऽनूच्यन्ते॥

[ १.५.१२ ]—सोऽब्रवीत् प्रजापतिः। छन्दाꣳसि रथो मे भवत। युष्माभिरहमेतमध्वानमनुसंचराणीति। तस्य गायत्री च जगती च पक्षावभवताम्। उष्णिक् च त्रिष्टुप् च प्रष्ट्यौ। अनुष्टुप्च पङ्क्तिश्च धुर्यौ। बृहत्येवोद्धिरभवत्। स एतं छन्दोरथमास्थाय। एतमध्वानमनुसमचरत्। एतꣳ ह वै छन्दोरथमास्थाय। एतमध्वानमनुसंचरति। येनैष एतत्संचरति। य एवं विद्वान् सोमेन यजते। य उ चैनमेवं वेद॥

मैसं [ ४.५.३ ]— पुरा वाचः प्रवदितोः प्रातरनुवाकमन्वाह० न वा एतर्हि यजमानो हस्ता अवनेनिक्ते। यदप्सुमतीं प्रथमामन्वाह० सोममुपावहृत्यान्वाह० अनुष्टुप्प्रतिपत्कानि छन्दांसि कुर्याद्यज्ञावकीर्णस्य० समया त्रिष्टुभं च जगतीं चानुब्रूयात् पशुकामस्य० सर्वाणि छन्दांस्यन्वाह० व्युष्टायां पुरा सूर्यस्योदेतोरनुब्रूयात्० शतमनुब्रूयादायुःकामस्य० सप्त च शतानि विंशतिं चानुब्रूयात् पशुकामस्य० सहस्रमनुब्रूयात् स्वर्गकामस्य० अपरिमिता अन्वाह० पङ्क्त्या परिदधाति०॥

[ ४.६.२ ]—आश्विनीभिरभिष्टुवन्ति०॥

जैउब्रा [ ३.१६ ]—तस्माद् ब्रह्मा प्रातरनुवाक उपाकृते वाचंयम आसीतापरिधानीयायाः ०॥

**अशौसं—**

**यदस्मृति चकृम किं चिदग्न उपारिम चरणे जातवेदः।**
**ततः पाहि त्वं नः प्रचेतः शुभे सखिभ्यो अमृतत्वमस्तु नः॥ ७.१११.१**
**पातं न इन्द्रापूषणादितिः पान्तु मरुतः।**
**अपां नपात्सिन्धवः सप्त पातन पातु नो विष्णुरुत द्यौः॥**

१. अतिरात्रे। २. महाव्रते।

पातां नो द्यावापृथिवी अभिष्टये पातु ग्रावा पातु सोमो नो अंहसः ।
पातु नो देवी सुभगा सरस्वती पात्वग्निः शिवा ये अस्य पायवः ॥
पातां नो देवाश्विना शुभस्पती उषासानक्तोत न उरुष्यताम् ।
अपां नपादभिहुती गयस्य चिद्देव त्वष्टर्वर्धय सर्वतातये ॥
त्वष्टा मे दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः ।
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रायमाणं सहः ॥
अंशो भगो वरुणो मित्रो अर्यमादितिः पान्तु मरुतः ।
अप तस्य द्वेषो गमेदभिहुतो यावयच्छत्रुमन्तितम् ॥
धिये समश्विना प्रावतं न उरुष्या ण उरुज्मन्नप्रयुच्छन् ।
द्यौष्पितर्यावय दुच्छुना या ॥
उदेनमुत्तरं नयाग्ने घृतेनाहुत ।
समेनं वर्चसा सृज प्रजया च बहुं कृधि ॥
इन्द्रेमं प्रतरं कृधि सजातानामसद्वशी ।
रायस्पोषेण सं सृज जीवातवे जरसे नय ॥
यस्य कृण्मो हविर्गृहे तमग्ने वर्धया त्वम् ।
तस्मै सोमो अधि ब्रवदयं च ब्रह्मणस्पतिः ॥
योऽस्मान् ब्रह्मणस्पतेऽदेवो अभिमन्यते ।
सर्वं तं रन्धयासि मे यजमानाय सुन्वते ॥
यो नः सोम सुशंसिनो दुःशंस आदिदेशति ।
वज्रेणास्य मुखे जहि स संपिष्टो अपायति ॥
यो नः सोमाभिदासति सनाभिर्यश्च निष्ट्यः ।
अप तस्य बलं तिर महीव द्यौर्वधत्मना ॥ ६.३–६

अपैसं—

यदस्मृति चकृमा किं च तेनोपारिम चरणैर्जातवेदः । तस्मात् .... ॥ २०.७.९॥ पातं न इन्द्रापूषणा वरुणः....॥ पातां नो .... सुहवा सरस्वती पात्वग्निर्ये शिवा अस्य पायवः ॥ पातां नो देवाश्विना सुदंससा....। अपां नपाद् विह्वती गयस्य चिद्देवो सूवन्दधिते शर्म यच्छ नः ॥ १९.१.१४–१६ ॥ त्वष्टा मे .... त्रायमाणे शवा ॥ अंशो भगो .... पात्वंहसः । .... गमयेदाहुतो .... ॥ देव त्वष्टर्वर्धय सर्वतातये धिये समु श्रिये प्रावृचाहुः । उरुष्या णो रुचिरः प्रयच्छन् द्यौः पितर्यावय

दुच्छुनामितः॥ १९.२.१–३॥ उदेनमुत्तरं नयाग्ने घृतेभिराहुतः। .... देवानां भागधा असत्॥ इन्द्रेमं .... प्रजया च बहुं कृधि॥ यस्य कृण्मो गृहे हविस्तमग्ने .... अधि ब्रुवदयं .... ॥१९.३.१३–१५॥ योऽस्मान् .... अभिदासति। सर्वं तं रीसिसि नः॥ १९.३.१०॥ यो नः सोम सुशंसिनो दुःशंसो अभिदासति। ....॥ यो नः सोमाभिदासति सनाभिर्याश्च निष्टयाः। .... ॥ १९.२.८–९

## ५४. सुत्योपक्रमौद्गात्रम्

### यज्ञसारथि[1]

साकौसं [ १.१.२.२.४ ]—

इमꣳ स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया।
भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषामा वयं तव॥

३२ ३ ५ ३२ ३ ५ १ २२१२ १ ३२ ३ ५
इमꣳस्तो२३४माम्। अर्हाते२३४जा। तावेद‧से३। होइ। रथामी२३४वा।
२ ३ ५ १ २१२ १ ३२ ३ ५ २ २ ३ ५
सम्माहे२३४मा। मानीषया३। होइ। भद्राही२३४नाः। प्रमाती२३४रा।
१२१२ १ ३२ ३ ५ २ ३ ५ १२११
स्यासꣳसदे३। होइ। अग्नाइसा२३४ख्याइ। माराइषा२३४मा। वायन्तवा३।
१
हो२३४५इ। डा॥ [ ग्राम २.१.३८ ]

### गायत्रम्[2]

साकौसं [ २.९.२.७.२–३ ]—

युञ्जे वाचꣳ शतपदीं गाये सहस्रवर्तनि। गायत्रं त्रैष्टुभं जगत्॥
गायत्रं त्रैष्टुभं जगद्विश्वा रूपाणि संभृता। देवा ओकाꣳसि चक्रिरे॥

२र२ र र र र र र
युञ्जेवाचꣳशतपदोम्। गायेसहस्रवर्तनिगायत्रन्त्रैष्टुभञ्जगद्विश्वारूपाणिसंभार्ता२।
२र१२र र २ १ – १ २ १११
दे‧वाओकाꣳसिचा१२१२। हुम्आ२। क्राइरो। आ३४५॥

---

१. प्रातरनुवाकोपक्रमात् पूर्वमाज्यग्रहणकाले प्रस्तोतृसाम। त्रिर्गायेत्।

२. यदा अध्वर्युः प्रातरनुवाकमुपाकरोति तत्पूर्वम् उद्गाता एतत्सामरूपा विश्वरूपाः सकृद् गायेत्।

षब्रा [ १.२ ]—प्रातरनुवाक उपाकृते विसर्ँ स्थिते च यज्ञे[1] सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति० ॥

[ १.४ ]—**अध्वर्यो** इत्याहोद्गाता **मा स्म मेऽनिवेद्य होत्रे प्रातरनुवाकमुपाकरोः** इति। सोऽध्वर्युः प्राह। स हूतो व्रजति स पूर्वया द्वारा हविर्धाने प्रपद्यते स दक्षिणस्य हविर्धानस्योत्तरं चक्रमभ्यपाश्रयमाग उदङ्ङासीनो विश्वरूपा गायति० एतद्ध स्माह ग्लावो मैत्रेयः प्राह्णे वा अद्याहं पाववसीयसं व्याकरिष्यामीति स ह स्म सदस्येवोपवसथ्येऽहन्युदङ्ङासीनो विश्वरूपा गायति० युञ्जे वाचं शतपदीमित्याह० ॥

## गायत्रम्[2]

साजैसं [ ३.१.१–२ ]

नमः पितृभ्यः पूर्वसद्भ्यो नमः साकंनिषद्भ्यः ।
युञ्जे वाचर्ँ शतपदीं गये सहस्रवर्तनि ॥
गायत्रं त्रैष्टुभं जगद् विश्वा रूपाणि संभृतम्। देवा ओकार्ँ सि चक्रिरे ॥

**नमःपितृभ्यःपूर्वसद्भ्योम् । नमस्साकन्निषद्भ्याय युञ्जेवाचार्ँशाताहम्भा ।**
श्रच टच सच ट सट च श
**ओवा ॥ युञ्जेवाचर्ँशतपदोम् । गाँयेसहस्रवर्तनीङ्गायत्रन्त्रायिष्टूभाहम्भा । ओवा ॥**
स टच च श्रच टच च ट सट च श स टच
**गायत्रन्त्रैष्टुभञ्जगोम् । विश्वारूपाणिसम्भातोदेवाओकार्ँसयिचाहम्भा। ओवा ॥**
च श्रच टचच ट सट च श स टच

जैब्रा [ १.८४ ]—एषा वै यज्ञस्य द्वार्यदन्तराग्नीध्रं च चात्वालं च। तयाभ्यवेयात्। तयोदेयात्० तामभ्यवयन् ब्रूयात् **धा असि सुधां मे धेहि ॥ आयुष्मन्तस्त्वद् वर्चस्वन्त उद्गेष्म** इति।

[ १.७३–७४ ][3]—तं[4] प्रत्यगृह्णात् **देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि** इति० तं प्रतिगृह्यापवयत् **वसवस्त्वा पुनन्तु गायत्रेण छन्दसा सुप्रजावनिं रायस्पोषवनिम् ॥ रुद्रास्त्वा पुनन्तु त्रैष्टुभेन छन्दसा सुप्रजावनिं रायस्पोषवनिम् ॥ आदित्यास्त्वा पुनन्तु जागतेन छन्दसा सुप्रजावनिं रायस्पोष-**

---

१. अहर्गणे।
२. यदा अध्वर्युः प्रातरनुवाकमुपाकरोति तत्पूर्वम् उद्गाता एतत्सामरूपा विश्वरूपाः सकृद् गायेत्।
३. जैब्रा १.७५–७६ इत्यत्रापि ब्राह्मणं द्रष्टव्यम्।
४. तं द्रोणकलशं बृहस्पतिः प्रत्यगृह्णात्।

**वनिम्** इति० तं पवयित्वा पश्चादक्षꣳ सादयति **बार्हस्पत्यमसि वानस्पत्यं प्रजापतेर्मूर्धा-त्यायुपात्रम्** इति० तं पश्चादक्षं सादयित्वा गायत्रं विश्वरूपासु गायति नमः पितृभ्यः पूर्वसद्भ्यो नमः साकंनिषद्भ्यः। युञ्जे वाचꣳ शतपदीं गये सहस्रवर्तनि॥ गायत्रं त्रैष्टुभं जगद् विश्वा रूपाणि संभृतम्। देवा ओकाꣳसि चक्रिर इति०॥

छांउ [ २.२४.३–६ ]—पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवꣳ सामाभिगायति॥ **लो३कद्वारमपावा३र्णू३३। पश्येम त्वा वयꣳ रा३३३३३हु३म् आ३३ज्या३यो३आ३२१११** इति॥ अथ जुहोति **नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्मि। अत्र यजमानः परस्तादायुषः स्वाहा॥ अपजहि परिघम्** इत्युक्त्वोतिष्ठति०॥

## ५५. अपां ग्रहणम्

**तैसं [ १.३.१३ ]—**

**शृणोत्वग्निः समिधा हवं मे शृणन्त्वापो धिषणाश्च देवीः।**
**शृणोत ग्रावाणो विदुषो नु यज्ञꣳ शृणोतु देवः सविता हवं मे॥**

**देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं देवेभ्यो देवत्रा धत्त शुक्रꣳ शुक्रपेभ्यो येषां भागः स्थ स्वाहा॥ कार्षिरस्यपापां मृध्रम्॥ समुद्रस्य वोऽक्षित्या उन्नये॥**

**यमग्ने पृत्सु मर्त्यमावो वाजेषु यं जुनाः। स यन्ता शश्वतीरिषः॥**

[६.४.३]—**अप इष्य होतः** इत्याह० **मैत्रावरुणस्य चमसाध्वर्यवा द्रव** इत्याह० होतृचमसं च मैत्रावरुणचमसं च सꣳस्पर्श्य वसतीवरीर्व्यानयति० **अध्वर्योऽवेरपा३** इत्याह **उतेमनन्नमुरुतेमाः पश्य** इति वावैतदाह। यद्यग्निष्टोमो जुहोति॥

**[ ३.५.६.२ ]—**

**प्रेद्युदेह्यृतस्य वामीरन्वग्निस्तेऽग्रं नयत्वदितिर्मध्यं ददताꣳ रुद्रावसृष्टासि युवा नाम मा मा हिꣳसीः॥ वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीर् [ गृह्णामि ]॥**

**मैसं [ १.३.१ ]—**

**शृणोत्वग्निः समिधा ....॥ देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं देवेभ्यः शुक्रपेभ्यो दात येषां भाग स्थ स्वाहा॥ कार्ष्यसि॥ समुद्रस्य**

वोऽक्षित्या उन्नये ॥ वसूनाᳪ रुद्राणामादित्यानां पन्नेजनी स्थ ॥ वसवो रुद्रा आदित्या एता वः पन्नेजनीः ॥

यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः ॥

[ ४.५.२ ]—प्रचरण्यामग्रे गृह्णाति० अप इष्य होतः इति० मैत्रावरुणस्य चमसेनाच्छैति० यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयात् तदपोऽध्वर्युर्गृह्णीयात्० अथ यञ्जुहोति० तृणं प्रास्य जुहोति० कार्ष्यसीत्याहुतिमपप्लावयति। समुद्रस्य वोऽक्षित्या उन्नया इत्युपमारयति० या मैत्रावरुणस्य चमसे याश्च निग्राभ्यास्ता उभयीरुपरिष्टाचात्वालस्य समनक्ति० चात्वालान्निर्गृह्यन्ते० अवेरपोऽध्वर्या३ओम् इति० उतेमनम्नमुरुतेमं पश्य० यद्यग्निष्टोमो जुहोति० ॥

कासं [ ३.९ ]—

शृणोत्वग्निस्समिधा .... ॥ देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं देवेभ्यो देवत्रा दात शुक्रपेभ्यो येषां भागस्स्थ स्वाहा ॥ कार्ष्यसि ॥ समुद्रस्य वोऽक्षित्या उन्नये ॥ सं वो दधातु वरुणो मित्रो अग्निस्समिन्द्रस्सं बृहस्पतिः । त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधातु ॥ यथाधुरं धुरो धूर्भिः कल्पन्ताम् ॥ यमग्ने पृत्सु मर्त्यमवा .... शश्वतीरिषस्स्वाहा ॥ वसूनां रुद्राणामादित्यानां पन्नेजनीस्स्थ ॥ वसवो रुद्रा आदित्या एता वः पन्नेजनीः ॥

कपिसं [ २.१६ ]—

शृणोत्वग्निः .... विदुषो न .... ॥ --- ॥ कर्षिरसि ॥ समुद्रस्य वोऽक्षित्या उन्नये ॥ यमग्ने .... शश्वतीरिषः ॥ वसूनां .... ॥ --- ॥

वामासं—

शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः ।

श्रोता ग्रावाणो विदुषो न यज्ञᳪ शृणोतु देवः सविता हवं मे स्वाहा ॥

देवीरापो अपां नपाद्यो वं ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमः । तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भाग स्थ स्वाहा ॥ कार्षिरसि ॥ समुद्रस्य त्वाक्षित्या उन्नयामि ॥ समापो अद्भिरग्मत समोषधीभिरोषधीः ॥ यमग्ने पृत्सु मर्त्यमवा .... शश्वतीरिषः स्वाहा ॥ ६.२६-२९

माशब्रा [ ३.९.३.११–३४ ]—स यत्र होता प्रातरनुवाकं परिदधाति तत्प्रचरणीति स्रुग्भवति तस्यां चतुर्गृहीतमाज्यं गृहीत्वा जुहोति० स जुहोति शृणोत्वग्निः समिधा हवं मे .... इति० अथापरं चतुर्गृहीतमाज्यं गृहीत्वोदङ् प्रयन्नाह अप इष्य होतः इति० अथ

संप्रेष्यति **मैत्रावरुणस्य चमसाध्वर्यवेहि । नेष्टः पत्नीरुदानय । एकधनिन एत । अग्नीच्चात्वाले वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन च** इति० त उदञ्चो निष्क्रामन्ति जघनेन चात्वालमग्रेणाग्नीध्रम् । स यस्यां ततो दिश्यापो भवन्ति तद्यन्ति । ते वै सह पत्नीभिर्यन्ति० सोऽपोऽभिजुहोति० स जुहोति देवीरापो अपां नपाद् .... इति० अथ मैत्रावरुणचमसेनैतामाहुतिमपप्लावयति कार्षिरसीति० अथ गृह्णाति समुद्रस्य त्वाक्षित्या उन्नयामीति० तदन्वेकधनानुन्नयन्ति । तदनु पात्नेजनान्० मैत्रावरुणचमसेन गृह्णाति० त आयन्ति । प्रत्युपतिष्ठतेऽग्नीच्चात्वाले वसतीवरीभिश्च होतृचमसेन च । स उपर्युपरि चात्वालꣳ सꣳस्पर्शयति वसतीवरीश्च मैत्रावरुणचमसं च समापो अद्भिरग्मत समोषधीभिरोषधीरिति० तद्धैक ऐव मैत्रावरुणचमसे वसतीवरीर्नयन्ति । आ मैत्रावरुणचमसाद् वसतीवरीषु० तदु तथा न कुर्यात्० अथ होतृचमसे वसतीवरीर्गृह्णाति निग्राभ्याम्यः० त आयन्ति । तꣳ होता पृच्छति **अध्वर्योऽवेरपा३** इति० तं प्रत्याह **उतेव नन्नमुः** इति० स यद्यग्निष्टोमः स्याद् यदि प्रचरण्याꣳ सꣳस्रवः परिशिष्टोऽलꣳ होमाय स्यात् तं जुहुयात् । यद्यु नालꣳ होमाय स्यादपरं चतुर्गृहीतमाज्यं गृहीत्वा जुहोति यमग्ने पृत्सु .... शश्वतीरिषः स्वाहेति । आग्नेय्या जुहोति० अयुजा अयुजा एकधना भवन्ति । त्रयो वा पञ्च वा । पञ्च वा सप्त वा । सप्त वा नव वा । नव वैकादश वा । एकादश वा त्रयोदश वा । त्रयोदश वा पञ्चदश वा० ॥

**वाकासं—**

**शृणोत्वग्निः .... ॥ देवीरापो .... देवत्रा दात .... ॥ --- ॥ ६.७.३-७**

काशब्रा [४.९.३.१०-२६]— ---तꣳ होता पृच्छति **अवेरपोऽध्वर्यो** इति ---॥

**तांब्रा [ १.१.७-९ ]—**

**मृदा शिथिरा देवानां तीर्थं वेदिरसि मा मा हिꣳसीः ॥ विष्णोः शिरोऽसि यशोधा यशो मयि धेहि ॥ इष ऊर्जे आयुषे वर्चसे च ॥**

## ५६. अपोनप्त्रीयाद्यनुवचनम्

**ऋसं—**

**प्र देवत्रा ब्रह्मणे गातुरेत्वपो अच्छा मनसो न प्रयुक्ति ।**
**महीं मित्रस्य वरुणस्य धासिं पृथुज्रयसे रीरधा सुवृक्तिम् ॥**
**अध्वर्यवो हविष्मन्तो हि भूताच्छाप इतोशतीरुशन्तः ।**
**अव याश्चष्टे अरुणः सुपर्णस्तमास्यध्वमूर्मिमद्या सुहस्ताः ॥**
**अध्वर्यवोऽप इता समुद्रमपां नपातं हविषा यजध्वम् ।**
**स वो ददूर्मिमद्या सुपूतं तस्मै सोमं मधुमन्तं सुनोत ॥**

यो अनिध्मो दीदयदप्स्वन्तर्यं विप्रास ईळते अध्वरेषु ।
अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय ॥
याभिः सोमो मोदते हर्षते च कल्याणीभिर्युवतिभिर्न मर्यः ।
ता अध्वर्यो अपो अच्छा परेहि यदासिञ्चा ओषधीभिः पुनीतात् ॥
एवेद्यूने युवतयो नमन्त यदीमुशन्नुशतीरेत्यच्छ ।
सं जानते मनसा सं चिकित्रेऽध्वर्यवो धिषणापश्च देवीः ॥
यो वो वृताभ्यो अकृणोदु लोकं यो वो मह्या अभिशस्तेरमुञ्चत् ।
तस्मा इन्द्राय मधुमन्तमूर्मिं देवमादनं प्र हिणोतनापः ॥
प्रास्मै हिनोत मधुमन्तमूर्मिं गर्भो यो वः सिन्धवो मध्व उत्सः ।
घृतपृष्ठमीड्यमध्वरेष्वापो रेवतीः शृणुता हवं मे ॥
तं सिन्धवो मत्सरमिन्द्रपानमूर्मिं प्र हेत य उभे इयर्ति ।
मदच्युतमौशानं नभोजां परि त्रितन्तुं विचरन्तमुत्सम् ॥ १०.३०.१–९
हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम् ।
ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः ॥ १०.३०.११
आववृततीरध नु द्विधारा गोषुयुधो न नियवं चरन्तीः ।
ऋषे जनित्रीर्भुवनस्य पत्नीरपो वन्दस्व सवृधः सयोनीः ॥ १०.३०.१०
प्रति यदापो अदृश्रमायतीर्घृतं पयांसि बिभ्रतीर्मधूनि ।
अध्वर्युभिर्मनसा संविदाना इन्द्राय सोमं सुषुतं भरन्तीः ॥ १०.१०.१३
आ धेनवः पयसा तूर्ण्यर्था अमर्धन्तीरुप नो यन्तु मध्वा ।
महो राये बृहतीः सप्त विप्रो मयोभुवो जरिता जोहवीति ॥ ५.४३.१
समन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति ।
तमू शुचिं शुचयो दीदिवांसमपां नपातं परि तस्थुरापः ॥ २.३५.३
आपो न देवीरुप यन्ति होत्रियमवः पश्यन्ति विततं यथा रजः ।
प्राचैर्देवासः प्र णयन्ति देवयुं ब्रह्मप्रियं जोषयन्ते वरा इव ॥ १.८३.२
अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् । पृञ्चतीर्मधुना पयः ॥
अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् ॥
अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः। सिन्धुभ्यः कर्त्वं हविः॥ १.२३.१६-१८
एमा अग्मन् रेवतीर्जीवधन्या अध्वर्यवः सादयता सखायः ।
नि बर्हिषि धत्तन सोम्यासोऽपां नप्त्रा संविदानास एनाः ॥

**आग्मन्नाप उशतीर्बर्हिरेदं न्यध्वरे असदन् देवयन्तीः।**
**अध्वर्यवः सुनुतेन्द्राय सोममभूदु वः सुशका देवयज्या॥ १०.३०.१४–१५**

ऐब्रा [ २.१९–२० ] ऋषयो वै सरस्वत्यां सत्रमासत। ते कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्येऽदीक्षिष्टेति। तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति। स बहिर्धन्वोदूळ्हः पिपासया वित्त एतदपोनप्त्रीयमपश्यत् प्र देवत्रा ब्रह्मणे गातुरेत्विति० तत्संततमनुब्रूयात्० तस्य त्रिः प्रथमां संततमन्वाह० ता एता नवानन्तरायमन्वाह। हिनोता नो अध्वरं देवयज्येति दशमीम्। आववृततीरध नु द्विधारा इत्यावृत्तास्वेकधनासु। प्रति यदापो अदृश्रमायतीरिति प्रतिदृश्यमानासु। आ धेनवः पयसा तूर्ण्यर्था इत्युपायतीषु। समन्या यन्त्युप यन्त्यन्या इति समायतीषु० आपो न देवीरुप यन्ति होत्रियमिति होतृचमसे समवनीयमानास्वन्वाह वसतीवरीष्वेकधनासु च। **अध्वर्योऽध्वर्या३ उ** इति होताध्वर्युं पृच्छति० **उतेमनन्नमुः** इत्यध्वर्युः प्रत्याह० **तास्वध्वर्यो इन्द्राय सोमं सोता मधुमन्तं वृष्टिवनिं तीव्रान्तं बहुरमध्यं वसुमते रुद्रवत आदित्यवत ऋभुमते विभुमते वाजवते बृहस्पतिवते विश्वदेव्यावते। यस्येन्द्रः पीत्वा वृत्राणि जङ्घनत् प्र स जन्यानि तारिषो३म्** इति प्रत्युत्तिष्ठति० अनुपर्यावृत्याः० अम्बयो यन्त्यध्वभिरित्येतामनुब्रुवन्ननु प्रपद्येत० अमूर्या उप सूर्ये याभिर्वा सूर्यः सहेति तेजस्कामो ब्रह्मवर्चसकामः। अपो देवीरुप ह्वये यत्र गावः पिबन्ति न इति पशुकामः। ता एताः सर्वा एवानुब्रुवन्ननुप्रपद्येत० एमा अग्मन् रेवतीर्जीवधन्या इति साद्यमानास्वन्वाह वसतीवरीष्वेकधनासु च। आग्मन्नाप उशतीर्बर्हिरेदमिति सन्नासु। स एतया परिदधाति॥

**ऋसं—**

**प्र देवत्रा ब्रह्मणे.... ॥१०.३०.१-९॥ हिनोता नो अध्वरं....॥१०.३०.११॥ आववृततीरध .... ॥ १०.३०.१० ॥ प्रति यदापो अदृश्रम् ....॥ १०.३०.१३ ॥ समन्या यन्त्युप .... ॥ २.३५.३ ॥ आपो न देवीरुप.... ॥ १.८३.२ ॥ आ धेनवः पयसा.... ॥ ५.४३.१ ॥ अम्बयो यन्त्यध्वभिः .... ॥ १.२३.१६-१८ ॥ एमा अग्मन् रेवतीः.... ॥ १०.३०.१४-१५**

शांब्रा [ १२.१–३ ]—तद्यदप उच्छ्रयन्ति० एतत् कवषः सूक्तमपश्यत् पञ्चदशर्चं प्र देवत्रा ब्रह्मणे गातुरेत्विति तदन्वब्रवीत्० अथादोऽमुत्रास्वध्वर्युराहुतिं जुहोति तां संप्रत्येतामनुब्रूयात् हिनोता नो अध्वरं देवयज्येति० आववृततीरध नु द्विधारा इत्यावृत्तासु। प्रति यदापो अदृश्रमायतीरिति प्रतिख्यातासु। समन्या यन्त्युपयन्त्यन्या इति समायतीषु० आपो न देवीरुपयन्ति होत्रियमिति होतृचमसेऽवनीयमानासु। आ धेनवः पयसा तूर्ण्यर्था इति०

अथाध्वर्युर्होतारमभ्यावृत्य तिष्ठति तं होता पृच्छति अध्वर्यवेषीरपा३ इति० उतेव नन्नमुः इति प्रत्याह० प्रत्युक्तो होतैतं निगदं[1] प्रतिपद्यते० अम्बयो यन्त्यध्वभिरिति० एमा अग्मन् रेवती-र्जीवधन्या इत्यागतासु। आग्मन्नाप उशतीर्बर्हिरेदमित्यागतवत्या परिदधाति। अभिरूपा अन्वाह० विंशतिमन्वाह० त्रिः प्रथमया त्रिरुत्तमया० ॥

अशौसं—

अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम्। पृञ्चतीर्मधुना पयः ॥
अमूर्या उप सूर्ये याभिर्वा सूर्यः सह। ता नो हिन्वन्त्वध्वरम् ॥
अपो देवीरुपह्वये यत्र गावः पिबन्ति नः। सिन्धुभ्यः कर्त्वं हविः ॥
अप्स्वन्तरमृतमप्सु भेषजम्।
अपामुत प्रशस्तिभिरश्वा भवथ वाजिनो गावो भवथ वाजिनीः ॥
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः ॥
ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम्। अपो याचामि भेषजम् ॥
शं नो देवीरभिष्टय आपो भवन्तु पीतये। शं योरभि स्रवन्तु नः ॥
अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशंभुवम् ॥
आपः पृणीत भेषजं वरूथं तन्वे मम। ज्योक् च सूर्यं दृशे ॥
शं न आपो धन्वन्याः शमु सन्त्वनूप्याः।
शं नः खनित्रिमा आपः शमु याः कुम्भ आभृताः
शिवा नः सन्तु वार्षिकीः ॥ १.४–६

अपैसं—

आपो हि ष्ठा ....॥ १९.४५.८–१०

## ५७. दाधिग्रहप्रचारः अदाभ्यांशुप्रचारश्च

तैसं [ ३.५.८ ]—

उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्योऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्यः ॥ दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा ॥ अपेन्द्र द्विषतो मनोऽप जिज्यासतो जह्यप यो नोऽरातीयति तं जहि ॥ प्राणाय त्वापानाय त्वा व्यानाय

1. अयं निगदः शाङ्खाश्रौ० ६.७.१० इत्यत्र द्रष्टव्यः।

त्वा सते त्वासते त्वाद्भ्यस्त्वौषधीभ्यो विश्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अक्खिद्रा अजायन्त तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि ॥

[ ३.५.९ ]—प्राजापत्यं दधिग्रहं गृह्णीयात्० आज्यग्रहं गृह्णीयात् तेजस्कामस्य० सोमग्रहं गृह्णीयाद् ब्रह्मवर्चसकामस्य० दधिग्रहं गृह्णीयात् पशुकामस्य० ॥

[ ६.६.९-१० ]— यस्यैवं विदुषोऽदाभ्यो गृह्यते० उपनद्धस्य गृह्णाति० अनभिषुतस्य गृह्णाति० अँशूनपि सृजति० यस्यैवं विदुषोऽँशुर्गृह्यते० सकृदभिषुतस्य गृह्णाति० मनसा गृह्णाति० औदुम्बरेण गृह्णाति० चतुःस्रक्ति भवति० वामदेव्यमिति साम० मनसा गायमानो गृह्णाति० अनवानं गृह्णाति० हिरण्यमभि व्यनिति० शतमानं भवति० ॥

[ ३.३.३ ]—

वसवस्त्वा प्र वृहन्तु गायत्रेण छन्दसाग्नेः प्रियं पाथ उपेहि । रुद्रास्त्वा प्र वृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथ उपेहि । आदित्यास्त्वा प्र वृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि ॥ मान्दासु ते शुक्र शुक्रमा धूनोमि ॥ भन्दनासु [ ते शुक्र शुक्रमा धूनोमि ॥ ] कोतनासु [ ते शुक्र शुक्रमा धूनोमि ॥ ] नूतनासु [ते शुक्र शुक्रमा धूनोमि ॥] रेशीषु [ते शुक्र शुक्रमा धूनोमि ॥] मेशीषु [ते शुक्र शुक्रमा धूनोमि ॥] वाशीषु [ते शुक्र शुक्रमा धूनोमि ॥] विश्वभृत्सु [ते शुक्र शुक्रमा धूनोमि ॥] माध्वीषु [ते शुक्र शुक्रमा धूनोमि ॥] ककुहासु [ते शुक्र शुक्रमा धूनोमि ॥] शक्वरीषु [ते शुक्र शुक्रमा धूनोमि ॥] शुक्रासु ते शुक्र शुक्रमा धूनोमि॥ शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः । आस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चत ॥ ककुहँ रूपं वृषभस्य रोचते बृहत् ॥ सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः ॥ यत् ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ॥ उशिक् त्वं देव सोम गायत्रेण छन्दसाग्नेः प्रियं पाथो अपीहि । वशी त्वं देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीहि । अस्मत्सखा त्वं देव सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथो अपीहि ॥

आ नः प्राण एतु परावत आन्तरिक्षाद्दिवस्परि ।
आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा ॥
इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः ।
वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना ॥
दधन्वे वा यदीमनु वोचद् ब्रह्माणि वेरु तत् ।
परि विश्वानि काव्या नेमिश्चक्रमिवाभवत् ॥

[ ३.३.४ ]—योऽदाभ्यं गृहीत्वा सोमाय जुहोति० योऽंशुं गृह्णाति० हिरण्यमभि-व्यनिति० शतमानं भवति० अप उप स्पृशति० ॥

मैसं [ १.३.३५ ]—

उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि शतं देवेभ्यो दक्षाय दक्षवृधमग्निह्वरेभ्यस्त्वा ऋतायुभ्या इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्यः पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वाद्भ्यस्त्वौषधीभ्यो वनस्पतिभ्यस्त्वा प्राणाय त्वापानाय त्वा व्यानाय त्वा सते त्वासते त्वा भूताय त्वा भव्याय त्वा ॥ येन प्रजा अछिद्रा अजायन्त तस्मै त्वा प्रजापतये विश्वकर्मणे विश्वव्यचसे विभूदाव्ने विभुं भागं जुहोमि स्वाहा ॥

तिस्रो जिह्वस्य समिधः परिज्मनोऽग्नेरकृण्वन्नुशिजो अमृत्यवे ।

तासामेकामदधुर्मर्त्ये भुजं लोकमु द्वे उप जामी ईयतुः ॥

कासं [ २९.५ ]—

उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधमग्निजिह्वेभ्यस्त्वर्तायुभ्यो वातापिभ्यः पर्जन्यात्मभ्य इन्द्रज्येष्ठेभ्यो वरुण-राजभ्यः पृथिव्यै त्वान्तरिक्षाय त्वा दिवे त्वा सते त्वासते त्वा भूताय त्वा भव्याय त्वा ॥ यतः प्रजा अखिद्रा अजायन्त तस्मै त्वा प्रजापतये विभुदाव्ने जुहोमि स्वाहा ॥

कपिसं [ ४५.६ ]—

उपयामगृहीतोऽसि .... ॥ यतः प्रजा अखिद्रा .... विभुदाम्ने .... ॥

## ५८. उपांशुग्रहप्रचारः

तैसं [ १.४.१ ]—

[ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ] आ ददे ॥ ग्रावास्यध्वरकृद् देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमँ सुषुतं मधु-मन्तं पयस्वन्तं वृष्टिवनिम् ॥ इन्द्राय त्वा वृत्रघ्ने ॥ इन्द्राय त्वा वृत्रतुरे ॥ इन्द्राय त्वाभिमातिघ्ने ॥ इन्द्राय त्वादित्यवते ॥ इन्द्राय त्वा विश्वदेव्यावते ॥ श्वात्राः स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतो-पहूतो युष्माकँ सोमः पिबतु ॥ यत्ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राया कृध्यधि दात्रे वोचः ॥ धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वाँ हिँसिषं मा मा हिँसिष्टम् ॥

[ १.४.२ ]—

वाचस्पतये पवस्व वाजिन् ॥ वृषा वृष्णो अᳪशुभ्यां गभस्तिपूतः ॥ देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वा ॥ स्वाङ्कृतोऽसि ॥ मधुमतीर्न इषस्कृधि ॥ विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः ॥ मनस्त्वाष्टु ॥ उर्वन्तरिक्षमन्विहि ॥ स्वाहा त्वा सुभवः सूर्याय ॥ देवेभ्यस्त्वा मरीचिपेभ्यः ॥ एष ते योनिः ॥ प्राणाय त्वा ॥

[ ६.४.४ ]—देवस्य त्वा सवितुः प्रसव इति ग्रावाणमा दत्ते० यदुपाᳪशुसवनमभि मिमीते० इन्द्राय त्वेन्द्राय त्वेति मिमीते० पञ्च कृत्वो यजुषा मिमीते० पञ्च कृत्वस्तूष्णीम्० अᳪशूनप गृह्णाति० ॥

[ ६.४.५ ]—यदुपाᳪश्वग्रा ग्रहा गृह्यन्ते० अष्टौ कृत्वोऽग्रेऽभिषुणोति० एकादश कृत्वो द्वितीयम्० द्वादश कृत्वस्तृतीयम्० अष्टावष्टौ कृत्वोऽभिषुत्यम्० यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचा हस्तेन नि मृज्यात्० यदि कामयेतावर्षुकः स्यादित्युत्तानेन नि मृज्यात्० यद्यभिचरेत् अमुं जह्यथ त्वा होष्यामि इति ब्रूयात्० यदि दूरे स्यादा तमितोस्तिष्ठेत्० यद्यभिचरेत् अमुष्य त्वा प्राणे सादयामि इति सादयेत्० षड्भिरᳪशुभिः पवयति० त्रिः पवयति० यत् त्रिरुपाᳪशुᳪ हस्तेन विगृह्णाति० ॥

[ ६.५.१०.१ ]—यत् त्रिरुपाᳪशुᳪ हस्तेन विगृह्णाति० ॥

[ ३.१.८ ]—निग्राभ्याः स्थ देवश्रुत आयुर्मे तर्पयत प्राणं मे तर्पयतापानं मे तर्पयत व्यानं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत मनो मे तर्पयत वाचं मे तर्पयतात्मानं मे तर्पयताङ्गानि मे तर्पयत प्रजां मे तर्पयत पशून् मे तर्पयत गृहान् मे तर्पयत गणान् मे तर्पयत सर्वगणं मा तर्पयत तर्पयत मा गणा मे मा वि तृषन्० अवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम । इन्द्रेण देवीर्वीरुधः संविदाना अनु मन्यन्ताᳪ सवनाय सोमम्० यो वै सोमस्याभिषूयमाणस्य प्रथमोऽᳪशुः स्कन्दति स ईश्वर इन्द्रियं वीर्यं प्रजां पशून् यजमानस्य निर्हन्तोः । तमभि मन्त्रयेत आ मास्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीः इति ॥

[ ३.२.१०.२ ]—

भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि ॥

[ ३.२.२.१ ]— उपाᳪशुᳪ हुत्वोपाᳪशुपात्रेऽᳪशुमवास्य तं तृतीयसवनेऽपिसृज्याभिषुणुयात्० ॥

तैब्रा [ ३.७.९.१ ]—

अनागसस्त्वा वयम् । इन्द्रेण प्रेषिता उप । वायुष्टे अस्त्वꣳशभूः । मित्रस्ते अस्त्वꣳशभूः । वरुणस्ते अस्त्वꣳशभूः ॥

[ १.४.१.२ ]—यदुपाꣳशुं जुहोति० ॥

मैसं [ १.३.२–३ ]—

निग्राभ्याः स्थ देवश्रुतस्तर्पयत मायुर्मे तर्पयत तर्पयत मा प्राणं मे तर्पयत तर्पयत मापानं मे तर्पयत तर्पयत मा व्यानं मे तर्पयत तर्पयत मा चक्षुर्मे तर्पयत तर्पयत मा श्रोत्रं मे तर्पयत तर्पयत मा मनो मे तर्पयत तर्पयत मा वाचं मे तर्पयत तर्पयत मात्मानं मे तर्पयत तर्पयत मा प्रजां मे तर्पयत तर्पयत मा गृहान् मे तर्पयत तर्पयत मा पशून् मे तर्पयत तर्पयत मा गणैर्मा मा वितीतृषत तर्पयत मा ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ ग्रावास्यध्वरकृद्देवेभ्यो गभीरमिममध्वरं कृधि ॥ इन्द्राय त्वा सुषुत्तमं मधुमन्तं पयस्वन्तम् ॥ इन्द्राय त्वाभिमातिघ्ने ॥ इन्द्राय त्वा वसुमते रुद्रवते ॥ इन्द्राय त्वादित्यवते ॥ अग्नये त्वा रायस्पोषदे विष्णवे त्वा ॥ श्येनाय त्वा सोमभृते विष्णवे त्वा ॥ श्वात्राः स्थ वृत्रतुरो राध्वं गूर्ता अमृतस्य पत्नीः । ता देवीर्देवत्रेमꣳ यज्ञं धत्तोपहूताः सोमस्य पिबत ॥ यत्ते सोम दिवि ज्योतिर्यत् पृथिव्याꣳ यदुरा अन्तरिक्षे तेनास्मै यज्ञपतय उरु राये कृध्यधि धात्रे वोचः ॥ मा भेर्मा सꣳविक्था ऊर्जं धत्स्वोर्जमस्मासु धेहि ॥ धिषणे ईडिते ईडेथा-मूर्जं दधाथामूर्जमस्मासु धत्तं मा वाꣳ हिꣳसिषं मास्मान् युवꣳ हिꣳसिष्टम् ॥

[ १.३.४ ]—

वाचस्पतये पवस्व विष्णो अꣳशुभ्यां गभस्तिपूतो देवो देवानां पवित्रमसि येषां भागोऽसि ॥ मधुमतीर्न इषस्कृधि ॥ स्वाङ्कृतोऽसि ॥ उर्वन्तरिक्षꣳ वीहि ॥ विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय ॥ देवेभ्यस्त्वा मरीचिपेभ्यः ॥ प्राणाय त्वा ॥

[ ४.५.४–५ ]—वसतीवरीभिः सोममाप्याययन्ति० निग्राभ्याभिरुपाꣳशुम्० अष्टौ कृत्वा प्रातरभिषुणोति० यदेकादश० यद् द्वादश० त्रिस्त्रिर्गृह्णाति० अनुपयामगृहीतो गृह्यते० अपवित्रपूतो गृह्यते० असन्नो हूयते० अꣳशुभिः पावयति० द्वाभ्यां द्वाभ्यां पावयति० ऊर्ध्व-स्तिष्ठन् जुहोति० यं द्विष्यात् तस्य जिह्मस्तिष्ठन् जुहुयात्० यद्यभिचरेदा तमितोस्तिष्ठेत्० यदि कामयेत वर्षेत् पर्जन्या इति परिमृज्योर्ध्वमुन्मृज्यात्० यदि कामयेत न वर्षेत् पर्जन्या इति परिमृज्यावाचीनमवमृज्यात्० नापिधेयः० यं द्विष्यात्तस्यापिदध्यात्० यद्यभिचरेत् इदमह-

मग्रुष्यामुष्यायणस्य प्राणमपिदधामि इत्यपिदध्यात्० इदमहममुष्यामुष्यायणस्य प्राणे सादयामि इत्यभिचरन्त्सादयेत्० प्राणाय त्वेत्यनभिचरन्त्सादयेत् ॥

कासं [ ३.१० ]—

निग्राभ्यास्स्थ देवश्रुतश्शुक्राश्शुक्रभृत आयुर्मे तर्पयत प्राणं मे तर्पयत व्यानं मे तर्पयतापानं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत वाचं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत गृहान् मे तर्पयत पशून् मे तर्पयत गणान् मे तर्पयत तृप्ता मा तर्पयत प्रीता मा प्रीणीत ते मे मा वितृषन् ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥ ग्रावाध्वरकृद्देवेभ्य ऊर्ध्वमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सुषुत्तमं मधुमन्तं पयस्वन्तम् ॥ इन्द्राय त्वाभिमातिघ्ने ॥ इन्द्राय त्वा सहोदे ॥ इन्द्राय त्वा वसुमते ॥ इन्द्राय त्वा रुद्रवते ॥ इन्द्राय त्वादित्यवते ॥ अग्नये त्वा रायस्पोषदे विष्णवे त्वा ॥ श्येनाय त्वा सोमभृते विष्णवे त्वा ॥ यत्ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरा अन्तरिक्षे तेनास्मै यज्ञपतय उरु राये कृध्यधि धात्रे वोचः॥ श्वात्रास्स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं कृत्वोपहूतास्सोमस्य पिबत ॥ मा भेर्मा संविक्थाः ॥ धिषणे वीते वीडयेथामूर्जं दधाथामूर्जमस्मासु धत्तं मा वां हिंसिषं मा युवमस्मान् हिंसिष्टम् ॥ प्रागपागुदगधराक्तास्त्वा दिश आधावन्त्वम्ब निस्वर समरिविंद ॥

[ ४.१ ]—

वाचस्पतये पवस्व वाजिन् वृष्णो अंशुभ्यां गभस्तिपूतः ॥ देवो देवानां पवित्रमसि येषां भागोऽसि ॥ मधुमतीर्न इषस्कृधि ॥ स्वङ्कृतोऽसि ॥ उर्वन्तरिक्षं वीहि ॥ विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः ॥ मनस्त्वाष्टु स्वाहा त्वा सुभो सूर्याय ॥ देवेभ्यस्त्वा मरीचिपेभ्यः ॥ प्राणाय त्वा ॥

[ २६.१० ] —यस्यैवं विदुष उपांशुं जुह्वति० अष्टौ कृत्वोऽभिषुणोति० एकादश कृत्वः० द्वादश कृत्वः० त्रिर्त्रिर्गृह्णाति० अष्टा अष्टा अभिषुणुयाद् ब्रह्मवर्चसकामस्य० नोपयामगृहीतोऽसीति ब्रूयात्० न पवित्रं वितन्वन्ति० षडंशून् परिगृह्णाति० द्वन्द्वं पात्रयति० उपांशुसवनादुपांशुं निगृह्णाति० उत्तर उपांशुसवनो भवत्यधरेऽशवः० ॥

[ २७.१–२ ]—सर्वहुतं जुहोति० ऋजुस्तिष्ठञ्जुहोति० नाध्वर्युर्विहूर्छति० उत्तरादुपांशुं जुहुयाद्दक्षिणतोऽन्तर्यामम्० ऋजू होतव्यौ० ऊर्ध्वमुन्मृज्याद्यदि कामयेत न वर्षेदिति० अवाचीनमवमृज्याद्यदि कामयेत वर्षेदिति० देवेभ्यस्त्वा मरीचिपेभ्य इति परिधौ निमार्ष्टि० अन्तरतो निमार्ष्टि० यदंशूननभिषुतानपिसृजति० षडंशूनपिसृजति० द्वन्द्वम्० आर्द्रास्सन्तो-

संश्लिष्टा भवन्ति० यद्यभिचरेत् देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इत्याददीत प्रहार्षिणो मदिरस्य मदे मृषासा अस्त्वथ त्वा होष्यामि इति० आ तमितोस्तिष्ठति० यद्यजुर्वदति० उपांशुनाभिचरति० प्राणाय त्वेत्युपांशुपात्रं सादयति ॥

कपिसं [ २.१७ ]—

निग्राभ्या स्थ .... प्रजां मे तर्पयत पशून्मे तर्पयत गृहान्मे तर्पयत गणान्मे तर्पयत ते मे मा वितृषन् ॥ --- ॥ ग्रावास्यध्वरकृद्देवेभ्यः .... ॥ --- ॥ श्वात्रा स्थ .... यज्ञं धत्तोपहूताः ....॥ मा भेर्मा संभित्थाः॥ धिषणे ईडिते ईडयेथामूर्जं दधाथाम् .... ॥ प्रागपा .... समरिर्विदम् ॥

[ ३.१ ]—वाचस्पतये पवस्व वृष्णो.... ॥ --- ॥ स्वाङ्कृतोऽसि ॥ --- ॥

[ ४१.८; ४२.१–२ ] ≡ कासं

वामासं—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे रावासि गभीरमिममध्वरं कृधीन्द्राय सुषूतममुत्तमेन पविनोर्जस्वन्तं मधुमन्तं पयस्वन्तम् ॥ निग्राभ्या स्थ देवश्रुतस्तर्पयत मा मनो मे तर्पयत वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयतात्मानं मे तर्पयत प्रजां मे तर्पयत पशून्मे तर्पयत गणान्मे तर्पयत गणा मे मा वितृषन् ॥ इन्द्राय त्वा वसुमते रुद्रवते । इन्द्राय त्वादित्यवते । इन्द्राय त्वाभिमातिघ्ने । श्येनाय त्वा सोमभृते । अग्नये त्वा रायस्पोषदे ॥ यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राये कृध्यधि दात्रे वोचः ॥ श्वात्रा स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं नयतोपहूताः सोमस्य पिबत ॥ मा भेर्मा संविक्था ऊर्जं धत्स्व धिषणे वीड्वी सती वीडयेथामूर्जं दधाथां पाप्मा हतो न सोमः ॥ प्रागपागुदगधराक्सर्वतस्त्वा दिश आधावन्त्वम्ब निष्पर समरीर्विदां त्वमङ्ग प्रशꣳसिषो देवः शविष्ठ मर्त्यं न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ ६.३०-३७

वाचस्पतये पवस्व वृष्णो अꣳशुभ्यां गभस्तिपूतः ॥ देवो देवेभ्यः पवस्व येषां भागोऽसि ॥ मधुमतीर्न इषस्कृधि ॥ स्वाहा ॥ उर्वन्तरिक्षमन्वेमि ॥ स्वाङ्कृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय ॥ देवेभ्यस्त्वा मरीचिपेभ्यः ॥ देवाꣳशो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फट् ॥ प्राणाय त्वा ॥ व्यानाय त्वा ॥ ७.१-३

माशब्रा [ ३.९.४ ]—अथाधिषवणे पर्युपविशन्ति। अथास्याँ हिरण्यं बध्नीते० अथ ग्रावाणमादत्ते० तमादत्ते देवस्य त्वा .... इति० अथ वाचं यच्छति० अथ निग्राभ्या आहरति। तास्वेनं वाचयति निग्राभ्या स्थ .... मा वितृषन्निति० स य एष उपांशुसवनः० तमभिमिमीते० स मिमीते इन्द्राय त्वा वसुमते रुद्रवते .... इति० अथ यत् पञ्चकृत्वो मिमीते० तमभिमृशति यत्ते सोम .... वोच इति० अथ निग्राभ्याभिरुपसृजति० स उपसृजति श्वात्रा स्थ वृत्रतुरः .... इति० अथ प्रहरिष्यन् यं द्विष्यात्तं मनसा ध्यायेत्० यद्यु न द्विष्यादपि तृणमेव मनसा ध्यायेत्। स प्रहरति मा भेर्मा संविक्थाः .... इति० अथ यन्निग्राभमुपैति० स उपैति प्रागपागुदगधराक् सर्वतस्त्वा दिश आधावन्तु .... इति० अथ निग्राभ्याभ्यो ग्रहान् विगृह्णते० ॥

[ ४.१.१ ]— अथ यस्मादुपांशुर्नाम० तं बहिष्पवित्राद् गृह्णाति० तमँशुभिः पावयति० षड्भिः पावयति० स वा अष्टौ कृत्वोऽभिषुणोति० स गृह्णाति वाचस्पतये पवस्व .... इति० अथैकादश कृत्वोऽभिषुणोति० स गृह्णाति देवो देवेभ्यः पवस्व .... इति० अथ द्वादश कृत्वोऽभिषुणोति० स गृह्णाति मधुमतीर्न इषस्कृधीति० अष्टावष्टौ कृत्वो ब्रह्मवर्चसकामस्याभिषुणुयादित्याहुः० पञ्च-पञ्च कृत्वः पशुकामस्याभिषुणुयादित्याहुः० तं गृहीत्वा परिमार्ष्टि० तं न सादयति० यदीत्वभिचरेदथैनँ सादयेत् **अमुष्य त्वा प्राणँ सादयामि** इति० अथो अप्येवैनं दध्यात् **अमुष्य त्वा प्राणमपिदधामि** इति० स वा अन्तरेव सन् स्वाहेति करोति० अथोपनिष्क्रामति उर्वन्तरिक्षमन्वेमीति० अथ वरं वृणीते० स जुहोति स्वाङ्कृतोऽसि .... इति० अथ हुत्वोर्ध्वं ग्रहमुन्मार्ष्टि० अथोत्तानेन पाणिना मध्यमे परिधौ प्रागुपमार्ष्टि० देवेभ्यस्त्वा मरीचिपेभ्य इति० अथ यद्यभिचरेद् योऽस्याँशुराश्लिष्टः स्याद् बाह्वोर्वोरसि वा वाससि वा तं जुहुयात् देवांशो यस्मै त्वेडे .... फडिति० दक्षिणार्धे हैके सादयन्ति० तदु तथा न कुर्यात्। उत्तरार्ध एवैनँ सादयेत्० तँ सादयन्ति प्राणाय त्वेति० अथोपांशुसवनमादत्ते० यद्यँशुराश्लिष्टः स्यात् पाणिनैव प्रध्वँस्योदञ्चमुपनिपादयेत् व्यानाय त्वेति० ॥

**वाकासं—**

**---॥ यत्ते सोम .... यदुरा अन्तरिक्षे। .... ॥---॥ मा भेर्मा .... वीळयेथामूर्जं .... ॥---॥ स्वाङ्कृतोऽसि .... स्वभवः सूर्याय ॥---॥ देवांशो यस्मै त्वेळे .... ॥---॥** ६.८.१–७.१.३

काशब्रा [ ४.९.४ ] = शब्रा ३.९.४

[ ५.१.२ ]—--- उपनिष्क्रम्य होष्यन् वरं वृणीते इदं मेऽस्त्वथ होष्यामि इति ---॥

ऐब्रा [ २.२१ ]—नाहुतयोरुपांश्वन्तर्यामयोर्होता वाचं विसृजेत० **प्राणं यच्छ स्वाहा त्वा सुहव सूर्याय** इत्युपांशुमनुमन्त्रयेत । तमभि प्राणेत् **प्राण प्राणं मे यच्छ** इति ॥

शांब्रा [ १२.४ ]—अथ वा उपांशुः प्राण एव तं हूयमानमनुप्राण्यात् **प्राणं मे पाहि प्राणं मे जिन्व स्वाहा त्वा सुभव सूर्याय** इति० ॥

[ ७.६ ]—दक्षिणो एवैनमासीना अभिषुण्वन्ति० ॥

**अशौसं—**

**सूर्यो द्यां सूर्यः पृथिवीं सूर्य आपोऽति पश्यति ।**
**सूर्यो भूतस्यैकं चक्षुरा रुरोह दिवं महीम् ॥ १३.१.४५**

**अपैसं—**

**सूर्यो द्यां .... ॥ १८.१९.५**

## ५९. सोमाभिषवः

**तैसं [ १.४.१ ]—**

**प्रागपागुदगधराक्तास्त्वा दिश आ धावन्त्वम्ब नि ष्वर ॥ यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ॥**

[ ६.४.४ ]—अँशून् पुनरपि सृजति० द्वौद्वावपि सृजति० ॥

**मैसं [ १.३.४ ]—**

**यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ॥ प्रागपागधरागुदगेतास्त्वा दिशा आधावन्त्वम्ब निस्मर समरिविंदाम् ॥**

[ ४.५.७ ]—सोमो वा इमा दिशोऽभ्यकामयत प्रागपागधरागुदगित्याभिरेनं दिग्भिः समूहति० यां कामयेत तां तर्हिं मनसा ध्यायेत्० यदाह **ब्राह्मण कौशिका इव** इति चतुर्निग्राभमुपैति० त्रिः संभरति० नव कृत्वो निग्राभमुपैति० त्रिः संभरति० ॥

**वामासं—**

**यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ॥ ७.२**

माशब्रा [ ४.१.१.५–७ ]—तानुपनिग्रपति यत्ते सोमादाभ्यं....सोमाय स्वाहेति०॥

**वाकासं [ ७.१.२ ] ≡ वामासं**

काशब्रा [ ५.१.१.४–५ ] ≡ माशब्रा

**तांब्रा [ १.२.१–६ ]—**

**युनज्मि ते पृथिवीमग्निना सह युनज्मि वाचꣳ सह सूर्येण युक्तो वातोऽन्तरिक्षेण**

**ते सह युक्तास्तिस्रो विभृजः सूर्यस्य ॥ ऋतस्य सदने सीदामि ॥ ऋतपात्रमसि ॥ वानस्पत्योऽसि बार्हस्पत्योऽसि प्राजापत्योऽसि प्रजापतेर्मूर्धास्यत्यायुपात्रमसीदमहं मां प्राञ्चं प्रोहामि तेजसे ब्रह्मवर्चसाय ॥ मरुतो नपातोऽपां क्षयाः पर्वतानां ककुभः श्येना अजिरा एन्द्रं वग्नुना वहत घोषेणामीवां चातयध्वं युक्ता स्थ वहत ॥ इदमहममुं यजमानं पशुष्वभ्यूहामि पशुषु च मां ब्रह्मवर्चसे च ॥**

तांब्रा [६.५.१–६.५]—प्रजापतिरकामयत बहु स्यां प्रजायेयेति। सोऽशोचत् तस्य शोचत आदित्यो मूर्ध्नोऽसृज्यत। सोऽस्य मूर्धानमुदहन्। स द्रोणकलशोऽभवत्० तं प्रोहेत् वानस्पत्योऽसि .... ब्रह्मवर्चसायेति० अधोऽधोऽक्षं द्रोणकलशं प्रोहन्ति० उपर्युपर्यक्षं पवित्रं प्रयच्छन्ति० यस्य कामयेतासुर्यमस्य यज्ञं कुर्यां वाचं वृञ्जीयेति द्रोणकलशं प्रोहन् बाहुभ्यामक्षमुपस्पृशेत्० योऽस्य प्रियः स्यादनुपस्पृशन्नक्षं प्रोहेत्० प्राञ्च उपसीदन्ति० यद् द्रोणकलशं प्राञ्चं प्रोहन्ति०.... ग्राव्णः सꣳसाद्य द्रोणकलशमभ्यूहन्ति० यं द्विष्याद्विमुखान् ग्राव्णः कृत्वा **इदमहममुमामुष्यायणममुष्याः पुत्रममुष्या विशोऽमुष्मादन्नाद्यान्निरूहामि** इति निरूहेत्० योऽस्य प्रियः स्यात् संमुखान् ग्राव्णः कृत्वा **इदमहममुमामुष्यायणममुष्याः पुत्रममुष्यां विश्यमुष्मिन्नन्नाद्येऽभ्यूहामि** इत्यभ्यूहेत्० अथो तदुभयमनादृत्य **इदमहं मां तेजसि ब्रह्मवर्चसेऽभ्यूहामि** इत्यभ्यूहेत्० यः कामयेत विशा राष्ट्रꣳ हन्यामिति न्यूह्य ग्राव्णोऽधो द्रोणकलशꣳ सादयित्वोपाꣳशुसवनमुपरिष्टादभिनिदध्यात् **इदमहममुया विशादो राष्ट्रꣳ हन्मि** इति० ॥

जैब्रा [ १.७७-८० ]—पश्चात् प्राञ्च उपसीदन्ति० उद्गातार उद्गीथायाधोऽधोऽक्षं द्रोणकलशं प्रोहन्ति० उपरिष्टाच्छुक्रमपहरति० नाक्षमुपस्पृशेत्० अन्तरा चक्रौ प्रोहति० तं प्रोहति **वसवस्त्वा प्रोहन्तु गायत्रेण छन्दसा ॥ रुद्रास्त्वा प्रोहन्तु त्रैष्टुभेन छन्दसा ॥ आदित्यास्त्वा प्रोहन्तु जागतेन छन्दसा** इति० **देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रोहामि** इति वा प्रोहेत्० एतेनैवोद्गाताभिमृशति **तनूपा असि तन्वं मे पाहि ॥ वर्चोधा असि वर्चो मे धेहि ॥ आयुर्धा अस्यायुर्मे धेहि ॥ वयोधा असि वयो मे धेहि** इति० संमुखान् ग्राव्णः कृत्वाभिमृशति **श्येना अजिरा ऋतस्य गर्भाः प्रयुतो नपातः पर्वतानां ककुभ आ नस्तं वीरं वहत यं बहव उपजीवामो अभिशस्तिकृतमनभिशस्तेन्यमन्यस्याभिशस्त्याः कर्तारम्** इति० द्रोणकलशमभ्यूहति **इदमहं मां ब्रह्मवर्चसेऽभ्यूहामि** इति। यद्यस्यावरुद्धो राजन्यः स्याद्विमुखान् ग्राव्णः कृत्वा तूष्णीं द्रोणकलशमभ्यूह्य तमवह्वारयन् दक्षिणा निरूहेत् **इदमहममुं विशो निरूहामीदमस्य राष्ट्रं न्युब्जामि** इति न्यञ्चं द्रोणकलशं न्युब्जेत्। संमुखान् ग्राव्णः कृत्वा योऽस्य राजन्यः स्यात्तस्य

नाम गृहीत्वा द्रोणकलशमध्यूहेत् इदमहममुं विश्यध्यूहामि इति० स यथेनमवगत्य नाद्रियेत तं कामयेत अत्रैवान्तरवरुद्धोऽस्त्विति। विमुखान् ग्राव्णः कृत्वा तूष्णीं द्रोणकलशमध्यूह्य इमा पार्ंशुसवनः (?) इति ग्रात्रा। तमुपरिष्टादभिनिदध्यात् इदमहममुष्मिन् विश्यध्यूहामि इति ० स यथेनं विदित्वोपधावेदस्मिन् वावेदं ब्राह्मणेऽध्यास यदिदमस्मै वचने वचेति। संमुखान् ग्राव्णः कृत्वा द्रोणकलशमध्यूहेत् इदमहममुं विश्यध्यूहामि इति० तं दृंहति देवी त्वा धिषणे निपातां ध्रुवे सदसि सीदेष ऊर्जे सीद इति० ॥

अशौसं—

इन्द्र जुषस्व प्र वहा याहि शूर हरिभ्याम्।
पिबा सुतस्य मतेरिह मधोश्चकानश्चारुर्मदाय॥
इन्द्र जठरं नव्यो न पृणस्व मधोर्दिवो न।
अस्य सुतस्य स्वर्णोप त्वा मदाः सुवाचो अगुः॥
इन्द्रस्तुराषाण्मित्रो वृत्रं यो जघान यतीर्न।
बिभेद वलं भृगुर्न ससहे शत्रून् मदे सोमस्य॥
आ त्वा विशन्तु सुतास इन्द्र पृणस्व कुक्षी विड्ढि शक्र धियेह्या नः।
श्रुधी हवं गिरो मे जुषस्वेन्द्र स्वयुग्भिर्मत्स्येह महे रणाय॥
इन्द्रस्य नु प्रा वोचं वीर्याणि यानि चकार प्रथमानि वज्री।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत् पर्वतानाम्॥
अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष।
वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः॥
वृषायमाणो अवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य।
आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम्॥ २.५

अपैसं—

इन्द्र जुषस्वा याहि शूर पिबा सुतस्य। मधोश्चकानश्चारुर्मदाय॥
आ त्वा विशन्तु सुतास इन्द्र पृणस्व कुक्षी। विड्ढ्यशक्रो धियेह्या नः॥
इन्द्र जठरं पृणस्व मधोरस्य सुतस्य। उप त्वा मदाः सुवाचो अस्थुः॥
इन्द्रस्तुराषाड् जघान वृत्रं ससहे शत्रून्। ममुश्च वज्री मदे सोमस्य॥
श्रुधी हवं मे गिरो जुषस्वेन्द्र स्वयुग्भिर्मत्स्व। मदाय महे रणाय॥ २.७
इन्द्रस्य नु वीर्याणि प्र वोचं .... ॥ १३.६.१-३

गोब्रा [ २.३.९ ]—तस्मादु हिंकृत्याध्वर्यव: सोममभिषुण्वन्ति। हिंकृत्योद्गातारः साम्ना स्तुवन्ति। हिंकृत्योक्थश ऋचार्त्विज्यं कुर्वन्ति। हिंकृत्याथर्वाणो ब्रह्मत्वं कुर्वन्ति० ॥

## ६०. अन्तर्यामग्रहप्रचारः

तैसं [ १.४.३ ]—

उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षꣳ सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन् मादयस्व ॥ स्वाङ्कृतोऽसि ॥ मधुमतीर्न इषस्कृधि ॥ विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः ॥ मनस्त्वाष्टु ॥ उर्वन्तरिक्षमन्विहि ॥ स्वाहा त्वा सुभवः सूर्याय ॥ देवेभ्यस्त्वा मरीचिपेभ्यः ॥ एष ते योनिः ॥ अपानाय त्वा ॥

[ ६.४.६ ]—पवित्रवानन्तर्यामो गृह्यते० प्राणापानौ वा एतौ यदुपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनः। यं कामयेत प्रमायुकः स्यादित्यसꣳस्पृष्टौ तस्य सादयेत्० यं कामयेत सर्वमायुरियादिति सꣳस्पृष्टौ तस्य सादयेत्० ॥

[ ३.२.१०.२ ]—

धूरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि ॥

मैसं [ १.३.५ ]—

उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षं सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन् मादयस्व ॥ वाक्त्वाष्टु स्वाहा त्वा सुभव सूर्याय देवेभ्यस्त्वा मरीचिपेभ्यः ॥ अपानाय त्वा ॥

[ ४.५.६–७ ]—पवित्रं वितन्वन्ति० उपयामगृहीतो गृह्यते० तद्य एवं विद्वानन्तर्यामं गृह्णीते० प्राणापानौ वा उपांश्वन्तर्यामौ व्यान उपांशुसवनो यदेष ग्रावान्तरैते पात्रे साद्यते० यदेते पात्रे एतं ग्रावाणमा तृतीयात् सवनान्न जहीतः० अथ यत् पुनरर्दयति० यदेते पात्रे पुनः प्रयुज्येते० अध्वर्युः प्रथमोऽभिषुणोति० प्राणापानौ वा उपांश्वन्तर्यामौ यदेतौ ग्रहा असन्नौ हूयेते० ॥

कासं [ ४.१ ]—

व्यानाय त्वा ॥ उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोममुरुष्य रायस्समिषो यजस्वान्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षि सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन् मादयस्व ॥ मधुमतीर्न इषस्कृधि ॥ स्वङ्कृतोऽसि ॥

उर्वन्तरिक्षं वीहि ॥ विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः ॥ मनस्त्वाष्टु स्वाहा त्वा सुभो सूर्याय ॥ देवेभ्यस्त्वा मरीचिपेभ्यः ॥ अपानाय त्वा ॥

[ २७.१-२ ]—पवित्रं वितन्वन्ति० स्वर्भानुर्वा आसुरस्सूर्यं तमसाविध्यत्। स न व्यरोचत। तस्माद्देवास्तमोऽपालुम्पन्। यत् प्रथममपालुम्पन् साविष्कृष्णाभवत्। यद् द्वितीयं सा फल्गुः। यत् तृतीयं सा बलक्षी। तस्मात् तस्याः पवित्रं कुर्वन्ति० सूदि कुर्यादन्तर्यामपात्रम्० ता असन्नौ जुहोति० व्यानाय त्वेत्युपांशुसवनमपानाय त्वेत्यन्तर्यामपात्रम्० यदेते प्रातस्सन्ने आ तृतीयसवनाच्छयाते० ते पुनस्तृतीयसवने प्रयुज्येते० उत्तरादुपांशुं जुहुयाद्दक्षिणतोऽन्तर्यामम् ॥

**कपिसं [ ३.१ ]—**

**उपयामगृहीतोऽसि.... ॥ --- ॥ स्वाङ्कृतोऽसि ॥ --- ॥**

[ ४२.१-२ ] --- तावसन्नौ जुहोति --- ॥

**वामासं—**

**उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोममुरुष्य राय एषो यजस्वान्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्वन्तरिक्षᳪ सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघवन् मादयस्व॥ स्वाङ्कृतोऽसि विश्वेभ्य इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टु स्वाहा त्वा सुभव सूर्याय ॥ देवेभ्यस्त्वा मरीचिपेभ्यः ॥ उदानाय त्वा ॥ ७.४-६**

माशब्रा [ ४.१.२ ]—अथ यस्मादन्तर्यामो नाम० तमन्तः पवित्राद् गृह्णाति० तयोरुदितेऽन्यतरं जुहोत्यनुदितेऽन्यतरम्० अथातो गृह्णात्येव उपयामगृहीतोऽसि .... इति० तं गृहीत्वा परिमार्ष्टि० तं न सादयति० यदीत्त्वभिचरेदथैनᳪ सादयेत् **अमुष्य त्वोदानᳪ सादयामि** इति। स यद्युपाᳪशुᳪ सादयेदथैनᳪ सादयेत्। यद्युपाᳪशुं न सादयेन्नैनᳪ सादयेत्। यद्युपाᳪशुमपिदध्याद्प्येनं दध्यात्। यद्युपाᳪशुं नापिदध्यान्नैनमपिदध्यात्० नानैव मन्त्राभ्यां जुह्वति० तदु तथा न कुर्यात्० स येनैवोपाᳪशुं मन्त्रेण जुहोति। तेनैवैतं मन्त्रेण जुहोति० स्वाङ्कृतोऽसि .... सूर्यायेति० अथ हुत्वोर्ध्वं ग्रहमवमार्ष्टि० अथ नीचा पाणिना मध्यमे परिधौ प्रत्यगुपमार्ष्टि० देवेभ्यस्त्वा मरीचिपेभ्य इति० तं प्रत्याक्रम्य सादयति उदानाय त्वेति० तानि वै सᳪस्पृष्टानि सादयति० तानि वा अनिह्नूयमानानि शेर आ तृतीयसवनात्० ॥

**वाकासं—**

**उपयामगृहीतोऽस्यन्तर्यच्छ.... रायोवेषो.... ॥ स्वाहा ॥ उर्वन्तरिक्षमन्वेमि ॥ स्वाङ्कृतोऽसि.... स्वभवः सूर्याय ॥ --- ॥ ७.२.१-२**

काशब्रा [ ५.१.२ ] = माशब्रा

ऐब्रा [ २.२१]—**अपानं यच्छ स्वाहा त्वा सुहव सूर्याय** इत्यन्तर्याममनुमन्त्रयेत। तमभ्यपानेत् **अपानापानं मे यच्छ** इति। **व्यानाय त्वा** इत्युपांशुसवनं ग्रावाणमभिमृश्य वाचं विसृजते॥

शांब्रा [ १२.४ ]—अन्तर्यामोऽपान एव। तं हूयमानमन्ववान्यात् **अपानं मे पाह्यपानं मे जिन्व स्वाहा त्वा सुभव सूर्याय** इति० तौ वा एतौ प्राणापानावेव यदुपांश्वन्तर्यामौ तयोर्वा उदितेऽन्यमनुदितेऽन्यं जुह्वति० अथ यस्यैता उभा उदिते जुह्वत्युभौ वानुदित उदकयाजी स न सोमयाजी। यस्यैवैतौ यथायथं हूयेते स सोमयाजीति॥

## ६१. ग्रहग्रहणम्

तैसं [१.४.४-५]—

**आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार।**
**उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम्।**
**उपयामगृहीतोऽसि वायवे त्वा॥**
**इन्द्रवायू इमे सुताः। उप प्रयोभिरा गतमिन्दवो वामुशन्ति हि।**
**उपयामगृहीतोऽसीन्द्रवायुभ्यां त्वा॥ एष ते योनिः सजोषाभ्यां त्वा॥**
**अयं वां मित्रावरुणा सुतः सोम ऋतावृधा। ममेदिह श्रुतꣳ हवम्।**
**उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा॥ एष ते योनिर्ऋतायुभ्यां त्वा॥**

[ १.४.८-११ ]—

**अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने।**
**इममपाꣳ सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति।**
**उपयामगृहीतोऽसि शण्डाय त्वा॥ एष ते योनिर्वीरतां पाहि॥**
**तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ सुवर्विदम्।**
**प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे।**
**उपयामगृहीतोऽसि मर्काय त्वा॥ एष ते योनिः प्रजाः पाहि॥**
**ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ।**
**अप्सुषदो महिनैकादश स्थ ते देवा यज्ञमिमं जुषध्वम्।**

**उपयामगृहीतोऽसि॥ आग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेण॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः॥**

**त्रिꣳशत् त्रयश्च गणिनो रुजन्तो दिवꣳ रुद्राः पृथिवीं च सचन्ते।**

एकादशासो अप्सुषदः सुतꣳ सोमं जुषन्ताꣳ सवनाय विश्वे ।

उपयामगृहीतोऽसि ।। आग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेण ।। एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ।।

[ १.४.२९–३१ ]—

अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ।

उपयामगृहीतोऽस्यग्नये त्वा तेजस्वते ।। एष ते योनिरग्नये त्वा तेजस्वते ।।

उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः । सोममिन्द्र चमू सुतम् ।

उपयामगृहीतोऽसीन्द्राय त्वौजस्वते ।। एष ते योनिरिन्द्राय त्वौजस्वते ।।

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ।

उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वते ।। एष ते योनिः सूर्याय त्वा भ्राजस्वते ।।

[ १.४.१२-१३ ]—

उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत् त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वा ।। एष ते योनिरिन्द्राय त्वोक्थायुवे ।।

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् ।

कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ।

उपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय ।। ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तमः ।। एष ते योनिरग्नये त्वा वैश्वानराय ।।

[ ६.४.७–८ ]—ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते० नानादेवत्यानि सन्ति वायव्यान्युच्यन्ते० ऐन्द्रवायवः सह गृह्यते० सकृदिन्द्राय मध्यतो गृह्यते द्विर्वायवे० मैत्रावरुणं पयसा श्रीणन्ति० मैत्रावरुणः सह गृह्यते० ऐन्द्रवायवः पूर्वो मैत्रावरुणाद् गृह्यते० ।।

[ ६.४.१० ]—यस्यैवं विदुषः शुक्रामन्थिनौ गृह्येते० यद्वैकङ्कतं मन्थिपात्रं भवति । सक्तुभिः श्रीणाति० ।।

[ ६.४.११ ]—यस्यैवं विदुष आग्रयणाग्रा ग्रहा गृह्यन्ते० रुग्णवत्यर्चा भ्रातृव्यवतो गृह्णीयात्० यत् तूर्ष्णीं पूर्वे ग्रहा गृह्यन्ते० अध्वर्युराग्रयणं गृहीत्वा यज्ञमारभ्य वाचं वि सृजते । त्रिर्हिं करोति० यदाग्रयणं गृहीत्वा हिं करोति० सवनेसवनेऽभि गृह्णाति० उपरिष्टादा नयति० अधस्तादुप गृह्णाति० ।।

[ ६.६.८ ]—यदतिग्राह्या गृह्यन्ते० अग्निष्टोमे ग्रहीतव्याः० ।।

[ ६.५.१ ]—यदुक्थ्यो गृह्यते० ॥

[ ६.५.२ ]—आयुर्वा एतद्यज्ञस्य यद् ध्रुवः । उत्तमो ग्रहाणां गृह्यते० उपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुवः० यद् ध्रुव उत्तरतः साद्यते० ॥

[ ३.१.८ ]—

द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
तृतीयं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥

[ ३.१.१० ]—

यस्ते द्रप्सः स्कन्दति यस्ते अꣳशुर्बाहुच्युतो धिषणयोरुपस्थात् ।
अध्वर्योर्वा परि यस्ते पवित्रात् स्वाहाकृतमिन्द्राय तं जुहोमि ॥
यो द्रप्सो अꣳशुः पतितः पृथिव्यां परिवापात् पुरोडाशात् करम्भात् ।
धानासोमान्मन्थिन इन्द्र शुक्रात् स्वाहाकृतमिन्द्राय तं जुहोमि ॥
यस्ते द्रप्सो मधुमाꣳ इन्द्रियावान्त्स्वाहाकृतः पुनरप्येति देवान् ।
दिवः पृथिव्याः पर्यन्तरिक्षात् स्वाहाकृतमिन्द्राय तं जुहोमि ॥

[ ३.१.९ ]—यान् प्राचीनमाग्रयणाद् ग्रहान् गृह्णीयात् तानुपाꣳशु गृह्णीयाद्यानूर्ध्वाꣳ-स्तानुपब्दिमतः ॥

[ ३.२.१ ]—पवमानस्य ग्रहा गृह्यन्ते० उपयामगृहीतोऽसि प्रजापतये त्वा इति द्रोणकलशमभिमृशेत्० इन्द्राय त्वा इत्याधवनीयम् विश्वेभ्यस्त्वा देवेभ्यः इति पूतभृतम्०॥

तैब्रा [ २.२.८.२ ]—ग्रहान् गृहीत्वा सप्तहोतारं[1] जुहोति० ॥

[ २.५.८.१० ]—

विदद्यती सरमा रुग्णमद्रेः । महि पाथः पूर्व्यꣳ सध्रियक्कः ।
अग्रं नयत्सुपद्यक्षराणाम् । अच्छा रवं प्रथमा जानती गात् ॥

[ २.४.३.१ ]—

सरस्वत्यभि नो नेषि वस्यः । मा पस्फरीः पयसा मा न आधक् ।
जुषस्व नः सख्या वेश्या च । मा त्वत्क्षेत्राण्यरणानि गन्म ॥

तैसं [ ६.५.१०–११ ]—स्थाल्या गृह्णाति वायव्येन जुहोति० यत् पुरोरुचमाह० यत् ग्रहं गृह्णाति० यत् सादयति० यद् वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्यदृचा तद् दृढं पुरस्तादुपयामा यजुषा गृह्यन्त उपरिष्टादुपयामा ऋचा० प्रान्यानि पात्राणि युज्यन्ते नान्यानि० स्थालीभिरन्ये ग्रहा गृह्यन्ते वायव्यैरन्ये० ॥

---

१, द्रष्टव्यं श्रौ. १ पृ, १२५

तैब्रा [ १.४.१ ]—उभये वा एते प्रजापतेरध्यसृज्यन्त । देवाश्चासुराश्च । तान्न व्यजानात् । इमेऽन्य इमेऽन्य इति । स देवान॑ँशूनकरोत् । तानभ्यषुणोत् । तान् पवित्रेणापुनात् । तान् परस्तात् पवित्रस्य व्यगृह्णात् । ते ग्रहा अभवन् । तद् ग्रहाणां ग्रहत्वम् । देवता वा एता यजमानस्य गृहे गृह्यन्ते । यद् ग्रहाः । विदुरेनं देवाः । यस्यैवं विदुष एते ग्रहा गृह्यन्ते॰ यद्दारुमयानि पात्राणि भवन्ति॰ यानि मृन्मयानि॰ यदादित्यस्थाली भवति॰ यदुक्थ्यस्थाली भवति॰ यदाग्रयणस्थाली भवति॰ यद् ध्रुवस्थाली भवति॰ स्थाल्या गृह्णाति । वायव्येन जुहोति॰ ॥

[ १.५.४ ]—ब्रह्मवादिनो वदन्ति । कति पात्राणि यज्ञं वहन्तीति । त्रयोदशेति ब्रूयात् । स यद् ब्रूयात् । कस्तानि निरमिमीतेति । प्रजापतिरिति ब्रूयात् । स यद् ब्रूयात् । कुतस्तानि निरमिमीतेति । आत्मन इति । प्राणापानाभ्यामेवोपा॑ँश्वन्तर्यामौ निरमिमीत । व्यानादुपा॑ँशुसवनम् । वाच ऐन्द्रवायवम् । दक्षक्रतुभ्यां मैत्रावरुणम् । श्रोत्रादाश्विनम् । चक्षुषः शुक्रामन्थिनौ । आत्मन आग्रयणम् । अङ्गेभ्य उक्थ्यम् । आयुषो ध्रुवम् । प्रतिष्ठाया ऋतुपात्रे ॥

तैसं [ ७.२.७ ]—ऐन्द्रवायवाग्रान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्॰ ऐन्द्रवायवाग्रान् गृह्णीयादामयाविनः॰ मैत्रावरुणाग्रान् गृह्णीरन् येषां दीक्षितानां प्रमीयेत॰ आश्विनाग्रान् गृह्णीतानुजावरः॰ शुक्राग्रान् गृह्णीत गतश्रीः प्रतिष्ठाकामः॰ मन्थ्यग्रान् गृह्णीताभिचरन्॰ आग्रयणाग्रान् गृह्णीत यस्य पिता पितामहः पुण्यः स्यात्॰ उक्थ्याग्रान् गृह्णीताभिचर्यमाणः॰ सरस्वत्यभि नो नेषि वस्य इति पुरोरुचं कुर्यात्॰ पूर्णान् ग्रहान् गृह्णीयादामयाविनः॰ पूर्णान् ग्रहान् गृह्णीयाद्यर्हि पर्जन्यो न वर्षेत्॰ ॥

मैसं [ १.३.६–७ ]—

आ वायो भूष शुचिपा .... । उपयामगृहीतोऽसि वायवे त्वा ॥

इन्द्रवायू इमे .... । उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वा ॥ एष ते योनिः सजोषोभ्यां त्वा ॥

अय॑ँ वां मित्रावरुणा .... । उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा ॥ एष ते योनिर्ऋतायुभ्यां त्वा ॥

[ १.३.१०–११ ]—

अय॑ँ वेनश्चोदयत् .... । उपयामगृहीतोऽसि शण्डाय त्वा ॥ एष ते योनिर्वीरतायै त्वा ॥

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठराजं बर्हिषद॑ँ स्वर्दृशम् ।

प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे।
उपयामगृहीतोऽसि मर्काय त्वा ॥ एष ते योनिः प्रजाभ्यस्त्वा ॥

[ १.३.१३–१५ ]—
ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ।
अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम्।

उपयामगृहीतोऽसि ॥ आग्रायणोऽसि स्वाग्रायणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवनानि पाह्यतस्त्वा विष्णुः पातु विशं त्वं पाहीन्द्रियेण ॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥

उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवम्। यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वा ॥ एष ते योनिरिन्द्राय त्वा ॥

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्।
कविं सम्राजम् .... ॥

उपयामगृहीतोऽसि वैश्वानराय त्वा ॥ ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तमः ॥ एष ते योनिर्वैश्वानराय त्वा ॥

[ ४.५.५ ]—यदुपयामगृहीता गृह्यन्ते० यत् स्थाल्या गृह्यन्ते० यद्दारुमयेण गृह्यन्ते० एष ते योनिरिति सादयति० ॥

[ ४.५.८–९ ]—यदैन्द्रवायवो गृह्यते० वायवे प्रथमं गृह्णाति वायव उत्तमं मध्यत इन्द्राय० तस्मादपतुरीयं वायोः पात्रम्० वाय्वग्रा ग्रहा गृह्यन्ते० यन्मैत्रावरुणं पयसा श्रीणाति० यद्येनं भ्रातृव्योऽतीव स्यादङ्गुल्याङ्गुष्ठमवगृह्णीयाद् यद्यन्वङ्गुष्ठेनाङ्गुलिं यो नो मित्रावरुणा अभिदासात् सपत्नो भ्रातृव्य उत्पिपीते बृहस्पते। इदमहं तमधरं पादयामि यथाहमुत्तमश्चेतयानि इति० ॥

[ ४.६.१ ]—नवैते प्रातर्ग्रहा गृह्यन्ते० आश्विनो दशमो गृह्यते० तृतीयो हूयते० सर्वे वा एते ग्रहाः स्तोत्रवन्तः शस्त्रवन्तो निदानवन्तः० अध्वर्युर्जुहोति होता वषट्करोति० ॥

[ ४.६.३–६ ]—यन्मन्थिनं सक्तुभिः श्रीणाति० यं द्विष्यादृत्विजां तस्मै हरेत्० एता अन्यदेवत्यौ गृह्येते अथेन्द्राय हूयेते० आयुः पाहि प्रजां पाह्यमुष्य वीरतां पाहि इति सादयेद् योऽस्य प्रियः स्यात्तस्य० यदि कामयेत यो बहिस्तं ग्रामे कुर्यां यो ग्रामे तं बहिरिति। इदमहममुमामुष्यायणममुष्याः पुत्रममुष्या विशो निरूहामि इति शुक्रपात्रं निरुह्य इदमहममुमामुष्यायणममुष्याः पुत्रममुष्यां विशि सादयामि इति मन्थिपात्रं

सादयेत्० य एव॰ विद्वानाग्रायणं गृह्णीते० य आनुजावरः स्यात् स आग्रायणाग्रान् ग्रहान् गृह्णीत० यद्यभिचरेत्

**विदद्यदि सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं॰ सध्र्यक्कः।**

**अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥**

इति पुरोरुचं कुर्यात्० यत्किंच प्राचीनमाग्रायणात्तदुपां॰शु चरन्ति० आग्रायणं प्रति वाच॰ विसृजन्ते। हिङ्कृत्य वाच॰ विसृजन्ते० त्रिर्हिंकरोति० शनैरुच्चैरथ सूच्चैः० द्वाभ्यां धाराभ्यां प्रातःसवने गृह्णाति० अथ यत् स्थाली॰ रिञ्चन्ति न दारुमयम्० अथ यत् स्थालीं परास्यन्ति न दारुमयम्० यदुक्थ्यो गृह्यते० आयुर्वै ध्रुवस्तमुत्तमं गृह्णाति० स्थाल्या गृह्णाति० पूर्णं गृह्णाति० यदेष आ तृतीयात् सवनात् परिशयेत्० उभयतो वैश्वानरो गृह्यते० यदेष केवला उत्तरे हविर्धाने साद्यते० हिरण्येऽधि सादयेदायुःकामस्य० उपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुवः० राजपुत्रो ध्रुवं गोपायति० यद्यभिचरेत् **इदमहममुष्यामुष्यायणस्यायुः प्रवर्तयामि** इति ध्रुवं प्रवर्तयेत् ॥

[ ४.८.८-९ ]—पुनरन्यानि पात्राणि प्रयुज्यन्ते नान्यानि० अथैतदुक्थ्यपात्रं पुनः प्रयुज्यते० अथैतदृतुपात्रं पुनः प्रयुज्यते० अथैतदादित्यपात्रं पुनः प्रयुज्यते० अथैतच्छुक्रपात्रं पुनः प्रयुज्यते० अथैतदुपां॰शुपात्रं पुनः प्रयुज्यते० अथैतदन्तर्यामपात्रं पुनः प्रयुज्यते० प्रजापतेर्वा एतत् पात्र॰ यद् द्रोणकलशो यदेष पुनः प्रयुज्यते० सप्त वै पात्राणि पुनः प्रयोगमर्हन्ति० त्रीणि वै पात्राणि प्रत्यक्षबन्धूनि० गायत्र्यैन्द्रवायवस्त्रिष्टुप् शुक्रो जगत्याग्रायणोऽच्छिन्न॰ स्रावयितव्यः० न चमसमभ्युपाकुर्यात्० यो ज्येष्ठबन्धुः स्यात् स ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीत० य आमयावी स मैत्रावरुणाग्रान्० यः पश्चात्सोमपीथः स आश्विनाग्रान्० यो ब्रह्मवर्चसकामः स शुक्राग्रान्० योऽभिचरेत् स मन्थ्यग्रान्० य आनुजावरः स आग्रायणाग्रान्० य ऐन्द्रवायवाग्रेभ्यो ग्रहेभ्योऽन्याग्रान् ग्रहान् गृह्णीते धारयेयुस्त॰ यं कामाय गृह्णीयादथैन्द्रवायव॰ सादयेत्० ॥

**कासं [ ४.२–३ ]—**

**आ वायो भूष शुचिपा .... यतो देव दधिषे पूर्वपेयम्। उपयामगृहीतोऽसि वायवे त्वा ॥ इन्द्रवायू इमे सुताः ....। उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वा ॥ एष ते योनिस्सजोषोभ्यां त्वा ॥ अयं वां मित्रावरुणा ....। उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा ॥ एष ते योनिर्ऋतायुभ्यां त्वा ॥ अयं वेनश्चोदयत् .... विमानः। ....। उपयामगृहीतोऽसि शण्डायेन्द्राय त्वा जुष्टं गृह्णामि॥ एष ते योनिर्वीरतायै त्वा ॥**

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ।
प्रतीचीनं वृजनं दोहसे गिरा या संजयन्तमधि यासु वर्धसे ॥

उपयामगृहीतोऽसि मर्काय सूर्याय त्वा जुष्टं गृह्णामि ॥ एष ते योनिः प्रजाभ्यस्त्वा ॥

[ ४.५ ]—

ये देवा दिव्येकादश स्थ .... देवासो यज्ञमिमं जुषध्वम् । उपयामगृहीतोऽस्याग्रायणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवनानि पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेण ॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थाव्यं यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वा ॥ एष ते योनिरिन्द्राय त्वा ॥ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् । कविं सम्राजम् .... जनयन्तु देवाः ॥ उपयामगृहीतोऽसि वैश्वानरो ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तमः ॥ एष ते योनिर्वैश्वानराय त्वा ॥

[ २७.३–४ ]—यदुपांश्वन्तर्यामा ऐन्द्रवायवोऽनुगृह्यते० यदैन्द्रवायवः प्रातःसवने गृह्यते० त्रिर्विगृह्णाति० वाय्वग्रा ग्रहा गृह्यन्ते० तृतीयं वायोः पात्रमथ वायव्यान्युच्यन्ते० यन्मैत्रावरुणो गृह्यते० पयसा मैत्रावरुणं श्रीणन्ति० शृतेन श्रीणाति० ॥

[ २७.७–१० ]—स्थालीभिरन्यान् ग्रहान् गृह्णन्ति वायव्यैरन्यान्० वैकङ्कतं मन्थिनः पात्रं भवति० हिरण्येन शुक्रं श्रीणाति० सक्तुभिर्मन्थिनं श्रीणाति० अनभिध्वंसयन्नितराणि पात्राणि श्रीणीयात्० य आनुजावरस्स्यात्०

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः ।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥

इत्येतया पुरोरुचाग्रायणं गृहीतं भ्रातृव्यमेव वृक्त्वाग्रं पर्येति० यदाग्रायणं गृहीत्वा वाचं विसृजते० यद्धिङ्करोत्युद्गातॄनेव वृणीते० द्वयोर्धारयोः प्रातस्सवने गृह्णाति० यदाग्रायणं सवने सवनेऽभिगृह्णाति० यत् प्रस्कन्दयति० यदुपगृह्णाति० स्थाल्या गृह्णाति वायव्येन जुहोति० परा स्थालीमस्यन्ति न वायव्यम्० यदाग्रायणं गृहीत्वा हिङ्करोति० यदाग्रायणमुक्थ्योऽनुगृह्यते० ॥

[ २८.१ ]—आयुर्वै ध्रुव उत्तमो गृह्यते० नवमो गृह्यते० एकाकिनमुत्तरस्मिन् हविर्धाने सादयति० अनुपोप्ते ध्रुवे सादयत्युपोप्त इतरान् ग्रहान्० राजपुत्रो गोपायति० यदि कामयेतावगतमपरुन्ध्युरपरुद्धोऽवगच्छेदिति अध्रुवं त्वा ध्रुवक्षितिमध्रुवाणामध्रुवतमम-च्युतानामच्युततमममुष्या विश उदूहामि इति ध्रुवमुदूहेत्० तृणमेतेन मन्त्रेणोपर्युपर्यति-हरेत्० पूर्णं गृह्णीयाद्यं कामयेत सर्वमायुरियादिति० अल्पं गृह्णीयाद्यं कामयेताल्पमायुरिया-

दिति० उपर्युपार्धं गृह्णीयाद्यं कामयेतोत्तरमायुरियादिति० उभयतो वैश्वानरं गृह्णाति० यदेष प्रातर्गृहीत आ तृतीयसवनाच्छये० ॥

[ ३०.३–४ ]—ऐन्द्रवायवाग्रान् गृह्णीत यः कामयेत यथापूर्वं प्रजाभ्यः कल्पेतेति० ऐन्द्रवायवाग्रान् गृह्णीयादामयाविनः० मैत्रावरुणाग्रान् गृह्णीरन् येषां दीक्षितानां प्रमीयेत० आश्विनाग्रान् गृह्णीतानुजावरः० शुक्राग्रान् गृह्णीत गतश्रीः० मन्थ्यग्रान् गृह्णीताभिचरन्० उक्थ्याग्रान् गृह्णीताभिचर्यमाणः० **मा त्वत्क्षेत्राण्यरणानि गन्म मापस्फरीः पयसा मा न आधक्। मा वयमेनोऽन्यकृतं भुजेम सरस्वत्यभि नो नेषि वस्यः ॥** इति० आग्रायणाग्रान् गृह्णीत यस्य पिता पितामहः पुण्यस्स्यात्० पूर्णान् ग्रहान् गृह्णीयादामयाविनः० पूर्णान् ग्रहान् गृह्णीयाद्यर्हि पर्जन्यो न वर्षेत्० ।

**क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।**
**मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु ।**
**उपयामगृहीतोऽस्यदित्यै त्वा चतुरूध्न्यै ॥**
**उदीरयत मरुतस्समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।**
**न वो दस्रा उपदस्यन्ति धेनवश्शुभं यातामनु रथा अवृत्सत ।**
**उपयामगृहीतोऽस्यदित्यै त्वा चतुरूध्न्यै ॥**
**महीमू षु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।**
**तुविक्षत्रामजरन्तीमुरूचीं सुशर्माणमदितिं सुप्रणीतिम् ।**
**उपयामगृहीतोऽस्यदित्यै त्वा चतुरूध्न्यै ॥**
**एष ते योनिरदित्यै त्वा चतुरूध्न्यै ॥**

°तमेतं[1] वृष्टिकामो गृह्णीत[2]०चतुरस्तनं पात्रं भवति०मृन्मयेन गृह्णाति दारुमयेण जुहोति०॥

**कपिसं [ ३.२-५ ]—**

**आ वायो .... यस्य देव .... ॥---॥ अयं वेनः .... विमाने । .... ॥ उपयामगृहीतोऽसि शण्डाय त्वा ॥ एष ते .... ॥ तं प्रत्नथा .... गिराशुं जयन्तमनु यासु वर्धसे॥ उपयामगृहीतोऽसि मर्काय त्वा॥ एष ते .... ॥--- ॥ उपयामगृहीतोऽस्याग्रयणो .... विष्णुस्त्वां पात्विन्द्रियेण विशं .... ॥---॥**

[ ४२.३–४; ४६.६–७ ] ≡ कासं २७.३–४; ३०.३–४

१. आदित्यं ग्रहम् । २. उपर्युक्तैः त्रिभिर्मन्त्रैः ।

वामासं—

आ वायो भूष शुचिपा .... पूर्वपेयं वायवे त्वा ॥ इन्द्रवायू इमे सुताः .... । उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वा ॥ एष ते योनिः सजोषोभ्यां त्वा ॥ अयं वां मित्रावरुणा .... । उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा ॥

राया वयँ ससवाँसो मदेम हव्येन देवा यवसेन गावः ।
तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम् ॥
एष ते योनिर्ऋतायुभ्यां त्वा ॥७.७-१०

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदँ स्वर्विदम् ।
प्रतीचीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु वर्धसे ।
उपयामगृहीतोऽसि शण्डाय त्वा ॥ एष ते योनिर्वीरतां पाहि ॥ ७.१२
अयं वेनश्चोदयत् .... । उपयामगृहीतोऽसि मर्काय त्वा ॥
मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता ।
आ यः शर्याभिस्तुविनृम्णो अस्याश्रीणीतादिशं गभस्तौ ॥
एष ते योनिः प्रजाः पाहि ॥ ७.१६-१७

ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ ।
अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम् ॥

उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणः पाहि यज्ञं पाहि यज्ञपतिं विष्णुस्त्वामिन्द्रियेण पातु विष्णुं त्वं पाह्यभि सवनानि पाहि॥ सोमः पवते सोमः पवतेऽस्मै ब्रह्मणेऽस्मै क्षत्रायास्मै सुन्वते यजमानाय पवत इष ऊर्जे पवतेऽद्भ्य ओषधीभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ॥ विश्वेभ्यस्त्वा देवेभ्यः ॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थाव्यं गृह्णामि यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वा॥ एष ते योनिरुक्थेभ्यस्त्वा ॥ ७.१९–२२

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् । .... । उपयामगृहीतोऽसि ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तमः ॥ एष ते योनिर्वैश्वानराय त्वा ॥ ७.२४–२५

माशब्रा [ ४.१.३–४ ]—तस्य वा एतस्य ग्रहस्य द्वे पुरोरुचौ । वायव्यैव पूर्वा । ऐन्द्रवायव्युत्तरा० अथातो गृह्णात्येव आ वायो भूष .... वायवे त्वेति ॥ अथापगृह्य पुनरानयति इन्द्रवायू इमे .... इन्द्रवायुभ्यां त्वा ॥ एष ते योनिः सजोषोभ्यां त्वेति सादयति० तत एष

मैत्रावरुणो ग्रहोऽभवत्० अथातो गृह्णात्येव अयं वां मित्रावरुणा .... मित्रावरुणाभ्यां त्वेति। तं पयसा श्रीणाति० स श्रीणाति राया वयँ ससवाँसो .... धत्तमनपस्फुरन्तीम्। एष ते योनिर्ऋतायुभ्यां त्वेति सादयति०॥

[४.२.१–४]—चक्षुषी ह वा अस्य शुक्रामन्थिनौ० इमामु हैके शुक्रस्य पुरोरुचं कुर्वन्ति अयं वेनश्चोदयत् .... विमान इति० इमां त्वेव शुक्रस्य पुरोरुचं कुर्यात् तं प्रत्नथा .... शण्डाय त्वा॥ एष ते योनिर्वीरतां पाहीति सादयति० दक्षिणार्धे सादयति० अथ मन्थिनं गृह्णाति अयं वेनश्चोदयत....मर्काय त्वेति। तँ सक्तुभिः श्रीणाति० स श्रीणाति मनो न येषु .... गभस्तौ॥ एष ते योनिः प्रजाः पाहीति सादयति० आत्मा ह वा अस्याग्रयणः० स्थाल्या ह्येनं गृह्णाति० पूर्णं गृह्णाति० विश्वेभ्यो देवेभ्यो गृह्णाति० सर्वेषु सवनेषु गृह्णाति० स यदि राजोपदस्येत् तमत एव तन्वीरन्नतः प्रभावयेयुः० अथातो गृह्णात्येव ये देवासो....इति० अथ दशापवित्रमुपगृह्य हिंकरोति० त्रिष्कृत्वो हिंकरोति० अथाह सोमः पवत इति० अस्मै ब्रह्मणेऽस्मै क्षत्रायेति० अस्मै सुन्वते यजमानाय पवत इति० तदाहुः एतावदेवोक्त्वा सादयेत्० तदु ब्रूयादेव भूयः इष ऊर्जे पवत इति० अद्भ्य ओषधीभ्यः पवत इति० द्यावापृथिवीभ्यां पवत इति० सुभूताय पवत इति० तदु हैक आहुः ब्रह्मवर्चसाय पवत इति। तदु तथा न ब्रूयात्० विश्वेभ्यस्त्वा देवेभ्यः॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति० अयँ ह वा अस्यैषोऽनिरुक्त आत्मा यदुक्थ्यः० स्थाल्या ह्येनं गृह्णाति० तं वै पूर्णं गृह्णाति० तं वा अपुरोरुक्कं गृह्णाति० अथातो गृह्णात्येव उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वते .... इति० एष ते योनिरुक्थेभ्यस्त्वेति सादयति० स्थाल्या ह्येनं[1] गृह्णाति० तं वै पूर्णं गृह्णाति० वैश्वानराय गृह्णाति० स प्रातःसवने गृहीत एतस्मात् कालादुपशेते० तं गृहीत्वोत्तरे हविर्धाने सादयति० अथैतं व्युह्य न तृणं चनान्तर्धाय०तं वै गोपायन्ति० अथातो गृह्णात्येव मूर्धानं दिवो .... अच्युतक्षित्तमः॥ एष ते योनिर्वैश्वानराय त्वेति सादयति०॥

**वाकासं [७.३.१–४.२] ≡ वामासं ७.४–१०**

**[७.६.१–२] ≡ वामासं ७.१२**

**[७.७.१–३] ≡ वामासं ७.१६–१७**

**[७.८.१–९.१]—**

**---॥ सोमः पवते सोमः पवते सोमः पवते। अस्मै ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्मै सुन्वते .... सुभूताय पवते ब्रह्मवर्चसाय पवते विश्वेभ्यस्त्वा देवेभ्यः॥ ---॥ उपयामगृहीतोऽसीन्द्राय .... उक्थायुवं....॥---॥**

**[४.१०.१–२] ≡ वामासं ७.२४–२५**

---

१. ध्रुवम्।

काशाब्रा [ ५.१.३–४; २.१–४ ] ≡ माशाब्रा

अशौसं—

दिवस्पृथिव्या अन्तरिक्षात् समुद्रादग्नेर्वातान्मधुकशा हि जज्ञे ।
तां चायित्वामृतं वसानां हृद्भिः प्रजाः प्रति नन्दन्ति सर्वाः ॥
महत्पयो विश्वरूपमस्याः समुद्रस्य त्वोत रेत आहुः ।
यत ऐति मधुकशा रराणा तत्प्राणस्तदमृतं निविष्टम् ॥
पश्यन्त्यस्याश्चरितं पृथिव्यां पृथङ् नरो बहुधा मीमांसमानाः ।
अग्नेर्वातान्मधुकशा हि जज्ञे मरुतामुग्रा नप्तिः ॥
मातादित्यानां दुहिता वसूनां प्राणः प्रजानाममृतस्य नाभिः ।
हिरण्यवर्णा मधुकशा घृताची महान् भर्गश्चरति मर्त्येषु ॥
मधोः कशामजनयन्त देवास्तस्या गर्भो अभवद्विश्वरूपः ।
तं जातं तरुणं पिपर्ति माता स जातो विश्वा भुवना वि चष्टे ॥
कस्तं प्र वेद क उ तं चिकेत यो अस्या हृदः कलशः सोमधानो अक्षितः ।
ब्रह्मा सुमेधाः सो अस्मिन् मदेत ॥
स तौ प्र वेद स उ तौ चिकेत यावस्याः स्तनौ सहस्रधारावक्षितौ ।
ऊर्जं दुहाते अनपस्फुरन्तौ ॥
हिङ्करिक्रती बृहती वयोधा उच्चैर्घोषाभ्येति या व्रतम् ।
त्रीन् घर्मानभि वावशाना मिमाति मायुं पयते पयोभिः ॥
यामापीनामुपसीदन्त्यापः शाक्वरा वृषभा ये स्वराजः ।
ते वर्षन्ति ते वर्षयन्ति तद्विदे काममूर्जमापः ॥
स्तनयित्नुस्ते वाक्प्रजापते वृषा शुष्मं क्षिपसि भूम्यामधि ।
अग्नेर्वातान्मधुकशा हि जज्ञे मरुतामुग्रा नप्तिः ॥ ९.१.१–१०
इन्द्राय सोममृत्विजः सुनोता च धावत । स्तोतुर्यो वचः शृणवद्धवं च मे ॥
आ यं विशन्तीन्दवो वयो न वृक्षमन्धसः । विरप्शिन् वि मृधो जहि रक्षस्विनीः॥
सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे । युवा जेतेशानः स पुरुष्टुतः ॥ ६.२

अपैसं—

दिवस्पृथिव्या .... नन्दन्तु सर्वाः ॥ पशन्त्यस्याश्चरितं पृथिव्याः .... ॥ महद्विश्वरूपं पयोऽस्याः समुद्रस्योत त्वा रेत आहुः । .... ॥ मातादित्यानां .... घृताची महद्भर्गः .... ॥ मधोः कशामजनयन्त .... भुवनाभि वस्ते ॥ कस्तौ प्र वेद क उ तौ जानाति यावस्याः .... ॥ कस्तं प्र वेद .... ॥ हिङ्कृण्वती बृहती वयोधा

उच्चैर्घोषाभि याति या व्रतम् । .... ॥ यामापीनामुपसीदन्त्यापो यां शाक्वरा वृषभा यां .... ॥ स्तनयित्नुस्ते .... ॥ १६.३२.१–१० ॥ इन्द्राय सोममृत्विजः सुनोतना तु धावत । स्तोत्रियं हवं शृणवद्धवं तु नः ॥ सुनोता सोमपावने .... । युवा जयन्तो ईशानः.... ॥ आ त्वा विशन्त्विन्दवो .... ॥ १९.१.४–६

## ६२. ग्रहग्रहणौद्गात्रम्

### गायत्रम्[1]

साकौसं [ २.९.२.८.१ ]—

अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः । सूर्यो ज्योतिर्ज्योतिः सूर्यः ॥

१ २ २ १ २ २ – २ १ २
अग्निर्ज्योतिर्ज्योतिरग्नोम् । आग्निर्ज्योतिर्ज्योतिराग्नी२ः । अग्निर्ज्योति-
२ २ १ – १ २ १ १ १ १ २ २ २
र्ज्योता१२१२इः । हुम्आ२ । आग्नो । आ३४५ ॥ इन्द्रोज्योतिर्ज्योतिरिन्द्रोम् ।
१ २ २ २ – १२ २ २ २ १ – १
आइन्द्रोज्योतिर्ज्योतिराइन्द्रा२ः । इन्द्रोज्योतिर्ज्योता१२१२इः । हुम्आ२ । आइन्द्रो ।
२ १ १ १ १२२ २ २ १ २ २ २ – २२१२ २
आ३४५ ॥ सूर्योज्योतिर्ज्योतिःसूर्योम् । सूर्योज्योतिर्ज्योतिःसूर्या२ः । सूर्योज्योति-
२ २ १ – १ २ १ १ १
र्ज्योता१२१२इः । हुम्आ२ । सूर्यो । आ३४५ ॥

तांब्रा [ १.२.७–९ ]—

वसवस्त्वा गायत्रेण छन्दसा संमृजन्तु ॥ रुद्रास्त्वा त्रैष्टुभेन छन्दसा संमृजन्तु ॥ आदित्यास्त्वा जागतेन छन्दसा संमृजन्तु ॥ पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतोऽतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सं तदाशतः ॥ प्र शुक्रैतु देवी मनीषास्मद्रथः सुतष्टो न वाजी । आयुषे मे पवस्व वर्चसे मे पवस्व विदुः पृथिव्या दिवो जनित्राच्छृण्वन्त्वापोऽधः क्षरन्तीः सोमेहोद्गाय । ममायुषे मम ब्रह्मवर्चसाय यजमानस्यर्द्ध्या अमुष्य राज्याय ॥

[ ६.६.६–१९ ]—वसवस्त्वा गायत्रेण च्छन्दसा पुनन्तु रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा पुनन्त्वादित्यास्त्वा जागतेन च्छन्दसा पुनन्तु । एतानि वै दैवानि पवित्राणि० तस्माच्छुक्लं पवित्रं० पवित्रं विगृह्णन्ति० प्र शुक्रैतु देवी मनीषास्मद्रथः सुतष्टो न वाजीत्युद्गाता धारामनु-

१. उद्गातुः ज्योतिर्गानम् ।

मन्त्रयते आयुषे मे पवस्व वर्चसे मे पवस्व विदुः पृथिव्या दिवो जनित्राच्छृण्वन्त्वापोऽधः क्षरन्तीः सोमेहोद्गायेत्याह । मह्यं तेजसे ब्रह्मवर्चसायेति० अच्छिन्नं पावयन्ति० संततं पावयन्ति०॥

साजैसं [ ३.२०.९–११ ]—

पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सं तदाशत ॥
तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पवितारमाशवो दिवः पृष्ठमधि तिष्ठन्ति तेजसा ॥
अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमाति भुवनेषु वाजयुः ।
मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा दधुः ॥

## सोमसामानि[1]

साजैसं [ १.५४.९ ]—

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥

सोमःपवतेजनितायेऔ हो बा । मातायिनाम् । जनितादिवोजनिता-
षी तू व्यखा त्र प्य श त्रा कि का ति

पृथिव्याः । जनायि ता ग्नेः । जनिताम्रूरि या स्या । जनि ते न्द्रस्यजनितोत-
चिचश टथ व्यखा ण खी व्यखा तृ किका की शकुटी

विष्णोः ॥ १
निख

हाबुजनद्धाबुजनद्धाबुजनाज्जनद्धा बुजनद्धाबुजनद्धाबु होयिजनद्धो यिज न द्धो-
षेषै तै शत चा शो

यिजनात् । सोमःपवातेजानीताम ती नाम् । जनितादायि वो जानीतापृ थी व्याः ।
श क टि कि व्यखा श का टिटी कि व्यखा प्य

जनिताग्नायिर्जे नि तासूरियास्या । हाबुजनद्धाबुजनद्धाबुजनाज्जनद्धाबुजनद्धाबुजन-
ती का ति की क :खा श षेषै

द्धाबुहोयिजनद्धोयिजनद्धोयिजनात् । जनि ते न्द्रास्याजानीतोता वा थी । ष्णोः ॥ २
तै शतचा शो श किक टटी पि व्यखा श त्र

---

१, प्रतिसवनं पवित्रे राजन्यानीयमाने प्रस्तोता एतानि सङ्गायेत् । द्रष्टव्यं कौग्राम १५.२.६, ८, ९

जनद्धाबुजनद्धाबुजनद्धाबुजनदाबुजनदाबुजनदाबुजनद्धोयिज'नद्धोयिज नद्धोयि।
षे तैश च चाचा चेश

सोमःपवातेजानीताम'ती'नाम् । जनि'ता'दायिवोजनितापृथीव्याः । जनि'ता'ग्नायि-
क टीटी कि ख्यखा श किक टि कि खा प्या किका

र्जनिता'सू'रि'या स्या । जनद्धाबुजनद्धाबुजनद्धाबुजनदाबुजनदाबुजनदाबुजनद्धोयि-
कि किंकी ख्यखा श षे तैश च

ज''नद्धोयिजनद्धोयि । जनितेन्द्रास्या जानितोता'वा यीं । ष्णोः ॥ ३
चा चा चे श किक टयटी पि ख्यखा श त्र

[ ग्राम ३.६.३३-३५ ]

## गायत्रम्[1]

साजैसं [ १.४९.१ ]—

उच्चा ते जातमन्धसा दिवि सद्भूम्या ददे । उग्रꣳ शर्म महि श्रवः ॥

**उच्चातेजातमन्धसोम् । दिविसद्भूम्यादादायि ऊग्रꣳशार्मामाहाहम्भा । ओवा ॥**
च श्र ओ च च ट सट च शस क टच

जैब्रा [ १.८१ ]—स यं कामयेत पापीयान् स्यादिति कृष्णमस्य पवित्रेऽप्यस्येत्० अथ यं कामयेत नार्वाङ् न परः स्यादिति धूम्रमस्य पवित्रेऽप्यस्येत्० अथ यं कामयेत श्रेयान्त्स्याद्रुचमश्नुवीतेति फाल्गुनमस्य पवित्रं कुर्यात्० तदन्तरेषे अवहृत्य संमार्ष्टि **वसवस्त्वा संमृजन्तु गायत्रेण छन्दसा ॥ रुद्रास्त्वा संमृजन्तु त्रैष्टुभेन छन्दसा ॥ आदित्यास्त्वा संमृजन्तु जागतेन छन्दसा** इति । तदुदीचीनदशं पवित्रवत्या वितनोति पवित्रं ते विततं ब्रह्मणस्पत इति समष्ट्यै । तपोष्पवित्रं विततं दिवस्पद इति स्वर्गकामस्य । अरूरुचदुषसः पृश्निरग्रयुरिति प्रजाकामस्य । सर्वाभिरेव वितनुयादेतेषाꣳ सर्वेषां कामानामुपाप्त्यै । राजानमानयति । तमभिमन्त्रयते **स पवस्व सुधामा देवानामभि प्रियाणि धाम ॥ त्रिर्देवेभ्योऽपवथास्त्रिरादित्येभ्यस्त्रिरङ्गिरोभ्यः ॥ येन तुर्येण ब्रह्मणा बृहस्पतयेऽपवथास्तेन मह्यं पवस्व ॥ स नः पवस्व शं गवे शं जनाय शमर्वते । शꣳ राजन्नोषधीभ्यः** इति० अध्वर्युराग्रायणं ग्रहं गृह्णन् हिंकरोति० अथोद्गातैकर्चो गायत्रं गायति उच्चा ते जातमन्धसेति० ॥

१. प्रतिसवनम् आग्रयणग्रहे गृहीत उद्गाता एतत् साम सकृद् गायेत् ।

## ६३. बहिष्पवमाननिःसर्पणम्

तैसं [ ६.३.१ ]—पराजित्येव खलु वा एते यन्ति ये बहिष्पवमानꣳ सर्पन्ति ॥

[ ३.१.९ ]—

**अग्निः प्रातःसवने पात्वस्मान् वैश्वानरो महिना विश्वशंभूः ।**
**स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम ॥**

[ ३.१.१० ]—**वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान् पशुषु प्रजां मयि च यजमाने च** इत्याह० यद् ग्रहान् गृहीत्वा बहिष्पवमानꣳ सर्पन्ति ॥

मैसं [ ३.८.१० ]—यद्बहिष्पवमानꣳ स्तोष्यन्तः सर्पन्ति ।

[ ४.६.२ ]—तस्माद् ब्राह्मणेन बहिष्पवमानमभिसृप्यम्० तस्माद्यं द्विष्यात् तं परिबाधेत० यद् ग्रहान् गृहीत्वा बहिष्पवमानꣳ सर्पन्ति० ॥

[ ४.८.८ ]—येनैवाग्रे सर्पन्ति तेन पुनः सर्पेयुः० ॥

वामासं—

**यस्ते द्रप्सः स्कन्दति यस्ते अꣳशुर्ग्रावच्युतो धिषणयोरुपस्थात् ।**
**अध्वर्योर्वा परि वा यः पवित्रात्तं ते जुहोमि मनसा वषट्कृतꣳ स्वाहा ॥**
**देवानामुत्क्रमणमसि ॥ ७.२६**

माशब्रा [ ४.२.५.१–६ ]—ग्रहान् गृहीत्वोपनिष्क्रम्य विप्रुषाꣳ होमं जुहोति० स जुहोति यस्ते द्रप्सः स्कन्दति यस्ते अꣳशुः .... इति० अथ स्तीर्णायै वेदेर्द्वे तृणे अध्वर्युरादत्ते । तावध्वर्यू प्रथमौ प्रतिपद्येते० अथ प्रस्तोता० अथोद्गाता० अथ प्रतिहर्ता० तान् वा एतान् पञ्चर्त्विजो यजमानोऽन्वारभते० अथान्यतरत्तृणं चात्वालमभि प्रास्यति देवानामुत्क्रमणमसीति० अथान्यतरत्तृणं पुरस्तादुद्गातॄणामुपास्यति तूष्णीमेव० ॥

**वाकासं [ ७.११ ] = वामासं**

काशब्रा [ ५.३.१.१–५ ] = माशब्रा

ऋसं—

**द्रप्सश्चस्कन्द प्रथमाँ अनु द्यूनिमं च योनिमनु यश्च पूर्वः ।**
**समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥**
**यस्ते द्रप्सः स्कन्दति यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थात् ।**
**अध्वर्योर्वा परि वा यः पवित्रात् तं ते जुहोमि मनसा वषट्कृतम् ॥**
**॥ १०.१७.११–१२**

ऐब्रा [ २.२२ ]—तदाहुः सर्पे३न्न सर्पे३दिति। सर्पेदिति हैक आहुः० तत्तन्नादृत्यम्० ॥

शांब्रा [ १२.५ ]—अनूत्थेयः पवमानो ना३ इति। नानूत्थेय इत्याहुः० तस्मादु नानूत्तिष्ठेत्० यदि तु स्वयं होता स्यादनूत्तिष्ठेत्[१]० ॥

**साकौसं [ १.४.२.३.१० ]—**

**[२]ऋचꣳ साम यजामहे याभ्यां कर्माणि कृण्वते ।**

**वि ते सदसि राजतो यज्ञं देवेषु वक्षतः ॥**

**तांब्रा [ १.३.१–३ ]—**

**बेकुरा नामासि जुष्टा देवेभ्यो नमो वाचे नमो वाचस्पतये देवि वाग् यत्ते वाचो मधुमत्तस्मिन् मा धाः सरस्वत्यै स्वाहा ॥ सूर्यो मा दिव्याभ्यो नाष्ट्राभ्यः पातु वायुरन्तरिक्षाभ्योऽग्निः पार्थिवाभ्यः स्वाहा ॥ योऽद्य सौम्यो वधोऽघायूनामुदीरते । विषूकुहस्य धन्वनाप तान् वरुणोऽपधमत् ॥**

[ ६.७.१–१२ ]—सूर्यो मा दिव्याभ्यो नाष्ट्राभ्यः .... स्वाहेति जुहोति० तस्मै जुहुयात् बेकुरा नामासि .... स्वाहेति० यं द्विष्यात्तस्यैतामाहुतिं जुहुयाद्वाचं मनसा ध्यायेत्० बहिष्पवमानꣳ सर्पन्ति० प्रह्वाणा इव सर्पन्ति० त्सरन्त इव सर्पन्ति० वाचं यच्छन्ति० पञ्चर्त्विजः सꣳरब्धाः सर्पन्ति० ॥

[ ६.७.१६–२० ]—अध्वर्युः प्रस्तरꣳ हरति० ॥

जैब्रा [ १.८२–८६ ]—क्रूरमिव वा एतद्यज्ञस्य कुर्वन्ति यद्धविर्धाने ग्रावभिः सोमꣳ राजानꣳ हत्वा बहिष्पवमानꣳ सर्पन्ति। का तस्य प्रायश्चित्तिरित्याहुः। अप उपस्पृशेयुः० बहिष्पवमानꣳ सर्प्स्यन् होमं जुहुयात् **जुष्टो वाचो भूयासं जुष्टो वाचस्पत्युः। देवि वाग् यत्ते वाचो मधुमत्तस्मिन् मा धाः स्वाहा सरस्वत्यै** इति० **बेकुरा नामासि प्रेषिता दिव्याय कर्मणे शिवा नः सुयमा भव। सत्याशीर्यजमानाय स्वाहा** इति वा जुहुयात्० अथ द्वितीयां जुहोति **सूर्यो मा देवो दिव्येभ्यो रक्षोभ्यः पातु वात आन्तरिक्षेभ्योऽग्निः पार्थिवेभ्यः स्वाहा** इति० अध्वर्युः प्रस्तरꣳ हरन् सर्पति तमनुमन्त्रयते **एतदहं दैव्यं वाजिनꣳ संमार्जिम** इति० यदन्तर्हविर्धाने ग्रहान् गृहीत्वा बहिष्पवमानꣳ सर्पन्ति। संतताः सर्पन्ति० ग्रावभ्रा इव सर्पन्ति० अध्वर्युः प्रथमः सर्पति० प्रस्तोता द्वितीयः सर्पति० उद्गाता तृतीयः सर्पति० प्रतिहर्ता चतुर्थः सर्पति० यजमानः पञ्चमः सर्पति० ब्रह्मा षष्ठः सर्पति० ॥

[ १.२७८ ]—तस्माद्बहिष्पवमानेन स्तोष्यन्तः प्रह्वारा इव प्रकुपिता इव सर्पन्ति०॥

**अशौसं—**

**द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।**

**समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥** १८.४.२८

१. सत्रे। २. प्रवृत्तहोमे उद्गातारः तृतीयामाहुतिमनयर्चा जुह्वति ।

अपैसं—

द्रप्सश्चस्कन्द .... ।। यस्ते द्रप्सः स्कन्दति यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थात् । अध्वर्योर्वा परि यः पवित्रात् तं ते जुहोमि मनसा वषट्कृतम् ।।

यस्ते द्रप्सः पतितोऽवश्च यः परः स्रुचा ।
अयं देवो बृहस्पतिः सं तं सिञ्चतु राधसे ।।
यस्ते द्रप्सः पतितः पृथिव्यां धानासोमः परीवापः करम्भः ।
अयं देवो बृहस्पतिः सं तं सिञ्चतु वर्चसे ।। २०.१२.७–१०

गोब्रा [ २.२.१२ ]—अथ विसृप्यं वैप्रुषान् होमान् जुहुति द्रप्सश्चस्कन्देति० यस्ते द्रप्सः स्कन्दतीति० ।।

## ६४. बहिष्पवमानस्तोत्रम्[1]

### [ रथन्तरपृष्ठे ]

### गायत्रम्

साकौसं [ २.१.१.१ ]—

उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ इयक्षते ।।
अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः । देवं देवाय देवयु ।।
स नः पवस्व शं गवे शं जनाय शमर्वते । शर्ं राजन्नोषधीभ्यः ।।

---

१. त्रिवृत्स्तोमम् । सोमयागे बहिष्पवमानस्तोत्रमारभ्य यानि सामानि प्रस्तोत्रादिभिर्गेयानि तत्र प्रतिगानं पञ्च विभक्तयो भवन्ति । ताश्च प्रस्तावः उद्गीथः प्रतिहारः उपद्रवः निधनं चेति । तत्र प्रस्तावः प्रस्तोत्रा गेयः। उद्गीथः उद्गात्रा गेयः । प्रतिहारः प्रतिहर्त्रा गेयः । उपद्रवः पुनः उद्गात्रा गेयः । निधनं तु सर्वैर्गेयम् । अत्र श्रौतकोशे सामसुद्रणावसरे सर्वा विभक्तिः दण्डद्वयेन प्रदर्शिता ।

पवमानस्तोत्रेषु एकाधिकाः तृचाः क्रमेण अव्यवहितं गेया भवन्ति । स्तोत्रगानप्रसङ्गे तद्योनिभूताः सर्वे मन्त्राः पुरस्तादुपरिष्टाच्च जप्या इति विधिः । श्रौतकोशे तु एकैकस्माद् गेयतृचात् पूर्वं तद्योनिभूता मन्त्रा मुद्रिताः । ग्रन्थसंपादनसौकर्यार्थमियं रीतिरनुसृतेत्यवगन्तव्यम् ।

औद्गात्रप्रकरणे रथन्तरादीनि पृष्ठानि भवन्ति । तत्र रथन्तरपृष्ठं कर्तव्यं बृहत्पृष्ठं वेति विकल्पः । तत्तत्पृष्ठानुसारेण कानिचित् स्तोत्राणि भिद्यन्ते । अतः अत्र उभयप्रकारेण गेयानि स्तोत्राणि मुद्रितानि । यथापृष्ठं तानि गेयानि । जैमिनिशाखामनुसृत्य बृहत्पृष्ठे गेयानां स्तोत्राणामनुपलब्धेः केवलं रथन्तरपृष्ठे गेयान्येव स्तोत्राणि मुद्रितानि ।

प्रतिस्तोत्रं श्रुत्यनुसारेण स्तोमसंख्याविशेषो भवति । स च पवमानव्यतिरिक्तेषु स्तोत्रेषु विष्टुतिविशेषेण संपादनीयो भवति । तत्तत्कामनानुसारेण स्वीकरणीया विष्टुतयः ताण्ड्यमहाब्राह्मणे विस्तृतं प्रदर्शिताः अत्रैव अग्निष्टोमप्रकरणस्यान्तिमे भाग उद्धृताश्च । तासु अभीप्सितां विष्टुतिमनुसृत्य तत्तत् स्तोत्रं गेयं भवति । एवं प्रतिस्तोत्रं विष्टुतिप्रकारस्य साधारण्येनानिर्धारणीयत्वात् श्रौतकोशे स्तोमसंख्यानिरपेक्षं स्तोत्राणि मुद्रितानि । पवमानस्तोत्राणि विहाय सर्वेषु स्तोत्रेषु प्रत्यृचं गानस्यावृत्तिर्भवति । पवमानस्तोत्रेषु तु तथा न । तत्र गानानां स्तोमानां च समाना संख्या । अतः सर्वत्र पवमानस्तोत्रमुद्रणावसरे गानेभ्यः पूर्वं स्तोमसंख्या प्रदर्शिता ।।

१ २ २ २ २ १ - - १२ २ २ - १ २ २ २
१-३ हुम् उपास्मैगायतानरोम् ॥ ओमो२ओ२ ओओओओओ२ ओओओओओओ
१ - १ २^१ १ १ १ २ २
१२१२ ॥ हुम् आ२* ॥ ओओ ॥ आ३४५ ॥ [१] अभितेमधुनापयोम् ॥
१ २ २ - १ २ २ २ १ -
ओमोओओओओओओओ२ ओओओओओओ १२१२ ॥ हुम् आ २ ॥
१ २^ १ १ १ १ १ - - -
ओओ ॥ आ ३४५ ॥ [२] सनःपवस्वशङ्गवोम् ॥ ओमो२ओ२ ओ२
१ २ १ २ - १ २ १ - १
ओओओओओओओओ१ ओ२ ओओ१२१२ ॥ हुम् आ२ ॥ ओओ ॥
२ ^ १ १ १
आ ३४५ ॥ [३]

## गायत्रम्

साकौसं [ २.१.१.२ ]—

दविद्युतत्या रुचा परिष्टोभन्त्या कृपा । सोमाः शुक्रा गवाशिरः ॥
हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् । सीदन्तो वनुषो यथा ॥
ऋधक्सोम स्वस्तये संजग्मानो दिवा कवे । पवस्व सूर्यो दृशे ॥

१ २ १ २ - १ २ - १ २ - १ १
४—६ दविद्युततियारुचोम् ॥ ओमोओओओ२ ओओओओ२ ओओओओ२ ओओ
१ - १ २^१ १ १ १ २ २ २
१२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [१] हिन्वानोहेतृभिर्हितोम् ॥
१ २ २ २ २ १ २ २ १ २
ओमोओओओओओ १२१२ ओओओओ १२१२ ओओ १२१२ ॥
१ - १ २^ १ १ १ १ २ १ २
हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [२] ऋधक्सोमसुवस्तयोम् ॥ ओमो-
१ २२ १ २ १ २ १ २ १ १ - १ २
ओओओओओओओओओओओओ १२१२ ॥ हुम् आ २ ॥ ओओ ॥ आ
१ १ १
३४५ ॥ [३]

* सर्वत्र बहिष्पवमाने प्रथमा रेतस्या अहिंकृता । अतः तत्र ' हुम् आ २ ' इति हिंकारो न कर्तव्यः। ताण्ड्यब्राह्मणादिषु सर्वत्र ' हिंकरोति ' इति शब्दप्रयोगो दृश्यते । तेन मूलतः सामगाने ' हिम् ' इत्येव हिंकारो विहित आसीदिति स्पष्टं भवति । परं बह्वोः कालादारभ्य प्रायः सर्वत्र सामगाः ' हुम् ' इति हिंकारं कुर्वन्ति । स एवात्र स्वीकृतः ।

## गायत्रम्

साकौसं [ २.१.३.१ ]—

पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षत। अर्वन्तो न श्रवस्यवः ॥

अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये। अवावशन्त धीतयः ॥

अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः। अग्मन्नृतस्य योनिमा ॥

१ २ २ १ २ – १ २ २
७–९ पवमानस्यतेकवोम् ॥ ओमोओओओओओओओ२ ओओओओओओ१२१२॥

१ – १ २^ १ १ १ १ २ २ १
हुम् आ२ ॥ ओओ ॥ आ ३४५॥ [१] अच्छाकोशम्मधुश्चुतोम् ॥ ओमो-

२ २ – १२ २ १ – १ २^
ओओओओओओओ२ ओओओओओओ १२१२ ॥ हुम् आ२॥ ओओ ॥ आ

१ १ १ १ २ १ २ २ २ २ –
३४५॥ [२] अच्छासमुद्रमिन्दवोम् ॥ *ओमोओओओओओओओ२ ओओ-

२ १ १ – १ १^ १ १ १
ओओओओ१२१२ ॥ हुम् आ२† ॥ ओओ ॥ आ ३४५ ॥ [३]‡

* सर्वत्र बहिष्पवमाने उत्तमा रथन्तरवर्णा। अतः तस्याम् ऊर्ध्वं प्रस्तावाच्चत्वारि अक्षराणि भकाररूपाणि

१ २ २ २ १ २ २ २
स्तोभेत्। तत्र ‘ ओमोओओओ ’ इत्यस्य स्थाने ओंभाभाभाभा इति गायेत्।

१ – १ –
† उत्तमाया रथन्तरवर्णत्वात् ‘ हुम् आ २ ’ इत्यस्य स्थाने ‘ हु २ म् ’ इति हिंकारः कर्तव्यः।

‡ अग्निष्टोमस्य प्रथमप्रयोगे धूर्गानानि गेयानि। तदा अधोनिर्दिष्टप्रकारेण विपरिणामः कर्तव्यः —

२^ १ १ १ २^ १ १ १
२७९ पृष्ठे १ पङ्क्तौ ‘ आ ३४५ ’ इत्यस्य स्थाने ‘ सा ३४५ त् ’।

२^ १ १ १ १^ १ १ १
„ „ ४ पङ्क्तौ ‘ आ ३४५ ’ इत्यस्य स्थाने ‘ सा ३४५ म् ’।

१ २ १ २
„ „ ५ पङ्क्तौ ‘ ओ ओ १२१२ ’ इत्यस्य स्थाने ’ बाधा १२१२ ’।

१ ^ १ १ १ २ ^ १ १ १
„ „ ६ पङ्क्तौ ‘ आ ३४५ ’ इत्यस्य स्थाने ‘ सुवा ३४५ : ’।

१ २ – १ २ १ २ – १ २
„ „ १२ पङ्क्तौ ‘ ओओओओ२ ओओ ’ इत्यस्य स्थाने ‘ सोमाःशुक्रा२ ओओ ’।

## [ बृहत्पृष्ठे ]

### गायत्रम्

साकौसं [ २.२.१.१ ]—

पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः। अभि विश्वानि काव्या ॥
त्वꣳ समुद्रिया अपोऽग्रियो वाच ईरयन्। पवस्व विश्वचर्षणे ॥
तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे। तुभ्यं धावन्ति धेनवः ॥

१ र र १ - - १र र र - १ र
१-३ हुम् पवस्ववाचोअग्रियोम् ॥ ओमो२ ओ२ ओओओओओ२ ओओओओओ
२ १ - १ २^१११ १ र
ओ १२१२ ॥ हुम् आ२*॥ ओओ ॥ आ ३४५॥ [१] तुवꣳसमुद्रियाअपोम्॥
१ र र - १ र र २ १ -
ओमोओओओओओओओ२ ओओओओओओ १२१२ ॥ हुम् आ २ ॥
१ २^१११ १ र र र १ - १ - १ -
ओओ ॥ आ ३४५ ॥ [२] तुभ्येमाभुवनाकवोम् ॥ ओमो २ ओ २ ओ २
१ २ १ २ - १ २ १ - १
ओओओओओओओओ १ओ २ ओ ओ १२१२ ॥ हुम् आ २ ॥ ओओ ॥
२^१११
आ ३४५॥ [३]

२^१११ २^ १११
२७९ पृष्ठे १३ पङ्क्तौ ' आ ३४५ ' इत्यस्य स्थाने इडा ३४५।
१ र र २ र
" " १४ पङ्क्तौ ' ओमोओओओओओओ१२१२ओ ' इत्यस्य स्थाने
१ र र २ र १ २
' ओमावाजंवाज्यक्रमी १२१२ दो '। ' १२१२ ओओ ' इत्यस्य स्थाने
१ २
' १२१२ नुषा '।
१^१११ २^१११
" " १५ पङ्क्तौ ' आ ३४५ ' इत्यस्य स्थाने ' वा ३४५ क् '।

१ -
* सर्वत्र बहिष्पवमाने प्रथमा रेतस्या अहिंकृता। अतः तत्र ' हुम् आ २ ' इति हिंकारो न कर्तव्यः।

## गायत्रम्

साकौसं [ २.२.१.२ ]—

पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने। विश्वा अप द्विषो जहि ॥
यस्य ते सख्ये वयᳬ सासह्याम पृतन्यतः। तवेन्दो द्युम्न उत्तमे ॥
या ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे। रक्षा समस्य नो निदः ॥

१ र र र १ र – १ र – २ १र २
४–६ पवस्वेन्दोवृषासुतोम् ॥ ओमोओओओ२ ओओओओ२ ओओओओ१२१२॥
१ – १ २^१११ १ र र १ र
हुम् आ २ ॥ ओंओ ॥ आ३४५॥ [१] यस्यतेसखियेवयोम् ॥ ओमोओओ-
२ र १र र र १ २ १ –
ओओओओ १२१२ ओओओओ १२१२ ओंओ १२१२ ॥ हुम् आ२ ॥
१ २^१११ १र र र र र १ –
ओओ ॥ आ३४५ ॥ [२] यातेभीमानियायुधोम् ॥ ओमोओओओओओओओ २
१ २ १ – १ २^१११
ओओओओओओ १२१२॥ हुम् आ २ ॥ ओओ ॥ आ ३४५ ॥ [३]

## गायत्रम्

साकौसं [ २.२.१.३ ]—

वृषा सोम द्युमाᳬ असि वृषा देव वृषव्रतः। वृषा धर्माणि दध्रिषे ॥
वृष्णस्ते वृष्ण्यᳬ शवो वृषावनं वृषा सुतः। स त्वं वृषन् वृषेदसि ॥
अश्वो न चक्रदो वृषा सं गा इन्दो समर्वतः। वि नो राये दुरो वृधि ॥

१र र र १ र र – १र र २
७–९ वृषासोमद्युमाᳬअसोम् ॥ ओमोओओओओओओओ २ ओओओओओओ
१ – १ २^१११ १ र
१२१२ ॥ हुम् आ २ ॥ ओओ ॥ आ ३४५ ॥ [ १ ] वृष्णस्तेवृष्णियᳬ-
१ र र – १ २ १
शवोम् ॥ ओमोओओओओओओओ २ ओओओओओओ १२१२ ॥ हुम्
– १ २^१११ १ र र १ र र
आ २ ॥ ओओ ॥ आ ३४५ ॥ [२] अश्वोनचक्रदोवृषोम् ॥ *ओमोओओओ-

* सर्वत्र बहिष्पवमाने उत्तमा रथन्तरवर्णा। अतः तस्याम् ऊर्ध्वं प्रस्तावाच्चतुरक्षराणि भकाररूपाणि
१ र र १ र र
स्तोभेत्। तत्र ' ओमोओओओ ' इत्यस्य स्थाने ' ओंभाभाभा भा ' इति गायेत्।

– १र २ २ २ १ – १ २^
ओओओओर ओओओओओओ १२१२ ॥ हुम् आर* ॥ ओओ ॥ आ
१ १ १
३४५ [३]**

तांब्रा [ १.३.४–१० ]—

यो म आत्मा या मे प्रजा ये मे पशवस्तैरहं मनो वाचं प्रसीदामि ॥ अग्ने-स्तेजसेन्द्रस्येन्द्रियेण सूर्यस्य वर्चसा बृहस्पतिस्त्वा युनक्तु देवेभ्यः प्राणायाग्निर्युनक्तु तपसा स्तोमं यज्ञाय वोढवे दधात्विन्द्र इन्द्रियꣳ सत्याः कामा यजमानस्य सन्तु ॥ अन्नं करिष्याम्यन्नं प्रविष्याम्यन्नं जनयिष्यामि ॥ अन्नमकरमन्नमभूदन्नमजीजनम् ॥ श्येनोऽसि गायत्रछन्दा अनु त्वारभे स्वस्ति मा संपारया मा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषम् ॥ सं वर्चसा पयसा सं तपोभिरगन्महि

१ – १ –
* उत्तमाया रथन्तरवर्णत्वात् ' हुम् आ २ ' इत्यस्य स्थाने ' हु २ म् ' इति हिंकारः कर्तव्यः ।

** अग्निष्टोमस्य प्रथमप्रयोगे धूर्गानानि गेयानि । तदा अधोनिर्दिष्टप्रकारेण विपरिणामः कर्तव्यः—

२^ १ १ १ २^ १ १ १
२८१ पृष्ठे ८ पङ्क्तौ ' आ ३४५ ' इत्यस्य स्थाने ' सा ३४५ त् ' ॥

२^ १ १ १ २^ १ १ १
„ „ १० पङ्क्तौ ' आ ३४५ ' इत्यस्य स्थाने ' सा ३४५ म् ' ॥

१ २ १ २
„ „ ११ पङ्क्तौ ' ओ ओ १२१२ ' इत्यस्य स्थाने ' ताइधा १२१२ ' ॥

२^ १ १ १ २^ १ १ १
„ „ १२ पङ्क्तौ ' आ ३४५ ' इत्यस्य स्थाने ' सुवा ३४५ः ' ॥

२ १र २ २ १र २
२८२ पृष्ठे ६ पङ्क्तौ ' ओओओओ १२१२ ' इत्यस्य स्थाने ' विश्वाअपदोओ १२१२ ' ॥

२^ १ १ १ २^ १ १ १
„ „ ७ पङ्क्तौ ' आ ३४५ ' इत्यस्य स्थाने ' इडा ३४५ ' ॥

१ र २ १ र २
„ ७–८ पङ्क्तौ ' ओमोओओओओओओ ' इत्यस्य स्थाने ' ओꣳसासह्यामपृतन्याता ' ॥

१ २ १ २
„ „ ८ पङ्क्तौ ' ओओ १२१२ ' इत्यस्य स्थाने ' ह्नऊ १२१२ ' ॥

२^ १ १ १ २^ १ १ १
„ „ ९ पङ्क्तौ ' आ ३४५ ' इत्यस्य स्थाने ' वा ३४५ क् ॥ '

मनसा सꣳ शिवेन सं विज्ञानेन मनसश्च सत्यैर्यथा वोऽहं चारुतमं वदानीन्द्रो वो दृशे भूयासꣳ सूर्यश्चक्षुषे वातः प्राणाय सोमो गन्धाय ब्रह्म क्षत्राय॥ नमो गन्धर्वाय विश्वग्वादिने वर्चोधा असि वर्चो मयि धेहि ॥

[ १.९.१ ]—

रश्मिरसि क्षयाय त्वा क्षयं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥

[ ६.७.२१–८.११ ]—प्रस्तरमासाद्योद्गायेत्० अष्ठीवतोपस्पृशतोद्गेयम्० चात्वालमवेक्ष्य बहिष्पवमानꣳ स्तुवन्ति० नवभिः स्तुवन्ति हिंकारो दशमः० यद्बहिष्पवमानमेकरूपाभिः स्तुवन्ति० पराचीभिः स्तुवन्ति० अपरिश्रिते स्तुवन्ति० बहिः स्तुवन्ति० ।

[ ६.८.१५–१८ ]—सकृद्धिंकृताभिः पराचीभिः स्तुवन्ति० आवतीमुत्तमां गायेत्० रथन्तरवर्णामुत्तमां गायेत्० ।

[ ७.१ ]—त्र्यावृद्गेयम्० द्विरवनर्देद्धिंकुर्यात् तृतीयम्० मन्द्रमिवाग्र आददीताथ तारतरमथ तारतमम्० अनिरुक्तं गेयम्० न व्यवान्यात्० यदि व्यवान्यात् मध्य ऋचो व्यवान्यात्० इडां पशुकामाय निधनं कुर्यात् स्वः स्वर्गकामाय यशः ब्रह्मवर्चसकामाय आयुः आमयाविने हꣳसि इत्यभिचरते० ॥

षष्ठा [ २.१–३ ]—ऋचꣳ साम्ना प्रच्छन्नां गायति० त्रिरुद्गृह्णाति० न हिं कुर्यात्० द्वितीयां गायति तस्या द्वे अक्षरे सशयनी व्यतिषजति मध्यमस्य च पदस्योत्तममुत्तमस्य च प्रथमम्० तृतीयां गायति तां बलवदिवोरसेव गायति तस्या द्वे उत्तमार्धेऽक्षरे द्योतयति० चतुर्थीं गायति तस्याश्चत्वारि चत्वार्यक्षराणि निक्रीडयन्निव गायत्या द्वादशभ्योऽक्षरेभ्यः० तस्याश्चत्वार्युत्तमार्धेऽक्षराणि द्योतयति० पञ्चमीं गायति तां निनर्दन्निव गायति० निरुक्तां चानिरुक्तां च गायति० षष्ठीं गायति तस्या द्वे द्वे अक्षरे उदासं गायत्या षड्भ्योऽक्षरेभ्यः० रथन्तरवर्णामुत्तमां गायति० या प्रथमा तामन्नाद्यं ध्यायन् गायेत्० न हिं कुर्यात्० या द्वितीया तां गायत्रीमागां गायꣳस्तस्या द्वे अक्षरे सशयनी व्यतिषजति मध्यमस्य च पदस्योत्तममुत्तमस्य च प्रथमम्० या तृतीया तां त्रिष्टुभमागां गायꣳस्तस्या द्वे उत्तमार्धेऽक्षरे द्योतयति० या चतुर्थी तां जगतीमागां गायꣳस्तस्याश्चत्वार्युत्तमार्धेऽक्षराणि द्योतयति० या पञ्चमी तामनुष्टुभमागां गायꣳश्चतुर्धा व्यावृत्य गायेत्० उच्चावचामिव गायेत्० या षष्ठी तां पङ्क्तिमागां गायꣳस्तस्या द्वे द्वे अक्षरे उदासं गायत्या षड्भ्योऽक्षरेभ्यः० सत् इति प्रथमाया धुरो निधनम्० सम् इति द्वितीयायाः० स्वः इति तृतीयायाः० इडा इति चतुर्थ्याः० वाक् इति पञ्चम्याः० या प्रथमा तामायच्छन्निव गायेत्० या द्वितीया तां घोषिणीमिव गायेत्० या तृतीया तामुद्यच्छन्निव गायेत्० या चतुर्थी तां निक्रीडयन्निव गायेत्० या पञ्चमी तां निरुक्तानिरुक्तामिव गायेत्० या षष्ठी तामुदासमिव गायेत्० रथन्तरवर्णामुत्तमां गायेत्० ॥

छांउ [ २.२२.१–२ ][१]—अग्नेरुद्गीथः । अनिरुक्तः प्रजापतेः । निरुक्तः सोमस्य । मृदु श्लक्ष्णं वायोः । श्लक्ष्णं बलवदिन्द्रस्य । क्रौञ्चं बृहस्पतेः । अपध्वान्तं वरुणस्य । तान् सर्वानेवोपसेवेत । वारुणं त्वेव वर्जयेत् । **अमृतत्वं देवेभ्य आगायानि** इत्यागायेत् । **स्वधां पितृभ्य [ आगायानि । ] आशां मनुष्येभ्य [ आगायानि । ] तृणोदकं पशुभ्य [ आगायानि । ] स्वर्गं लोकं यजमानाय [ आगायानि । ] अन्नमात्मन आगायानि** इत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ।।

## [ रथन्तरपृष्ठे ]

### गायत्रम्

साजैसं [ ३.१.३–५ ]—

उपास्मै गायता नरः पवमानायेन्दवे । अभि देवं इयक्षते ।।

अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः । देवं देवाय देवयुम् ।।

स नः पवस्व शं गवे शं जनाय शमर्वते । शꣳ राजन्नोषधीभ्यः ।।

**१–३ उपास्मैगायतान'रोम् ।। ओ'वा ओ'वा ओवा हुम्भा[२] ।। ओवा ।। [ १ ] अभि-**
च श्रच सट टच सट टच सट टच ट क च च

**तेमधुनापयोम् ।। ओ'वा ओ'वा ओवा हुम्भा ।। ओवा ।। [२] सनःपवस्व-**
चश्र सट टच सट टच सट टच ट क च च

**शङ्गवोम् ।। ओ'वा ओ'वा ओ'वा हुम्भा ।। ओवा ।। [३]**
श्र सट टच सट टच सट टच ट क च

### गायत्रम्

साजैसं [ ३.१.६–८ ]—

दविद्युतत्या रुचा परिष्टोभन्त्या कृपा । सोमाः शुक्रा गवाशिरः ।।

हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् । सीदन्तो वनुषो यथा ।।

ऋधक् सोम स्वस्तये संजग्मानो दिवा कवे । पवस्व सूर्यो दृशे ।।

**४–६ दविद्युतत्यारुचोम् ।। ओ'वा ओ'वा ओ'वा हुम्भा ।। ओवा ।। [ १ ]**
च श्र सट टच सट टच सट टच ट क च

**हिन्वानो हेतृभिर्हितोम् ।। ओ'वा ओ'वा ओवा हुम्भा ।। ओवा ।। [ २ ]**
च च सट टच सट टच सट टच ट क च

**ऋधक्सोमस्वस्तयोम् ।। ओवा ओ'वा ओ'वा हुम्भा ।। ओवा ।। [ ३ ]**
च श्रत सट टच सट टच सट टच ट क च

---

१. प्राणः प्रस्तावस्य देवता, आदित्य उद्गीथस्य, अन्नं प्रतिहारस्य इत्येतदर्थं द्रष्टव्यं छांउ १.११.४–९

२. सर्वत्र बहिष्पवमाने प्रथमा रेतस्या अहिंकृता । अतः तत्र 'हुम्भा' इति हिंकारो न कर्तव्यः ।

## गायत्रम्

साजैस [ ३.१.९–११ ]—

पवमानस्य ते कवे वाजिन् सर्गा असृक्षत । अर्वन्तो न श्रवस्यवः ॥

अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये । अवावशन्त धीतये ॥

अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः । अग्मन्नृतस्य योनिमा ॥

७–९ **पवमानस्यतेकवोम् ॥ ओ'वा ओ'वा ओ'वा हुम्भा ॥ ओवा ॥ [ १ ] अच्छा-**
च श्र सट टच सट टच सट टच ट क च च

**कोशम्मधुश्चुतोम् ॥ ओ'वा ओ'वा ओवा हुम्भा ॥ ओवा ॥ [२] अच्छासमुद्र-**
सट टच सट टच सट टच ट क च च

**मिन्दवोम् ॥ ओ'वा ओ'वा ओ'वा हुम्भा ॥ ओवा [ ३ ]**
श्र सट टच सट टच सट टच ट क च

जैब्रा [ १.८७-८८ ]—स यं कामयेत यजमानः स्वर्गलोकः स्यादिति चात्वालमेवैनमवख्याप्योद्गायेत्० पराचीभिः स्तुवन्ति० रथन्तरवर्णामुत्तमां गायन्ति० यद्यजुः प्रथममभिव्याहरति० **भूर्भुवः स्वः । मधु करिष्यामि । मधु जनयिष्यामि । मधु भविष्यति । भद्रंभद्रम् । इषमूर्जम्** इति०॥

[ १.८४ ]—देवक्षेत्रं वा एषोऽध्यवस्यति यः सोमस्योद्गायति० **सोमोद्गायोद्गाय सोम** इत्याह० **मह्यं तेजसे मह्यं ब्रह्मवर्चसाय मह्यमन्नाद्याय मह्यं भूम्ने मह्यं पुष्ट्यै मह्यं प्रजननाय प्रजानां भूम्ने प्रजानां पुष्ट्यै प्रजानां प्रजननाय सोमस्य राज्ञो राज्याय मम ग्रामण्याय** इति० ॥

[ १.८९ ]—प्रजापतिं कल्पयित्वोद्गायेत्० बहिष्पवमानमुपसन्नेषु ब्रूयात् **यं ब्रह्माणं शुचिमिव मन्येताहरहस्तम्** इति । तेन समुपहूयाथानुमन्त्रयेत **यो देवानामिह सोमपीथोऽस्मिन् यज्ञे बर्हिषि वेद्याम् । तस्येदं भक्षयामसि** इति० यद्बहिष्पवमानमरण्ये स्तुवन्ति० पराचीषु स्तुवन्ति० एकरूपासु स्तुवन्ति० आवदुत्तममक्षरं भवति० स्तुत्वोद्द्रवन्ति० बाहूनुद्गृह्णन्ति० स य एतदेवान्य उत्तिष्ठेत्तमुत्तिष्ठन्तमारभ्यानूत्तिष्ठेत्० ॥

[ १.९७-१०४ ]—यद्देवा असुरानधूर्वंस्तद् धुरां धूस्त्वम्० य एवं विद्वान् धूर्भिरुद्गायति० रेतस्यां गायति० संततमिव गायति० परोक्षमिव प्रथमे गायति० नर्चमुपस्पृशेत्० त्र्युदासां गायति० स यो भ्रातृव्यलोकं चिच्छित्सेद् द्व्युदासामेव गायेत्० त्र्युदासामेव गायेत्० हिंकुर्यादेव० **भूः** इति निधनं करोति० गायत्रीं गायति० तस्यै द्वे अक्षरे व्यतिषजति० **सत्** इति निधनं करोति० त्रिष्टुभं गायति० तस्यै द्वे अक्षरे द्योतयति० **ज्योतिः** इति निधनं करोति० जगतीं गायति० तस्यै चत्वार्यक्षराणि द्योतयति० **इळा** इति निधनं करोति०

अनुष्टुभं गायति० तामर्वाचीमभिनुदन् गायति० तस्यै निरुक्तं चानिरुक्तं च पदे गायति० **वाक्** इति निधनं करोति० पङ्क्तिं गायति० तस्यै षडक्षराणि द्योतयति० स यः कामयेत शान्ताः प्रजा एधेरन्निति न धुरो विगायेत्० वि एव गायेत्० स य एना नाशंसेत विगातुं परोक्षेणैवैनाः स रूपेण गायेत्० गायत्र्यां प्रस्तुतायां गायत्रमेव गायन् पृथिवीं मनसा गच्छेत्। प्राण्यापान्यात्। **सत्** इति निधनं करोति० त्रिष्टुभि स्तुतायां गायत्रमेव गायन्नन्तरिक्षं मनसा गच्छेत्। दिदृक्षेतैवाक्षिभ्याम्। **ज्योतिः** इति निधनं करोति० जगत्यां प्रस्तुतायां गायत्रमेव गायन् दिशः पशून् मनसा गच्छेत्। शुश्रूषेतैव कर्णाभ्याम्। **इळा** इति निधनं करोति० अनुष्टुभि प्रस्तुतायां गायत्रमेव गायन् दिवं मनसा गच्छेत्। वाचा गायन् **वाक्** इति निधनं करोति० पङ्क्त्यां प्रस्तुतायां गायत्रमेव गायन्नृतून् मनसा गच्छेत्० ओषमेवैतदुत्तमं तृचं गायति०॥

[ १.२५० ][1]—यस्मात् त्रिवृत्स्तोमो बहिष्पवमाने० ॥

[ १.२५३ ][2]—अघोषमेव गेयम्०।

[ १.२५९-२६३ ][3]—तद्यद् बहिष्पवमाने रेतस्यां गायति० ऋचं साम्नाभिलिप्तां गायति० तस्यां न हिंकुर्यात्० तामधीयन् गायेत्० गायत्रीं गायति० तामधीयन् गायेत्० त्रिष्टुभं गायति० तामधीयन् गायेत्० जगतीं गायति० तामधीयन् गायेत्० अनुष्टुभं गायति० तां बलवदुपब्दिमतीं निघातं गायेत्० तामधीयन् गायेत्० पङ्क्तिं गायति० तामधीयन् गायेत्० तदाहुर्विगेया धुरा३ न विगेया३ इति। विगेया इत्याहुः कुरवः० ॥

[ १.३१५-३१८]—रेतस्यां गायति० स यद्येकाहः स्यात् तस्मिन्नहिंकृतां गायेत्० गायत्रीं गायति० तस्यै द्वे अक्षरे व्यतिषजति **ओ ३ वांणो अशिश्रा दे३युर्वे देवाय दा** इति व्यतिषजति० त्रिष्टुभं गायति० तस्यै द्वे अक्षरे द्योतयति। **षोधा** इत्येते द्योतयति० जगतीं गायति० तस्यै चत्वार्यक्षराणि द्योतयति। **सोमाः शुक्राः** इति शुक्रवती पदे द्योतयति० अनुष्टुभं गायति० तामर्वाचीमभिनुदन् गायति० **ओ ३ वाजं वाज्यक्रामा ३** इति निरुक्तं पदं गायति। **नुषः** इति निराह० पङ्क्तिं गायति० तस्यै षडक्षराणि द्योतयति। **पवस्वा सूर्या** इति सूर्यवती पदे द्योतयति० तां हैतामेते पङ्क्तिं विगायन्ति० **सांजग्मानो दायिवा कोवा पवस्वा सूर्याः** इति० तस्मादेषा गायत्रमेव प्रसृता गेयेति। तदाहुः स चाद्य धुरो विगायेद् य एनाः सगातु विद्यादिति। तद्धैक आहुर्बहिष्पवमाने वात्र वयं विगायन्तः संगायामः **यदो ओवा** इति वाङ्निधनाः कुर्मस्तेनैव नः संगीता भवन्तीति। तेनाज्येष्वाद्रियन्ते न पवमानयोः। अथ हैक आहुराज्येष्वेव वयं विगायन्तः संगायामेति॥

---

१. जैब्रा १.२४९-१४९ इत्यप्यनुसंधेयम्। २. जैब्रा १.२५१ इत्यप्यनुसंधेयम्।

३. जैब्रा १.२५७-२५८, २६४-२७७ इत्यप्यनुसंधेयम्।

जैउब्रा [ १.१-५ ]— गायत्रं गायन्ति **ओवा ३ च् ओवा ३ च् ओवा ३ च् हुम्भा । ओवा** इति । तदु ह तत् पराङिवानायुष्यमिव० **ओवा ओवा ओवा हुम्भा । ओवा** इति करोत्येव। एताभ्या॑ँ सर्वमायुरेति० तं वा एत॑ँ हिंकारं **हिम्भा** इति हिंकुर्वन्ति० त॑ँ हैतमेके हिंकारं **हिम्भा ओवा** इति बहिर्धेव हिंकुर्वन्ति० तस्मादु हैत॑ँ हिंकारं **हिं वो** इत्यन्तरिवैवात्मन्नर्जयेत्० तद् बहिष्पवमाने स्तूयमाने मनसोद्गृह्णीयात्० ॥

[ १.२२ ]—तस्मादु ह नोपगायेत्० काम॑ँ ह तु यजमान उपगायेत्० तस्मादु चतुर एवोपगातॄन् कुर्वीत। तस्मादु ह्योपगातॄन् प्रत्यभिमृशेत् **दिशः स्थ श्रोत्रं मे मा हि॑ँसिष्ट** इति० ।

[ १.२४ ]—तद्धैतदेके **ओम्** इति गायन्ति । तत् तथा न गायेत० **ओ** इत्यु हैके गायन्ति । तदु ह तन्न गीतम् । नैव तथा गायेत । **ओम्** इत्येव गायेत्०।

[ २.२ ]—त॑ँ हैनमेके प्रत्यक्षमेव गायन्ति **प्राणा ३ प्राणा३ हुम्भा ओवा** इति०।

[ ३.३ ]—तस्माद् गायत्रस्य स्तोत्रे णावान्यान्नेच्छिया अवच्छिद्या इति० ।

[ ३.११-१३ ]—तदेतत् त्र्यावृद् गायत्रं गायति० अथ वा अतो हिङ्कारस्यैव० **हुम्मा** इत्याह० **हुम्भा** इति ब्रह्मवर्चसकामस्य० **हुम्बो** इति पशुकामस्य० **हुम्भक्** इति श्री-कामस्य० **हुम्भा ओवा** इत्येतदेवोपगीतम् । महदिवाभिपरिवर्तयन् गायेदिति ह स्माह नाकः० इति नु हिंकाराणाम् । अथ वा अतो निधनमेव । **ओवा** इति द्वे अक्षरे० ।

[ ३.१६ ]—( तस्माद् ब्रह्मा वाचंयम आसीत ) आ स॑ँस्थायै पवमानानाम् ।

[ ३.१८ ]—अथ वा अतः स्तोमभागानामेवानुमन्त्राः । तद्धैतदेके स्तोमभागैरेवानु-मन्त्रयन्ते । तत् तथा न कुर्यात् । **देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो वाचम्** इत्येषु हैकेऽनुमन्त्रयन्ते० तदु तथा न कुर्यात्। **भूर्भुवः स्वः** इति उ हैकेऽनुमन्त्रयन्ते० तदु तथा नो एव कुर्यात्। **ओम्** इत्येवानुमन्त्रयेत । अथैष वसिष्ठस्यैकस्तोमभागानुमन्त्रः। तेन हैतेन वसिष्ठः प्रजातिकामोऽनुमन्त्रयांचक्रे **देवेन सवित्रा प्रसूतः प्रस्तोतर्देवेभ्यो वाचमिष्य भूर्भुवः स्वरोम्** इति० स एव तेन वसिष्ठस्यैकस्तोमभागानुमन्त्रणेनानुमन्त्रयेत० इयं त्वेव स्थितिः **ओम्** इत्येवानुमन्त्रयेत ॥

तैसं [ ३.३.२ ]—**वायुर्हिंकर्ताग्निः प्रस्तोता प्रजापतिः साम बृहस्पतिरुद्गाता विश्वे देवा उपगातारो मरुतः प्रतिहर्तार इन्द्रो निधनं ते देवाः प्राणभृतः प्राणं मयि दधतु** । एतद्वै सर्वमध्वर्युरुपाकुर्वन्नुदगातृभ्य उपाकरोति ।

[ ६.३.१ ]—नाध्वर्युरुप गायेत्० ॥

तैब्रा [ २.२.८.३ ]—बहिष्पवमाने दशहोतारं[1] व्याचक्षीत[2]।

१. द्रष्टव्यं श्री १ पृ. १२५ । २. यजमानः ।

तैसं [ ३.२.७ ]—

देव सवितरेतत् ते प्राह तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मायुष्मत्या ऋचो मा गात तनूपात् साम्नः सत्या व आशिषः सन्तु सत्या आकूतय ऋतं च सत्यं च वदत स्तुत देवस्य सवितुः प्रसवे ॥

[ ४.४.१ ]—

रश्मिरसि क्षयाय त्वा क्षयं जिन्व ।

[ ३.५.२ ]—रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्याह०॥

[ ३.२.१ ]—

श्येनोऽसि गायत्रच्छन्दा अनु त्वारभे स्वस्ति मा सं पारय ॥

[ ३.२.७ ]—

स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्यात् । इन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषम् । सा मे सत्याशीर्देवेषु भूयाद् ब्रह्मवर्चसं मा गम्यात् ॥ यज्ञो बभूव स आ बभूव स प्र जज्ञे स वावृधे । स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन् करोतु वयꣳ स्याम पतयो रयीणाम् ॥

[३.२.७]– स्तुतस्य स्तुतम्....शस्त्रस्य शस्त्रम्....इत्याह । एष वै स्तुतशस्त्रयोर्दोहः०॥

तैब्रा [ १.५.९.७ ]— तमेतयोपसमेत्योपासीदन् । उपास्मै गायता नर इति । तस्मादेतया बहिष्पवमान उपसद्यः ।

[१.५.१०–११]—ते यत् त्रिवृता स्तुवते० अथ यत् पञ्चदशेन स्तुवते० अथ यत् सप्तदशेन स्तुवते० अथ यदेकविꣳशेन स्तुवते० ये वै चत्वारः स्तोमाः। कृतं तत० तस्माचतुष्टोमः० तदाहुः । कतमानि तानि ज्योतीꣳषि । य एतस्य स्तोमा इति । त्रिवृत् पञ्चदशः सप्तदश एकविꣳशः ॥

मैसं [ १.९.५ ]—[1]दशहोतारꣳ वदेत्[2] पुरस्ताद् बहिष्पवमानस्य० ।

[ ४.२.४ ]—वस्व्यै हिंकुरु तस्यै प्रस्तुहि तस्यै मेऽवरुद्ध्यै इति पुरस्ताद् बहिष्पवमानस्य वदेत् ॥

[ २.८.८ ]—

रश्मिना क्षयाय क्षयं जिन्व ॥

कासं [ २७.४ ]—ब्राह्मणो बहिष्पवमानमासीत० यं द्विष्यात् तं बहिष्पवमानात् परिबाधेत० यं कामयेतामयाविनं जीवेदित्यग्नेरन्ते ब्राह्मणाय प्रोच्यापः परिब्रूयात् ।

१. द्रश्यतां श्रौ १ पृ. १२८ २. यजमानः ।

[ १७.७ ]—

**रश्मिरसि क्षयाय त्वा क्षयं जिन्व ॥**

[ ३७.१७ ]—रश्मिरसि क्षयाय त्वा क्षयं जिन्वेति० ॥

[ ९.१४ ]—चतुर्होतॄननुसवनं तर्पयितव्यान् वेद० [1]दशहोतारं व्याख्याय बहिष्पवमानेनोद्गायेत्०॥

कपिसं [ ४२.४ ] ≡ कासं २७.४

[ २६.६ ] ≡ **कासं १७.७**

माशब्रा [ ४.२.५.६-१० ]—अथ यदा जपन्ति० अथ स्तोत्रमुपाकरोति **सोमः पवते**[2] इति । स वै परागेव स्तोत्रमुपाकरोति० **उपावर्तध्वम्** इति वा अन्यानि स्तोत्राणि । अभ्यावर्तं धुर्यै स्तुवते० अथ यदत्र बहिष्पवमानेन स्तुवते०॥

[ ४.६.६.६-८ ]—स यत्राह **ब्रह्मन् स्तोष्यामः प्रशास्तः** इति तद् ब्रह्मा जपति **एतं ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिं तेन मामव ॥ स्तुत सवितुः प्रसवे** इति। अनेन त्वेवोपचरेत् **देव सवितरेतद् बृहस्पते प्र** इति० अथ मैत्रावरुणो जपति **प्रसूतं देवेन सवित्रा जुष्टं मित्रावरुणाभ्याम्** इति०॥

काशब्रा [ ५.३.१.५-८ ] ≡ माशब्रा ४.२.५.६-१०

[ ५.७.६.४-६ ] ≡ माशब्रा ४.६.६.६-८

बृउ [ १·३·२८ ]—अथातः पवमानानामेवाभ्यारोहः । स वै खलु प्रस्तोता साम प्रस्तौति । स यत्र प्रस्तुयात् तदेतानि जपेत् **असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतं गमय** इति० अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत् । तस्मादु तेषु वरं वृणीत यं कामं कामयेत् तम् । स एष एवंविदुद्गातात्मने वा यजमानाय वा यं कामं कामयते तमागायति।

ऐब्रा [ २·२२ ]—तत्रैवासीनोऽनुमन्त्रयेत **यो देवानामिह सोमपीथो यज्ञे बर्हिषि वेद्याम् । तस्यापि भक्षयामसि** इति० अथो ब्रूयात् **मुखमसि मुखं भूयासम्** इति०॥

[ ५.३३-३४ ]—[ ब्रह्मा वाचंयमः स्यात् ] उपाकृतेषु पवमानेष्वोदृचः० स प्रस्तोतोपाकृते स्तोत्र आह **ब्रह्मन् स्तोष्यामः प्रशास्तः** इति । स **भूः** इति ब्रह्मा प्रातःसवने ब्रूयात् **इन्द्रवन्तः स्तुध्वम्** इति०॥

[ ६.१४ ]—अथाहास्त्युद्गातॄणां प्रैषा३ः नाँ३ इति । अस्तीति ब्रूयात् । यदेवैतत् प्रशास्ता जपं जपित्वा **स्तुध्वम्** इत्याह स एषां प्रैषः ॥

१. द्रष्टव्यतां श्रौ १ पृ. १३१ । २. 'सोमः पवतेऽस्मै...' ( वासं ७.२१ ) इत्यस्य मन्त्रस्य आ दिर्मोऽश एवात्र विनियुक्तः ।

शांब्रा [ १२.५ ]—स[1] स्तुते पवमान एतं जपं जपेत् उपहूता देवा अस्य सोमस्य पवमानस्य विचक्षणस्य भक्ष उप मां देवा ह्वयन्तामस्य सोमस्य पवमानस्य विचक्षणस्य भक्षे मनसा त्वा भक्षयामि वाचा त्वा भक्षयामि प्राणेन त्वा भक्षयामि चक्षुषा त्वा भक्षयामि श्रोत्रेण त्वा भक्षयामि इति० ॥

अशौसं—

दोषो गाय बृहद्गाय द्युमद्धेहि । आथर्वण स्तुहि देवं सवितारम् ॥
तमु ष्टुहि यो अन्तः सिन्धौ सूनुः । सत्यस्य युवानमद्रोघवाचं सुशेवम् ॥
स घा नो देवः सविता साविषदमृतानि भूरि । उभे सुष्टुती सुगातवे ॥ ६.१
इन्द्रस्य कुक्षिरसि सोमधान आत्मा देवानामुत मानुषाणाम् ।
इह प्रजा जनय यास्त आसु या अन्यत्रेह तास्ते रमन्ताम् ॥ ७.११६.१
श्येनोऽसि गायत्रच्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं वहास्य यज्ञस्योदृचि स्वाहा ॥ ६.४८.१

अपैसं—

दोषो गाय बृहद्गाय द्युमद्गायाथर्वण । स्तुहि .... ॥ तमु स्तुहि .... सूनुं ....॥ स घा नो .... साविषद्वसुपतिर्वसूनि ।.... सुगातुम् ॥ १९.१.१-३॥ इन्द्रस्य कुक्षिरसि .... देवानामसि विश्वरूपः।....तास्ते स्वधिता गृणन्तु ॥ २०.९.९॥ श्येनोऽसि गायत्रीछन्दा .... स्वस्ति मा सं पारय ॥ १९.४४.४

गोब्रा [ १.३.३ ]—तस्माद् ब्रह्मा स्तुते बहिःपवमाने वाचोयम्यमुपांश्वन्तर्यामाभ्याम्[2]० अथ ये पवमाना ओदृचस्तेषु ॥

[ १.५.११-१२ ]—ब्रह्मा स्तुते बहिःपवमाने वाचयति श्येनोऽसि गायत्रछन्दा अनु त्वारभे स्वस्ति मा संपारय इति०॥

[ २.२.१३-१४ ]— रश्मिरसि क्षयाय त्वा इति० बृहस्पतये स्तुत इति० ॐ भूर्जनत् इति प्रातःसवने० ॥

## ६५. सवनीयपशुवपायागान्तम्

तैसं [ ३.१.१० ]—वैष्णव्यर्चा पुनरेत्योपतिष्ठते० विष्णो त्वं नो अन्तमः शर्म यच्छ सहन्त्य । प्र ते धारा मधुश्चुत उत्सं दुह्रते अक्षितम् इति०।

१. होता । २. बहिष्पवमानस्तोत्रात् पूर्वमेव उपांश्वन्तर्यामप्रचारो भवति । अतोऽयं ब्राह्मणपाठो न युक्तः प्रतिभाति । “तस्माद् ब्रह्मोपाकृते प्रातरनुवाके वाचंयम ओपांश्वन्तर्यामाभ्याम्” इति पाठो युक्तः स्यात् । द्रष्टव्यम् ऐब्रा ५.३३ ( श्रौ० पृ० २३५ )।

[ १.४.६-७ ]—

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ।
उपयामगृहीतोऽस्यश्विभ्यां त्वा ।। एष ते योनिर्माध्वीभ्यां त्वा ।।
प्रातर्युजौ वि मुच्येथामश्विनावेह गच्छतम् । अस्य सोमस्य पीतये ।
उपयामगृहीतोऽस्यश्विभ्यां त्वा ।। एष ते योनिरश्विभ्यां त्वा ।।

[ ६.४.९ ]—बहिष्पवमाने स्तुत आश्विनो गृह्यते० ।।

[ ६.३.१ ]—यदाग्नीध्राद्धिष्णियान् विहरति० बहिष्पवमाने स्तुत आह अग्नीदग्नीन् वि हर बर्हिः स्तृणाहि पुरोडाशाꣳ अलं कुरु इति० अङ्गारैर्द्वे सवने वि हरति० आहवनीय आग्नीध्रीयो होत्रीयो मार्जालीयस्तस्मात् तेषु जुह्वति । अतिहाय वषट् करोति० प्रत्यङ्ङासीनो धिष्णियान् व्याघारयति० प्राणा वा एते यद्धिष्णियाः । यदध्वर्युः प्रत्यङ् धिष्णियानतिसर्पेत् प्राणान्त्सं कर्षेत् प्रमायुकः स्यात् । नाभिर्वा एषा यज्ञस्य यद्धोता । ऊर्ध्वः खलु वै नाभ्यै प्राणोऽवाङपानः । यदध्वर्युः प्रत्यङ् होतारमतिसर्पेदपाने प्राणं दध्यात् प्रमायुकः स्यात्० ।।

[ ३.२.३]—

परिभूरग्निं परिभूरिन्द्रं परिभूर्विश्वान् देवान् परिभूर्माꣳ सह ब्रह्मवर्चसेन स नः पवस्व शं गवे शं जनाय शमर्वते शꣳराजन्नोषधीभ्योऽच्छिन्नस्य ते रयिपते सुवीर्यस्य रायस्पोषस्य ददितारः स्याम । तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे ।। प्राणाय मे वर्चोदा वर्चसे पवस्व ।। अपानाय [मे वर्चोदा वर्चसे पवस्व]।। व्यानाय [मे वर्चोदा वर्चसे पवस्व]।। वाचे [मे वर्चोदा वर्चसे पवस्व]।। दक्षक्रतुभ्यां [ मे वर्चोदौ वर्चसे पवेथाम्] ।। चक्षुर्भ्यां मे वर्चोदौ वर्चसे पवेथाम् ।। श्रोत्राय [ मे वर्चोदा वर्चसे पवस्व ] ।। आत्मने [ मे वर्चोदा वर्चसे पवस्व ] ।। अङ्गेभ्यो [ मे वर्चोदा वर्चसे पवस्व] ।।आयुषे [मे वर्चोदा वर्चसे पवस्व ] ।। वीर्याय [ मे वर्चोदा वर्चसे पवस्व]।। विष्णोरꣳ[ जठरमसि वर्चोदा मे वर्चसे पवस्व ] ।। इन्द्रस्य [ जठरमसि वर्चोदा मे वर्चसे पवस्व ]।। विश्वेषां देवानां जठरमसि वर्चोदा मे वर्चसे पवस्व ।। कोऽसि को नाम कस्मै त्वा काय त्वा यं त्वा सोमेनातीतृपं यं त्वा सोमेनामीमदꣳ सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैः ।। विश्वेभ्यो मे रूपेभ्यो वर्चोदा वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे ।।

[३.२.३]—बुभूषन्नवेक्षेत० ब्रह्मवर्चसकामोऽवेक्षेत० आमयाव्यवेक्षेत०अभिचरन्नवेक्षेत० ।

[ ६.३.७.५ ]—ऋत्विजो वृणीते० सप्त वृणीते०।।

[ ३.१.१० ]—

जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक् ।

यद्वाचो मधुमत् तस्मिन् मा धाः स्वाहा सरस्वत्यै ॥

ऋचा स्तोम१ समर्धय गायत्रेण रथन्तरम् । बृहद्गायत्रवर्तनि ॥

[ ३.५.५ ]—

सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद् यजमानोऽग्निर्मा पातु चक्षुषः । सक्ष शूष सवितर्विश्वचर्षण एतेभिः सोम नामभिर्विधेम ते तेभिः सोम नामभिर्विधेम ते॥

मैसं [ १.३.८ ]—

या वां कशा मधुमत्यश्विना ....। उपयामगृहीतोऽस्यश्विभ्यां त्वा ॥ एष ते योनिर्माध्वीभ्यां त्वा ॥

[ १.३.१ ]—

जुष्टो वाचो भूयासं जुष्टो वाचस्पतिर्यद्वाचो मधुमत्तस्मै स्वाहा॥ स्वाहा सरस्वत्यै ॥

[ ३.८.१० ]—यत्पवमाने स्तुतेऽग्नयो विह्रियन्ते० तस्मादाग्नीध्राद्विह्रियन्ते० यद्बहिष्पवमाने स्तुत आह अग्नीदग्नीन् विहर बर्हिः स्तृणाति इति० प्रत्यञ्चो धिष्ण्या व्याघार्यन्ते० यदध्वर्युः प्रत्यङ् धिष्ण्यानतीयात् प्राणात् संकर्षेत प्रमायुकः स्यात् । यद्यतीयाद्यज्ञपरुष्यतीयात् । ऐन्द्रीमनुब्रूयात्० यदन्तरा चात्वालं चाग्नीध्रं चैतद्वै यज्ञस्य तीर्थम् । तस्मादेतेन संचरति० ॥

[४.६.२]—बहिष्पवमाने स्तुत आश्विनौ गृह्येते० वैष्णव्य ऋचा पुनरेत्य संमृशति०।

[ ३.९.५ ]—यः कूटो वाकर्णो वा काणो वा शुष्को वावर्तत तस्य यातयामा । स योऽपन्नदन्मलं तत्पशूनाम् । आग्नेयः पशुरग्निष्टोम आलभ्यः० यद्वपया प्रातःसवने चरन्ति० ॥

[३.९.८]—ऋत्विजो वृणीते०यद्धोतार॰ वृणीते यदध्वर्युम्०यदग्नीधम्०यन्मैत्रावरुणम्० यद् ब्राह्मणाच्छ॰सिनम्० यत्पोतारम्० यन्नेष्टारम्० यदाह अग्निर्दैवीना॰ विशां पुर एता इति यजमान॰ वा एतद् वृणीते । स वृतो वषट्करोति । नाछावाक॰ वृणीते० अथ यदग्नीधं मध्यतो वृणीते०॥

कासं [ ४.२ ]—

या वां कशा मधुमत्यश्विना ....। उपयामगृहीतोऽस्याश्विभ्यां त्वा ॥ एष ते योनिर्माध्वीभ्यां त्वा ॥

[ २६.१ ]—न प्रत्यङ् धिष्ण्यानतिसर्पेदध्वर्युः० न प्रत्यङ् होतारम्० यदाग्नीध्राद्धिष्ण्यान् विहरन्ति० अङ्गारान् पूर्वयोस्सवनयोर्विहरन्ति० प्रत्यञ्चो धिष्ण्या व्याघार्यन्ते० यद्धिष्ण्यान् व्याघारयति०।

[ २७.४ ]—स्तुते बहिष्पवमान आश्विनो गृह्यते ।

[ २७.५ ]—आश्विनो दशमो गृह्यते० तं तृतीयं जुहोति० ।

[ २६.९ ]—ऋत्विजो वृणीते० होतारं वृणीते० अग्नीधं वृणीते० अध्वर्यू वृणीते० अन्तरा होतारं चाध्वर्यू चाग्नीधं वृणीते० मैत्रावरुणं वृणीते० ब्राह्मणाच्छंसिनं वृणीते० पोतारं वृणीते० नेष्टारं वृणीते० अच्छावाकमुपैत्र ह्वयन्ते न वृणते० ॥

कपिसं [ ३.२ ] ≡ कासं

[ ४२.४,५; ४०.४; ४१.७ ] ≡ कासं

वामासं—

या वां कशा मधुमत्याश्विना ....। उपयामगृहीतोऽस्यश्विभ्यां त्वा ॥ एष ते योनिर्माध्वीभ्यां त्वा ॥ ७.११

प्राणाय मे वर्चोदा वर्चसे पवस्व ॥ व्यानाय मे वर्चोदा वर्चसे पवस्व ॥ उदानाय मे वर्चोदा वर्चसे पवस्व ॥ वाचे मे वर्चोदा वर्चसे पवस्व ॥ क्रतूदक्षाभ्यां मे वर्चोदा वर्चसे पवस्व ॥ श्रोत्राय मे वर्चोदा वर्चसे पवस्व ॥ चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथाम् ॥ आत्मने मे वर्चोदा वर्चसे पवस्व ॥ ओजसे मे वर्चोदा वर्चसे पवस्व ॥ आयुषे मे वर्चोदा वर्चसे पवस्व ॥ विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथाम् ॥ कोऽसि कतमोऽसि कस्यासि को नामासि यस्य ते नामामन्महि यं त्वा सोमेनातीतृपाम ॥ भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याᳪं सुवीरो वीरैः सुपोषः पोषैः॥७.२७-२९

माशब्रा [ ४.२.५.११-१२ ]—अथ स्तुत एतां वाचं वदति अग्नीदग्नीन् विहर बर्हि स्तृणीहि पुरोडाशाँ अलङ्कुरु पशुनेहि इति० अथ पुनः प्रपद्याश्विनं ग्रहं गृह्णाति० ॥

[ ४.१.५.१-१८ ]— श्रोत्रᳪं ह वा अस्याश्विनः० एष स्तुते बहिष्पवमाने ग्रहो गृह्यते० अथातो गृह्णात्येव या वां कशा....उपयामगृहीतोऽस्यश्विभ्यां त्वा ॥ एष ते योनिर्माध्वीभ्यां त्वेति सादयति० ॥

[ ४.५.६ ]—स आश्विनं ग्रहं गृहीत्वावकाशानवकाशयति । स उपाᳪंशुमेव प्रथममवकाशयति प्राणाय मे वर्चोदा वर्चसे पवस्वेति । अथोपाᳪंशुसवनं व्यानाय मे वर्चोदा वर्चसे पवस्वेति । अथान्तर्यामम् उदानाय मे वर्चोदा वर्चसे पवस्वेति । अथैन्द्रवायवं वाचे मे वर्चोदा वर्चसे पवस्वेति । अथ मैत्रावरुणं क्रतूदक्षाभ्यां मे वर्चोदा वर्चसे पवस्वेति । अथाश्विनं श्रोत्राय मे वर्चोदा वर्चसे पवस्वेति । अथ शुक्रामन्थिनौ चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथामिति । अथाग्रयणम् आत्मने मे वर्चोदा वर्चसे पवस्वेति । अथोक्थ्यम् ओजसे मे वर्चोदा वर्चसे पवस्वेति । अथ ध्रुवम् आयुषे मे वर्चोदा वर्चसे पवस्वेति । अथाम्भृणौ विश्वाभ्यो मे प्रजाभ्यो वर्चोदसौ वर्चसे पवेथामिति० अथ द्रोणकलशं कोऽसि कतमोऽसि....इति० स आश्विनं ग्रहं

गृहीत्वान्वङ्गमाशिषमाशास्ते [1]सुप्रजाः प्रजाभिः स्यां....इति० तान् वै न सर्वमिवात्रकाशयेत् । यो न्वेव ज्ञातः तमत्रकाशयेत् । यो वास्य प्रियः स्याद्यो वानूचानः० ॥

[ ४.२.५.१२-१४ ]—— आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति । परिवीय यूपं पशुमुपाकरोति० स प्रातःसवन आलब्धः आ तृतीयसवनाच्छ्रप्यमाण उपशेते० तस्मादाग्नेयमग्निष्टोम आलभेत० ।।

[ ६.६.६.५ ]——तस्माद् ब्राह्मणाच्छंसिनं प्रवृणीते इन्द्रो ब्रह्मा ब्राह्मणात् इति०॥

**वाकासं [ ७.५.१ ] ≡ वामासं ७.११**

**[ ९.१.१-५ ] ---॥ भूर्भुवः स्वः .... प्रजया भूयासं सुवीरो .... ॥**

काशब्रा [ ५.३.१.९-११ ] ≡ माशब्रा ४.२.५.११-१४

[ ५.१.५.१-१३ ] ≡ माशब्रा ४.१.५.१-१८

[ ५.६.३ ] ≡ माशब्रा ४.५.६

[ ५.७.६.३ ] ≡ माशब्रा ४.६.६.५

शांब्रा [ १०.६ ]—सौम्य एवाध्वरे प्रवृताहुती जुहुति न हविर्यज्ञ इति । **जुष्टो वाचो भूयासं जुष्टो वाचस्पतेर्देवि वाग्यत्ते वाचो मधुमत्तमं तस्मिन्नो अद्य धात् स्वाहा सरस्वत्यै** इति पुरस्तात्स्वाहाकारेण जुहोति० ॥

**अशौसं—**

**देवाः पितरः पितरो देवाः । यो अस्मि सो अस्मि ॥**
**स पचामि स ददामि स यजे स दत्तान् मा यूषम् ॥**
**नाके राजन् प्रति तिष्ठ तत्रैतत् प्रति तिष्ठतु ।**
**विद्धि पूर्तस्य नो राजन्त्स देव सुमना भव ॥ ६.१२३.३-५**

**अपैसं—**

**देवाः पितरः .... सोऽस्मि सोऽयमस्मि ॥ प्रशजामि शतजामि मेजते स्य । संमैष्णवस्तुष्णोः शान्तं शिवं कृतं तस्मान् मावयम् ॥ नाके राजन् .... ॥ १६.५१.८–१०**

गोब्रा [ २.२.१६ ]—— यदाग्नीध्राद्धिष्ण्यान् विहरति० बहिष्पवमाने स्तुत आह **अग्नीदग्नीन् विहर बर्हि स्तृणीहि पुरोडाशानलं कुरु** इति० अङ्गारैर्द्वे सवने विहरति०॥

1. वाजसनेयसंहितायां ' भूर्भुवः स्वः ' इति मन्त्रादिः ।

[ २.२.१७ ]—सौम्य एवाध्वरे प्रवृताहुतीर्जुहुति **जुष्टो वाचे भूयासं जुष्टो वाचस्पतये देवि वाक्। यद्वाचो मधुमत्तमं तस्मिन्मा धाः स्वाहा॥ वाचे स्वाहा॥ वाचस्पतये स्वाहा॥ सरस्वत्यै स्वाहा॥** सरस्वत्या इति पुरस्तात्स्वाहाकारेण[1] जुहोति० मनसोत्तराम्० तदु हैके [2]सप्ताहुतीर्जुहुति० ॥

[ १.५.२१ ]—तस्मात्प्रवरे प्रव्रियमाणे वाचयेत् देवाः पितर इति तिस्रः० ॥

## ६६. सवनीयपशुवपायागहौत्रम्

**ऋसं—**

**[3]अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्।**
**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम॥ १.१८९.१**
**[4]प्र वः शुक्राय भानवे भरध्वं हव्यं मतिं चाग्नये सुपूतम्।**
**यो दैव्यानि मानुषा जनूंष्यन्तर्विश्वानि विद्मना जिगाति॥ ७.४.१**
**[5]भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः।**
**दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम्॥ १०.८.६**

ऐब्रा [ २.३६ ]—तथैवैतद्यजमाना आग्नीध्रादेव सदस्यानग्नीन् विहरन्ति० ॥

[ ३.९ ]—तस्मात् प्रह्वस्तिष्ठन् प्रेष्यति ॥

शांब्रा [१२.६–७]–अथ पशुः० य एष आलभ्यते तमेतमैन्द्राग्नः स्यादिति हैक आहुः० तदु वा आहुराग्नेय एवैष स्यात्० तस्य भुवो यज्ञस्य रजसश्च नेतेति भुवद्वती वपायै याज्या० अथावाहने। **आवह देवान् यजमानाय। अग्निमग्न आवह। वनस्पतिमावह। इन्द्रं वसुमन्तमावह** इति तत्प्रातःसवनमावाहयति। **इन्द्रं रुद्रवन्तमावह** इति तन्माध्यंदिनं सवनमावाहयति। **इन्द्रमादित्यवन्तमृभुवन्तं विभुमन्तं वाजवन्तं बृहस्पतिमन्तं विश्वदेव्यावन्तमावह** इति तत्तृतीयसवनमावाहयति। अत उ हैके वनस्पतिमावाहयन्ति० ॥

[ २८.४ ]—[6]तं न प्रवृणुते।

---

१. 'स्वाहा सरस्वत्यै' इति। २. 'सरस्वत्यै स्वाहा' 'महोभ्यस्त्वं महोभ्यः स्वाहा' 'ऋचा स्तोमम्...' इत्येते त्रयोऽधिका मन्त्रा निर्दिष्टा वैतानसूत्रे (१८-६)। ३. सवनीयपशुवपायागस्य पुरोनुवाक्या। ४. सवनीयपशुवपायागस्य याज्या। ५. शाङ्खा० याज्या। ६. अच्छावाकम्।

## ६७. सवनीयपशुवपायागौद्गात्रम्[1]

### गौतमस्य पर्कः[2]

साजैसं [ १.१.१ ]—

अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥

ओग्नायि । आ ''या'''ही'''वा''यि । तायायिता''या''यि । गृ''णा''नो
ट ट श षिवथ्यच व्यच्या श टथ श टिटथ श व्यचा श

हव्यदा । तायायिता'या'यि'' । नायिहो'''ता । सात्सायि'बा'''औहोवा । ही षि॥
चि टथ टिश शटथ किकिच च ष ट ख्यखा शि ख श

[ ग्राम १.१.१ ]

### कश्यपस्य बर्हिष्यम्[3]

अग्नआयाहिवीतयायिगृणानोहव्यदातायायि । निहोतासत्सिबर्हायिषी ।
कुकु रू त श चिवा टी त्यता

बर्हायि'षा''औहोवा । ब'र्हि'षी ॥ [ ग्राम १.१.२ ]
टथ ख्यखा शि प्या ख्यख

### गौतमस्य चैव पर्कः[4]

अग्नआयाहिवायितयायि । गृणानोहव्य'दा'ताये । निहो''ता''स''त्सा''यि
कु ति श ह्यू द्द प श खिख ण शट

बा'र्हाआयिषोहायि'' ॥ [ ग्राम १.१.३ ]
तते प प्ल षषा

### अग्नेश्च संवर्गः[5]

साजैसं [ १.२.१ ]—

नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैरमित्रमर्दया ॥

---

१. जैमिनीयशाखानुसारेण सवनीयपशुवपायागान्ते प्रस्तोत्रा त्रीणि सामानि प्रत्येकं त्रिः गेयानि । तत्र गौतमस्य पर्कः, कश्यपस्य बर्हिष्यम्, गौतमस्य चैव पर्कः इति त्रीणि गेयानीति प्रयोगकारः । अग्नेश्च संवर्गः, अग्नेराग्नेयम्, अग्नेश्चाग्नेयम् इति त्रीणि गेयानीति तु संप्रदायः । " आग्नेयस्यापि वपया हुते सामानि गीयताम् । आद्यं पावकमाग्नेये नम एनेममादि वा ॥ नम एनेममित्येषां द्रष्टाभिर्देवतापि च । छन्दांसि तेषां गायत्री बृहती जगती क्रमात् ॥ " इति कारिके तत्र प्रमाणम् । २. द्रष्टव्यं कौग्राम १.१.१ ३. द्रष्टव्यं कौग्राम १.१.२ ४. द्रष्टव्यं कौग्राम १.१.३ ५. द्रष्टव्यं कौग्राम १.१.२०

नमस्तौ होग्रायि । ओजासायीगृणा''न्ता''यिदे । वाकार्ष्टायाः । अमायिरामा
तीतश क टिटयखण चयटय टिख

औहोवा । त्रमार्दया ॥ [ ग्राम १.१.२ ]
खि खी

### अग्नेराग्नेयम्[1]

साजैसं [ १.५.१ ]—

एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरतिँ स्वध्वरं विश्वस्य दूतममृतम् ॥

एनावोअग्निन्नाओमसा । ऊर्जोनपातामाहुवे । प्रायश्चेति ष्ठ मरतिँ सूअ ध्वाराम् ।
तशि किजूच्य टय चिचा टयशी चिह्या भीभ्या

विश्वास्यादू । तामा मृतमि ळा''भा'' । ओयिळा ॥ [ ग्राम १.५.१ ]
च्य यट च च्य क टयटया खण प इय

### अग्नेश्चाग्नेयम्[2]

साजैसं [ १.७.४ ]—

इमँ स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य सँसद्यग्ने सख्ये मा रिषामा वयं तव ॥

इमँ स्तोमामर्हातेजा । त वे''दसेहोयेरथामीवासम्माहे मा । मानीषयाहोये
खिश खिण क्यका च्य टय खिश खिण टय च्य टय

भद्राहीनाःप्रमातीरा । स्यसँ सदीहोये अग्नायिसाख्यायिमारायिषामा ।
खिश खिण क्यका च्य टय खी शशा खीण

व यन्तवाहोयिळा ॥ [ ग्राम १.७.५ ]
क्यका टीख श

## ६८. सदःप्रसर्पणम्

तैसं [३.२.४]—स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः । यज्ञिया यज्ञकृतः स्थ ते मास्मिन् यज्ञ उप ह्वयध्वमुप मा द्यावापृथिवी ह्वयेतामुपास्तावः कलशः सोमो अग्निरुप देवा उप यज्ञ उप मा होत्रा उपहवे ह्वयन्ताम् ॥ नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यात् इत्याहवनीयमुप तिष्ठते० तस्मा एव नमस्कृत्य सदः प्र सर्पति० नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहि इत्याग्नीध्रम् । तस्मा एव नमस्कृत्य सदः प्र

---

१. द्रष्टव्यं कौग्राम २.१.८ २. द्रष्टव्यं कौग्राम २.१.३८

सर्पति०नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीः इति होत्रीयम्०दृढे स्थः शिथिरे समीची मा॑हसस्पात॑ सूर्यो मा देवो दिव्याद॑हसस्पातु वायुरन्तरिक्षादग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्यः।। देवी द्वारौ मा मा सं ताप्तम्।। नमः सदसे नमः सदसस्पतये नमः सखीनां पुरोगाणां चक्षुषे नमो दिवे नमः पृथिव्यै ।। अहे दैधिष-व्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत् पाकतरः।। उन्निवत उदुद्वतश्च गेषम्।। पातं मा द्यावापृथिवी अद्याह्नः० सदः प्रसृप्य दक्षिणार्धं परेक्षेत आगन्त पितरः पितृमानहं युष्माभिर्भूयास॑ सुप्रजसो मया यूयं भूयास्त इति तेभ्य एव नमस्कृत्य सदः प्र सर्पति०।।

वामासं--

विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि माग्ने गोपाय मा नमस्ते अस्तु मा मा हिंसीः।। वह्निरसि हव्यवाहनो रौद्रेणानीकेन ....।। श्वात्रोऽसि प्रचेता रौद्रेणानीकेन....।। तुथोऽसि विश्ववेदा रौद्रेणानीकेन....।। उशिगसि कवी रौद्रेणानीकेन ....।।अङ्घारिरसि बम्भारी रौद्रेणानीकेन....।। अवस्यूरसि दुवस्वान् रौद्रेणानीकेन....।। शुन्ध्यूरसि मार्जालीयो रौद्रेणानीकेन ....।। सम्राडसि कृशानू रौद्रेणानीकेन ....।। परिषद्योऽसि पवमानो रौद्रेणानीकेन....।।नभोऽसि प्रतक्वा रौद्रेणानीकेन....।।मृष्टोऽसि हव्यसूदनो रौद्रेणानीकेन....।। ऋतधामासि स्वर्ज्योती रौद्रेणानीकेन ....।। समुद्रोऽसि विश्वव्यचा रौद्रेणानीकेन ....।। अजोऽस्येकपाद्रौद्रेणानीकेन ....।। अहिरसि बुध्न्यो रौद्रेणानीकेन ....।। वागस्यैन्द्रमसि सदोऽसि ।। ऋतस्य द्वारौ मा मा संताप्तम् ।। अध्वनामध्वपते प्र मा तिर स्वस्ति मेऽस्मिन् पथि देवयाने भूयात् ।। मित्रस्य मा चक्षुषेक्षध्वम् ।। अग्नयः सगराः सगराः स्थ सगरेण नाम्ना रौद्रेणानीकेन पात माग्नयः पिपृत माग्नयो गोपायत मा नमो वोऽस्तु मा मा हिंसिष्ट ।। ५.३१-३४ ।।

वाकासं—

विभूरसि प्रवाहणो रौद्रेणानीकेन....पिपृहि माग्ने नमस्ते....।। ---।। शुन्ध्यू-रसि मार्जालीयो....।। ऋतधामासि स्वर्ज्योती....।। ---।। अहिरसि बुध्न्यो.... ।। सम्राळसि कृशानू....।। ---।। मृष्टोऽसि हव्यसूदनो....।। समूह्योऽसि विश्ववेदा....।। ऊनातिरिक्तस्य प्रतिष्ठा ....।। अग्नयस्सगरास्सगरा स्थ सगरेण नाम्ना रौद्रेणानीकेन पात माग्नयः पिपृत माग्नयो नमो वोऽस्तु मा मा हिंसिष्ट ।।५.८.१-५

ऋसं--

[1]उरुं नो लोकमनु नेषि विद्वान्त्स्वर्वज्ज्योतिरभयं स्वस्ति ।
ऋष्वा त इन्द्र स्थविरस्य बाहू उप स्थेयाम शरणा बृहन्ता ।। ६.४७.८

१. आश्वश्रौ० मते सर्वे जपन्ति ।

¹इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत् ।
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥ ६.४६.९
यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतिभिर्वि द्विषो वि मृधो जहि ॥ ८.६१.१३
सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥ १.१८.६
शांब्रा [ १३.१ ]—²तान्सदः प्रसर्पन्स्यन् नमस्यति नमो नमः इति०॥

तांब्रा [ १.४.१-५.२ ]—

अध्वनामध्वपते स्वस्ति मेऽद्यास्मिन् देवयाने पथि भूयात् ॥ सम्राडसि कृशानुः॥ तुथोऽसि जनधायः ॥ नभोऽसि प्रतक्वा ॥ असंमृष्टोऽसि हव्यसूदनः ॥ विभुरसि प्रवाहणः ॥ वह्निरसि हव्यवाहनः ॥ श्वात्रोऽसि प्रचेताः ॥ तुथोऽसि विश्ववेदाः ॥ उशिगसि कविः ॥ अङ्घारिरसि बम्भारिः ॥ अवस्युरसि दुवस्वान् ॥ शुन्ध्युरसि मार्जालीयः ॥ ऋतधामासि स्वर्ज्योतिः ॥ समुद्रोऽसि विश्वव्यचाः ॥ अहिरसि बुध्न्यः ॥ अजोऽस्येकपात् ॥ सगरा असि बुध्न्यः ॥ क्रव्योऽसि कव्यवाहनः ॥ पात माग्नयो रौद्रेणानीकेन पिपृत मा नमो वोऽस्तु मा मा हिंसिष्ट ॥ ऋतस्य द्वारौ स्थः ॥ मा मा संताप्तम् ॥ नमः सखिभ्यः पूर्वसद्भ्यो नमोऽपरसद्भ्यः ॥

अशौसं—

दिवस्पृष्ठे धावमानं सुपर्णमदित्याः पुत्रं नाथकाम उप यामि भीतः ।
स नः सूर्य प्र तिर दीर्घमायुर्मा रिषाम सुमतौ ते स्याम ॥ १३.२.३७
मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः ।
मान्त स्थुर्नो अरातयः ॥ १३.१.५९
अभि त्वेन्द्र वरिमतः पुरा त्वांहूरणाद्धुवे ।
ह्वयाम्युग्रं चेत्तारं पुरुणामानमेकजम् ॥
यो अद्य सेन्यो वधो जिघांसन्न उदीरते ।
इन्द्रस्य तत्र बाहू समन्तं परि दद्मः ॥
परि दद्म इन्द्रस्य बाहू समन्तं त्रातुस्त्रायतां नः ।
देव सवितः सोम राजन्त्सुमनसं मा कृणु स्वस्तये ॥ ६.९९.१-३

अपैसं—

दिवस्पृष्ठे धावमानं....नाथकामोऽभि यामि.... ॥ १८.२४.४ ॥ मा प्र.... ॥ १७.२२.५ ॥ अभि त्वेन्द्र.... त्वांहूरणेभ्यः .... ॥ योऽद्य देव्यो .... परिदध्महे ॥ परि दध्म .... कृणुतं स्वस्तये ॥ १९.१३.१-३

१. शाङ्खाश्रौ०मते एतदाद्यास्तिस्रो ऋचः सर्वे जपन्ति । २. धिष्ण्यान् ।

गोब्रा [२.२.१८-१९]—[1]तान्त्सदः प्रसप्स्यन् नमस्करोति **नमो नमः** इति० सदः प्रसप्स्यन् ब्रूयात् **उपद्रष्ट्रे नमः** इति० सदः प्रसृप्य ब्रूयात् **उपश्रोत्रे नमः** इति० सदः प्रसर्पन् ब्रूयात् **अनुख्यात्रे नमः** इति० सदः प्रसृप्तो ब्रूयात् **उपद्रष्ट्रे नमः** इति०॥

[२.२.१७]—सोमं पिबता प्राञ्चो धिष्ण्या नोपसर्प्याः ०॥

## ६९. सवनीयपुरोडाशयागः

तैसं [६.५.११]—तस्मादनुसवनं पुरोडाशा निरुप्यन्ते तस्मादनुसवनं पुरोडाशानां प्राश्नीयात्० ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किं यज्ञस्य पाङ्क्तत्वमिति। धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्तत्वम्।

तैब्रा [१.५.११]—सोऽब्रवीत्[2]। सप्तदशेन ह्रियमाणो व्यलेशिषि। भिषज्यत मेति। तमश्विनौ धानाभिरभिषज्यताम्। पूषा करम्भेण। भारती परिवापेण। मित्रावरुणौ पयस्यया। तदाहुः। यदश्विभ्यां धानाः। पूष्णः करम्भः। भारत्यै परिवापः। मित्रावरुणयोः पयस्याथ। कस्मादेतेषाꣳ हविषामिन्द्रमेव यजन्तीति। एता ह्येनं देवता इति ब्रूयात्। एतैर्हविर्भिरभिषज्यꣳस्तस्मादिति। तं वसवोऽष्टाकपालेन प्रातःसवनेऽभिषज्यन्। रुद्रा एकादशकपालेन माध्यंदिने सवने। विश्वे देवा द्वादशकपालेन तृतीयसवने। स यदष्टाकपालान् प्रातःसवने कुर्यात्। एकादशकपालान् माध्यंदिने सवने। द्वादशकपालाꣳस्तृतीयसवने। विलोम तद्यज्ञस्य क्रियेत। एकादशकपालानेव प्रातःसवने कुर्यात्। एकादशकपालान् माध्यंदिने सवने। एकादशकपालाꣳस्तृतीयसवने। यज्ञस्य सलोमत्वाय। तदाहुः। यद्वसूनां प्रातःसवनम्। रुद्राणां माध्यंदिनꣳ सवनम्। विश्वेषां देवानां तृतीयसवनम्। अथ कस्मादेतेषाꣳ हविषामिन्द्रमेव यजन्तीति। एता ह्येनं देवता इति ब्रूयात्। एतैर्हविर्भिरभिषज्यꣳस्तस्मादिति॥

मैसं [३.१०.५-६]—पञ्च प्रातःसवने पुरोडाशाश्चत्वारो माध्यंदिने सवने चत्वारस्तृतीयसवने० तस्मादनुसवनं पुरोडाशा निरुप्याः० तस्मादनुसवनं पुरोडाशः प्राश्यः० यत्रानभिघृतं तत् प्राश्यः० तन्न सूर्क्ष्यम्। प्राश्य एव० पञ्च प्रातःसवने पुरोडाशाः। पुरोडाशः परिवापो धानाः करम्भः पयस्या० **हरिवं इन्द्रो धाना अत्तु० पूषण्वान् करम्भः० सरस्वतीवान् भारतीवान् परिवापः० इन्द्रस्यापूपः० मित्रावरुणयोः पयस्या०॥**

कासं [२९.१]—यदनुसवनं पुरोडाशान्निर्वपति० अनुसवनं पुरोडाशस्य प्राश्नीयात्० यतो घृतानक्तं स्यात् ततः प्राश्नीयात्० यदेवानुत्पूतं स्यात् तस्य नाश्नीयात्० यत् पयस्या प्रातस्सवने भवति० मैत्रावरुणी प्रातस्सवने भवति नोत्तरे सवने अश्नुते० पञ्चैतानि हवीꣳषि०

१. धिष्ण्यान्। २. आदित्यः।

**हरिवी इन्द्रो धाना अत्तु० पूषण्वान् करम्भम्० सरस्वतीवान् भारतीवान् परिवापः० इन्द्रस्यापूपः० मित्रावरुणयोः पयस्या० ॥**

कपिसं [ ४५.२ ] ≡ कासं

माशब्रा [ ४.२.५.१५-२२ ]—अथ सवनीयैः पुरोडाशैः प्रचरति० सर्व ऐन्द्रा भवन्ति० अथ यत् पुरोडाशो धानाः करम्भो दध्यामिक्षेति भवति० इन्द्रस्य पुरोडाशो हर्योर्धानाः पूष्णः करम्भः सरस्वत्यै दधि मित्रावरुणयोः पयस्या० प्रातःसवन एवैषा मैत्रावरुणी पयस्यावक्लृप्ता भवति नेतरयोः सवनयोः ॥

काशब्रा [ ५.३.१.१२-१४ ] ≡ माशब्रा

## ७०. सवनीयपुरोडाशयागहौत्रम्

ऋसं—

**[1]धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् । इन्द्र प्रातर्जुषस्व नः ॥ ३.५२.१**

**[2]होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपो मित्रावरुणयोः पयस्या प्रातः प्रातःसावस्य पुरोळाशाँ इन्द्रः प्रस्थिताञ्जुषाणो वेतु होतर्यज ॥** खिलम् ५.७.४ (अ)

**[3]अग्ने जुषस्व नो हविः पुरोळाशं जातवेदः। प्रातःसावे धियावसो ।। ३.२८.१**

**[4]होता यक्षदग्निं पुरोळाशानां जुषतां हविर्होतर्यज ॥** खिलम् ५.७.४ (उ)

ऐब्रा [ २.२३-२४ ]—तद्यदनुसवनं पुरोळाशा निरुप्यन्ते० तदाहुरनुसवनं पुरोळाशान्निर्वपेदष्टाकपालं प्रातःसवन एकादशकपालं माध्यंदिने सवने द्वादशकपालं तृतीयसवने० तत्तन्नादृत्यम्० तानेकादशकपालानेव निर्वपेत् । तदाहुर्यतो घृतेनानक्तं स्यात्ततः पुरोळाशस्य प्राश्नीयात्० तत्तन्नादृत्यम् । तस्य यत एव कुतश्च प्राश्नीयात्० धानाः करम्भः परिवापः पुरोळाशः पयस्येत्येष वै यज्ञो हविष्पङ्क्तिः० **हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपः** इति हविष्पङ्क्त्या यजति० **हविरग्ने वीहि** इत्यनुसवनं पुरोळाशस्विष्टकृतो यजति ॥

शांब्रा [ १३.२-३ ]—अथ हविष्पङ्क्त्या चरन्ति० तानि वै पञ्च हवींषि भवन्ति दधि धानाः सक्तवः पुरोलाशः पयस्येति० येनैव मैत्रावरुणः प्रेष्यति तेन होता यजति० **हविरग्ने वीहि** इत्यनुसवनं पुरोलाशस्विष्टकृतो यजति०॥

[ २८.२ ]—वैश्वामित्रीरनुसवनं पुरोलाशानां पुरोनुवाक्या अन्वाह ॥

१. सवनीयपुरोडाशयागस्य पुरोनुवाक्या । २. प्रैषः । 'ये यजामह इन्द्रं हरिवाँ...जुषाणो वेतु' इति याज्या । ३. स्विष्टकृत्पुरोनुवाक्या । ४. ये यजामहेऽग्निं पुरोळाशानां जुषतां हविः' इति स्विष्टकृतो याज्या ।

## ७१. द्विदेवत्यग्रहप्रचारः

तैसं [ ३.२.१० ]—

उपयामगृहीतोऽसि वाक्षसदसि वाक्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि ॥ उपयामगृहीतोऽस्यृतसदसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि ॥ उपयामगृहीतोऽसि श्रुतसदसि श्रोत्रपाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि ॥ देवेभ्यस्त्वा ॥ विश्वदेवेभ्यस्त्वा ॥ विश्वेभ्यस्त्वा देवेभ्यः ॥ विष्णवुरुक्रमैष ते सोमस्तꣳ रक्षस्व तं ते दुश्चक्षा माव ख्यत् ॥ यो न इन्द्रवायू [अभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानि॥यो नो] मित्रावरुणाव[अभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानि॥ यो नो]ऽश्विनावभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानि॥

[ ३.१.९.३ ]—ऐन्द्रवायवमादायाघारमा घारयेत् अध्वरो यज्ञोऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाध्वरोऽसि स पिन्वस्व घृतवद्देव सोम इति०।

[ ६.४.९ ]—यदेकपात्रा गृह्यन्ते० द्विपात्रा हूयन्ते० ॥

तैब्रा [ १.४.१ ]—यद् ग्रहान् जुहोति०॥

मैसं [ १.३.९ ]—

उपयामगृहीतोऽसि देवेभ्यस्त्वा ॥ उपयामगृहीतोऽसि विश्वदेवेभ्यस्त्वा ॥ उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः ॥ दितेः पुत्राणामदितेरकारिषमुरुशर्मणां बृहताꣳ वरूथिनाम् । येषां नामानि विहितानि धामशश्चित्तैर्यजन्ति भुवनाय जीवसे॥ उपयामगृहीतोऽसि विष्णोस्त्वोरुक्रमे गृह्णामि ॥ विष्ण उरुक्रमैष ते सोमस्तꣳ रक्षस्व मा त्वा दभन् दुश्चक्षास्ते मावख्यत् ॥ अयꣳ वसुः पुरोवसुर्वाक्पा वाचं मे पातु ॥ अयꣳ वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पातु ॥ अयꣳ वसुः सꣳयद्वसुः श्रोत्रपाः श्रोत्रं मे पातु॥

[ ४.५.६ ]—वायव्यमालभ्याश्रावयति० ॥

[४.६.१-२]— येन मन्त्रेणाध्वर्युः प्रयच्छति तेन होता प्रतिगृह्णाति० यदध्वर्युर्द्विदेवत्यान् हुत्वा क्षिप्रꣳ होतारमभ्याद्रवति० अवगतꣳ वा अध्वर्युपात्रं निरुद्धं प्रतिप्रस्थानम्। यदि कामयेत यो बहिस्तं ग्रामे कुर्याꣳ यो ग्रामे तं बहिरिति **इदमहममुमामुष्यायणममुष्याः पुत्रममुष्या विशो निरूहामि** इत्यध्वर्युपात्रं निरुह्य **इदमहममुमामुष्यायणममुष्याः पुत्रममुष्याꣳ विशि सादयामि** इति प्रतिप्रस्थानꣳ सादयेत्०यदि कामयेत समावद्वीर्यमेनं भ्रातृव्येण कुर्यामिति प्रबाहुग्गृह्णीयातां प्रबाहुक् सादयेतां प्रबाहुग्जुहुयाताम्० यदि कामयेत पापवसीयसꣳ स्यादिति पूर्वो गृह्णीयात् पूर्वः सादयेत् पूर्वो जुहुयात्० ॥

कासं [ ४.२ ]—

उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वा ॥ एष ते योनिर्विष्णोरुरुक्रमे ॥ उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा ॥ एष ते योनिर्विष्णोरुरुक्रमे ॥ उपयामगृहीतोऽस्यश्विभ्यां त्वा ॥ एष ते योनिर्विष्णोरुरुक्रमे तं रक्षस्व मा त्वा दभन् दुश्चक्षास्ते मावक्षत् ॥

[ २७.३ ]—वायव इन्द्रवायुभ्यामनुब्रूहि इतीन्द्रं मध्ये करोति ।

[ २७.५–६ ]— एकपात्रा गृह्यन्ते द्विपात्रा हूयन्ते० येन यजुषा प्रयच्छति तेन प्रतिगृह्णाति० नानुवषट् करोति० यन्नानुयजति० यदि कामयेतावगतमपरुन्ध्युरपरुद्धोऽवगच्छेदिति इदमहममुमामुष्यायणममुष्याः पुत्रममुष्या विश उदूहामि इत्यध्वर्योः पात्रमुदूहेत् इदमहममुमामुष्यायणममुष्याः पुत्रममुष्यां विश्यध्यूहामि इति प्रतिप्रस्थातुः पात्रमध्यूहेत्० व्यत्यूहेत् पात्राणि । यदि कामयेत पापवसीयसी स्यादित्यध्वर्योः पात्राणां लोके प्रतिप्रस्थातुः पात्राणि सादयेत् प्रतिप्रस्थातुः पात्राणां लोकेऽध्वर्योः पात्राणि सादयेत्० यदि कामयेत यजमानादयजमानं भ्रातृव्यं पूर्वं कुर्यामिति प्रतिप्रस्थाता पूर्वो गृहीत्वा स पूर्वो निरूहेत्० अध्वर्योर्लोके तिष्ठञ्जुहोति० अनालम्भ्य पात्रमाश्रावयेत्० यत्राग्र आहुतिं जुहोति० तदुत्तरा जुहुयात्० मध्येऽग्नेर्जुहुयादाज्याहुतीश्च पश्चाहुतीश्चाभितस्सोमाहुतीः० ॥

कपिसं [ ३.२ ] ≡ कासं

[ ४२.३, ५, ६ ] ≡ कासं

वामासं—

उपयामगृहीतोऽसि ॥ आदित्येभ्यस्त्वा ॥ विष्ण उरुगायैष ते सोमस्तꣳ रक्षस्व मा त्वा दभन् ॥ ८.१

माशब्रा [ ४.३.५.६–८ ]—स यत्र प्रातःसवने द्विदेवत्यैः प्रचरति तत् प्रतिप्रस्थातादित्यपात्रेण द्रोणकलशात् प्रतिनिगृह्णीते उपयामगृहीतोऽसीत्येतावता । अध्वर्युरेवाश्रावयति । अध्वर्योरनु होमं जुहोति प्रतिप्रस्थाता । आदित्येभ्यस्त्वेति सꣳस्रवमवनयत्येतावता । एवमेव सर्वेषु० उत्तरार्धे जुहोति० अथापिदधाति० विष्ण उरुगायैष ते सोमस्तꣳ रक्षस्व मा त्वा दभन्निति०॥

काशब्रा [५.४.२.१-४] ≡ माशब्रा

ऐब्रा [ २.२५ ]—स एष इन्द्रतुरीयो ग्रहो गृह्यते यदैन्द्रवायवः० ।

[ २.२७ ]—एकपात्रा गृह्यन्ते० द्विपात्रा हूयन्ते० ॥

अशौसं—

वायुरन्तरिक्षस्याधिपतिः स मावतु । अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा ॥ ५.२४.८

इन्द्रवायू उभाविह सुहवेह हवामहे ।

यथा नः सर्व इज्जनः संगत्यां सुमना असद्दानकामश्च नो भुवत् ॥ ३.२०.६

मित्रावरुणौ वृष्ट्याधिपती तौ मावताम् । अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा ॥ ५.२४.५

[1]अश्विना ब्रह्मण यातमर्वाञ्चौ वषट्कारेण यज्ञं वर्धयन्तौ ॥ ५.२६.१२

अपैसं—

वायुरन्तरिक्षस्याध्यक्षः । .... पुरोधायामस्यां देवहूत्यामस्यामाकूत्यामस्यामाशिषि स्वाहा ॥ १५.७.३ ॥ इन्द्रवायू.... सुमना असत् ॥ ३.३४.७ ॥ [2]अश्विना ब्रह्मणेतमर्वाक् .... ॥ ९.२.१२

## ७२. द्विदेवत्यग्रहप्रचारहौत्रम्

ऋसं—

[3]वायवा याहि दर्शतेमे सोमा अरंकृताः । तेषां पाहि श्रुधी हवम् ॥ १.२.१

[3]इन्द्रवायू इमे सुता उप प्रयोभिरा गतम् । इन्दवो वामुशन्ति हि ॥ १.२.४

[4]होता यक्षद्वायुमग्रेगामग्रेयावानमग्रे सोमस्य पातारं करदेवं वायुरावसा गमज्जुषतां वेतु पिबतु सोमं होतर्यज ॥

[4]होता यक्षदिन्द्रवायू अर्हन्ता रिहाणा गव्याभिर्गोमन्ता श्रियन्तां वीर्या शुक्रया एनयोर्नियुतो गोअग्र्याणां वीरौ कशाश्वपुरस्तात्तासामिह प्रयाणमास्तिकविमोचनं करत एवेन्द्रवायू जुषेतां वीतां पिबतां सोमं होतर्यज ॥ खिलम् ५.७.४ (ए—ऐ)

[5]अग्रं पिबा मधूनां सुतं वायो दिविष्टिषु । त्वं हि पूर्वपा असि ॥

[5]शतेना नो अभिष्टिभिर्नियुत्वाँ इन्द्रसारथिः। वायो सुतस्य तृम्पतम्॥४.४६.१-२

[6]अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतं हवम् ॥ २.४१.४

[7]होता यक्षन्मित्रावरुणा सुक्षत्रा रिशादसा नि चिन्मिषन्ता निचिरा निचय्याँ साक्ष्णश्चिद्रातुवित्तरानुल्बणेन चक्षसा ऋतमृतमिति दीध्याना करत एवं मित्रावरुणा जुषेतां वीतां पिबेतां सोमं होतर्यज ॥ खिलम् ५.७.४ (ओ)

[8]गृणाना जमदग्निना योनावृतस्य सीदतम् । पातं सोममृतावृधा ॥३.६२.१८

१. अर्धर्चोऽयम् । २. मैत्रावरुणग्रहस्यानुमन्त्रणमन्त्रो नोपलभ्यते । ३. ऐन्द्रवायवग्रहस्य पुरोनुवाक्ये । ४. प्रैषौ । ५. याज्ये । ६. मैत्रावरुणग्रहस्य पुरोनुवाक्या । ७. प्रैषः । ८. याज्या ।

[1]प्रातर्युजा वि बोधयाश्विनावेह गच्छताम् । अस्य सोमस्य पीतये ॥ १.२२.१

[2]होता यक्षदश्विना नासत्या दीद्यग्नी रुद्रवर्तनी न्यन्तरेण चक्रेण च वामीरिष ऊर्जं आवहतं सुवीराः सनुतरेणाररुषो बाधेतां मधुकशयेमं यज्ञं युवाना मिमिक्षतां करत एवाश्विना जुषेतां वीतां पिबेतां सोमं होतर्यज ॥ खिलम् ५.७.४ (औ)

[3]वाद्गधाना शुभस्पती दस्रा हिरण्यवर्तनी । पिबतं सोम्यं मधु ॥ ८.५.११

[4]आ त्वा वहन्तु हरयो वृषणं सोमपीतये । इन्द्र त्वा सूरचक्षसः ॥
इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इन्द्रं सुखतमे रथे ॥
इन्द्रं प्रातर्हवामह इन्द्रं प्रयत्यध्वरे । इन्द्रं सोमस्य पीतये ॥
उप नः सुतमा गहि हरिभिरिन्द्र केशिभिः । सुते हि त्वा हवामहे ॥
सेमं नः स्तोममा गह्युपेदं सवनं सुतम् । गौरो न तृषितः पिब ॥
इमे सोमास इन्दवः सुतासो अधि बर्हिषि । ताँ इन्द्र सहसे पिब ॥
अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शंतमः । अथा सोमं सुतं पिब ॥
विश्वमित्सवनं सुतमिन्द्रो मदाय गच्छति । वृत्रहा सोमपीतये ॥
सेमं नः काममा पृण गोभिरश्वैः शतक्रतो । स्तवाम त्वा स्वाध्यः ॥
१.१६.१–९

ऐब्रा [ २.२६–२८ ]—तस्य हैतस्यैन्द्रवायवस्याप्येकेऽनुष्टुभौ पुरोनुवाक्ये कुर्वन्ति गायत्र्यौ याज्ये० तत्तन्नाद्दत्यम्० वायव्या पूर्वा पुरोनुवाक्यैन्द्रवायव्युत्तरा । एवं याज्ययोः० येनैवाध्वर्युर्यजुषा प्रयच्छति तेन होता प्रतिगृह्णाति० अनवानं द्विदेवत्यान् यजेत्० न द्विदेवत्यानामनुवषट्कुर्यात्० तदाहुर्द्विरागूर्य मैत्रावरुणो द्विः प्रेष्यति सकृदागूर्य होता द्विर्वषट्करोति का होतुरागूरिति० तस्मात्तत्र होतान्तरेण नागुरेत० यदेवात्र मैत्रावरुणो द्विरागुरते सैव होतुरागूः ॥

[ ६.९ ]—आ त्वा वहन्तु हरय इति प्रातःसवन उन्नीयमानेभ्योऽन्वाह वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धाः । ऐन्द्रीरन्वाह० गायत्रीरन्वाह० नव न्यूनाः प्रातःसवनेऽन्वाह० तद्यदेतानि केवलसूक्तान्यन्वाह० ते हैके सप्तसप्तान्वाहुः सप्त प्रातःसवने० तत्तथा न कुर्यात्० केवलश एव सूक्तान्यनुब्रूयात् ॥

शांब्रा [ १३.५ ]—पुरोळाशैश्चरित्वा द्विदेवत्यैश्चरन्ति० ऐन्द्रवायवः प्रथमः० अनवानं यजति० नानुवषट्करोति० ऐन्द्रवायवं पूर्वार्ध्यं सादयति० अभित इतरौ पश्चादुपनिदधाति० नापिदधाति०॥

---

१. आश्विनग्रहस्य पुरोनुवाक्या । २. प्रैषः । ३. याज्या । ४. उन्नीयमानसूक्तम् ।

[ २८.२–३ ]—माधुच्छन्दस्यावभिरूपे द्विदेवत्यानां प्रथमस्य पुरोनुवाक्ये अन्वाह० गार्त्समदीं च मैधातिथीं चोत्तरयोरभिरूपे अन्वाह। मैधातिथीः प्रातःसवन उन्नीयमानेभ्योऽन्वाह० ता वा आवत्यो हरिवत्यो भवन्ति० ता वा ऐन्द्र्यो भवन्ति० ता वै गायत्र्यो भवन्ति० ता वै नवान्वाह० षलु हैके प्रातःसवन उन्नीयमानेभ्योऽन्वाहुः स्वयमच्छावाकः सप्तमीं सप्तसप्तोत्तरयोः सवनयोः० यथासूक्तमेवानुब्रूयात् ॥

**तैब्रा [ २.४.३.१३ ]—**

**[1]प्रातर्युजा विबोधय। अश्विनावेह गच्छतम्। अस्य सोमस्य पीतये ॥**

माशब्रा [ ४.१.३.१५ ]—द्वे अनुवाक्ये वायव्यैव पूर्वैन्द्रवायव्युत्तरा। द्वौ प्रैषौ वायव्य एव पूर्व ऐन्द्रवायव उत्तरः। द्वे याज्ये वायव्यैव पूर्वैन्द्रवायव्युत्तरा० ॥

काशब्रा [ ५.१.३.११ ] ≡ माशब्रा

गोब्रा [ २.३.१–६ ]—यद्वषट्करोति० यदनुवषट्करोति० **षट्** इति वषट्करोति० **वौषट्** इति वषट्करोति० यं कामयेत यथैवानीजानोऽभूत् तथैवेजानः स्यादिति। यथैवास्यर्चं ब्रूयात् तथैवास्य वषट्कुर्यात्० यं कामयेत पापीयान्त्स्यादित्युच्चैस्तरामस्यर्चं ब्रूयान्नीचैस्तरां वषट्कुर्यात्० यं कामयेत श्रेयान्त्स्यादिति नीचैस्तरामस्यर्चं ब्रूयादुच्चैस्तरां वषट्कुर्यात्० संततमृचा वषट्कृत्यम्० वषट्कृत्य **वाक्** इत्यनुमन्त्रयते **वषट्कार मा मां प्रमृक्षो माहं त्वां प्रमृक्षं बृहता मन उपह्वये व्यानेन शरीरं प्रतिष्ठासि प्रतिष्ठां गच्छ प्रतिष्ठां मा गमयेत्** इति० वाक्च वै प्राणापानौ च वषट्कारस्ते वषट्कृते वषट्कृते व्युत्क्रामन्ति।ताननुमन्त्रयते **वागोजः सह ओजो मयि प्राणापानौ** इति० ॥

## ७३. शुक्रामन्थिप्रचारः

तैसं [ ६.१.६ ]—द्वे सवने शुक्रवती प्रातःसवनं च माध्यंदिनं च ॥

[ ६.४.१० ]—**अपनुत्तौ शण्डामर्कौ सहामुना** इति ब्रूयाद्यं द्विष्यात्० अपिगृह्य प्राञ्चौ निष्क्रामतः० प्रत्यञ्चावावृत्य जुहुतः० अभितः परिक्रम्य जुहुतः० सर्वतः परिक्रामतः० प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनौ० ब्रह्मवादिनो वदन्ति कस्मात् सत्यान्मन्थिपात्रꣳ सदो नाश्नुत इति। आर्तपात्रꣳ हीति ब्रूयात्० तस्मान्नाश्नुते० ॥

**तैब्रा [ १.१.१ ]—**

**ब्रह्म संधत्तं तन्मे जिन्वतम्। क्षत्रꣳ संधत्तं तन्मे जिन्वतम्। इषꣳ संधत्तं तां मे जिन्वतम्। ऊर्जꣳ संधत्तं तां मे जिन्वतम्। रयिꣳ संधत्तं तां मे जिन्वतम्।**

---

१. आश्विनग्रहस्य पुरोनुवाक्या।

पुष्टिꣳ संधत्तं तां मे जिन्वतम् । प्रजाꣳ संधत्तं तां मे जिन्वतम् । पशून् संधत्तं तान् मे जिन्वतम् ॥ स्तुतोऽसि जनधाः । देवास्त्वा शुक्रपाः प्रणयन्तु । सुवीराः प्रजाः प्रजनयन् परीहि । शुक्रः शुक्रशोचिषा ॥ स्तुतोऽसि जनधाः । देवास्त्वा मन्थिपाः प्रणयन्तु । सुप्रजाः प्रजाः प्रजनयन् परीहि । मन्थी मन्थिशोचिषा ॥ संजग्मानौ दिव आ पृथिव्याः ॥ आयुः संधत्तं तन्मे जिन्वतम् । प्राणꣳ संधत्तं तं मे जिन्वतम् । अपानꣳ संधत्तं तं मे जिन्वतम् । व्यानꣳ संधत्तं तं मे जिन्वतम् । चक्षुः संधत्तं तन्मे जिन्वतम् । श्रोत्रꣳ संधत्तं तन्मे जिन्वतम् ॥ मनः संधत्तं तन्मे जिन्वतम् । वाचꣳ संधत्तं तां मे जिन्वतम्॥ आयुः स्थ आयुर्मे धत्तम् । आयुर्यज्ञाय धत्तम् । आयुर्यज्ञपतये धत्तम् । प्राणः स्थः प्राणं मे धत्तम् । प्राणं यज्ञाय धत्तम् । प्राणं यज्ञपतये धत्तम् । चक्षुः स्थश्चक्षुर्मे धत्तम् । चक्षुर्यज्ञाय धत्तम् । चक्षुर्यज्ञपतये धत्तम् । श्रोत्रꣳ स्थः श्रोत्रं मे धत्तम् । श्रोत्रं यज्ञाय धत्तम् । श्रोत्रं यज्ञपतये धत्तम् ॥ तौ देवौ शुक्रामन्थिनौ । कल्पयतं दैवीर्विशः । कल्पयतं मानुषीः । इषमूर्जमस्मासु धत्तम् । प्राणान् पशुषु । प्रजां मयि च यजमाने च ॥ निरस्तः शण्डः ॥ निरस्तो मर्कः॥ अपनुत्तौ शण्डामर्कौ सहामुना ॥ शुक्रस्य समिदसि ॥ मन्थिनः समिदसि ॥

स प्रथमः संकृतिर्विश्वकर्मा । स प्रथमो मित्रो वरुणो अग्निः ।

स प्रथमो बृहस्पतिश्चिकित्वान् । तस्मा इन्द्राय सुतमाजुहोमि ॥

तैसं [ ३.५.३ ]—

इन्द्रेण सयुजो वयꣳ सासह्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति ॥

यत् ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत् ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत् ते अग्ने हरस्तेनाहꣳ हरस्वी भूयासम् ॥

[ ३.१.९ ]—एष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम्० यत्रैतमेवं विद्वान् मन्थिनः सꣳस्रावं जुहोति न तत्र रुद्रः पशूनभिमन्यते ॥

तैब्रा [ १.४.१.३ ]—यच्चमसान् जुहोति० ॥

मैसं [ १.३.१२ ]—

अपनुत्तौ षण्डामर्कौ सह तेन यं द्विष्मः ॥ अछिन्नस्य ते देव सोम दक्षस्य रायस्पोषस्य सुवीर्यस्याभिग्रहीतारः स्याम ॥ तुथोऽसि जनधाया देवास्त्वा शुक्रपाः प्रणयन्तु ॥ तुथोऽसि जनधाया देवास्त्वा मन्थिपाः प्रणयन्तु ॥ अनाधृष्टासि ॥ सुवीराः प्रजाः प्रजनयन् परीहि ॥ सुप्रजाः प्रजाः प्रजनयन्नभिपरीहि ॥ इन्द्रेण

मन्युना युजावबाधे पृतन्यतः । घ्नता वृत्राण्यप्रति ॥ संजग्मानौ दिवा पृथिव्या शुक्रौ शुक्रशोचिषौ तौ देवौ शुक्रमन्थिना आयुर्यज्ञे धत्तमायुर्यज्ञपतौ पुमा॑ꣳसं गर्भमाधत्तं गवीण्योः प्राणान् पशुषु यच्छतम्॥ शुक्रस्याधिष्ठानमसि॥ मन्थिनोऽधिष्ठानमसि ॥ निरस्तः षण्डः ॥ निरस्तो मर्कः सह तेन यं द्विष्मः ॥

या प्रथमा स॑ꣳस्कृतिर्यज्ञे अस्मिन् यः परमो बृहस्पतिश्चिकित्वान् ।
यो मध्यमो वरुणो मित्रो अग्निस्तस्मा इन्द्राय सुतमाजुहोत ॥
[ या प्रथमा स॑ꣳस्कृतिर्यज्ञे अस्मिन् यः परमो बृहस्पतिश्चिकित्वान् ।
यो मध्यमो वरुणो मित्रो अग्निः ] तस्मै सूर्याय सुतमाजुहोत ॥

[ ४.६.३ ]—यदपिधाय प्राञ्चा इतः० अथ यदनपिधाय प्रत्यञ्चौ तिष्ठन्तौ जुहुतः० यदङ्गुष्ठाभ्यामाक्रमेते० अथ यदुपरिष्टादाक्रमेते० शुक्रमन्वारभन्ते० इन्द्रेण मन्युना युजेति शुक्रेण परियन्ति० संजग्मानौ दिवा पृथिव्येत्यरत्नी संधत्तः० शुक्रस्याधिष्ठानमसि मन्थिनोऽधिष्ठानमसीति शकलौ प्रास्यतः० निरस्तः षण्डो निरस्तो मर्कः सह तेन यं द्विष्म इति शकलौ निरस्यतः० ॥

कासं [ ४.४ ]—

अपनुत्तौ शण्डामर्कौ सह तेन यं द्विष्मः ॥ तुथोऽसि जनधाया देवास्त्वा शुक्रपाः प्रणयन्तु ॥ तुथोऽसि जनधाया देवास्त्वा मन्थिपाः प्रणयन्तु ॥ आयुस्संधत्तं प्राणे संधत्तं चक्षुस्संधत्तं श्रोत्रे संधत्तं वाचे संधत्तम् ॥ अनाधृष्टासि ॥ जिन्वेथां स्वपत्या मध्वा वीतम् ॥ सुवीराः प्रजाः प्रजनयन् परीहि ॥ सुप्रजाः प्रजाः प्रजनयन् परीहि ॥ इन्द्रेण मन्युना युजा सासह्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति ॥ संजग्माना दिवा पृथिव्या शुक्रश्शुक्रशोचिषा ॥ [ संजग्माना दिवा पृथिव्या ] मन्थी मन्थिशोचिषा ॥ शुक्रोऽसि शुक्रशोचिः ॥ मन्थ्यसि मन्थिशोचिः ॥ अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारस्स्याम ॥ निरस्ता शण्डामर्कौ सह तेन यं द्विष्मः ॥ शुक्रस्याधिष्ठानमसि ॥ मन्थिनोऽधिष्ठानमसि ॥

या संस्कृतिः प्रथमा विश्वकर्मा यो मध्यमो बृहस्पतिश्चिकित्वान् ।
यः परमो वरुणो मित्रो अग्निस्तस्मा इन्द्राय सुतमाजुहोत ॥
[ या संस्कृतिः प्रथमा विश्वकर्मा यो मध्यमो बृहस्पतिश्चिकित्वान् ।
यः परमो वरुणो मित्रो अग्निः ] तस्मै सूर्याय सुतमाजुहोत ॥
स्वाहा त्वा सुभो सूर्याय ॥ देवेभ्यस्त्वा मरीचिपेभ्यः ॥

[ २७.७–८ ]—शुक्रस्याधिष्ठानमसि मन्थिनोऽधिष्ठानमसीति समिद्ध एव जुहुतः० शल्कौ प्रास्यतः० सर्वहुतौ जुहुतः० यत् प्राञ्चा उद्द्रुत्य जुहुतः० तस्माद् द्वे सवने शुक्रवती० यदपिगृह्य प्राञ्चा उद्द्रवतः० यदनपिगृह्य पुरस्तात् प्रत्यञ्चौ तिष्ठन्तौ जुहुतः० प्रत्यञ्चौ तिष्ठन्तौ शुक्रामन्थिनौ जुहुतः० यदभितोऽग्निं विपरिद्रुत्य जुहुतः० अवरिफन्ता इवोत्तरवेदिं परीयाताम्० प्राञ्चा उद्द्रुत्य जुहुतः० अभितस्तिष्ठन्तौ जुहुतः० अनाधृष्टासीति निगृह्णीतः०॥

**कपिसं [ ३.३ ]—**

**---॥ तूथोऽसि .... ॥ तूथोऽसि .... ॥---॥ जिन्वेथीं .... मघ्वा ॥ सुवीराः .... ॥ सुप्रजा .... परीहि ॥ संजग्माना .... ॥---॥ अच्छिन्नस्य .... दधितारः स्याम ॥---॥**

**वामासं—**

**अपमृष्टः शण्डः ॥ देवास्त्वा शुक्रपाः प्रणयन्तु ॥ अनाधृष्टासि ॥ सुवीरो वीरान् प्रजनयन् परीह्यभि रायस्पोषेण यजमानम् ॥ संजग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषा ॥ निरस्तः शण्डः ॥ शुक्रस्याधिष्ठानमसि ॥ अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम ॥**

**सा प्रथमा सँस्कृतिर्विश्वावारा स प्रथमो वरुणो मित्रो अग्निः ।**
**स प्रथमो बृहस्पतिश्चिकित्वाँस्तस्मा इन्द्राय सुतमाजुहोत स्वाहा ॥ ७.१२-१५**

**अपमृष्टो मर्कः ॥ देवास्त्वा मन्थिपाः प्रणयन्तु ॥ अनाधृष्टासि ॥ सुप्रजाः प्रजाः प्रजनयन् परीह्यभि रायस्पोषेण यजमानम् ॥ संजग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषा ॥ निरस्तो मर्कः ॥ मन्थिनोऽधिष्ठानमसि ॥ ७.१७–१८**

माशब्रा [ ४.२.१.१३–३० ]—द्वौ प्रोक्षितौ यूपशकलौ भवतः द्वावप्रोक्षितौ। प्रोक्षितं चैवाध्वर्युरादत्तेऽप्रोक्षितं च। एवमेव प्रतिप्रस्थाता प्रोक्षितं चैवादत्तेऽप्रोक्षितं च। शुक्रमेवाध्वर्युरादत्ते मन्थिनं प्रतिप्रस्थाता। सोऽध्वर्युरप्रोक्षितेन यूपशकलेनापमार्ष्टि अपमृष्टः शण्ड इति। एवमेव प्रतिप्रस्थाता अपमृष्टो मर्क इति० देवास्त्वा शुक्रपाः प्रणयन्त्वित्येवाध्वर्युर्निष्क्रामति। देवास्त्वा मन्थिपाः प्रणयन्त्विति प्रतिप्रस्थाता० तौ जघनेनाहवनीयमरत्नी संधत्तः। ता उत्तरवेदौ सादयतो दक्षिणायामेव श्रोणावध्वर्युः सादयत्युत्तरायां प्रतिप्रस्थातानुसृजन्तावेव अनाधृष्टासीति० सोऽध्वर्युः पर्येति सुवीरो वीरान् प्रजनयन् परीहि .... इति० अथ प्रतिप्रस्थाता पर्येति सुप्रजाः प्रजाः प्रजनयन् परीहि .... इति० तावपिधाय निष्क्रामतः० तौ पुरस्तात् परीत्यापोर्णुतः। पुरस्तात्तिष्ठन्तौ जुहुतः० तौ जघनेन यूपमरत्नी संधत्तो यद्यग्निर्नोद्बाधेत। यद्यु अग्निरुद्बाधेताप्यग्रेणैव यूपमरत्नी संदध्यातां संजग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचि-

षेत्येवाध्वर्युः। संजग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषेति प्रतिप्रस्थाता० सोऽध्वर्युरप्रोक्षितं यूपशकलं निरस्यति निरस्तः शण्ड इति। एवमेव प्रतिप्रस्थाता निरस्तो मर्क इति० अथाध्वर्युः प्रोक्षितं यूपशकलमाहवनीये प्रास्यति शुक्रस्याधिष्ठानमसीति। एवमेव प्रतिप्रस्थाता मन्थिनोऽधिष्ठानमसीति० तत्र जपति अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्यामेति० अथाश्राव्याह **प्रातः प्रातःसवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान् प्रस्थितान् प्रेष्य** इति। वषट्कृतेऽध्वर्युर्जुहोति। तदनु प्रतिप्रस्थाता तदनु चमसाध्वर्यवः। तौ वै पुरस्तात्तिष्ठन्तौ जुहुतः० अभितो यूपं तिष्ठन्तौ जुहुतः० स जुहोति सा प्रथमा .... सुतमाजुहोत स्वाहेति० अथ संप्रेष्यति **प्रैतु होतुश्चमसः प्र ब्रह्मण प्रोद्गातॄणां प्र यजमानस्य प्र यन्तु सदस्यानाꣳ होत्राणां चमसाध्वर्यव उपावर्तध्वꣳ शुक्रस्याभ्युन्नयध्वम्** इति० पर्येत्य प्रतिप्रस्थाताध्वर्योः पात्रे सꣳस्रवमवनयति० तमध्वर्युर्होतृचमसेऽवनयति भक्षाय० अथ यदेते प्रतीची पात्रे न हरन्ति। हरन्त्यन्यान् ग्रहान्०॥

[ ४.३.३.१९ ] एते वै शुक्रवती रसवती सवने यत् प्रातःसवनं च माध्यंदिनं च सवनम्० ॥

**वाकासं—**

--- ॥ **मन्थिनोऽधिष्ठानमसि ॥ अच्छिन्नस्य ....॥ सा प्रथमा सꣳस्कृतिः.... जुहोत स्वाहा** ॥ ७.६.२-४; ७.७.३-५

काशब्रा [ ५.२.१.१२–२२ ] ≡ माशब्रा ४.२.१.१३–३०

[ ५.३.४.१४ ] ≡ माशब्रा ४.३.३–१९

**अशौसं—**

**इन्द्रो दिवोऽधिपतिः स मावतु। अस्मिन् ब्रह्मण्यस्मिन् कर्मण्यस्यां पुरोधायामस्यां प्रतिष्ठायामस्यां चित्त्यामस्यामाकूत्यामस्यामाशिष्यस्यां देवहूत्यां स्वाहा** ॥ ५.२४.११

**आ देवानामपि पन्थामगन्म यच्छक्नवाम तदनुप्रवोढुम्।**

**अग्निर्विद्वान्त्स यजात्स इद्धोता सोऽध्वरान्त्स ऋतून् कल्पयाति** ॥१९.५९.३

**अपैसं—**

**इन्द्रः कर्मणामध्यक्षः। .... पुरोधायामस्यां देवहूत्यामस्यामाकूत्यामस्यामाशिषि स्वाहा** ॥ १५.७.९ ॥ **आ देवानाम् .... ऋतून् पारयाति** ॥ १९.४७.६

## ७४. शुक्रामन्थिप्रचारहौत्रम्

ऋसं—

[1]होता यक्षदिन्द्रं प्रातः प्रातःसावस्यार्वावतो गमदा परावत ओरोरन्तरिक्षादा स्वात्सधस्थादिमे अस्मै शुक्रा मधुश्चुतः प्रस्थिता इन्द्राय सोमास्ताञ्जुषतां वेतु पिबतु सोमं होतर्यज ॥ खिलम् ५.७.४ (अं)

[2]इदं ते सोम्यं मध्वधुक्षन्नद्रिभिर्नरः। जुषाण इन्द्र तत् पिब ॥ ८.६५.८

ऐब्रा [ ६.१० ]—इदं ते सोम्यं मध्विति होता यजति ॥

शांब्रा [ १३.६ ]—इदं ते सोम्यं मध्विति प्रस्थितानां याज्या० अनुवषट्करोति०॥

गोब्रा [ २.२.२० ]—इदं ते सोम्यं मधु इति होता यजति ॥

## ७५. होत्रकचमसप्रचारः

तैब्रा [ २.५.८.७ ]—

अहं त्वदस्मि मदसि त्वमेतत्। ममासि योनिस्तव योनिरस्मि।
ममैव सन् वह हव्यान्यग्ने। पुत्रः पित्रे लोककृज्जातवेदः ॥

मैसं [ ३.९.८ ]—यदुत्तमः[3] सँयजताँ सँयजति० ॥

कासं [ २६.९ ]—यदुत्तमस्संयजति० ॥

वामासं—

तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत् स्वाहा॥ अयाडग्नीत् ॥ ७.१५

माशब्रा [ ४.२.१.३१–३३ ]—अथ होत्राणां चमसानभ्युन्नयन्ति० अथ होत्राः संयाजयन्ति० स प्रथमायां वा होत्रायामिष्टायामुत्तमायां वानुमन्त्रयते तृम्पन्तु होत्रा .... स्वाहेति० अथेत्य प्रत्यङ्ङुपविशत्ययाडग्नीदिति० ॥

वाकासं—

तृम्पन्तु होत्रा मधोर्यत्स्विष्टं यत्सुभृतं यत् स्वाहा ॥ ७.६.४
तृम्पन्तु होत्रा मधोर्यत्स्विष्टं यत्सुभृतं यत् स्वाहा ॥ ७.७.५

काशब्रा [ ५.२.१.२३–२४ ]— --- स प्रथमस्यां वा हुतायाः सर्वासु वा जपति तृम्पन्तु .... स्वाहेति ॥

---

१. प्रैषः। २. याज्या। ३. आग्नीध्रः।

## ७६. होत्रकचमसप्रचारहौत्रम्

**ऋसं—**

**[1]मित्रं वयं हवामहे वरुणं सोमपीतये। जज्ञाना पूतदक्षसा ॥ १.२३.४**
**[2]इन्द्र त्वा वृषभं वयं सुते सोमे हवामहे। स पाहि मध्वो अन्धसः ॥३.४०.१**
**[3]मरुतो यस्य हि क्षये पाथा दिवो विमहसः। स सुगोपातमो जनः ॥१.८६.१**
**[4]अग्ने पत्नीरिहा वह देवानामुशतीरुप। त्वष्टारं सोमपीतये ॥ १.२२.९**
**[5]उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे। स्तोमैर्विधेमाग्नये ॥ ८.४३.११**

ऐब्रा [ ६.१० ]—इन्द्र त्वा वृषभं वयमिति ब्राह्मणाच्छंसी० मित्रं वयं हवामह इति मैत्रावरुणो यजति० मरुतो यस्य हि क्षय इति पोता यजति० अग्ने पत्नीरिहा वहेति नेष्टा यजति० उक्षान्नाय वशान्नायेत्याग्नीध्रो यजति० ॥

शांब्रा [ १३.६ ]—अथ होत्राः संयजन्ति०॥

[ २८.३ ]—अथ होत्राः संयजन्ति तासामुक्तं ब्राह्मणम्। मित्रं वयं हवामह इति मैत्रावरुण्या मैत्रावरुणः० इन्द्र त्वा वृषभं वयमित्यैन्द्र्या ब्राह्मणाच्छंसी० मरुतो यस्य हि क्षय इति मारुत्या पोता० प्रथमतश्चान्ततश्च[6] यजति। अग्ने पत्नीरिहा वहेत्याग्निपात्नीवत्या त्वष्टृमत्या नेष्टा० प्रथमतश्चान्ततश्च[6] यजति० उक्षान्नाय वशान्नायेत्याग्नेय्याग्नीध्रः० प्रथमतश्चान्ततश्च[6] यजति० । अनुवषट्कुर्वन्ति ॥

तैब्रा [२.३.६.४]—सौम्यस्याध्वरस्य यज्ञक्रतोः सप्त होत्राः प्राचीर्वषट्कुर्वन्ति ॥

**अशौसं—**

**इन्द्र त्वा वृषभं .... ॥ मरुतो यस्य हि .... ॥ उक्षान्नाय वशान्नाय ॥ २०.१.१–३**

**अपैसं—**

**उक्षान्नाय ....। वैश्वानरज्येष्ठेभ्यस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥ ३.१२.६**

गोब्रा [ २.२.२० ]—इन्द्र त्वा वृषभं वयमिति ब्राह्मणाच्छंसी० **मित्रं वयं हवामहे** इति मैत्रावरुणो यजति० मरुतो यस्य हि क्षय इति पोता यजति० **अग्ने पत्नीरिहावह** इति नेष्टा यजति० उक्षान्नाय वशान्नाय इत्याग्नीध्रो यजति० एवमु हैता ऐन्द्र्यो भवन्ति० यद् गायत्र्यः० ॥

---

१. मैत्रावरुणस्य प्रस्थितयाज्या। २. ब्राह्मणाच्छंसिनः प्रस्थितयाज्या। ३. पोतुः प्रस्थितयाज्या। ४. नेष्टुः प्रस्थितयाज्या। ५. आग्नीध्रस्य प्रस्थितयाज्या। ६. प्रातःसवने तृतीयसवने च।

## ७७. द्विदेवत्यसोमभक्षणम्

तैसं [ ३.२.१० ]—

**मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहि ॥ मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहि ॥ मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहि ॥**

[ ६.४.९ ]—पुरस्तादैन्द्रवायवं भक्षयति० पुरस्तान्मैत्रावरुणम्० सर्वतः परिहारमाश्विनम्० ॥

मैसं [ ४.६.१ ]—सर्वत आश्विनं परिहारं भक्षयति० ॥

कासं [ २७.५ ] द्विदेवत्याः पूर्वे भक्षयितव्या३ इडोपहूया३ इति मीमांसन्ते० द्विदेवत्या एव पूर्वे भक्षयितव्याः० समन्तं परिहृत्य भक्षयति० ॥

कपिसं [ ४२.५ ] ≡ कासं

ऐब्रा [ २.२७ ]—**एष वसुः पुरूवसुरिह वसुः पुरूवसुर्मयि वसुः पुरूवसुर्वाक्पा वाचं मे पाहि** इत्यैन्द्रवायवं भक्षयतीति **उपहूता वाक्सह प्राणेनोप मां वाक्सह प्राणेन ह्वयतामुपहूता ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजा उप मामृषयो दैव्यासो ह्वयन्तां तनूपावानस्तन्वस्तपोजाः** इति० पुरस्तात्प्रत्यञ्चमैन्द्रवायवं भक्षयति[1]० पुरस्तात्प्रत्यञ्चं मैत्रावरुणं भक्षयति० सर्वतः परिहारमाश्विनं भक्षयति० ॥

[ २.३० ]—द्विदेवत्यानां संस्रवान् होतृचमसे समवनयति[1]० ॥

शांब्रा [ १३.६ ]—द्विदेवत्यानां प्रथमो भक्षोऽथेलाय होतृचमसः। तानध्वर्यवे प्रयच्छति[1]। नानुसृजति० द्विरैन्द्रवायवस्य भक्षयति० सकृन्मैत्रावरुणस्य सकृदाश्विनस्य। सर्वतः परिहारमाश्विनस्य भक्षयति० संस्रवान् होतृचमसेऽवनयति० ॥

## ७८. सवनीयेडा

तैसं [६.४.९]—द्विदेवत्यान् भक्षयित्वेडामुपह्वयते० अरिक्तानि पात्राणि सादयति० दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्या९ सादयति० आ तृतीयसवनात् परि शेरे० ॥

मैसं [ ४.६.१–२ ]—यद् द्विदेवत्यान् भक्षयित्वेडामुपह्वयते० यदैन्द्रवायवे पुरोडाशमवदधाति मैत्रावरुणे पयस्यामाश्विने धानाम्० यदेतानि पात्राण्या तृतीयात् सवनात् परिशेरे०॥

कासं [ २७.५ ] पुरोडाशमैन्द्रवायवस्य पात्रेऽवदधाति पयस्यां मैत्रावरुणस्य धानामाश्विनस्य० दक्षिणस्य हविर्धानस्याधस्तात् सादयति० यदेतानि प्रातस्सवनान्या तृतीयसवनाच्छेरे० ॥

---

१. होता।

कपिसं [ ४२.५ ] = कासं

ऐब्रा [ २.३० ]—द्विदेवत्यान् भक्षयित्वेळामुपह्वयते० ॥

शांब्रा [ १३.७ ]—अथेलामुपह्वयते। दक्षिणेनोत्तरेलां धारयन्त्सव्येन होतृचमसं च पात्रीं च संयच्छत्यसंस्पर्शयन्० तस्यां न सुन्वदाह नाशिषो निराह। उपहूयेलामवघ्रायावस्यति ॥

## ७९. सवनमुखसोमभक्षणम्

तैसं [ ३.२.५ ]—

भक्षेहि माविश दीर्घायुत्वाय शंतनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोऽसि। अश्विनोस्त्वा बाहुभ्यांᳲसघ्यासम्। नृचक्षसं त्वा देव सोम सुचक्षा अव ख्येषम्। मन्द्राभिभूतिः केतुर्यज्ञानां वाग् जुषाणा सोमस्य तृप्यतु मन्द्रा स्वर्वाच्यदितिरनाहतशीर्ष्णी वाग्जुषाणा सोमस्य तृप्यत्वेहि विश्वचर्षणे शंभूर्मयोभूः स्वस्ति मा हरिवर्ण प्र चर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा मा राजन् वि बीभिषो मा मे हार्दि त्विषा वधीः। वृषणे शुष्मायायुषे वर्चसे ॥ वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रछन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि ॥

आ प्यायस्व समेतु ते विश्वतः सोम वृष्णियम्। भवा वाजस्य सङ्गथे ॥
हिन्व मे गात्रा हरिवो गणान् मे मा वि तीतृषः।
शिवो मे सप्तर्षीनुप तिष्ठस्व मा मेऽवाङ् नाभिमति गाः ॥

ऋसं—

[1]अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान्।
किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥
शं नो भव हृद आ पीत इन्दो पितेव सोम सूनवे सुशेवः।
सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः ॥ ८.४८.३-४
[2]आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्।
भवा वाजस्य संगथे ॥ १.९१.१६
सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ १.९१.१८

ऐब्रा [ २.३० ]—तदाहुरवान्तरेळां पूर्वां प्राश्नीया३त् होतृचमसं भक्षये३दिति। अवान्तरेळामेव पूर्वां प्राश्नीयादथ होतृचमसं भक्षयेत्०॥

---

१. द्वाभ्यामात्माभिमर्शनम्। २. द्वाभ्यां चमसाप्यायनम्। शाङ्खा० मते आद्यैव।

शांब्रा [ १३.७ ]— प्राश्नात्युत्तरेळामथाप आचम्य होतृचमसं भक्षयति० सर्वे समुपहूय भक्षयन्ति ॥

[ २८.३ ]—अथेळाथ होतृचमसस्तस्योक्तं ब्राह्मणम् ॥

तांब्रा [ १.५.३–८ ]—

श्येनो नृचक्षा अग्नेष्ट्वा चक्षुषावपश्यामि ॥ इन्दविन्द्रपीतस्य त इन्द्रियावतो गायत्रछन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥ ऊर्ध्वः सप्त ऋषीनुपतिष्ठस्वेन्द्रपीतो वाचस्पते सप्तर्त्विजोऽभ्युच्छ्रयस्व जुषस्व लोकं मावागवगाः॥ सोम रारन्धि नो हृदि पिता नोऽसि मम तन्मा मा हिꣳसीः ॥

सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः । सुमृडीको न आविश ॥

आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥

षब्रा [ २.५ ]—स प्रातःसवने सवनमुखीयेष्वाह्वनेषूपहवमिच्छते अग्निर्मे होता स मोपह्वयताम् । होतरुप मा ह्वयस्व इत्युच्चैः । आदित्यो मेऽध्वर्युः स मोपह्वयताम् । अध्वर्य उप मा ह्वयस्व इत्युच्चैः । चन्द्रमा मे ब्रह्मा स मोपह्वयताम् । ब्रह्मन्नुप मा ह्वयस्व इत्युच्चैः । पर्जन्यो म उद्गाता स मोपह्वयताम् । उद्गातरुप मा ह्वयस्व इत्युच्चैः । आकाशो मे सदस्यः स मोपह्वयताम् । सदस्योप मा ह्वयस्व इत्युच्चैः । आपो मे होत्राशꣳसिनस्ते मोपह्वयन्ताम् । होत्राशꣳसिन उप मा ह्वयध्वम् इत्युच्चैः । रश्मयो मे चमसाध्वर्यवस्ते मोपह्वयन्ताम् । चमसाध्वर्यव उप मा ह्वयध्वम् इत्युच्चैः० स उपहूतो भक्षयति० ॥

अपैसं—

सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।

आप्यायमानाः प्रजया धनेन शुद्धा भवन्तु शुचयः पावकाः ॥ २०.५१.६

गोब्रा [ २.३.६ ]—शं नो भव हृद आ पीत इन्दो पितेव सोम सूनवे सुशेवः । सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः इत्यात्मानं प्रत्यभिमृशति० आ प्यायस्व, सं ते पयांसीति द्वाभ्यां चमसानाप्याययन्त्यभिरूपाभ्याम्० ॥

## ८०. अच्छावाकचमसप्रचारः

तैसं [ ३.५.६ ]—

वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीः [सादयामि] यज्ञाय वः पन्नेजनीः सादयामि ॥

माशब्रा [ ४.३.१.१ ]—भक्षयित्वा **समुपहूताः स्मः** इत्युक्त्वोत्तिष्ठति पुरोडाशबृगलमादाय। तद् यत्रैतदुपसन्नोऽच्छावाकोऽन्वाह तदस्मै पुरोडाशबृगलं पाणावादधदाह **अच्छावाक वदस्व यत्ते वाद्यम्** इति० ॥

काशब्रा [ ५.३.२.१–२ ] ≡ माशब्रा

## ८१. अच्छावाकचमसप्रचारहौत्रम्

ऋसं—

[1]अच्छा वो अग्निमवसे देवं गासि स नो वसुः ।
रासत् पुत्र ऋषूणामृतावा पर्षति द्विषः ॥
स हि सत्यो यं पूर्वे चिद्देवासश्चिद्यमीधिरे ।
होतारं मन्द्रजिह्वमित् सुदीतिभिर्विभावसुम् ॥
स नो धीती वरिष्ठया श्रेष्ठया च सुमत्या ।
अग्ने रायो दिदीहि नः सुवृक्तिभिर्वरेण्य ॥ ५.२५.१–३
[2]प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
अरंगमाय जग्मयेऽपश्चाद्दघ्वने नरे ॥
एमेनं प्रत्येतन सोमेभिः सोमपातमम् ।
अमत्रेभिर्ऋजीषिणमिन्द्रं सुतेभिरिन्दुभिः ॥
यदी सुतेभिरिन्दुभिः सोमेभिः प्रतिभूषथ ।
वेदा विश्वस्य मेधिरो धृषत् तंतमिदेषते ॥
अस्माअस्मा इदन्धसोऽध्वर्यो प्र भरा सुतम् ।
कुवित् समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्परत् ॥ ६.४२.१–४
[3]नि वर्तध्वं मानु गातास्मान्त्सिषक्त रेवतीः ।
अग्नीषोमा पुनर्वसू अस्मे धारयतं रयिम् ॥ १०.१९
[4]प्रातर्यावभिरा गतं देवेभिर्जेन्यावसू ।
इन्द्राग्नी सोमपीतये ॥ ८.३८.७

ऐब्रा [ २.३६ ]—पुरस्तादन्ये होत्रकाः सदः प्रसर्पन्ति पश्चाच्छावाकः० ॥

[ ६.१० ]—प्रातर्यावभिरा गतं देवेभिर्जेन्यावसू। इन्द्राग्नी सोमपीतय इति स्वयंसमृद्धाच्छावाकस्य० ॥

१. अच्छावाकोऽनुब्रूयात्। २. चमस उन्नीयमानेऽच्छावाकश्चतस्र ऋचोऽनुब्रूयात्। ३. शाङ्खा०मतेऽस्य सूक्तस्य यावतीर्ऋचः पर्याप्नुयात तावतीरनुद्रवेत्। ४. अच्छावाकस्य प्रस्थितयाज्या।

[ ६.१४ ]—अथाहास्त्यच्छावाकस्य प्रवरा३ः नाँ३ इति। अस्तीति ब्रूयात्। यदेवैनमध्वर्युराह **अच्छावाक वदस्व यत्ते वाद्यम्** इत्येषोऽस्य प्रवरः ॥

शांब्रा [ २८.४–६ ]—एतस्यां दिश्यासीनोऽच्छावाक उपहवमिच्छते० अच्छावाकाय पुरोळाशबृगलं परिहरन्ति० अथैनमध्वर्युराह **अच्छावाक वदस्व यत्ते वाद्यम्** इति० अच्छा वो अग्निमवस इत्याग्नेयीरन्वाह० ता वा अनुष्टुभो भवन्ति० ता वै तिस्रो भवन्ति० उत्तमायै तृतीये वचने प्रणवेन निगदमुपसंदधाति **यजमान होतरध्वर्योऽग्नीद् ब्रह्मन् पोतर्नेष्टरुतोपवक्तः** इति० **इषेषयध्वमूर्जोर्जयध्वम्** इति० **नि वो जामयो जिहतां न्यजामयः** इति० **नि सपत्ना यामानि बाधितासः** इति० **जेषथाभीत्वरीं जेषथाभीत्वर्याः** इति० **श्रवद्द इन्द्रः शृणवद्धोऽग्निः** इति० **प्रस्थायेन्द्राग्निभ्यां सोमं वोचतोपो अस्मान् ब्राह्मणान् ब्राह्मणा ह्वयध्वम्** इति० **उपहवमयं ब्राह्मण इच्छतेऽच्छावाको वा** इत्यध्वर्युराह **तं होतरुपह्वयस्व** इति। तं होतोपह्वयते० ॥

[ १३.८ ]—अथ वै प्रत्युपहवोऽच्छावाकस्य। **प्रत्येता वामा सूक्तायं सुन्वन् यजमानो अग्रभीदुत प्रतिष्ठोतोपवक्तरुत नो गाव उपहूताः** इति यदि नोपजुहूषति। **उतोपहूतः** इत्यभ्यस्यति यद्युपजुहूषति। प्रत्युपहूतोऽच्छावाकः निवर्तध्वं मानुगातेत्येतस्य सूक्तस्य यावतीः पर्याप्नुयात् तावतीरनुद्रवेत्। होता वा प्रतिकामिनमच्छावाकम्० ॥

[ २८.७ ]—प्रत्यस्मै पिपीषत इत्यच्छावाक उन्नीयमानायान्वाह। ता वै चतस्रो भवन्ति० ता वा अनुष्टुभो भवन्ति० बृहत्युत्तमा भवति० प्रातर्यावभिरा गतमित्यैन्द्राग्न्या यजति० गायत्र्या० अनुवषट्करोति० अनवानं प्रातःसवने यजेयुरिति ह स्माह पैङ्ग्यः० अर्धर्चश इति कौषीतकिः० ॥

गोब्रा [ २.२.२० ]—**प्रातर्यावभिरा गतं देवेभिर्जेन्यावसू। इन्द्राग्नी सोमपीतये** इति स्वयंसमृद्धाच्छावाकस्य ॥

## ८२. ऋतुग्रहप्रचारः

तैसं [ १.४.१४ ]—

**मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्चेषश्चोर्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्च ॥ उपयामगृहीतोऽसि सꣳसर्पोऽस्यꣳहस्पत्याय त्वा ॥**

[ ६.५.३ ]—यदृतुग्रहा गृह्यन्ते० द्वादश गृह्यन्ते० सह प्रथमौ गृह्येते सहोत्तमौ० उभयतोमुखमृतुपात्रं भवति० **ऋतुना प्रेष्य** इति षट् कृत्व आह० **ऋतुभिः** इति चतुः० द्विः पुनः **ऋतुना** आह० नान्योऽन्यमनु प्र पद्येत० प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्र पद्यते प्रसिद्धं प्रतिप्रस्थातोत्तरेण० ॥

मसं [ १.३.१६ ]—

उपयामगृहीतोऽसि मधवे त्वा ॥ [ उपयामगृहीतोऽसि ] माधवाय त्वा ॥
[ उपयामगृहीतोऽसि ] शुक्राय त्वा ॥ [ उपयामगृहीतोऽसि ] शुचये त्वा ॥
[ उपयामगृहीतोऽसि ] नभसे त्वा ॥ [ उपयामगृहीतोऽसि ] नभस्याय त्वा ॥
[ उपयामगृहीतोऽसि ] इषाय त्वा ॥ [ उपयामगृहीतोऽसि ] ऊर्जाय त्वा ॥
[ उपयामगृहीतोऽसि ] सहसे त्वा ॥ [ उपयामगृहीतोऽसि ] सहस्याय त्वा ॥
[ उपयामगृहीतोऽसि ] तपसे त्वा ॥ [ उपयामगृहीतोऽसि ] तपस्याय त्वा ॥

[ ४.६.७ ]—द्वादश ऋतुग्रहाः० असन्ना हूयन्ते० नान्योऽन्यमभिप्रपद्यते० उभयतोमुखमृतुपात्रम्० सह प्रथमं गृह्णाते सहोत्तमम् । सह युज्येते सह विमुच्येते० नानुयजति० ॥

कासं [ ४.७ ]—

उपयामगृहीतोऽसि मधवे त्वा ॥ उपयामगृहीतोऽसि माधवाय त्वा ॥
उपयामगृहीतोऽसि शुक्राय त्वा ॥ उपयामगृहीतोऽसि शुचये त्वा ॥
उपयामगृहीतोऽसि नभसे त्वा ॥ उपयामगृहीतोऽसि नभस्याय त्वा ॥
उपयामगृहीतोऽसीषाय त्वा ॥ उपयामगृहीतोऽस्यूर्जाय त्वा ॥
उपयामगृहीतोऽसि सहसे त्वा ॥ उपयामगृहीतोऽसि सहस्याय त्वा ॥
उपयामगृहीतोऽसि तपसे त्वा ॥ उपयामगृहीतोऽसि तपस्याय त्वा ॥

[ २८.२ ]—यदृतुग्रहा गृह्यन्ते० उभौ सह प्रथमं गृह्णाते० उभौ सहोत्तमम्० उभौ सह विमुच्येते । उभयतोमुखे ऋतुपात्रे भवतः० नान्योऽन्यमभिप्रपद्येयाताम्० द्वादशैते गृह्यन्ते० षडन्ये भवन्ति षडन्ये० षट् ऋतुना० चतुः ऋतुभिः० द्विः ऋतुना पुनः० व्यवहारं भक्षयन्ति०॥

कपिसं [ ३.५ ] = कासं

[ ४४.२ ] = कासं

वामासं —

उपयामगृहीतोऽसि मधवे त्वा ॥ उपयामगृहीतोऽसि माधवाय त्वा ॥
उपयामगृहीतोऽसि शुक्राय त्वा ॥ उपयामगृहीतोऽसि शुचये त्वा ॥
उपयामगृहीतोऽसि नभसे त्वा ॥ उपयामगृहीतोऽसि नभस्याय त्वा ॥
उपयामगृहीतोऽसीषे त्वा ॥ उपयामगृहीतोऽस्यूर्जे त्वा ॥
उपयामगृहीतोऽसि सहसे त्वा ॥ उपयामगृहीतोऽसि सहस्याय त्वा ॥
उपयामगृहीतोऽसि तपसे त्वा ॥ उपयामगृहीतोऽसि तपस्याय त्वा ॥
उपयामगृहीतोऽस्यंहसस्पतये त्वा ॥ ७.३०

माशब्रा [ ४.३.१.२–२० ]—स वै सन्नेऽच्छावाके ऋतुग्रहैश्चरति० तान् वै द्वादश गृह्णीयात्० अथो अपि त्रयोदश गृह्णीयात्० द्वादश त्वेव गृह्णीयात् एषैव संपत्। द्रोणकलशाद् गृह्णाति० उभयतोमुखाभ्यां पात्राभ्यां गृह्णाति० तं गृहीत्वा न सादयति० नानुवाक्यामन्वाह० नानुवषट्करोति० सहैव प्रथमौ ग्रहौ गृह्णीतः सहोत्तमौ० निरेवान्यतरः क्रामति प्रान्यतरः पद्यते० तौ वा ऋतुना इति षट् प्रचरतः० ऋतुभिः इति चतुः० तौ वा ऋतुना इत्युपरिष्टाद् द्विश्चरतः० तौ वा ऋतुनेति षट् प्रचर्येतरथा पात्रे विपर्यस्येते। ऋतुभिरिति चतुश्चरित्वेतरथा पात्रे विपर्यस्येते० अथातो गृह्णात्येव उपयामगृहीतोऽसि मधवे त्वेत्येवाध्वर्युर्गृह्णाति। उपयामगृहीतोऽसि माधवाय त्वेति प्रतिप्रस्थाता० उपयामगृहीतोऽसि शुक्राय त्वेत्येवाध्वर्युर्गृह्णाति। उपयामगृहीतोऽसि शुचये त्वेति प्रतिप्रस्थाता० उपयामगृहीतोऽसि नभसे त्वेत्येवाध्वर्युर्गृह्णाति। उपयामगृहीतोऽसि नभस्याय त्वेति प्रतिप्रस्थाता० उपयामगृहीतोऽसीषे त्वेत्येवाध्वर्युर्गृह्णाति। उपयामगृहीतोऽस्यूर्जे त्वेति प्रतिप्रस्थाता० उपयामगृहीतोऽसि सहसे त्वेत्येवाध्वर्युर्गृह्णाति। उपयामगृहीतोऽसि सहस्याय त्वेति प्रतिप्रस्थाता० उपयामगृहीतोऽसि तपसे त्वेत्येवाध्वर्युर्गृह्णाति। उपयामगृहीतोऽसि तपस्याय त्वेति प्रतिप्रस्थाता० उपयामगृहीतोऽस्यꣳहसस्पतये त्वेति त्रयोदशं ग्रहं गृह्णाति यदि त्रयोदशं गृह्णीयात्। अथ प्रतिप्रस्थाताध्वर्योः पात्रे सꣳस्रवमवनयति। अध्वर्युर्वा प्रतिप्रस्थातुः पात्रे सꣳस्रवमवनयति। आहरति भक्षम्॥

**वाकासं [ ७.१२.१ ] = वामासं**

काशब्रा [ ५.३.२.३–१८ ] = माशब्रा

शांब्रा [ १३.९ ]—अथ यदमू व्यतिचरतो नान्योन्यमनुप्रपद्येते अध्वर्यू०॥

गोब्रा [ २.३.८ ]—नान्योन्यमनुप्रपद्येते अध्वर्यू०॥

## ८३. ऋतुग्रहप्रचारहौत्रम्

ऋसं—

[1]होता यक्षदिन्द्रं होत्रात्सजूर्दिवा पृथिव्या ऋतुना सोमं पिबतु होतर्यज॥
होता यक्षन्मरुतः पोत्रात्सुष्टुभः स्वर्का ऋतुना सोमं पिबतु पोतर्यज॥
होता यक्षद् ग्राव्णो नेष्ट्रात्त्वष्टा सुजनिमा सजूर्देवानां पत्नीभिर्ऋतुना सोमं पिबतु नेष्टर्यज॥
होता यक्षदग्निमाग्नीध्रादृतुना सोमं पिबत्वग्नीद्यज॥
होता यक्षदिन्द्रं ब्रह्माणं ब्राह्मणादृतुना सोमं पिबतु ब्रह्मन् यज॥

१. द्वादश ऋतुप्रैषाः। प्रतिप्रैषं प्रेषितः स स ऋत्विक् याज्यां पठेत्। प्रैषस्य 'होता यक्षत्' इति पदयोः स्थाने 'ये यजामहे' अन्तिमयोः पदयोः स्थाने 'वषट्' इति च विहिते याज्या भवेत्।

होता यक्षन्मित्रावरुणा प्रशास्तारौ प्रशास्त्रादृतुना सोमं पिबतां प्रशास्तर्यज ॥
होता यक्षद्देवं द्रविणोदां होत्रादृतुभिः सोमं पिबतु होतर्यज ॥
होता यक्षद्देवं द्रविणोदां पोत्रादृतुभिः सोमं पिबतु पोतर्यज ॥
होता यक्षद्देवं द्रविणोदां नेष्ट्रादृतुभिः सोमं पिबतु नेष्टर्यज ॥

होता यक्षद्देवं द्रविणोदामपाद्धोत्रादपात्पोत्रादपान्नेष्ट्रात्तुरीयं पात्रममृक्तममर्त्यमिन्द्रपानं देवो द्रविणोदाः पिबतु द्राविणोदसः ।

स्वयमायूयाः स्वयमभिगूर्याः स्वयमभिगूर्तया होत्राय ऋतुभिः सोमस्य पिबत्वच्छावाक यज ॥

होता यक्षदश्विनाध्वर्यू आध्वर्यवादृतुना सोमं पिबेतामध्वर्यू यजतम् ॥

होता यक्षदग्निं गृहपतिं गार्हपत्यात्सुगृहपतिस्त्वधाग्नेऽयं सुन्वन् यजमानः स्यात्सुगृहपतिस्त्वमनेन सुन्वता यजमानेनाग्निर्गृहपतिर्गार्हपत्यादृतुना सोमं पिबतु गृहपते यज ॥ ( खिलम् ५.७.५ )

[1]इन्द्र सोमं पिब ऋतुना त्वा विशन्त्विन्दवः । मत्सरासस्तदोकसः ॥
मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन । यूयं हि ष्ठा सुदानवः ॥
अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना । त्वं हि रत्नधा असि ॥
अग्ने देवाँ इहा वह सादया योनिषु त्रिषु । परि भूष पिब ऋतुना ॥
ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु । तवेद्धि सख्यमस्तृतम् ॥
युवं दक्षं धृतव्रत मित्रावरुण दूळभम् । ऋतुना यज्ञमाशाथे ॥
द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे । यज्ञेषु देवमीळते ॥
द्रविणोदा ददातु नो वसूनि यानि शृण्विरे । देवेषु ता वनामहे ॥
द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत । नेष्ट्रादृतुभिरिष्यत ॥
यत् त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे । अध स्मा नो ददिर्भव ॥
अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता । ऋतुना यज्ञवाहसा ॥
गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि । देवान् देवयते यज ॥ १.१५

ऐब्रा [२.२९]—षट् ऋतुना इति यजन्ति० चत्वारः ऋतुभिः इति० द्विः ऋतुना इत्युपरिष्टात्० नर्तुयाजानामनुवषट्कुर्यात्० ॥

शांब्रा [ १३.९ ]—तद्यदृतुयाजैश्चरन्ति० षळ् ऋतुना इति यजन्ति० चत्वारः ऋतुभिः इति० द्विः ऋतुना इत्युपरिष्टात्० अनवानं यजन्ति० नानुवषट्कुर्वन्ति० ते वै द्वादश भवन्ति० ॥

1. शाङ्खा०मते वै कल्पिकयो याज्याः ।

[ २८.८ ]—अथात ऋतुप्रैषाणामेव मीमांसा । कण्वो हैतानृतुप्रैषान् ददर्श मेधातिथिर्याज्याः० स य इच्छेन्मृत्युं पाप्मानमपहन्यामित्येताभिर्यजेत ॥

कासं [ २८.२ ]—ऋतुना सोमं पिबतु इति ह्याह० ॥

अशौसं—

[1]मरुतः पोत्रात् सुष्टुभः स्वर्कादृतुना सोमं पिबतु ॥
अग्निराग्नीध्रात् सुष्टुभः स्वर्कादृतुना सोमं पिबतु ॥
इन्द्रो ब्रह्मा ब्राह्मणात् सुष्टुभः स्वर्कादृतुना सोमं पिबतु ॥
देवो द्रविणोदाः पोत्रात् सुष्टुभः स्वर्कादृतुना सोमं पिबतु ॥ २०.२

गोब्रा [२.३.७]—तद्यदृतुयाजैश्चरन्ति० षट् ऋतुना इति यजन्ति० चत्वारः ऋतुभिः इति यजन्ति० द्विः ऋतुना इत्युपरिष्टात्० अनवानन्तो यजन्ति० ते वै द्वादश भवन्ति० ॥

## ८४. ऐन्द्राग्नग्रहग्रहणम्

तैसं [ १.४.१५ ]—

इन्द्राग्नी आ गतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ।
उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वा ॥ एष ते योनिरिन्द्राग्निभ्यां त्वा ॥

[ ६.५.४ ]—यदैन्द्राग्नमृतुपात्रेण गृह्णाति० ॥

मैसं [ १.३.१७ ]—

इन्द्राग्नी आगतꣳ सुतं .... । उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वा ॥ एष ते योनिरिन्द्राग्निभ्यां त्वा ॥

[ ४.६.८ ]—यदैन्द्राग्नमृतुपात्रेण गृह्णाति०॥

कासं [ ४.७ ]—

इन्द्राग्नी आगतं सुतं .... । उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वा ॥ एष ते योनिरिन्द्राग्निभ्यां त्वा ॥

[ २८.२ ] —ऋतुपात्रेणैन्द्राग्नं गृह्णाति० ॥

कपिसं [ ३.५ ] ≡ कासं

[ ४४.२ ] ≡ कासं

वामासं—

इन्द्राग्नी आगतꣳ सुतं....। उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वा ॥ एष ते योनिरिन्द्राग्निभ्यां त्वा ॥ आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखा । उपयामगृहीतोऽस्यग्नीन्द्राभ्यां त्वा ॥ एष ते योनिरग्नीन्द्राभ्यां त्वा ॥ ७.३१-३२

१. ब्राह्मणस्यैश्चैस्त्रिभिः पठनीया याज्याः ।

माशब्रा [ ४.३.१.२१-२४ ]—अथ प्रतिप्रस्थाताभक्षितेन पात्रेणैन्द्राग्नं ग्रहं गृह्णाति० अथातो गृह्णात्येव इन्द्राग्नी आगतᳪ सुतं.... इन्द्राग्निभ्यां त्वा ।। एष ते योनिरिन्द्राग्निभ्यां त्वेति सादयति० ।।

वाकासं [ ७.१३-१४ ] ≡ वामासं

काशब्रा [ ५.३.२.१८-२१ ] ≡ माशब्रा

शांब्रा [ १३.९ ]—लिम्पेदिवैवावेव जिघ्रेदत्र[1] च द्विदेवत्येषु चेति० ।।

गोब्रा [ २.३.८ ]—लिम्पेदिवैवावजिघ्रेदत्र[1] च द्विदेवत्येषु च० ।।

## ८५. आज्यशस्त्रम्[2]

ऋसं—

[3]द्युमत्तद्वदे पिता मातरिश्वाच्छिद्रा पदाधादच्छिद्रोक्था कवयः शंसन् । सोमो विश्वविन्नीथा निनेषद् बृहस्पतिरुक्थामदानि शंसिषद् वागायुर्विश्वायुर्विश्वमायुः क इदं शंसिष्यति स इदं शंसिष्यति ।। (आश्वश्रौ ५.९.१)

शोंसावो३म् [4]भूरग्निर्ज्योतिरग्नो३म् । इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रो३म् । सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यो३म् ।। ( आश्वश्रौ ५.९.११ )

[5]अग्निर्देवेद्धः । अग्निर्मन्विद्धः । अग्निः सुषमित् । होता देववृतः।
होता मनुवृतः । प्रणीर्यज्ञानाम् । रथीरध्वराणाम् । अतूर्तो होता ।
तूर्णिर्हव्यवाट् । आ देवो देवान् वक्षत् । यक्षदग्निर्देवो देवान् ।
सो अध्वरा करति जातवेदो३म् ( खिलम् ५.५.१ )

[6]प्र वो देवायाग्नये बर्हिष्ठमर्चास्मै । गमद्देवेभिरा स नो यजिष्ठो बर्हिरा सदो३म् ऋतावा यस्य रोदसी दक्षं सचन्त ऊतयः। हविष्मन्तस्तमीळते तं सनिष्यन्तोऽवसो३म् स यन्ता विप्र एषां स यज्ञानामथा हि षः । अग्निं तं वो दुवस्यत दाता यो वनिता मघो३म् । स नः शर्माणि वीतयेऽग्निर्यच्छतु शंतमा । यतो नः प्रुष्णवद्वसु दिवि क्षितिभ्यो अप्स्वो३म् दीदिवांसमपूर्व्यं वस्वीभिरस्य धीतिभिः । ऋक्वाणो अग्निमिन्धते होतारं विश्पतिं विशो३म् उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः । शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातमो३म् ( ३.१३.१-६ ) शोंसावो३म् [7]नू नो रास्व सहस्रवत् तोकवत् पुष्टिमद्वसु । द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितो३म् ।। ( ३.१३.७ )

१० ऋतुग्रहभक्षणे । २. होत्रा शंसनीयम् । ३. जपः । ४. तूष्णींशंसः । ५. निविद् । ६. आद्यां त्रिः शंसेत् अर्धर्चशो विग्राहम् । ७. परिधानीया । ऐतरेयब्राह्मणेऽस्य सूक्तस्य शंसनक्रमो भिन्नः।

[1]अग्न इन्द्रश्च दाशुषो दुरोणे सुतावतो यज्ञमिहोप यातम् ।
अमर्धन्ता सोमपेयाय देवा ॥ ३.२५.४

ऐन्द्रा [ ३.१२ ]—**शोंसावो३म्** इत्याह्वयते[2] प्रातःसवने त्र्यक्षरेण । **शंसामोदैवो३म्** इत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण० ।

[ २.२४ ]—**सुमत्पद्वग्दे** इत्येष वै यज्ञोऽक्षरपङ्क्तिः० ॥

[ २.३८-३९ ]—होतृजपं जपति० उपांशु जपति० पुराह्वावाज्जपति० पराञ्चं चतुष्पद्यासीनमभ्याह्वयते० सम्यङ्ङ्द्विपांद्भवति० **पिता मातरिश्वा** इत्याह० **अच्छिद्रा पदाधा** इति० **अच्छिद्रोक्था कवयः शंसन्** इति० **सोमो विश्वविन्नीथा निनेषद् बृहस्पतिरुक्थामदानि शंसिषत्** इति० **वागायुर्विश्वायुर्विश्वमायुः** इत्याह० **क इदं शंसिष्यति स इदं शंसिष्यति** इत्याह० आहूय तूष्णींशंसं शंसति० उपांशु तूष्णींशंसं शंसति० तिर इव तूष्णींशंसं शंसति० षट्पदं तूष्णींशंसं शंसति० तूष्णींशंसं शस्त्वा पुरोरुचं[3] शंसति० उच्चैः पुरोरुचं शंसति० द्वादशपदां पुरोरुचं शंसति० ॥

[ २.३१ ]—ते वै देवा विजितिनो मन्यमाना यज्ञमतन्वत । तमेषामसुरा अभ्यायन् यज्ञवेशसमेषां करिष्याम इति । तान् समन्तमेवोदारान् परियत्तानुदपश्यन् । तेऽब्रुवन् संस्थापयामेमं यज्ञं यज्ञं नोऽसुरा मा वधिषुरिति । तथेति । तं तूष्णींशंसे संस्थापयन् **भूरग्निर्ज्योतिर्ज्योतिरग्निः** इत्याज्यप्रउगे संस्थापयन् **इन्द्रो ज्योतिर्भुवो ज्योतिरिन्द्रः** इति निष्केवल्यमरुत्वतीये संस्थापयन् **सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यः** इति वैश्वदेवाग्निमारुते संस्थापयन्० स तदा वाव यज्ञः संतिष्ठते यदा होता तूष्णींशंसं शंसति०॥

[ २.३३-३४ ]—आह्वयतेऽथ निविदं दधाति० निविदं शस्त्वा सूक्तं शंसति० यं कामयेत क्षत्रेणैनं व्यर्धयानीति मध्य एतस्यै निविदः सूक्तं शंसेत्० यं कामयेत विशैनं व्यर्धयानीति मध्य एतस्य सूक्तस्य निविदं शंसेत्० यमु कामयेत् सर्वमेवास्य यथापूर्वमृजुक्लृप्तं स्यादित्याह्वयेताथ निविदं दध्यादथ सूक्तं शंसेत्०द्वादशपदा वा एषा निवित्०अग्निर्देवेद्ध इति शंसति० अग्निर्मन्विद्ध इति शंसति० अग्निः सुषमिदिति शंसति० होता देववृत इति शंसति० होता मनुवृत इति शंसति० प्रणीर्यज्ञानामिति शंसति० रथीरध्वराणामिति शंसति० अतूर्तो होतेति शंसति० तूर्णिर्हव्यवाळिति शंसति० आ देवो देवान् वक्षदिति शंसति० यक्षदग्निर्देवो देवानिति शंसति० सो अध्वरा करति जातवेदा इति शंसति० ।

[ ३.१०-११ ]—गर्भा वा एत उक्थानां यन्निविदः। तद्यत्पुरस्तादुक्थानां प्रातःसवने

१. याज्या । २. होता । ३. निविदमित्यर्थः ।

धीयन्ते० पच्छो निविदः शस्यन्ते० न निविदः पदमतीयात्० न निविदः पदे विपरिहरेत्० न निविदः पदे समस्येत्०।

[२.३५] प्र वो देवायाग्नये इत्यनुष्टुभः। प्रथमे पदे विहरति० समस्यत्युत्तरे पदे०।

[२.४०]— प्र वो देवायाग्नय इति शंसति० दीदिवांसमपूर्व्यमिति शंसति० स नः शर्मांणि वीतय इति शंसति० उत नो ब्रह्मन्नविष इति शंसति० स यन्ता विप्र एषामिति शंसति० ऋतावा यस्य रोदसी इति शंसति० नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वस्वित्युत्तमया परिदधाति० याज्यया यजति०।

[२.३७]—अग्न इन्द्रश्च दाशुषो दुरोण इत्याग्नेन्द्र्या यजति०।

[३.१२]—**उक्थं वाचि** इत्याह शस्त्वा चतुरक्षरम्। **ओमुक्थशाः** इत्यध्वर्युश्चतुरक्षरम्० ॥

[३.४४]—असंत्वरमाणाश्चरेयुः० मन्द्रया वाचा प्रातःसवने शंसेत्०॥

**ऋसं—**

पिता मातरिश्वाच्छिद्रा पदोशिगसीयानुतक्षिषत् सोमो नीथविन्नीथा निनेषद् बृहस्पतिरुक्थामदानि शंसिषत् ॥ (शांश्रौ ७.९.१)

शोंसावो३म् अग्निर्ज्योतिर्ज्योतिरग्निः। इन्द्रो ज्योतिर्ज्योतिरिन्द्रः। सूर्यो ज्योतिर्ज्योतिः सूर्यः। **अग्निर्देवेद्धः। अग्निर्मन्विद्धः। अग्निः सुसमित्। .... सो अध्वरा करति जातवेदो३म्** ( शांश्रौ ७.९.२-३ ) **प्र वो देवायाग्नये .... सहस्रसातमो३म्** (३.१३.१-६) शोंसावो३म् **नू नो रास्व .... वर्षिष्ठमनुपक्षितो३म्** ( ३.१३.७ ) ॥

**अग्न इन्द्रश्च दाशुषो दुरोणे....** ॥ ३.२५.४

शांब्रा [१४.१-३]—अथात आज्यम्० तद्वा इदं षड्विधमाज्यं तूष्णीञ्जपस्तूष्णींशंसः पुरोरुक् सूक्तमुक्थवीर्यं याज्येति० अथ यत्पुरस्तात्तूष्णीञ्जपं जपति० अथैतं तूष्णींशंसमुपांशु शंसति० **अग्निर्ज्योतिर्ज्योतिरग्निः** इति० **इन्द्रो ज्योतिर्ज्योतिरिन्द्रः** इति० **सूर्यो ज्योतिर्ज्योतिः सूर्यः** इति० अथ वै निविन्० सा पुरस्तात् सूक्तस्य प्रातःसवने धीयते० द्वादशपदां पुरोरुचमुपसंशंसति० अथ सप्तर्चमाज्यं शंसति० तद्वा आनुष्टुभं भवति० पदे विगृह्णाति० तदनवानं संक्रामेत्० समस्तेनोत्तरेणार्धर्चेन प्रणौति० त्रिः प्रथमया त्रिरुत्तमया० आग्नेन्द्र्या यजति० अग्न इन्द्रश्च दाशुषो दुरोण इति पदं परिशिष्य विराजोऽर्धर्चेऽवानिति० उत्तरेण विराजोऽर्धर्चेन वषट्करोति० अनुवषट्करोति। **शोंसावो** इति प्रातःसवन आह्वयते० **शोंसामो दैव** इत्यध्वर्युः० **उक्थमवाचि** इति प्रातःसवन उपांशु होता ब्रूयात्। **उक्थशाः** इत्यध्वर्युः ०॥

[२८.९]—एकदेवत्यमाज्यं शंसति ॥

तैसं [ ३.३.२ ]—

[1]इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शꣳसिषद्विश्वे देवाः सूक्तवाचः पृथिवि मातर्मा मा हिꣳसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनु मदन्तु॥

[ ३.२.७ ]—

[2]शस्त्रस्य शस्त्रमस्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यात् । इन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषम् । सा मे सत्याशीर्देवेषु भूयाद् ब्रह्मवर्चसं मागम्यात्॥

यज्ञो बभूव स आ बभूव स प्र जज्ञे स वावृधे ।
स देवानामधिपतिर्बभूव सो अस्माꣳअधिपतीन् करोतु वयꣳस्याम पतयो रयीणाम्॥

[३.२.७]—स्तुतस्य स्तुतम्....शस्त्रस्य शस्त्रम्....इत्याह। एष वै स्तुतशस्त्रयोर्दोहः०॥

[ ३.२.९ ]—**उक्थशाः** इत्याह प्रातःसवनं प्रतिगीर्य० यद्वै होताध्वर्युमभ्याह्वयते० **शोꣳसा मोद इव** इति प्रत्याह्वयते[3]० यथा वा आयतां प्रतीक्षत एवमध्वर्युः प्रतिगरं प्रतीक्षते। यदभिप्रतिगृणीयात् यथायतया समृच्छते तादृगेव तत् । यदर्धर्चाल्लुप्येत यथा धावद्भ्यो हीयते तादृगेव तत्० यदासीनः शꣳसति० यत्तिष्ठन् प्रतिगृणाति० यत् प्राङासीनः शꣳसति प्रत्यङ् तिष्ठन् प्रतिगृणाति० पराङा वर्तते० ॥

मैसं [ ४.८.८ ]—ऊर्ध्वस्तिष्ठन् प्रतिगृणाति० ॥

माशब्रा [ ४.३.२ ]—गृणाति ह वा एतद्धोता यच्छꣳसति। तस्मा एतद् गृणते प्रत्येवाध्वर्युरागृणाति । तस्मात् प्रतिगरो नाम । तं वै प्राञ्चमासीनमाह्वयते । सर्वे वा अन्य उद्गातुः प्राञ्च आर्त्विज्यं कुर्वन्ति० तदुपपल्यय्य प्रतिगृणाति० तस्मादर्धर्चश: शꣳसेदर्धर्चेऽर्धर्चे प्रतिगृणीयात्। यदि पच्छः शꣳसेत् पदे पदे प्रतिगृणीयात्० तस्मात् सꣳसिद्धं प्रातःसवने प्रतिगृणीयात्० स वै **ओ३म्** इत्येव प्रतिगृणीयात्० तद्धैके **ओथामो दैव वाक्** इति प्रतिगृणन्ति० तदु तथा न कुर्यात्० **ओ३म्** इत्येव प्रतिगृणीयात्०॥

काशब्रा [ ५.३.३ ] ≡ माशब्रा

गोब्रा [ २.३.१०-११ ]— **शंसावो३म्** इत्याह्वयते प्रातःसवने त्र्यक्षरेण। **शंसावो दैव** इत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण० **उक्थं वाचि** इत्याह शस्त्वा चतुरक्षरम्। **ओमुक्थशाः** इत्यध्वर्युः प्रतिगृणाति चतुरक्षरम्० शुद्धः प्रणवः स्यात् प्रजाकामानाम्। मकारान्तः प्रतिष्ठाकामानाम्। मकारान्तः प्रणवः स्यादिति हैक आहुः। शुद्ध इति त्वेव स्थितः। मीमांसितः प्रणवोऽथात इह शुद्ध इह पूर्ण इति । शुद्धः प्रणवः स्याच्छस्त्रानुवचनयोर्मध्य इति ह स्माह कौषीतकिः० त्रिः प्रथमां त्रिरुत्तमामन्वाह० यद्यपि छन्दः प्रातःसवने युज्येतार्धर्चश एव तस्य

१. अध्वर्योर्जपः। २. ब्रह्मा यजमानं शस्त्रस्य दोहं वाचयति। ३. अध्वर्युः।

शंस्यं गायत्र्या रूपेण० न त्रिष्टुब्जगत्यावेतस्मिन् स्थानेऽर्धर्चशस्ये। यत्किंचिच्छन्दः प्रातःसवने युज्येतां पच्छ एवैनयोः शस्यमिति सा स्थितिः॥

[२.४.१०]——असंत्वरमाणाश्चरेयुः० मन्द्रतमया वाचा प्रातःसवने शंसेत्[1]० यया तु वाचोत्तरिण्योत्तरिण्योत्सहेत समापनाय तया प्रतिपद्येत०॥

## ८६. ऐन्द्राग्नग्रहप्रचारः वैश्वदेवग्रहग्रहणं च

**तैसं [३.२.५]—**

**नराशꣳसपीतस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रछन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि॥**

**[१.४.१६]—**

**ओमासश्चर्षणीधृतो विश्वे देवास आ गत। दाश्वाꣳसो दाशुषः सुतम्।**
**उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः॥एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः॥**

[६.५.४]——वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति०॥

[३.३.७]——एतद्वै छन्दसां वीर्यम् **आ श्रावयास्तु श्रौषड् यज ये यजामहे वषट्कारः** ०॥

[३.१.२]——यतो मन्येतानभिक्रम्य होष्यामीति तत् तिष्ठन्ना श्रावयेत्० समानत्र तिष्ठता होतव्यम्० स्रुग्वा अस्य स्वं वायव्यमस्य स्वं चमसोऽस्य स्वम्। यद्वायव्यं वा चमसं वानन्वारभ्याश्रावयेत् स्वादियात् तस्मादन्वारभ्याश्राव्यम्० ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्०।

मैसं [३.१०.५]—द्विनाराशꣳसाः प्रातःसवने॥

**[१.३.१८]—**

**ओमासश्चर्षणीधृतो विश्वे देवासा....। उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः॥**
**एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः॥**

[४.६.८]——यच्छुक्रपात्रेण वैश्वदेवं गृह्णाति० यद्वैश्वदेवः प्रातःसवने गृह्यते०॥

कासं [२९.१]——द्विनाराशीसा प्रातस्सवने॥

**[४.७]—**

**ओमासश्चर्षणीधृतो .... उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः॥**

[२८.२]—यद्वैश्वदेवः प्रातस्सवने गृह्यते० शुक्रपात्रेण वैश्वदेवं गृह्णाति०॥

**कपिसं [३.५] ≡ कासं**

[४५.२; ४४.२] ≡ कासं

1. होता।

**वामासं—**

**ओमासश्चर्षणीधृतो ... उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यः ॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः॥ ७.३३**

माशब्रा [ ४.३.१.२५-२७ ]—अथ वैश्वदेवं ग्रहं गृह्णाति० शुक्रपात्रेण गृह्णाति० अथातो गृह्णात्येव ओमासश्चर्षणीधृतो.... देवेभ्यः ॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति० ॥

**वाकासं [ ७.१५ ] ≡ वामासं**

काशब्रा [ ५.३.२.२२–२४ ] ≡ माशब्रा

ऐब्रा [ २.२४ ]—द्विनाराशंसं प्रातःसवनम् ॥

**तांब्रा [ १.५.९ ]—**

**अवमैस्ते पितृभिर्भक्षितस्य मधुमतो नाराशꣳसस्य सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥**

**अपैसं—**

**मनो न्वा हुवामहे नाराशंसेन स्तोमेन । पितॄणां च मन्मभिः ॥**
**आ न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे ॥**
**पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातं सचेमहि ॥**
**वयं सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि॥१९.२४.१०-१३**

## ८७. प्रथमाज्यस्तोत्रम्[1]

### [ रथन्तरपृष्ठे ]

### गायत्रम्

साकौसं [ २.१.१.४ ]—

अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥
तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥
स नः पृथु श्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यम् ॥

१ १ २ २ २ १ २ २ २ - १२२
**हुम् । *अग्नआयाहिवीतयोम् ॥ ओमो ओओओओओओ २ ओओओओ**

1. पञ्चदशस्तोमम् । २७८ पृष्ठे टिप्पणी द्रष्टव्या ।

* प्रथमपर्याये प्रथमावृत्तौ इदं गानमन्यथा गेयम् । तदित्थम्— १ २ २ २ अग्नआयाहिवीतयोम् ॥ १ २२ - १२ - १ २ २ - १ २ १ - १ २^ १११ ओमोओओओ२ ओओओओ २ नाद्दहोतासा २ दोओ १२१२ ॥ हुम् आ २ ॥ ओओ ॥ आ ३४५ ॥

१ १ - १ १^ १११ १ र
ओ १२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [१] तन्त्वासमिद्भिरङ्गिरोम् ॥
१ र र - १ र र २ १ - १
ओमोओओओओओओ २ ओओओओओओ १२१२ ॥ हुम् आ२ ॥ ओओ ॥
२^ १११ १ र १ र र र - १
आ ३४५ ॥ [ २ ] सनःपृथुश्रवाय्ययोम् ॥ ओमोओओओओओओ२ओओओ
र २ १ - १ २^ १११
ओओओ १२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [ ३ ]

[ बृहत्पृष्ठे ]

गायत्रम्

साकौसं [ २.२.१.६ ] —

अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम् ॥
अग्निमग्निꣳ हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम् ॥
अग्ने देवाꣳ इहा वह जज्ञानो वृक्तबर्हिषे । असि होता न ईड्यः ॥

१ १ र र १ र र - १
हुम् । *अग्निन्दूतंवृणीमहोम् ॥ ओमोओओओओओओ २ ओओओओओ
१ १ - १ २^ १११ १ र
ओ१२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [१] अग्निमग्निꣳहवीमभोम् ॥
१ र - १ र २ १ - १
ओमोओओओओओओ२ ओओओओओओ १२१२ ॥ हुम् आ२ ॥ ओओ ॥
२^१११ १ र र र र १ र र - १ र
आ३४५ ॥ [ २ ] अग्नेदेवाꣳइहावहोम् ॥ ओमोओओओओओओ २ ओओओ
र २ १ - १ २^ १११
ओओओ १२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [३]

तांत्रा [ १.५.१० ]—

दीक्षायै वर्णेन [ प्रजापतिस्त्वा युनक्तु प्रजाभ्योऽपानाय ॥ ] तपसो रूपेण [प्रजापतिस्त्वा युनक्तु प्रजाभ्योऽपानाय ॥] मनसो महिम्ना [ प्रजापतिस्त्वा युनक्तु प्रजाभ्योऽपानाय ॥] वाचो विभूत्या प्रजापतिस्त्वा युनक्तु प्रजाभ्योऽपानाय ॥

र र
* प्रथमपर्याये प्रथमावृत्तौ इदं गानमन्यथा गेयम् । तदित्थम् — अग्निन्दूतंवृणीमहोम् ॥
१ र र - १ र - १ - १ २ १ - १ २^ १११
ओमोओओओ २ ओओओओ २ मास्ययज्ञा २ ओओ १२१२ ॥ हुम्आ २ ॥ ओओ ॥ आ ३४५ ॥

[ १.९.२ ]—

[1]प्रेतिरसि धर्मणे त्वा धर्मं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥

[ ६.४.१४ ]—उदङ्ङासीन उद्गायति० प्रत्यङ्ङासीनः प्रस्तौति० दक्षिणासीनः प्रतिहरति० प्राञ्चोऽन्य ऋत्विज आर्त्विज्यं कुर्वन्ति० ॥

[७.२]—प्रजापतिर्देवेभ्य आत्मानं यज्ञं कृत्वा प्रायच्छत् । तेऽन्योन्यस्मा अग्राय नातिष्ठन्त । तानब्रवीदाजिमस्मिन्नितेति । त आजिमायन् । यदाजिमायँस्तदाज्यानामाज्यत्वम् । स इन्द्रोऽवेद्ग्निर्वा इदमग्र उज्जेष्यतीति । सोऽब्रवीद्यतरो नाविदमग्र उज्जयत् तन्नौ सहेति । सोऽग्निरग्र उदजयदथ मित्रावरुणावथेन्द्रः । अथैषैका होत्रानुज्जितासीत् । स इन्द्रोऽग्निमब्रवीद्यत् सहावोचावहि यन्नौ तदिति । सैषैन्द्राग्नी अध्यर्धमग्नेः स्तोत्रमध्यर्धमिन्द्रस्य । चत्वारि सन्ति षड्देवत्यानि० ।

[६.८.१२–१४ ]—यदाज्यैर्नानारूपैः स्तुवन्ति० पुनरभ्यावर्तँ स्तुवन्ति० परिश्रिते स्तुवन्ति० ॥

षब्रा [ २.३ ]—यस्य वै धुरो विगीतास्तस्य संगीताः यस्य वा एता बहिष्पवमाने विगीयान्तराज्येषु संगायन्ति तस्य वै धुरो विगीतास्तस्य संगीताः । यः कामयेतैकधा यजमानं यश ऋच्छेद्यथादिष्टं प्रजाः स्युरिति होतुराज्ये गायेत्० यः कामयेत कल्पेरन् प्रजा यथादिष्टं यजमानः स्यादिति यथाज्यं गायेत्० ॥

## [ रथन्तरपृष्ठे ]

### गायत्रम्

साजैसं [ ३.२.१–३ ]—

अग्न आ याहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि ॥
तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि । बृहच्छोचा यविष्ठ्य ॥
स नः पृथु श्रवाय्यमच्छा देव विवाससि । बृहदग्ने सुवीर्यम् ॥

हम् । *अग्नआयाहिवीतयोम् ॥ ओ॑वा ओ॑वा ओ॑वा हम्भा ॥ ओवा ॥
श सट टच सट टच सट टच ट क च

[ १ ] तन्त्वासमिद्भिरङ्गिरो॑म् ॥ ओ॑वा ओ॑वा ओ॑वा हम्भा ॥ ओवा ॥ [ २ ]
च शच सट टच सट टच सट टच ट क च

सनः पृथुश्रवाय्योम् ॥ ओ॑वा ओ॑वा ओ॑वा हम्भा ॥ ओवा ॥ [ ३ ]
च शच सट टच सट टच सट टच ट क च

[1] ब्रह्मा अनेन स्तोत्रा मनुमन्त्रयते । * प्रथमपर्याये प्रथमावृत्तौ इदं गानमन्यथा गेयम् । तदित्थम्ः—

अग्नआयाहिवीतयोम् । दा दा ता था ह न्त हम्भा ॥ ओवा ॥
च श सट टच सट टच सट टच ट क च

जैब्रा [ १.७१–७२ ]—उपस्पृश्यां३ नोपस्पृश्या३ मिति मीमांसन्ते० उपस्पृश्य न स्वास्पृष्टेनैवोद्गेयम्० उदङ्ङासीन उद्गायति० प्रत्यङ्ङासीनः प्रस्तौति० दक्षिणासीनः प्रतिहरति० प्राञ्चोऽन्ये ऋत्विज आर्त्विज्यं कुर्वन्ति०॥

[ १.१०५–११५ ]—देवासुरा वा एषु लोकेष्वस्पर्धन्तास्मिन् भुवने । ते देवा अकामयन्तेमान् लोकान् जयेमासुरान् स्पर्धां भ्रातृव्यानिति। त एतान्याज्यानि स्तोत्राण्यपश्यन्। तैरस्तुवत। तैरिमान् लोकानाजयन्। इममेव लोकमाग्नेयेनाजयन्नन्तरिक्षं मैत्रावरुणेनामुमैन्द्रेण दिश एवैन्द्राग्नेन। तद् यदिमान् लोकानाजयꣳस्तदाज्यानामाज्यत्वम्० तदाहुः यदाज्यानि सर्वाणि समाननिधनानि केनाजामि क्रियन्त इति । नानादेवत्यानीति ब्रूयात् तेनाजामीति० यदाज्यान्यन्तःसदसꣳ स्तुवन्ति० पराचीषु पुनरभ्यावर्तम्० नानारूपासु स्तुवन्ति० नानादेवत्यासु स्तुवन्ति० तदूर्ध्वमिव गेयम्० त्र्यावृद् गेयम्० त्र्युदासं गेयम्० स्वरेण संपाद्योद्गायेत्० प्रस्तूयमानं मनसा प्रतिहिंकुर्यात। अपान्य वाक् इति ब्रूयात्॥

[ १.२५१ ]—पञ्चदशान्याज्यानि भवन्ति० ॥

[ १.२५३ ]—अथाग्नेयमाज्यमेकदेवत्यम्० ॥

[ १.३१२ ]—अथाग्नेयमाज्यम् ॥

[ १.३१८–३२० ]—तद्धैक आहुर्बहिष्पवमानं वाव वयं विगायन्तः संगायामः यद् ओ ओवा इति वाङ्निधनाः कुर्मस्तेनैव नः संगीता भवन्तीति। तेनाज्येष्वाद्रियन्ते न पवमानयोः। अथ हैक आहुराज्येष्वेव वयं विगायन्तः संगायाम इति। जगतीꣳ होतुराज्ये० सैषा भवति अग्न आ याहि वीतय इति०यद्यप्याग्नेयमेवाज्यम्०तस्मात् ओवा ओवा इत्येव गायेत्॥

जैउब्रा [ २.८ ]—तस्मादुद्गाता वृत उत्तरतो निवेशनं लिप्सेत० ।

[ ३.६ ]—ताꣳ हैताꣳ होतुर्वाज्ये गायेन्मैत्रावरुणस्य वा। तां **ददा३ तथा३ हन्ता३ हिं भा ओवा** इति०॥

[३.१६]—(तस्माद् ब्रह्मा वाचंयम आसीत) आ वषट्कारादितरेषाꣳ स्तुतशस्त्राणामेव॥

**तैसं [ ४.४.१ ]—**

**[1]प्रेतिरसि धर्माय त्वा धर्मं जिन्व ॥**

[ ३.५.२ ]—प्रेतिरसि धर्माय त्वा धर्मं जिन्वेति० ।

मैसं [ १.९.५ ]—[2]चतुर्होतारꣳ वदेत् पुरस्तादाज्यानाम् ।

[ ४.२.४ ]—इडायै हिंकुरु तस्यै प्रस्तुहि तस्यै मेऽवरुद्ध्यै इति पुरस्तादाज्यानाꣳ वदेत्।

[ २.८.८ ]—**प्रेत्या धर्मेण धर्मं जिन्व ।**

१. स्तोत्रस्य प्रसवात् पूर्वं ब्रह्मा 'देव सवितरेतत्ते...' (पृ. १८९) इति जपित्वा इमं स्तोमभागं जपति ।
२. द्रष्टव्यं श्रौ. १ पृ. १२८

कासं [ १७.७ ]—

प्रेतिरसि धर्मणे त्वा धर्मं जिन्व।

[ ३७.१७ ]—प्रेतिरसि धर्मणे त्वा धर्मं जिन्वेति ।

[ ९.१४ ]—[1]चतुर्होतारं व्याख्यायाज्यैरुद्गायेत् ॥

कपिसं [ २६.६ ] ≡ कासं १७.७

ऐब्रा [ ५.३३ ]—अथ यानि स्तोत्राणि सशस्त्राण्या तेषां वषट्काराद् वाचंयम[2] एव स्यात्० ।

गोब्रा [ १.३.३ ] अथ यानि स्तोत्राणि सशस्त्राण्या वषट्कारात्तेषु ।

[ २.२.१३–१४ ]—प्रेतिरसि धर्मणे त्वा इति० बृहस्पतये स्तुत इति० ॐ भूर्जनत् इति प्रातःसवने० ॥

## ८८. प्रउगशस्त्रम्[3]

ऋसं—

शोंसावो३म् [4]वायुरग्रेगा यज्ञप्रीः साकं गन् मनसा यज्ञम् । शिवो नियुद्भिः शिवाभो३म् ( खिलम् ५.६.१ ) वायवा याहि दर्शतेमे सोमा अरंकृताः । तेषां पाहि श्रुधी हवो३म् वाय उक्थेभिर्जरन्ते त्वामच्छा जरितारः । सुतसोमा अहर्विदो३म् वायो तव प्रपृञ्चती धेना जिगाति दाशुषे । उरूची सोमपीतयो३म् ( १.२.१-३ ) शोंसावो३म् हिरण्यवर्तनी नरा देवा पती अभिष्टये । वायुश्चेन्द्रश्च सुमखो३म् ( खिलम् ५.६.२ ) इन्द्रवायू इमे सुता उप प्रयोभिरा गतम् । इन्दवो वामुशन्ति हो३म् वायविन्द्रश्च चेतथः सुतानां वाजिनीवसू । तावा यातमुप द्रवो३म् वायविन्द्रश्च सुन्वत आ यातमुप निष्कृतम् । मक्ष्वित्था धिया नरो३म् (१.२.४–६) शोंसावो३म् काव्या राजाना क्रत्वा दक्षस्य दुरोणे । रिशादसा सधस्थ ओ३म् ( खिलम् ५.६.३ ) मित्रं हुवे पूतदक्षं वरुणं च रिशादसम् । धियं घृताचीं साधन्तो३म् ऋतेन मित्रावरुणावृतावृधावृतस्पृशा । क्रतुं बृहन्तमाशाथो३म् कवी नो मित्रावरुणा तुविजाता उरुक्षया । दक्षं दधाते अपसो३म् ( १.२.७-९ ) शोंसावो३म् दैव्या अध्वर्यू आ गतं रथेन सूर्यत्वचा । मध्वा यज्ञं समञ्जाथो३म् ( खिलम् ५.६.४ ) अश्विना यज्वरीरिषो द्रवत्पाणी शुभस्पती । पुरुभुजा चनस्यतो३म् अश्विना पुरुदंससा नरा शवीरया धिया । धिष्ण्या वनतं गिरो३म् दस्रा युवाकवः

१. द्रष्टव्यं श्रौ. १ पृ. १२१ । २. ब्रह्मा । ३. होत्रा शंसनीयम् । ४. आद्यां त्रिः शंसेत् ।

सुता नासत्या वृक्तबर्हिषः । आ यातं रुद्रवर्तनो३म् ( १.३.१-३ ) शोंसावो३म् इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः। हरिवान् सुतानां सखो३म् ( खिलम् ५.६.५) इन्द्रा याहि चित्रभानो सुता इमे त्वायवः । अण्वीभिस्तना पूतासो३म् इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः । उप ब्रह्माणि वाघतो३म् इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनो३म् ( १.३.४-६ ) शोंसावो३म् विश्वान् देवान् हवामहेऽस्मिन् यज्ञे सुपेशसः । त इमं यज्ञमा गमन् देवासो देव्या धिया । जुषाणा अध्वरे सदो ये यज्ञस्य तनूकृतः । विश्व आ सोमपीतयो३म् ( खिलम् ५.६.६ ) ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वांसो दाशुषः सुतो३म् विश्वे देवासो अप्तुरः सुतमा गन्त तूर्णयः । उस्रा इव स्वसराणो३म् विश्वे देवासो अस्रिध एहिमायासो अद्रुहः । मेधं जुषन्त वह्नयो३म् ( १.३.७-९ ) शोंसावो३म् वाचा महीं देवीं वाचमस्मिन् यज्ञे सुपेशसम् । सरस्वतीं हवामहो३म् ( खिलम् ५.६.७ ) पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसो३म् चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वतो३म् ( १.३.१०-११ ) शोंसावो३म् [1]महो अर्णः सरस्वती प्र चेतयति केतुना । धियो विश्वा वि राजतोम् ( १.३.१२ )॥

[2]विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना । पिबा मित्रस्य धामभिः॥ १.१४.१०

ऐब्रा [ २.३७ ]—तद्यदाज्येन पवमानमनुशंसति प्रउगेणाज्यम्०॥

[३.९]—तं पुरोरुग्भिः प्रारोचयन् । यत्पुरोरुग्भिः प्रारोचयंस्तत्पुरोरुचां पुरोरुक्त्वम्०।

[ ३.१–८ ]—ग्रहोक्थं वा एतद्यत् प्रउगम्० वायव्यं शंसति० ऐन्द्रवायवं शंसति० मैत्रावरुणं शंसति० आश्विनं शंसति० ऐन्द्रं शंसति० वैश्वदेवं शंसति० सारस्वतं शंसति० यं कामयेत प्राणेनैनं व्यर्धयानिति वायव्यमस्य लुब्धं शंसेत्० यं कामयेत प्राणापानाभ्यामेनं व्यर्धयानीत्यैन्द्रवायवमस्य लुब्धं शंसेत्० यं कामयेत चक्षुषैनं व्यर्धयानीति मैत्रावरुणमस्य लुब्धं शंसेत्० यं कामयेत श्रोत्रेणैनं व्यर्धयानीत्याश्विनमस्य लुब्धं शंसेत्० यं कामयेत वीर्येणैनं व्यर्धयानीत्यैन्द्रमस्य लुब्धं शंसेत्० यं कामयेताङ्गैरेनं व्यर्धयानीति वैश्वदेवमस्य लुब्धं शंसेत्० यं कामयेत वाचैनं व्यर्धयानीति सारस्वतमस्य लुब्धं शंसेत्० विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना । पिबा मित्रस्य धामभिरिति वैश्वदेवमुक्थं शस्त्वा वैश्वदेव्या यजति० वषट्करोति० अनुवषट्करोति० सोमस्याग्ने वीहि इत्यनुवषट्करोति० यं द्विष्यात्तं ध्यायेद्वषट्करिष्यन्० त्रयो वै वषट्कारा वज्रो धामच्छद्रिक्तः । स यमेवोच्चैर्बलि वषट्करोति स वज्रः० स भ्रातृव्यवता वषट्कृत्यः । अथ यः समः संततोऽनिर्हाणर्चः स धामच्छत्० स प्रजाकामेन पशुकामेन वषट्कृत्यः । अथ येनैव षळवराध्नोति स

१. परिधानीया। २. याज्या ।

रिक्तः० तस्याशां नेयात्० यं कामयेत पापीयान्स्यादित्युच्चैस्तरामस्य ऋचमुक्त्वा शनैस्तरां वषट्कुर्यात्० यं कामयेत श्रेयान्स्यादिति शनैस्तरामस्य ऋचमुक्त्वोच्चैस्तरां वषट्कुर्यात्० संततमृचा वषट्कृत्यम्० यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद्वषट्करिष्यन्० वषट्कृत्य वषट्कृत्य वाक् इत्यनुमन्त्रयेत० **वषट्कार मा मां प्रमृक्षो माहं त्वां प्रमृक्षं बृहता मन उपह्वये व्यानेन शरीरं प्रतिष्ठासि प्रतिष्ठां गच्छ प्रतिष्ठां मा गमय** इति वषट्कारमनुमन्त्रयेत० **ओजः सह ओजः** इत्येव वषट्कारमनुमन्त्रयेत० ॥

**ऋसं—**

शोंसावो३म् **वायुरग्रेगा .... शिवाभो३म्** ( शांश्रौ ७.१०.९ ) **वायवा याहि.... सोमपीतयो३म्** ( १.२.१-३ ) शोंसावो३म् **हिरण्यवर्तनी .... सुमखो३म्** ( शांश्रौ ७.१०.१० ) **इन्द्रवायू इमे सुता .... धिया नरो३म्** ( १.२.४-६ ) शोंसावो३म् **काव्ययोराजानेषु क्रत्वा....सधस्थ ओ३म्** ( शांश्रौ ७.१०.११) **मित्रं हुवे पूतदक्षं.... दधाते अपसो३म्** ( १.२.७-९ ) शोंसावो३म् **दैव्यावध्वर्यू आ ....यज्ञं समञ्जाथो३म्** ( शांश्रौ ७.१०.१२ ) **अश्विना यज्वरीरिषो .... रुद्रवर्तनो३म्** ( १.३.१-३ ) शोंसावो३म **इन्द्र उक्थेभि .... सुतानां सखो३म्** ( शांश्रौ ७.१०.१३ ) **इन्द्रा याहि .... दधिष्व नश्चनो३म्** ( १.३.४-६ ) शोंसावो३म् **विश्वान् देवान् हवामहेऽस्मिन् यज्ञे सजोषसः । त इमं .... देव्या धिया । ये यज्ञस्य तनूकृतो विश्व आ सोमपीतयो३म्** ( शांश्रौ ७ १०.१४ ) **ओमासश्चर्षणीधृतो ... जुषन्त वह्नयो३म्** ( १.३.७-९ ) शोंसावो३म **वाचामहं देवीं ....हवामहो३म्** ( शांश्रौ ७.१०.१५ ) **पावका नः ....दधे सरस्वतो३म्** (१.३.१०-११) शोंसावो३म **महो अर्णः....वि राजतो३म्** (१.३.१२)॥

**विश्वेभिः सोम्यं मधु .... ॥** १.१४.१०

शांब्रा [ १४.४-५ ]—आज्यं शस्त्वा प्रउगं शंसति० ग्रहाननुशंसतीति ह स्माह कौषीतकिः। योऽसौ वायोरिन्द्रवाय्वोर्ग्रहस्तं वायव्येन चैन्द्रवायवेन च। मैत्रावरुणं मैत्रावरुणेन। आश्विनमाश्विनेन । यत्प्रस्थितानां यजति तदैन्द्रेण । यद्धोत्राः संयजन्ति तद्वैश्वदेवेन । वागेव सर्वेषु सवनेषु० न पुरोरुचं च सूक्तं चान्तरेण व्याहृयेत० गायत्रं प्रउगं शंसति० ऐन्द्रं शंसति० वैश्वदेवं शंसति० अथ वैश्वदेवीं पुरोरुचं शंसति० सा षट्पदा भवति० द्वे द्वे पदे अवग्राहं शंसति० अत्र हैके सारस्वतीं पुरोरुचं शंसन्ति । न तथा कुर्यात्० वायवा याहि दर्शत, अश्विना यज्वरीरिष इत्येते उभे तत्प्रउगम्। नवर्चं च द्वादशर्चं च तदेकविंशतिः० बह्वयो देवताः प्रउगे शस्यन्ते० विश्वेभिः सोम्यं मध्वित्युक्थं शस्त्वा यजति वैश्वदेव्या० गायत्र्या० ॥

[ २८.९ ]—बह्वयो देवताः प्रउगे शस्यन्ते० ॥

## ८९. वैश्वदेवग्रहप्रचारः मैत्रावरुणग्रहग्रहणं च

तैसं [ ६.५.१ ]—त्रिर्निगृह्णाति० **पुनर्हविरसि** इत्याह० ॥

**मैसं [ १.३.१४ ]—**

**उपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवं गृह्णामि पुनर्हविरसि ॥**

[ ४.६.८ ]—यद्वैश्वदेवः प्रातःसवने हूयते० ॥

[ ४.६.५ ]—**उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा** इति गृह्णाति प्रातःसवने मैत्रावरुणाय० ॥

**कासं [ ४.६ ]—**

**उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वोक्थेभ्यस्त्वोक्थाव्यं गृह्णामि ॥ एष ते योनिर्मित्रावरुणाभ्यां त्वा ॥ पुनर्हविरसि ॥**

[ २७.१० ]—यावानुक्थ्यः० एतं त्रिर्विगृह्णन्ति० यदुक्थ्यपात्रं भूयिष्ठास्सोमा अन्वायन्ति० यदुक्थ्यं सवने सवने विगृह्णाति० ॥

**कपिसं [ ३.४ ] ≡ कासं**

**वामासं —**

**देवेभ्यस्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि ॥ मित्रावरुणाभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि ॥ ७.२२-२३**

माशब्रा [ ४.-.३.११-१२; १५; १८ ]—तं विगृह्णाति देवेभ्यस्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामीति० मित्रावरुणाभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामीत्येव मैत्रावरुणाय० तदु ह चरकाध्वर्यवो विगृह्णन्ति **उपयामगृहीतोऽसि देवेभ्यस्त्वा देवाव्यमुक्थेभ्य उक्थाव्यं मित्रावरुणाभ्यां जुष्टं गृह्णामि ॥ एष त योनिर्मित्रावरुणाभ्यां त्वा** इति सादयति । **पुनर्हविरसि** इति स्थालीमभिमृशति० तं वै नोपयामेन गृह्णीयात् । न योनौ सादयेत्० अथ यत्पुनर्हविरसीति स्थालीमभिमृशति पुनर्ह्यस्यै ग्रहं ग्रहीष्यन् भवति । न तदाद्रियेत तूष्णीमेव निदध्यात् ॥

**वाकासं—**

**देवेभ्यस्त्वा देवायुवं गृह्णामि यज्ञस्यायुषे मित्रावरुणाभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुषे ॥ ७.९.२**

काशब्रा [ ५.२.३.७-८, ११-१२ ] ≡ माशब्रा

## १०. द्वितीयाज्यस्तोत्रम्[1]

### [ रथन्तरपृष्ठे ]

### गायत्रम्

साकौसं [ २.१.१.५ ]—

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजाᳬसि सुक्रतू ॥
उरुशᳬसा नमोवृधा मह्ना दक्षस्य राजथः । द्राघिष्ठाभिः शुचिव्रता ॥
गृणाना जमदग्निना योनावृतस्य सीदतम् । पातᳬ सोममृतावृधा ॥

१ १र र र १ र — १र र
हुम् । आनोमित्रावरुणोम् ॥ ओमोओओओओओओ २ ओओओओओ
२ १ — १ २^ १११ १ र र
ओ १२१२ ॥ हुम्आ२ ॥ ओओ ॥ आ ३४५ ॥ [१] उरुशᳬसानमोवृधोम् ॥
१ र र — १ र २ १ — १
ओमोओओओओओओ२ ओओओओओ १२१२ ॥ हुम् आ२ ॥ ओओ ॥
२^ १११ १ र र १ र र र — र १ र
आ ३४५ ॥ [२] गृणानाजमदग्निनोम् ॥ ओमोओओओओओ २ ओओओ-
२ १ — १ २^ १११
ओओओ १२१२ ॥ हुम् आ २ ॥ ओओ ॥ आ ३४५ ॥ [३]

### [ बृहत्पृष्ठे ]

### गायत्रम्

साकौसं [ २.२.१.७ ]—

मित्रं वयᳬ हवामहे वरुणᳬ सोमपीतये । या जाता पूतदक्षसा ॥
ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती । ता मित्रावरुणा हुवे ॥
वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः । करतां नः सुराधसः ॥

१ र १ र र — र १र र र २
हुम् । मित्रंवयᳬ हवामहोम् ॥ ओमोओओओओओओ२ ओओओओओ
१ — १ २^ १११ १ र र र
१२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [ १ ] ऋतेनयावृतावृधोम् ॥
१ र — र १ र २ १ — १
ओमोओओओओओओ२ ओओओओओ १२१२ ॥ हुम् आ २ ॥ ओओ॥

---

१. पञ्चदशस्तोमम् ।

१^ १ १ १   १ २ २   १ २ २ २ – १
आ ३४५ ॥ [२] वरुणःप्राविताभुवोम् ॥ ओमोओओओओओओओ२ ओओ·
२   २   १ – १   २^ १ १ १
ओओओओ १२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [३]

तांब्रा [ १.९.३ ]—

[१]अन्वितिरसि दिवे त्वा दिवं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥

साजैसं [ ३.२.४-६ ]—

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजाꣳसि सुक्रतू ॥
उरुशꣳसा नमोवृधा मह्ना दक्षस्य राजथः । द्राघिष्ठाभिः शुचिव्रता ॥
गृणाना जमदग्निना योनावृतस्य सीदतम् । पातं सोममृतावृधा ॥

हुम् । आनोमित्रावरुणोम् ॥ ओ॑वा ओ॑वा ओ॑वा हुम्भा ॥ ओवा ॥ [१]
च   श्च   सट टच सट टच सट टच   ट   क च

उरुशꣳसानमोवृधोम् ॥ ओ॑वा ओ॑वा ओ॑वा हुम्भा ॥ ओवा ॥ [ २ ] गृणा-
च   श्र   सट टच सट टच सट टच   ट   क च   च

नाजमदग्निनोम् ॥ ओ॑वा ओ॑वा ओ॑वा हुम्भा ॥ ओवा ॥ [ ३ ]
शच   सट टच सट टच सट टच   ट   क च

जैब्रा [ १.३१२ ]—अथ मैत्रावरुणमाज्यम् ०॥
[ १.३१९ ]—गायत्रीं मैत्रावरुणस्य० सैषा भवति आ नो मित्रावरुणेति ॥

तैसं [ ४.४.१ ]—

[२]अन्वितिरसि दिवे त्वा दिवं जिन्व ॥
[ ३.५.२ ]—अन्वितिरसि दिवे त्वा दिवं जिन्वेत्याह ॥

मैसं [ २.८.८ ]—

अन्वित्या दिवे दिवं जिन्व ॥

कासं [ १७.७ ]—

अन्वितिरसि दिवे त्वा दिवं जिन्व ॥
[ ३७.१७ ]—अन्वितिरसि दिवे त्वा दिवं जिन्व इति ॥

कपिसं [ २६.६ ] ≡ कासं १७.७

गोब्रा [२.२.१३-१४]— अनितिरसि० बृहस्पतये स्तुत इति० ॐ भूर्जनत् इति प्रातःसवने० ॥

१. ब्रह्मा अनेन स्तोत्रमनुमन्त्रयते । २. स्तोत्रस्य प्रसवात् पूर्वं ब्रह्मा इमं स्तोमभागं जपति ।

## ९१. मैत्रावरुणशस्त्रम्

[ रथन्तरपृष्ठे ]

ऋसं--

शोंसावो३म् [1]आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांसि सुक्रतो३म् उरुशंसा नमोवृधा मह्ना दक्षस्य राजथः। द्राघिष्ठाभिः शुचिव्रतो३म् गृणाना जमदग्निना योनावृतस्य सीदतम् । पातं सोममृतावृधो३म् ( ३.६२.१६–१८ )[2] शोंसावो३म् आ नो गन्तं रिशादसा वरुण मित्र बर्हणा। उपेमं चारुमध्वरो३म् विश्वस्य हि प्रचेतसा वरुण मित्र राजथः। ईशाना पिप्यतं धियो३म् उप नः सुतमा गतं वरुण मित्र दाशुषः। अस्य सोमस्य पीतयो३म् ( ५.७१ )[3] शोंसावो३म् प्र वो मित्राय गायत वरुणाय विपा गिरा। महिक्षत्रावृतं बृहो३म् सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च। देवा देवेषु प्रशस्तो३म् ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य। महि वां क्षत्रं देवेषो३म् ऋतमृतेन सपन्तेषिरं दक्षमाशाते। अद्रुहा देवौ वर्धेतो३म् वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः । बृहन्तं गर्तमाशातो३म् ( ५.६८ ) प्र मित्रयोर्वरुणयोः स्तोमो न एतु शूष्यः। नमस्वान् तुविजातयो३म् या धारयन्त देवाः सुदक्षा दक्षपितरा। असुर्याय प्रमहसो३म् ता नः स्तिपा तनूपा वरुण जरितणाम् । मित्र साधयतं धियो३म् यदद्य सूर उदितेऽनागा मित्रो अर्यमा। सुवाति सविता भगो३म् सुप्रावीरस्तु स क्षयः प्र नु यामन्त्सुदानवः। ये नो अंहोऽतिपिप्रतो३म् उत स्वराजो अदितिरदब्धस्य व्रतस्य ये। महो राजान ईशतो३म् प्रति वां सूर उदिते मित्रं गृणीषे वरुणम् । अर्यमणं रिशादसो३म् राया हिरण्यया मतिरियमवृकाय शवसे। इयं विप्रा मेधसातयो३म् ( ७.६६.१–८ ) शोंसावो३म् [4]ते स्याम देव वरुण ते मित्र सूरिभिः सह। इषं स्वश्च धीमहो३म् ॥( ७.६६.९ )

[5]आ यातं मित्रावरुणा जुषाणावाहुतिं नरा। पातं सोममृतावृधा ॥ ७.६६.१९

[ बृहत्पृष्ठे ]

ऋसं---

शोंसावो३म मित्रं वयं हवामहे वरुणं सोमपीतये। जज्ञाना पूतदक्षसो३म् ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती। ता मित्रावरुणा हुवो३म् वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः। करतां नः सुराधसो३म् ( १.२३.४–६ )[6]

१. आद्यां त्रिः शंसेत् । २. स्तोत्रियस्तृचः । ३. अनुरूपस्तृचः । ४. परिधानीया । ५. याज्या ।
६. स्तोत्रियस्तृचः । शिष्टं पूर्ववत् ।

ऐब्रा [ ६.४ ]—मैत्रावरुणं मैत्रावरुणः प्रातःसवने शंसति ० ॥

**ऋसं —**

**[1]उप नः सुतमा गतं वरुण मित्र दाशुषः । अस्य सोमस्य पीतये ॥ ५.७१.३**

शांब्रा [ २८.९ ]—[2]तौ प्रातःसवने द्विदेवत्याः शंसतः० ॥

**तैब्रा** [ २.४.६.४ ]—

**[3]या धारयन्त देवा सुदक्षा दक्षपितारा । असुर्याय प्रमहसा ॥**

गोब्रा [ २.३.१३ ]—मैत्रावरुणः प्रातःसवने मैत्रावरुणानि शंसति० **आ नो मित्रावरुणा, आ नो गन्तं रिशादसा** इति मैत्रावरुणस्य स्तोत्रियानुरूपौ । **प्र वो मित्राय गायत** इत्युक्थमुखम् । **प्र मित्रयोर्वरुणयोः** इति पर्यासः । **आ यातं मित्रावरुणा** इति यजति० वषट्कृत्यानुवषट्करोति । प्रत्येवाभिमृशन्ते । नाप्याययन्ति० ॥

[ २.३.१६ ]—अथ **शंसावो३म्** इति स्तोत्रियायानुरूपायोक्थमुखाय परिधानीयाया इति चतुश्चतुराह्वयन्ते० [4]सर्वे समवतीभिः परिदधति० सर्वे मद्वतीभिर्यजन्ति० सर्वेऽनुवषट्कुर्वन्ति० ॥

## ९२. मैत्रावरुणग्रहप्रचारः ऐन्द्रग्रहग्रहणं च

तैसं [ ६.५.१ ]—यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमित्यन्तराहवनीयं च हविर्धानं च तिष्ठन्नव नयेत्० यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमित्यन्तरा सदोहविर्धाने तिष्ठन्नव नयेत्० यदि कामयेत सदस्यान् यज्ञयशसेनार्पयेयमिति सद आलभ्यात्र नयेत्० ॥

**मैसं** [ १.३.१४ ]—

**देवेभ्यस्त्वा देवायुवं पृणच्मि यज्ञस्यायुषे ॥**

[ ४.६.५ ]—सद आलभ्यावनयति० यदि कामयेताध्वर्युं यश ऋच्छेदित्यन्तराहवनीयं च हविर्धानं चावनयेत्० यदि कामयेत यजमानं यश ऋच्छेदित्यन्तरा हविर्धानं च सदश्चावनयेत्० यदि कामयेत सदस्यान् यश ऋच्छेदित्यन्तः सदस्यावनयेत्० ( **उपयामगृहीतोऽसि** ) **इन्द्राय त्वा** इति ब्राह्मणाच्छंसिने[5] ॥

**कासं** [ ४.६ ]—

**देवेभ्यस्त्वा देवाव्यं पृणच्मि यज्ञस्यायुषे ॥ उपयामगृहीतोऽसीन्द्राय त्वोक्थेभ्यस्त्वोक्थाव्यं गृह्णामि ॥ एष ते योनिरिन्द्राय त्वा ॥ पुनर्हविरसि ॥**

---

१. शाङ्खा॰मते याज्या । शिष्टं पूर्ववत् । २. मैत्रावरुणोऽच्छावाकश्च । ३. अयं मन्त्रो मैत्रावरुणशस्त्रेऽन्तर्भावनीय इति सायणभाष्यम् । ४. मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकाः । ५. ग्रहं गृह्णाति ।

[ २७.१० ]—यदुक्थ्यमवनयति० यदि कामयेताध्वर्युरात्मानं यशसार्पयेयमित्यन्तरा-हवनीयं च हविर्धानं चावनयेत्० यदि कामयेत यजमानं यशसार्पयेयमित्यन्तरा सदोहविर्धाने अवनयेत्० यदि कामयेत सदस्यान् यशसार्पयेयमिति सद आलभ्यावनयेत्० ॥

**कपिसं [ ३.४ ] ≡ कासं**

**वामासं—**

**इन्द्राय त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि ॥ ७.२३**

माशब्रा [ ४.२.३.१३,१५,१६,१८ ]—इन्द्राय त्वा देवाव्यं यज्ञस्यायुषे गृह्णामीत्येव ब्राह्मणाच्छꣳसिने० तदु ह चरकाध्वर्यवो विगृह्णन्ति० **उपयामगृहीतोऽसि देवेभ्यस्त्वा देवाव्यमुक्थेभ्य उक्थाव्यमिन्द्राय जुष्टं गृह्णामि, एष ते योनिरिन्द्राय त्वा** इति साद-यति, **पुनर्हविरसि** इति स्थालीमभिमृशति० तं वै नोपयामेन गृह्णीयात् । न योनौ सादयेत्० अथ यत्पुनर्हविरसीति स्थालीमभिमृशति० न तदाद्रियेत । तूष्णीमेव निदध्यात् ॥

**वाकासं—**

**इन्द्राय त्वा देवायुवं गृह्णामि यज्ञस्यायुषे ॥ ७.९.२**

काशब्रा [ ५.२.३.९,१३ ] ≡ माशब्रा

## ९३. तृतीयाज्यस्तोत्रम्[1]

### [ रथन्तरपृष्ठे ]

### गायत्रम्

साकौसं [ २.१.१.६ ]—

आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो मम ॥

आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना । उप ब्रह्माणि नः शृणु ॥

ब्रह्माणस्त्वा युजा वयꣳ सोमपामिन्द्र सोमिनः । सुतावन्तो हवामहे ॥

१ १र र र १ र र - र १ २
**हुम् । *आयाहिसुषुमाहितोम् ॥ ओमोओओओओओओ२ ओओओओओ**

---

१. पञ्चदशस्तोमम् । * प्रथमपर्याये प्रथमावृत्तौ इदं गानमन्यथा गेयम् । तदित्थम्—

१र र र १ - - - र १ २ र १ २ - १ २
**आयाहिसुषुमाहितोम् ॥ ओमो २ ओ २ ओ २ ओ ओ ओ ओ ओ ओओओ १ ओ २ सादा**

१ - १ २र १११
**१२१२॥ हुम् आ २ ॥ ओओ ॥ आ ३४५॥**

१ – १ २र १११ १र र र
१२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [ १ ] आत्वाब्रह्मयुजाहरोम् ॥
१ र र – १ र २ १ – १
ओमोओओओओओओओ २ ओओओओओओ १२१२ ॥ हुम् आ२ ॥ ओओ ॥
२र १११ १र र र १ र र –
आ ३४५ ॥ [ २ ] ब्रह्माणस्त्वायुजावयोम् ॥ ओमोओओओओओओओ२
१र र २ १ – १ २र १११
ओओओओओओ १२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [३]

[ बृहत्पृष्ठे ]

## गायत्रम्

साकौसं [ २.२.१.८ ]—

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषत ॥
इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा। इन्द्रो वज्री हिरण्ययः ॥
इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च। उग्र उग्राभिरूतिभिः ॥
[1]इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि। वि गोभिरद्रिमैरयत् ॥

१ र र १ र – १ र र २
हुम्। *इन्द्रमिद्गाथिनोबृहोम् ॥ ओमोओओओओओओओ२ ओओओओओओ
१ – १ २^१११ १ र
१२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [ १ ] इन्द्रइद्धरियोःसचोम् ॥
१ र र – १र र २ १ – १
ओमोओओओओओओओ२ ओओओओओओ १२१२ ॥ हुम् आ२ ॥ ओओ ॥
२^१११ १ र र र १ र – १
आ ३४५ ॥ [ २ ] इन्द्रवाजेषुनोअवोम् ॥ ओमोओओओओओओओ२ ओओ-
र २ १ – १ २^ १११
ओओओओ १२१२ ॥ हुम् आ २ ॥ ओओ ॥ आ ३४५ ॥ [३]

१. गानं न विद्यते। * प्रथमपर्याये प्रथमावृत्तौ इदं गानमन्यथा गेयम्। तदित्थम्—

र र १ – – – र १२र १२ – १२
इन्द्रमिद्गाथिनोबृहोम् ॥ ओमो २ ओ २ ओ २ ओओओओओओओओ १ ओ २ वानू १२१२ ॥
१ – १ २^१११
हुम् आ २॥ ओओ ॥ आ ३४५ ॥

तांब्रा [ १.९.४ ]—

[१]संधिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥

[ रथन्तरपृष्ठे ]

गायत्रम्

साजैसं [ ३.२.७–९ ]—

आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो मम ॥
आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना । उप ब्रह्माणि नः शृणु ॥
ब्रह्माणस्त्वा युजा वयꣳ सोमपामिन्द्र सोमिनः । सुतावन्तो हवामहे ॥

आयाहिसुषुमाहितोम् ॥ ओ॑वा ओ॑वा ओ॑वा हुम्भा ॥ ओवा ॥ [ १ ]
च शच सट टच सट टच सट टच ट क च

आत्वाब्रह्मयुजाहरोम् ॥ ओ॑वा ओ॑वा ओ॑वा हुम्भा ॥ ओवा ॥ [ २ ] ब्रह्माण-
च शच सट टच सट टच सट टच ट क च च

स्त्वायुजावयोम् ॥ ओ॑वा ओ॑वा ओ॑वा हुम्भा ॥ ओवा ॥ [ ३ ]
शछ सट टच सट टच सट टच ट क च

जैब्रा [ १.३१२ ]—अथैन्द्रमाज्यम्० ॥

[ १.३१९ ]—त्रिष्टुभं ब्राह्मणाच्छꣳसिनः० सैषा भवति आ याहि सुषुमा हि त इति ।

तैसं [ ४.४.१ ]—

[२]संधिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व ॥

मैसं [ २.८.८ ]—

संधिनान्तरिक्षायान्तरिक्षं जिन्व ॥

कासं [ १७.७ ]—

संधिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व ॥

[ ३७.१७ ]—संधिरस्यन्तरिक्षाय त्वान्तरिक्षं जिन्व इति ।

कपिसं [ २६.६ ] = कासं १७.७

गोब्रा [ २.२.१३-१४ ]—संधिरसि० बृहस्पतये स्तुत इति० ॐ भूर्जनत् इति प्रातःसवने०॥

---

१. ब्रह्मा अनेन स्तोत्रमनुमन्त्रयते ।  २. स्तोत्रस्य प्रसवात् पूर्वं ब्रह्मा इमं स्तोमभागं जपति ।

# ९४. ब्राह्मणाच्छंसिशस्त्रम्

[ रथन्तरपृष्ठे ]

ऋसं—

शोंसावो३म् [1]आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम्। एदं बर्हिः सदो ममो३म् आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना। उप ब्रह्माणि नः शृणो३म् ब्रह्माणस्त्वा वयं युजा सोमपामिन्द्र सोमिनः। सुतावन्तो हवामहो३म् ( ८.१७.१–३ )[2] शोंसावो३म् आ नो याहि सुतावतोऽस्माकं सुष्टुतीरुप। पिबा सु शिप्रिन्नन्धसो३म् आ ते सिञ्चामि कुक्ष्योरनु गात्रा वि धावतु। गृभाय जिह्वया मधो३म् स्वादुष्टे अस्तु संसुदे मधुमान् तन्वे तव। सोमः शमस्तु ते हृदो३म् (८.१७.४-६)[3] शोंसावो३म् अयमु त्वा विचर्षणे जनीरिवाभि संवृतः। प्र सोम इन्द्र सर्पतो३म् तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे। इन्द्रो वृत्राणि जिघ्नतो३म् इन्द्र प्रेहि पुरस्त्वं विश्वस्येशान ओजसा। वृत्राणि वृत्रहञ्जहो३म् दीर्घस्ते अस्त्वङ्कुशो येना वसु प्रयच्छसि। यजमानाय सुन्वतो३म् अयं त इन्द्र सोमो निपूतो अधि बर्हिषि। एहीमस्य द्रवा पिबो३म् शाचिगो शाचिपूजनायं रणाय ते सुतः। आखण्डल प्र हूयसो३म् यस्ते शृङ्गवृषो नपात् प्रणपात् कुण्डपाय्यः। न्यस्मिन् दध्र आ मनो३म् ( ८.१७.७–१३ ) इन्द्र त्वा वृषभं वयं सुते सोमे हवामहे। स पाहि मध्वो अन्धसो३म् इन्द्र क्रतुविदं सुतं सोमं हर्य पुरुष्टुत। पिबा वृषस्व तातृपो३म् इन्द्र प्र णो धितावानं यज्ञं विश्वेभिर्देवेभिः। तिर स्तवान विश्पतो३म् इन्द्र सोमाः सुता इमे तव प्र यन्ति सत्पते। क्षयं चन्द्रास इन्दवो३म् दधिष्वा जठरे सुतं सोममिन्द्र वरेण्यम्। तव द्युक्षास इन्दवो३म् गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे। इन्द्र त्वादातमिद्यशो३म् अभि द्युम्नानि वनिन इन्द्रं सचन्ते अक्षिता। पीत्वी सोमस्य वावृधो३म् अर्वावतो न आ गहि परावतश्च वृत्रहन्। इमा जुषस्व नो गिरो३म् यदन्तरा परावतमर्वावतं च हूयसे। इन्द्रेह तत आ गहो३म् ( ३.४० ) उद्घेदभि श्रुतामघं वृषभं नर्यापसम्। अस्तारमेषि सूर्यो३म् नव यो नवतिं पुरो बिभेद बाह्वोजसा। अहिं च वृत्रहावधो३म् ( ८.९३.१-२ ) शोंसावो३म् [4]स न इन्द्रः शिवः सखाश्वावद्गोमद्यवमत्। उरुधारेव दोहतो३म् ॥( ८.९३.३ )

[5]इन्द्र क्रतुविदं सुतं .... ॥ ३.४०.२

१. आर्यां त्रिः शंसेत्। २. स्तोत्रियस्तृचः। ३. अनुरूपस्तृचः। ४. परिधानीया। ५. याज्या।

[ बृहत्पृष्ठे ]

ऋसं—

शोंसावो३म् इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः। इन्द्रं वाणीरनूषतो३म् इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा। इन्द्रो वज्री हिरण्ययो३म् ( १.७.१-२ ) [1]इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च। उग्र उग्राभिरूतिभो३म् ॥ (१.७.४)[2]

ऐब्रा [ ६.४ ]—ऐन्द्रं ब्राह्मणाच्छंसी प्रातःसवने शंसति० ॥

[3]शांब्रा [ २८.९ ]—ब्राह्मणाच्छंसी प्रातःसवन एकदेवत्याः शंसति०॥

अशौसं—

आ याहि सुषुमा .... ॥ २०.३ ॥ आ नो याहि ....॥ २०.४ ॥ अयमु त्वा विचर्षणे .... ॥ २०.५-६ ॥ उदूघेदभि श्रुता .... ॥ २०.७.१–३ ॥ इन्द्र क्रतुविदं .... ॥ २०.७.४

गोब्रा [ २.३.१४]— ब्राह्मणाच्छंसी प्रातःसवन ऐन्द्राणि सूर्यन्यङ्गानि शंसति० आ याहि सुषुमा हि ते, आ नो याहि सुतावत इति ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपौ। अयमु त्वा विचर्षण इत्युक्थमुखम्। उदूघेदभि श्रुता मघमिति पर्यासः। इन्द्र क्रतुविदमिति यजति० वषट्कृत्यानुवषट्करोति। प्रत्येत्राभिमृशन्ते। नाप्याययन्ति० ॥

## ९५. ऐन्द्रग्रहप्रचारः ऐन्द्राग्नग्रहग्रहणं च

मैसं [ ४.६.५ ]—(उपयामगृहीतोऽसि) इन्द्राग्निभ्यां त्वा इत्यछावाकाय[4] ॥

कासं [४.६ ]—

देवेभ्यस्त्वा देवाव्यं पृणच्मि यज्ञस्यायुषे ॥ उपयामगृहीतोऽसीन्द्राग्नीभ्यां त्वोक्थेभ्यस्त्वोक्थाव्यं गृह्णामि ॥ एष ते योनिरिन्द्राग्निभ्यां त्वा ॥

कपिसं [ ३.४ ] = कासं

वामासं —

इन्द्राग्निभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि ॥ ७.२३

१. इन्द्रमिद्गाथिनो बृहदिति स्तोत्रिय इत्याश्वलायनशाङ्खायनौ। तेन 'इन्द्रमिद्' ( ऋसं १.७.१-३ ) इत्यादिस्तृचः स्तोत्रियत्वेन शंसनीय इति प्राप्तम्। बृहत्पृष्ठे तृतीयाज्यस्तोत्रं यासु ऋक्षु गीयते तास्तु ऋसं १.७.१-२,४ इत्येताभिः समनुयन्ति। अतः 'यस्मिन् स्तुवीरन स स्तोत्रियः' इति परिभाषया एता एव ऋचः स्तोत्रियतृचरूपेण शंसनीया इत्यापतति। ३४१ पृष्ठे साकौसं [ २.२.१.८ ] अत्रत्या या चतुर्थी ऋक् सा ऋसं १.७ सूक्ते तृतीया। २. स्तोत्रियस्तृचः। शिष्टं पूर्ववत् ॥ ३. शाङ्खा० मते शस्त्रं पूर्ववत्। ४. ग्रहं गृह्णाति।

माशब्रा [ ४.२.३.३, ४, १४,१५, १७,१८ ]—तद्वा अगृहीत एवैतस्मादच्छावाकायोत्तमो ग्रहो भवति । अथ राजानमुपावहरति । तृतीयं वसतीवरीणामवनयति० इन्द्राग्निभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामीत्येवाच्छावाकाय० तदु ह चरकाध्वर्यवो विगृह्णन्ति० उपयामगृहीतोऽसि देवेभ्यस्त्वा देवाव्यमुक्थेभ्य उक्थाव्यमिन्द्राग्निभ्यां जुष्टं गृह्णामि, एष ते योनिरिन्द्राग्निभ्यां त्वा इति सादयति, नात्र पुनर्हविरसि इति स्थालीमभिमृशति० तं वै नोपयामेन गृह्णीयात् । न योनौ सादयेत्० ॥

वाकासं—

इन्द्राग्निभ्यां त्वा देवायुवं गृह्णामि यज्ञस्यायुषे ॥ ७.९.२

काशब्रा [ ५.२.३.२, १०, १४ ] ≡ माशब्रा

## ९६. चतुर्थाज्यस्तोत्रम्[1]

### [ रथन्तरपृष्ठे ]

### गायत्रम्

साकौसं [ २.१.१.७ ]—

इन्द्राग्नी आ गतꣳ सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥
इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया पातमिमꣳ सुतम् ॥
इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे । ता सोमस्येह तृम्पताम् ॥

१ २ २ २ १ २ २ - १ २
हुम् । *इन्द्राग्नीआगतꣳसुतोम् ॥ ओमोओओओओओओ २ ओओओओ-
२ १ - १ २^ १ १ १ १ २ २
ओओ १२१२ ॥ हुम् आ २ ॥ ओओ ॥ आ ३४५ ॥ [ १ ] इन्द्राग्नीजरितुः
१ २ २ २ - १२ २ २ १ -
सचोम् ॥ ओमोओओओओओओ २ ओओओओओ १२१२ ॥ हुम् आ २॥

१. पञ्चदशस्तोमम् । * प्रथमपर्याये प्रथमावृत्तौ इदं गानमन्यथा गेयम् । तदित्थम् —

१ २ २ २ १ २ २ २ १ २ २ १ २
इन्द्राग्नीआगतꣳसुतोम् ॥ ओङ्गाइर्भिर्नभोवरेणीया १२१२ मोओओओ १२१२ न्धियां
१ - १ २^ १ १ १
१२१२ ॥ हुम्आ २ ॥ ओओ ॥ आ ३४५ ॥

१ २^ १ १ १ १ १ २ २ -
ओओ ॥ आ ३४५ ॥ [ २ ] इन्द्रमग्निङ्कविछदोम् ॥ ओमोओओओओओओओ२
२ १२ २ २ १ - १ २^ १ १ १
ओओओओओओ १२१२ ॥ हुम् आ २ ॥ ओओ ॥ आ ३४५ ॥ [ ३ ]

[ बृहत्पृष्ठे ]

गायत्रम्

साकौसं [ २.२.१.९ ]—

*इन्द्रे अग्ना नमो बृहत् सुवृक्तिमेरयामहे । धिया धेना अवस्यवः ॥*
*ता हि शश्वन्त ईडत इत्था विप्रास ऊतये । सबाधो वाजसातये ॥*
*ता वां गीर्भिर्विपन्युवः प्रयस्वन्तो हवामहे । मेधसाता सनिष्यवः ॥*

१ २ २ २ १ २ २ - १२ २ २ २
हुम् । *इन्द्रेअग्नानमोबृहोम् ॥ ओमोओओओओओओ २ ओओओओओओ
१ - १ २^ १ १ १ १२ २
१२१२ ॥ हुम् आ २ ॥ ओओ ॥ आ ३४५ ॥ [ १ ] ताहिशश्वन्तईडतोम् ॥
१ २ २ २ - १२ २ २ २ १ - १
ओमोओओओओओओओ २ ओओओओओओ १२१२ ॥ हुम् आ २ ॥ ओओ ॥
२^ १ १ १ १२ २ २ १ २ २ - २ १ २
आ ३४५ ॥ [२] तावाङ्गीर्भिर्विपन्युवोम् ॥ ओमोओओओओओओओ २ ओओओ-
२ २ १ - १ २^ १ १ १
ओओओ १२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [ ३ ]

तांम्रा [ १.९.५ ]—

[1]प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥

[ १.६.३ ]—

[2]स्तुतस्य स्तुतमस्यूर्जस्वत्पयस्वदा मा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषम् ॥

२ २ २
* प्रथमपर्याये प्रथमावृत्तौ इदं गानमन्यथा गेयम् । तदित्थम् — इन्द्रेअग्नानमोबृहोम् ॥
१ २ २ २ १२ २ २ १ २ १ - १ २^ १ १ १
ओ३ सुवृक्तिमेरयामहा १२१२ ओओओओ १२१२ अवा १२१२ ॥ हुम् आ २ ॥ ओओ ॥ आ ३४५ ॥

१. ब्रह्मा अनेन स्तोत्रमनुमन्त्रयते । २. उद्गाता यजमानं वाचयति ।

[ रथन्तरपृष्ठे ]

गायत्रम्

साजैसं [ ३.२.१०–१२ ]—

इन्द्राग्नी आ गतꣳ सुतं गीर्भिर्नभो वरेण्यम्। अस्य पातं धियेषिता ॥

इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः। मया पातमिमꣳ सुतम् ॥

इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे। ता सोमस्येह तृम्पताम् ॥

इन्द्राग्नीआगतꣳ सुतोम् ॥ ओ'वा'ओ'वा'ओ'वा'हम्भा ॥ ओवा ॥ [ १ ]
श च सट टच सट टच सट टच ट क च

इन्द्राग्नीजरितुःसचोम् ॥ ओवा' ओवा'ओवा'हम्भा ॥ ओवा ॥ [ २ ] इन्द्रमग्नि-
च सट टच सट टच सट टच ट क च

ङ्कविच्छदोम् ॥ ओ'वा'ओ'वा'ओ'वा'हम्भा ॥ ओवा ॥ [ ३ ]
च सट टच सट टच सट टच ट क च

जैब्रा [ १.२५३ ]—अथैन्द्राग्नं द्विदैवत्यम्० ॥

[ १.३१२ ]—अथैन्द्राग्नमाज्यम्० ॥

[ १.३१९ ]—अनुष्टुभमच्छावाकस्य० तस्यैषा भवति इन्द्राग्नी आ गतꣳ सुतमिति० ॥

तैसं [ ४.४.१ ]—

[1]प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व ॥

मैसं [ २.८.८ ]—

प्रतिधिना पृथिव्यै पृथिवीं जिन्व ॥

कासं [ १७.७ ]—

प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व ॥

[ ३७.१७ ] प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्वेति० ॥

कपिसं [ २६.६ ] ≡ कासं १७.७

गोब्रा [ २.२.१३–१४ ]—प्रतिधिरसि इति० बृहस्पतये स्तुत इति० ॐ भूर्जनत् इति प्रातःसवने० ॥

---

१. स्तोत्रस्य प्रस्तवात् पूर्वं ब्रह्मा इमं स्तोमभागं जपति।

## १७. अच्छावाकशस्त्रम्

[ रथन्तरपृष्ठे ]

ऋसं—

शोंसावो३म् [1]इन्द्राग्नी आ गतं सुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषितो३म् इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः । अया पातमिमं सुतो३म् इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे । ता सोमस्येह तृम्पतो३म् (३.१२.१-३)[2] शोंसावो३म् इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः । ऋतस्य पथ्या अनो३म् इन्द्राग्नी तविषाणि वां सधस्थानि प्रयांसि च । युवोरप्तूर्यं हितो३म् इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यो३म् (३.१२.७-९)[3] शोंसावो३म् तोशा वृत्रहणा हुवे सजित्वानापराजिता । इन्द्राग्नी वाजसातमो३म् प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः । इन्द्राग्नी इष आ वृणो३म् इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् । साकमेकेन कर्मणो३म् (३.१२.४–६) इहेन्द्राग्नी उप ह्वये तयोरित् स्तोममुश्मसि । ता सोमं सोमपातमो३म् ता यज्ञेषु प्र शंसतेन्द्राग्नी शुम्भता नरः। ता गायत्रेषु गायतो३म् ता मित्रस्य प्रशस्तय इन्द्राग्नी ता हवामहे । सोमपा सोमपीतयो३म् उग्रा सन्ता हवामह उपेदं सवनं सुतम् । इन्द्राग्नी एह गच्छतो३म् ता महान्ता सदस्पती इन्द्राग्नी रक्ष उब्जतम् । अप्रजाः सन्त्वत्रिणो३म् तेन सत्येन जागृतमधि प्रचेतुने पदे । इन्द्राग्नी शर्म यच्छतो३म् ( १.२१ ) इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः । अभ्राद्वृष्टिरिवाजनो३म् शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः।ईशाना पिप्यतं धियो३म् मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये । मा नो रीरधतं निदो३म् इन्द्रे अग्ना नमो बृहत् सुवृक्तिमेरयामहे । धिया धेना अवस्यवो३म् ता हि शश्वन्त ईळत इत्था विप्रास ऊतये । सबाधो वाजसातयो३म् ता वां गीर्भिर्विपन्यवः प्रयस्वन्तो हवामहे । मेधसाता सनिष्यवो३म् इन्द्राग्नी अवसा गतमस्मभ्यं चर्षणीसहा । मा नो दुःशंस ईशतो३म् मा कस्य नो अररुषो धूर्तिः प्रणङ्मर्त्यस्य । इन्द्राग्नी शर्म यच्छतो३म् ( ७.९४ १-८ ) शोंसावो३म् गोमद्धिरण्यवद्वसु यद्वामश्वावदीमहे । इन्द्राग्नी तद्वनेमहो३म् ( ७.९४.९ ) ॥

[1]इन्द्राग्नी आगतं सुतं .... ॥ ३.१२.१

१. आर्वा त्रिः शंसेत् । २. स्तोत्रियस्तृचः । ३. अनुरूपस्तृचः । ४. परिधानीया । ५. याज्या ।

[बृहत्पृष्ठे]

ऋसं—

शोंसावो३म् इन्द्रे अग्ना नमो बृहत् सुवृक्तिमेरयामहे। धिया धेना अवस्यवो३म् ता हि शश्वन्त ईळत इत्था विप्रास ऊतये। सबाधो वाजसातयो३म् ता वां गीर्भिर्विपन्यवः प्रयस्वन्तो हवामहे। मेधसाता सनिष्यवो३म् (७.९४.४-६)[1]

ऐब्रा [२.३६]—ऐन्द्राग्नमच्छावाकः प्रातःसवने शंसति० ॥

[६.४]—ऐन्द्राग्नमच्छावाकः प्रातःसवने शंसति० ॥

[रथन्तरपृष्ठे]

ऋसं—

शोंसावो३म् इन्द्राग्नी आ गतं .... तृम्पतो३म् (३.१२.१-३)[1] शोंसावो३म् तोशा वृत्रहणा .... कर्मणो३म् (३.१२.४-६)[2] शोंसावो३म् इन्द्राग्नी अपसस्पर्युप .... वीर्यो३म् (३.१२.७-९) इहेन्द्राग्नी .... यच्छतो३म् (१.२१)[3]

[बृहत्पृष्ठे]

ऋसं—

शोंसावो३म् इन्द्रे अग्ना....सनिष्यवो३म् (७.९४.४-६)[2] शोंसावो३म् इन्द्राग्नी आगतं .... तृम्पतो३म् (३.१२.१-३)[3] शोंसावो३म् तोशा वृत्रहणा .... कर्मणो३म् (३.१२.४-६) इहेन्द्राग्नी .... यच्छतो३म् (१.२१)[4]

शांब्रा [२८.९]—तौ[5] प्रातःसवने द्विदेवत्याः शंसतः० ॥

गोब्रा [२.३.१५]—अच्छावाकः प्रातःसवन ऐन्द्राग्नानि शंसति० इन्द्राग्नी आगतं, तोशा वृत्रहणा हुवे इत्यच्छावाकस्य स्तोत्रियानुरूपौ। इन्द्राग्नी अपसस्परि इत्युक्थमुखम्। इहेन्द्राग्नी उप ह्वये इति पर्यासः। इन्द्राग्नी आगतम् इति यजति० वषट्कृत्यानुवषट्करोति। प्रत्येत्याभिमृशन्ते। नाप्याययन्ति० ॥

## ९८. ऐन्द्राग्नग्रहप्रचारः

कासं [४.६]—

देवेभ्यस्त्वा देवाव्यं पृणच्मि यज्ञस्यायुषे ॥

कपिसं [३.४] = कासं

१. स्तोत्रियस्तृचः। शिष्टं पूर्ववत्। २. स्तोत्रियस्तृचः। ३. अनुरूपस्तृचः। ४. शिष्टं पूर्ववत्। ५. अच्छावाको मैत्रावरुणश्च।

अशौसं—

अग्निः प्रातःसवने पात्वस्मान् वैश्वानरो विश्वकृद्विश्वशंभूः ।
स नः पावको द्रविणे दधात्वायुष्मन्तः सहभक्षाः स्याम ॥ ६.४७.१
श्येनोऽसि गायत्रच्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं वहास्य यज्ञस्योदृचि स्वाहा ॥ ६.४८.१
यथा सोमः प्रातःसवने अश्विनोर्भवति प्रियः ।
एवा मे अश्विना वर्च आत्मनि ध्रियताम् ॥ ९.१.११

अपैसं—

अग्निः प्रातःसवने .... वैश्वानरः पथिकृद् विश्वकृष्टिः । .... दधात्वायुष्मन्तः .... १९.४३.१० । श्येनोऽसि गायत्रीछन्दा.... मा संपारय ॥ १९.४४.४ ॥ यथा सोमः ....॥ १६.२३.१ ॥

## माध्यन्दिनसवनम्

## ९९. सोमाभिषवः

छांउ [ २.२४.७-१० ]—पुरा माध्यंदिनस्य सवनस्योपाकरणाज्जघनेनाग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रꣳ सामाभिगायति ।। [1]लोकद्वारमपावा२र्णू२३ । पश्येमत्वा वयं वैरा३२१११हु३म् आ३ज्या३यो३आ३२१११ इति । अथ जुहोति । नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्मि । अत्र यजमानः परस्तादायुषः स्वाहा ॥ अपजहि परिघम् इत्युक्त्वोत्तिष्ठति ०॥

तैब्रा [ ३.७.९.२ ]—

[2]देवा ग्रावाण इन्दुरिन्द्र इत्यवादिषुः । एन्द्रमचुच्यवुः । परमस्याः परावतः । आस्मात् सधस्थात् । ओरोरन्तरिक्षात् । आसुभूतमसुषवुः ॥ ब्रह्मवर्चसं म आसुषवुः । समरे रक्षांꣳस्यवधिषुः । अपहतं ब्रह्मज्यस्य ॥

माशब्रा [ ४.३.३.१ ]—इहा३इहा३ इत्यभिषुणोति० बृहद् बृहत् इति० ॥
काशब्रा [ ५.३.४.१ ] = माशब्रा

१. लोकद्वारसाम । २. प्रतिप्रस्थाता ब्राह्मणोऽनुमोदते ।

# १००. ग्रावस्तुदभिष्टवनम्

ऋसं—

[1]अभि त्वा देव सवितरीशानं वार्याणाम् । सदावन् भागमीमहे ॥ १.२४.३
युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ ५.८१.१
आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय । महाहस्ती दक्षिणेन ॥८.८१.१
मा चिदन्यद्वि शंसत सखायो मा रिषण्यत ।
इन्द्रमित् स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥ ८.१.१
प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः ।
यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः ॥
एते वदन्ति शतवत् सहस्रवदभि क्रन्दन्ति हरितेभिरासभिः ।
विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया होतुश्चित् पूर्वे हविरद्यमाशत ॥
एते वदन्त्यविदन्नना मधु न्यूङ्खयन्ते अधि पक्व आमिषि ।
वृक्षस्य शाखामरुणस्य बप्सतस्ते सूभर्वा वृषभाः प्रेमराविषुः ॥
बृहद्वदन्ति मदिरेण मन्दिनेन्द्रं क्रोशन्तोऽविदन्नना मधु ।
संरभ्या धीराः स्वसृभिरनर्तिषुराघोषयन्तः पृथिवीमुपब्दिभिः ॥
सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषुः ।
न्यङ्नि यन्त्युपरस्य निष्कृतं पुरू रेतो दधिरे सूर्यश्वितः ॥
उग्राइव प्रवहन्तः समायमुः साकं युक्ता वृषणो बिभ्रतो धुरः ।
यच्छ्वसन्तो जग्रसाना अराविषुः शृण्व एषां प्रोथथो अर्वतामिव ॥
दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः ।
दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः ॥
ते अद्रयो दशयन्त्रास आशवस्तेषामाधानं पर्येति हर्यतम् ।
त ऊ सुतस्य सोम्यस्यान्धसोंऽशोः पीयूषं प्रथमस्य भेजिरे ॥
ते सोमादो हरी इन्द्रस्य निंसतेंऽशुं दुहन्तो अध्यासते गवि ।
तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विन्द्रो वर्धते प्रथते वृषायते ॥
वृषा वो अंशुर्न किला रिषाथनेळावन्तः सदमित् स्थनाशिताः ।
रैवत्येव महसा चारवः स्थन यस्य ग्रावाणो अजुषध्वमध्वरम् ॥

१. त्रिः शंसेत् ।

तृदिला अतृदिलासो अद्रयोऽश्रमणा अशृथिता अमृत्यवः।
अनातुरा अजराः स्थामविष्णवः सुपीवसो अतृषिता अतृष्णजः ॥
ध्रुवा एव वः पितरो युगेयुगे क्षेमकामासः सदसो न युञ्जते।
अजुर्यासो हरिषाचो हरिद्रव आ द्यां रवेण पृथिवीमशुश्रवुः ॥
तदिद्वदन्त्यद्रयो विमोचने यामन्नञ्जस्पाइव घेदुपब्दिभिः।
वपन्तो बीजमिव धान्याकृतः पृञ्चन्ति सोमं न मिनन्ति बप्सतः॥ १०.९४.१-१३
आ व ऋञ्जस ऊर्जां व्युष्टिष्विन्द्रं मरुतो रोदसी अनक्तन।
उभे यथा नो अहनी सचाभुवा सदःसदो वरिवस्यात उद्भिदा ॥
तदु श्रेष्ठं सवनं सुनोतनात्यो न हस्तयतो अद्रिः सोतरि।
विदद्ध्यर्यो अभिभूति पौंस्यं महो राये चित् तरुते यदर्वतः ॥
तदिद्ध्यस्य सवनं विवेरपो यथा पुरा मनवे गातुमश्रेत्।
गोअर्णसि त्वाष्ट्रे अश्वनिर्णिजि प्रेमध्वरेष्वध्वराँ अशिश्रयुः ॥
अप हत रक्षसो भङ्गुरावतः स्कभायत निर्ऋतिं सेधतामतिम्।
आ नो रयिं सर्ववीरं सुनोतन देवाव्यं भरत श्लोकमद्रयः ॥
दिवश्चिदा वोऽमवत्तरेभ्यो विभ्वना चिदाश्वपस्तरेभ्यः।
वायोश्चिदा सोमरभस्तरेभ्योऽग्नेश्चिदर्च पितुकृत्तरेभ्यः ॥
भुरन्तु नो यशसः सोत्वन्धसो ग्रावाणो वाचा दिविता दिवित्मता।
नरो यत्र दुहते काम्यं मध्वाघोषयन्तो अभितो मिथस्तुरः ॥
सुन्वन्ति सोमं रथिरासो अद्रयो निरस्य रसं गविषो दुहन्ति ते।
दुहन्त्यूधरुपसेचनाय कं नरो हव्या न मर्जयन्त आसभिः ॥
एते नरः स्वपसो अभूतन य इन्द्राय सुनुथ सोममद्रयः।
वामंवामं वो दिव्याय धाम्ने वसुवसु वः पार्थिवाय सुन्वते ॥ १०.७६
प्र वो ग्रावाणः सविता देवः सुवतु धर्मणा। धूर्षु युज्यध्वं सुनुत ॥
ग्रावाणो अप दुच्छुनामप सेधत दुर्मतिम्। उस्राः कर्तन भेषजम् ॥
ग्रावाण उपरेष्वा महीयन्ते सजोषसः। वृष्णे दधतो वृष्ण्यम् ॥
ग्रावाणः सविता नु वो देवः सुवतु धर्मणा। यजमानाय सुन्वते ॥ १०.१७५
[1]स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इन्द्राय पातवे सुतः ॥ ९.१.१
[2]सुते अध्वरे अधि वाचमक्रता क्रीळयो न मातरं तुदन्तः।
वि षू मुञ्चा सुषुवुषो मनीषां वि वर्तन्तामद्रयश्चायमानाः ॥ १०.९४.१४

---

१. यथार्थं पावमानीरावपेत। २. परिधानीया।

[1]आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् । भवा वाजस्य संगथे ॥
आ प्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः । भवा नः सुश्रवस्तमः सखा वृधे ॥
सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ १.९१.१६-१८
प्रैते वदन्तु .... ॥ १०.९४.१–३
[2]मृजन्ति त्वा दश क्षिपो हिन्वन्ति सप्त धीतयः । अनु विप्रा अमादिषुः ॥ ९.८.४
एतमु त्यं दश क्षिपो मृजन्ति सप्त धीतयः । स्वायुधं मदिन्तमम् ॥ ९.१५.८
मृज्यमानः सुहस्त्य समुद्रे वाचमिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ ९.१०७.२१
सुपर्णा वाचमक्रत.... ॥ १०.९४.५-७
[3]आ दशभिर्विवस्वत इन्द्रः कोशमचुच्यवीत् । खेदया त्रिवृता दिवः ॥ ८.७२.८
दुहन्ति सप्तैकामुप द्वा पञ्च सृजतः । तीर्थे सिन्धोरधि स्वरे ॥ ८.७२.७
अधुक्षत् पिप्युषीमिषमूर्जं सप्तपदीमरिः । सूर्यस्य सप्त रश्मिभिः ॥ ८.७२.१६
ते अद्रयो .... ॥ १०.९४.८–१०
[4]आ कलशेषु धावति पवित्रे परि षिच्यते । उक्थैर्यज्ञेषु वर्धते ॥ ९.१७.४
आ कलशेषु धावति श्येनो वर्म वि गाहते । अभि द्रोणा कनिक्रदत् ॥
परि प्र सोम ते रसोऽसर्जि कलशे सुतः । श्येनो न तक्तो अर्षति ॥ ९.६७.१४-१५
तृदिला अतृदिलासो .... ॥ १०.९४.११–१३
[5]बृहद्वदन्ति मदिरेण .... ॥ १०.९४.४
[6]मा चिदन्यद्वि .... ॥ ८.१.१
[7]सुते अध्वरे अधि .... ॥ १०.९४.१४

ऐब्रा [६.१-२]—देवा ह वै सर्वचरौ सत्रं निषेदुः । ते ह पाप्मानं नापजघ्निरे । तान् होवाचार्बुदः काद्रवेयः सर्प ऋषिर्मन्त्रकृदेका वै वो होत्राकृता तां वोऽहं करवाण्यथ पाप्मानमपहनिष्यथ इति । ते ह तथेत्यूचुः । तेषां ह स्म स मध्यंदिने मध्यंदिन एवोपोदासर्पत् । ग्राव्णोऽभिष्टौति । तस्मान्मध्यंदिने मध्यंदिन एव ग्राव्णोऽभिष्टुवन्ति० तस्य उष्णीषेणाक्ष्यावपिनद्धुः । तस्मादुष्णीषमेव पर्यस्य ग्राव्णोऽभिष्टुवन्ति० अस्यान्याभिर्ऋग्भिर्मन्त्रमापृञ्चन्ति०

1. आश्वलायनश्रौतसूत्रोक्ते ( ५.१२ ) गाणगारिमते ग्राव्णोऽभिष्टवनमिदमुच्यते । तत्र सोम आप्यायमान एतदाद्या ऋचः । 2. सोमे मृज्यमाने । 3. पात्रैः सोमरसे गृह्यमाणे । 4. सोमे आसिच्यमाने । 5. बृहच्छब्दे । 6. यदि ग्रावाणः संह्रादेरन् । निमित्ताभावेऽपि प्रयोगः । 7. परिधानीया ।

तदाहुः कियतीभिरभिष्टुयादिति। शतेनेत्याहुः० त्रयस्त्रिंशत्या वेत्याहुः० अपरिमिताभिरेवाभिष्टुयात्० अर्धर्चश एवाभिष्टुयात्० एष एतामसंप्रेषितः प्रतिपद्यते ॥

ऋसं—

[1]अभि त्वा देव ....॥ १.२४.३ ॥ युञ्जते मन .... ॥ ५.८१.१ ॥ आ तू न इन्द्र .... ॥ ८.८१.१ ॥ आ नो भर दक्षिणेनाभि सव्येन प्र मृश। इन्द्र मा नो वसोर्निर्भाक्॥ उप क्रमस्वा भर धृषता धृष्णो जनानाम्। अदाशूष्टरस्य वेदः ॥ ८.८१.६-७॥ आ प्यायस्व समेतु....॥१.९१.१६॥ प्रैते वदन्तु....॥१०.९४.१-२॥ आ प्यायस्व मदिन्तम .... ॥ १.९१.१७ ॥ एते वदन्त्यविदन् .... ॥ १०.९४.३ ॥ सुपर्णा वाचम् .... ॥ १०.९४.५ ॥ सं ते पयांसि .... ॥ १.९१.१८ ॥ उग्राइव प्रवहन्तः .... ॥ १०.९४.६ ॥ मृजन्ति त्वा दश क्षिपो .... ॥ ९.८.४ ॥ एतमु त्यं दश क्षिपो .... ॥ ९.१५.८ ॥ एतं मृजन्ति मर्ज्यमुप द्रोणेष्वायवः। प्रचक्राणं महीरिषः ॥ ९.१५.७ ॥ आ कलशा अनूषतेन्दो धाराभिरोजसा। एन्द्रस्य पीतये विश ॥ ९.६५.१४ ॥ आ कलशेषु धावति श्येनो .... ॥ ९.६७.१४–१५ ॥

[2]आ प्यायस्व समेतु....॥१.९१.१६॥ उग्राइव प्रवहन्तः....॥१०.९४.६-७॥ आ प्यायस्व मदिन्तम .... ॥ १.९१.१७ ॥ ते अद्रयो दशयन्त्रास .... ॥१०.९४.८–९॥ सं ते पयांसि....॥१.९१.१८॥ वृषा वो अंशुर्न.... ॥१०.९४.१०॥ मृजन्ति त्वा दश क्षिपो .... ॥ ९.८.४ ॥ एतमु त्यं दश क्षिपो.... ॥ ९.१५.८ ॥ एतं मृजन्ति .... ॥ ९.१५.७ ॥ आ कलशा अनूषत .... ॥ ९.६५.१४ ॥ आ कलशेषु धावति .... ॥ ९.६७.१४–१५ ॥

[3]आ प्यायस्व समेतु .... ॥ १.९१.१६ ॥ तृदिला अतृदिलासो .... ॥ १०.९४.११ ॥ आ प्यायस्व मदिन्तम .... ॥ १.९१.१७ ॥ ध्रुवा एव वः .... ॥ १०.९४.१२ ॥ सं ते पयांसि.... ॥ १.९१.१८ ॥ तदिद्वदन्त्यद्रयो .... ॥ १०.९४.१३ ॥ मृजन्ति त्वा दश क्षिपो .... ॥ ९.८.४ ॥ एतमु त्यं दश क्षिपो .... ॥ ९.१५.८ ॥ एतं मृजन्ति .... ॥ ९.१५.७ ॥ आ कलशा अनूषत .... ॥ ९.६५.१४ ॥ आ कलशेषु धावति .... ॥ ९.६७.१४–१५ ॥

[4]बृहद्वदन्ति मदिरेण .... ॥ १०.९४.४ ॥

---

१. शाङ्खायनसूत्रानुसारेण ग्रावस्तोत्रे प्रथमः सवः। २. द्वितीयः सवः। ३. तृतीयः सवः।
४. यस्मिन् सवे बृहच्छन्दं कुर्युः।

[1]पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत् समाशत ॥
तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधि तिष्ठन्ति चेतसा ॥ ९.८३.१–२
त्रि यत् पवित्रं धिषणा अतन्वत घर्मं शोचन्तं प्रणवेषु बिभ्रतः ।
समुद्रे अन्तरायवो विचक्षणं त्रिरह्नो नाम सूर्यस्य मन्वत ॥ शांश्रौ ५.९.१६
[2]प्रास्य धारा अक्षरन् वृष्णः सुतस्यौजसा । देवाँ अनु प्रभूषतः ॥ ९.२९.१
प्र धारा अस्य शुष्मिणो वृथा पवित्रे अक्षरन् । पुनानो वाचमिष्यति ॥९.३०.१
प्र ते धारा असश्चतो दिवो न यन्ति वृष्टयः । अच्छा वाजं सहस्रिणम् ॥९.५७.१
[3]इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । ऋतस्य योनिमासदम् ॥
तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति वेधसः । सं त्वा मृजन्त्यायवः ॥
रसं ते मित्रो अर्यमा पिबन्ति वरुणः कवे । पवमानस्य मरुतः ॥९.६४.२२-२४
[4]सुते अध्वरे अधि .... ॥ १०.९४.१४

शांब्रा [ १५.१ ]—यदर्बुदेन च पावमानीभिश्च ग्राव्णोऽभिष्टौति० ॥

[ २९.१ ]—अथ यत्र ह तत्सर्वंचरौ देवा यज्ञमतन्वत । तान् हार्बुदः काद्रवेयो माध्यंदिन उपोदासृप्योवाचैका वै व इयं होत्रानुक्रियते ग्रावस्तोत्रिया तां वोऽहं करवाण्युप मा ह्वयध्वमिति । ते ह तथेत्यूचुः । तं होपजुह्विरे । स एता ग्रावस्तोत्रिया अभिरूपा अपश्यत् प्रैते वदन्तु प्र वयं वदामेति० अथ यत्र बृहद् बृहद् इति बृहद्वदन्ति मदिरेण मन्दिनेति तत्र० ता वै चतुर्दश भवन्ति० ता वै जगत्यो भवन्ति० अथ यत् त्रिष्टुभा परिदधाति० स वै तिष्ठन्नभिष्टौति० स वा उष्णीष्यपिनद्धाक्षोऽभितुष्टाव । तस्माद्वा अप्येतर्ह्युष्णीष्येव ग्राव्णोऽभिष्टौति० तद्यत्पावमानीर्विषापवदनीरभिष्टौति० ॥

## १०१. ग्रहग्रहणम्

तैसं [ १.४.१७-१८ ]—

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यँ शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रँ सहोदामिह तँ हुवेम ।
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते ॥ एष ते योनिरिन्द्राय त्वा मरुत्वते ॥

१. पवित्रे वितते । २. धारासु प्रक्षरन्तीषु । ३. ग्रहेषु गृह्यमाणेषु । पावमानीनां याः कामयेत ता यथार्थमावपेत । ४. परिधानीया ।

इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य ।
तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः ॥
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते ॥ एष ते योनिरिन्द्राय त्वा मरुत्वते ॥

[६.५.५]—यन्माध्यंदिने सवने मरुत्वतीया गृह्यन्ते०यद्दतुपात्रेण मरुत्वतीया गृह्यन्ते०॥

मैसं [ १.३.१९-२२ ]—

इन्द्र मरुत्व इह पाहि .... । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते ॥ एष ते योनिरिन्द्राय त्वा मरुत्वते ॥

जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभिमानः ।
अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं जजनज्जनिष्ठम् ।
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते ॥ एष ते योनिरिन्द्राय त्वा मरुत्वते ॥

मरुत्वन्तꣳ वृषभꣳ वावृधानम् .... तꣳ हुवे । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते ॥ एष ते योनिरिन्द्राय त्वा मरुत्वते ॥

मरुत्वं इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आसिञ्चस्व जठरे मध्व ऊर्मिं त्वꣳ राजासि प्रदिवः सुतानाम् ।
उपयागृहीतोऽसीन्द्राय त्वा मरुत्वते ॥ एष ते योनिरिन्द्राय त्वा मरुत्वते ॥

[ ४.६.४ ]—[१]तिसृभ्यो माध्यंदिने सवने॥

कासं [ ४.८ ]—

जनिष्ठा उग्रस्सहसे तुराय .... यद्वीरं दधनद्धनिष्ठा । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते ॥ एष ते योनिरिन्द्राय त्वा मरुत्वते ॥

इन्द्र मरुत्व इह पाहि .... । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते ॥ एष ते योनिरिन्द्राय त्वा मरुत्वते ॥

मरुत्वाँ इन्द्र वृषभो .... । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते ॥ एष ते योनिरिन्द्राय त्वा मरुत्वते ॥

[ २८.३ ]—मरुत्वतीयं स्तोत्रं भवति मरुत्वतीयमुक्थं मरुत्वतीया ग्रहाः० ॥

कपिसं [ ३.६ ] ≡ कासं

[ ४४.३ ] ≡ कासं

वामासं—

इन्द्र मरुत्व इह पाहि .... । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते ॥ एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ७.३५

१. धाराभ्य आग्रायणं गृह्णाति ।

माशब्रा [ ४.३.३.२–१३ ]—स शुक्रामन्थिनौ प्रथमौ गृह्णाति० अथाग्रयणम्० अथ मरुत्वतीयम्। अथोक्थ्यम्० तद्धैके उक्थ्यं गृहीत्वाथ मरुत्वतीयं गृह्णन्ति। तदु तथा न कुर्यात्। मरुत्वतीयमेव गृहीत्वाथोक्थ्यं गृह्णीयात्० ऋतुपात्राभ्यां मरुत्वतीयान् गृह्णाति। अथातो गृह्णात्येव इन्द्र मरुत्व.... त्वा मरुत्वते॥ एष ते योनिरिन्द्राय त्वा मरुत्वत इति॥

वाकासं—

इन्द्र मरुत्व .... अपिब .... ॥ --- ॥ ७.१७

काशब्रा [ ५.३.४.१–११ ] ≡ माशब्रा

अशौसं—

धृषत्पिब कलशे सोममिन्द्र वृत्रहा शूर समरे वसूनाम्।
माध्यंदिने सवन आ वृषस्व रयिष्ठानो रयिमस्मासु धेहि॥ ७.८१.२

अपैसं—

धृषत्पिब .... रयिस्थानो ....॥ २०.३१.७

## १०२. माध्यंदिनपवमाननिःसर्पणम्

तैसं [ ३.१.९.२ ]—

विश्वे देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जह्युः।
आयुष्मन्तः प्रियमेषां वदन्तो वयं देवाना॑ सुमतौ स्याम॥

## १०३. माध्यंदिनपवमानस्तोत्रम्[1]

### [ रथन्तरपृष्ठे ][2]

१–३ स्तोमाः गायत्रम्

साकौसं [ १.५.२.४.१; २.१.१.८ ]—

उच्चा ते जातमन्धसो दिवि सद् भूम्या ददे। उग्रꣳ शर्म महि श्रवः॥
स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः। वरिवोवित् परि स्रव॥
एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम्। सिषासन्तो वनामहे॥

१ १ र र र १ र र – १ २
हुम्। उच्चातेजातमन्धसोम्॥ ओमोओओओओओओ२ ओओओओओओ
१ – १ २^ १११ १ र
१२११२॥ हुम् आ २॥ ओओ॥ आ ३४५॥ [ १ ] सनइन्द्रायथज्यवोम्॥

१. पञ्चदशस्तोमम्। २. बृहत्पृष्ठेऽप्येवमेव।

१ र - १ २ १ -
ओमोओओओओओओओ २ ओओओओओओ १२१२ ॥ हुम् आ २ ॥
१ २^ १११ १२र र १ र र र -
ओओ ॥ आ ३४५ ॥ [२] एनाविश्वानिअर्यओम् ॥ ओमोओओओओओओओ२
१र र २ १ - १ १^ १११
ओओओओओओ १२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [३]

४–६ स्तोमाः

## आमहीयवम्

१ ५ र२ ४र ५ १ २ १ २ - १ २
हुम् । उच्चाता३ इजातमन्धसाः ॥ ओन्दिवाइसा१ द्भू२ मिया२३ ददाइ ॥
१ २१ २ २र १११ ५ २ ४र
उग्रꣳ शर्मा ॥ महा२३ इश्रवाउवा३ ॥ स्तौषे ३४५ ॥ [ १ ] सनआ३ इन्द्राय-
५ १ २ १ २ - १ २ १ २र१
यज्यवाइ ॥ ओं वरूणा१ या२ मरू२३ द्भियाः ॥ वरिवोवाइत् ॥ परा २३
२ २र १११ ५र र १ ४र ५ १ १ १२
इस्रवाउवा३ ॥ स्तौषे ३४५ [ २ ] एनावा३ इश्वानिअर्यआ ॥ ओन्द्युम्नाना१
- १ २ १र२ १ २ २र १११
इमा२ नुषा२३ णाम् ॥ सिषासन्ताः ॥ वना२३ महाउवा३ ॥ स्तौषे ३४५ ॥ [ ३ ]
[ ग्राम १२.२.१३ ऊह १.१.१ ]

७–९ स्तोमाः

## रौरवम्

साकोसं [ १.६.१.३.१; २.१.१.९.१–२ ]—

पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥
दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नꣳ सधस्थमासदत् ।
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥

१ १र र १ ५ १ र र र र र र
हुम् । पुनानःसोमा३ धारा २३४ या ॥ ओमापोवसानोअर्षस्यारत्नधायोनि-
^ ३ २ १ १ २ १ र र र १ १ २ २
मृतस्यसा२ इदसाओहा३ उवा ॥ उत्सोदेवोहिरा२३ हा ओहा ३ उवा ॥
१ २ ४ ५ ४ २ र र र १ ५
ण्यया औ३ होवा ॥ हो५ इडा ॥ [ १ ] उत्सोदेवोहा३ इरण्या २३४ याः ॥

१ २२२ २२२ ^ ३ २१२ २ १
ओमूत्सोदेवोहिरण्ययोदुहानऊधर्दिवियम्मधू २ प्रियामोहा ३ उवा ॥ प्रत्नꣳ
२ १२ २ १ ४५ ४
सधस्थमा२३ हा ओहा२ उवा ॥ सदादौ२३ होवा ॥ हो५ इडा ॥ [२]
२ १ ५ १ २ २
प्रत्नꣳ सधस्था२ मासा २३४ दात् ॥ ओम्प्रात्नꣳ सधस्थमासददापृच्छ्यन्धरु-
२ ^३१ १२ २ १ २२ २ १२ २
णंवाजिया२ र्षसा ओहा२ उवा ॥ नृभिर्द्धौतोविचा२३ हा ओहा२ उवा ॥
१ २ ४५ ४
क्षणाऔ२ होवा ॥ हो५ इडा ॥ [ ३ ] [ ग्राम १४.१.३५; ऊह १.१.२ ]

१०-१२ स्तोमाः                    यौधाजयम्

१ ३२ २ ४५२^३ ५ १ २ १ ^ ३२
हुम् । पुना३१ ना३ःसोमधारा२३४ या ॥ ओमापो२ वसा२ नआ३४५ ।
३ ५ २२१२ १२२१ ^ ३२ ३ ५
*षा २३४ सी । आरात्नधायोनिमृता२ स्यसा ३४५ इ । *दा२३४ सी ॥
१ - १ ^ ३२ ३ २ ३२ २
उत्सा२ः ॥ दाइवो२ हिरा३४५ ॥ ण्या२३४ याः ॥ [१] उत्सो३१ दे३
४५२^३ ५ १ २ १ ^ ३२ ३ ५
वोहिरण्या२३४ याः ॥ ओमूत्सो३ दाइवो२ हिरा३४५ । *ण्या२३४ याः ।
११२१२१ ^ ३२ ३ ५ २ - १ ^
दुहानऊधर्दिविया२ म्मधू ३४५ । *प्री२३४ याम् ॥ प्रत्ना२म् ॥ साधा२
३२ ३ ५ ३२ २४५२^३ ५
स्थमा३४५ । सा२३४ दात् ॥ [ २ ] प्रत्ना३१ꣳ सा३धस्थमासा २३४ दात् ॥
१ २ १ ^ ३२ ३ ५ २२१२ १२१ ^
ओम् प्रात्ना३ꣳसधा२ स्थमा३४५ । *सा२३४ दात् । आपार्छियान्धरुणंवा२
३२ ३ ५ २ - १ ^३२ ३ ५
जिया३४५ । *षा२३४ सी ॥ नृभा२ इः ॥ धौतो २ विचा३४५ ॥ क्षा२३४ णाः ॥[३]
[ ग्राम १४.१.३६; ऊह १.१.३ ]

* अन्तर्निधनम् ।

१३–१५ स्तोमाः औशनम्

साकीसं [ १.६.१.४.१; २.१.१.१० ]—

प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष ।
अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥

स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः ।
पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः ॥

ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन ।
स चिद्विवेद निहितं यदासामपीच्यं गुह्यं नाम गोनाम् ॥

१ २ १ र २ २ १ २१२ १ २३४५
हुम् । प्रातू ॥ ओन्द्रवापरिकोशन्निषी२ दानृभाइः पुनानो२ अभिवाजमर्षा ॥
१ रर ७ २ १र२१ २ १ र २ २ ४
अश्वन्नत्वावाजिनम्मार्जया२३ न्ताः ॥ अच्छाबर्हाइरशनाभा३४३ इर्ना३ या५म् ॥
१२ १ र २ १ १ ११२१र२३४५
ता६५६ इ ॥ [ १ ] सूवा ॥ ओंयुधाःपवतेदाइवई३न्दुरशास्तिहावृजर्नारक्षमाणाः ॥
१ ररर र ७ २ १ २र १ २ १ २ २ ४
पितादेवानाञ्जनितासुदा२३ क्षाः ॥ विष्टम्भोदाइवी३ धरुणा३४३ः पा३र्था ५ इ ॥
१ २ १ र २ २ १२र१ २१र
व्या ६५६ः ॥ [ २ ] आर्षीः ॥ ओं विप्राःपुरएताजना२ नामृभूर्द्धीरा उशना ॥
२ ३४५ १ र ७ २ १ २१ २१ २
काविर्येना ॥ सचिद्विवेद निहिताञ्यदा२३ साम् ॥ अपाइचियाङ्गुहियना३४३
२ ४
मा३ गो५ ॥ ना६५६ म् ॥ [ ३ ] [ ग्राम १५.१.३२; ऊह १.१.४ ]

ताम्री [ १.९.६ ]—

[1]विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥

[ १.३.५ ]—

अग्नेस्तेजसेन्द्रस्येन्द्रियेण सूर्यस्य वर्चसा बृहस्पतिस्त्वा युनक्तु देवेभ्यः प्राणाय ॥

[ १.५.११-१२ ]—

वायुर्युनक्तु मनसा स्तोमं यज्ञाय वोढवे दधात्विन्द्र इन्द्रियꣳ सत्याः कामा यजमानस्य सन्तु ॥ [2]वृषकोऽसि त्रिष्टुप्छन्दा अनु त्वारभे स्वस्ति मा संपारय मा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषम् ॥

१. ब्रह्मा अनेन मन्त्रेण स्तोत्रमनुमन्त्रयते । २. उद्गाता यजमानं वाचयति ।

[७.३–५]—एतावता वात्र माध्यंदिनꣳ सवनं पुपुवे। त्रिभिश्च छन्दोभिः पञ्चभिश्च सामभिः० गायत्रं निधनवदनिधनमैडम्० यद्गायत्र्यां गायत्रेण स्तुवन्ति० गायत्रेण स्तुत्वा निधनवता स्तुवन्ति० ऐडेन बृहतीमारभन्ते० बृहत्यां भूयिष्ठानि सामानि भवन्ति तत्रापि त्रिणिधनम्० द्व्यक्षराणि निधनानि भवन्ति० अनिधनमन्ततो भवति० स्वारं भवति० अग्निर्वै रूरस्तस्यैतद्रौरवम्० इन्द्रो वै युधाजित्तस्यैतद्यौधाजयम्० वायुर्वा उशनꣳस्तस्यैतदौशनम्० ॥

## [ रथन्तरपृष्ठे ]

१–३ स्तोमाः

### गायत्रम्

साजैसं—

[ ३.३.१ ]—उच्चा ते जातमन्धसा दिवि सद्भूम्या ददे। उग्रꣳ शर्म महि श्रवः ॥

[ ३.११.१ ]—अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुहे अह्रयः। पयः सहस्रसामृषिम् ॥

[ ३.३.३ ]—एनां विश्वन्नर्य आ द्युम्नानि मानुषाणाम्। सिषासन्तो वनामहे ॥

ओहम् । उच्चातेजातमंन्धसोम् ।। ओवा ओवा ओवा हम्भा ॥ ओवा ॥ [१]
च शच सट टच सट टच सट टच ट क च

अस्यप्रत्नामनुद्युतोम् ॥ ओवा ओवा ओवा हम्भा ॥ ओवा ॥ [ २ ] एनाविश्वान्नर्य
च शच सट टच सट टच सट टच ट क च च

ओम् । ओवा ओवा ओवा हम्भा ॥ ओवा ॥ [ ३ ]
शच सट टच सट टच सट टच ट क च

४–६ स्तोमाः

### आमहीयवम्

साजैसं [ ३.३.१-३ ]—

उच्चा ते जातमन्धसा दिवि सद्भूम्या ददे। उग्रꣳ शर्म महि श्रवः ॥

स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः। वरिवोवित् परि स्रवा ॥

एना विश्वन्नर्य आ द्युम्नानि मानुषाणाम्। सिषासन्तो वनामहे ॥

हम् । उच्चातायिजातमन्धसा ॥ ओवौषाळ्भू''ओदादायि ॥ उग्रꣳ शर्मा ॥
ख क टटटट क ट ट च क च

औहवावुवा ॥ स्तौषे ॥ [ १ ] सनआयिन्द्रायजयवायि ॥ ओया ओभा'याः ॥
सट क ख त ख ख टटट ट टटट

वरिवोवायीत् ॥ ओहवावुवा ॥ स्तौषे ॥ [ २ ] एनावायिश्वान्नर्येया ॥ ओ''मा'
क च सट क ख त ख ख टटट

ओषाणाम् ॥ सायिषासन्ताः ॥ ओमहावुवा ॥ स्तौषे [ ३ ]
क ट ट क च सट क्य ख त ख

७–९ स्तोमाः

## रौरवम्

साजैस [ ३.३.४-५ ]—

पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥
दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नꣳ सधस्थमासदत् ।
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥

हम् । पुनानः सोमाधाराया ॥ ओपोवसानोअर्षस्यारत्नधायोनी ओदादा-
त प ण क टटट
ओहावुवा ॥ उत्सोदेवोहिराहाओहावुवा ॥ ओं''याऔहोवा ॥ होयिळा ॥ [ १ ]
प ट त प टटच टखप्य प्य
उत्सोदेवोहायिराण्याया ॥ ओत्सोदेवोहिरण्ययादुहानऊधर्दिविओप्रिगा'मोहावुवा ॥
त प ण क टटट प
प्रत्नꣳ सधस्थमाहाओहावुवा ॥ ओ''दाऔहो'वा ॥ हो'यिळा ॥ [ २ ] प्रत्नꣳ
ट त प टटच टखप्य प्य
सधस्थमासादात् ॥ ओत्नꣳसधस्थमासददापृच्छयन्धारूओषांसा ओहावुवा ॥
त प ण क टट प
नृभिर्धौतोविचाहाओहावुवा ॥ ओणाऔहोवा ॥ होयिळा ॥ [ ३ ]
ट त प टटच टखप्य प्य

१०–१२ स्तोमाः

## यौधाजयम्

हम् । पुनानाः सोमाधाराया ॥ ओपोनया । *षासी । ओरात्नधायोनी-
प्य य प प्यखण टटखण ख चशच
ओस्यसायी । *दासी ॥ उत्साः ॥ ओहिरा ॥ ण्याया ॥ [ १ ] उत्सोदेवो
टट खण खश ट ख सट खण खश चयप
हिरण्याया ॥ ओत्सोहिरा । *ण्याया । ओहानऊधर्दिविओम्मधू । *प्रीयाम् ॥
प्यखण टओखण खश चच टखण ख
प्रत्नाम् ॥ ओस्थमा ॥ सादात् ॥ [ २ ] प्रत्नाꣳ साधास्थमासादात् ॥ ओत्ना-
टख सट खण खश प्य य प प्यखण टट
मोस्थ''मा' । *सादात् । ओपाछिंयान्धरू ओज''या । *षासी ॥ नृभायीः ॥
ट खणफप्य ख चशच टटखणफप्य ख टख
ओ'वि''चा' ॥ क्षाणाः ॥ [ ३ ]
सट खणफप्य ख

* मध्यनिधनम् ।

१३–१५ स्तोमाः                                   औशनम्

साजैसं [ ३.३.६–८ ]—

प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष ।
अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥
स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः ।
पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः ॥
ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन ।
स चिद्विवेद निहितं यदासामपीच्यं गुह्यं नाम गोनाम् ॥

**हम् । प्रातु ॥ ओश्राओरीओनिषी'दा'ओभायीः ॥ पुनानोअभिवाजमार्षा ।**
ट क क टटट च ट टट ख ण

**अश्वन्नत्वावाजीनम्मार्जयान्तायि ॥ ओबर्हायि रशनाभायीर्नाया ॥ तायी ॥ [ १ ]**
ट त च च क प ख श्र

**सूवा ॥ ओवाओवाओवाइ'न्दु'रोशास्तिहा' ॥ वृजनाराक्षमाणाः॥ पितादेवानाञ्जनिता-**
ट कटटट च चश्य टट ख ण

**सुदाक्षाः ॥ ओंभोदायीवोधारूणाः पार्थायि ॥ व्याः ॥ [ २ ] आर्षीः ॥ ओप्रा-**
ट त ट ट प ख श्र

**ओराओजना'ना'मोभूः ॥ धी'राउशनाकावियेना ॥ सचिद्विवेदनीहितांयदासाम् ॥**
क क टटट च श कच क टट ख ख ट त

**ओचियाङ्गुह्यान्नामागो ॥ नाम् ॥ [ ३ ]**
ट ट प ख श्र

जैत्रा [ १.११६–१२७ ]—

मरुत्वतीः प्रतिपदो भवन्ति० उच्चा ते जातमन्धसेत्यन्धस्वतीर्भवन्ति० तासु गायत्रमुक्तब्राह्मणम् । अथामहीयवम्० यो वृष्टिकामः स्यादेतेनैवापनिधनेन स्तुवीत० स **स्तौषे** इत्येव निधनमुपैत्० पुरस्तादेव निधनस्य वषट्कुर्यात् **वौषड् भूमी ओ ददा** इति० गायत्रीं चतुर्ऋचां कुर्यात्० उच्चा ते जातमन्धसा, अस्य प्रत्नामनु द्युतम्, एना विश्वान्यर्य आ इत्येतासु गायत्रं कुर्यात् । स्वास्त्वामहीयवम्[१] । स यद् धाय्यां चतुर्थीं दधाति तेन चतुर्ऋचं भवति० येन निधनमुपयन्ति तेन प्रस्तौति० न बृहत्या वषट्कुर्यात्० पुनानः सोम धारयापो वसानो अर्षसीति० तासु रौरवम्० अथ यौधाजयम्० रौरवेण वै देवा ऊर्ध्वाः स्वर्गं लोकमारोहन् । तानसुरा **ओ वा** इत्येवान्वारोहन् । तद् देवाः प्रत्यबुध्यन्त ।

१. 'तास्त्वा०' इति मुद्रितपुस्तकपाठः । 'स्वास्त्वा०' इति पाठः केषुचित् पुस्तकेषु लब्धः स एव समीचीन इत्यस्माभिः स्वीकृतः।

त एतं स्तोभमपश्यन् । तेनैनान् **ओ हा उ वा** इत्यत्राचोऽवाघ्नन् । **उत्सो देवो हिरा हा उ वा** इति भूमिस्पृश एवाकुर्वन् । अन्तगतमिव सामासीत् । रौरवः स्वर्गो लोक एव यच्छेत् । ऊर्ध्वं प्रतिहारादुद्गाता । स्वर्गस्य लोकस्य समष्ट्यै । **ण्याया औ हो वा हो इळा** इति । स्वरेणैव संतत्य स्वर्गं लोकꣳ समश्नुते० स्वारं भवति० अथ निधनवत्० अथैळम्० अथ यौधाजयं त्रिणिधनं० तन्मध्यनिधनं भवति० प्रतु इत्येव प्रदुद्रुवतुः० तास्त्वौशनम्० तत् स्वारं भवति० द्विषाम्णी गायत्री० द्विषाम्णी बृहती० एकसाम्नी त्रिष्टुप०॥

[ १.२५१ ]—पञ्चदशो माध्यंदिनः० ॥

[ १.२५४ ][१]—अथ माध्यंदिनस्य पवमानस्य गायत्री० तस्यां द्वे सामनी० अथ बृहती० तस्यां द्वे सामनी० अथ त्रिष्टुप्० तस्यामेकꣳ साम ॥

[ १.३२१–३२६ ]—अथैतदामहीयवं प्राजापत्यं सवनमुखे क्रियते० स यद् **ओम्** इत्यादत्ते० पुनानः सोम धारयेति प्रस्तौति० प्रस्तूयमानꣳ साम प्रजाकामोऽभ्युद्गायेद् विहृते प्रस्तावे क्षत्रकामः० प्रतिह्रियमाणमेव पशुकामोऽभ्युद्गायेत् । निधनमेव स्वरमुपयन् ब्रह्मवर्चसं ध्यायेत्० तत् त्रिणिधनं भवति० अथैतदौशनं त्रैष्टुभम्० अथ निर्बाधापस्तम्भौ० साम्नो हिंक्रियमाण एतां दिशं यं द्विष्यात् तं मनसा निर्बाधेत० प्रतिह्रियमाण एतामु एव दिशं यं द्विष्यात् तं मनसापस्तभ्नुयात् ॥

तैब्रा [ २.२.८.३ ]—माध्यंदिने पवमाने चतुर्होतारम्[२] ।

**तैसं [ ४.४.१ ]—**

**[३]विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्व ॥**

[ ३.५.२ ]—विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्वेत्याह० ।

**[ ३.२.१.१ ]—**

**[४]सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वा रभे स्वस्ति मा सं पारय ॥**

मैसं [ १.९.५ ]—[५]पञ्चहोतारँ वदेत्[६] पुरस्तान्माध्यंदिनस्य पवमानस्य ।

[ ४.९.४ ]—**ज्योतिषे हिंकुरु तस्यै प्रस्तुहि तस्यै मेऽवरुद्ध्यै** इति पुरस्तान्माध्यंदिनस्य पवमानस्य वदेत्[६] ।

**[ २.८.८ ]—**

**विष्टम्भेन वृष्ट्यै वृष्टिं जिन्व ॥**

कासं [ ९.१४ ]—[७]पञ्चहोतारं व्याख्याय माध्यंदिनेन पवमानेनोद्गायेत् ।

---

१. जैब्रा १.२७९–२९०; २९९–३१४ इत्यत्रापि ब्राह्मणम् । २. यजमानो व्याचक्षीत । द्रष्टव्यं श्रौ. १ पृ. १२५ । ३. स्तोत्रस्य प्रसवात् पूर्वं ब्रह्मा इमं स्तोमभागं जपति । ४. अध्वर्युर्यजमानं वाचयति । ५. द्रष्टव्यं श्रौ. १ पृ. १२९ । ६. यजमानः । ७. द्रष्टव्यं श्रौ. १ पृ. १३१ ।

[ १७.७ ]—

**विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्व ।**

[ ३७.१७ ]—विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्वेति० ।

कपिसं [ २६.६ ] ≡ कासं १७.७

ऐब्रा [ ५.३४ ]—स प्रस्तोतोपाकृते स्तोत्र आह **ब्रह्मन् स्तोष्यामः प्रशास्तः** इति० **भुवः** इति माध्यंदिने सवने [1]ब्रूयात् **इन्द्रवन्तः स्तुध्वम्** इति ॥

अशौसं—

**वृषासि त्रिष्टुप्छन्दा अनु त्वा रभे ।**

**स्वस्ति मा सं वहास्य यज्ञस्योदृचि स्वाहा ॥** ६.४८.३

अपैसं—

**सम्राळसि त्रिष्टुप्छन्दा .... सं पारय ॥** १९.४४.५

गोब्रा [ २.२.१३-१४ ]—**विष्टम्भोऽसि** इति० **बृहस्पतये स्तुत** इति० **ॐ भुवो जनत्** इति माध्यंदिने सवने० ॥

[ १.५.१३ ]— अथ माध्यंदिने पवमाने [2]वाचयति **सम्राडसि त्रिष्टुप्छन्दा अनु त्वा रभे । स्वस्ति मा सं पारय** इति० ॥

## १०४. दधिघर्मप्रचारः

तैसं [ ६.३.१ ]—अङ्गारैर्द्वे सवने त्रि हरति ॥

[ ३.२.६ ]—

[3]**ज्योतिरसि वैश्वानरं पृश्नियै दुग्धम् ॥**

[4]**यावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः ।**

**तावन्तमिन्द्र ते ग्रह**[९]**सहोर्जा गृह्णाम्यस्तृतम् ॥**

तैब्रा [ ३.७.९ ]—

[5]**वाक्च त्वा मनश्च श्रीणीताम् । प्राणश्च त्वापानश्च श्रीणीताम् । चक्षुश्च त्वा श्रोत्रं च श्रीणीताम् । दक्षश्च त्वा बलं च श्रीणीताम् । ओजश्च त्वा सहश्च श्रीणीताम् । आयुश्च त्वा जरा च श्रीणीताम् । आत्मा च त्वा तनूश्च श्रीणीताम् । शृतोऽसि शृतं कृतः । शृताय त्वा शृतेभ्यस्त्वा ॥**

[6]**यमिन्द्रमाहुर्वरुणं यमाहुः । यं मित्रमाहुर्यमु सत्यमाहुः ।**

**यो देवानां देवतमस्तपोजाः । तस्मै त्वा तेभ्यस्त्वा ॥**

---

१. ब्रह्मा । २. ब्रह्मा यजमानम् । ३. दधिघर्ममवेक्षते । ४. दधिघर्मं गृह्णाति । ५. दधिघर्मं श्रीणाति । ६. दधिघर्मं जुहोति ।

मयि त्यदिन्द्रियं महत् । मयि दक्षो मयि क्रतुः। मयि धायि सुवीर्यम् । त्रिशुग्घर्मो विभातु मे । आकूत्या मनसा सह । विराजा ज्योतिषा सह । यज्ञेन पयसा सह । तस्य दोहमशीमहि । तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि । वाग्जुषाणा सोमस्य तृप्यतु॥

मित्रो जनान् [यातयति प्रजानन् मित्रो दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभि चष्टे सत्याय हव्यं घृतवद्विधेम ॥ ]
प्र स [ मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन ।
न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात् ॥ ]

तैआ [ ४.२१ ]—

[1]भूर्भुवः सुवः । मयि त्यदिन्द्रियं महत् । मयि दक्षो मयि क्रतुः। मयि धायि सुवीर्यम् । त्रिशुग्घर्मो विभातु मे । आकूत्या मनसा सह । विराजा ज्योतिषा सह । यज्ञेन पयसा सह । ब्रह्मणा तेजसा सह । क्षत्रेण यशसा सह । सत्येन तपसा सह । तस्य दोहमशीमहि । तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि । तस्य त इन्द्रेण पीतस्य मधुमतः । उपहूतस्योपहूतो भक्षयामि ॥

मैसं [ ४.९.१३-१४ ]—

भूर्भुवः स्वर्मयि तदिन्द्रियँ वीर्यं मयि रायो मयि रक्षो मयि दक्षो मयि क्रतुर्मयि धेहि सुवीर्यम् । तिसृभिर्घर्मो विभात्याकूत्या मनसा सह विराजा ज्योतिषा सह तपसा ब्रह्मणा सह तस्य दोहमशीमहि तस्य भक्षमशीमहि तस्य ता उपहूता उपहूतस्य भक्षयामि ॥

उदस्य शुष्माद्भानोर्नार्व्या बिभर्ति भारं पृथिवी न भूमीः ।
प्र शुक्रैतु देवी मनीषा अस्मत्सुतष्टो रथो न वाणीः ॥

काठसं [ २६.१ ]—अङ्गारान् पूर्वयोस्सवनयोर्विहरन्ति० ॥

[ २९.५ ]—यदधिघर्मेण मध्यंदिने० ॥

कपिसं [ ४०.४; ४५.६ ] = काठसं

वामासं—

यावती द्यावापृथिवी यावच्च सप्त सिन्धवो वितस्थिरे ।
तावन्तमिन्द्र ते ग्रहमूर्जा गृह्णाम्यक्षितं मयि गृह्णाम्यक्षितम् ॥
मयि त्यदिन्द्रियं बृहन्मयि दक्षो मयि क्रतुः ।
घर्मस्त्रिशुग्विराजति विराजा ज्योतिषा सह ब्रह्मणा तेजसा सह ।
पयसो रेत आभृतं तस्य दोहमशीमह्युत्तरामुत्तराँ समाम् ॥ ३८.२६-२८

---

१. भक्षमन्त्रः ।

माशब्रा [ १४.३.१.२९-३१ ]—अथ प्रसुते दधिघर्मेण प्रचरन्ति० स्तुते माध्यंदिने पवमाने० अग्निहोत्रहवण्या० स आनीयमान आह होतर्वदस्व यत्ते वाद्यम् इति। वदते ह्यत्र होता। अथोपोत्तिष्ठन्नाह श्रातꣳ हविः इति० अतिक्रम्याश्राव्याह दधिघर्मस्य यज इति। वषट्कृते जुहोति। अनुवषट्कृत आहरति भक्षम्। तं यजमानाय प्रयच्छति। स उपहवमिष्ट्वा भक्षयति मयि त्यदिन्द्रियं बृहत् .... इति० अथ चात्वाले मार्जयन्ते० ॥

वाकासं [ ३८.६ ] ≡ वामासं

काशब्रा [ १६.२.३.१९-२१ ] ≡ माशब्रा

अशौसं—

[1]पुनर्मैत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणं च।
पुनरग्नयो धिष्ण्या यथास्थाम कल्पयन्तामिहैव ॥ ७.६९.१
परि त्वाग्ने पुरं वयं विप्रं सहस्य धीमहि।
धृषद्वर्णं दिवेदिवे हन्तारं भङ्गुरावतः ॥ ७.७४.१
श्रातं मन्य ऊधनि श्रातमग्नौ सुशृतं मन्ये तदृतं नवीयः।
माध्यंदिनस्य सवनस्य दध्नः पिबेन्द्र वज्रिन् पुरुकृज्जुषाणः ॥ ७.७६.१

अपैसं—

पुनर्मैत्विन्द्रियं ... धिष्ण्यासो .... ॥ ३.१३.६ ॥ परि त्वाग्ने .... भिषग्वर्णं ....भङ्गुरावतम् ॥ १६.८.२

## १०५. दधिघर्मप्रचारहौत्रम्

ऋसं—

उत्तिष्ठताव पश्यतेन्द्रस्य भागमृत्वियम्।
यदि श्रातो जुहोतन यद्यश्रातो ममत्तन ॥
श्रातं हविरो ष्विन्द्र प्र याहि जगाम सूरो अध्वनो विमध्यम्।
परि त्वासते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तम् ॥
[2]श्रातं मन्य ऊधनि श्रातमग्नौ सुश्रातं मन्ये तदृतं नवीयः।
माध्यंदिनस्य सवनस्य दध्नः पिबेन्द्र वज्रिन् पुरुकृज्जुषाणः ॥१०.१७९.१-३

शांब्रा [ १५.१ ]—स्तुते पवमाने दधिघर्मेण चरन्ति० ॥

[ २९.२ ]—स्तुते पवमाने दधिघर्मेण चरन्ति० ॥

## १०६. सवनीयपशुपुरोडाशयागः

मैसं [ ३.९.५ ]—यत्पुरोडाशैर्माध्यंदिने सवने तेन माध्यंदिनꣳ सवनं पशुमत् ॥

१. सायणभाष्ये 'उत्तरयोः सवनयोः पुनः प्राणः ( ६.५३.२ ) पुनर्मैत्विन्द्रियम्' इति सूत्रमुद्धृतम्। मुद्रितसूत्रपाठे तु 'पुनः प्राणः' इति शब्दौ न स्तः। २. याज्या।

## १०७. सवनीयपशुपुरोडाशयागहौत्रम्

ऋसं—

[1]अग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा ।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शं योः ॥ १.१८९.२
[2]यथा विप्रस्य मनुषो हविर्भिर्देवाँ अयजः कविभिः कविः सन् ।
एवा होतः सत्यतर त्वमद्याग्ने मन्द्रया जुह्वा यजस्व ॥ १.७६.५
[3]प्र वः शुक्राय भानवे भरध्वं हव्यं मतिं चाग्नये सुपूतम् ।
यो दैव्यानि मानुषा जनूंष्यन्तर्विश्वानि विद्मना जिगाति ॥ ७.४.१

शांब्रा [ १२.७ ]—प्र वः शुक्राय भानवे भरध्वमिति शुक्रवती पुरोळाशस्य ॥

## १०८. सवनीयपुरोडाशयागः[4]

## १०९. सवनीयपुरोडाशयागहौत्रम्[5]

ऋसं—

[6]माध्यंदिनस्य सवनस्य धानाः पुरोळाशमिन्द्र कृष्वेह चारुम् ।
प्र यत् स्तोता जरिता तूर्ण्यर्थो वृषायमाण उप गीर्भिरीट्टे ॥ ३.५२.५

[7]होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपो माध्यंदिनस्य सवनस्य पुरोळाशाँ इन्द्रः प्रस्थिताञ्जुषाणो वेतु होतर्यज ॥ (खिलम् ५.७.४ आ )

[8]माध्यंदिने सवने जातवेदः पुरोळाशमिह कवे जुषस्व ।
अग्ने यह्वस्य तव भागधेयं न प्र मिनन्ति विदथेषु धीराः ॥ ३.२८.४
[9]होता यक्षदग्निं पुरोळाशानां जुषतां हविर्होतर्यज ॥ ( खिलम् ५.७.४ उ )
[10]असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा नः स्तोममन्धसो मदेषु ॥
प्र यन्ति यज्ञं विपयन्ति बर्हिः सोममादो विदथे दुध्रवाचः ।
न्यु भ्रियन्ते यशसो गृभादा दूरउपब्दो वृषणो नृषाचः ॥
त्वमिन्द्र स्रवितवा अपस्कः परिष्ठिता अहिना शूर पूर्वीः ।
त्वद्वावक्रे रथ्यो न धेना रेजन्ते विश्वा कृत्रिमाणि भीषा ॥

१. पुरोनुवाक्या । २. याज्या । ३. शाङ्खा० याज्या । ४. द्रष्टव्यं पृ. ३०१ । ५. द्रष्टव्यं पृ. ३०२ । ६. पुरोडाशयागपुरोनुवाक्या । ७. पुरोडाशयागप्रैषः । ८. स्विष्टकृत्पुरोनुवाक्या । ९. स्विष्टकृत्प्रैषः । १०. उन्नीयमानसूक्तम् ।

भीमो विवेषायुधेभिरेषामपांसि विश्वा नर्याणि विद्वान् ।
इन्द्रः पुरो जर्हृषाणो वि दूधोद्वि वज्रहस्तो महिना जघान ॥
न यातव इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः ।
स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः ॥
अभि क्रत्वेन्द्र भूरध ज्मन् न ते विव्यङ्महिमानं रजांसि ।
स्वेना हि वृत्रं शवसा जघन्थ न शत्रुरन्तं विविदद्युधा ते ॥
देवाश्चित् ते असुर्याय पूर्वेऽनु क्षत्राय ममिरे सहांसि ।
इन्द्रो मघानि दयते विषह्येन्द्रं वाजस्य जोहुवन्त सातौ ॥
कीरिश्चिद्धि त्वामवसे जुहावेशानमिन्द्र सौभगस्य भूरेः ।
अवो बभूथ शतमूते अस्मे अभिक्षत्तुस्त्वावतो वरूता ॥
सखायस्त इन्द्र विश्वह स्याम नमोवृधासो महिना तरुत्र ।
वन्वन्तु स्मा तेऽवसा समीकेऽभीतिमर्यो वनुषां शवांसि ॥
स न इन्द्र त्वयताया इषे धास्त्मना च ये मघवानो जुनन्ति ।
वस्वी षु ते जरित्रे अस्तु शक्तिर्यूयं पात स्वस्तिभिः सदा नः॥ ७.२१.१-१०

ऐब्रा [ ६.९ ]—दश माध्यंदिनेऽन्वाह० तद्यदेतानि केवलसूक्तान्यन्वाह० ते हैके सप्त सप्तान्वाहुः० सप्त माध्यंदिने० तत्तथा न कुर्यात्० केवलश एव सूक्तान्यनुब्रूयात् ॥

[ ६.११ ]—असावि देवं गोऋजीकमन्ध इति माध्यंदिने उन्नीयमानेभ्योऽन्वाह । वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धाः । ऐन्द्रीरन्वाह० त्रिष्टुभोऽन्वाह० ॥

शांब्रा [ १५.१ ]—अथ हविष्पङ्क्त्या चरन्ति० तस्या उक्तं ब्राह्मणम्० ॥

[ २९.२ ]—अथ हविष्पङ्क्त्या चरन्ति तस्या उक्तं ब्राह्मणम् । वासिष्ठीर्मध्यंदिन उन्नीयमानेभ्योऽन्वाह० ता वा आवत्यो हरिवत्यो भवन्ति० ता वा ऐन्द्यस्त्रिष्टुभो भवन्ति० ता वै दशान्वाह० ॥

## ११०. शुक्रामन्थिप्रचारः[1]

तैसं [ ६.१.६.४ ]— द्वे सवने शुक्रवती प्रातःसवनं च माध्यंदिनं च ॥

कासं [ २३.१० ]—[2]तस्माद् द्वे सवने शुक्रवती०॥

कपिसं [ ३७.१ ] = कासं

माशब्रा [ ४.३.२.१९ ]—एते वै शुक्रवती रसवती सवने यत् प्रातःसवनं च माध्यंदिनं च सवनम् ॥

काशब्रा [ ५.३.४.१४ ] = माशब्रा

१. द्रष्टव्यं पृ. ३०७-३११ । २. इदं वाक्यं पृ. ३१० इत्यत्रापावधारणीयम् ।

## १११. शुक्रामन्थिप्रचारहौत्रम्

ऋसं—

[1]होता यक्षदिन्द्रं माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्याचारं पातारं श्रोतारं हवमागन्तारमस्या धियोऽवितारं सुन्वतो यजमानस्य वृधमोभा कुक्षी पृणतां वार्त्रघ्नं च माघोनं चेमे अस्मै शुक्रामन्थिनः प्रस्थिता इन्द्राय सोमास्ताञ्जुषतां वेतु पिबतु सोमं होतर्यज ॥ खिलम् ५.७.४ (अः)

[2]पिबा सोममभि यमुग्र तर्द ऊर्वं गव्यं महि गृणान इन्द्र ।
वि यो धृष्णो वधिषो वज्रहस्त विश्वा वृत्रममित्रिया शवोभिः ॥ ६.१७.१

ऐब्रा [ ६.११ ]—ते वै खलु सर्व एव माध्यंदिने प्रस्थितानां प्रत्यक्षादैन्द्रीभिर्यजन्ति । अभितृण्णवतीभिरेके । पिबा सोममभि यमुग्र तर्द इति होता यजति ॥

शांब्रा [ १५.१ ]—भारद्वाज्या माध्यंदिने प्रस्थितानां यजति० सा वा ऐन्द्री त्रिष्टुब्भवति० अनुवषट्करोति० ॥

गोब्रा [ २.२.२१ ]—ते वै खलु सर्व एव माध्यंदिने प्रस्थितानां प्रत्यक्षादैन्द्रीभिर्यजन्ति । अभितृण्णवतीभिरेके । पिबा सोममभि यमुग्र तर्दः इति होता यजति० ॥

## ११२. होत्रकचमसप्रचारः[3]

## ११३. होत्रकचमसप्रचारहौत्रम्

ऋसं—

[4]स ईं पाहि य ऋजीषी तरुत्रो यः शिप्रवान् वृषभो यो मतीनाम् ।
यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः स इन्द्र चित्राँ अभि तृन्धि वाजान् ॥
[5]एवा पाहि प्रत्नथा मन्दतु त्वा श्रुधि ब्रह्म वावृधस्वोत गीर्भिः ।
आविः सूर्यं कृणुहि पीपिहीषो जहि शत्रूँरभि गा इन्द्र तृन्धि ॥ ६.१७.२-३
[6]अर्वाङेहि सोमकामं त्वाहुरयं सुतस्तस्य पिबा मदाय ।
उरुव्यचा जठर आ वृषस्व पितेव नः शृणुहि हूयमानः ॥ १.१०४.९
[7]तवायं सोमस्त्वमेह्यर्वाङ् शश्वत्तमं सुमना अस्य पाहि ।
अस्मिन् यज्ञे बर्हिष्या निषद्या दधिष्वेमं जठर इन्दुमिन्द्र ॥ ३.३५.६
[8]इन्द्राय सोमाः प्रदिवो विदाना ऋभुर्येभिर्वृषपर्वा विहायाः ।
प्रयम्यमानान् प्रति षू गृभायेन्द्र पिब वृषधूतस्य वृष्णः ॥ ३.३६.२

१. प्रैषः । २. याज्या । ३. द्रष्टव्यं पृ. ३१९ । ४. मैत्रावरुणस्य प्रस्थितयाज्या । ५. ब्राह्मणाच्छंसिनः प्रस्थितयाज्या । ६. पोतुः प्रस्थितयाज्या । ७. नेष्टुः प्रस्थितयाज्या । ८. अच्छावाकस्य प्रस्थितयाज्या ।

[1]आपूर्णो अस्य कलशः स्वाहा सेक्तेव कोशं सिसिचे पिबध्यै ।
समु प्रिया आववृत्रन् मदाय प्रदक्षिणिदभि सोमास इन्द्रम् ॥ ३.३२.१५

ऐब्रा [ ६.११ ]—स ईं पाहि य ऋजीषी तरुत्र इति मैत्रावरुणो यजति । एवा पाहि प्रत्नथा मदन्तु त्वेति ब्राह्मणाच्छंसी यजति । अर्वाङेहि सोमकामं त्वाहुरिति पोता यजति । तवायं सोमस्त्वमेह्यर्वाङिति नेष्टा यजति । इन्द्राय सोमाः प्रदिवो विदाना इत्यच्छावाको यजति । आपूर्णो अस्य कलशः स्वाहेत्याग्नीध्रो यजति० ॥

शांब्रा [ १५.१ ]—अथ होत्राः संयजन्ति । तासामुक्तं ब्राह्मणम् ॥

[ २९.२ ]—अथ होत्राः संयजन्ति । तासामुक्तं ब्राह्मणम् । ऐन्द्रीभिस्त्रिष्टुब्भिर्मध्यंदिने प्रस्थितानां यजन्ति० अनुवषट्कुर्वन्ति० ॥

तैब्रा [ २.४.३.११-१३ ]—

[2]प्र यत्सिन्धवः प्रसवं यदायन् । आपः समुद्रꣳ रथ्येव जग्मुः ।
अतश्चिदिन्द्रः सदसो वरीयान् । यदीꣳ सोमः पृणति दुग्धो अꣳशुः ॥
ह्वयामसि त्वेन्द्र याह्यर्वाङ् । अरं ते सोमस्तनुवे भवाति ।
शतक्रतो मादयस्वा सुतेषु । प्रास्माꣳ अव पृतनासु प्र युत्सु ॥
इन्द्राय सोमाः प्रदिवो विदानाः । ऋभुर्येभिर्वृषपर्वा विहायाः ।
प्रयम्यमाणान् प्रति षू गृभाय । इन्द्र पिब वृषधूतस्य वृष्णः ॥
अहेडमान उपयाहि यज्ञम् । तुभ्यं पवन्त इन्दवः सुतासः ।
गावो न वज्रिन्त्स्वमोको अच्छ । इन्द्रागहि प्रथमो यज्ञियानाम् ॥
या ते काकुत्सुकृता या वरिष्ठा । यया शश्वत्पिबसि मध्व ऊर्मिम् ।
तया पाहि प्र ते अध्वर्युरस्थात् । सं ते वज्रो वर्ततामिन्द्र गव्युः ॥

[ २.५.८.१ ]—

[3]स ईं पाहि य ऋजीषी तरुत्रः । यः शिप्रवान् वृषभो यो मतीनाम् ।
यो गोत्रभिद्वज्रभृद्यो हरिष्ठाः । स इन्द्र चित्राꣳ अभितृन्धि वाजान् ॥

अश्रौसं—

एवा पाहि प्रत्नथा मन्दतु त्वा .... ॥

१. आग्नीध्रस्य प्रस्थितयाज्या । २. एतदादयः पञ्चेन्द्रलिङ्गका मन्त्रा माध्यंदिनसवने प्रस्थितयाज्या इष्टव्या इति सायणभाष्यम् । ३. प्रस्थितयाज्येति सायणभाष्यम् ।

अर्वाङेहि सोमकामं त्वाहुरयं .... ॥

आपूर्णो अस्य कलशः स्वाहा .... ॥

गोब्रा [ २.२.२१ ]—स ईं पाहि य ऋजीषी तरुत्रः इति मैत्रावरुणः । एवा पाहि प्रत्नथा मन्दतु त्वेति ब्राह्मणाच्छंसी । अर्वाङेहि सोमकामं त्वाहुरिति पोता। तवायं सोमस्त्वमेह्यर्वाङ् इति नेष्टा । इन्द्राय सोमः प्रदिवो विदानाः इत्यच्छावाकः । आपूर्णो अस्य कलशः स्वाहेत्याग्नीध्रः० ॥

## ११४. सवनीयेडा

शांब्रा [ १५.१ ]—अथेलाथ होतृचमसः । तस्योक्तं ब्राह्मणम् ॥

[ २९.२ ]—अथेलाथ होतृचमसः । तस्योक्तं ब्राह्मणम् ॥

अश्रौसं—

त्वे क्रतुमपि पृञ्चन्ति भूरि द्विर्यदेते त्रिर्भवन्त्यूमाः ।

स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः ॥ ५.२.३

अपैसं—

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते.... ॥ ६.१.३

## ११५. सवनमुखसोमभक्षणम्[1]

तैसं [ ३.२.५.२ ]—

रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि ॥

ऋसं—

[2]सं ते पयांसि समु यन्तु वाजाः.... ॥ १.९१.१८

साकौसं [ आरण्य ३.२ ]—

[3]सं ते पयाँऽसि समु यन्तु वाजाः ....॥

तांब्रा [ १.५.१३ ]—

इन्दविन्द्रपीतस्य त इन्द्रियावतस्त्रिष्टुप्छन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥

---

१. द्रष्टव्यं पृ. ३१५। २. शाङ्खा०मते आप्यायनी। ३. आप्यायनमन्त्रः।

षब्रा [ २.६ ]—स माध्यंदिने सवने सवनमुखीयेष्वाहुतेषूपहवमिच्छते वाङ्मे होता स मोपह्वयताम्। होतरुप मा ह्वयस्व इत्युच्चैः। चक्षुर्मेऽध्वर्युः स मोपह्वयताम्।अध्वर्य उप मा ह्वयस्व इत्युच्चैः। मनो मे ब्रह्मा स मोपह्वयताम्। ब्रह्मन्नुप मा ह्वयस्व इत्युच्चैः। श्रोत्रं म उद्गाता स मोपह्वयताम्। उद्गातरुप मा ह्वयस्व इत्युच्चैः। योऽयमन्तश्चक्षुष्याकाशः स मे सदस्यः स मोपह्वयताम्। सदस्योप मा ह्वयस्व इत्युच्चैः। या इमा अन्तश्चक्षुष्यापस्ते मे होत्राशꣳसिनस्ते मोपह्वयन्ताम्। होत्राशꣳसिन उप मा ह्वयध्वम् इत्युच्चैः। अङ्गानि मे चमसाध्वर्यवस्ते मोपह्वयन्ताम्। चमसाध्वर्यव उप मा ह्वयध्वम् इत्युच्चैः० स उपहूतो भक्षयति० ॥

साजैसं [ २.१.२ ] —

संं ते पयाꣳसि .... सं वृष्णियान्यभिमातिषाहः ।....॥

## ११६. दक्षिणाः

तैसं [ १.४.४३ ]—

उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम् ॥
चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।
आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ॥
अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥

दिवं गच्छ सुवः पत ॥ रूपेण वो रूपमभ्यैमि वयसा वयः ॥ तुथो वो विश्ववेदा वि भजतु वर्षिष्ठे अधि नाके ॥ एतत् ते अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीः ॥ ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यꣳ सुधातुदक्षिणम् ॥ वि सुवः पश्य व्यन्तरिक्षम् ॥ यतस्व सदस्यैः ॥ अस्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातारमा विशतानवहायास्मान् देवयानेन पथेत सुकृतां लोके सीदत तन्नः सꣳस्कृतम् ॥

[ ६.६.१ ]—सुवर्गाय वा एतानि लोकाय हूयन्ते यद्दाक्षिणानि। द्वाभ्यां गार्हपत्ये जुहोति० आग्नीध्रे जुहोति० सदोऽभ्यैति० सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति० नयवत्यर्चाग्नीध्रे जुहोति० दिवं गच्छ सुवः पतेति हिरण्यꣳ हुत्वोद्गृह्णाति० हिरण्यं ददाति० अग्नीधे ददाति० ब्रह्मणे ददाति० होत्रे ददाति० ॥

[ ६.१.६ ]—माध्यंदिने सवने दक्षिणा नीयन्ते०॥

[ ६.३.१ ]— उत्तरेणाग्नीध्रं परीत्य जुहोति दाक्षिणानि०॥

[ ३.२.८ ]—

यज्ञपतिमृषय एनसाहुः प्रजा निर्भक्ता अनुतप्यमानाः ।
मधव्यौ स्तोकावप तौ रराध सं नस्ताभ्याᳬ सृजतु विश्वकर्मा ॥
घोरा ऋषयो नमो अस्त्वेभ्यश्चक्षुष एषां मनसश्च सन्धौ ।
बृहस्पतये महि षद् द्युमन्नमो नमो विश्वकर्मणे स उ पात्वस्मान् ॥
अनन्यान्त्सोमपान् मन्यमानः प्राणस्य विद्वान्त्समरे न धीरः ।
एनश्चकृवान् महि बद्ध एषां तं विश्वकर्मन् प्र मुञ्चा स्वस्तये ॥
ये भक्षयन्तो न वसून्यानृहुर्यानग्नयोऽन्वतप्यन्त धिष्णियाः ।
इयं तेषामवया दुरिष्ट्यै स्विष्टिं नस्तां कृणोतु विश्वकर्मा ॥
नमः पितृभ्यो अभि ये नो अख्यन् यज्ञकृतो यज्ञकामाः सुदेवाः ।
अकामा वो दक्षिणां न नीनिम मा नस्तस्मादेनसः पापयिष्ट ॥
[ ३.२.८ ]—यद्वैश्वकर्मणानि जुहोति० ॥

[ ३.५.३ ]—

अग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेण पूर्वजान् भ्रातृव्यानधरान् पादयाम्यवैनान् बाधे प्रत्येनान्नुदेऽस्मिन् क्षयेऽस्मिन् भूमिलोके योऽस्मान् द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि ॥

इन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण सहजान् [भ्रातृव्यानधरान् पादयाम्यवैनान् बाधे प्रत्येनान्नुदेऽस्मिन् क्षयेऽस्मिन् भूमिलोके योऽस्मान् द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि ] ॥

विश्वेभिर्देवेभिः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेणापरजान् [ भ्रातृव्यानधरान् पादयाम्यवैनान् बाधे प्रत्येनान्नुदेऽस्मिन् क्षयेऽस्मिन् भूमिलोके योऽस्मान् द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि ] ॥

[ ३.५.४ ]—

ये देवा यज्ञहनः पृथिव्यामध्यासते ।
अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥
[ ये देवा ] यज्ञमुषः [ पृथिव्यामध्यासते ।
अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ] ॥

आगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति ।
नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥
ये देवा यज्ञहनोऽन्तरिक्षेऽध्यासते ।
वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥
[ ये देवा ] यज्ञमुषो [ऽन्तरिक्षेऽध्यासते ।
वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ]॥
यास्ते रात्रीः सवितर्देवयानीरन्तरा द्यावापृथिवी वियन्ति ।
गृहैश्च सर्वैः प्रजया न्वग्रे सुवो रुहाणास्तरता रजाँसि ॥
ये देवा यज्ञहनो दिव्यध्यासते ।
सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥
[ये देवा] यज्ञमुषो [ दिव्यध्यासते ।
सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ]॥
येनेन्द्राय समभरः पयाँस्युत्तमेन हविषा जातवेदः ।
तेनाग्ने त्वमुत वर्धयेमँ सजातानाँ श्रैष्ठ्य आ धेह्येनम् ॥
[ ६.१.३ ]—नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति[1]० ॥

मैसं [ १.३.३७ ]—

उदु त्यं जातवेदसं.... ॥ चित्रं देवानामुदगादनीकं .... ॥ द्यां गछ स्वर्गछ ॥ रूपँ वो रूपेणाभ्येमि वयसा वयः ॥ तुथो वो विश्ववेदा विभजतु वर्षिष्ठे अधि नाके पृथिव्याः ॥ एतत्ते अग्ने राध एति सोमच्युतं तन्मित्रस्य पथा नय ॥

अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयँ शत्रून् जयतु जर्हृषाणोऽयँ वाजं जयतु वाजसातौ ॥

ऋतस्य पथा प्रेत चन्द्रदक्षिणाः ॥ ब्राह्मणमद्य ऋध्यासं पितृमन्तं पैतृमत्यमृषिमार्षेयँ सुधातुदक्षिणम् ॥ वि स्वः पश्य व्यन्तरिक्षँ यतस्व सदस्यैः॥ अस्मद्राता मधुमतीर्देवत्रा गछत प्रदातारमाविशतानवहायास्मान् देवयानेन पथा सुकृतां लोके सीदत तन्नः सँस्कृतम् ॥

[ ४.६.८ ]— मरुत्वतीययोः सन्नयोर्दक्षिणा दीयन्ते० मरुत्वतीयान् दक्षिणा नातिदीयन्ते० ॥

[ ४.८.३ ]—यन्माध्यंदिने सवने दक्षिणा दीयन्ते० बहु देयम्० हिरण्यँ हस्ते भवत्यथ नयति० अग्रेण गार्हपत्यं जघनेन सदस्ता उदीचीरुत्सृजन्त्यन्तरा चात्वालं चामीध्रं

1. यजमानः ।

च० द्वाभ्यां गार्हपत्ये जुहोति० आग्नेय्याग्नीध्रे० अथ यद्दक्षिणा दीयन्ते० अग्नीधेऽग्रे ददाति० ब्रह्मणे ददाति० ऋत्विग्भ्यो ददाति० या॰ सदस्येभ्यो ददाति० यामार्षेयाय शुश्रुवुषे ददाति० यामनार्षेयाय शुश्रुवुषे० यामप्रसृताय ददाति० या॰ याचमानाय ददाति भ्रातृव्यं तया जिन्वति। यां भीषा क्षत्रं तया ब्रह्माप्ति० यां प्रतिनुदते सा व्याघ्री दक्षिणा। यत्तां पुनः प्रतिगृह्णीयाद् व्याघ्येनं भूता प्रम्लिनीयात्। अन्यया सह प्रतिगृह्या० यदजं ददाति० यदविं ददाति० यद्गां ददाति० यद्वासो ददाति० यत् कृतान्नं ददाति० यदनो वा रथ॰ वा० यद्धिरण्यं ददाति० यदश्वं ददाति० अन्ततः प्रतिहर्त्रे देयम्० यदात्रेयाय हिरण्यं ददाति० ॥

**कासं [ ४.९ ]—**

**उदु त्यं जातवेदसं .... ॥ चित्रं देवानामुदगादनीकं .... ॥ द्यां गच्छ स्वर्गच्छ ॥ रूपं वो रूपेणाभ्यागां वयसा वयः ॥ तुथो वो विश्ववेदा विभजतु वर्षिष्ठेऽधि नाके ॥ एतत्ते अग्ने राध एति सोमच्युतं तन्मित्रस्य पथा नय ॥ ऋतस्य पथा प्रेत चन्द्रदक्षिणाः ॥ ब्राह्मणमद्यर्ध्यासं पितृमन्तं पैतृमत्यमृषिमार्षेयं सुधातुदक्षिणम् ॥ अयं नो अग्निर्वरिवः कृणोत्वयं .... ॥ वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्न्यासु। हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्रौ ॥ वि स्वः पश्य व्यन्तरिक्षं यतस्व सदस्यैः ॥ अस्मद्राता मधुमती देवत्रा गच्छ ॥ प्रदातारमाविशानवहायास्मान् देवि दक्षिणे देवयानेन पथा यती सुकृतां लोके सीद तन्नो संस्कृतम् ॥**

[ २८.४-५ ]—यद्दक्षिणा ददाति० बहु देयम्० सौरीभ्यां जुहोति० द्वाभ्याम्० अन्तराग्नीध्रं च सदश्च नयति० यदाग्नीध्राद्दक्षिणा दक्षिणा नयन्ति० आग्नेय्याग्नीध्रे जुहोति० वारुण्या द्वितीयया जुहुयाद्यद्यश्वं वानो वा रथं वा दास्यन् स्यात्० अग्नीधेऽग्रे ददाति० उपबर्हणं ददाति० हिरण्यं ददाति० यां कण्वकश्यपेभ्यो ददाति नीहारस्तया प्रथते० अत्रिहिरण्यं ददाति० यद्यात्रेयं न विन्देद्य आर्षेयस्संहितस्तस्मै दद्यात्० दक्षिणा प्रतिनुद्या न प्रतिगृह्या। न गोषु चालयेत्० यद्गां ददाति० यद्वासो ददाति० यदश्वं ददाति० यदनो यद्रथं ददाति० यदविं यदजां ददाति० यदोदनं यन्मन्थं ददाति० यद्गां ददाति० यद् ब्रह्मणे ददाति० यदुद्गात्रे ददाति० यद्धोत्रे ददाति० यदध्वर्युभ्यां ददाति० यदृत्विग्भ्यो ददाति० यत् सदस्येभ्यो ददाति० यां ब्राह्मणाय श्रोत्रियायानृत्विजे प्रसृताय ददाति० यामब्राह्मणायाश्रोत्रियायानृत्विजे प्रसृताय ददाति० ग्रामकामो ददाति तस्मात् क्षत्रं ब्रह्मात्ति। यां याचितो ददाति भ्रातृव्यं तया जिन्वति। यां बहिर्वेदि ददाति नैनं सा गच्छति। यां ज्ञातयेऽनृत्विजे प्रसृताय ददाति पाप्मानं तं निधत्ते०॥

**कपिसं [ ३.७ ]—**

--- ॥ तूथो वो .... ॥ --- ॥ अयं नो अग्निर्वरिवस्कृणोत्वयं .... ॥ --- ॥
[ ४४.४-५ ] ≡ कासं

**वामासं—**

उदु त्यं जातवेदसं .... सूर्यं स्वाहा ॥ चित्रं देवानामुदगादनीकं .... तस्थुषश्च स्वाहा ॥ अग्ने नय सुपथा .... विधेम स्वाहा ॥

अयं नो अग्निर्वरिवस्कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयं वाजाञ्जयतु वाजसातावयं शत्रूञ्जयतु जर्हृषाणः स्वाहा ॥

रूपेण वो रूपमभ्यागां तुथो वो विश्ववेदा विभजतु । ऋतस्य पथा प्रेत चन्द्रदक्षिणाः ॥ वि स्वः पश्य व्यन्तरिक्षम् ॥ यतस्व सदस्यैः ॥ ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमृषिमार्षेयं सुधातुदक्षिणम् ॥ अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत ॥ अग्नये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीयायुर्दात्र एधि मयो मह्यं प्रतिग्रहीत्रे ॥ रुद्राय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय प्राणो दात्र एधि वयो मह्यं प्रतिग्रहीत्रे ॥ बृहस्पतये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय त्वग्दात्र एधि मयो मह्यं प्रतिग्रहीत्रे ॥ यमाय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय हयो दात्र एधि मयो मह्यं प्रतिग्रहीत्रे ॥ कोऽदात् कस्मा अदात् कामोऽदात् कामायादात् । कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥ ७.४१-४८

माशब्रा [ ४.३.४ ]– दक्षिणा ददाति । तद्वै षड् द्वादशेत्येव हविर्यज्ञे ददति । न ह त्वेवाशतदक्षिणः सौम्योऽध्वरः स्यात्० ऋत्विग्भ्य एव दक्षिणा दद्यान्नानृत्विग्भ्यः । अथ प्रतिपरेत्य गार्हपत्यं दाक्षिणानि जुहोति। स दशाहोमीये वाससि हिरण्यं प्रबध्यावधाय जुहोति० सौरीभ्यामृग्भ्यां जुहोति० स जुहोति उदु त्यं.... सूर्यं स्वाहेत्येतया गायत्र्या० अथ द्वितीयां जुहोति चित्रं देवानाम्....तस्थुषश्च स्वाहेत्येतया त्रिष्टुभा० अथाग्नीध्रे द्वे वैकां वा जुहोति० स जुहोति अग्ने नय सुपथा....विधेम स्वाहेति। अथ यद्यश्वं युक्तं वायुक्तं वा दास्यन्त्स्यादथ द्वितीयां जुहुयाद् यद्यु न नाद्रियेत। स जुहोति अयं नो अग्निर्....जर्हृषाणः स्वाहेति० अथ हिरण्यमादाय शालामभ्यैति । दक्षिणेन वेदिं दक्षिणा उपतिष्ठन्ते। सोऽग्रेण शालां तिष्ठन्नभिमन्त्रयते रूपेण वो रूपमभ्यागां.... इति० अथ सदोऽभ्यैति वि स्वः पश्य व्यन्तरिक्षमिति० अथ सदः प्रेक्षते यतस्व सदस्यैरिति० अथ हिरण्यमादायाग्नीध्रमभ्यैति ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यम् .... इति० अथैवमुपसत्याग्नीध्रे हिरण्यं ददाति अस्मद्राता देवत्रा गच्छत.... इति० अग्नीधे प्रथमाय दक्षिणां ददाति ।

अथैवमेवोपसद्यात्रेयाय हिरण्यं ददाति० अथ ब्रह्मणे० अथोद्गात्रे। अथ होत्रे। अथाध्वर्युभ्यां हविर्धान आसीनाभ्याम्। अथ पुनरेत्य प्रस्तोत्रे। अथ मैत्रावरुणाय। अथ ब्राह्मणाच्छंसिने। अथ पोत्रे। अथ नेष्ट्रे। अथाच्छावाकाय। अथोन्नेत्रे। अथ ग्रावस्तुते। अथ सुब्रह्मण्यायै। प्रतिहर्त्रे उत्तमाय ददाति० चतस्रो वै दक्षिणाः। हिरण्यम्० अथ गौः० अथ वासः० अथाश्वः० स हिरण्यं प्रत्येति अग्नये त्वा मह्यं वरुणो ददातु .... इति० अथ गां प्रत्येति रुद्राय त्वा मह्यं वरुणो ददातु....इति० अथ वासः प्रत्येति बृहस्पतये त्वा मह्यं वरुणो ददातु....इति० अथाश्वं प्रत्येति यमाय त्वा मह्यं वरुणो ददातु .... इति० अथ यदन्यद्ददाति० तत्प्रत्येति कोऽदात् कस्मा अदात् .... कामैतत्त इति० ॥

वाकासं —

उदु त्यं .... सूर्यम् ॥ चित्रं....तस्थुषश्च ॥ अग्ने नय....विधेम ॥ अयं नो.... वाजसाता अयः....॥--- ॥ब्राह्मणमद्य विदेय....॥ अस्मद्राता देवत्रा गच्छ प्रदातारमाविश ॥ अग्नये त्वा....सोऽमृतत्वमश्यात्....॥ रुद्राय त्वा.... सोऽमृतत्वमश्यात् ....मयो मह्यं प्रतिगृहीत्रे ॥ बृहस्पतये त्वा .... सोऽमृतत्वमश्यात् .... ॥ यमाय त्वा .... सोऽमृतत्वमश्यात्। वयो दात्र एधि मयो....॥ कोऽदात् कस्मा .... कामैतत्ते तव काम सता भुनजामहै ९.२.१-९ ॥

काशब्रा [ ५.४.१ ] --- अथात्रेयमभ्यैति क आत्रेयं क आत्रेयं क आत्रेयमिति तस्मा उपसद्य हिरण्यं ददाति --- अपि ये प्रसृप्तास्तेभ्यो दत्त्वा प्रतिहर्त्रे एवोत्तमाय ददाति --- ॥

ऐब्रा [ ३.२५ ]— मध्यंदिने दक्षिणा नीयन्ते० ।

[ ३.११ ]—अश्वं निविदां शंस्ते दद्यात्०।

[ ५.३४ ]—अर्धमेव ब्रह्मण आसार्धमितरेषामृत्विजाम् ।

[ ६.३ ]—तदाहुः कस्मादस्मा ऋषभं दक्षिणामभ्याजन्तीति० दक्षिणा अनु सुब्रह्मण्या संतिष्ठते० ॥

शांब्रा [ १५.१ ]—हुतेषु दाक्षिणेषु दक्षिणा नीयन्ते० ॥

[ २९.२ ]—हुतेषु दाक्षिणेषु दक्षिणा नीयन्ते तासामुक्तं ब्राह्मणम् ॥

तांब्रा [ १.७-८ ]—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि। वरुणस्त्वा नयतु देवि दक्षिणे। अश्वोऽस्यत्योऽसि मयोऽसि हयोऽसि वाज्यसि सप्तिरर्वासि वृषासि। तेनामृतत्वमशीय वयो दात्रे भूयान्मह्यं प्रतिग्रहीत्रे। क इदं कस्मा अदात् कामः कामायादात् कामो दाता कामःप्रतिग्रहीता कामः समुद्रमाविशत् कामेन त्वा प्रतिगृह्णामि कामैतत्ते ॥ आदित्यानां पत्मान्विहि नमस्तेऽस्तु मा मा हिंसीः ॥ वायोष्ट्वा

तेजसा प्रतिगृह्णामि ॥ नक्षत्राणां त्वा रूपेण प्रतिगृह्णामि ॥ सूर्यस्य त्वा वर्चसा प्रतिगृह्णामि ॥ रथन्तरमसि ॥ वामदेव्यमसि ॥ बृहदसि ॥ अङ्क्कान्यङ्कू अभितो रथं यौ ध्वान्तौ वाताग्रमभिसंचरन्तौ दूरे हेतिरिन्द्रियवान् पतत्री ते नोऽग्नयः पप्रयः पारयन्तु ॥ वैश्वानरः पप्रथा नाकमारुह दिवः पृष्ठे मन्दमानः सुमन्मभिः सपूर्ववज्जनयञ्जन्तवे धनाः समानमय्मन् पर्येति जागृविः ॥ गिदैष ते रथ एष वामश्विना रथोऽरिष्टो विश्वभेषजः ॥ कृशानो सव्यानायच्छ ॥ दासानो दक्षिणानवगृहाण ॥ देवस्य त्वा सवितुः प्रसवे .... वरुणायाश्वं तेनामृतत्वमशीय ....॥ देवस्य त्वा सवितुः प्रसवे.... रुद्राय गां तयामृतत्वमशीय.... ॥ देवस्य त्वा सवितुः....अग्नयेऽजं तेनामृतत्वमशीय....॥ देवस्य त्वा सवितुः....अग्नये हिरण्यं तेनामृतत्वमशीय....॥ देवस्य त्वा सवितुः....अग्नीषोमाभ्यामजां तयामृतत्वमशीय ....॥ अन्नस्यान्नपतिः प्रादादनमीवस्य शुष्मिणो नमो विश्वजनस्य क्षामाय भुञ्जति मा मा हिंꣳसीः ॥ देवस्य त्वा सवितुः प्रसवे .... त्वष्ट्रेऽविं तयामृतत्वमशीय .... ॥ देवस्य त्वा सवितुः प्रसवे .... यास्त्वाकृन्तन्नपसोऽतन्वत वयित्र्योऽत्नयन् ॥ देवस्य त्वा सवितुः .... बृहस्पतये वासस्तेनामृतत्वमशीय .... ॥ देवस्य त्वा सवितुः .... उत्तानायाङ्गिरसायाप्राणत् तेनामृतत्वमशीय .... ॥ देवस्य त्वा सवितुः प्रसवे .... पूष्ण उष्ट्रं तेनामृतत्वमशीय ....॥ देवस्य त्वा सवितुः प्रसवे....वायवे मृगं तेनामृतत्वमशीय....॥ देवस्य त्वा सवितुः ....प्रजापतये पुरुषं तेनामृतत्वमशीय....॥देवस्य त्वा सवितुः प्रसवे....प्रजापतये हस्तिनं तेनामृतत्वमशीय....॥ देवस्य त्वा सवितुः प्रसवे....प्रजापतये वराहं तेनामृतत्वमशीय ....॥ देवस्य त्वा सवितुः प्रसवे....प्रजापतये व्रीहियवाꣳस्तैरमृतत्वमशीय....॥ देवस्य त्वा सवितुः प्रसवे .... क्षेत्रपतये तिलमाषास्तैरमृतत्वमशीय....॥ देवस्य त्वा सवितुः प्रसवे .... सवित्रेऽश्वतरं तेनामृतत्वमशीय .... ॥ देवस्य त्वा सवितुः प्रसवे .... सवित्रेऽश्वतरीं तयामृतत्वमशीय .... ॥

[ ६.६.११ ]—तस्मादात्रेयं चन्द्रेणेच्छन्ति० ॥

[ ७.४.१ ]—यद् बृहत्याः स्तोत्रे दक्षिणा दीयन्ते० ॥

षब्रा [ १.२ ]—अनो युक्तं सुब्रह्मण्याय ददाति० ॥

जैब्रा [ १.८० ]—सर्वेषु लोकेषु ज्योतिर्धत्ते य एवं विद्वानत्रिहिरण्यं ददाति ॥

अशौसं—

उदु त्यं जातवेदसं....॥१३.२.१६॥ चित्रं देवानामुदगादनीकं....॥१३.२.३५

आ गावो अग्मन्नुत भद्रमक्रन्त्सीदन्तु गोष्ठे रणयन्त्वस्मे ।

प्रजावतीः पुरुरूपा इह स्युरिन्द्राय पूर्वीरुषसो दुहानाः ॥

इन्द्रो यज्वने गृणते च शिक्षत उपेद्ददाति न स्वं मुषायति ।
भूयो भूयो रयिमिदस्य वर्धयन्नभिन्ने खिल्ये नि दधाति देवयुम् ॥
न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति ।
देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिः सह ॥
न ता अर्वा रेणुककाटोऽश्नुते न संस्कृतत्रमुप यन्ति ता अभि ।
उरुगायमभयं तस्य ता अनु गावो मर्तस्य वि चरन्ति यज्वनः ॥
गावो भगो गाव इन्द्रो म इच्छाद्गावः सोमस्य प्रथमस्य भक्षः ।
इमा या गावः स जनास इन्द्र इच्छामि हृदा मनसा चिदिन्द्रम् ॥
यूयं गावो मेदयथा कृशं चिदश्रीरं चित्कृणुथा सुप्रतीकम् ।
भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु ॥
प्रजावतीः सूयवसे रुशन्तीः शुद्धा अपः सुप्रपाणे पिबन्तीः ।
मा व स्तेन ईशत माघशंसः परि वो रुद्रस्य हेतिर्वृणक्तु ॥ ४.२१
सं वः सृजत्वर्यमा सं पूषा सं बृहस्पतिः ।
समिन्द्रो यो धनंजयो मयि पुष्यत यद्वसु ॥
संजग्माना अबिभ्युषीरस्मिन् गोष्ठे करीषिणीः ।
बिभ्रतीः सोम्यं मध्वनमीवा उपेतन ॥ ३.१४.२-३
यस्यां पूर्वे भूतकृत ऋषयो गा उदानृचुः ।
सप्त सत्रेण वेधसो यज्ञेन तपसा सह ॥ १२.१.३९
इहेदसाथ न परो गमाथेर्यो गोपाः पुष्टपतिर्व आजत् ।
अस्मै कामायोप कामिनीर्विश्वे वो देवा उपसंयन्तु ॥ ३.८.४

**अपैसं—**

उदु त्यं ....॥१८.२२.१॥ चित्रं देवानाम् ....॥ १८.२४.२ ॥ सं वः सृजातु .... धनंजय इह पुष्यति यद् वसु ॥ २.१३.१ ॥ संजग्माना अविहुता .... सोम्यं हविः स्वावेशा म एतन ॥ २.१३.५ ॥ यस्यां पूर्वे .... पयसा सह ॥ १७.४.१० ॥ इहेदसाथ .... पुष्टिपतिर्व आजत् । अस्मै वः कामा उप कामिनीर्विश्वेदेवा उप सत्यामिह ॥ १.१८.४ ॥

गोभ्रा [ १.२.१७ ]—आत्रेयाय प्रथमं दक्षिणा यज्ञे दीयन्ते० ॥

[ २.३.१७-१९ ]—यन्माध्यंदिने सवने दक्षिणा नीयन्ते० बहु देयं० द्वाभ्यां गार्हपत्ये जुहोति० आग्नेय्याग्नीध्रीये० हिरण्यं हस्ते भवत्यथ नयति० अग्रेण गार्हपत्यं जघनेन सदोऽन्तराग्नीध्रीयं च सदश्च । ता उदीचीरन्तराग्नीध्रीयं च सदश्च चात्वालं चोत्सृजन्ति० अग्नीधेऽग्रे

ददाति० ब्रह्मणे ददाति० ऋत्विग्भ्यो ददाति० सदस्येभ्यो ददाति० यां शुश्रुवुष आर्षेयाय ददाति० यामशुश्रुवुषेऽनार्षेयाय ददाति० यामप्रसृताय ददाति० यां याचमानाय ददाति भ्रातृव्यं तया जिन्वीते। यां भीषा क्षत्रं तया ब्रह्मातीयात्। यां प्रतिनुदन्ते सा व्याघ्री दक्षिणा। यस्तां पुनः प्रतिगृह्णीयाद् व्याघ्र्येनं भूत्वा प्रम्लीनीयात्। अन्यया सह प्रतिगृह्णीयात्०यद्गां ददाति० यदजं ददाति० यदविं ददाति० यत्कृतान्नं ददाति० यदनो वा रथो वा ददाति० यद्वासो ददाति० यद्धिरण्यं ददाति० यदश्वं ददाति० अन्ततः प्रतिहर्त्रे देयम्० यदात्रेयाय हिरण्यं ददाति० ॥

## ११७. मरुत्वतीययागः

**वामासं—**

उपयामगृहीतोऽसि मरुतां त्वौजसे ॥ ७.३६

माशब्रा [ ४.३.३.१४ ]— उपयामगृहीतोऽसि मरुतां त्वौजस इति तृतीयं [1]ग्रहं गृह्णाति ॥

[ ४.३.४.२३ ]—अथाह इन्द्राय मरुत्वतेऽनुब्रूहि इति० ॥

**वाकासं —**

उपयामगृहीतोऽसि मरुतामोजसे त्वा ॥ ७.१९

काशब्रा [ ५.३.४.१०–११ ] ≡ माशब्रा ४.३.३.१४

[ ५.४.१.१९ ] ≡ माशब्रा ४.३.४.२३

**अशौसं—**

इन्द्रो मा मरुत्वान् प्राच्या दिशः पातु बाहुच्युता पृथिवी द्यामिवोपरि।
लोककृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ ॥ १८.३.२५

## ११८. मरुत्वतीययागहौत्रम्

**ऋसं—**

[2]इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य।
तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः ॥ ३.५१.७
[3]होता यक्षदिन्द्रं मरुत्वन्तमिन्द्रो मरुत्वाञ्जुषतां वेतु पिबतु सोमं होतर्यज ॥
खिलम् ५.७.४ ( ख )

[4]सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्।
जहि शत्रूँरप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥ ३.४७.२

१. मरुत्वतीयग्रहग्रहणानन्तरम् अध्वर्युमनु प्रतिप्रस्थाता इमं ग्रहं जुहोति। २. पुरोनुवाक्या। ३. प्रैषः। ४. याज्या।

शांब्रा [१५.१]—वैश्वामित्रीं मरुत्वतीयग्रहस्य पुरोनुवाक्यामनूच्य वैश्वामित्र्या यजति० ते वा ऐन्द्र्यौ त्रिष्टुभौ भवतः० अनुवषट्करोति० ॥

[ २९.२ ]—वैश्वामित्रीं मरुत्वतीयग्रहस्य पुरोनुवाक्यामन्वाह। तस्या उक्तं ब्राह्मणम् ॥

## ११९. मरुत्वतीयग्रहग्रहणम्

तैसं [ १.४.१९ ]—

मरुत्वा२ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय।
आ सिञ्चस्व जठरे मध्व ऊर्मिं त्व२ राजासि प्रदिवः सुतानाम्।
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते॥ एष ते योनिरिन्द्राय त्वा मरुत्वते॥

मैसं [ १.३.२३ ]—

सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्।
जहि शत्रूँरप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः।
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते॥ एष ते योनिरिन्द्राय त्वा मरुत्वते॥

[ ४.६.८ ]—यदि कामयेत विडोजीयसी स्यादबलीयः क्षत्रमिति यस्या मरुत्वतीयः पूर्वोऽर्धऋचस्तां पुरोरुचं कुर्यात्० यदि कामयेत क्षत्रमोजीयः स्यादबलीयसी विडिति यस्या ऐन्द्रः पूर्वोऽर्धऋचस्तां पुरोरुचं कुर्यात्० ॥

कासं [ ४.८ ]—

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम्।
विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम।
उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते॥ एष ते योनिरिन्द्राय त्वा मरुत्वते॥

कपिसं [ ३.६ ] ≡ कासं

वामासं —

मरुत्वन्तं वृषभं वावृधानम् ....। उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते॥ एष ते योनिरिन्द्राय त्वा मरुत्वते॥ ७.३६

माशब्रा [ ४.३.३.१४ ]—मरुत्वन्तं वृषभं .... मरुत्वते[1] ॥ एष ते योनिरिन्द्राय त्वा मरुत्वते[2] ॥

वाकासं [ ७.१८ ] ≡ वामासं

काशब्रा [ ५.३.४.१०-११ ] ≡ माशब्रा

१. इति गृह्णाति। २. इति सादयति।

# १२०. मरुत्वतीयशस्त्रम्

ऋसं—

अध्वर्यो शोंसावो३म् [1]आ त्वा रथं यथोतये सुम्नाय वर्तयामसि। तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पतो३म् तुविशुष्म तुविक्रतो शचीवो विश्वया मते। आ पप्राथ महित्वनो३म् यस्य ते महिना महः परिज्मायन्तमीयतुः। हस्ता वज्रं हिरण्ययो३म् (८.६८.१-३)[2] शोंसावो३म् इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम्। अनाभयिन् ररिमा तो३म् नृभिर्धूतः सुतो अश्नैरव्यो वारैः परिपूतः। अश्वो न निक्तो नदीषो३म् तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः। इन्द्र त्वास्मिन्त्सधमादो३म् (८.२.१-३)[3] शोंसावो३म् [4]इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः। आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभो३म् आ स्वापे स्वापिभिराजितुरं सत्पतिं विश्वचर्षणिम्। कृधि प्रजास्वाभगो३म् कृधि प्रजास्वाभगं प्र सू तिरा शचीभिर्ये त उक्थिनः। क्रतुं पुनत आनुषो३म् (८.५३.५-६) शोंसावो३म् [5]प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्। यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरो३म् देवा ओकांसि चक्रिरे तमिद्वोचेमा विदथेषु शंभुवम्। मन्त्रं देवा अनेहसो३म् मन्त्रं देवा अनेहसमिमां च वाचं प्रतिहर्यथा नरः। विश्वेद्वामा वो अश्नवो३म् (१.४०.५-६) शोंसावो३म् [6]अग्निर्नेता भग इव क्षितीनाम्। दैवीनां देव ऋतुपा ऋतावो३म् स वृत्रहा सनयो विश्ववेदाः। पर्षद्विश्वाति दुरिता गृणन्तो३म् (३.२०.४) शोंसावो३म् त्वं सोम क्रतुभिः सुक्रतुर्भूः। त्वं दक्षैः सुदक्षो विश्ववेदो३म् त्वं वृषा वृषत्वेभिर्महित्वा। द्युम्नेभिर्द्युम्न्यभवो नृचक्षो३म्। (१.९१.२) शोंसावो३म् पिन्वन्त्यपो मरुतः सुदानवः। पयो घृतवद्विदथेष्वाभुवो३म् अत्यं न मिहे वि नयन्ति वाजिनम्। उत्सं दुहन्ति स्तनयन्तमक्षितो३म्। (१.६४.६) शोंसावो३म् [7]प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत। वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणो३म् अभि प्र भर धृषता धृषन्मनः श्रवश्चित् ते असद्बृहत्। अर्षन्त्वापो जवसा वि मातरो हनो वृत्रं जया स्वो३म् (८.८९.३-४) शोंसावो३म् [8]जनिष्ठा उग्रः सहसे तुराय। मन्द्र ओजिष्ठो बहुलाभिमानो३म् अवर्धन्निन्द्रं मरुतश्चिदत्र। माता यद्वीरं दधनद्धनिष्ठो३म् द्रुहो निषत्ता पृशनी चिदेवैः। पुरुशंसेन वावृधुष्ट इन्द्रो३म् अभीवृतेव ता महापदेन। ध्वान्तात् प्रपित्वादुदरन्त गर्भो३म् ऋत्वा ते पादा प्र यज्जिगासि। अवर्धन् वाजा उत ये चिदत्रो३म् त्वमिन्द्र सालावृकान्त्सहस्रम्। आसन्

१. आद्यां विग्राहं त्रिः शंसते। २. प्रतिपत्तृचः। ३. अनुचरस्तृचः। ४. इन्द्रनिहवः प्रगाथः। ५. ब्राह्मणस्पत्यः प्रगाथः। ६. धाय्याः। ७. मरुत्वतीयः प्रगाथः। ८. निविद्धानीयं सूक्तम्।

दधिषे अश्विना ववृत्यो३म् समना तूर्णिरुप यासि यज्ञम्। आ नासत्या सख्याय वक्षो३म् वसाव्यामिन्द्र धारयः सहस्रा। अश्विना शूर ददतुर्मघानो३म् मन्दमान ऋता-दधि प्रजायै। सखिभिरिन्द्र इषिरेभिरर्थो३म् आभिर्हि माया उप दस्युमागात्। मिहः प्र तम्रा अवपत् तमांसो३म् सनामाना चिद्ध्वसयो न्यस्मै। अवाहन्निन्द्र उषसो यथा-नो३म् ऋष्वैरगच्छः सखिभिर्निकामैः। साकं प्रतिष्ठा हृद्या जघन्थो३म् (१०.७३.१-६)

शोंसावो३म् [1]इन्द्रो मरुत्वान् सोमस्य पिबतु। मरुत्स्तोत्रो मरुद्गणः। मरुत्सखा मरुद्वृधः। घ्नन् वृत्रा सृजदपः। मरुतामोजसा सह। य ईमेनं देवा अन्वमदन्। अप्तूर्ये वृत्रतूर्ये। शम्बरहत्ये गविष्टौ। अर्चन्तं गुह्या पदा। परमस्यां परावति। आर्दी ब्रह्माणि वर्धयन्। अनाधृष्टान्योजसा। कृण्वन् देवेभ्यो दुवः। मरुद्भिः सखिभिः सह। इन्द्रो मरुत्वाँ इह श्रवदिह सोमस्य पिबतु। प्रेमां देवो देवहूतिमवतु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवतु। चित्रश्चित्राभिरूतिभिः। श्रवद्ब्र-ह्माण्यावसा गमो३म् ( खिलम् ५.५.२ )

त्वं जघन्थ नमुचिं मखस्युम्। दासं कृण्वान ऋषये विमायो३म् त्वं चकर्थ मनवे स्योनान्। पथो देवत्राञ्जसेव यानो३म् त्वमेतानि पप्रिषे वि नाम। ईशान इन्द्र दधिषे गभस्तो३म् अनु त्वा देवाः शवसा मदन्ति। उपरिबुध्नान् वनिनश्च-कर्थो३म् चक्रं यदस्याप्स्वा निषत्तम्। उतो तदस्मै मध्विच्चच्छद्यो३म् पृथिव्यामतिषितं यदूधः। पयो गोष्वदधा ओषधीषो३म् अश्वादियायेति यद्वदन्ति। ओजसो जातमुत मन्य एनो३म् मन्योरियाय हर्म्येषु तस्थौ। यतः प्रजज्ञ इन्द्रो अस्य वेदो३म् (१०.७३.७-१०) शोंसावो३म् [2]वयः सुपर्णा उप सेदुरिन्द्रम्। प्रियमेधा ऋषयो नाधमानो-३म् अप ध्वान्तमूर्णुहि पूर्धि चक्षुः। मुमुग्ध्यस्मान् निधयेव बद्धो३म् (१०.७३.११)॥

[3]ये त्वाहिहत्ये मघवन्नवर्धन् ये शाम्बरे हरिवो ये गविष्टौ।
ये त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमं सगणो मरुद्भिः॥ ३.४७.४

ऐब्रा [ ३.४४ ]—बलीयस्या वाचा मध्यंदिने शंसेत्०।

[ ३.१२ ]—अध्वर्यो शोंसावो३म् इत्याह्वयते मध्यंदिने षळक्षरेण। शंसामोदै-वोम् इत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण।

[ ३.१५-१९ ]—इन्द्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतोऽगच्छत्० स वाचं प्रविश्याशयत्। तं सर्वाणि भूतानि विभज्यान्वैच्छन्। तं पूर्वेद्युः पितरोऽविन्दन्नुत्तर-

१. निवित्। २. परिधानीया। ३. याज्या।

महद्देवाः० तेऽब्रुवन्नभिषुणवामैव तथा वाव न आशिष्ठमागमिष्यतीति। तथेति। तेऽभ्यषुण्वन्। त आ त्वा रथं यथोतय इत्येतैनमावर्तयन्। इदं वसो सुतमन्ध इत्येवैभ्यः सुतकीर्त्यामाविरभवत्। इन्द्र नेदीय एदिहीत्येवैनं मध्यं प्रापादयन्त० ब्राह्मणस्पत्यं प्रगाथं शंसति० ये एव त्रिष्टुभौ धाय्ये यत्त्रैष्टुभं निविद्धानम० धाय्याः शंसति० तान्यु वा एतान्युपसदामेवोक्थानि यद्धाय्याः० तद्धैक आहुः **तान्वो महः** ( ऋसं २.३४.११ ) इति शंसेत्० तत्तन्नादृत्यम्० पिन्वन्त्यप इत्येव शंसेत्० मरुत्वतीयं प्रगाथं शंसति०।

[ ३.१० ]—गर्भा वा एत उक्थानां यन्निविदः० यन्मध्यतो मध्यंदिने धीयन्ते०।

[३.१९–२०]—जनिष्ठा उग्रः सहसे तुरायेति सूक्तं शंसति० तस्यार्धाःशस्त्वार्धाः परिशिष्य मध्ये निविदं दधाति० तामाक्रममाण इव शंसेत्० इति नु स्वर्गकामस्य। अथाभिचरतः। यः कामयेत क्षत्त्रेण विशं हन्यामिति त्रिस्तर्हि निविदा सूक्तं विशंसेत्० यः कामयेत विशा क्षत्त्रं हन्यामिति त्रिस्तर्हि सूक्तेन निविदं विशंसेत्० य उ कामयेतोभयत एनं विशः पर्यवच्छिनदानीत्युभयतस्तर्हि निविदं व्याह्वयीत० वयः सुपर्णा उपसेदुरिन्द्रमित्युत्तमया परिदधाति० पूर्धि चक्षुरिति चक्षुषी मरीमृज्येत० मरुत्वतीयमुक्थं शस्त्वा मरुत्वतीयया यजति० ये त्वाहिहत्ये मघवन्नवर्धन् ये शाम्बरे हरिवो ये गविष्टौ। ये त्वा नूनमनुमदन्ति विप्राः पिबेन्द्र सोमं सगणो मरुद्भिरिति०॥

[ ३.१२ ]— **उक्थं वाचीन्द्राय** इत्याह शस्त्वा सप्ताक्षरम्। **ओमुक्थशाः** इत्यध्वर्युश्चतुरक्षरम्०॥

**ऋसं—**

अध्वर्यो शोंसावो३म आ त्वा रथं.... हिरण्ययो३म् (८.६८.१-३)[१] शोंसावो३म **इदं वसो सुतमन्धः .... त्वास्मिन्त्सधमादो३म्** ( ८.२.१-३ )[२] शोंसावो३म् [३]**इन्द्र नेदीय .... आनुषो३म्** ( ८.५३.५-६ ) शोंसावो३म् [४]**प्र नूनं ब्रह्मणस्पतिः .... अश्नवो३म्** ( १.४०.५-६ ) शोंसावो३म् [५]**अग्निर्नेता भग .... गृणन्तो३म्** ( ३.२०.४ ) शोंसावो३म् [५]**त्वं सोम क्रतुभिः....नृचक्षो३म्** ( १.९१.२ ) शोंसावो३म् [५]**पिन्वन्त्यपो मरुतः .... स्तनयन्तमक्षितो३म्** ( १.६४.६ ) शोंसावो३म् [६]**जनिष्ठा उग्रः .... जघन्थो३म्** ( १०.७३.१-६ )

शोंसावो३म् [७]**इन्द्रो मरुत्वान् सोमस्य पिबतु। मरुत्स्तोत्रो मरुद्गणः। मरुद्वृधो मरुत्सखा। य ईमेनं देवा अन्वमदन्। अप्तूर्ये वृत्रतूर्ये। शम्बरहत्ये गविष्टौ। अर्चन्तं गुह्या पदा।**

१. प्रतिपत्तृचः। २. अनुचरस्तृचः। ३. इन्द्रनिहवः प्रगाथः। ४. ब्राह्मणस्पत्यः प्रगाथः। ५. धाय्या। ६. निविद्धानीयं सूक्तम्। ७. निविद्।

परमस्यां परावति । वधीद् वृत्रं सृजदपः । मरुतामोजसा सह ।
आर्दी ब्रह्माणि वर्धयन् । अनाधृष्टान्योजसा । कृण्वन् देवेभ्यो
दुवः । मरुद्भिः सखिभिः सह । इन्द्रो मरुत्वाँ इह श्रवदिह
सोमस्य पिबतु । प्रेमां देवो देवहूतिमवतु देव्या धिया ।
प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्रा-
भिरूतिभिः । श्रवद् ब्रह्मण्यावसा गमो३म् ( शांश्रौ ८.१६.१ )

**त्वं जघन्थ ... अस्य वेदो३म्** ( १०.७३.७-१० ) शोंसावो३म् [1]**वयः सुपर्णा .... बद्धो३म्** ( १०.७३.११ )॥

[2]**ये त्वाहिहत्ये ....** ॥ ३.४७.४

शांब्रा [ १४.१ ]—अथ वै निविद्० मध्ये सूक्तस्य माध्यंदिने सवने०।

[ १४.३ ]—**अध्वर्यो शोंसावो** इति माध्यंदिने सवन आह्वयते **शोंसामो दैव** इत्यध्वर्युः० ॥

[ १५.२-३ ]—अथ षड्विधं मरुत्वतीयं शंसति० अनुष्टुभं गायत्रीं बृहतीमुष्णिहं त्रिष्टुभं जगतीमिति षट् छन्दांसि शंसति० आ त्वा रथं यथोतय इत्यनुष्टुभा मरुत्वतीयं प्रतिपद्यते० उक्तं पदविग्रहणस्य ब्राह्मणम् । गायत्रीः शंसति० इदं वसो सुतमन्ध इत्यनुचरः सुतवान् पीतवान्० इन्द्र नेदीय एदिहीतीन्द्रनिहवः प्रगाथः० प्र नूनं ब्रह्मणस्पतिरिति प्रवान् ब्राह्मणस्पत्यः० अग्निर्नेता भग इव क्षितीनाम्, त्वं सोम क्रतुभिः सुक्रतुर्भूरित्यग्नीषोमीये० पिन्वन्त्यपो मरुतः सुदानव इति पिन्वन्त्यपीया०सा वै जगती० जनिष्ठा उग्रः सहसे तुरायेति जातवन्मरुत्वतीयम्० तस्य प्रथमायामध्वर्युः सकृन्मद्वत् प्रत्यागृणाति० तदेतत् पृतनाजिदेव सूक्तं यन्मरुत्वतीयम्० तस्य मध्ये निविदं दधाति० अथ निविदः शंसति० तासामेकैकं पदमवग्राहं शंसति० उत्तमेन प्रणौति० एना आरतं शंसेत्० ये त्वाहिहत्ये मघवन्नवर्धन्नित्युक्थं शस्त्वा यजति० सा वा ऐन्द्री त्रिष्टुब्भवति । अनुवषट्करोति०॥

[ १४.३ ]— **उक्थमवाचीन्द्राय** इति माध्यंदिने सवन उपांशु होता ब्रूयात् । **उक्थशाः** इत्यध्वर्युः० ॥

तैसं [ ३.२.९.१ ]—**उक्थं वाचि** इत्याह माध्यंदिनꣳ सवनं प्रतिगीर्य०॥

मैसं [ ४.६.८ ]—ऋतुपात्रमालभ्य प्रतिगृह्णाति[3]० ॥

माशब्रा [ ४.३.२.१० ]—सकृन्मद्वन्माध्यंदिने सवने० ॥

काशब्रा [ ५.३.३.८ ] ≡ माशब्रा

१. परिधानीया । २. याज्या । ३. 'प्रतिगृणाति' इति पाठः साधुर्भवेत् ।

गोब्रा [२.३.१०]—अध्वर्यो शंसावो३म् इत्याहूयते माध्यंदिने षडक्षरेण। शंसावो दैव इत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण० उक्थं वाचीन्द्राय इत्याह शस्त्वा षडक्षरम्। ओमुक्थशा यज इत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरम्० ॥

[ २.४.१० ]—बलीयस्या वाचा माध्यंदिने सवने शंसेत्० ॥

## १२१. मरुत्वतीयग्रहप्रचारः माहेन्द्रग्रहग्रहणं च

तैसं [ ३.२.५.२ ]—

नराशँसपीतस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि ॥

[ १.४.२०–२१ ]—

महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव। स्तोमैर्वत्सस्य वावृधे।
उपयामगृहीतोऽसि महेन्द्राय त्वा ॥ एष ते योनिर्महेन्द्राय त्वा ॥
महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः।
अस्मद्रियग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत्।
उपयामगृहीतोऽसि महेन्द्राय त्वा ॥ एष ते योनिर्महेन्द्राय त्वा ॥

[ ६.५.५ ]—यन्माहेन्द्रो गृह्यते० शुक्रपात्रेण गृह्णाति० ॥

मैसं [ १.३.२४–२५ ]—

महं इन्द्रो य ओजसा पर्जन्यो वृष्टिमं इव। स्तोमैर्वत्सस्य वावृधे।
उपयामगृहीतोऽसि महेन्द्राय त्वा ॥ एष ते योनिर्महेन्द्राय त्वा ॥
महं इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत्।
उपयामगृहीतोऽसि महेन्द्राय त्वा ॥ एष ते योनिर्महेन्द्राय त्वा ॥

[ ३.१०.५ ]—द्विनाराशंसा माध्यंदिने सवने ॥

[ ४.६.८ ]—शुक्रपात्रेण माहेन्द्रं गृह्णाति० ॥

कासं [ ४.८ ]—

महीं इन्द्रो य ओजसा .... । उपयामगृहीतोऽसि महेन्द्राय त्वा ॥ एष ते योनिर्महेन्द्राय त्वा ॥ महीं इन्द्रो नृवदा.... । उपयामगृहीतोऽसि महेन्द्राय त्वा ॥ एष ते योनिर्महेन्द्राय त्वा ॥

[ २८.३ ]—स एतं ग्रहमुद्धारमुदहरत महेन्द्रीयम्०।

[ २९.१ ]—द्विनाराशंसा माध्यंदिने ॥

कपिसं [ ३.६ ] = कासं
[ ४४.३; ४५.२ ] = कासं

वामासं—

महाँ इन्द्रो नृवदा .... । उपयामगृहीतोऽसि महेन्द्राय त्वा ॥ एष ते योनिर्महेन्द्राय त्वा ॥ महाँ इन्द्रो य ओजसा .... । उपयामगृहीतोऽसि महेन्द्राय त्वा ॥ एष ते योनिर्महेन्द्राय त्वा ॥ ७.३९-४०

माशब्रा [ ४.३.३.१५–१८ ]—अथ माहेन्द्रं ग्रहं गृह्णाति० शुक्रपात्रेण गृह्णाति० अथातो गृह्णात्येव महाँ इन्द्रो .... महेन्द्राय त्वा ॥ एष ते योनिर्महेन्द्राय त्वेति सादयति० ॥

वाकासं [ ७.२१–२२ ] = वामासं
काशब्रा [ ५.३.४.१२–१४ ] = माशब्रा
ऐब्रा [ २.२४ ]—द्विनाराशंसं माध्यंदिनं सवनम् ॥

तांब्रा [ १.५.९ ]—

ऊर्वस्ते पितृभिर्भक्षितस्य मधुमतो नाराशꣳसस्य सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥

## १२२. प्रथमपृष्ठस्तोत्रम्[1]

### [ रथन्तरपृष्ठे ]

### रथन्तरम्

साकौसं [ २.१.१.११ ]—

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥
न त्वावाꣳ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥

१ २ऽ २ २ २ १ १ २र २ २ १
हुम् । आभित्वाशूरनोनुमोवा ॥ ओंवाग्भाम्भुभाभिभभेभभभीभाभभभभभः
१ २ १ २२ १ ४ १ २ २ ५ ५
सुवा२३र्दृशाम् ॥ आइशानमा २३ इन्द्रा३ ॥ स्तस्थू २३४ षा ओवा ६ हाउवा ॥
१ २२ १ १ २ २ २ २ २ २ १ २
अस् ॥ [ १ ] ईशोवा ॥ ओंवाग्भाभिभभुभुभोभभाभाभभोभिभिभो नपा२३ र्थिवाः ॥

---

१. सप्तदशस्तोमम् ।

१ २ १२ १ ४ १ २ २ ५ ५ १ २ १
नजातोना २३ जा३ ॥ नाइष्या २३४ ता ओवा६ हाउवा ॥ अस् ॥ [ २ ] नजोवा ॥
१ २ २ २ २ १ २ १ २ १ ४
ओंवाग्भोभभभिभभेभभाभभोभभभमिन्द्रवा२३ जिनाः ॥ गव्यन्तस्त्वा २३ हा ३ ॥
१ २ २ ५ ५ १
वामा२३४ हा ओवा६ हाउवा ॥ अस् ॥ [ ३ ] [ आरण्य २.१.२१; ऊह्य १.१.१ ]

[ बृहत्पृष्ठे ]

बृहत्

साकौसं [ २.२.१.१२ ]—

त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥
स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः ।
गामश्वꣳ रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥

१ २२ २ २ २ २ १ २१ १२ २ २^ ३ ५ १ २
हुम् । औहोइत्वामिद्धिहवामहा३ ए ॥ ओꣳ सातौवाजास्याकारा२३४ वास्तुवा
३२ ४२५२ १ २ १ ३ ५ १२ २ २ ३२४२ ५
३४ औहो वा वृत्राइषुवाइन्द्रासा ३१ त्पतिन्ना २३४ राः ॥ त्वाङ्काष्ठा ३४ औहोवा ॥
– १ २ ५ ५ १ २२ २ २ १ २२ १
सू २ आर्वा २३४ ता उहुवा ६ हाउवा ॥ हस् ॥ [१] औहोइतुवा३ मे ॥ ओङ्काष्ठा
२^ ३ ५ १ २ ३२४२ ५ २ १ १ २ २^ ३ ५
सू अर्वा २३४ ताः सत्वा ३४ औहोवा नश्चाइत्रवाज्राहा ३१ स्तधृष्णू २३४ या ॥
२१ २ ३२४२ ५ – १ २ ५ ५ १
महस्तवा३४ औहोवा ॥ नो २ आद्रा २३४ इवा उहुवा६ हाउवा ॥ हस् ॥ [ २ ]
२२ २ २ १ २ १ २^ ३ ५ १२ २ २२४२ ५ २ १ २
औहोइमहा३ ए ॥ ओꣳ स्तवानोअद्रा२३४ इवागामा३४ औहोवाश्चुवाꣳ रथाइयमा
२^ ३ ५ २ १२ २ २ ३२४२ ५ – १ २ ५
३१ इन्द्रसङ्का२३४ इरा ॥ सत्रावाजा३४ औहोवा ॥*ना२ जाइग्यू २३४ षा उहुवा
५ १
६ हाउवा ॥ हस् ॥ [ ३ ] [ ऊह्य १.१.५ ]

– १ २ ५ ५
* तृतीयपर्यायस्य उत्तमेऽभ्यासे उपद्रवे विशेषः – ना२ जिग्यू२३४ षा उहुवा ६ हाउवा ॥

तांब्रा [ १.९.७ ]—

[1]प्राचोऽस्यह्वे त्वाहर्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥

[ ७.६–७ ]—प्रजापतिरकामयत बहु स्यां प्रजायेयेति स तूष्णीं मनसा ध्यायत् तस्य यन्मनस्यासीत् तद् बृहत् समभवत् । स आदधीत गर्भो वै मेऽयमन्तर्हितस्तं वाचा प्रजनया इति। स वाचं व्यसृजत सा वाग्रथन्तरमन्वपद्यत० प्राणापानौ वै बृहद्रथन्तरे ज्योगामयाविन उभे कुर्यात्० ऐरं वै बृहदैडꣳ रथन्तरं मनो वै बृहद्वाग्रथन्तरꣳ साम वै बृहदृग्रथन्तरं प्राणो वै बृहदपानो रथन्तरमसौ वै लोको बृहदयꣳ रथन्तरमेतानि मनसान्वीक्ष्योद्गायेत्० अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति० त्र्यक्षरेणोत्तरयोर्ऋचोः प्रस्तौति० पञ्चाक्षरेण रथन्तरस्य प्रतिहरति० चतुरक्षरेण बृहतः प्रतिहरति० बृहती प्रथमा ककुभावुत्तरे० नव बृहतो रोहन् रोहाति० त्रीन् प्रथमायाꣳ रोहति० त्रीन् मध्यमायाꣳ रोहति० त्रीनुत्तमायाꣳ रोहति० वज्रेण वा एतत् प्रस्तोतोद्गातारमभिप्रवर्तयति यद्रथन्तरं प्रस्तौति समुद्रमन्तर्द्धायोद्गायेत्० बलवद्गेयम्० बल्बलाकुर्वता गेयमभिलोभयतेव० क्षिप्रं गेयम्० अक्षरेणाक्षरेण प्रतिष्ठापयतोद्गेयम्० इमामालभ्योद्गायेत्० प्रस्तूयमाने संमीलेत् स्वर्दृशं प्रतिवीक्षेत० अस्थुषः इति वक्तव्यं सुस्थुषः इति वा० तान् संभृत्योद्गायेत् **यस्ते गोषु महिमा यस्ते अप्सु रथे वा ते स्तनयित्नौ य उ ते यस्ते अग्नौ महिमा तेन संभव रथन्तर द्रविणवन्न एधि ॥**

## [ रथन्तरपृष्ठे ]

### रथन्तरम्

साजैसं [ ३.४.१–२ ]—

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥
न त्वावं अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥

**ओहम् । ओभित्वाशूरनोनुमोवा ॥ होओभुभाभिभभेभभीभाभाभाभिभाभाभा-**
क्व च च क च श च
**भासुवार्दशामायि ॥ शानमायिन्द्रा ॥ इळाओस्थुषाओवाहात्रुवा ॥ आस् ॥** [ १ ]
क ट टटच क प क तटटट च क नच
**ईशोवा ॥ होओभीभाभभुभभुभाभाभाभिभीभानपार्थिवाः॥ नजातोनाजा ॥ इळाओ-**

---

१. ब्रह्मा अनेन स्तोत्रमनुमन्त्रयते ।

क च च च व श च च टचकटटट क प क
यिष्याताओवाहावुवा ॥ आस् ॥ [ २ ] नजोवा ॥ होओभाभाभिभभेभाभुभाभाभा-
टटट च क नच च च च च च च
भाभाभाभिद्रवाजीनाः ॥ गव्यन्तास्त्वाहा ॥ इळाओमाहाओवाहावुवा ॥ आस्॥ [३]
टचकटटट प्र च प क टटट च क निच

जैत्रा [ १.१२८–१३७ ]—प्रजापतिर्यद् बृहद्रथन्तरे असृजत स मन एवाग्रे बृहद-पश्यत् । वाचꣳ रथन्तरमभिव्याहरत् । तद्यद् वाचꣳ रथन्तरमभिव्याहरत् तस्मादु रथन्तरं पूर्वं योगमानशे । अथ यन्मनोऽग्रे बृहदपश्यत् तस्मादु बृहद्रथन्तरे इत्याख्यायेते० रथन्तरस्य महिम्नः संभृत्य रथन्तरेणोद्गायेत् **यस्ते अग्नौ महिमा यस्ते अप्सु रथे यस्ते महिमा स्तनयित्नौ य उ ते वाते यस्ते महिमा तेन संभव रथन्तरं द्रविणस्वन्न एधि** इति० यदि राथन्तरः सोमः स्याद्रथन्तरे प्रस्तुते ब्रूयात् **नमो मात्रे पृथिव्यै रथन्तर मा मा हिꣳसीः** इति । यदि बार्हतः सोमः स्याद् बृहति प्रस्तुते ब्रूयात् **दिवं पितरमुपश्रये बृहन्मा मा हिꣳसीः** इति । अथानु-मन्त्रयेत **प्राणैरमुष्य प्राणान् वृङ्क्ष्व ॥ तक्षणेन तेक्ष्णीयसायुरस्य प्राणान् वृङ्क्ष्व ॥ क्रुद्ध एनं मनुन्या दण्डेन जहि॥ धनुरेनमातत्येष्वा विध्य** इति०यदि राथन्तरः सोमः स्याद् बृहन्नान्तर्यात् । यदि बार्हतः सोमः स्याद् रथन्तरं नान्तर्यात्० रथन्तरे प्रस्तुते **हो** इत्युक्त्वादि-माददीत० बृहति प्रस्तुते **आ** इत्युक्त्वादिमाददीत० रथन्तरे प्रस्तुते पृथिवीं हस्ताभ्यां गच्छेत्० एकमक्षरꣳ स्तोभति० द्वे अक्षरे स्तोभति० त्रीण्यक्षराणि स्तोभति चत्वार्यक्षराणि स्तोभति० पञ्चाक्षराणि स्तोभति० षडक्षराणि स्तोभति० सप्ताक्षराणि स्तोभति० अष्टाक्षराणि स्तोभति० नवाक्षराणि स्तोभति० दशाक्षराणि स्तोभति० एकादशाक्षराणि स्तोभति० द्वादशाक्षराणि स्तोभति० त्रयोदशाक्षराणि स्तोभति० चतुर्दशाक्षराणि स्तोभति० पञ्चदशाक्षराणि स्तोभति० षोडशाक्षराणि स्तोभति० सप्तदशाक्षराणि स्तोभति० एतदन्यत् स्तोभेत्० यद्यु स्तोभेदष्टा-वेवाक्षराणि स्तोभेत्० स्वर्दृशं प्रतिविपश्येत्० अथ यत् **शानमिन्द्र** इति प्रतिहरति० प्रतिहारे-प्रतिहार उद्गाता **इळा** इति ब्रूयात्० **नस्थुषः** इति ब्रूयात्० बृहद्रथन्तरे व्यावर्तयेत्० **हो वा हा** वै बृहत् **ओ वा हा** रथन्तरम्० यथास्यादेवं बुभूषन्नुपेयात् । यथास्येदेवं भ्रातृव्यवान्० अष्टाक्षरेण प्रस्तौति । द्व्यक्षरेणोत्तरे प्रस्तौति० अक्षरेषु रथन्तरं करोति० द्वादश बृहतो रोहान् रोहेत् स्वर्गकाम उदधिमर्दयेद्वृष्टिकामः० **ओ हो** इत्येवावरुद्धो राजन्यः कुर्वीत०॥

[ १.२५१ ]—सप्तदशानि पृष्ठानि० ॥

[ १.२५४ ]—अथ पृष्ठानि० तानि बृहतीषु भवन्ति०।

[ १.२९१–२९.८ ]—रथन्तरसाम्ना यष्टव्यां ३ बृहत्साम्ना ३ इति मीमाꣳसन्ते । रथन्तरसाम्नेति हाहुः सात्यसाः० बृहत्साम्ना यष्टव्यमित्याहुरारुणिसात्ययज्ञयः० उभयसाम्ना

यष्टव्यमिति ह स्माह शाट्यायनिः० तद्यद्रथन्तरस्यचैंवापरिष्टुभ्य प्रस्तौति० अथ यस्माद् बृहतः स्तोभेन परिष्टुभ्य प्रस्तौति० अस् इति ह रथन्तरस्य हस् इति बृहतः० ॥

[ १.३२७–३३२ ]— रथन्तरेण स्तोष्यमाणः पृथिवीमभिमृशति **नमो मात्रे पृथिव्यै रथन्तर मा मा हिंसीः** इति। अथ महिम्नः संभरति **यस्ते अग्नौ महिमा यस्ते अप्सु रथे यस्ते महिमा स्तनयित्नौ य उ ते वाते यस्ते महिमा तेन संभव रथन्तर द्रविणस्वन्न एधि** इति० अक्षरेषु स्तोब्धव्यम्० तत् पूर्णमुखेन प्रधून्वन् क्षिप्रं गायेत्० प्रतिहारेप्रतिहार उद्गाता इळ् इति ब्रूयात्० तद्धैतदेकैकरूपमेव **भा भा** इति स्तोभन्ति० तदु होवाच शाट्यायनिः० **अभुभाभिभभेभभ** इत्येवं मिथुनं प्रजननं स्तोब्धव्यम्। यावत् स्तोभेत्तावत् पृथिव्यां हस्तौ स्याताम्०षोडशाक्षराणि स्तोभति० चतुर्दशचतुर्दशोत्तरयोः० **स्वर्दृशम्** इति निराह० ॥

**तैसं [ ४.४.१ ]—**

[1]**प्रवास्यह्वे त्वाहर्जिन्व ॥**

[ ३.५.२ ]—प्रवास्यनुवासीत्याह० ।

**मैसं [ २.८.८ ]—**

**प्रवायाह्वेऽहर्जिन्व ॥**

**कासं [ १७.७ ]—**

**प्रवास्यह्वे त्वाहर्जिन्व ॥**

[ ३७.१७ ]—प्रवास्यनुवासीति०॥

**कपिसं [ २६.६ ] ≡ कासं १७.७**

माशब्रा [ ४.३.३.१९ ]—अथोपाकृत्यैतां वाचं वदति **अभिषोतारोऽभिषुणुतौलूखलानुद्वादयताग्नीदाशिरं विनय सौम्यस्य वित्तात्** इति० ॥

काशब्रा [ ५.३.४.१४ ] ≡ माशब्रा

गोब्रा [ २.२.१३–१४ ]—**प्रावोऽसि० बृहस्पतये स्तुत** इति० **ॐ भुवो जनत्** इति माध्यंदिने सवने० ॥

## १२३. निष्केवल्यशस्त्रम्

### [ रथन्तरपृष्ठे ]

**ऋसं—**

अध्वर्यो शोंसावो३म् [2]**अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः। ईशानमस्य**

१. स्तोत्रस्य प्रस्तवात् पूर्वं ब्रह्मा इमं स्तोमभागं जपति। २. आद्या त्रिः शंसेत्।

जगतः स्वर्दृशमीशानमिन्द्र तस्थुषो३म् ईशानमिन्द्र तस्थुषो न त्वावाँ अन्यो दिव्यो न पार्थिवः। न जातो न जनिष्यतो३म् न जातो न जनिष्यतेऽश्वायन्तो मघवन्निन्द्र वाजिनः। गव्यन्तस्त्वा हवामहो३म्। (७.३२.२२-२३)[1] शोंसावो३म् अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः। समीचीनास ऋभवः समस्वरन् रुद्रा गृणन्त पूर्व्यो३म् रुद्रा गृणन्त पूर्व्योमस्येदिन्द्रो वावृधे वृष्ण्यं शवः। मदे सुतस्य विष्णवो३म् मदे सुतस्य विष्णव्यद्या तमस्य महिमानमायवः। अनुष्टुवन्ति पूर्वथो३म् (८.३.७-८)[2] शोंसावो३म् [3]यद्वावान पुरुतमं पुराषाट्। आ वृत्रहेन्द्रो नामान्यप्रो३म् अचेति प्रासहस्पतिस्तुविष्मान्। यदीमुश्मसि कर्तवे करत् तो३म् (१०.७४.६) शोंसावो३म् [4]पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः। आपिर्नो बोधि सधमाद्यो वृधेऽस्माँ अवन्तु ते धियो३म् भूयाम ते सुमतौ वाजिनो वयं मा नः स्तरभिमातये। अस्माञ्चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामयो३म् (८.३.१-२) शोंसावो३म् [5]इन्द्रस्य नु वीर्याणि प्र वोचम्। यानि चकार प्रथमानि वज्रो३म् अहन्नहिमन्वपस्ततर्द। प्र वक्षणा अभिनत् पर्वतानो३म् अहन्नहिं पर्वते शिश्रियाणम्। त्वष्टास्मै वज्रं स्वर्यं ततक्षो३म् वाश्रा इव धेनवः स्यन्दमानाः। अञ्जः समुद्रमव जग्मुरापो३म् वृषायमाणोऽवृणीत सोमम्। त्रिकद्रुकेष्वपिबत् सुतस्यो३म् आ सायकं मघवादत्त वज्रम्। अहन्नेनं प्रथमजामहीनो३म् यदिन्द्राहन् प्रथमजामहीनाम्। आन्मायिनाममिनाः प्रोत मायो३म् आत् सूर्यं जनयन् द्यामुषासम्। तादीत्ना शत्रुं न किला विवित्सो३म् अहन् वृत्रं वृत्रतरं व्यंसम्। इन्द्रो वज्रेण महता वधेनो३म् स्कन्धांसीव कुलिशेना विवृक्णा। अहिः शयत उपपृक् पृथिव्यो३म् अयोद्धेव दुर्मद आ हि जुह्वे। महावीरं तुविबाधमृजीषो३म् नातारीदस्य समृतिं वधानाम्। सं रुजानाः पिपिष इन्द्रशत्रो३म् अपादहस्तो अपृतन्यदिन्द्रम्। आस्य वज्रमधि सानौ जघानो३म् वृष्णो वध्रिः प्रतिमानं बुभूषन्। पुरुत्रा वृत्रो अशयद्व्यस्तो३म् नदं न भिन्नममुया शयानम्। मनो रुहाणा अति यन्त्यापो३म् याश्चिद्वृत्रो महिना पर्यतिष्ठत्। तासामहिः पत्सुतःशीर्बभूवो३म् (१.३२.१-८)

शोंसावो३म् [6]इन्द्रो देवः सोमं पिबतु। एकजानां वीरतमः। भूरिजानां तवस्तमः। हर्योः स्थाता। पृश्नेः प्रेता। वज्रस्य भर्ता। पुरां भेत्ता। पुरां दर्मा। अपां स्रष्टा। अपां नेता। सत्वनां नेता। निजघ्निर्दूरेश्रवाः। उपमाजिक्रुदंसनावान्। इहोशन् देवो बभूवान्।

१. स्तोत्रियः प्रगाथः। २. अनुरूपः प्रगाथः। ३. धाय्या। ४. सामप्रगाथः। ५. निविद्धानीयं सूक्तम्। ६. निविद्।

इन्द्रो देव इह श्रवदिह सोमं पिबतु। प्रेमां देवो देवहूतिमवतु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवतु। चित्रश्चित्राभिरूतिभिः। श्रवद् ब्रह्माण्यावसा गमो३म् (खिलम् ५.५.३)

नीचावया अभवद् वृत्रपुत्रा। इन्द्रो अस्या अव वधर्जभारो३म् उत्तरा सूरधरः पुत्र आसीत्। दानुः शये सहवत्सा न धेनो३म् अतिष्ठन्तीनामनिवेशनानाम्। काष्ठानां मध्ये निहितं शरीरो३म् वृत्रस्य निण्यं वि चरन्त्यापः। दीर्घं तम आशयदिन्द्रशत्रो३म् दासपत्नीरहिगोपा अतिष्ठन्। निरुद्धा आपः पणिनेव गावो३म् अपां बिलमपिहितं यदासीत्। वृत्रं जघन्वाँ अप तद्ववारो३म् अश्व्यो वारो अभवस्तदिन्द्र। सृके यत् त्वा प्रत्यहन् देव एको३म् अजयो गा अजयः शूर सोमम्। अवासृजः सर्तवे सप्त सिन्धो३म् नास्मै विद्युन्न तन्यतुः सिषेध। न यां मिहमकिरद्ध्रादुनिं चो३म् इन्द्रश्च यद्युयुधाते अहिश्च। उतापरीभ्यो मघवा वि जिग्यो३म् अहेर्यातारं कमपश्य इन्द्र। हृदि यत् ते जघ्नुषो भीरगच्छो३म्। नव च यन्नवतिं च स्रवन्तीः। श्येनो न भीतो अतरो रजांसो३म् (१.३२.९–१४) शोंसावो३म् [1]इन्द्रो यातोऽवसितस्य राजा। शमस्य च शृङ्गिणो वज्रबाहो३म् सेदु राजा क्षयति चर्षणीनाम्। अरान् न नेमिः परि ता बभूवो३म् (१.३२.१५)॥

[2]पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः।
सोतुर्बाहुभ्यां सुयतो नार्वा॥७.२२.१

[ बृहत्पृष्ठे ]

ऋक्सं—

अध्वर्यो शोंसावो३म् त्वामिद्धि हवामहे साता वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतो३म् नरस्त्वां काष्ठास्वर्वतः स त्वं नश्चित्र वज्रहस्त धृष्णुया। महः स्तवानो अद्रिवो३म् महः स्तवानो अद्रिवो गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषोम् (६.४६.१–२)[3] शोंसावो३म् त्वं ह्येहि चेरवे विदा भगं वसुत्तये। उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टयो३म् उदिन्द्राश्वमिष्टये त्वं पुरू सहस्राणि शतानि च। यूथा दानाय मंहसो३म् यूथा दानाय मंहस आ पुरंदरं चकृम विप्रवचसः। इन्द्रं गायन्तोऽवसो३म् (८.६१.७–८)[4] शोंसावो३म् [5]यद्वावान....करत तो३म् (१०.७४.६) शोंसावो३म् [6]उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः। सत्राच्या मघवा सोमपीतये धिया शविष्ठ आ गमो३म् धिया शविष्ठ आगमत्तं हि स्वराजं

१. परिधानीया। २. याज्या। ३. स्तोत्रियः प्रगाथः। ४. अनुरूपः प्रगाथः। ५. धाय्या। ६. सामप्रगाथः।

तमोजसे । धिषणे निष्टतक्षतो३म् धिषणे निष्टतक्षतुरुतोपमानां प्रथमो नि षीदसि । सोमकामं हि ते मनो३म् ( ८.६१.१-२ )[1]

ऐब्रा [ ३.२४ ]—स्तोत्रियं शंसति० तं मध्यमया वाचा शंसति० अनुरूपं शंसति० स उच्चैस्तरामिवानुरूपः शंस्तव्यः० धाय्यां शंसति० सा नीचैस्तरामिव धाय्या शंस्तव्या० प्रगाथं शंसति । स स्वरवत्या वाचा शंस्तव्यः०इन्द्रस्य नु वीर्याणि प्र वोचमिति सूक्तं शंसति० तत्प्रतिष्ठिततमया वाचा शंस्तव्यम्०।

[ ३.२२ ]—तस्मादेषात्रापि शस्यते यद्वावान पुरुतमं पुराषाळिति० यं कामयेतानायतनवान् स्यादित्यविराजास्य यजेद्गायत्र्या वा त्रिष्टुभा वान्येन वा छन्दसा वषट्कुर्यात्० यं कामयेतायतनवान् स्यादिति विराजास्य यजेत् पिबा सोममिन्द्र मन्दतु त्वेत्येतया० ॥

## [ रथन्तरपृष्ठे ]

ऋसं—

अध्वर्यो शोंसावो३म् अभि त्वा शूर.... हवामहो३म्(७.३२.२२-२३)[2] शोंसावो३म् अभि त्वा पूर्वपीतय .... पूर्वथो३म् (८.३.७-८)[3] शोंसावो३म् [4]यद्वावान पुरुतमं .... करत् तो३म्(१०.७४.६) शोंसावो३म् [5]पिबा सुतस्य रसिनो....यामयो३म्(८.३.१-२) शोंसावो३म् [6]इन्द्रस्य नु वीर्याणि .... बभूवो३म् (१.३२.१-८)

शोंसावो३म् [7]इन्द्रो देवः सोमं पिबतु । एकजानां वीरतमः । भूरिजानां तवस्तमः। हर्यो स्थाता । पृश्नेः प्रेता। वज्रस्य भर्ता । पुरां भेत्ता । पुरां दर्मा। अपां नेता। सत्वनां नेता। निजघ्निर्दूरेश्रवाः । उपमातिकृद्दंसनावान् । इहोशन् देवो बभूवान् । इन्द्रो देव इह श्रवदिह सोमं पिबतु । प्रेमां देवो देवहूतिमवतु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः। श्रवद्ब्रह्माण्यावसा गमो३म् (शांश्रौ ८.१७.१)

नीचावया अभवद्....रजांसो३म् (१.३२.९-१४) शोंसावो३म् [8]इन्द्रो यातोऽवसितस्य .... बभूवो३म् ( १.३२.१५ )॥

[9]पिबा सोममिन्द्र .... ॥ ७.२२.१

## [ बृहत्पृष्ठे ]

ऋसं—

अध्वर्यो शोंसावो३म् त्वामिद्धि .... जिग्युषो३म् ( ६.४६.१-२ )[2] शोंसावो३म् त्वं ह्येहि....गायन्तोऽवसो३म् (८.६१.७-८)[3] शोंसावो३म [4]यद्वावान....करत् तो३म्

१. शिष्टं पूर्ववत् । २. स्तोत्रियः प्रगाथः। ३. अनुरूपः प्रगाथः । ४. धाय्या । ५. सामप्रगाथः । ६. निविद्धानीयं सूक्तम् । ७. निविद् । ८. परिधानीया । ९. याज्या ।

( १०.७४.६ ) शोंसावो३म् [1]उभयं .... मनो३म् (८.६१.१-२ ) शोंसावो३म् [2]तमु ष्टुहि यो अभिभूत्योजाः । वन्वन्नवातः पुरुहूत इन्द्रो३म् अषाळ्हमुग्रं सहमानमाभिः । गीर्भिर्वर्ध वृषभं चर्षणीनो३म् स युध्मः सत्वा खजकृत् समद्वा । तुविम्रक्षो नदनुमाँ ऋजीषो३म् बृहद्रेणुश्च्यवनो मानुषीणा३म् । एकः कृष्टीनामभवत् सहावो३म् त्वं ह नु त्यददमायो दस्यून् । एकः कृष्टीरवनोरार्यायो३म् अस्ति स्विन्नु वीर्यं तत्त इन्द्र । न स्विदस्ति तदृतुथा वि वोचो३म् सदिद्धि ते तुविजातस्य मन्ये । सहः सहिष्ठ तुरतस्तुरस्यो३म् उग्रमुग्रस्य तवसस्तवीयः।अरध्रस्य रध्रतुरो बभूवो३म् तन्नःप्रत्नं सख्यमस्तु युष्मे। इत्था वदद्भिर्वलमाङ्गिरोभो३म् हन्नच्युतच्युद् दस्मेषयन्तम् । ऋणोः पुरो वि दुरो अस्य विश्वो३म् स हि धीभिर्हव्यो अस्त्युग्रः। ईशानकृन्महति वृत्रतूर्ये३म् स तोकसाता तनये स वज्री। वितन्तसाय्यो अभवत् समत्सो३म् स मज्मना जनिम मानुषाणाम् । अमर्त्येन नाम्नाति प्र सर्स्रो३म् स द्युम्नेन स शवसोत राया । स वीर्येण नृतमः समोको३म् स यो न मुहे न मिथू जनो भूत् । सुमन्तुनामा चुमुरिं धुनिं चो३म् वृणक् पिप्रुं शम्बरं शुष्णमिन्द्रः। पुरां च्यौत्नाय शयथाय नू चो३म् (६.१८.१-८)शोंसावो३म् [3]इन्द्रो देवः .... गमो३म् (शांश्रौ ८.१७.१) उदावता त्वक्षसा पन्यसा च । वृत्रहत्याय रथमिन्द्र तिष्ठो३म् धिष्व वज्रं हस्त आ दक्षिणत्रा । अभि प्र मन्द पुरुदत्र मायो३म् अग्निर्न शुष्कं वनमिन्द्र हेतिः। रक्षो नि धक्ष्यशनिर्न भीमो३म् गम्भीरय ऋष्वया यो रुरोज । अध्वानयद् दुरिता दम्भयच्चो३म् आ सहस्रं पथिभिरिन्द्र राया। तुविद्युम्न तुविवाजेभिर्वा३म् याहि सूनो सहसो यस्य नू चित् । अदेव ईशे पुरुहूत योतो३म् प्र तुविद्युम्नस्य स्थविरस्य घृष्वेः । दिवो ररप्शे महिमा पृथिव्यो३म् नास्य शत्रुर्न प्रतिमानमस्ति । न प्रतिष्ठिः पुरुमायस्य सह्यो३म् प्र तत्ते अद्या करणं कृतं भूत् । कुत्सं यदायुमतिथिग्वमस्मो३म् पुरु सहस्रा नि शिशा अभि क्षाम्। उत्तूर्वयाणं धृषता निनेथो३म् अनु त्वाहिघ्ने अध देव देवाः । मदन् विश्वे कवितमं कवीनो३म् करो यत्र वरिवो बाधिताय। दिवे जनाय तन्वे गृणानो३म् ( ६.१८.९-१४ ) शोंसावो३म् [4]अनु द्यावापृथिवी तत्त ओजः । अमर्त्या जिहत इन्द्र देवो३म् कृष्वा कृत्नो अकृतं यत्ते अस्ति । उक्थं नवीयो जनयस्व यज्ञो३म् ( ६ १८.१५ ) ॥

[5]पिबा सोममिन्द्र .... ॥ ७.२२.१

शांब्रा [ १५.४-५ ]—निष्केवल्यम्० यद् बृहत्या प्रतिपद्यते० द्वे तिस्रः करोति पुनरादायम्० स्तोत्रियं शस्त्वानुरूपं शंसति० धाय्यां शंसति० प्रगाथं शंसति० इन्द्रस्य नु

१. सामप्रगाथः। २. निविद्धानीयं सूक्तम् । ३. निविद् । ४. परिधानीया । ५. याज्या ।

वीर्याणि प्र वोचमिति पञ्चदशर्चं निष्केवल्यम्० तस्य मध्ये निविदं दधाति० अथ निविदः शंसति० तासामेकैकं पदमवग्राहं शंसति० उत्तमेन प्रणौति० एना आरतं शंसेत्० नितरां परिधानीयां शंसेत्० नवतिशतं स्तोत्रियाः संपद्यन्ते० यद्विराजा यजति पिबा सोममिन्द्र मन्दतु त्वेति पदं परिशिष्य विराजोऽर्धर्चेऽवानिति० उत्तरेण विराजोऽर्धर्चेन वषट्करोति० अनुवषट्करोति० ॥

तैब्रा [ २.५.४.१-३ ]—

[1]इन्द्रस्य नु वीर्याणि प्रवोचम् । यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द । प्र वक्षणा अभिनत् पर्वतानाम् ॥
अहन्नहिं पर्वते शिश्रियाणम् । त्वष्टास्मै वज्रꣳ स्वर्यं ततक्ष ।
वाश्रा इव धेनवः स्यन्दमानाः । अञ्जः समुद्रमवजग्मुरापः ॥
वृषायमाणोऽवृणीत सोमम् । त्रिकद्रुकेष्वपिबत्सुतस्य ।
आ सायकं मघवादत्त वज्रम् । अहन्नेनं प्रथमजामहीनाम् ॥
यदिन्द्राहन् प्रथमजामहीनाम् । आन्मायिनाममिनाः प्रोत मायाः ।
आत्सूर्यं जनयन् द्यामुषासम् । तादीक्ना शत्रून्न किला विवित्से ॥
अहन् वृत्रं वृत्रतरं व्यꣳसम् । इन्द्रो वज्रेण महता वधेन ।
स्कन्धाꣳसीव कुलिशेना विवृक्णा । अहिः शयत उपपृक्पृथिव्याम् ॥
अयोध्येव दुर्मद आ हि जुह्वे । महावीरं तु विबाधमृजीषम् ।
नातारीरस्य समृतिं वधानाम् । सꣳरुजानाः पिपिष इन्द्रशत्रुः ॥

कासं [ २८.३ ]—यद्विराजा यजति० यं द्विष्यात् त्रिष्टुभा तस्य यजेत्० ॥
गोब्रा [ २.३.२३ ]—माध्यंदिने सवने सर्वे निष्केवल्यानि शंसन्ति० ॥

## १२४. माहेन्द्रग्रहप्रचारः ऐन्द्रग्रहग्रहणं च

तैसं [ ३.३.१ ]—

अग्ने तेजस्विन् तेजस्वी त्वं देवेषु भूयास्तेजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु ॥ दीक्षायै च त्वा तपसश्च तेजसे जुहोमि ॥ तेजोविदसि तेजो मा मा हासीन्माहं तेजो हासिषं मा मां तेजो हासीत् ॥ इन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूया ओजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु ॥ ब्रह्मणश्च त्वा क्षत्रस्य चौजसे जुहोमि ॥ ओजोविदस्योजो मा मा हासीन्माहमोजो हासिषं मा मामोजो हासीत् ॥ सूर्य भ्राजस्विन् भ्राजस्वी त्वं देवेषु भूया भ्राजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु ॥ वायोश्च

१. एते षण्मन्त्रा निष्केवल्यशस्त्रेऽन्तर्भावनीया इति सायणभाष्यम् ।

त्वापां च भ्राजसे जुहोमि ॥ सुवर्विदसि सुवर्मा मा हासीन्माह९ सुवर्हासिषं मा मा९ सुवर्हासीत् ॥ मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु ॥ मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु ॥ मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥

मैसं [ ४.६.५ ]—उपयामगृहीतोऽसीन्द्राय त्वेन्द्राय त्वा इति गृह्णाति [1]सर्वेभ्यो माध्यंदिने सवने० ॥

**कासं [ ४.६ ]—**

**उपयामगृहीतोऽसीन्द्राय त्वेन्द्राय त्वोक्थेभ्यस्त्वोक्थाव्यं गृह्णामि[2] ॥ एष ते योनिरिन्द्राय त्वा ॥ पुनर्हविरसि ॥**

**कपिसं [ ३.४ ] ≡ कासं**

माशब्रा [४.२.३.१४,१५,१७,१८]–**इन्द्राय त्वा [देवाव्यं यज्ञस्यायुषे गृह्णामि]** इत्येव माध्यंदिने सवने० तदु ह चरकाध्वर्यवो विगृह्णन्ति० **इन्द्राय त्वेन्द्राय त्वा** इत्येव माध्यंदिने सवने० द्विर्हि **पुनर्हविरसि** इति स्थालीमभिमृशति । तूष्णीं तृतीयं निदधाति । तं वै नोपयामेन गृह्णीयात् । न योनौ सादयेत् ० अथ यत्पुनर्हविरसीति स्थालीमभिमृशति० न तदाद्रियेत । तूष्णीमेव निदध्यात्[3] ॥

काशब्रा [ ५.२.३.११,१४–१५ ] ≡ माशब्रा

## १२५. द्वितीयपृष्ठस्तोत्रम्[4]

### [ रथन्तरपृष्ठे ][5]

### वामदेव्यम्

साकौसं [ १.२.२.३.५; २.१.१.१२]—

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥

कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु ॥

अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतये ॥

१. 'उपयामगृहीतोऽसीन्द्राय त्वा' इत्यनेनैव यजुषा माध्यंदिने सवने मैत्रावरुणसंबन्धिनं ब्राह्मणाच्छंसिसंबन्धिनम् अच्छावाकसंबन्धिनं च ग्रहं गृह्णाति । अस्मिन् सवने त्रयोऽपि उक्थ्यग्रहा इन्द्रदेवताकाः ।

२. 'उपयामगृहीतोऽसीन्द्राय त्वोक्थेभ्यस्त्वोक्थाव्यं गृह्णामि' इत्यनेनैव यजुषा माध्यंदिने सवने मैत्रावरुणसंबन्धिनं ब्राह्मणाच्छंसिसंबन्धिनम् अच्छावाकसंबन्धिनं च ग्रहं गृह्णाति ।

३. 'इन्द्राय त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि' इत्यनेनैव यजुषा माध्यंदिने सवने मैत्रावरुणसंबन्धिनं ब्राह्मणाच्छंसिसंबन्धिनम् अच्छावाकसंबन्धिनं च ग्रहं गृह्णाति । चरकाध्वर्यवस्तु एवं कुर्वन्तिः– 'उपयामगृहीतोऽसि देवेभ्यस्त्वा देवाव्यमुक्थेभ्य उक्थाव्यमिन्द्राय जुष्टं गृह्णामि' इति यजुषा मैत्रावरुणादीनां संबन्धिनं ग्रहं गृह्णाति, 'एष ते योनिरिन्द्राय त्वा' इति सादयति, 'पुनर्हविरसि' इति स्थालीमभिमृशति मैत्रावरुणग्रहस्य ब्राह्मणाच्छंसिग्रहस्य च ग्रहणावसरे । तथा न कुर्वीतेति शतपथब्राह्मणकाराणामुपदेशः । ४. सप्तदशस्तोत्रम् । ५. बृहत्पृष्ठेऽप्येवमेव ।

१ ३ २ ४ २ ४२ ५ १ २ २१२ २ १ २ २
हुम् । का५ यानश्चा३ इत्रा३ आभुवात् ॥ ओमूतीसदावृधःसखाऔ३ हो
२ १ २^ ३ २ २ १ - १^ २ ३
हाइ ॥ कया२३ शचाइ ॥ ष्ठयौहो३ हुम्मा २ वा २ र्त्तो ३५ ॥ हाइ ॥ [१] का५
२ ४ २ ४ ५ १ २२ १ २ १ २ २ २ १
स्त्वासत्यो३ मा ३ दानाम् ॥ ओम्माꣳ हिष्ठोमात्सादन्धसाऔ३ हो हाइ ॥ दृढा
२^ ३ २ २ १ - १ २ ३ २ ४
२३ चिदा ॥ रूजौहो३ हुम्मा२ वा२ सो३५ ॥ हाइ ॥ [ २ ] आ५ भीषुणा३ः
२ ४ ५ १ २२ १ २२ १ २ २ १ २^ ३ २ २
सा३ खीनाम् ॥ ओमाविताजराइतॄणामौ २३ हो हाइ॥ शता२३ म्भवा ॥ सियौहो
१ - १ २
३ हुम्मा २ ता २ यो ३५ ॥ हाइ ॥ [ ३ ] [ ग्राम ५.१.२५; ऊह १.१.५ ]

**तांब्रा [ १.९.८ ]—**

[१]अन्वासि रात्र्यै त्वा रात्रि जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥

[ ७.८-९ ]—सर्वदेवत्यं वै वामदेव्यम् यत् ककतीषु तेन प्राजापत्यम्० यदनिरुक्तासु तेन प्राजापत्यम्०यद्गायत्रीषु तेनाग्नेयम्०यत् पृष्ठेषु न्यदधुस्तेनैन्द्रम्० यन्मैत्रावरुणोऽनुशꣳसति तेन मैत्रावरुणम् । यद्बहुदेवत्यमुत्तमं पदं तेन वैश्वदेवम्० ध्रुव आसीनो वामदेव्येनोद्गायेत्० अध्रुवतेवोद्गेयम्० अहिंसतेवोद्गेयम्० स्वधूर्वामदेव्यं गेयम्० न बृहतो न रथन्तरस्यानुरूपं गेयꣳ स्वेनैवायतनेन गेयम्० अनिरुक्तं गेयम्० रेवतीषु वामदेव्येन[२] पशुकामः स्तुवीत०॥

## [ रथन्तरपृष्ठे ]

## वामदेव्यम्

साजैसं [ ३.४.३–५ ]—

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥
कस्त्वा सत्यो मदानां मꣳहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु ॥
अभी षु णः सखीनामविता जरितॄणाम् । शतं भवास्यूतये ॥

ओहम् । कायानश्चायित्राभूवत् ॥ ओओओओओओआबुहौहोहाओ ॥
फ णफ ख प ख त प ख त च टसटटटट
ष्ठयौहोहुम्मा ॥ वाकू ओ ॥ हायी ॥ [१] कास्त्वासत्योमादानाम् ॥ ओओओओ-
त ट प ख त्र फ णफ ख प ख त प

१. ब्रह्मा अनेन स्तोत्रमनुमन्त्रयते । २. रेवतीर्नः इत्यादिषु ऋक्षु गेयं वामदेव्यं साम ( ऊह १३.९.१ ) इन्द्रस्तोमसंज्ञके एकाहे द्रष्टव्यम् ।

**ओओआबुहौहोहाओ ।। रुजौहोहम्मा ।। वाक् ओ ।। हायी ।। [२] आभीषुणास्साखीनाम् ।।**
ख त च टसटटटट त ट प ख त्र फ णफ ख
**ओओओओओओआबुहौहोहाओ ।। सियौहोहम्मा ।। वाक् ओ ।। हायी ।। [३]**
प ख त प ख त च टसट टटट टच प ख त्रा

जैब्रा [१.१३८–१४२]—तद्यद् गायत्रीषु स्तुवन्ति तेनाग्नेयम्० यत्पृष्ठं माध्यंदिनं तेनैन्द्रम्। यत् कवतीषु स्तुवन्ति तेन प्राजापत्यम्। यदनिरुक्तं तेन वैश्वदेवम्। यन्मैत्रावरुणाय स्तुवन्ति तेन मैत्रावरुणम्। तद्वा एतत् पशव्यं यद्वामदेव्यम्। अनेजन्नुद्गायेत्० प्रावृत एवानेजन्नुद्गायेत्० तस्य त्रीण्यक्षराणि छन्नानि गायति० वामदेव्यस्य स्तोत्र ऋषभमभ्यर्जेत्। **सौ हौ खा** इत्येवर्षभः० तत् परोक्षमिव गेयम्। नर्चमुपस्पृशेत्० पदे अन्तरा नावान्यात्० उत्तरस्य पदस्यारभ्यावान्यात्० प्रतिहार एव प्रतिह्रियमाणः **वाक्** इत्युद्गाता ब्रूयात्० रेवतीषु पशुकामस्य कुर्यात्० कवतीभ्यो ह्येति प्राजापत्याभ्यः। अथ ह वा एतद् भरद्वाजः पृश्निस्तोत्रं ददर्श पशुकामः। कया नश्चित्र आ भुवत् ।। रेवतीर्नः सधमादे ।। अभी षु णः सखीनामिति। स यदेकां रेवतीं मध्यतोऽपिसृजति० यदु कवत्यौ प्राजापत्ये अभितो भवतः० तत् स्वारं भवति० **अविता जरायितॄणाम् आ औ हो हा यि शतां भवस्यौ हो हुं मा ता या हुं मा** इत्युत्तमाया उत्तरार्धे कुर्यात्० वामदेव्यस्य स्तोत्रे **पुरुषः** इति ब्रूयात्०।

[१.१४४-१४५]—तत् स्वधूर्गेयं नोच्चैरिव न नीचैरिव० ।।

[१.३२७]—अथ वामदेव्यं पुरस्ताच्छान्तिमभिव्याहरन्ति **प्रजापतिरसि वामदेव्यं ब्रह्मणः शरण तन्मा पाहि** इति। अथैता अमृतव्याहृतीरभिव्याहरति **भूर्भुवः स्वः ।। क इदमुद्गास्यति स इदमुद्गास्यति** इति० अथाभ्यनिति ।।

[१.३३३]—अथैतद् वामदेव्यम्। आ प्रतिहारादनवानं गेयम्० नो ह्यान्यस्यानुधर्म गेयम्० स यदि वृष्टिकामः स्यात **आपो वायुरापो वायुः** इति पुरस्ताद् व्याहृत्य वामदेव्येन स्तुवीत० ।।

तैसं [४.४.१]—

**[1]अनुवासि रात्रियै त्वा रात्रिं जिन्व ।।**

[३.५.२]—प्रवास्यनुवासीत्याह० ।।

मैसं [२.८.८]—

**अनुवाय रात्र्यै रात्रीं जिन्व ।।**

१. स्तोत्रस्य प्रसवात् पूर्वं ब्रह्मा इमं स्तोमभागं जपति।

कासं [ १७.७ ]—
अनुवासि रात्र्यै त्वा रात्रीं जिन्व ॥
[ ३७.१७ ]—प्रवास्यनुवासीति० ॥
कपिसं [ २६.६ ] ≡ कासं १७.७
गोश्रा [ २.२.१३-१४ ]—अह्वांसि इति० बृहस्पतये स्तुत इति० ॐ भुवो जनत् इति माध्यंदिने सवने० ॥

## १२६. मैत्रावरुणशस्त्रम्

[ रथन्तरपृष्ठे ][1]

श्रसं—

अध्वर्यो शोंसावो३म् [2]कया नश्चित्र आ भुवदूती सदावृधः सखा। कया शचिष्ठया वृतो३म् कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः। दृळ्हा चिदारुजे वसो३म् अभी षु णः सखीनामविता जरितॄणाम्। शतं भवास्यूतिभो३म् ( ४.३१.१–३ )[3] शोंसावो३म् कया त्वं न ऊत्याभि प्र मन्दसे वृषन्। कया स्तोतृभ्य आ भरो३म् कस्य वृषा सुते सचा नियुत्वान् वृषभो रणत्। वृत्रहा सोमपीतयो३म् अभी षु णस्त्वं रयिं मन्दसानः सहस्रिणम्। प्रयन्ता बोधि दाशुषो३म् ( ८.९३.१९–२१ )[4] शोंसावो३म् [5]कस्तमिन्द्र त्वावसुमा मर्त्यो दधर्षति। श्रद्धा इत् ते मघवन् पार्ये दिवि वाजी वाजं सिषासतो३म् मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु। तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरितो३म् ( ७.३२.१४–१५ ) शोंसावो३म् सद्यो ह जातो वृषभः कनीनः। प्रभर्तुमावदन्धसः सुतस्यो३म् साधोः पिब प्रतिकामं यथा ते। रसाशिरः प्रथमं सोम्यस्यो३म् यज्जायथास्तदहरस्य कामे। अंशोः पीयूषमपिबो गिरिष्ठो३म् तं ते माता परि योषा जनित्री। महः पितुर्दम आसिञ्चदग्रो३म् उपस्थाय मातरमन्नमैट्ट। तिग्ममपश्यदभि सोममूधो३म् प्रयावयन्नचरद्गृत्सो अन्यान्। महानि चक्रे पुरुधप्रतीको३म् उग्रस्तुराषाळभिभूत्योजाः। यथावशं तन्वं चक्र एषो३म् त्वष्टारमिन्द्रो जनुषाभिभूय। आमुष्या सोममपिबच्चमूषो३म् शुनं हुवेम मघवानमिन्द्रम्। अस्मिन् भरे नृतमं वाजसातो३म् शृण्वन्तमुग्रमूतये समत्सु। घ्नन्तं वृत्राणि संजितं धनानो३म् ( ३.४८ ) एवा त्वामिन्द्र वज्रिन्नत्र। विश्वे देवासः सुहवास ऊमो३म् महामुभे रोदसी वृद्धमृष्वम्। निरेकमिद्वृणते वृत्रहत्यो३म् अवासृजन्त जिव्रयो न देवाः। भुवः सम्राळिन्द्र सत्ययोनो३म् अहन्नहिं परिशयानमर्णः। प्र वर्तनीररदो विश्वधेनो३म् अतृण्वन्तं

१. बृहत्पृष्ठेऽप्येवमेव। २. आद्यां त्रिः शंसेत्। ३. स्तोत्रियस्तृचः। ४. अनुरूपस्तृच। ५. प्रगाथः।

वियतमबुध्यम्। अबुध्यमानं सुषुपाणमिन्द्रो३म् सप्त प्रति प्रवत आशयानम्। अहिं वज्रेण वि रिणा अपर्वो३म् अक्षोदयच्छवसा क्षाम बुध्नम्। वार्ण वातस्तविषीभिरिन्द्रो३म् दृळ्हान्यौभ्नादुशमान ओजः। अवाभिनत् ककुभः पर्वतानो३म् अभि प्र दद्रुर्जनयो न गर्भम्। रथाइव प्र ययुः साकमद्रयो३म् अतर्पयो विसृत उब्ज ऊर्मीन्। त्वं वृताँ अरिणा इन्द्र सिन्धो३म् त्वं महीमवनिं विश्वधेनाम्। तुर्वीतये वय्याय क्षरन्तो३म् अरमयो नमसैजदर्णः। सुतरणाँ अकृणोरिन्द्र सिन्धो३म् प्राग्रुवो नभन्वो न वक्राः। ध्वस्रा अपिन्वद् युवतीर्ऋतज्ञो३म् धन्वान्यज्राँ अपृणक् तृषाणान्। अधोगिन्द्रः स्तर्यो दंसुपत्नो३म् पूर्वीरुषसः शरदश्च गूर्ताः। वृत्रं जघन्वाँ असृजद्वि सिन्धो३म् परिष्ठिता अतृणद्बद्बधानाः। सीरा इन्द्रः स्रवितवे पृथिव्यो३म् वम्रीभिः पुत्रमग्रुवो अदानम्। निवेशनाद्धरिव आ जभर्थो३म् व्यन्धो अख्यदहिमाददानः। निर्भूदुखच्छित् समरन्त पर्वो३म् प्र ते पूर्वाणि करणानि विप्र। आविद्धाँ आह विदुषे करांसो३म् यथायथा वृष्ण्यानि स्वगूर्ता। अपांसि राजन् नर्याविवेषो३म् (४.१९.१-१०) शोंसावो३म् [1]नू ष्टुत इन्द्र नू गृणानः। इषं जरित्रे नद्यो न पीपो३म् अकारि ते हरिवो ब्रह्म नव्यम्। धिया स्याम रथ्यः सदासो३म् (४.१९.११)॥

[2]उशन्नु षु णः सुमना उपाके सोमस्य नु सुषुतस्य स्वधावः।
पा इन्द्र प्रति-भृतस्य मध्वः समन्धसा ममदः पृष्ठ्येन॥ ४.२०.४

शांब्रा [२९.३]—वामदेव्यं मैत्रावरुणस्य पृष्ठं भवति[3]०॥
[२८.९]—मध्यंदिने होत्राशंसिन एकदेवत्याः शंसन्ति०॥

अशौसं—

कया नश्चित्र आ भुवदूती....॥कस्त्वा सत्यो....॥अभी षु णः....॥२०.१२४.१-३

गोब्रा [२.४.१]—कया नश्चित्र आ भुवत्, कया त्वं न ऊत्या इति मैत्रावरुणस्य स्तोत्रियानुरूपौ। कस्तमिन्द्र त्वावसुम् इति बार्हतः प्रगाथः। तस्योपरिष्टाद् ब्राह्मणम्। सद्यो ह जातो वृषभः कनीनः इत्युक्थमुखम्। एवा त्वामिन्द्र वज्रिन्नत्र इति पर्यासः। उशन्नु षु णः सुमना उपाके इति यजति० वषट्कृत्यानुवषट्करोति। प्रत्येत्याभिमृशन्ते। नाप्याययन्ति०॥

[२.४.४]—अथ अध्वर्यो शंसावोम् इति स्तोत्रियायानुरूपाय प्रगाथायोक्थमुखाय परिधानीयाया इति पञ्च कृत्व आह्वयन्ते० सर्व ऐन्द्राणि त्रैष्टुभानि शंसन्ति० सर्वे समवतीभिः परिदधति० सर्वे मद्वतीभिर्यजन्ति० सर्वेऽनुवषट्कुर्वन्ति०॥

१. परिधानीया। २. याज्या। ३. शाङ्खा० मते शस्त्रं पूर्ववत्।

[ २.३.२०,२२ ]—यदु बृहत्या प्रतिपद्यते० द्वे तिस्रः करोति पुनरादायम्० स्तोत्रियं शंसति० स मध्यमया वाचा शंस्तव्यः० अनुरूपं शंसति० स उच्चैस्तरामिव शंस्तव्यः० धाय्यां शंसति० सा नीचैस्तरामिव शंस्तव्या० प्रगाथं शंसति० स स्वरवत्या वाचा शंस्तव्यः० सूक्तं शंसति० तत्प्रतिवीततमया वाचा शंस्तव्यम्० निविदं शंसति० परिधानीयां शंसति० याज्यया यजति० ॥

## १२७. ऐन्द्रग्रहप्रचारः ऐन्द्रग्रहग्रहणं[1] च

**कासं [ ४.६ ]—**

**देवेभ्यस्त्वा देवाव्यं पृणच्मि यज्ञस्यायुषे ॥**

**कपिसं [ ३.४ ] = कासं**

## १२८. तृतीयपृष्ठस्तोत्रम्[2]

### [ रथन्तरपृष्ठे ]

### नौधसम्

साकौसं [ १.३.१.५.४; २.१.१.१३ ]—

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥
द्युक्षꣳ सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
क्षुमन्तं वाजꣳ शतिनꣳ सहस्रिणं मक्षू गोमन्तमीमहे ॥

१ २५ ४५२४५ १२१२ २ १ २ १ १
हुम् । ता२३४ म् वोदस्ममृतीषाहाम् ॥ ओं वसोर्मन्दाना३ मान्धा३ सा आ
२१ २ १२१ २^३ ५ १ २ १ २१ ५
२३ भीवात्सन्नस्वसराइषूधेना २३४ वाः॥ आ२३ इन्द्राम् ॥ गाइर्भिर्न्नवो २३४ वा ॥
३ ५ १ ५२ ४५२४५ १ २ १२ २ १ २
मा२३४ हे ॥ [ १ ] आ २३४ इन्द्रङ्गीर्भिर्न्नवामाहाइ ॥ ओमिन्द्रङ्गीर्भाइर्ना३ वामा२
२ १ २ १२२ १२१ २^३ ५ १ २ १ २१
हाइद्यू२३ क्षाꣳ सूदानुन्तविषाइभाइरावा२३४ र्त्ताम् ॥ गा२३ इरीम् ॥ नपुरूभो२३४
५ ३ ५ १ ५ २४५ १ २१ २
वा ॥ जा२३४ साम् ॥ [ २ ] गा २३४ इरिन्नपुरूभोजासाम् ॥ ओङ्गिरिन्नपुरू३

१. एतद्विषयक मन्त्रब्राह्मणं ३९५ पृष्ठे द्रष्टव्यम् । २. सप्तदशस्तोमम् ।

१ २ २ १ ११ १२ १२ १ २^३ ५ १ १
भोजा२ साइ क्षू२३ मान्तंवाज६ शतिना६ साहस्रा २३४ इणाम् ॥ मा २३ क्षू ॥
१ २१ ५ ३ ५
गोमन्तमो २३४ वा ॥ मा२३४ हे ॥ [ ग्राम ६.१.३७; ऊह १.१.६ ]

[बृहत्पृष्ठे]

श्यैतम्

साकौसं [ १.३.१.५.३; २.२.१.१३ ]—

अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥
शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः ॥

१ ४ ३ ४ ५ र ३ २ ३ र ४ र ५ १ २ १ ७ ५
हुम् । अभिप्रवःसुराधसा ३४ औहोवा ॥ ओमाइन्द्रमर्चयथाविदा२३४ ओ६
५ १ र २ १ २ १ २ १ ^ ३ ५ २ १ र २ २ १
हायोजरितृभ्योमाघा२३ वा पुरू २ वा २३४ सूः ॥ सहस्रेणाइवा ३ शा ॥ हुम्माइक्षा
^ ३ ५ र र ३ ५ ४ ३ र ४ र ५ ३ २ ३ र ४ र ५
२ ता २३४ औहोवा ॥ वा २३४ सू ॥ [ १ ] सहस्रेणेवशिक्षता ३४ औहोवा ॥
१ १ २ र र १ ७ ५ ५ २ १ र र २ र १ २ १ ^ ३
ओ६ साहस्रेणेवशाइक्षता २३४ ओ ६ हाशतानीकेव प्राजा२३ इगातिधा २ र्ष्णू२३४
५ १ १ २ १ ^ ३ ५ र र ३ ५
या ॥ हन्तिवृत्राणी ३ दा ॥ हुम्माइशू २ षा २३४ औहोवा ॥ वा२३४ सू ॥
३ ४ ३ र ४ ५ र ३ २ ३ र ४ र ५ १ १ र १ ७ ५
[ २ ]हन्तिवृत्राणिदाशुषा३४ औहोवा ॥ ओ६ हान्तिवृत्राणिदाशुषा २३४ ओ६
५ २ १ र २ १ २ १ ^ ३ ५ १ र २ १ १
हागिरेरिवप्ररासा २३ आस्यपा २ इन्वा २३४ इराइ ॥ दत्राणिपुरू ३भो ॥ हुम्माइ
^ ३ ५ र र ३ ५
जा२ सा २३४ औहोवा ॥ वा २३४ सू ॥ [ ३ ] [ ग्राम ६.१.३०; ऊह २.१.३ ]

तांम्रा [ १.९.९ ]—

[1]अग्निरसि वसुभ्यस्त्वा वसून् जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥

१. ब्रह्मा अनेन स्तोत्रमनुमन्त्रयते ।

[७.१०]—यद्रथन्तराय नौधसं प्रति प्रयुञ्जन्ति० यद् बृहते श्यैतं प्रति प्रयुञ्जन्ति० ब्रह्म वै नौधसम्। ब्रह्मवर्चसकाम एतेन स्तुवीत० पशवो वै श्यैतम्। पशुकाम एतेन स्तुवीत० वसुनिधनं भवति० ॥

## [रथन्तरपृष्ठे]
## नौधसम्

साजैसं [३.४.६–७]—

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥
द्युक्षꣳ सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम्।
क्षुमन्तं वाजꣳ शतिनꣳ सहस्रिणं मक्षू गोमन्तमीमहे ॥

ओहम् । तांवोदस्ममृतीषाहाम् ॥ ओसोर्मान्दाना'मा'न्धासा'ओभायी ॥
प प्यनदश सस ससटस ट टटसच
वात्सा'न्नूस्वासरायीषुधे'ना'वाः ॥ आयीन्द्राम् ॥ ओर्भायीर्हावो बा॥ माहे ॥ [१]
ध सच टटट च त कखण ट त कपप्य खश
आयीन्द्रङ्गीर्भिर्हवा'माहा'यी ॥ ओन्द्राङ्गायिर्भायि'र्हावामाहाओक्षाम् ॥ सू'दा''नू'न्ता·
प प्यनद श्य सस स सटस टटटसच ससच टटट च
विषायीभायीरावार्त्तम् ॥ गायीरीम् ॥ ओपुरूभोबा ॥ जानाम् ॥ [२] गायिरीन्न-
त शिकखण ट त च पप्य खश प
पुरुभोजानाम् ॥ ओरायिन्नापुरु'भोजानामोमा ॥ तांवा'जा'ꣳ शातिनाꣳ साहस्रा-
प्यन्दश स ससस टस टटटसच ससच टटट च त ककख
यिणम् ॥ माक्षू ॥ ओमन्तामोबा ॥ माहे ॥ [३]
ण ट त कपप्य खश

जैब्रा [१.१४६–१४८]—रथन्तरेण स्तुवन्ति० अथ वामदेव्येन० अथ नौधसेन० बृहता स्तुवन्ति० अथ वामदेव्येन० अथ श्यैतेन० अथ नौधसम्० तद् द्व्यक्षरणिधनं भवति० श्यैतं पशुकामः कुर्वीत० तस्य वसु इत्येव निधनम्० तद् द्व्यक्षरणिधनं भवति० ।

[१.३३३–३३४]—सप्त कृत्वो ब्रह्मसाम्नः प्ररोहति० वासोमान्दानोवा इति चतुः प्रारुक्षत् आन्धासाभीवात्सानूनोवा इति त्रिः ॥

तैसं [४.४.१]—

[1]उशिगसि वसुभ्यस्त्वा वसूञ्जिन्व ॥

1. स्तोत्रस्य प्रस्तवात् पूर्वं ब्रह्मा इमं स्तोमभागं जपति ।

[ ३.५.२ ]—उशिगसि वसुभ्यस्त्वा वसूञ्जिन्वेत्याह० ॥

मैसं [ २.८.८ ]—

उशिजा वसुभ्यो वसून् जिन्व ॥

कासं [ १७.७ ]—

उशिगसि वसुभ्यस्त्वा वसूञ्जिन्व ॥

[ ३७.१७ ]—उशिगसि वसुभ्यस्त्वा वसूञ्जिन्व ॥

कपिसं [ २६.६ ] = कासं १७.७

गोब्रा [ २.२.१३–१४ ]—उशिगसि० बृहस्पतये स्तुत इति० ॐ भुवो जनत् इति माध्यंदिने सवने० ॥

## १२९. ब्राह्मणाच्छंसिशस्त्रम्

### [ रथन्तरपृष्ठे ]

ऋसं—

अध्वर्यो शोंसावो३म् [1]तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः। अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहो३म् इन्द्रं गीर्भिर्नवामहे द्युक्षं सुदानुं तविषीभिरावृतम्। गिरिं न पुरुभोजसो३म् गिरिं न पुरुभोजसं क्षुमन्तं वाजं शतिनं सहस्रिणम्। मक्षू गोमन्तमीमहो३म् ( ८.८८.१-२ )[2] शोंसावो३म् तत् त्वा यामि सुवीर्यं तद् ब्रह्म पूर्वचित्तये। येना यतिभ्यो भृगवे धने हिते येन प्रस्कण्वमाविथो३म् येन प्रस्कण्वमाविथ येना समुद्रमसृजो महीरपः। तदिन्द्र वृष्णि ते शवो३म् तदिन्द्र वृष्णि ते शवः सद्यः सो अस्य महिमा न संनशे। यं क्षोणीरनुचक्रदो३म् ( ८.३.९-१० )[3] शोंसावो३म् [4]उदु त्ये मधुमत्तमा गिरः स्तोमास ईरते। सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथाइवो३म् कण्वाइव भृगवः सूर्याइव विश्वमिद् धीतमानशुः। इन्द्रं स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरो३म् ( ८.३.१५-१६ ) शोंसावो३म् इन्द्रः पूर्भिदातिरद्दासमर्कैः। विदद्वसुर्दयमानो वि शत्रो३म् ब्रह्मजूतस्तन्वा वावृधानः। भूरिदात्र आपृणद्रोदसी उभो३म् मखस्य ते तविषस्य प्र जूतिम्। इयर्मि वाचममृताय भूषो३म् इन्द्र क्षितीनामसि मानुषीणाम्। विशां दैवीनामुत पूर्वयावो३म् इन्द्रो वृत्रमवृणोच्छर्धनीतिः। प्र मायिनाममिनाद्वर्पणीतो३म् अहन् व्यंसमुशधग्वनेषु। आविर्धेना अकृणोद्राम्याणो३म् इन्द्रः स्वर्षा जनयन्नहानि। जिगायोशिग्भिः पृतना अभिष्टो३म् प्रारोचयन्मनवे केतुमह्नाम्। अविन्दज्ज्योतिर्बृहते रणायो३म्

१. आद्यां त्रिः शंसेत्। २. स्तोत्रियः प्रगाथः। ३. अनुरूपः प्रगाथः। ४. प्रगाथः।

इन्द्रस्तुजो बर्हणा आ विवेश। नृवद्दधानो नर्या पुरूणो३म् अचेतयद्धिय इमा जरित्रे। प्रेमं वर्णमतिरच्छुक्रमासो३म् महो महानि पनयन्त्यस्य। इन्द्रस्य कर्म सुकृता पुरूणो३म् वृजनेन वृजिनान्त्सं पिपेष। मायाभिर्दस्यूँरभिभूत्योजो३म् युधेन्द्रो मह्ना वरिवश्चकार। देवेभ्यः सत्पतिश्चर्षणिप्रो३म् विवस्वतः सदने अस्य तानि। विप्रा उक्थेभिः कवयो गृणन्तो३म् सत्रासाहं वरेण्यं सहोदाम्। ससवांसं स्वरपश्चदेवो३म् ससान यः पृथिवीं द्यामुतेमाम्। इन्द्रं मदन्त्यनु धीरणासो३म् ससानात्याँ उत सूर्यं ससान। इन्द्रः ससान पुरुभोजसं गो३म् हिरण्ययमुत भोगं ससान। हत्वी दस्यून् प्रार्यं वर्णमावो३म् इन्द्र ओषधीरसनोदहानि। वनस्पतीँरसनोदन्तरिक्षो३म् बिभेद वलं नुनुदे विवाचः। अथाभवद्दमिताभिक्रतूनो३म् शुनं हुवेम मघवानमिन्द्रम्। अस्मिन् भरे नृतमं वाजसातो३म् शृण्वन्तमुग्रमूतये समत्सु। घ्नन्तं वृत्राणि संजितं धनानो३म् (३.३४) उदु ब्रह्माण्यैरत श्रवस्या। इन्द्रं समर्ये महया वसिष्ठो३म् आ यो विश्वानि शवसा ततान। उपश्रोता म ईवतो वचांसो३म् अयामि घोष इन्द्र देवजामिः। इरज्यन्त यच्छुरुधो विवाचो३म् नहि त्वमायुश्चिकिते जनेषु। तानीदंहांस्यति पर्ष्यस्मो३म् युजे रथं गवेषणं हरिभ्याम्। उप ब्रह्माणि जुजुषाणमस्थो३म् वि बाधिष्ट स्य रोदसी महित्वा। इन्द्रो वृत्राण्यप्रती जघन्वो३म् आपश्चित् पिप्युः स्तर्यो न गावः। नक्षन्नृतं जरितारस्त इन्द्रो३म् याहि वायुर्न नियुतो नो अच्छा। त्वं हि धीभिर्दयसे वि वाजो३म् ते त्वा मदा इन्द्र मादयन्तु। शुष्मिणं तुविराधसं जरित्रो३म् एको देवत्रा दयसे हि मर्तान्। अस्मिञ्छूर सवने मादयस्वो३म् (७.२३.१–५) शोंसावो३म् [1]एवेदिन्द्रं वृषणं वज्रबाहुम्। वसिष्ठासो अभ्यर्चन्त्यर्को३म् स नः स्तुतो वीरवद्धातु गोमत्। यूयं पात स्वस्तिभिः सदा नो३म् (७.२३.६)॥

[2]ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा।
युक्त्वा हरिभ्यामुप यासदर्वाङ् माध्यन्दिने सवने मत्सदिन्द्रः॥ ५.४०.४

## [ बृहत्पृष्ठे ]

ऋसं—

अध्वर्यो शोंसावो३म् अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे। यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षतो३म् सहस्रेणेव शिक्षति शतानीकेव प्र जिगाति धृष्णुया। हन्ति वृत्राणि दाशुषो३म् हन्ति वृत्राणि दाशुषे गिरेरिव प्र रसा अस्य पिन्विरे। दत्राणि पुरुभोजसो३म् (८.४९.१–२)[3]

१. परिधानीया। २. याज्या। ३. स्तोत्रियः प्रगाथः। शिष्टं पूर्ववत्।

[बृहत्पृष्ठे][1]

ऋसं—

अध्वर्यो शोंसावो३म् अभि प्र वः .... पुरुभोजसो३म् (८.४९.१–२)[2] शोंसावो३म् प्र सु श्रुतं सुराधसमर्चा शक्रमभिष्टये। यः सुन्वते स्तुवते काम्यं वसु सहस्रेणेव मंहतो३म् सहस्रेणेव मंहते शतानीका हेतयो अस्य दुष्टराः। इन्द्रस्य समिषो महो३म् इन्द्रस्य समिषो महिर्गिरिर्न भुज्मा मघवत्सु पिन्वते। यदीं सुता अमन्दिषो३म् (८.५०.१–२)[3] शोंसावो३म् [4]उदु त्ये .... अस्वरो३म् (८.३.१५–१६) शोंसावो३म् असावि सोमः पुरुहूत तुभ्यम्। हरिभ्यां यज्ञमुप याहि तूयो३म् तुभ्यं गिरो विप्रवीरा इयानाः। दधन्विर इन्द्र पिबा सुतस्यो३म् अप्सु धूतस्य हरिवः पिबेह। नृभिः सुतस्य जठरं पृणस्वो३म् मिमिक्षुर्यमद्रय इन्द्र तुभ्यम्। तेभिर्वर्धस्व मदमुक्थवाहो३म् प्रोग्रां पीतिं वृषण इयर्मि सत्याम्। प्रयै सुतस्य हर्यश्व तुभ्यो३म् इन्द्र धेनाभिरिह मादयस्व। धीभिर्विश्वाभिः शच्या गृणानो३म् ऊती शचीवस्तव वीर्येण। वयो दधाना उशिज ऋतज्ञो३म् प्रजावदिन्द्र मनुषो दुरोणे। तस्थुर्गृणन्तः सधमाद्यासो३म् प्रणीतिभिष्टे हर्यश्व सुष्टोः। सुषुम्नस्य पुरुरुचो जनासो३म् मंहिष्ठामूतिं वितिरे दधानाः। स्तोतार इन्द्र तव सूनृताभो३म् उप ब्रह्माणि हरिवो हरिभ्याम्। सोमस्य याहि पीतये सुतस्यो३म् इन्द्र त्वा यज्ञः क्षममाणमानट्। दाश्वाँ अस्यध्वरस्य प्रकेतो३म् सहस्रवाजमभिमातिषाहम्। सुतेरणं मघवानं सुवृक्तो३म् उप भूषन्ति गिरो अप्रतीतम्। इन्द्रं नमस्या जरितुः पनन्तो३म् सप्तापो देवीः सुरणा अमृक्ताः। याभिः सिन्धुमतर इन्द्र पूर्भो३म् नवतिं स्रोत्या नव च स्रवन्तीः। देवेभ्यो गातुं मनुषे च विन्दो३म् अपो महीरभिशस्तेरमुञ्चः। अजागरास्वधि देव एको३म् इन्द्र यास्त्वं वृत्रतूर्ये चकर्थ। ताभिर्विश्वायुस्तन्वं पुपुष्यो३म् वीरेण्यः क्रतुरिन्द्रः सुशस्तिः। उतापि धेना पुरुहूतमीड्ढो३म् आर्दयद्वृत्रमकृणोदु लोकम्। ससाहे शक्रः पृतना अभिष्टो३म् शुनं हुवेम मघवानमिन्द्रम्। अस्मिन् भरे नृतमं वाजसातो३म् शृण्वन्तमुग्रमूतये समत्सु। घ्नन्तं वृत्राणि संजितं धनानो३म् (१०.१०४) उदु ब्रह्माण्यैरत .... मादयस्वो३म् (७.२३.१–५) शोंसावो३म् [5]एवेदिन्द्रं ....सदा नो३म् (७.२३.६)॥

[6]ऋजीषी वज्री .... ॥ ५.४०.४

शांत्रा [२९.३]—नौधसं ब्राह्मणाच्छंसिनः० ॥

---

१. शाङ्खा० मते रथन्तरपृष्ठे पूर्ववत्। २. स्तोत्रियः प्रगाथः। ३. अनुरूपः प्रगाथः। ४. प्रगाथः। ५. परिधानीया। ६. याज्या।

अशीसं—

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥
द्युक्षं सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
क्षुमन्तं वाजं शतिनं सहस्रिणं मक्षू गोमन्तमीमहे ॥
तत्त्वा यामि सुवीर्यं तद् ब्रह्म पूर्वचित्तये ।
येना यतिभ्यो भृगवे धने हिते येन प्रस्कण्वमाविथ ॥
येना समुद्रमसृजो महीरपस्तदिन्द्र वृष्णि ते शवः ।
सद्यः सो अस्य महिमा न संनशे यं क्षोणीरनुचक्रदे ॥ २०.९
उदु त्ये मधुमत्तमा गिरः स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥
कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमानशुः ।
इन्द्रं स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरन् ॥ २०.१०
इन्द्रः पूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानो वि शत्रून् ।
ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद्रोदसी उभे ॥
मखस्य ते तविषस्य प्र जूतिमियर्मि वाचममृताय भूषन् ।
इन्द्र क्षितीनामसि मानुषीणां विशां दैवीनामुत पूर्वयावा ॥
इन्द्रो वृत्रमवृणोच्छर्धनीतिः प्र मायिनाममिनाद्वर्पणीतिः ।
अहन् व्यंसमुशधग्वनेष्वाविर्धेना अकृणोद्राम्याणाम् ॥
इन्द्रः स्वर्षा जनयन्नहानि जिगायोशिग्भिः पृतना अभिष्टिः ।
प्रारोचयन्मनवे केतुमह्नामविन्दज्ज्योतिर्बृहते रणाय ॥
इन्द्रस्तुजो बर्हणा आ विवेश नृवद्दधानो नर्या पुरूणि ।
अचेतयद्धिय इमा जरित्रे प्रेमं वर्णमतिरच्छुक्रमासाम् ॥
महो महानि पनयन्त्यस्येन्द्रस्य कर्म सुकृता पुरूणि ।
वृजनेन वृजिनान्त्सं पिपेष मायाभिर्दस्यूँरभिभूत्योजाः ॥
युधेन्द्रो मह्ना वरिवश्चकार देवेभ्यः सत्पतिश्चर्षणिप्राः ।
विवस्वतः सदने अस्य तानि विप्रा उक्थेभिः कवयो गृणन्ति ॥
सत्रासाहं वरेण्यं सहोदां ससवांसं स्वरपश्च देवीः ।
ससान यः पृथिवीं द्यामुतेमामिन्द्रं मदन्त्यनु धीरणासः ॥

ससानात्याँ उत सूर्यं ससानेन्द्रः ससान पुरुभोजसं गाम् ।
हिरण्ययमुत भोगं ससान हत्वी दस्यून् प्रार्यं वर्णमावत् ॥
इन्द्र ओषधीरसनोदहानि वनस्पतीँरसनोदन्तरिक्षम् ।
बिभेद वलं नुनुदे विवाचोऽथाभवद्दमिताभिक्रतूनाम् ॥
शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ २०.११
उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ ।
आ यो विश्वानि शवसा ततानोपश्रोता म ईवतो वचांसि ॥
अयामि घोष इन्द्र देवजामिरिरज्यन्त यच्छुरुधो विवाचि ।
नहि स्वमायुश्चिकिते जनेषु तानीदंहांस्यति पर्ष्यस्मान् ॥
युजे रथं गवेषणं हरिभ्यामुप ब्रह्माणि जुजुषाणमस्थुः ।
वि बाधिष्ट स्य रोदसी महित्वेन्द्रो वृत्राण्यप्रती जघन्वान् ॥
आपश्चित्पिप्युः स्तर्यो न गावो नक्षन्नृतं जरितारस्त इन्द्र ।
याहि वायुर्न नियुतो नो अच्छा त्वं हि धीभिर्दयसे वि वाजान् ॥
ते त्वा मदा इन्द्र मादयन्तु शुष्मिणं तुविराधसं जरित्रे ।
एको देवत्रा दयसे हि मर्तानस्मिन्छूर सवने मादयस्व ॥
एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः ।
स नः स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिः सदा नः ॥
ऋजीषी वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा ।
युक्त्वा हरिभ्यामुप यासदर्वाङ् माध्यंदिने सवने मत्सदिन्द्रः॥ २०.१२

गोत्रा [ २.४.२ ]—तं वो दस्ममृतीषहं, तत्त्वा यामि सुवीर्यमिति ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपौ । उदु त्ये मधुमत्तमा गिर इति बार्हतः प्रगाथः० इन्द्रः पूर्भिदातिरदासमर्कैरित्युक्थमुखम् । उदु ब्रह्माण्यैरत श्रवस्य इति पर्यासः । एवेदिन्द्रं वृषणं वज्रबाहुमिति परिदधाति० ऋजीषी वज्री वृषभस्तुराषाडिति यजति० वषट्कृत्यानुवषट्करोति । प्रत्येवाभिमृशन्ते । नाप्याययन्ति० ॥

## १३०. ऐन्द्रग्रहप्रचारः ऐन्द्रग्रहग्रहणं च[1]

१. द्रष्टव्यं पृ. ४०३ ।

# १३१. चतुर्थपृष्ठस्तोत्रम्[1]

## [ रथन्तरपृष्ठे ][2]

### कालेयम्

साकीसं [ १.३.१.५.५; २.१.१.१४ ]—

तरोभिर्वो विदद्वसुमिन्द्रꣳ सबाध ऊतये ।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥
न यं दुध्रा वरन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः ।
य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥

हुम् । तरोभा३ इर्वोविदद्वसूम् ॥ ओमिन्द्राꣳ सबाध ऊतया २३इ बृहद्गाया३ न्ता२३४ःसुतसोमे अध्वा३ राइ ॥ हुवाइभरौ वा३४३ ओ३४ वा ॥ नका५ रिणाम् ॥ हो ५ इडा ॥ [ १ ] हुवेभा३ रन्नकारिणाम् ॥ ओꣳ हुवाइभरान्नकारिणा२३न्नय-न्दुध्रा३ वा२३४ रन्तेनस्थिरामू३ राः ॥ मदाइषुशौवा३४३ ओ३४ वा ॥ प्रमा५ न्धसाः ॥ हो ५ इडा ॥ [ २ ] मदेषू३ शाइप्रमन्धसाः ॥ ओम्मदाइषुशाइप्रमन्धसा२३ य आदृत्या३ शा२३४ शमानायसुन्वा३ ताइ ॥ दाताजरौवा३४३ ओ३४ वा ॥ त्रऊ५ क्थियाम् ॥ हो५ इडा ॥ [ ३ ] [ ग्राम ६.२.७; ऊह १.१.७ ]

तांत्रा [ १.९.१० ]—

[3]प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥

[ १.६.३ ]—

[4]स्तुतस्य स्तुतमस्यूर्जस्वत् पयस्वदा मा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषम् ॥

[ ८.३ ]—यत् कालेयं भवति तृतीयसवनस्य संतत्यै० यत्तरोभिर्वो विदद्वसुमिति प्रस्तौति० ॥

१. सप्तदशस्तोमम् । २. बृहत्पृष्ठेऽप्येवमेव । ३. ब्रह्मा अनेन स्तोत्रमनुमन्त्रयते । ४. उद्गाता यजमानं वाचयति ।

## कालेयम्

साजैसं [ ३.४.८–९ ]—

तरोभिर्वो विदद्वसुमिन्द्रꣳ सबाध ऊतये ।
बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥
न यं दुध्रा वरन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः ।
य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥

ओहम् । तरोभायीर्वोवीदद्वसुम् ॥ ओसाओध ऊ ओ बृ हा तगायाओसुतसोमे-
खश प्य ट च खखतप णफप्य टटटप श्यणफ
आध्वा रा यी ॥ हूवायीभरौवा. ओवा ॥ ओकारी णाम् ॥ होयिळा ॥ [१] हुवेभाराꣳ
प्य वकटटट च कख खण क खप्यप्यश प्य ख
सूकारिणम् ॥ ओभाओसु का ओनायान्दुध्रा ओरन्ते सूस्थिरामू रा: ॥ मदायिषुशौवा
श प टच खखत पणफप्य टटट प ण्य फप्यकटटट कख
ओवा ॥ ओआन्धसाः ॥ होयिळा ॥ [२] मदेषूशायिप्रा मन्धासाः ॥ ओषुओप्र-
खण कपप्यश प्य ख श्यख प्य फटच
मा ओया आ दृ त्या ओशमानायसून्वा ता यी ॥ दाताजरौवा ओवा ॥ ओऊक्थियाम् ॥
खखत प ण फप्य टटट प ण्य फप्य क टटट कख खण कपप्यश
होयिळा ॥ [३]
प्य

जैब्रा [ १.१५३–१५५ ]—देवासुरा यज्ञेऽस्पर्धन्त। ते देवा असुरान् बहिष्पवमानान्निरवाघ्नन्। तेऽसुरा आग्नेयमाज्यं पर्यवायन्० ते देवा नौधसम्। तेऽसुराः कालेयम्। तान् कालेय एवान्वभ्यवायन्। तान् कालेयेनैव कालेयादकालयन्त। यदकालयन्त तत् कालेयस्य कालेयत्वम्० तरो वै यज्ञः स्तोमो विदद्वसुः० इन्द्रा सबाध उतो याः इति बृहद् गायन्तः। सुतसोमे धीरो इति रथन्तरसाम्नः धोरो इति बृहत्साम्नः० तदैळं भवति० तदैळमच्छावाकसाम भवति० ॥

[ १.३३५ ]— अथैतत् कालेयं विस्तृणन्निव व्यवसायन्निवासꣳरुन्धन्निव गायेत्० यत्कालेयं तद्विकर्षतेव गेयमिति । तद्धैतदेतदेके रथन्तरसाम्न ऊर्ध्वमिळामुपयन्ति नकारिणाम् ओयिळा इति । तदु होवाच शाट्यायनिरुद्धतेवैषेळा प्रच्युतेव नितताभेव । इळामन्तत उपयन् बृहत्साम्नो द्वितीयस्यै स्तोत्रियायै धोरो इत्युद्गृह्णीयात्० अथ हैके रथन्तरसाम्नश्चैव बृहत्साम्नश्चोर्ध्वामेवेळामुपयन्ति० तदु होवाच शाट्यायनिः० एषा नितत्तैवेळान्तत उपेत्या० ॥

तैसं [ ४.४.१ ]—

प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व[1] ॥

मैसं [ २.८.८ ]—

प्रकेतेन रुद्रेभ्यो रुद्रान् जिन्व ॥

कासं [ १७.७ ]—

प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व ॥

[ ३७.१७ ]—प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्राञ्जिन्व ॥

कपिसं [ २६.६ ] = कासं १७.७

गोब्रा [ २.२.१३–१४ ]—प्रकेतोऽसि० बृहस्पतये स्तुत इति० ओ३म् भुवो जनत् इति माध्यंदिने सवने० ॥

## १३२. अच्छावाकशस्त्रम्

### [रथन्तरपृष्ठे][2]

ऋसं—

अध्वर्यो शोंसावो३म् [3]तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये । बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणो३म् हुवे भरं न कारिणं न यं दुध्रा वरन्ते न स्थिरा मुराः । मदे सुशिप्रमन्धसो३म् मदे सुशिप्रमन्धसो य आदृत्या शशमानाय सुन्वते । दाता जरित्र उक्थ्यो३म् ( ८.६६.१–२ ) [4]शोंसावो३म् तरणिरित् सिषासति वाजं पुरंध्या युजा । आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्र्वो३म् नेमिं तष्टेव सुद्र्वं न दुष्टुती मर्त्यो विन्दते वसु । न स्रेधन्तं रयिर्नशो३म् न स्रेधन्तं रयिर्नशत् सुशक्तिरिन्मघवन् तुभ्यं मावते । देष्णं यत् पार्ये दिवो३म् ( ७.३२.२०–२१ )[5] शोंसावो३म् [6]उदिन्न्वस्य रिच्यतेंऽशो धनं न जिग्युषः । य इन्द्रो हरिवान् न दभन्ति तं रिपो दक्षं दधाति सोमिनो३म् मन्त्रमखर्वं सुधितं सुपेशसं दधात यज्ञियेष्वा । पूर्वीश्चन प्रसितयस्तरन्ति तं य इन्द्रे कर्मणा भुवो३म् ( ७.३२.१२–१३ ) शोंसावो३म् भूय इद्वावृधे वीर्याय । एको अजुर्यो दयते वसनो३म् प्र रिरिचे दिव इन्द्रः पृथिव्याः । अर्धमिदस्य प्रति रोदसी उभो३म् अधा मन्ये बृहदसुर्यमस्य । यानि दाधार नकिरा मिनातो३म् दिवेदिवे सूर्यो दर्शतो भूत् । वि सद्मान्युर्विया सुक्रतुर्धो३म् अद्या चिन्नू चित् तदपो नदीनाम् । यदाभ्यो अरदो गातुमिन्द्रो३म् नि पर्वता अद्मसदो न सेदुः । त्वया दृळ्हानि सुक्रतो रजांसो३म् सत्यमित् तन्न त्वावाँ अन्यो

१. स्तोत्रस्य प्रसवात् पूर्वं ब्रह्मा इमं स्तोमभागं जपति । २. बृहत्पृष्ठेऽप्येवमेव । ३. आद्यां त्रिः शंसेत् । ४. स्तोत्रियः प्रगाथः । ५. अनुरूपः प्रगाथः । ६. प्रगाथः ।

अस्ति। इन्द्र देवो न मर्त्यो ज्यायो३म् अहन्नहिं परिशयानमर्णः। अवासृजो अपो अच्छा समुद्रो३म् त्वमपो वि दुरो विषूचीः। इन्द्र दृळ्हमरुजः पर्वतस्यो३म् राजाभवो जगतश्चर्षणीनाम्। साकं सूर्यं जनयन् द्यामुषासो३म् (६.३०) इमाम् षु प्रभृतिं सातये धाः। शश्वच्छश्वदूतिभिर्यादमानो३म् सुतेसुते वावृधे वर्धनेभिः। यः कर्मभिर्महद्भिः सुश्रुतो भो३म् इन्द्राय सोमाः प्रदिवो विदानाः। ऋभुर्येभिर्वृषपर्वा विहायो३म् प्रयम्यमानान् प्रति षू गृभाय। इन्द्र पिब वृषधूतस्य वृष्णो३म् पिबा वर्धस्व तव घा सुतासः। इन्द्र सोमासः प्रथमा उतेमो३म् यथापिबः पूर्व्याँ इन्द्र सोमान्। एवा पाहि पन्यो अद्या नवीयो३म् महाँ अमत्रो वृजने विरप्शी। उग्रं शवः पत्यते धृष्णवोजो३म् नाह विव्याच पृथिवी चनैनम्। यत् सोमासो हर्यश्वममन्दो३म् महाँ उग्रो वावृधे वीर्याय। समाचक्रे वृषभः काव्येनो३म् इन्द्रो भगो वाजदा अस्य गावः। प्र जायन्ते दक्षिणा अस्य पूर्वो३म् प्र यत् सिन्धवः प्रसवं यथायन्। आपः समुद्रं रथ्येव जग्मो३म् अतश्चिदिन्द्रः सदसो वरीयान्। यदीं सोमः पृणति दुग्धो अंशो३म् समुद्रेण सिन्धवो यादमानाः। इन्द्राय सोमं सुषुतं भरन्तो३म् अंशुं दुहन्ति हस्तिनो भरित्रैः। मध्वः पुनन्ति धारया पवित्रो३म् ह्रदाइव कुक्षयः सोमधानाः। समी विव्याच सवना पुरूणो३म् अन्ना यदिन्द्रः प्रथमा व्याश। वृत्रं जघन्वाँ अवृणीत सोमो३म् आ तू भर माकिरेतत् परि ष्ठात्। विद्मा हि त्वा वसुपतिं वसूनो३म् इन्द्र यत् ते माहिनं दत्रमस्ति। अस्मभ्यं तद्धर्यश्व प्र यन्धो३म् (३.३६.१–९) शोंसावो३म् [1]शुनं हुवेम मघवानमिन्द्रम्। अस्मिन् भरे नृतमं वाजसातो३म् शृण्वन्तमुग्रमूतये समत्सु। घ्नन्तं वृत्राणि संजितं धनानो३म् (३.३६.११)॥

[2]पिबा वर्धस्व तव घा.... ॥ ३.३६.३

ऋसं—

अध्वर्यो शोंसावो३म् तरोभिर्वो .... उक्थ्यो३म् (८.६६.१–२)[3] शोंसावो३म् तरणिरित् .... दिवो३म् (७.३२.२०–२१)[4] शोंसावो३म् [5]उदिन्न्वस्य .... भुवो३म् (७.३२.१२–१३) शोंसावो३म् भूय इद्वावृधे .... द्यामुषासो३म् (६.३०) इमाम् षु प्रभृतिं .... प्र यन्धो३म् (३.३६.१–९) अस्मे प्र यन्धि मघवन्नृजीषिन्। इन्द्र रायो विश्ववारस्य भूरो३म् अस्मे शतं शरदो जीवसे धाः। अस्मे वीराञ्छश्वत इन्द्र शिप्रो३म् (३.३६.१०) शोंसावोम् [6]शुनं हुवेम .... धनानो३म् (३.३६.११)॥

[7]पिबा वर्धस्व तव घा॥ ३.३६.३

१. परिधानीया। २. याज्या। ३. शाङ्खा॰मते स्तोत्रियः प्रगाथः। ४. अनुरूपः प्रगाथः। ५. प्रगाथः। ६. परिधानीया। ७. याज्या।

शांब्रा [ २९.३ ]—कालेयमच्छावाकस्य० ॥

गोब्रा [ २.४.३ ]—**तरोभिर्वो विदद्वसुं, तरणिरित्सिषासति** इत्यच्छावाकस्य स्तोत्रियानुरूपौ। **उदिन्न्वस्य रिच्यते** इति बार्हतः प्रगाथः० **भूय इद्वावृधे वीर्याय** इत्युक्थमुखम्। **इमामू षु प्रभृतिं सातये धाः** इति पर्यासस्तस्य दशमीमुद्धरति० **पिबा वर्धस्व तव घा सुतासः** इति यजति० वषट्कृत्यानुवषट्करोति। प्रत्येत्याभिमृशन्ते। नाप्याययन्ति० ॥

## १३३. ऐन्द्रग्रहप्रचारः[1]

माशब्रा [ ४.२.३.५–६ ]—एवमेव माध्यंदिने सवने अगृहीत एवैतस्मादच्छावाका-योत्तमो ग्रहो भवति। अथ तृतीयं वसतीवरीणामवनयति० ॥

काशब्रा [ ५.२.३.२ ] ≡ माशब्रा

**अशौसं—**

**विश्वे देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जह्युः।**
**आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानां सुमतौ स्याम ॥ ६.४७.२**
**वृषासि त्रिष्टुप्छन्दा अनु त्वा रभे।**
**स्वस्ति मा सं वहास्य यज्ञस्योदृचि स्वाहा ॥ ६.४८.३**
**यथा सोमो द्वितीये सवन इन्द्राग्न्योर्भवति प्रियः ॥**
**एवा म इन्द्राग्नी वर्च आत्मनि ध्रियताम् ॥ ९.१.१२**

**अपैसं—**

**विश्वे देवा .... ॥ १९.४३.११ ॥ सम्राळसि त्रिष्टुप्छन्दा .... सं पारय ॥ १९.४४.५ ॥ यथा सोमो द्वितीयसवन .... ॥ १६.३३.२**

## तृतीयसवनम्

## १३४. ऋजीषाभिषवः आदित्यग्रहप्रचारश्च

छांउ [ २.२४.११–१५]—पुरा तृतीयसवनस्योपाकरणाज्जघनेनाहवनीयस्योदङ्मुख उपविश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति। [2]**लो३कद्वारमपावा३र्णू३३। पश्येम त्वा वयꣳ स्वारा३३३३३ हु३म् आ३३ज्या३यो३आ३२१११** इत्यादित्यम्। अथ वैश्वदेवम्। **लो३कद्वारमपावा३र्णू३३। पश्येमत्वा वयꣳ साम्रा३३३३३हु३म् आ३३ज्या३यो३आ३२१११** इति। अथ जुहोति। **नम आदित्येभ्यश्च विश्वेभ्यश्च**

१. द्रष्टव्यं पृ. ४०३। २. लोकद्वारसाम।

देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दतैष वै यजमानस्य लोक एतास्मि। अत्र यजमानः परस्तादायुषः स्वाहा॥ अपहत परिघम् इत्युक्त्वोत्तिष्ठति॥

तैसं [३.२.२.१]—उपांशुं हुत्वोपांशुपात्रेऽंशुमवास्य तं तृतीयसवनेऽपिसृज्याभि षुणुयात्० ॥

[ ६.१.६.४ ]—तृतीयसवन ऋजीषमभि षुण्वन्ति० ॥

[ १.४.२२ ]—

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे। उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते। उपयामगृहीतोऽस्यादित्येभ्यस्त्वा॥ कदा चन प्रयुच्छस्युभे नि पासि जन्मनी। तुरीयादित्य सवनं त इन्द्रियमा तस्थावमृतं दिवि। [उपयामगृहीतोऽस्यादित्येभ्यस्त्वा ]॥ यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः। आ वोऽर्वाची सुमतिर्ववृत्याद्ंहोश्चिद्या वरिवोवित्तरासत्। [ उपयामगृहीतोऽस्यादित्येभ्यस्त्वा ]॥ विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वयं तर्पयितारो या दिव्या वृष्टिस्तया त्वा श्रीणामि॥

[ ६.५.६ ]—द्विदेवत्येभ्य आदित्यो निर्गृह्यते० उच्छेषणाद् गृह्यते तिसृभिर्ऋग्भिर्गृह्णाति० दध्ना मध्यतः श्रीणाति० शृतातङ्क्येन० परिश्रित्य गृह्णाति० या दिव्या वृष्टिस्तया त्वा श्रीणामीति वृष्टिकामस्य श्रीणीयात्० यदि ताजक् प्रस्कन्देद् वर्षुकः पर्जन्यः स्याद्यदि चिरमवर्षुकः न सादयति० नानु वषट्करोति० न हुत्वान्वीक्षेत० ॥

[ ६.५.१० ]—आदित्यग्रहो भूयिष्ठाभिर्ऋग्भिर्गृह्यते०॥

[ ३.५.५ ]—

आ समुद्रादान्तरिक्षात् प्रजापतिरुदधिं च्यावयातीन्द्रः प्र स्नौतु मरुतो वर्षयन्तु। उन्नम्भय पृथिवीं भिन्धीदं दिव्यं नभः। उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम्॥

[ ३.५.५ ]—ओषधीः प्रास्याम्नावादित्यं जुहोति० ॥

मैसं [ १.३.२६ ]—

कदा चन स्तरीरसि ....। उपयामगृहीतोऽस्यादित्येभ्यस्त्वा॥ कदा चन प्रयुछस्युभे .... इन्द्रियमातस्था अमृतं दिवि। उपयामगृहीतोऽस्यादित्येभ्यस्त्वा॥ यज्ञो देवानां प्रत्येतु सुम्नमादित्यासो ....॥

**अहं परस्तादहमवस्तादहं विश्वस्य भुवनस्य राजा।**
**अहं सूर्यमुभयतो ददर्श यदन्तरिक्षं तदु नः पिताभूत् ॥**
**उन्नम्भय पृथिवीं भिन्ध्यदो दिव्यं नभः।**
**उद्नो दिव्यस्य नो धातरीशानो विष्या दृतिम् ॥**

[ ४.६.९ ]— यदादित्यं मेक्षयन्ति **विवस्वन्नादित्यैष ते सोमपीथः** इति० यद्दध्ना मध्यतः श्रीणाति० अथ यत्तस्मातद्रुक्ष्यम्० यदि कामयेत वर्षेत् पर्जन्या इति **या दिव्या वृष्टिस्तया त्वा श्रीणामि** इति दध्नोपरिष्टादादित्यं श्रीणीयात्० यदि कामयेत गर्भाः श्रीग्येयुरित्युदगृह्यादित्यमवेक्षेत० द्विदेवत्येभ्य आदित्यो निर्गृह्यते। बृहतीभ्यां गृह्णाति० यद्यस्य भ्रातृव्यो यजेत बहिर्वेदि तिष्ठेत्० अपिधायोप निष्क्रामति० नानुयजति० अन्यत्रेक्षमाणेन होतव्यम्० ॥

**कासं [ ४.१० ]—**

**कदा चन स्तरीरसि ....। उपयामगृहीतोऽस्यादित्येभ्यस्त्वा ॥ कदा चन प्रयुच्छस्युभे....। उपयामगृहीतोऽस्यादित्येभ्यस्त्वा ॥ यज्ञो देवानां प्रत्येति....। उपयामगृहीतोऽस्यादित्येभ्यस्त्वा ॥ विवस्व आदित्यैष ते सोमपीथस्तस्मिन् मन्दस्व ॥ या दिव्या वृष्टिस्तया त्वा श्रीणामि ॥**

[ २८.६ ]—आदित्यो द्विदेवत्येभ्यो गृह्यते० परिश्रिते गृह्णाति० यदेष भूयिष्ठस्सोमो गृह्यते० यदा बहवोऽन्तर्वेदि स्युरथ गृह्णीयात्० यदास्य भ्रातृव्योऽन्तर्वेदि स्यादथ गृह्णीयात्० बृहतीः पुरोरुचो भवन्ति० सोममग्रे गृह्णात्यथ दध्यथ सोमम्० शृतातङ्क्यं भवति० यदि कामयेत वर्षेदिति या दिव्या वृष्टिस्तया त्वा श्रीणामीति दध्नोपरिष्टाच्छ्रीणीयात्० उपांशुसवनेन मेक्षयति० यद्युद्गृहीतस्य स्तोकोऽवपद्यते ताजक् प्रवर्षति। गृहीत्वापिदधाति० तं दशमे स्तोत्रे प्रच्यावयति० अन्यत्रेक्षमाणो जुहोति० ॥

[ २३.१० ]—ऋजीषं तृतीयसवनेऽभिषुण्वन्ति। यत् तृतीयसवन आशिरमवनयन्ति०॥

**कपिसं [ ३.८ ] ≡ कासं ४.१०**

कपिसं [ ४४.६; ३७.१ ] ≡ कासं २८.६;२३.१०

**वामासं—**

**कदाचन स्तरीरसि .... पृच्यत आदित्येभ्यस्त्वा ॥ कदाचन प्रयुच्छस्युभे .... दिव्यादित्येभ्यस्त्वा ॥ यज्ञो देवानां प्रत्येति .... वरिवोवित्तरासदादित्येभ्यस्त्वा ॥ विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन् मत्स्व ॥** ८.२–५

माशब्रा [ ४.३.५.८–२० ]—अथाह सꣳस्थित एव माध्यंदिने सवने पुरा तृतीयसवनात् **एहि यजमान** इति। ते संप्रपद्यन्तेऽध्वर्युश्च यजमानश्चाग्नीध्रश्च प्रतिप्रस्थाता चोन्नेताथ

योऽन्यः परिचरो भवति। उभे द्वारे अपिदधाति० अथाध्वर्युरादित्यस्थालीं चादित्यपात्रं चादत्ते। स उपर्युपरि पूतभृतं विगृह्णाति० अथ गृह्णाति कदाचन स्तरीरसि .... आदित्येभ्यस्त्वेति। तं वै नोपयामेन गृह्णीयात्० अथापगृह्य पुनरानयति कदाचन प्रयुच्छस्युभे .... आदित्येभ्यस्त्वेति। अथ दधि गृह्णाति० स गृह्णाति यज्ञो देवानां .... आदित्येभ्यस्त्वेति। तमुपांशुसवनेन मेक्षयति० तं न दशाभिर्न पवित्रेणोपस्पृशति० स मेक्षयति विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन् मत्स्वेति। अथोन्नेत्र उपांशुसवनं प्रयच्छति। अथाहोन्नेतारम् आसृज ग्राव्णः इति। तानाधवनीये वा सृजति चमसे वा। राजानमुन्नीय० अपोर्णुवन्ति द्वारे। अथापिधायोपनिष्क्रामति० अथाह आदित्येभ्योऽनुब्रूहि इति। अत्र संपश्येत्। यदि कामयेत आश्राव्य त्वेव संपश्येत्। आदित्येभ्यः प्रेष्य प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः इति। वषट्कृते जुहोति। नानुवषट्करोति०॥

**वाकासं—**

---॥ कदा चन प्रयुच्छस्युभे .... इन्द्रियमातस्था अमृतं .... ॥---॥ विवस्वाँ आदित्यैष .... ॥ ८.१

काशब्रा [ ५.४.२.५-११ ] ≡ माशब्रा

**अशौसं—**

यद्देवा देवहेडनं देवासश्चकृमा वयम्।
आदित्यास्तस्मान्नो यूयमृतस्यर्तेन मुञ्चत॥
ऋतस्यर्तेनादित्या यजत्रा मुञ्चतेह नः।
यज्ञं यद्यज्ञवाहसः शिक्षन्तो नोपशेकिम॥
मेदस्वता यजमानाः स्रुचाज्यानि जुह्वतः।
अकामा विश्वे वो देवाः शिक्षन्तो नोपशेकिम॥ ६.११४
यद्विद्वांसो यदविद्वांस एनांसि चकृमा वयम्।
यूयं नस्तस्मान्मुञ्चत विश्वे देवाः सजोषसः॥
यदि जाग्रद्यदि स्वपन्नेन एनस्योऽकरम्।
भूतं मा तस्माद्भव्यं च द्रुपदादिव मुञ्चताम्॥
द्रुपदादिव मुमुचानः स्विन्नः स्नात्वा मलादिव।
पूतं पवित्रेणेवाज्यं विश्वे शुम्भन्तु मैनसः॥ ६.११५

अपैसं—

यद्देवा .... ॥ ऋतस्य ऋतेना .... । यद्वैयद् .... शिक्षन्त उपारिम ॥ मेद-स्वता .... स्रुचाज्येन .... ॥ यद्विद्वांसो .... । तस्मान् नो ह्यमुञ्चत .... ॥ यदि जाग्रद्यजत्स्वपन्नेन....॥ द्रुपदादिव....सिन्धौ....विश्वान् मुञ्चन्तु ....॥ १६.४९.१-६

## १३५. आदित्यग्रहप्रचारहौत्रम्

ऋसं—

[1]आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शंतमेन ।
अनागास्त्वे अदितित्वे तुरास इमं यज्ञं दधतु श्रोषमाणाः ॥ ७.५१.१

[2]होता यक्षदादित्यान् प्रियान् प्रियधाम्नः प्रियव्रतान् महः स्वसरस्य पत्नीरुरोरन्तरिक्षस्याध्यक्षान् स्वादित्यमवोचत्तदस्मै सुन्वते यजमानाय करन्नेव-मादित्या जुषन्तां मन्दन्तां व्यन्तु पिबन्तु मन्दन्तु सोमं होतर्यज ॥ खिलम्५.७.४(ग)

[3]आदित्यासो अदितिर्मादयन्तां मित्रो अर्यमा वरुणो रजिष्ठाः।
अस्माकं सन्तु भुवनस्य गोपाः पिबन्तु सोममवसे नो अद्य ॥ ७.५१.२

ऐब्रा [ ३.२७ ]—यदाशिरमवनयन्ति० ॥

[ ३.२९ ]—आदित्यारम्भणं तृतीयसवनम्० यजति आदित्यासो अदितिर्मादयन्ता-मिति मद्वत्या रूपसमृद्धया० नानुवषट्करोति । न भक्षयति० ॥

शांब्रा [ १६.१ ]—तद्यदादित्यग्रहेण तृतीयसवनं प्रतिपद्यते० त्रिष्टुभमादित्यग्रहस्य पुरोनुवाक्यामनूच्य त्रिष्टुभा यजति० तस्य नानुवषट्करोति० मद्वती याज्या० ॥

[ ३०.१ ]—तद्यदादित्यग्रहेण तृतीयसवनं प्रतिपद्यते० त्रिष्टुभमादित्यग्रहस्य पुरोनु-वाक्यामन्वाह तस्या उक्तं ब्राह्मणम् ॥

## १३६. ग्रहग्रहणम्

तैसं [ ३.२.८ ]—

अस्मे देवासो वपुषे चिकित्सत यमाशिरा दम्पती वाममश्नुतः।
पुमान् पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः ॥
आशीर्दाया दम्पती वाममश्नुतामरिष्टो रायः सचताꣳ समोकसा ।
य आसिचत् संदुग्धं कुम्भ्या सहेष्टेन यामन्नमतिं जहातु सः ॥
सर्पिर्ग्रीवी पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य ।
सहजानिर्यः सुमखस्यमान इन्द्रायाशिरꣳ सह कुम्भ्यादात् ॥

१. पुरोनुवाक्या । २. प्रैषः । ३. याज्या ।

आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणँ सवर्चसम् ।
सञ्जयन् क्षेत्राणि सहसाहमिन्द्र कृण्वानो अन्याँ अधरान्त्सपत्नान् ॥
[ ६.१.६ ]—आशिरमव नयति० ॥
मैसं [ ४.६.४ ]—चतसृभ्यस्तृतीयसवने० ॥

**वामासं—**

अदस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वाममश्नुतः ।
पुमान् पुत्रो जायते विन्दते वस्वधा विश्वाहारप एधते गृहे ॥ ८.५

माशब्रा [ ४.३.३.१९ ]—तृतीयसवनायाग्नीदाशिरं विनयति ॥

[ ४.३.५.२०–२४ ]—प्रयच्छति प्रतिप्रस्थात्रे सँस्रवौ । अथ पुनः प्रपद्याग्रयणमादत्ते । उदीचीनदशं पवित्रं वितन्वन्ति । प्रस्कन्दयत्यध्वर्युराग्रयणस्य संप्रगृह्णाति प्रतिप्रस्थाता । सँस्रवावानयत्युन्नेता चमसेन वोदञ्चनेन वा । तं चतसृणां धाराणामाग्रयणं गृह्णाति० ॥

**वाकासं [ ८.२ ] ≡ वामासं**

काशब्रा [ ५.४.२.१२–१३ ] ≡ माशब्रा

## १३७. आर्भवपवमाननिःसर्पणम्

**तैसं [ ३.१.९ ]—**

इदं तृतीयँसवनं कवीनामृतेन ये चमसमैरयन्त ।
ते सौधन्वनाः सुवरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु ॥

## १३८. आर्भवपवमानस्तोत्रम्

### [ रथन्तरपृष्ठे ]

१–३ स्तोमाः गायत्रम्

साकौसं [ १.५.२.४.२; २.१.१.१५ ]—

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥
रक्षोहा विश्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत् ॥
वरिवोधातमो भुवो मँहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥

१ १२ २ १ २ २ – १२ २ २
हुम् । स्वादिष्ठयामदिष्ठयोम् ॥ ओमोओओओओओओओ२ ओओओओओओ
१ – १ २^ १११ १२२
१२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ ३४५ ॥ [ १ ] रक्षोहाविश्वचर्षणीम् ॥

१ २ २ -२२१२ २ १ - १ २^
ओमोओओओओओओओ२ ओओओओओओ१२१२ ॥ हुम् आ२ ॥ ओओ ॥ आ
१११ १ २ २ २ १ २ - १२ २ २
३४५॥ [२] वरिवोधातमोभुवोम् ॥ ओमोओओओओओओओ२ ओओओओओओ
१ - १ २^ १११
१२१२ ॥ हुम् आ २ ॥ ओओ ॥ आ ३४५ ॥ [३]

४—६ स्तोमाः संहितम्

१ १२ २ २ - १ २ - १ २१ -१
हुम्। स्वादिष्ठयामदा२ इष्ठया ॥ ओम्पवा२ स्वा२३ सोमधा२ राया ॥ आ२३
२ -१७ २ ३ ५ २ २१२ - १
इन्द्रा ॥ या२ पातवा२३ हाउवा३ ॥ सू २३४ ताः॥ [१] रक्षोहाविश्वचा२र्षणाइः ॥
१ १ - १ २१ - १ २ - १ ७ २
ओमभा२ इयो२३नीमयो२ हाताइ ॥ द्रो२३ णे ॥ सा२ धास्थमा२३ हाउवा ३ ॥
३ ५ २ २१२ - १ १ १ - १ २१ -
सा २३४ दात् ॥ [२] वरिवोधातमो२ भुवाः ॥ ओम्म६ हा२ इष्ठो२३ वार्त्रहा२
१ २ १ २ ५
त्तामाः ॥ पा२३ र्षी ॥ रा२ धोमा२३ हाउवा३ ॥ धो२३४ नाम् ॥ [३]
[ग्राम १२.२.२२; ऊह १.१.८]

७ स्तोमः सफम्[1]

साकौसं [१.६.२.४.१; २.१.१.१६]—

पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः। महि द्युक्षतमो मदः ॥
यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः।
स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा वाजं नैतशः ॥

१ २१ २ ४५२^३ ५ १२ १२२१ - १ २ ४ २
हुम्। पवस्वा३ मधुमत्ता२३४ माः॥ ओमिन्द्रायसोमा२ क्रतुवाइत्ता३ मो३ मा
५ २१ २ ४ २ ५ २१२
३२३४ दाः ॥ महाइ ॥ द्युक्षाता३ मो३ मा३४५ दो६ ॥ हाइ ॥ [१] महिद्यू३
४५२^३ ५ १२ १२२१ - १ २ ४ २ ५ २ १
क्षतमोमा२३४ दाः॥ ओंयस्यतेपाइत्वा२ वृषभोवा३ र्षा३ या३२३४ ताइ ॥ अस्या ॥

१. अत्र केवलं प्रथमायामृचि गेयम्।

२ २ ४ २ ५ २ १ २ ४२५२^३ ५
पीत्वाय२ वा२ र्वा३४५ इदो६ ॥ हाइ ॥ [ २ ] अस्यपी२ त्वासुवर्वा२३४ इदाः ॥
१ २१२१ – १ २ ४ २ ५ २ १ २ २ ४
ओ३ससुप्रकाइतो२ अभियाक्रा२ मी२ दा२२३४ इषाः ॥ अच्छा ॥ वाजान्ना२ ए२
२ ५
ता३४५ शो६ ॥ हाइ ॥ [ ३ ] [ ग्राम १७.२.५; ऊह १.१.९ ]

८ स्तोमः पौष्कलम्[1]

साकौसं [ १.६.२.३.१; २.१.१.१७ ]—

इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः । श्रुष्टे जातास इन्दवः स्वर्विदः ॥
अयं भराय सानसिरिन्द्राय पवते सुतः । सोमो जैत्रस्य चेतति यथा विदे ॥
अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णाति सानसिम् । वज्रं च वृषणं भरत् समप्सुजित् ॥

१ २१२ ४५ २^३ ५ १२११२ १ २^३ ५ २ १
हुम् । इन्द्रमा२ च्छसुताई२३४ माइ ॥ ओंवृषाणंयान्तुहारा२३४ याः ॥ श्रुष्टाइ
२ ७ ^ ३ २ १ ३ ११११ २ १ १ ४२५ २^३
जाता ॥ सई२न्दा२३४५ वा६५६ः ॥ सुवर्विदा २३४५ः॥ [१] अयम्भा३रायसाना
५ १ २ १२२ १ १^ ३ ५ २२ १ २ ७ ^ ३
२३४ साइः ॥ ओमिन्द्रायपावाताइसू २३४ ताः ॥ सोमोजैत्रा ॥ स्यचा२ इता
२२१३११११ २१२२ ४२५२^ ३ ५
२३४५ ता ६५६ इ ॥ यथाविदे २३४५ ॥ [ २ ] अस्येदी२ न्द्रोमदाइषू२३४ वा ॥
१ २२१ २ १ १^३ ५ २ १ ७ ^ ३
ओंग्राभंगृभ्णाताइसाना२३४ साइम् ॥ वज्राश्चवा ॥ षणा२ म्भा२३४५ रा६५६
२ ११ ११११
त् ॥ समप्सुजी २३४५ त् ॥ [ ३ ] [ ग्राम १७.१.५; ऊह १.१.१० ]

९-११ स्तोमाः श्यावाश्वम्

साकौसं [ १.६.२.१.१; २.१.१.१८ ]—

पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
अप श्वानं३ श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥
यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः ॥
तं दुरोषमभी नरः सोमं विश्वाच्या धिया । यज्ञाय सन्त्वद्रयः ॥

---

१. अत्र केवलं प्रथमायामृचि गेयम् ।

१ ३२ २ ४२५ २ ४ ५ १ २ २ २ १ -
हुम्। पुरो३१ जी३ तीवोअन्धा३ सएहिया ॥ ओं३ सूतायमादायित्नवा२
१२ - १२ २ ४ ५ २२ - १२ - २ १२ २
एहिया २ अपश्वाना३ इना३थी३॥ ष्टा २३४ ना ॥ ऐहा२ एहिया२ सखायोदाइर्घा३
४ २ ५ ३ २ २ ४ ५१ ४ ५ १
जी३ ह्वा३४५ यो६ ॥ हाइ ॥ [ १ ] सखा३१ यो३ दीर्घजिह्वा३ यमेहिया ॥ ओं
१ २ २ २ १ - १२ - १ २ ४ ३ ५ २२ -
योधारयापावकया२ एहिया२ परिप्रस्यान्दा ३ ता ३ इ ॥ सू २३४ ताः ॥ ऐहा२
१२ - १ २ ४ २ ५ ३ २ २ ४
एहिया२ इन्दुरश्वोना३ का३ त्वा ३४५ यो६ ॥ हाइ ॥ [ २ ] इन्दू३१ रा३ श्वोन-
५ २ ४ ५ १ २ २२ १ - १२ - २ १ २ ४
कृत्वा३ यएहिया ॥ ओन्तान्दुरोषमाभीनरा२ एहिया२ सोमविश्वाची ३या ३ ॥ धा
५ २२ - १२ - २१ २ ४ १ ५
२३४ या ॥ ऐहा २ एहिया २ यज्ञायसान्तू ३ वा ३ द्रा ३४५ यो६ ॥ हाइ ॥
[ ३ ] [ग्राम १६.१.११; ऊह १.१.११ ]

१२–१४ स्तोमाः आन्धीगवम्

१ १२ २ १ १ १ १२ २ २ १ -
हुम्। पुरोजितीवो१न्धासाः ॥ ओं३ सुतायमादा२३ या हुम्मा २१२ ॥
१२ २ २ ^३ १ १ १ १ १ २ २ - १ १ १
*त्नवेअपश्वान३ इनथिष्टना २३४५ ॥ साखा३ उवा ॥ यो२ दीर्घा२३ जीह्वियामौ
४५ ४ २ २ २ २ २ १ २ २ २
२३ होवा ॥ हो५ इडा ॥ [ १ ] सखायोदीर्घजा१ इह्वायाम् ॥ ओं योधारयापा२३
२ १ - १ २ १ १ १२^३ २ १ २ १ १ - १
वा हुम्मा२१२ ॥ *कयापरिप्रस्यन्दतेसुता१ः ॥ आइन्दा३ उवा ॥ आ२श्वोना २३
२ १ १ ४ ५ ४ २ २ २ १ २
कार्त्वियाऔ२ होवा ॥ हो५ इडा ॥ [ २ ] इन्दुरश्वोनका१ त्वायाः ॥ ओन्तन्दुरो-

* मध्येनिधनम्।

२ १ – १ २ २ १२ २२^३ २ १२ २ –
षमा२३ मी हुम्मा २१२ ॥ *नरःसोमंविश्वाचियाधिया १ ॥ याज्ञा३ उवा ॥ या२
१ २ १ २ ४५ ४
सन्तू२३ वाद्रयाऔ३ होवा ॥ हो५ इडा ॥ [ ३ ] [ ग्राम १६.१.१२; ऊह १.२.११ ]

१५-१७ स्तोमाः

## कावम्

साकौसं [ १.६.२.२.१; २.१.१.१९ ]—

अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥
ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः ।
दधाति पुत्रः पित्रोरपीच्यां नाम तृतीयमधि रोचनं दिवः ॥
अव द्युतानः कलशाँ अचिक्रदन्नृभिर्येमाणः कोश आ हिरण्यये ।
अभी ऋतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो वि राजसि ॥

१ २ १ १ २ १२ २ २ १ – १२ २ २ २
हुम् । अभ्योवा ॥ ओंप्रियाणिपवताइचनोहाइता२ नामानियह्वोअधियाइषु-
१ – १२ २ २ १ १ २ ४ ५ २ १ १ २
वर्द्धाता२ इ ॥ आसूर्यस्यबृहतोबृहन्नाधी२३ ॥ राथा२ म्वाइश्वाञ्चमरूहा२३ द्वाइचा२
४ २ १ १ २ २ १ – १ २
क्षा५ ॥ णा ६५६ः ॥ [ १ ] ऋतोवा ॥ ओ६ स्यजिह्वापवताइमधुप्राया२ म्वक्ताप-
२ २ २ १ – १ २ २२२ १ १ २ ४ ५ २
तिर्द्धियोअस्याअदाभाया २ः ॥ दधातिपुत्रःपित्रोरपीचाया२३ म् ॥ नामा३तार्त्तीय-
१ १ २ ४ २ १ १ २
मधाइरो२३ चाना३ न्दा ५ इ ॥ वा ६५६ः ॥ [ २ ] अवोवा ॥ ओन्द्युतानःकल-
२ १ – १ २२ २ २ १ – १ २ २
शा६ अचिक्रादा२ न्नृभिर्येमाणःकोशआहिरण्याया२ इ ॥ अभीऋतस्यदोहना
२ २ १ १ २ ४ ५ २ १ १ २ ४
अनूषाता२३ ॥ आधी३ त्राइपार्ष्ठउषासो२३ वाइरा३ जा५ ॥ सा ६५६ इ ॥ [ ३ ]
[ ग्राम १६.२.६; ऊह १.१.१३ ]

* मध्येनिधनम् ।

[ बृहत्पृष्ठे ]

१–३ स्तोमाः गायत्रम्[1]
४–६ स्तोमाः संहितम्[1]
७ स्तोमः सफम्[1]
८ स्तोमः श्रुध्यम्[2]

साकौसं [ १.६.२.३.१; २.१.१.१७ ]—

इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः । श्रुष्टे जातास इन्दवः स्वर्विदः ॥
अयं भराय सानसिरिन्द्राय पवते सुतः । सोमो जैत्रस्य चेतति यथा विदे ॥
अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णाति सानसिम् । वज्रं च वृषणं भरत् समप्सुजित् ॥

१ – र १ १ २१२१२३र२१ र२र१र२१ २१
इन्द्रमच्छा२ सुताइमोवा ॥ ओं वृषणंयान्तुहरयाः श्रुष्टेजातासइन्दवःसु-
२ १र – १ २ १
वा२३र्विदाउवा ॥ श्रूधिया२ ॥ ए२३ हिया३४३ ॥ ओ२३४५ इडा ॥ [ १ ]
१ – र १ १ १२११३र२१ र२र१र
अयम्भरा २ यसानसोवा ॥ ओमिन्द्रायपाव'तेसुताः सोमोजैत्रस्यचेततिय था२३
२ १र – १ २ १ १र –
विदाउवा॥ श्रूधिया २ ॥ए२३ हिया३४३ ॥ ओ२३४५ इडा ॥ [२] अस्येदिन्द्रो२
र १ र२११ १२३र२१ २१२ १ २
मदेषुवोवा ॥ ओङ्ग्राभङ्गृभ्णातिसानसाइम् वज्रञ्चवृषणम्भरत्समा२३ प्सुजाउवा ॥
१र – १ २ १
श्रूधिया२॥ ए२३ हिया३४३ ॥ ओ २३४५ इडा ॥ [ ३ ] [ ऊह ९.१.२० ]

९–११ स्तोमाः श्यावाश्वम्[1]
१२–१४ स्तोमाः आन्धीगवम्[1]
१५–१७ स्तोमाः कावम्[1]

तांब्रा [ १.९.११ ]—

[3]सुदीतिरस्यादित्येभ्यस्त्वादित्याञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥

[ १.३.५ ]—

अग्नेस्तेजसेन्द्रियस्येन्द्रियेण सूर्यस्य वर्चसा बृहस्पतिस्त्वा युनक्तु देवेभ्यः प्राणाय ॥

---

१. पूर्ववत् । २. अत्र केवलं प्रथमायामृचि गेयम् । ३. ब्रह्मा अनेन स्तोत्रमनुमन्त्रयते ।

[ १.५.१४–१५ ]—

सूर्यो युनक्तु वाचा स्तोमं यज्ञाय वोढवे । दधात्विन्द्र इन्द्रियꣳ सत्याः कामा यजमानस्य सन्तु ॥ [1]स्वरोऽसि गयोऽसि जगच्छन्दा अनु त्वा रभे स्वस्ति मा सं पारया मा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनेमहि भक्षीमहि प्रजामिषम् ॥

[ ८.४–५ ]—गायत्रं प्रातःसवनं गायत्र्युत्तरे सवने प्रणयति० यत् स्वादिष्ठया मदिष्ठयेति प्रस्तौति० तासु सꣳहितम्० उष्णिक्ककुभावेते भवतः० तासु सफम्० अथैतत् पौष्कलम्० पुरोजिती वो अन्धस इति पद्या चाक्षर्या च विराजौ भवतः० तासु श्यावाश्वम्० इन्द्रस्तृतीयसवनाद् बीभत्समान उदक्रामत् तं देवाः श्यावाश्वेन एहायि एहिया इत्यन्वाह्वयन्० अथैतदान्धीगवम्० मध्येनिधनम् । ऐडं भवति० दशाक्षरं मध्यतो निधनमुपयन्ति० अभि प्रियाणि पवत इति काव्ं प्राजापत्यꣳ साम० ॥

[ रथन्तरपृष्ठे ]

१–३ स्तोमाः गायत्रम्

साजैसं [ ३.५.१–३ ]—

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥
रक्षोहा विश्वचर्षणिरभि योनिमयोहते । द्रोणे सधस्थमासदत् ॥
वरिवोधातमो भुवो मꣳहिष्ठो वृत्रहन्तमः । पर्षि राधो मघोनाम् ॥

ओहम् । स्वादिष्ठयामदिष्ठयोम् ॥ ओवा ओवा ओवा हम्भा ॥ ओवा ॥ [१]
च श्र सट टच सट टच सट टच ट क च

रक्षोहाविश्वचर्षणोम् ॥ ओवा ओवा ओवा हम्भा ॥ ओवा ॥ [ २ ] वरिवोधातमो-
च श्र सट टच सट टच सट टच ट क च च

भुवोम् ॥ ओवा ओवा ओवा हम्भा ॥ ओवा ॥ [ ३ ]
चश्र सट टच सट टच सट टच ट क च

४–६ स्तोमाः संहितम्

हम् । स्वादिष्ठयामदायिष्ठया ॥ ओस्वासोओ ॥ आयिन्द्रा ॥ ओपात-
कीच टच चश ट ट तटच ट त सट क

वाहावुवा ॥ सूताः॥ [ १ ] रक्षोहाविश्वचार्षणायिः ॥ ओयोनीम् ओ ॥ द्रोणे ॥
ट त लप्य कच टकच टटत टच टत

ओधास्थमाहावुवा ॥ सादात् ॥ [ २ ] वरीवोधातमोभुवः ॥ ओष्ठोष्ठओ ॥ पार्षी ॥
सट ट त लश क टचचचश टटनटच टत

ओघोमाहावुवा ॥ घोनाम् ॥ [ ३ ]
सट ट त लश

१. उद्गाता यजमानं वाचयति ।

७ स्तोमः सभम्

साजैसं [ ३.५.४ ]—

अया पवस्व देवयू रेभन् पवित्रं पर्येषि विश्वतः । मधोर्धारा असृक्षत ॥

हुम् । अयापावास्वदायिवायूः ॥ ओपवायित्राम्पार्यायिषीवायिश्वाताः ॥
प प्य ख ण स टच क क प श त त

मधो ॥ ओहोआतो ॥ हायि ॥
च पा श प्य इय

८ स्तोमः पौष्कलम्

साजैसं [ ३.५.५ ]—

पवते हर्यतो हरिरति ह्वरांᳬसि रंᳬह्या । अभ्यर्षन् स्तोतृभ्यो वीरवद्यशः ॥

हुम् । पावातेहार्यातोहारीः ॥ ओह्वरांᳬ सायिरंᳬ हाया ॥ अभायि ॥ ओस्तोतृ-
क प प्य ख ण ख क क ख ण च इय खच ट

भ्योवा ॥ रवाद्याशः ॥
ख श त टच

९–११ स्तोमाः श्यावाश्वम्

साजैसं [ ३.५.६–८ ]—

पुरोजिती वो अन्धसः सुताय मादयित्नवे ।

अप श्वानंᳬ श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥

यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्वियः ॥

तं दुरोषमभी नरः सोमं विश्वाच्या धिया । यज्ञाय सन्त्वद्रयः ॥

हुम् । पुरोजीतीवोअन्धासएहिया ॥ ओतायामादायित्नवा ओहोइया अप
च घ प प्य ख ण स स सट स ट टच क

श्वानंᳬ श्नाथी ॥ ष्टाना ॥ ओहोओहोइयासाखाओदायिर्घाजीह्वायाम् ॥ हायि ॥ [ १ ]
ख प श त त सट टच टट प श ख प्य इय

सखायोदीर्घजिह्वायमेहिया ॥ ओधारायापावकयाओहोइया परि प्रास्यान्दातायि ॥
प्य घ प्य प्य ख ण स स सट स ट टच क स प प इय

सुताः ॥ ओहोओहोइयाइन्दूरोश्वास्सुकार्त्वायो ॥ हायि ॥ [२] इन्दु'रा'श्वास्सुकत्वा-
तृ ह सट ठ्च टट प ख प्य प्य श्व प प्य

थएहिया ॥ ओदूरोषामाभीनराओहोइयासोमंवायीश्वाचीया ॥ धाया ॥ ओहो-
ण ससस्टस ट टच क स पश तत सढ
ओहोइयायाज्ञाओसान्तू आद्रायो ॥ हायि ॥ [ ३ ]
टच टट क प श खप्य श्य

१२–१५ स्तोमाः

आन्धीगवम्

हम् । पुरोजितीवयाओन्धासाः ॥ ओतायमादायाहम्मा ॥ *त्नवेआपश्वान६
चक ख पश टट टच च्य चस्य
श्नथिष्टना ॥ सखावुवा ॥ ओदीर्घाजीह्वियाओहोवा ॥ हो यिळा ॥ [ १ ]
त प श्य ट टतच ककटचखप्य पप्य
सखायोदीर्घजाओह्वयाम् ॥ ओधारयापावाहम्मा ॥ *कयापरिप्रस्यन्दतेसुताः ॥
चचक कख प टट टच च्य शच त
आयिन्दावुवा ॥ ओश्वास्सूकार्त्वियाओहोवा ॥ होयिळा ॥ [ २ ] इन्दुरश्वस्सु-
प श ट टतच क क टखप्य पप्य व
काओत्वीयाः ॥ ओदुरोषममीहम्मा ॥ *नरास्सोमंविश्वाच्याधिया ॥ याज्ञावुवा ॥
क कख प टट क्य कच क्य तच प
ओसन्तुआद्रयाओहोवा ॥ होयिळा ॥ [ ३ ]
ट टतचकक टखप्य पप्य

१५–१७ स्तोमाः

कावम्

साजैसं [ ३.५.९–११ ]—

अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद् विचक्षणः ॥
ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः ।
दधाति पुत्रः पित्रोरपीच्यं नाम तृतीयमधि रोचनं दिवः ॥
अव द्युतानः कलशमचिक्रदन्नृभिर्येमाणः कोश आ हिरण्यये ।
अभी ऋतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो वि राजसि ॥

हम् । अभ्योत्रा ॥ ओयाणिपावातायिचानोओमानि । यह्वोआधियायिषू वा ओ ॥
च ससस कटटट चच श्य ससच कटटट ट
आसूर्यस्यबृहतोबृहन्नाधी ॥ ओथामवायिश्वाश्वामा ओयिचाक्षा ॥ णाः ॥ [ १ ]
क क ट सचट ख खप्य कटटटसच ट ख त्र

* मध्येनिधनम् ।

ऋतोवा ॥ ओजिह्वापावातायिमा धू ओक्कापती: । ध्रायोस्यादाओ ॥ दधातिपुत्र:-
च ससस क टटट च श्य स क टटट

पित्रोरपीच्यायाम् ॥ ओमातर्त्ती यामा ओनान्दायि ॥ वा: ॥ [ २] अवोवा ॥ ओतान:
क ट सच ट खखप्य क टटट सचत ख त्र च

कालाशम् अचा ओभी: । येमाणा: कोशाहीरा ओ ॥ अभीऋतस्यदोहनाअनूषता ॥
ससच टटट च श स सच क टटट ट क क ट

ओधायित्रायि पृ ष्ठा ऊ ओयिराजा ॥ सायि ॥ [ ३ ]
सच ट ख खप्य क टटट सच ट ख च

जैत्रा [१.१५६–१६६]—धीतमिव वै तृतीयसवनम् । जागतं सुपर्णमाहरन्नधयत् । तदेतत्पीडितमिव । स्वादिष्ठयेति । स्वदयन्त्येवैनत् तेन । मदिष्ठयेति । रसमेवास्मिꣳस्तन्मदं दधति । आशिरमवनयन्ति । पशुना चरन्ति । ऐवैतेन प्याययन्ति । रक्षोहा विश्वचर्षणीरभि योनिमयोहत इति पूर्वयोरेवैष सवनयोरभिसंक्रमः । तासु गायत्रमुक्तब्राह्मणम् । अथ सꣳहितं द्व्यक्षरणिधनम्० उष्णिक्ककुभ्यां वा इन्द्रो वृत्राय वज्रमुदयच्छत्० स उष्णिक्ककुभोस्तिष्ठन् सभपौष्कले बाहू कृत्वा प्राहरत्० तासु सभम्० तदु काकुभं स्वारं भवति० अथ पौष्कलम्० तच्चतुरक्षरणिधनं भवति० ता एता भवन्ति पुरोजिती वो अन्धस इति० तासु श्यावाश्वम्० तत् स्वारं भवति० अथान्धीगवम् । मध्येनिधनं भवति० तदैळं भवति० अथैता भवन्ति अभि प्रियाणि पवते चनोहित इति० तासु कावम्० तत् स्वारं भवति० पदानुस्वारं पुरस्ताद् गायत्रं भवति पदानुस्वारमुपरिष्टात् पवमानान्ते० पञ्चैतानि छन्दाꣳस्यार्भवे पवमाने भवन्ति सप्त सामानि० ॥

[ १.२५१ ]—सप्तदशार्भवः० ॥

[१.२५४]—अथार्भवस्य पवमानस्य गायत्री० तस्यां द्वे सामनी० अथोष्णिक्ककुभौ० द्वे सामनी० अथानुष्टुप्० तस्यां द्वे सामनी० अथ जगती० तस्यामेकꣳ साम० चतुष्पदायामृचि भवति० ॥

[ १.३३६–३३९ ]—अथैतत् सꣳहितम्० अथैते उष्णिक्ककुभावा प्रतिहारादनवानं गेये० असृक् इत्येव न निर्घोतयेत् हो इत्येव गायेत्० अथैतच्छ्यावाश्वम् । ऐहोवा एहिया इत्येवैते गायन्ति० स यत् ऐहोवा एहिया इति गायति स्वेनैवैनत् तत् पाप्मनाभ्यारोहयत इति । तस्मै हैतदुवाच ओहोइया इत्येव गायेत्० अथैतदान्धीगवं मध्येनिधनम्० अथैतस्य कावस्य पञ्चकृत्वः प्ररोहति० ॥

तैब्रा [ २.२.८.३ ]—आर्भवे पवमाने [1]पञ्चहोतारम् ।

तैसं [ ४.४.१ ]—

[2]सुदीतिरस्यादित्येभ्यस्त्वादित्यान् जिन्व ।

[ ३.२.१ ]—

[3]सधासि जगतीच्छन्दा अनु त्वा रभे स्वस्ति मा सं पारय ॥

मैसं [ १.९.५ ]—[4]सप्तहोतारँ [5]वदेत् पुरस्तादार्भवस्य पवमानस्य० एते वै चतुर्होतारोऽनुसवनं तर्पयितव्याः ।

[ ४.२.४ ]—आयुषे हिंकुरु तस्यै प्रस्तुहि तस्यै मेऽवरुद्ध्यै इति पुरस्तादार्भवस्य पवमानस्य [5]वदेत् ॥

[ २.८.८ ]—

सुदितिनादित्येभ्य आदित्यान् जिन्व ॥

कासं [ ९.१४ ]—[6]सप्तहोतारं व्याख्यायार्भवेण पवमानेनोद्गायेत्० ॥

[ १७.७ ]—

सुदितिरस्यादित्येभ्यस्त्वादित्याञ्जिन्व ॥

[ ३७.१७ ]—सुदितिरस्यादित्येभ्यस्त्वादित्याञ्जिन्वेति० ॥

कपिसं [ २६.६ ] = कासं १७.७

ऐब्रा [ ५.३४ ]—स प्रस्तोतोपाकृते स्तोत्र आह ब्रह्मन् स्तोष्यामः प्रशास्तः इति० स्वः इति तृतीयसवने [7]ब्रूयात् इन्द्रवन्तः स्तुध्वम् इति ॥

[ ६.१२ ]—नार्भवीषु स्तुवतेऽथार्भवः पवमान इत्याचक्षते ॥

शांब्रा [ १६.१ ]—नार्भवीषु स्तुवतेऽथार्भवः पवमान इत्याचक्षते ॥

अशौसं—

आशीर्ण ऊर्जमुत सौप्रजास्त्वं दक्षं धत्तं द्रविणं सचेतसौ ।
जयं क्षेत्राणि सहसायमिन्द्र कृण्वानो अन्यानधरान्त्सपत्नान् ॥ २.२९.३
ऋभुरसि जगच्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं वहास्य यज्ञस्योदृचि स्वाहा ॥ ६.४८.२

१. द्रष्टव्यं श्रौ. १ पृ. १२५। २. स्तोत्रस्य प्रसवात् पूर्वं ब्रह्मा इमं स्तोमभागं जपति। ३. अध्वर्युर्यजमानं वाचयति। ४. द्रष्टव्यं श्रौ. १ पृ. १२९। ५. यजमानः। ६. द्रष्टव्यं श्रौ. १ पृ. १३२। ७. ब्रह्मा।

अपैसं—

आशीर्ण .... सुप्रजास्त्वं दक्षं धासु द्रविणं सुवर्चसम् । संजयत् .... अन्याँ अधरान् .... ॥ १९.१७.१२ ॥ स्वरोऽसि गयोऽसि जगच्छन्दा .... सं पारय ॥ १९.४४.६ ॥

गोब्रा [ २.२.१३–१४ ]—सुदितिरसि इति० बृहस्पतये स्तुत इति० ॐ स्वर्जनत् इति तृतीयसवने० ॥

[ १.५.१४ ]—अथार्भवे पवमाने वाचयति स्वरोऽसि गयोऽसि जगच्छन्दा अनु त्वा रभे । स्वस्ति मा संपारय इति० ॥

## १३९. सवनीयपशुहविर्योगः

तैसं [ ६.३.१ ]—अङ्गारैर्द्वे सवने वि हरति शलाकाभिस्तृतीयम्० ॥
मैसं [ ३.८.१० ]—यज्ज्योतिष्मतीस्तृतीयसवने व्याघारयन्ति० ॥
[ ३.९.५ ]—यदङ्गैस्तृतीयसवने तेन तृतीयसवनं पशुमत् ॥
कासं [ २६.१ ]—शलाकान् दीप्यमानीस्तृतीयसवने० ॥
कपिसं [ ४०.४ ] ≡ कासं
गोब्रा [ २.२.१६ ]— शलाकाभिस्तृतीयसवनम्० ॥

## १४०. सवनीयपशुहविर्योगहौत्रम्

ऋसं—

[1]पाहि नो अग्ने पायुभिरजस्रैरुत प्रिये सदन आ शुशुक्वान् ।
मा ते भयं जरितारं यविष्ठ नूनं विदन्मापरं सहस्वः ॥ १.१८९.४
[2]अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा अभ्यमन्त कृष्टीः ।
पुनरस्मभ्यं सुवितायं देव क्षां विश्वेभिरमृतेभिर्यजत्र ॥ १.१८९.३
[3]प्र कारवो मनना वच्यमाना देवद्रीचीं नयत देवयन्तः ।
दक्षिणावाड् वाजिनी प्राच्येति हविर्भरन्त्यग्नये घृताची ॥ ३.६.१

शांब्रा [ १६.१ ]—स्तुते पवमाने पशुना चरन्ति० ॥
[ ३०.१ ]—स्तुते पवमाने पशुना चरन्ति० ॥
[ १२.७ ]—प्र कारवो मनना वच्यमाना इति हविष्मती हविषः ॥

१. पुरोनुवाक्या ।   २. शाङ्खा०मते पुरोनुवाक्या ।   ३. याज्या ।

## १४१. सवनीयपुरोडाशयागः[1]

## १४२. सवनीयपुरोडाशयागहौत्रम्[2]

ऋसं—

[3]तृतीये धानाः सवने पुरुष्टुत पुरोळाशमाहुतं मामहस्व नः।
ऋभुमन्तं वाजवन्तं त्वा कवे प्रयस्वन्त उप शिक्षेम धीतिभिः॥ ३.५२.६
[4]होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपस्तृतीयस्य सवनस्य पुरोळाशाँ इन्द्रः प्रस्थिताञ्जुषाणो वेतु होतर्यज ॥ खिलम् ५.७.४ (इ)

[5]अग्ने तृतीये सवने हि कानिषः पुरोळाशं सहसः सूनवाहुतम्।
अथा देवेष्वध्वरं विपन्यया धा रत्नवन्तममृतेषु जागृविम्॥ ३.२८.५
[6]होता यक्षदग्निं पुरोळाशानां जुषतां हविर्होतर्यज॥ खिलम् ५.७.४ (उ)
[7]इहोप यात शवसो नपातः सौधन्वना ऋभवो माप भूत।
अस्मिन् हि वः सवने रत्नधेयं गमन्त्विन्द्रमनु वो मदासः॥
आगन्नृभूणामिह रत्नधेयमभूत् सोमस्य सुषुतस्य पीतिः।
सुकृत्यया यत् स्वपस्यया चँ एकं विचक्र चमसं चतुर्धा॥
व्यकृणोत चमसं चतुर्धा सखे वि शिक्षेत्यब्रवीत।
अथैत वाजा अमृतस्य पन्थां गणं देवानामृभवः सुहस्ताः॥
किंमयः स्विच्चमस एष आस यं काव्येन चतुरो विचक्र।
अथा सुनुध्वं सवनं मदाय पात ऋभवो मधुनः सोम्यस्य॥
शच्याकर्त पितरा युवाना शच्याकर्त चमसं देवपानम्।
शच्या हरी धनुतरावतष्टेन्द्रवाहावृभवो वाजरत्नाः॥
यो वः सुनोत्यभिपित्वे अह्नां तीव्रं वाजासः सवनं मदाय।
तस्मै रयिमृभवः सर्ववीरमा तक्षत वृषणो मन्दसानाः॥
प्रातः सुतमपिबो हर्यश्व माध्यन्दिनं सवनं केवलं ते।
समृभुभिः पिबस्व रत्नधेभिः सखीँर्याँ इन्द्र चकृषे सुकृत्या॥
ये देवासो अभवता सुकृत्या श्येनाइवेदधि दिवि निषेद।
ते रत्नं धात शवसो नपातः सौधन्वना अभवतामृतासः॥

---

१. द्रष्टव्यं पृ. ३०१। २. द्रष्टव्यं पृ. ३०२। ३. पुरोडाशयागपुरोनुवाक्या। ४. पुरोडाशयागप्रैषः। ५. स्विष्टकृत्पुरोनुवाक्या। ६. स्विष्टकृत्प्रैषः। ७. उन्नीयमानसूक्तम्।

**यत् तृतीयं सवनं रत्नधेयमकृणुध्वं स्वपस्या सुहस्ताः ।**
**तदृभवः परिषिक्तं व एतत् सं मदेभिरिन्द्रियेभिः पिबध्वम् ॥ ४.३५**

ऐब्रा [ ६.९ ]—नव न्यूनास्तृतीयसवनेऽन्वाह० तद्यदेतानि केवलसूक्तान्यन्वाह० ते हैके सप्त सप्तान्वाहुः० सप्त तृतीयसवने० तत्तथा न कुर्यात्० केवलश एव सूक्तान्यनुब्रूयात् ॥

[ ६.१२ ]—इहोप यात शवसो नपात इति तृतीयसवन उन्नीयमानेभ्योऽन्वाह । वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धास्ता ऐन्द्रार्भव्यो भवन्ति० कस्माज्जागते सति तृतीयसवने त्रिष्टुभोऽन्वाहेति । धीतरसं वै तृतीयसवनमथैतदधीतरसं शुक्रियं छन्दो यत् त्रिष्टुप् सवनस्य सरसताया इति ब्रूयात्० ॥

शांब्रा [ १६.१ ]—अथ हविष्पङ्क्त्या चरन्ति तस्या उक्तं ब्राह्मणम् । ऐन्द्रार्भव्यस्तृतीयसवन उन्नीयमानेभ्योऽन्वाह ॥

[ ३०.१ ]—अथ हविष्पङ्क्त्या चरन्ति तस्या उक्तं ब्राह्मणम् । वामदेव्यास्तृतीयसवन उन्नीयमानेभ्योऽन्वाह० ता वा आवत्यो हरिवत्यो भवन्ति० ता वा ऐन्द्रार्भव्यस्त्रिष्टुभो भवन्ति० ता वै नवान्वाह० ॥

## १४३. सवनमुखयागः

**तैसं [ ३.२.८ ]—**

**श्येनाय पत्वने स्वाहा । वट् स्वयमभिगूर्ताय नमः ॥**
**तृम्पन्तां होत्रा मधोर्घृतस्य ॥**

## १४४. सवनमुखयागहौत्रम्

**ऋसं—**

[1]**होता यक्षदिन्द्रं तृतीयस्य सवनस्य ऋभुमतो विभुमतो वाजवतो बृहस्पतिवतो विश्वदेव्यावतः समस्य मदाः प्रातस्तनाग्मत सं माध्यन्दिनाः समिदातनास्तेषां समुक्षितानां गौर इव प्रगाह्या वृषायस्वागूया बाहुभ्यामुप याहि हरिभ्यां प्रमुध्या शिप्रे निष्प्रुथ्य ऋजीषिन्निमे अस्मै तीव्रा आशीर्वन्तः प्रस्थिता इन्द्राय सोमास्ताञ्जुषतां वेतु पिबतु सोमं होतर्यज ॥** खिलम् ५.७.४ (क)

[2]**इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितं सुतं सोममा वृषस्वा गभस्त्योः ।**
**धियेषितो मघवन् दाशुषो गृहे सौधन्वनेभिः सह मत्स्वा नृभिः ॥ ३.६०.५**

ऐब्रा [६.१२]—ऐन्द्रार्भव्या यजति इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितमिति होतैव० ॥

१. प्रैषः । २. याज्या ।

शांब्रा [ १६.१ ]—ऐन्द्रार्भव्या तृतीयसवने प्रस्थितानां यजति० जगत्या० मद्वत्य० अनुवषट्करोति० ॥

गोब्रा [ २.२.२२ ]—ऐन्द्रार्भव्या यजति इन्द्र ऋभुभिर्वाजवद्भिः समुक्षितम् इति होतैव० ॥

## १४५. होत्रकचमसप्रचारः[1]

तैसं [ ३.२.८ ]—

विष्टम्भाय धर्मणे स्वाहा । वट् स्वयमभिगूर्ताय नमः ॥
परिधये जनप्रथनाय स्वाहा । वट् स्वयमभिगूर्ताय नमः ॥
ऊर्जे होत्राणाꣳ स्वाहा । वट् स्वयभिगूर्ताय नमः ॥
पयसे होत्राणाꣳ स्वाहा । वट् स्वयमभिगूर्ताय नमः ॥
प्रजापतये मनवे स्वाहा । वट् स्वयमाभिगूर्ताय नमः ॥
ऋतमृतपाः सुवर्वाट् स्वाहा । वट् स्वयमभिगूर्ताय नमः ॥
तृम्पन्ताꣳ होत्रा मधोर्घृतस्य ॥

## १४६. होत्रकचमसप्रचारहौत्रम्

ऋसं—

[2]इन्द्रावरुणा सुतपाविमं सुतं सोमं पिबतं मद्यं धृतव्रता ।
युवो रथो अध्वरं देववीतये प्रति स्वसरमुप याति पीतये ॥ ६.६८.१०
[3]इन्द्रश्च सोमं पिबतं बृहस्पतेऽस्मिन् यज्ञे मन्दसाना वृषण्वसू ।
आ वां विशन्त्विन्दवः स्वाभुवोऽस्मे रयिं सर्ववीरं नि यच्छतम् ॥ ४.५०.१०
[4]आ वो वहन्तु सप्तयो रघुष्यदो रघुपत्वानः प्र जिगात बाहुभिः ।
सीदता बर्हिरुरु वः सदस्कृतं मादयध्वं मरुतो मध्वो अन्धसः ॥ १.८५.६
[5]अमेव नः सुहवा आ हि गन्तन नि बर्हिषि सदतना रणिष्टन ।
अथा मन्दस्व जुजुषाणो अन्धसस्त्वष्टर्देवेभिर्जनिभिः सुमद्गणः ॥ २.३६.३
[6]इन्द्राविष्णू पिबतं मध्वो अस्य सोमस्य दस्रा जठरं पृणेथाम् ।
आ वामन्धांसि मदिराण्यग्मन्नुप ब्रह्माणि शृणुतं हवं मे ॥ ६.६९.७
[7]इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥ १.९४.१

ऐब्रा [ ६.१२ ]—इन्द्रावरुणा सुतपाविमं सुतमिति मैत्रावरुणो यजति० इन्द्रश्च

१. द्रष्टव्यं पृ. ३१२। २. मैत्रावरुणस्य प्रस्थितयाज्या। ३. ब्राह्मणाच्छंसिनः प्रस्थितयाज्या। ४. पोतुः प्रस्थितयाज्या। ५. नेष्टुः प्रस्थितयाज्या। ६. अच्छावाकस्य प्रस्थितयाज्या। ७. आग्नीध्रस्य प्रस्थितयाज्या।

सोमं पिबतं बृहस्पत इति ब्राह्मणाच्छंसी यजति० आ वो वहन्तु सप्तयो रघुष्यद इति पोता यजति० अमेव नः सुहवा आ हि गन्तनेति नेष्टा यजति० इन्द्राविष्णू पिबतं मध्वो अस्येत्यच्छावाको यजति० इमं स्तोममर्हते जातवेदस इत्याग्नीध्रो यजति० ॥

शांब्रा [ १६.१ ]—अथ होत्राः संयजन्ति । तासामुक्तं ब्राह्मणम् ॥

[ ३०.१ ]—अथ होत्राः संयजन्ति । तासामुक्तं ब्राह्मणम् । अन्धस्वत्यो मद्वत्यः पीतवत्यो जगत्यो याज्याः० अनुवषट्कुर्वन्ति० ॥

अशौसं—

इन्द्रश्च सोमं पिबतं बृहस्पते .... ॥ आ वो वहन्तु सप्तयो रघुष्यदो .... ॥
इमं स्तोममर्हते जातवेदसे .... ॥ २०.१३.१-३

गोब्रा [ २.२.२२ ]—इन्द्रावरुणा सुतपाविमं सुतम् इति मैत्रावरुणो यजति० इन्द्रश्च सोमं पिबतं बृहस्पत इति ब्राह्मणाच्छंसी यजति० आ वो वहन्तु सप्तयो रघुष्यद इति पोता यजति० अमेव नः सुहवा आ हि गन्तन इति नेष्टा यजति० इन्द्राविष्णू पिबतं मध्वो अस्य इत्यच्छावाको यजति० इमं स्तोममर्हते जातवेदस इत्याग्नीध्रो यजति० ॥

## १४७. सवनीयेडा

शांब्रा [ १६.१ ]—अथेलाथ होतृचमसः । तस्योक्तं ब्राह्मणम् ॥

[ ३०.१ ]—अथेलाथ होतृचमसः । तस्योक्तं ब्राह्मणम् ॥

## १४८. सवनमुखसोमभक्षणम्[1]

तैसं [ ३.२.५ ]—

आदित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि ॥

ऋसं—

[2]सं ते पयांसि समु यन्तु वाजाः .... ॥ १.९१.१८

तांब्रा [ १.५.१६ ]—

इन्दविन्द्रपीतस्य त इन्द्रियावतो जगच्छन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥

षब्रा [ २.७ ]—स तृतीयसवने सवनमुखीयेष्वाहृतेषूपहवमिच्छते प्राणो मे होता स मोपह्वयताम् । होतरुप मा ह्वयस्व इत्युच्चैः। अपानो मेऽध्वर्युः स मोपह्वयताम् । अध्वर्य

1. द्रष्टव्यं पृ. ३१५। 2. शाङ्खा०मते केवलमनेन मन्त्रेण चमसाप्यायनं कर्तव्यम्।

उप मा ह्वयस्व इत्युच्चैः । व्यानो मे ब्रह्मा स मोपह्वयताम् । ब्रह्मन्नुप मा ह्वयस्व इत्युच्चैः । समानो म उद्गाता स मोपह्वयताम् । उद्गातरुप मा ह्वयस्व इत्युच्चैः । योऽयमन्तः पुरुष आकाशः स मे सदस्यः स मोपह्वयताम् । सदस्योप मा ह्वयस्व इत्युच्चैः। या इमा अन्तः पुरुष आपस्ते मे होत्राशꣳसिनस्ते मोपह्वयन्ताम् । होत्राशꣳसिन उप मा ह्वयध्वम् इत्युच्चैः। लोमानि मे चमसाध्वर्यवस्ते मोपह्वयन्ताम् । चमसाध्वर्यव उप मा ह्वयध्वम् इत्युच्चैः० स उपहूतो भक्षयति० सर्वेषां वषट्कर्ता चमसं भक्षयेत्० उद्गातृचमसं नान्यो भक्षयेत्० ॥

## १४९. पिण्डदानम्

कासं [ २३.४ ]—पितृभ्यस्तृतीयसवनं क्रियते० ॥

कपिसं [ ३६.१ ] = कासं

शांब्रा [ १६.१ ]—औपासनास्तृतीयसवन उपास्यन्ति० ॥

[३०.१]—औपासनास्तृतीयसवन उपास्यन्ति । तेषामुक्तं ब्राह्मणम् ।

अशौसं—

एतं भागं परि ददामि विद्वान् विश्वकर्मन् प्रथमजा ऋतस्य ।
अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनु सं तरेम ॥
ततं तन्तुमन्वेके तरन्ति येषां दत्तं पित्र्यमायनेन ।
अबन्ध्वेके ददतः प्रयच्छन्तो दातुं चेच्छिक्षान्त्स स्वर्ग एव ॥
अन्वारभेथामनुसंरभेथामेतं लोकं श्रद्दधानाः सचन्ते ।
यद्वां पक्वं परिविष्टमग्नौ तस्य गुप्तये दंपती सं श्रयेथाम् ॥
यज्ञं यन्तं मनसा बृहन्तमन्वारोहामि तपसा सयोनिः ।
उपहूता अग्ने जरसः परस्तात् तृतीये नाके सधमादं मदेम ॥
शुद्धाः पूता योषितो यज्ञिया इमा ब्रह्मणां हस्तेषु प्रपृथक् सादयामि ।
यत्काम इदमभिषिञ्चामि वोऽहमिन्द्रो मरुत्वान्त्स ददातु तन्मे ॥ ६.१२२
एतं सधस्थाः परि वो ददामि यं शेवधिमावहाज्जातवेदाः ।
अन्वागन्ता यजमानः स्वस्ति तं स्म जानीत परमे व्योमन् ॥
जानीत स्मैनं परमे व्योमन् देवाः सधस्था विद लोकमत्र ।
अन्वागन्ता यजमानः स्वस्तीष्टापूर्तं स्म कृणुताविरस्मै ॥
देवाः पितरः पितरो देवाः । यो अस्मि सो अस्मि ॥
स पचामि स ददामि स यजे स दत्तान्मा यूषम् ॥

नाके राजन् प्रति तिष्ठ तत्रैतत् प्रति तिष्ठतु ।
विद्धि पूर्तस्य नो राजन्त्स देव सुमना भव ॥ ६.१२३
श्येनो नृचक्षा दिव्यः सुपर्णः सहस्रपाच्छतयोनिर्वयोधाः ।
स नो नि यच्छाद्वसु यत्पराभृतमस्माकमस्तु पितृषु स्वधावत् ॥ ७.४२.२

अपैसं—

यज्ञं यन्तं तपसा बृहन्तमन्वारोहामि मनसा संयोनिः । .... ॥ तं प्रजानन् प्रतिगृह्णाति विद्वान् बृहस्पतिः प्रथमजा....॥ २.६०.१–२॥ तं प्रजानन् प्रतिगृह्णाति .... ॥ ततं तन्तुमत्येके तरन्तु येषां दत्तमायनं पित्र्येण । अबन्ध्वेके जनन्तः प्रयच्छात् दातुं ते शिक्षान् स स्वर्ग एषाम् ॥ अन्वारभेथामनु .... । यद् वां पूर्तं प्रविष्टमग्नौ....॥ देवाः पितरः पितरो देवाः । योऽस्मि सोऽस्मि सोऽयमस्मि ॥ शतजामि मेजते स्य । संमैष्णवस्तुष्णोः शान्तं शिवं कृतं प्रशजामि तस्मान्मावयम् ॥ नाके राजन् प्रति .... ॥ १६.५१.५–१० ॥ श्येनः सुपर्णो दिव्यो नृचक्षाः .... ॥ २०.९.१०

गोब्रा [ २.४.५ ]—अथ यदौपासनं तृतीयसवन उपास्यन्ते० ॥

## १५०. सावित्रग्रहप्रचारः

तैसं [ १.४.२३-२५ ]—

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यँ सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ।
उपयामगृहीतोऽसि देवाय त्वा सवित्रे ॥
अदब्धेभिः सवितः पायुभिष्ट्वँ शिवेभिरद्य परि पाहि नो गयम् ।
हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशँस ईशत ।
उपयामगृहीतोऽसि देवाय त्वा सवित्रे ॥
हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् ।
उपयामगृहीतोऽसि देवाय त्वा सवित्रे ॥

[ ६.५.७ ]—अन्तर्यामपात्रेण सावित्रमाग्रयणाद् गृह्णाति० न सादयति० नानु वषट् करोति० यत् तृतीयसवने सावित्रो गृह्यते० ॥

मैसं [ १.३.२७ ]—

अदब्धेभिः सविता .... नो वृधे । हिरण्यजिह्वः.... । उपयामगृहीतोऽसि सावित्रोऽसि जनधाया जिन्व यज्ञं जिन्व यज्ञपतिमभिसवनानि पाह्यतस्त्वा विष्णुः पातु विशं त्वं पाहीन्द्रियेण ॥

[ ४.७.१ ]—आग्रयणात् सावित्रो निर्गृह्यते सोऽद आ तृतीयात् सवनात् परिशयेत्० यदन्तर्यामपात्रेण सावित्रं गृह्णाति० असन्नो हूयते० नानुयजति० यत् सावित्रस्तृतीयसवने गृह्यते० ॥

कासं [ ४.१० ]—

अदब्धेभिस्सवितः .... । उपयामगृहीतोऽसि देवाय त्वा सवित्रे ॥

[ २८.७ ]—अन्तर्यामपात्रेण सावित्रं गृह्णाति० तमसन्नं जुहोति० अन्तर्यामपात्रेणाग्रयणात् सावित्रं तृतीयसवने गृह्णाति० आग्रयणात् सावित्रो गृह्यते० ॥

कपिसं [ ३.८ ]—

अदब्धेभिः .... माकिर्णो .... । उपयामगृहीतोऽसि देवाय त्वा सवित्रे ॥

[ ४१.७ ] = कासं

वामासं—

वाममद्य सवितर्वाममु .... । उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधा असि चनो मयि धेहि । जिन्व यज्ञं जिन्व यज्ञपतिं भगाय देवाय त्वा सवित्रे ॥ ८.६-७

माशब्रा [ ४.४.१.१–७ ]—सावित्रं गृह्णाति० तं वा उपांशुपात्रेण गृह्णाति० अन्तर्यामपात्रेण वा० आग्रयणाद् गृह्णाति० अथातो गृह्णात्येव वाममद्य सवितर् .... यज्ञपतिं भगायेति । तं गृहीत्वा न सादयति० अथाह देवाय सवित्रेऽनुब्रूहि इति । आश्राव्याह देवाय सवित्रे प्रेष्य इति । वषट्कृते जुहोति । नानुवषट्करोति० ॥

वाकासं—

वाममद्य .... चनोधाश्चनो मयि धेहि । .... भगाय सवित्रे त्वा ॥ ८.३-४

काशब्रा [ ५.४.३.१-८ ] = माशब्रा

## १५१. सावित्रग्रहप्रचारहौत्रम्

ऋसं—

[1]अभूद्देवः सविता वन्द्यो नु न इदानीमह्न उपवाच्यो नृभिः ।
वि यो रत्ना भजति मानवेभ्यः श्रेष्ठं नो अत्र द्रविणं यथा दधत् ॥ ४.५४.१

[2]होता यक्षद्देवं सवितारं परामीवां साविषत् पराघशंसं सुसावित्रमसाविषत्तदस्मै सुन्वते यजमानाय करद्देवं देवः सविता जुषतां मन्दतां वेतु पिबतु सोमं होतर्यज ॥

खिलम् ५.७.४ (घ)

१. पुरोनुवाक्या । २. प्रैषः ।

ऐब्रा [ ३.२९ ]—सावित्री प्रतिपद्भवति वैश्वदेवस्य सावित्रग्रहः पुरस्तात् तस्य यजति दमूना देवः सविता वरेण्यः इति मद्वत्या रूपसमृद्धया०नानुवषट्करोति न भक्षयति०॥

शांब्रा [ १६.२ ]—अथ सावित्रग्रहेण चरन्ति० त्रिष्टुभं सावित्रग्रहस्य पुरोनुवाक्यामनूच्य जगत्या यजति० तस्य नानुवषट्करोति० मद्वती याज्या० ॥

[ ३०.१ ]—अथ सावित्रग्रहेण चरन्ति तस्योक्तं ब्राह्मणम्। त्रिष्टुभं सावित्रग्रहस्य पुरोनुवाक्यामन्वाह तस्या उक्तं ब्राह्मणम् ॥

## १५२. वैश्वदेवग्रहग्रहणम्

**तैसं [ १.४.२६ ]—**

**सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नमः ॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥**

[ ६.५.७ ]—सवितृपात्रेण वैश्वदेवं कलशाद् गृह्णाति० सोमे सोममभि गृह्णाति० ॥

**मैसं [ १.३.२८ ]—**

**उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नमः ॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥**

[ ४.७.१ ]—सावित्रस्य स॰ स्रवे वैश्वदेवमभिगृह्णाति० आशीर्मतः सवनस्य गृह्णाति०॥

**कासं [ ४.१० ]—**

**उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नमः ॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥**

[ २८.७ ]—सावित्रस्य संस्रावे वैश्वदेवमभिगृह्णाति० सोमे हि सोममभिगृह्णाति० ॥

**कपिसं [ ३.८ ] ≡ कासं**

[ ४४.७ ] ≡ कासं

**वामासं—**

**उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षाय नमः।**
**विश्वेभ्यस्त्वा देवेभ्यः ॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ८.८**

माशब्रा [ ४.४.१.८-१४ ]—अथाभक्षितेन पात्रेण वैश्वदेवं ग्रहं गृह्णाति० तं वै पूतभृतो गृह्णाति० तं वा अपुरोरुक्कं गृह्णाति० अथातो गृह्णात्येव उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानः.... देवेभ्यः ॥ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति० ॥

**वाकासं [ ८.५ ] ≡ वामासं**

काशब्रा [ ५.४.३.८-१३ ] ≡ माशब्रा

## १५३. वैश्वदेवशस्त्रम्

### [ रथन्तरपृष्ठे ][1]

ऋसं—

अध्वर्यो शोशोंसावो३म् [2]तत् सवितुर्वृणीमहे वयं देवस्य भोजनम्। श्रेष्ठं सर्वधातमं तुरं भगस्य धीमहो३म् अस्य हि स्वयशस्तरं सवितुः कच्चन प्रियम्। न मिनन्ति स्वराज्यो३म् स हि रत्नानि दाशुषे सुवाति सविता भगः। तं भागं चित्रमीमहो३म् (५.८२.१–३)[3] शोंसावो३म् अद्या नो देव सवितः प्रजावत् सावीः सौभगम्। परा दुःष्वप्न्यं सुवो३म् विश्वानि देव सवितर्दुरितानि परा सुव। यद् भद्रं तन्न आसुवो३म् अनागसो अदितये देवस्य सवितुः सवे। विश्वा वामानि धीमहो३म् (५.८२.४–६)[4] शोंसावो३म् [5]अभूद्देवः सविता वन्द्यो नु नः। इदानीमह्न उपवाच्यो नृभो३म् वि यो रत्ना भजति मानवेभ्यः। श्रेष्ठं नो अत्र द्रविणं यथा दधो३म् देवेभ्यो हि प्रथमं यज्ञियेभ्यः। अमृतत्वं सुवसि भागमुत्तमो३म् आदिद्दामानं सवितर्व्यूर्णुषे। अनूचीना जीविता मानुषेभ्यो३म् अचित्ती यच्चकृमा दैव्ये जने। दीनैर्दक्षैः प्रभूती पूरुषत्वतो३म् देवेषु च सवितर्मानुषेषु च। त्वं नो अत्र सुवतादनागसो३म् न प्रमिये सवितुर्दैव्यस्य तत्। यथा विश्वं भुवनं धारयिष्यतो३म् यत् पृथिव्या वरिमन्ना स्वङ्गुरिः। वर्ष्मन् दिवः सुवति सत्यमस्य तो३म् इन्द्रज्येष्ठान् बृहद्भ्यः पर्वतेभ्यः। क्षयाँ एभ्यः सुवसि पस्त्यावतो३म् यथायथा पतयन्तो वियेमिरे। एवैव तस्थुः सवितः सवाय तो३म् (४.५४.१–५)

शोंसावो३म् [6]सविता देवः सोमस्य पिबतु। हिरण्यपाणिः सुजिह्वः। सुबाहुः स्वङ्गुरिः। त्रिरहन् सत्यसवनः। यत्प्रासुवद्वसुधिती उभे जोष्ट्री सवीमनि। श्रेष्ठं सावित्रमासुवन्। दोग्ध्रीं धेनुम्। वोळ्हारमनड्वाहम्। आशुं सप्तिम्। जिष्णुं रथेष्ठाम्। पुरंधिं योषाम्। सभेयं युवानम्। परामीवां साविषत् पराघशंसम्। सविता देव इह श्रवदिह सोमस्य मत्सत्। प्रेमां देवो देवहूतिमवतु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवतु। चित्रश्चित्राभिरूतिभिः। श्रवद्ब्रह्माण्यावसा गमो३म् (खिलम् ५.५.४)

---

१. बृहत्पृष्ठेऽप्येवमेव। २. आर्द्यां त्रिर्विग्राह्य शंसेत्। ३. प्रतिपत्तृचः। ४. अनुरूपस्तृचः। ५. निविद्धानीयं सूक्तम्। ६. निविद्।

ये ते त्रिरहन्त्सवितः सवासः । दिवे दिवे सौभगमासुवन्तो३म् इन्द्रो द्यावा-पृथिवी सिन्धुरद्भिः । आदित्यैर्नो अदितिः शर्म यंसो३म् ( ४.५४.६ ) शोंसावो३म् [1]एकया च दशभिश्च स्वभूते । द्वाभ्यामिष्टये विंशत्या चो३म् तिसृभिश्च वहसे त्रिंशता च । नियुद्भिर्वायविह ता विमुञ्चो३म् ( आश्वश्रौ ५.१८.५ ) शोंसावो३म् [2]प्र द्यावा यज्ञैः पृथिवी ऋतावृधा । मही स्तुषे विदथेषु प्रचेतसो३म् देवेभिर्ये देवपुत्रे सुदंससा । इत्था धिया वार्याणि प्रभूषतो३म् उत मन्ये पितुरद्रुहो मनः । मातुर्महि स्वतवस्तद्धवीमभो३म् सुरेतसा पितरा भूम चक्रतुः । उरु प्रजाया अमृतं वरीमभो३म् ते सूनवः स्वपसः सुदंससः । मही जज्ञुर्मातरा पूर्वचित्तयो३म् स्थातुश्च सत्यं जगतश्च धर्मणि । पुत्रस्य पाथः पदमद्वयाविनो३म् ते मायिनो ममिरे सुप्रचेतसः । जामी सयोनी मिथुना समोकसो३म् नव्यंनव्यं तन्तुमा तन्वते दिवि । समुद्रे अन्तः कवयः सुदीतयो३म् ( १.१५९.१-४ )

शोंसावो३म् [3]द्यावापृथिवी सोमस्य मत्सताम् । पिता च माता च । पुत्रश्च प्रजननं च । धेनुश्च ऋषभश्च । धन्या च धिषणा च । सुरेताश्च सुदुघा च । शंभूश्च मयोभूश्च । ऊर्जस्वती च पयस्वती च । रेतोधाश्च रेतोभृच्च । द्यावापृथिवी इह श्रुतामिह सोमस्य मत्सताम् । प्रेमां देवी देवहूतिमवतां देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवताम् । चित्रे चित्राभिरूतिभिः । श्रुतां ब्रह्माण्यावसा गमतो३म् ( खिलम् ५.५.५ )

तद्राधो अद्य सवितुर्वरेण्यम् । वयं देवस्य प्रसवे मनामहो३म् अस्मभ्यं द्यावापृथिवी सुचेतुना । रयिं धत्तं वसुमन्तं शतग्विनो३म् ( १.१५९.५ ) शोंसावो३म् [4]सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवो३म् ( १.४.१ ) शोंसावो३म् [5]तक्षन् रथं सुवृतं विद्मनापसः । तक्षन् हरी इन्द्रवाहा वृषण्वसो३म् तक्षन् पितृभ्यामृभवो युवद्वयः । तक्षन् वत्साय मातरं सचाभुवो३म् आ नो यज्ञाय तक्षत ऋभुमद्वयः । क्रत्वे दक्षाय सुप्रजावतीमिषो३म् यथा क्षयाम सर्ववीरया विशा । तन्नः शर्धाय धासथा स्विन्द्रियो३म् आ तक्षत सातिमस्मभ्यमृभवः । सातिं रथाय सातिमर्वते नरो३म् सातिं नो जैत्रीं सं महेत विश्वहा । जामिमजामिं पृतनासु सक्षणो३म् ऋभुक्षणमिन्द्रमा हुव ऊतये । ऋभून् वाजान् मरुतः सोमपीतयो३म् उभा मित्रावरुणा नूनमश्विना । ते नो हिन्वन्तु सातये धिये जिषो३म् (१.१११.१-५)

१ धाय्या । २. निविद्धानीयं सूक्तम् । ३. निविद् । ४. धाय्या । ५. निविद्धानीयं सूक्तम् ।

शोंसावो३म् [1]ऋभवो देवाः सोमस्य मत्सन्। विष्ट्वी स्वपसः। कर्मणा सुहस्ताः। धन्या धनिष्ठाः। शम्या शमिष्ठाः। शच्या शचिष्ठाः। ये धेनुं विश्वजुवं विश्वरूपामरक्षन्। अरक्षन् धेनुरभवद्विश्वरूपी। अयुञ्जत हरी। अयुर्देवाँ उप। अबुध्रन् सं कनीना मदन्तः। संवत्सरे स्वपसो यज्ञियं भागमायन्। ऋभवो देवा इह श्रवन्निह सोमस्य मत्सन्। प्रेमां देवा देवहूतिमवन्तु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवन्तु। चित्राश्चित्राभिरूतिभिः। श्रवन् ब्रह्माण्यावसा गमो३म् ( खिलम् ५.५.६ )

ऋभुर्भराय सं शिशातु सातिम्। समर्यजिद्वाजो अस्माँ अविष्टो३म् तन्नो मित्रो वरुणो मामहन्ताम्। अदितिः सिन्धुः पृथिवी उत द्यो३म् (१.१११.५) शोंसावो३म् [2]अयं वेनश्चोदयत् पृश्निगर्भाः। ज्योतिर्जरायू रजसो विमानो३म् इममपां संगमे सूर्यस्य। शिशुं न विप्रा मतिभी रिहन्तो३म् ( १०.१२३.१ ) शोंसावो३म् [3]येभ्यो माता मधुमत् पिन्वते पयः। पीयूषं द्यौरदितिरद्रिबर्हो३म् उक्थशुष्मान् वृषभरान्त्स्वप्नसः। ताँ आदित्याँ अनु मदा स्वस्तयो३म् ( १०.६३.३ ) शोंसावो३म् [2]एवा पित्रे विश्वदेवाय वृष्णे। यज्ञैर्विधेम नमसा हविर्भो३म् बृहस्पते सुप्रजा वीरवन्तः। वयं स्याम पतयो रयीणो३म् (४.५०.६) शोंसावो३म् [3]आ नो भद्राः क्रतवो यन्तु विश्वतः। अदब्धासो अपरीतास उद्भिदो३म् देवा नो यथा सदमिद्वृधे असन्। अप्रायुवो रक्षितारो दिवेदिवो३म् देवानां भद्रा सुमतिर्ऋजूयताम्। देवानां रातिरभि नो नि वर्ततो३म् देवानां सख्यमुप सेदिमा वयम्। देवा न आयुः प्र तिरन्तु जीवसो३म् तान् पूर्वया निविदा हूमहे वयम्। भगं मित्रमदितिं दक्षमस्रिधो३म् अर्यमणं वरुणं सोममश्विना। सरस्वती न सुभगा मयस्करो३म् तन्नो वातो मयोभु वातु भेषजम्। तन्माता पृथिवी तत् पिता द्यो३म् तद्ग्रावाणः सोमसुतो मयोभुवः। तदश्विना शृणुतं धिष्ण्या युवो३म् तमीशानं जगतस्तस्थुषस्पतिम्। धियंजिन्वमवसे हूमहे वयो३म् पूषा नो यथा वेदसामसद्वृधे। रक्षिता पायुरदब्धः स्वस्तयो३म् स्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदो३म् स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातो३म् पृषदश्वा मरुतः पृश्निमातरः। शुभंयावानो विदथेषु जग्मयो३म् अग्निजिह्वा मनवः सूरचक्षसः। विश्वे नो देवा अवसा गमन्निहो३म् भद्रं कर्णेभिः शृणुयाम देवाः।

१. निविद्। २. धाय्या। ३. निविद्धानीयं सूक्तम्।

भद्रं पश्येमाक्षभिर्यजत्रो३म् स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः। व्यशेम देवहितं यदायो३म् (१.८९.१-८)

शोंसावो३म् [1]विश्वे देवाः सोमस्य मत्सन्। विश्वे वैश्वानराः। विश्वे विश्वमहसः। महि महान्तः। तक्वान्ना नेमधितीवानः। आस्क्राः पचतवाहसः। वातआत्मानो अग्निजूताः। ये द्यां च पृथिवीं चातस्थुः। अपश्च स्वश्च। ब्रह्म च क्षत्रं च। बर्हिश्च वेदिं च। यज्ञं चोरु चान्तरिक्षम्। ये स्थ त्रय एकादशाः। त्रयश्च त्रिंशच्च। त्रयश्च त्री च शता। त्रयश्च त्री च सहस्रा। तावन्तोऽभिषाचः। तावन्तो रातिषाचः। तावतीः पत्नीः। तावतीर्ग्नाः। तावन्त उदरणे। तावन्तो निवेशने। अतो वा देवा भूयांसः स्थ। मा वो देवा अतिशसा मा परिशसा विक्षि। विश्वे देवा इह श्रवन्निह सोमस्य मत्सन्। प्रेमां देवा देवहूतिमवन्तु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवन्तु। चित्राश्चित्राभिरूतिभिः। श्रवन् ब्रह्माण्यावसा गमो३म् (खिलम् ५.५.७)

शतमिन्नु शरदो अन्ति देवाः। यत्रा नश्चक्रा जरसं तनूनो३म् पुत्रासो यत्र पितरो भवन्ति। मा नो मध्या रीरिषतायुर्गन्तो३म् (१.८९.९) शोंसावो३म [2]अदितिर्द्यौरदितिरन्तरिक्षम्। अदितिर्माता स पिता स पुत्रो३म् विश्वे देवा अदितिः पञ्च जनाः। अदितिर्जातमदितिर्जनित्वो३म् अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वो३म् (१.८९.१०)॥

[3]विश्वे देवाः शृणुतेमं हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम्॥ ६.५२.१३

ऐब्रा [३.१२]—अध्वर्यो शोशोंसावो३म् इत्याह्वयते तृतीयसवने सप्ताक्षरेण। शंसामोदैवो३म् इत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण०।

[३.४४]—बलिष्ठतमया वाचा तृतीयसवने शंसेत्०।

[३.१०-११]—गर्भा वा एत उक्थानां यन्निविदः० यदन्ततस्तृतीयसवने धीयन्ते० एकां परिशिष्य तृतीयसवने निविदं दध्यात्० न सूक्तेन निविदमतिपद्येत। येन सूक्तेन निविदमतिपद्येत न तत्पुनरुपनिवर्तेत० अन्यत्तद्दैवतं तच्छन्दसं सूक्तमाहृत्य तस्मिन्निविदं दध्यात्। मा प्र गाम पथो वयम् (ऋ. १०.५७.१) इति पुरस्तात्सूक्तस्य शंसति०।

१. निविद्। २. परिधानीया। द्विः पच्छः, सकृदर्धर्चशः। ३. याज्या।

[ ३.२९-३१ ]—बह्वयः प्रातर्वायव्याः शस्यन्त एका तृतीयसवने० द्यावापृथिवीयं शंसति० आर्भवं शंसति० ते एते धाय्ये अनिरुक्ते प्राजापत्ये शस्येते । अभित आर्भवं सुरूप-कृत्नुमूतये, अयं वेनश्चोदयत्पृश्निगर्भा इति० ते एते धाय्ये अन्तरदधत येभ्यो माता, एवा पित्र इति । वैश्वदेवं शंसति० तदुभयतो धाय्यां पर्याह्वयते० मूलं वा एतद्यज्ञस्य यद्धाय्याश्च याज्याश्च० ताः समान्य एव स्युः० सर्वा दिशो ध्यायेच्छंसिष्यन्० यस्यामस्य दिशि द्वेष्यः स्यान्न तां ध्यायेत्० अदितिर्द्यौरदितिरन्तरिक्षमित्युत्तमया परिदधाति० द्विः पच्छः परिदधाति० सकृदर्धर्चशः० सदैव पञ्चजनीयया परिदध्यात् । तदुपस्पृशन् भूमिं परिदध्यात्० विश्वे देवाः शृणुतेमं हवं म इति वैश्वदेवमुक्थं शस्त्वा वैश्वदेव्या यजति० ।

[ ३.१२ ]—उक्थं वाचीन्द्राय देवेभ्यः इत्याह शस्त्वैकादशाक्षरम् । ओम् इत्यध्वर्युरेकाक्षरम्० ॥

**ऋसं—**

अध्वर्यो शोंशोंसावो३म् तत् सवितुर्वृणीमहे .... चित्रमीमहो३म् (५.८२.१-३)[1] शोंसावो३म् अद्या नो देव .... धीमहो३म् ( ५.८२.४-६ )[2] शोंसावो३म् अभूद्देवः.... सवाय तो३म् ( ४.५४.१-५ )

शोंसावो३म् [3]सविता देवः सोमस्य मत्सत् । हिरण्यपाणिः सुजिह्वः । सुबाहुः स्वङ्गुरिः । त्रिरहन्सत्यसवनः । यः प्रासुवद्वसुधिती । उभे जोष्ट्री सवीमनि । श्रेष्ठं सावित्रमासुवम् । दोग्ध्रीं धेनुम् । वोढ्हार-मनड्वाहम् । आशुं सप्तिम् । जिष्णुं रथेष्ठाम् । पुरंधिं योषाम् । सभेयं युवानम् । सविता देवः परामीवां साविषत् पराघशंसम् । इह श्रवदिह सोमस्य मत्सत् । प्रेमां देवो देवहूतिमवतु देव्या धिया । प्रेदं ब्रह्म प्रेदं क्षत्रम् । प्रेमं सुन्वन्तं यजमानमवतु । चित्रश्चित्राभिरूतिभिः । श्रवद्ब्रह्माण्यावसा गमो३म् ( शांश्रौ ८.१८.१ )

ये ते त्रिरहन् .... शर्म यंसो३म् ( ४.५४.६ ) शोंसावो३म् [4]एकया च दशभिश्च स्वभूते । द्वाभ्यामिष्टये विंशती चो३म् तिसृभिश्च वहसे त्रिंशता च । नियुद्भिर्वायविह ता वि मुञ्चो३म् ( शांश्रौ ८.३.१० ) शोंसावो३म् प्र द्यावा यज्ञैः .... सुदीतयो३म् ( १.१५९.१–४ )

शोंसावो३म् [3]द्यावापृथिवी सोमस्य मत्सताम् । पिता च माता च । धेनुश्च ऋषभश्च । धन्या च धिषणा च । सुरेताश्च सुदुघा च । शंभूश्च

१. प्रतिपत्तृचः । २. अनुरूपस्तृचः । ३. निविद् । ४. धाय्या ।

मयोभूश्च। ऊर्जस्वती च पयस्वती च। द्यावापृथिवी इह श्रुतामिह सोमस्य मत्सताम्। प्रेमां देवी देवहूतिमवतां देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवताम्। चित्रे चित्राभिरूतिभिः। श्रुतां ब्रह्माण्यावसा गमतो३म् (शांश्रौ ८.१९.१)

तद् राधो अद्य .... शतग्विनो३म् (१.१५९.५) शोंसावो३म् [1]सुरूपकृत्नुम् .... द्यविद्यवो३म्। (१.४.१) शोंसावो३म् तक्षन् रथं .... धिये जिषो३म् (१.१११.१–४)

शोंसावो३म् [2]ऋभवो देवाः सोमस्य मत्सन्। विष्ट्वी स्वपसः। कर्मणा सुहस्ताः। धन्या धनिष्ठाः। शम्या शमिष्ठाः। शच्या शचिष्ठाः। ये धेनुं विश्वजुवं विश्वरूपामतक्षन्। अतक्षन् धेनुमभवद्विश्वरूपी। अबुध्नन् सं कनीना मदन्तः। अयुञ्जत हरी अयुर्देवाँ उप। संवत्सरे स्वपसो यज्ञियं भागमायन्। ऋभवो देवा इह श्रवन्निह सोमस्य मत्सन्। प्रेमां देवा देवहूतिमवन्तु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवन्तु। चित्राश्चित्राभिरूतिभिः। श्रवन् ब्रह्माण्यावसा गमो३म् (शांश्रौ ८.२०.१)

ऋभुर्भराय .... द्यो३म् (१.१११.५) शोंसावो३म् [1]अयं वेनः .... रिहन्तो३म् (१०.१२३.१) शोंसावो३म् [1]येभ्यो माता .... स्वस्तयो३म् (१०.६३.३) शोंसावो३म् [1]एवा पित्रे.... रयीणो३म् (४.५०.६) शोंसावो३म् आ नो भद्राः .... यदायो३म् (१.८९.१–८)

शोंसावो३म् [2]विश्वे देवाः सोमस्य मत्सन्। विश्वे वैश्वानराः। महि महान्तः। पक्वान्ना नेमतिथीवानः। आस्क्राः पचतवाहसः। ये द्यां च पृथिवीं चातस्थुः। अपश्च स्वश्च। ब्रह्म च क्षत्रं च। बर्हिश्च वेदिं च। यज्ञं चोरु चान्तरिक्षम्। वातात्मानो अग्निदूताः। ये स्थ त्रय एकादशासः। त्रयश्च त्रिंशच्च। त्रयश्च त्री च शता। त्रयश्च त्री च सहस्रा। तावन्त उद्दरणे। तावन्तो निवेशने। तावतीः पत्नीः। तावतीर्ग्नाः। तावन्तोऽभिषाचः। तावन्तो रातिषाचः। अतो वा देवा भूयांस स्थ। मा वो देवा अविशसा मा विशसायुरा वृक्षि। विश्वे देवा इह श्रवन्निह सोमस्य मत्सन्। प्रेमां देवा देवहूतिमवन्तु देव्या धिया।

१. धाय्या। २. निविद्।

प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेम सुन्वन्तं यजमानमवन्तु। चित्राश्चित्राभिरूतिभिः। श्रवन् ब्रह्माण्यावसा गमो३म् ( शांश्रौ ८.२१.१ )

शतमिन्नु .... गन्तो३म् (१.८९.९) शोंसावो३म् [1]अदितिर्द्यौ .... जनित्वो३म् ( १.८९.१० ) ॥

[2]विश्वे देवाः शृणुतेमं .... ॥ ६.५२.१३

शांब्रा [ १४.३ ]—अध्वर्यो शोशोंसावो इति तृतीयसवनेऽभ्यासमाह्वयते। शोशोंसामो दैव इत्यध्वर्युः० अवाचीन्द्रायोक्थं देवेभ्यः इति तृतीयसवन उपांशु होता ब्रूयात्। उक्थशाः इत्यध्वर्युः०।

[ १४.१ ]—अथ वै निवित्० उत्तमाः परिशिष्य तृतीयसवने०।

[ १६.३-४ ]—सवित्रा वैश्वदेवं प्रतिपद्यते० प्रतिपदनुचरौ सूक्तमिति सावित्राणि भवन्ति। तत्सवितुर्वृणीमह इत्यनुष्टुभा वैश्वदेवं प्रतिपद्यते०उक्तं पदविग्रहणस्य ब्राह्मणम्। गायत्रीः शंसति० सावित्रं शंसति० वायव्यां शंसति० तस्यै शस्त्रे द्विदेवत्यान् विमुञ्चति० द्यावापृथिवीयं शंसति० तस्मिन्नध्वर्युर्मद्वत्प्रत्यागृणाति० सुरूपकृत्नुं शंसति० आर्भवं शंसति० अथ वैनामादित्यां बार्हस्पत्यामिति शंसति० वैश्वदेवं शंसति० तस्य द्विः पच्छः परिधानीयां शंसत्यर्धर्चशस्तृतीयं० चत्वारि सूक्तानि वैश्वदेवे शंसति० षोलशाहावं वैश्वदेवं शंसति० तत्सप्तविधं भवत्येकादश देवताश्चतस्रो निविद उक्थवीर्यं याज्येति० विश्वे देवाः शृणुतेमं हवं म इत्युक्थं शस्त्वा यजति वैश्वदेव्या० मद्वत्या० त्रिष्टुभा० अनुवषट्करोति० ॥

तैसं [ ३.२.९.२ ]—उक्थं वाचीन्द्राय इत्याह तृतीयसवनं प्रतिगीर्य० ॥

मैसं [ ४.६.२ ]— वायव्यायां शस्यमानायां पात्राणि विमुञ्चति० एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विंशत्या च तिसृभिश्च वहसे त्रिंशता च नियुद्भिर्वाय इह ता विमुञ्च इत्याह० ॥

कासं [ २७.५ ]—एकया च दशभिश्चेत्येतां प्रतिविमुञ्चति० ॥

कपिसं [ ४२.५ ] ≡ कासं

माशब्रा [ ४.४.१.१४-१८ ]—अथेत्य प्राङुपविशति। स यत्रैताꣳ होता शꣳसति एकया च दशभिश्च स्वभूते द्वाभ्यामिष्टये विꣳशती च। तिसृभिश्च वहसे त्रिꣳशता च नियुद्भिर्वायविह ता विमुञ्च इति। तदेतस्यां वायव्यायामृचि पात्राणि विमुच्यन्ते० ॥

[ ४.३.२.११-१२]—त्रिमद्वत्तृतीयसवने० यत्र द्यावापृथिव्यꣳ शस्यते० ॥

१. परिधानीया। द्विः पच्छः सकृदर्धर्चशः। २. याज्या।

काशब्रा [ ५.३.३.८ ] ≡ माशब्रा ४.३.२.११-१२

[ ५.४.३.१३-१६ ] ≡ माशब्रा ४.४.१.१४-१८

गोब्रा [ २.३.१० ]—**अध्वर्यो शंशंसावो३म्** इत्याह्वयते तृतीयसवने सप्ताक्षरेण। **शंसावो दैव** इत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरम्॰ **उक्थं वाचीन्द्राय देवेभ्यः** इत्याह शस्त्वा नवाक्षरम्। **ओमुक्थशाः** इत्यध्वर्युः प्रतिगृणाति त्र्यक्षरम्॰ ॥

[ २.४.१० ]—बलिष्ठतमया वाचा तृतीयसवने शंसेत्॰ ॥

## १५४. वैश्वदेवग्रहप्रचारः

**तैसं [ ३.२.५ ]—**

**नराशंसपीतस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि ॥**

मैसं [ ३.१०.५ ]—एकनाराशंसास्तृतीयसवने॰ ॥

कासं [ २९.१ ]—एकनाराशीसा तृतीयसवने॰ ॥

कपिसं [ ४५.२ ] ≡ कासं

ऐब्रा [ २.२४ ]—सकृन्नाराशंसं तृतीयसवनम्॰ ॥

**तांब्रा [ १.५.९ ]—**

**काव्यैस्ते पितृभिर्भक्षितस्य मधुमतो नाराशंसस्य सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥**

## १५५. सौम्यचरुयागः

तैसं [ ६.६.७ ]—यत् सौम्यो भवति॰ दक्षिणार्धे जुहोति॰ उद्गातृभ्यो हरन्ति॰ अवेक्षन्ते॰ य आत्मानं न परिपश्येदितासुः स्यादभिदर्दिं कृत्वावेक्षेत॰ यो गतमनाः स्यात् सोऽवेक्षेत

**यन्मे मनः परागतं यद्वा मे अपरागतम्।**
**राज्ञा सोमेन तद्वयमस्मासु धारयामसि ॥**

इति॰ आग्नावैष्णव्यर्चा घृतस्य यजति॰ उपांशु यजति॰ ॥

मैसं [ ४.७.२ ]—घृतस्य यजति॰ आग्नावैष्णव्या व्याघारयति॰ पितृमत्या यजति। दक्षिणा तिष्ठन् जुहोति॰ आग्नावैष्णव्या घृतस्य यजति सौम्या सौम्यस्य॰ **सत्रा त एतद्यदु त इह** इति परिपश्यति। योऽगतासुः स परिपश्यति॰ यदि न परिपश्येदथ वदेत्—

यन्मे मनो यमं गत॰ यद्वा मे अपरागतम् ।
राज्ञा सोमेन तद्वयमस्मासु धारयामसि ॥
हृदिस्पृक् क्रतुस्पृग्वर्चोधा असि वर्चो मे धेहि इति॰ ॥

कासं [ २९.२ ]—आग्नेय्या पुरस्तात् सौम्यं परियजति वैष्णव्योपरिष्टात् दक्षिणार्धेऽग्नेर्जुहोति॰ सकृदवद्यति॰ यन्मेक्षणेन द्वितीयमवद्यति॰ उद्गातृभ्यो हरन्ति॰ प्राश्या३ न प्राश्या३ इति मीमांसन्ते॰ अवजिघ्रेत्॰ योऽलमन्नाद्याय सन्नन्नं नाद्यात् स प्राश्नीयात्॰ आमयाविना माश्यः॰ पितरो मन्दन्ती सोमप्रतीका मन्दन्तां व्यशेम देवहितं यदायुरिन्द्रपीतो विचक्षणो व्यशेम देवहितं यदायुर्हृदिस्पृक् क्रतुस्पृग्वर्चोधा असि वर्चो मे धेहि ॥

यन्मे मनो यमं गतं यद्वा मे अपरागतम् ।
राज्ञा सोमेन तद्वयमस्मासु धारयामसि ॥

इति सौम्यमवेक्षेत॰ परीव पश्येत्॰ आग्नेय्या घृतस्य यजति । सौम्या सौम्यस्य । वैष्णव्योपरिष्टाद्घृतस्य॰ ॥

कपिसं [ ४५.३ ] ≡ कासं

माशब्रा [ ४.३.३.१९ ]— तृतीयसवनाय सौम्यं चरुं श्रपयति ॥

[ ४.४.२.१–६ ]—सौम्येन चरुणा प्रचरति॰ तेन तृतीयसवने प्रचरति॰ नानुवाक्यामन्वाह॰ अथ चतुर्गृहीतमाज्यं गृहीत्वाश्राव्याह घृतस्य यज इति। वषट्कृते जुहोति॰ स आज्यस्योपस्तीर्य द्विश्चरोरवद्यति । अथोपरिष्टादाज्यस्याभिघारयति। आश्राव्याह सौम्यस्य यज इति । वषट्कृते जुहोति। अथापरं चतुर्गृहीतमाज्यं गृहीत्वाश्राव्याह घृतस्य यज इति। वषट्कृते जुहोति॰ स यदि कामयेतोभयतः परियजेत्। यद्यु कामयेतान्यतरतः परियजेत् ॥

काशब्रा [ ५.४.४.१–४ ]— --- तद्वा आहुरन्यतरत एव परियजेत् पुरस्तादेवेति - -- ॥

तांब्रा [ १.५.१७–१९ ]—

आयुर्मे प्राणो मनसि मे प्राण आयुपत्न्यामृचि ॥
यन्मे मनो यमं गतं यद्वा मे अपरागतम् ।
राज्ञा सोमेन तद्वयं पुनरस्मासु दध्मसि ॥
यन्मे यमं वैवस्वतं मनो जगाम दूरगास्तन्म आवर्तया पुनर्जीवातवे न मर्तवेऽथो अरिष्टतातये ॥

**येना ह्याजिमजयद्विचक्ष्य येन श्येनꣳ शकुनꣳ सुपर्णम् ।**
**यदाहुश्चक्षुरदितावनन्तꣳ सोमो नृचक्षा मयि तद्दधातु ॥**

षब्रा [ १.७ ]—प्रपश्यत्यनन्धो भवति य एवं विद्वान्सौम्यं चरुमवेक्षते। योऽलमन्नाद्याय सन्नथान्नं नाद्याद् दक्षिणार्धꣳ सदसो गत्वैतꣳ सौम्यातिशेषं प्राश्नीयात्० ॥

जैब्रा [ १.१६७–१६८ ]—अथ ह वा एतꣳ सौम्यं चरुमाहरन्ति० तꣳ ह्यावेक्षेत

**यन्मे मनो यमं गतं यद्वा मे अपरागतम् ।**
**राज्ञा सोमेन तद्वयं पुनरस्मासु दध्मसि ॥**
**मनसि मे चक्षुरधाश्चक्षुषि मे मनः ।**
**आयुष्मत्या ऋचो माच्छैत्सि मा साम्नो भागधेयाद्वियोषम् ॥**

इति। तद्वापि छायां पर्यवेक्षेतात्मनोऽप्रणाशाय। अथो सर्पिषोरक्ष्योरादधीत चक्षुष आप्यायनाय। तदपि विज्ञानमासाद्य आत्मानं न परिपश्येदपेतासुः स स्यात्० अङ्गिरसां वै सत्रमासीनानाꣳ शर्करा अक्षिष्वजायन्त। तेऽकामयन्तानन्धाः स्याम प्रपश्येमेति। स एतं सौम्यꣳ श्यामं चरुमक्षिष्वादधत। तमेतेन मन्त्रेणादधत

**येन ह्याजिमजयन्नृचक्षा येन श्येनꣳ शकुनꣳ सुपर्णम् ।**
**यदाहुश्चक्षुरदितावनन्तꣳ सोमो नृचक्षा मयि तद्दधातु ॥**

इति। ततो वै तेऽनन्धा अभवन् प्रापश्यन्। अनन्धो हैव भवति प्रपश्यति य एवं वेद। तदाहुः प्राश्या३ न प्राश्या३ इति। स योऽनूचानः सत्रयशा ऋतः स्यात् स हि तं प्राश्नीयात्० तदु होवाच शाट्यायनिर्नैवैष प्राश्यः० ॥

**अशौसं—**

**पुनर्मैत्विन्द्रियं पुनरात्मा द्रविणं ब्राह्मणं च ।**
**पुनरग्नयो धिष्ण्या यथास्थाम कल्पयन्तामिहैव ॥ ७.६९.१**

**अपैसं—**

**पुनर्मैत्विन्द्रियं .... धिष्ण्यासो .... ॥ ३.१३.६**

## १५६. सौम्यचरुयागहौत्रम्

**ऋसं—**

**[1]घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम ।**
**अनुष्वधमा वह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥ २.३.११**

१. शाङ्खा० मते घृतस्य याज्या।

[1]त्वं सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ।
तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयीणाम्॥ ८.४८.१३
[2]भद्रं कर्णेभिः शृणुयाम .... ॥ १.८९.८

ऐब्रा [ ३.३२ ]—आग्नेयी प्रथमा घृतयाज्या सौमी सौम्ययाज्या वैष्णवी घृतयाज्या। त्वं सोम पितृभिः संविदान इति सौम्यस्य पितृमत्या यजति० प्रतिगृह्य सौम्यं होता पूर्वश्छन्दोगेभ्योऽवेक्षेत। तं हैके पूर्वं छन्दोगेभ्यो हरन्ति। तत्तथा न कुर्यात्० ॥

शांब्रा [ १६.५]—घृतस्य यज, सौम्यस्य यज इत्याह० उपांशु घृतस्य यजति० अथ यदुच्चैः सौम्यस्य यजति० तस्य न परस्तात् पर्यजेदित्याहुः० पर्यजेदिति त्वेव स्थितम्० हरन्त्येतं सौम्यं सदः। तं होता प्रतिगृह्योपनिधत्ते। अथास्य सर्पिष्यात्मानं पर्यवेक्ष्याङ्गुलिभ्यां सर्पिरुपस्पृशति। चक्षुष्पा असि चक्षुर्मे पाहि इति चक्षुषी विमृजीत० तमुद्गातृभ्यः प्रयच्छति ॥

## १५७. पात्नीवतग्रहप्रचारः

तैसं [ १.४.२७ ]—

बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णाम्यग्नाइ पत्नीवाः ॥ सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा ॥

[ ६.५.८ ]—उपाँशुपात्रेण प्रथमश्चोत्तमश्च ग्रहौ गृह्येते० यदुपाँशुपात्रेण पात्नीवतमाग्रयणाद् गृह्णाति० यद् घृतेन पात्नीवतँ श्रीणाति० न सादयति० ॥

[ ३.५.५.१ ]—

अहं परस्तादहमवस्तादहं ज्योतिषा वि तमो ववार। यदन्तरिक्षं तदु मे पिताभूदहँ सूर्यमुभयतो ददर्शाहं भूयासमुत्तमः समानानाम् ॥

मैसं [ १.३.२९ ]—

उपयामगृहीतोऽसि बृहस्पतिसुतस्य त इन्द इन्द्रियावतः पत्नीवन्तं ग्रहꣳ राध्यासम् ॥ अग्नाइ पत्नीवान्त्सजूस्त्वष्टा सोमं पिब ॥

[ ४.७.४ ]—उपाꣳशुपात्रेण पात्नीवतं गृह्णाति० यत् प्रथमं पात्रꣳ युज्यते तदुत्तमꣳ विमुच्यते० असन्नो हूयते० यत् पात्नीवतं घृतेन श्रीणाति० ॥

कासं [ ४.११ ]—

उपयामगृहीतोऽसि बृहस्पतिसुतस्य त इन्द इन्द्रियावतः पत्नीवतो ग्रहमृध्यासम् ॥ अग्नाइ पत्नीवान्त्सजूस्त्वष्ट्रा सोमं पिब ॥

१. सौम्यस्य याज्या। २. सर्पिषि प्रतिबिम्बं न पश्येच्चेद् होता मृयात्।

[ २८.८ ]—प्रजननं वै पात्नीवतः० उपांशुपात्रेण गृह्णाति० उपांशुना प्रयन्त्युपांशुपात्रेणोघन्ति० यत् पात्नीवतं श्रीणाति० संपातेन श्रीणाति० उपरिष्टाच्छ्रीणाति० ॥

**कपिसं [ ३.९ ] ≡ कासं**

[ ४४.८ ] ≡ कासं

**वामासं [ ८.९–१० ]—**

**उपयामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम त इन्दोरिन्द्रियावतः पत्नीवतो ग्रहाँ ऋध्यासम् ॥ अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिताभूत् । अहꣳ सूर्यमुभयतो ददर्शाहं देवानां परमं गुहा यत् ॥ अग्नाइ पत्नीवन्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा ॥**

माशब्रा [ ४.४.२.७–१६ ]—अथ प्रचरणीति स्रुग्भवति । तस्यां चतुर्गृहीतमाज्यं गृहीत्वाध्वर्युः शालाकैर्धिष्ण्यान् व्याघारयति० मार्जालीय एवोत्तमम् । तद्धैक आग्नीध्रीये पुनराघारयन्ति० तदु तथा न कुर्यात् । मार्जालीय एवोत्तमम् । स यत्राध्वर्युः शालाकैर्धिष्ण्यान् व्याघारयति । तत् प्रतिप्रस्थाता पात्नीवतं ग्रहं गृह्णाति० तं वा उपांꣳशुपात्रेण गृह्णाति । यदि सावित्रमुपांꣳशुपात्रेण गृह्णीयादन्तर्यामपात्रेणैतम् । यदि सावित्रमन्तर्यामपात्रेण गृह्णीयादुपांꣳशुपात्रेणैतम्० तं वा अपुरोरुक्कं गृह्णाति०अथातो गृह्णात्येव उपयामगृहीतोऽसि बृहस्पतिसुतस्य .... इति० अथ यः प्रचरण्याꣳ सꣳस्रवः परिशिष्टो भवति तेनैनꣳ श्रीणाति० स श्रीणाति अहं परस्तात् .... गुहा यदिति० अथाह **अग्नीत् पात्नीवतस्य यज** इति० स जुहोति अग्नाइ पत्नीवन् .... इति० उत्तरार्धे जुहोति० ॥

**वाकासं—**

**उपयामगृहीतोऽसि बृहस्पतिसुतस्य ते देव सोम । इन्द इन्द्रियावतः .... ॥ अहं परस्ताद् .... पितास । .... ॥ अग्ने वाक्पत्नि सजूर् .... ॥ ८.६.१–३**

काशब्रा [ ५.४.४.४–१२ ] ≡ माशब्रा

## १५८. पात्नीवतग्रहप्रचारहौत्रम्

**ऋसं—**

**ऐभिरग्ने सरथं याह्यर्वाङ् नानारथं वा विभवो ह्यश्वाः ।**
**पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमा वह मादयस्व ॥ ३.६.९**

ऐब्रा [ ६.३ ]—उपांशु पात्नीवतस्याग्नीध्रो यजति० नानुवषट्करोति० ॥

शांब्रा [ १६.६ ]—अथ पात्नीवतग्रहेण चरन्ति० तस्य नानुवषट्करोति० उपांशु यजति० मद्वती याज्या० आग्नीध्रो यजति० ॥

[ ३०.१ ]—अथ [1]यदुक्थे अन्तरेणाग्नीत् पात्नीवतस्य यजति० ॥

तैसं [ ६.५.८ ]—नानु वषट् करोति० उपा॑श्वनु वषट् करोति० ॥

मैसं [ ४.७.४ ]—एतमग्नीद् वषट्करोति० नानुयजति० ॥

[ १.९.८ ]—अग्नीद्वै पात्नीवतस्य यजति० ॥

कासं [ २८.८ ]—नैतस्य होता यजति० अग्निर्यजति० नानुयजति० ॥

**अशौसं—**

**ऐभिरग्ने सरथं याह्यर्वाङ् .... ॥ २०.१३.४**

गोब्रा [ २.४.५ ]—उपांशु पात्नीवतस्याग्नीध्रो यजति० तन्नानुवषट्करोति० ॥

## १५९. होतृचमसोन्नयनम्

तैसं [ ६.५.८ ]—**अग्नीन्नेष्टुरुपस्थमा सीद नेष्टः पत्नीमुदानय** इत्याह० ॥

**[ ३.२.८.५ ]—**

**भूतमसि भूते मा धा मुखमसि मुखं भूयासम् ॥**

मैसं [ ४.५.४ ]—यदग्नीन्नेष्टुरुपस्थमासीदति० ॥

कासं [ २८.८ ]—सह पात्रेण नेष्टारमभिसर्पति० नोपस्थ आसीत० अन्तरा नेष्टारं च धिष्ण्यं च व्यवसर्पति० ॥

माशब्रा [ ४.४.२.१६-१८ ]—आहरत्यध्वर्युरग्नीधे भक्षम् । स आह **अध्वर्य उप मा ह्वयस्व** इति। तं न प्रत्युपह्वयेत० तं वै प्रत्येवोपह्वयेत० अथ संप्रेष्यति **अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा संख्यापयोन्नेतर्होतुश्चमसमनून्नय सोमं मातिरीरिचः** इति। यद्यग्निष्टोमः स्यात्० स बिभ्रदेवैतत्पात्रमग्नीन्नेष्टुरुपस्थमासीदति० ॥

काशब्रा [ ५.४.४.१३ ] ≡ माशब्रा

ऐब्रा [ ६.३ ]—नेष्टुरुपस्थ आसीनो भक्षयति० ॥

गोब्रा [ २.४.५ ]—नेष्टुरुपस्थे धिष्ण्यान्ते वासीनो भक्षयति० ॥

---

१. वैश्वदेवाग्निमारुतशस्त्रयोरन्तरेण।

## १६०. अग्निष्टोमस्तोत्रम्[1]

### [ रथन्तरपृष्ठे ][2]

### यज्ञायज्ञीयम्

साकौसं [ १.१.१.४.१; २.१.१.२० ]—

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शꣳसिषम् ॥
ऊर्जो नपातꣳ स हिनायमस्मयुर्दाशेम हव्यदातये ।
भुवद्वाजेष्ववीता भुवद्वृध उत त्राता तनूनाम् ॥

१ ४ ३ ४ १ ४ ५ १ २ २ १ १ २ १ – १
हुम् । यज्ञा५यज्ञा३वो३ग्नायाइ ॥ ओमाइराइरा चा३दाक्षा३साइ प्रप्री३म्व यम-
२ २ १ २ २ १ ^ ३ १ १ १ १
मृतञ्जाता२३वाहुम्माइ ॥ दा३साम् ॥ प्रायम्मित्रꣳसुशा२ꣳसिषाउ ॥ वा३४५ ॥
१ २ १ २ १ २ २१ १२ – १ २ २१
[१] प्रायाम् ॥ ओम्माइत्रꣳसू३शाꣳसी३षामूर्जोनपा२तꣳसहिनाया२३माहुम्माइ ॥
२ १ १२ ^ ३ २ १ १ १ १ २ १ २
स्मा३यूः ॥ दाशेमहव्यदा२तयाउ ॥ वा३४५ ॥ [२] *दाशे ॥ ओम्माहाव्या३-
१ २ २ १ २ – १ २ २ १ २ २ १ २ २ ^ ३ २
दाता३याइभुवद्वाजे२ष्ववीताभू२३वाहुम्माइ ॥ वा३र्द्धाइ ॥ ऊतत्राताततनू२नाउ ॥
१ १,१
वा३४५ ॥ [ ३ ] [ ग्राम १.२.२५; ऊह १.१.१४ ]

तांत्रा [ १.९.१२ ]—

[3]ओजोऽसि पितृभ्यस्त्वा पितृञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत ॥

[ ८.६–७ ]—यद्यज्ञायज्ञीयेन स्तुवन्ति० ऐरं कृत्वोद्गेयम्० प्रप्री वयम् इति वक्तव्यं० तुशꣳसिषम् इति वक्तव्यं सुशꣳसिषम् इति वा० अक्षरेणान्ततः प्रतिष्ठाप्यम्० कथमिव

१. एकविंशस्तोमम् । २. बृहत्पृष्ठेऽप्येवमेव । ३. ब्रह्मा अनेन स्तोत्रमनुमन्त्रयते ।

१ २ १ २ २ २ २ १ २ २ १ –
* तृतीयपर्याये उत्तमावृत्तौ विशेषः—दाशे ॥ ओम्महव्यदातयेभुवद्वाजाइभू३वाद्वा३जेषुवा२-
१ २ २ १ २ २ १ २ २ ^ ३ १ १ १ १
वीताभू२३वाहुम्माइ ॥ वा३र्द्धाइ ॥ ऊतत्राताततनू२नाउ ॥ वा३४५म् ॥

यज्ञायज्ञीयं गेयमित्याहुः । यथानड्वान् प्रस्नावयमाण इत्थमिव चेत्थमिव चेति० परिक्रामतेवो-द्गेयम्० प्रावृतेनोद्गेयम्० आ कर्णाभ्यां प्रावृत्यम्० अपः पश्चात् पत्न्य उपसृजन्ति० दक्षिणानूरूनमिषिञ्चन्ति० महदिव प्रत्यूह्यम्० उद्गात्रा पत्नीः संख्यापयन्ति० हिंकारं प्रति संख्यापयन्ति० आ तृतीयायाः संख्यापयन्ति० ॥

## [ रथन्तरपृष्ठे ]

### यज्ञायज्ञीयम्

साजैसं [ ३.५.१२–१३ ]—

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शꣳसिषः ॥
ऊर्जो नपातꣳ स हिनायमस्मयुर्दाशेम हव्यदातये ।
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥

ओहम् । यज्ञायज्ञावोऽग्नायायि ॥ ओयिराइहा॰चा॰दाक्षासा॰यिपोप्रि वाया-
ण ण फ ख ण टटट क टटट च श क
ओअमृता॰ओवाहम्मायि ॥ दायिवाम् ॥ ओयाम्मायित्रान्नूशाꣳ॰सिषाबु ॥ वा ॥ [१]
च च्यक पशच प्र त त स स सट कट क ख
प्रायाम् ॥ *ओंभ॰भू॰भभी॰भा॰भूभोभुभाभꣳ॰ सह्यायुमाहम्मायि ॥ स्मायुः ॥ ओशेमा-
ट टटट क टटट च श च कपशच श्य त त स स
हाव्यादातयाबु ॥ वा ॥ [२] आशे ॥ ओहाव्यादाता॰या॰यिभुवाद्वाजेष्ववित-
सट कटकश ख ट टटट क टटट कच चश
भुवाद्धम्मायि ॥ वार्धाः ॥ ओतात्राता॰वाहूनआबु ॥ वा ॥ [३]
पशच श्य त त स स सट कट क ख

जैब्रा [ १.१६९–१७८ ]—वयोयज्ञावोअग्नये इति प्रस्तौति । ओयिरायिराच-दक्षसेपोप्रिवयममृतञ्जातोवाहोयिविदोस इति प्रतिहरति । यज्ञा इति द्वे अक्षरे गिरा इति द्वे पोप्रिम् इति द्वे० षडक्षरस्तूष्णीꣳ॰शꣳ॰सः० अप उपनिधाय स्तुवन्ति० ऊरुभ्यां पत्न्युपप्रवर्तयति० नग्नमिवोरुं कृत्वोपप्रवर्तयति० ताꣳ॰ संख्यापयन्ति० तां प्रतिसमीक्षेत वामी नाम संदृशि विश्वा वामानि धीमहि इति० वृष्णस्ते वृष्ण्यावतो विश्वा रेताꣳ॰सि

* 'ओंभ ... भाभꣳ॰' इति पाठः श्रौतप्रयोगग्रन्थानुसारी । 'द्वितीयां रथन्तरवर्णां करोति' (जैश्रौ १९) इति सूत्रमस्मिन् भकारयुक्पाठे प्रमाणम् । जै० ब्राह्मणे भकारविधायकं वाक्यं न दृश्यते । मुद्रितपाठस्थाने 'ओत्रान्नूशाꣳ॰सिषामूर्जोनुपातं' इति केरलीयसंप्रदायानुसारी पाठः ।

**धीमहि** इतीतरा प्रतिसमीक्षते । तदाहुः प्रावृत उद्गायेत्० अथो आहुर्यावदेव श्रोत्रं तावत् प्रावृत्योद्गायेदिति० अप्रावृत एवोद्गायेदिति० वयो वै यज्ञायज्ञीयम् । स यं कामयेत यजमानꣳ स्वर्गलोकः स्यादिति **वयोयज्ञावोअग्नये** इत्यस्य प्रस्तुयात्० **ओयिराइहाचादाक्षासा** इत्येव ब्रूयात्० **पोर्म्रिवयममृतञ्जातोवा** इति० **हिम्मायिदायिवम्** इति० **म्रियंमित्रंनुशꣳसिषम्** इति० **प्रायांमायित्रानूनूशाꣳसीषामूर्जोनपातꣳसह्यायुमा** इति० **हिंमायास्मायूः । आशेमाहव्यदातायाउवा** इति० **आशेमा हाव्यादातायायिभुवद्वाजेष्ववितामूवार्द्धमायिवार्धा** इति० **उतत्रातावहूनाम्** इति० **उतत्रातात्राग्बहूनाउवा** इति । **गौः** इति हैके दधति० तदाहुर्नैतदाद्रियेत० ॥

[ १.२५१ ][1]—एकविꣳशमग्निष्टोमसाम० ।

[ १.२९७ ]—तस्माद्यज्ञायज्ञीयस्य स्तोत्रे वरं दद्यात् ।

[ १.३४०–३४१ ] यज्ञायज्ञीयं वाव यज्ञस्योधः० तस्य दश कृत्वः प्ररोहति । षट् कृत्वः पूर्वयोश्चतुरुत्तमायै० ॥

तैब्रा [ २.२.८.३ ]—यज्ञायज्ञियस्य स्तोत्रे सप्तहोतारम्[2] ।

**तैसं [ ४.४.१ ]—**

**[3]ओजोऽसि पितृभ्यस्त्वा पितृञ्जिन्व ॥**

[ ३.५.२ ]—ओजोऽसि पितृभ्यस्त्वा पितृञ्जिन्वेत्याह ॥

**[ ३.५.६ ]—**

**विश्वस्य ते विश्वावतो वृष्णियावतस्तवाग्ने वामीरनु संदृशि विश्वा रेताꣳसि धिषीय ॥ अगन् देवान् यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्त्सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा गन्धर्वमा तिष्ठतानु । वातस्य पत्मन्निड ईडिताः ॥**

[ ६.५.८ ]—उद्गात्रा सं ख्यापयति० अप उप प्र वर्तयति० ऊरुणोप प्र वर्तयति० नमंकृत्योरुमुप प्र वर्तयति० ॥

**मैसं [ १.३.१ ]—**

**समुद्रं गन्धर्वेष्ठामन्वातिष्ठत वातस्य पत्मनेडिताः ॥ वामी ते संदृशि विश्वं रेतो धेषीय तव वामीरनु संदृशि ॥**

[ ४.५.४ ]—यत्तर्ह्यप उपप्रवर्तयति० पत्न्युपप्रवर्तयति० ऊरुणोपप्रवर्तयति० दक्षिणेनोरुणोपप्रवर्तयति० अन्तरत उपप्रवर्तयति० अथ यदुदीचीरुपप्रवर्तयति० द्वादशे स्तोत्र उपप्रवर्तयति० ॥

---

१. जैब्रा १.२५४–२५६ इत्यत्रापि ब्राह्मणं द्रष्टव्यम् । २. द्रष्टव्यं श्री. १ पृ. १९५ ।

३. ब्रह्मा प्रसवात् पूर्वम् इमं स्तोमभागं जपति ।

[ २.८.८ ]—

तन्तुना प्रजाभ्यः प्रजा जिन्व ॥

कासं [ ३.९ ]—

समुद्रं गन्धर्वेष्ठामन्वातिष्ठथ वातस्य पत्मन्नीडिताः ॥ वामी ते संदृशि विश्वं रेतो धिषीय तव वाम्यनु संदृशि ॥

[ २६.१ ]—प्रोर्णुवीत यजमानः० आविर्नाभिं कुर्वीताभीव कर्णौ प्रोर्णुवीत० यावन्तः प्रसृप्तारस्स्युस्ते सर्वेऽग्निष्टोममुपगायेयुः० द्वादशाग्निष्टोमस्य स्तोत्राणि० यदग्निष्टोमस्य स्तोत्रेऽप उपप्रवर्तयति० यत् पत्न्यप उपप्रवर्तयति० उद्गात्रा पत्नीं संख्यापयति० ऊरुभ्यां प्रवर्तयति० न दक्षिणा प्रवर्तयेत्० उदीचीः प्राची प्रवर्तयति० ॥

[ १७.७ ]—

ओजोऽसि पितृभ्यस्त्वा पितॄञ्जिन्व ॥

[ ३७.१७ ]—ओजोऽसि पितृभ्यस्त्वा पितॄञ्जिन्वेति ॥

कपिसं [ २.१६ ]—

समुद्रं .... मन्वातिष्ठत .... पत्मनेडिताः ॥ वाम्या ते .... ॥

[ ४०.४ ] ≡ कासं २६.१

[ २६.६ ] ≡ कासं १७.७

वामासं—

प्रजापतिर्वृषासि रेतोधा रेतो मयि धेहि प्रजापतेस्ते वृष्णो रेतोधसो रेतोधामशीय ॥ ८.१०

माशब्रा [ ४.४.२.१८ ]—उदानयति नेष्टा पत्नीम् । तामुद्गात्रा संख्यापयति प्रजापतिर्वृषासि रेतोधा रेतो मयि धेहि .... इति० ॥

वाकासं [ ८.६.४ ] ≡ वामासं

काशब्रा [ ५.४.४.१३ ] ≡ माशब्रा

गोब्रा [ २.२.१३–१४ ]—ओजोऽसि पितृभ्यस्त्वा इति० बृहस्पतये स्तुत इति० ओ३म् स्वर्जनत् इति तृतीयसवने० ॥

[ १.५.१५ ]—अथ संस्थिते संस्थिते सवने वाचयति मयि भर्गो मयि महो मयि यशो मयि सर्वम् इति० ॥

# १६१. आग्निमारुतशस्त्रम्

ऋसं—

अध्वर्यो शोशोंसावो३म् [1]वैश्वानराय पृथुपाजसे विपः। रत्ना विधन्त धरुणेषु गातवो३म् अग्निर्हि देवाँ अमृतो दुवस्यति। अथा धर्माणि सनता न दूदुषो३म् अन्तर्दूतो रोदसी दस्म ईयते। होता निषत्तो मनुषः पुरोहितो३म् क्षयं बृहन्तं परि भूषति द्युभिः। देवेभिरग्निरिषितो धियावसो३म् केतुं यज्ञानां विदथस्य साधनम्। विप्रासो अग्निं महयन्त चित्तिभो३म् अपांसि यस्मिन्नधि संदधुर्गिरः। तस्मिन्त्सुम्नानि यजमान आ चको३म् पिता यज्ञानामसुरो विपश्चिताम्। विमानमग्निर्वयुनं च वाघतो३म् आ विवेश रोदसी भूरिवर्पसा। पुरुप्रियो भन्दते धामभिः कवो३म् चन्द्रमग्निं चन्द्ररथं हरिव्रतम्। वैश्वानरमप्सुषदं स्वर्विदो३म् विगाहं तूर्णिं तविषीभिरावृतम्। भूर्णिं देवास इह सुश्रियं दधो३म् अग्निर्देवेभिर्मनुषश्च जन्तुभिः। तन्वानो यज्ञं पुरुपेशसं धियो३म् रथीरन्तरीयते साधदिष्टिभिः। जीरो दमूना अभिशस्तिचातनो३म् अग्ने जरस्व स्वपत्य आयुनि। ऊर्जा पिन्वस्व समिषो दिदीहि नो३म् वयांसि जिन्व बृहतश्च जागृवे। उशिग्देवानामसि सुक्रतुर्विपो३म् विश्पतिं यह्वमतिथिं नरः सदा। यन्तारं धीनामुशिजं च वाघतो३म् अध्वराणां चेतनं जातवेदसम्। प्र शंसन्ति नमसा जूतिभिर्वृधो३म् विभावा देवः सुरणः परि क्षितीः। अग्निर्बभूव शवसा सुमद्रथो३म् तस्य व्रतानि भूरिपोषिणो वयम्। उप भूषेम दम आ सुवृक्तिभो३म् वैश्वानर तव धामान्या चके। येभिः स्वर्विदभवो विचक्षणो३म् जात आपृणो भुवनानि रोदसी। अग्ने ता विश्वा परिभूरसि त्मनो३म् (३.३.१–१०)

शोंसावो३म् [2]अग्निर्वैश्वानरः सोमस्य मत्सत्। विश्वेषां देवानां समित्। अजस्रं दैव्यं ज्योतिः। यो विड्भ्यो मानुषीभ्योऽदीदेत्। द्युषु पूर्वासु दिद्युतानः। अजर उषसामनीके। आ यो द्यां भात्या पृथिवीम्। उर्वन्तरिक्षम्। ज्योतिषा यज्ञाय शर्म यंसत्। अग्निर्वैश्वानर इह श्रवदिह सोमस्य मत्सत्। प्रेमां देवो देवहूतिमवतु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवतु। चित्रश्चित्राभिरूतिभिः। श्रवद्ब्रह्माण्यावसा गमो३म् (खिलम् ५.५.८)

वैश्वानरस्य दंसनाभ्यो बृहत्। अरिणादेकः स्वपस्यया कवो३म् उभा पितरा

---

1. आद्यां विग्राहं त्रिः शंसेत्। निविद्धानीयं सूक्तम्। २. निविद्।

महयन्नजायत। अग्निर्द्यावापृथिवी भूरिरेतसो३म् (३.३.११) शौंसावो३म् शं नः करत्यर्वते सुगं मेषाय मेष्ये। नृभ्यो नारिभ्यो गवो३म् (१.४३.६) शौंसावो३म् [1]प्रत्वक्षसः प्रतवसो विरप्शिनः। अनानता अविथुरा ऋजीषिणो३म् जुष्टतमासो नृतमासो अञ्जिभिः। व्यानज्रे के चिदुस्राइव स्तृभो३म् उपह्वरेषु यदचिध्वं ययिम्। वयइव मरुतः केन चित् पथो३म् श्चोतन्ति कोशा उप वो रथेष्वा। घृतमुक्षता मधुवर्णमर्चतो३म् प्रैषामज्मेषु विथुरेव रेजते। भूमिर्यामेषु यद्ध युञ्जते शुभो३म् ते क्रीळयो धुनयो भ्राजदृष्टयः। स्वयं महित्वं पनयन्त धूतयो३म् स हि स्वसृत् पृषदश्वो युवा गणः। अया ईशानस्तविषीभिरावृतो३म् असि सत्य ऋणयावा-नेद्यः। अस्या धियः प्राविताथा वृषा गणो३म् पितुः प्रत्नस्य जन्मना वदामसि। सोमस्य जिह्वा प्र जिगाति चक्षसो३म् यदीमिन्द्रं शम्यृक्वाण आशत। आदि-न्नामानि यज्ञियानि दधिरो३म् (१.८७.१–५)

शौंसावो३म् [2]मरुतो देवाः सोमस्य मत्सन्। सुष्टुभः स्वर्काः। अर्क-स्तुभो बृहद्वयसः। शूरा अनाधृष्टरथाः। त्वेषासः पृश्निमातरः। शुभ्रा हिरण्यखादयः। तवसो भन्ददिष्टयः। नभस्या वर्षनिर्णिजः। मरुतो देवा इह श्रवन्निह सोमस्य मत्सन्। प्रेमां देवा देवहूतिमवन्तु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवन्तु। चित्राश्चित्राभिरूतिभिः। श्रवन् ब्रह्माण्यावसा गमो३म् (खिलम् ५.५.९)

श्रियसे कं भानुभिः सं मिमिक्षिरे। ते रश्मिभिस्त ऋक्वभिः सुखादयो३म् ते वाशीमन्त इष्मिणो अभीरवः। विद्रे प्रियस्य मारुतस्य धाम्नो३म् (१.८७.६) शौंसावो३म् [3]यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे। प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषो३म् प्रियं मित्रं न शंसिषमूर्जो नपातं स हिनायमस्मयुः। दाशेम हव्यदातयो३म् दाशेम हव्यदातये भुवद् वाजेष्वविता भुवद्वृधः। उत त्राता तनूनो३म् (६.४८.१–२) शौंसावो३म् [4]देवो वो द्रविणोदाः पूर्णां विवष्ट्या-सिचम्। उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहतो३म् आदिद्वो देव ओहते तं होतारमध्वरस्य प्रचेतसम्। वह्निं देवा अकृण्वतो३म् वह्निं देवा अकृण्वत दधाति रत्नं विधते सुवीर्यम्। अग्निर्जनाय दाशुषो३म् (७.१६.११-१२) शौंसावो३म् [5]प्र तव्यसीं नव्यसीं धीतिमग्नये। वाचो मतिं सहसः सूनवे भरो३म्

---

१. निविद्धानीयं सूक्तम्। २. निवित्। ३. स्तोत्रियः प्रगाथः। ४. अनुरूपः प्रगाथः। ५. निविद्धानीयं सूक्तम्।

अपां नपाद्यो वसुभिः सह प्रियः। होता पृथिव्यां न्यसीदद्दत्वियो३म् स जायमानः परमे व्योमनि। आविरग्निरभवन्मातरिश्वनो३म् अस्य क्रत्वा समिधानस्य मज्मना। प्र द्यावा शोचिः पृथिवी अरोचयो३म् अस्य त्वेषा अजरा अस्य भानवः। सुसंदृशः सुप्रतीकस्य सुद्युतो३म् भात्वक्षसो अत्यक्तुर्न सिन्धवः। अग्ने रेजन्ते अससन्तो अजरो३म् यमेरिरे भृगवो विश्ववेदसम्। नाभा पृथिव्या भुवनस्य मज्मनो३म् अग्निं तं गीर्भिर्हिनुहि स्व आ दमे। य एको वस्वो वरुणो न राजतो३म् न यो वराय मरुतामिव स्वनः। सेनेव सृष्टा दिव्या यथाशनो३म् अग्निर्जम्भैस्तिगितैरत्ति भर्वति। योधो न शत्रून्त्स वना न्यृञ्जतो३म् कुविन्नो अग्निरुचथस्य वीरसत्। वसुष्कुविद् वसुभिः काममावरो३म् चोदः कुवित् तुतुज्यात् सातये धियः। शुचिप्रतीकं तमया धिया गृणो३म् घृतप्रतीकं व ऋतस्य धूर्षदम्। अग्निं मित्रं न समिधान ऋञ्जतो३म् इन्धानो अक्रो विदथेषु दीद्यत्। शुक्रवर्णामुदु नो यंसते धियो३म् (१.१४३.१–७)

शोंसावो३म् [1]अग्निर्जातवेदाः सोमस्य मत्सत्। स्वनीकश्चित्रभानुः। अप्रोषिवान् गृहपतिस्तिरस्तमांसि दर्शतः। घृताहवन ईड्यः। बहुलवर्त्मास्तृतयज्वा। प्रतीत्या शत्रून् जेतापराजितः। अग्ने जातवेदोऽभि द्युम्नमभि सह आयच्छस्व। तुशो अप्तुशः। समिद्धारं स्तोतारमंहसस्पाहि। अग्निर्जातवेदा इह श्रवदिह सोमस्य मत्सत्। प्रेमां देवो देवहूतिमवतु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवतु। चित्रश्चित्राभिरूतिभिः। श्रवद्ब्रह्माण्यावसा गमो३म् (खिलम् ५.५.१०)

अप्रयुच्छन्नप्रयुच्छद्भिरग्ने। शिवेभिर्नः पायुभिः पाहि शग्मो३म् अदब्धेभिरदृपितेभिरिष्टे। अनिमिषद्भिः परि पाहि नो जो३म् (१.१४३.८) शोंसावो३म् आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसो३म् यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरो३म् तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नो३म् (१०.९.१–३) शोंसावो३म् उत नोऽहिर्बुध्न्यः शृणोतु। अज एकपात् पृथिवी समुद्रो३म् विश्वे देवा ऋतावृधो हुवानाः। स्तुता मन्त्राः कविशस्ता अवन्तो३म् (६.५०.१४) शोंसावो३म् देवानां पत्नीरुशतीरवन्तु नः। प्रावन्तु नस्तुजये वाजसातयो३म् याः पार्थिवासो या अपामपि व्रते। ता नो देवीः सुहवाः शर्म यच्छतो३म् उत ग्ना व्यन्तु देवपत्नीः। इन्द्राण्य-

१. निविद्।

माप्यश्विनी रो३म् आ रोदसी वरुणानी शृणोतु। व्यन्तु देवीर्य ऋतुर्जनीनो३म् (५.४६.७-८) शोंसावो३म् राकामहं सुहवां सुष्टुती हुवे। शृणोतु नः सुभगा बोधतु त्मनो३म् सीव्यत्वपः सूच्याच्छिद्यमानया। ददातु वीरं शतदायमुक्थ्यो३म् यास्ते राके सुमतयः सुपेशसः। याभिर्ददासि दाशुषे वसूनो३म् ताभिर्नो अद्य सुमना उपागहि। सहस्रपोषं सुभगे रराणो३म् (२.३२.४-५) शोंसावो३म् पावीरवी कन्या चित्रायुः। सरस्वती वीरपत्नी धियं धो३म् ग्नाभिरच्छिद्रं शरणं सजोषाः। दुराधर्षं गृणते शर्म यंसो३म् (६.४९.७) शोंसावो३म् इमं यम प्रस्तरमा हि सीद। अङ्गिरोभिः पितृभिः संविदानो३म् आ त्वा मन्त्राः कविशस्ता वहन्तु। एना राजन् हविषा मादयस्वो३म् (१०.१४.४) शोंसावो३म् मातली कव्यैर्यमो अङ्गिरोभिः। बृहस्पतिर्ऋक्कभिर्वावृधानो३म् याँश्च देवा वावृधुर्ये च देवान्। स्वाहान्ये स्वधयान्ये मदन्तो३म् (१०.१४.३) शोंसावो३म् उदीरतामवर उत् परासः। उन्मध्यमाः पितरः सोम्यासो३म् असुं य ईयुरवृका ऋतज्ञाः। ते नोऽवन्तु पितरो हवेषो३म् (१०.१५.१) शोंसावो३म् आहं पितॄन्त्सुविदत्राँ अवित्सि। नपातं च विक्रमणं च विष्णो३म् बर्हिषदो ये स्वधया सुतस्य। भजन्त पित्वस्त इहागमिष्ठो३म् (१०.१५.३) शोंसावो३म् इदं पितृभ्यो नमो अस्त्वद्य। ये पूर्वासो य उपरास ईयो३म् ये पार्थिवे रजस्या निषत्ताः। ये वा नूनं सुवृजनासु विक्षो३म् (१०.१५.२) शोंसावो३म् स्वादुष्किलायं मधुमाँ उतायम्। तीव्रः किलायं रसवाँ उतायो३म् उतो न्वस्य पपिवांसमिन्द्रम्। न कश्चन सहत आहवेषो३म् अयं स्वादुरिह मदिष्ठ आस। यस्येन्द्रो वृत्रहत्ये ममादो३म् पुरूणि यश्च्यौत्ना शम्बरस्य। वि नवतिं नव च देह्यो हो३म् शोंसावो३म् अयं मे पीत उदियर्ति वाचम्। अयं मनीषामुशतीमजीगो३म् अयं षळुर्वीरमिमीत धीरः। न याभ्यो भुवनं कच्चनारो३म् अयं स यो वरिमाणं पृथिव्याः। वर्ष्माणं दिवो अकृणोदयं सो३म् अयं पीयूषं तिसृषु प्रवत्सु। सोमो दाधारोर्वन्तरिक्षो३म् (६.४७.१-४) शोंसावो३म् ययोरोजसा स्कभिता रजांसि। वीर्येभिर्वीरतमा शविष्ठो३म् या पत्येते अप्रतीता सहोभिः। विष्णू अगन्वरुणा पूर्वहूतो३म् (आश्वश्रौ ५.२०.६) शोंसावो३म् विष्णोर्नु कं वीर्याणि प्रवोचम्। यः पार्थिवानि विममे रजांसो३म् यो अस्कभायदुत्तरं सधस्थम्। विचक्रमाणस्त्रेधोरुगायो३म् (१.१५४.१) शोंसावो३म् तन्तुं तन्वन् रजसो भानुमन्विहि। ज्योतिष्मतः पथो रक्ष धिया कृतो३म् अनुल्बणं वयत जोगुवामपः। मनुर्भव जनया दैव्यं जनो३म् (१०.५३.६) शोंसावो३म् [1]एवा नं

१. परिधानीया।

इन्द्रो मघवा विरप्शी। करत् सत्या चर्षणीधृदनर्वो३म् त्वं राजा जनुषां धेह्यस्मे। अधि श्रवो माहिनं यज्जरित्रो३म् (४.१७.२०) ॥

'अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः।
पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः ॥ ५.६०.८

ऐब्रा [३.३५–३८]—वैश्वानरीयेणाग्निमारुतं प्रतिपद्यते० अनवानं प्रथमामृचं शंस्तव्या० अधीयन्नुपहन्यादन्यं विवक्तारमिच्छेत्० तस्मादाग्निमारुते न व्युच्यम्। एष्टव्यो विवक्ता। मारुतं शंसति० यज्ञायज्ञा वो अग्नये, देवो वो द्रविणोदा इति मध्ये योनिं चानुरूपं च शंसति० यदु द्वे सूक्ते शस्त्वा शंसति० जातवेदस्यं शंसति० उपरिष्टाज्जातवेदस्यस्यापोहिष्ठीयं शंसति० तच्छमयतेव शंस्तव्यम्० एष ह वा अहिर्बुध्न्यो यदग्निर्गार्हपत्यः० देवानां पत्नीः शंसति। अनूचीरग्निं गृहपतिम्० तदाहू राकां पूर्वां शंसेत्० तत्तन्नादृत्यम्। देवानामेव पत्नीः पूर्वाः शंसेत्० राकां शंसति० पावीरवीं शंसति० तदाहुर्यामीं पूर्वां शंसे३त् पित्र्या३मिति। यामीमेव पूर्वां शंसेत् इमं यम प्रस्तरमा हि सीदेति० मातली कव्यैर्यमो अङ्गिरोभिरिति काव्यानामनूचीं शंसति० उदीरतामवर उत्परास इति पित्र्याः शंसति० आहं पितॄन्त्सुविदत्राँ अवित्सीति द्वितीयां शंसति० इदं पितृभ्यो नमो अस्त्वद्येति नमस्कारवतीमन्ततः शंसति० तदाहुर्व्याहावं पित्र्याः शंसे३द् अव्याहावा३मिति। व्याहावमेव शंसेत्० स्वादुष्किलायं मधुमाँ उतायमितीन्द्रस्यैन्द्रीरनुपानीयाः शंसति० एतासु मद्वत्प्रतिगीर्यम्। ययोरोजसा स्कभिता रजांसीति वैष्णुवारुणीमृचं शंसति० विष्णोर्नु कं वीर्याणि प्र वोचमिति वैष्णवीं शंसति० तन्तुं तन्वन् रजसो भानुमन्विहीति प्राजापत्यां शंसति० एवा न इन्द्रो मघवा विरप्शीत्युत्तमया परिदधाति० तदुपस्पृशन् भूमिं परिदध्यात्० अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिरित्याग्निमारुतमुक्थं शस्त्वाग्निमारुत्या यजति० ॥

[३.३४]—यैषा रौद्री शस्यते 'आ ते पितर्मरुतां सुम्नमेतु मा नः सूर्यस्य संदृशो युयोथाः। त्वं नो वीरो अर्वति क्षमेथाः इति ब्रूयान्न अभि न[३] इति०प्र जायेमहि रुद्रिय प्रजाभिः इति ब्रूयान्न रुद्र[४] इति० तदु खलु शं नः करतीत्येव शंसेत्० ॥

ऋसं—

अध्वर्यो शोशोंसावो३म् वैश्वानराय .... त्मनो३म् (३.३.१-१०)

शोंसावो३म् 'अग्निर्वैश्वानरः सोमस्य मत्सत्। विश्वेषां देवानां समित्। अजस्रं दैव्यं ज्योतिः। यो विड्भ्यो मानुषीभ्यो दीदेत्। द्युषु पूर्वासु दिद्युतानः। अजर उषसामनीके। आ यो द्यां भात्या पृथिवीम्।

१. याज्या। २. द्रष्टव्यताम् ऋ. २.३३.१। ३. 'त्वं नो वीरो' इत्येव ब्रूयान्न 'अभि नो वीरो' इति। ४. 'प्र जायेमहि रुद्रिय' इत्येव ब्रूयान्न 'प्र जायेमहि रुद्र' इति। ५. निविद्।

ओर्वन्तरिक्षम्। ज्योतिषा यज्ञियाय शर्म यंसत्। अग्निर्वैश्वानर इह श्रवदिह सोमस्य मत्सत्। प्रेमां देवो देवहूतिमवतु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवतु। चित्रश्चित्राभिरूतिभिः। श्रवद् ब्रह्माण्यावसा गमो३म् ( शांश्रौ ८.२२.१ )

वैश्वानरस्य .... भूरिरेतसो३म् ( ३.३.११ ) शोंसावो३म् आ ते पितर्मरुतां सुम्नमेतु। मा नः सूर्यस्य संदृशो युयोथो३म् अभि नो वीरो अर्वति क्षमेत। प्र जायेमहि रुद्र प्रजाभो३म् ( २.३३.१ ) शोंसावो३म् प्रत्वक्षसः .... दधिरो३म् ( १.८७.१-५ )

शोंसावो३म् [1]मरुतो देवाः सोमस्य मत्सन्। सुष्टुभः स्वर्काः। अर्कस्तुभो बृहद्वयसः। नभस्या वर्षनिर्णिजः। त्वेषासः पृश्निमातरः। शुभ्रा हिरण्यखादयः। तवसो भन्ददिष्टयः। शूरा अनाधृष्टरथाः। मरुतो देवा इह श्रवन्निह सोमस्य मत्सन्। प्रेमां देवो देवहूतिमवन्तु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवन्तु। चित्राश्चित्राभिरूतिभिः। श्रवन् ब्रह्माण्यावसा गमो३म्। ( शांश्रौ ८.२३.१ )

श्रियसे कं....धाम्नो३म् (१.८७.६) शोंसावो३म् [2]यज्ञायज्ञा वो .... तनूनो३म् ( ६.४८.१-२ ) शोंसावो३म् [3]देवो वो....दाशुषो३म् (७.१६.११-१२) शोंसावो३म् प्र तव्यसीं .... धियो३म् ( १.१४३.१-७ )

शोंसावो३म [1]अग्निर्जातवेदाः सोमस्य मत्सत्। स्वनीकश्चित्रभानुः। अप्रोषिवान् गृहपतिः। तिरस्तमांसि दर्शतः। घृताहवन ईड्यः। बहुलवर्मास्तृतयज्वा। प्रतीत्या शत्रूञ्जेतापराजितः। अग्ने जातवेदोऽभि द्युम्नमभि सह आयच्छस्व। स्तुशोऽस्तुशः। समेद्धारमंहसः पाहि। अग्निर्जातवेदा इह श्रवदिह सोमस्य मत्सत्। प्रेमां देवो देवहूतिमवतु देव्या धिया। प्रेदं ब्रह्म प्रेदं क्षत्रम्। प्रेमं सुन्वन्तं यजमानमवतु। चित्रश्चित्राभिरूतिभिः। श्रवद् ब्रह्माण्यावसा गमो३म् ( शांश्रौ ८.२४.१ )

अप्रयुच्छन् .... नो जो३म् (१.१४३.८) शोंसावो३म् आपो हि ष्ठा....नो३म् ( १०.९.१-३ ) शोंसावो३म् उत नो .... अवन्तो३म् ( ६.५०.१४ ) शोंसावो३म् देवानां पत्नी .... जनीनो३म् ( ५.४६.७-८ ) शोंसावो३म् राकामहं .... रराणो३म्

१. निविद्। २. स्तोत्रियः प्रगाथः। ३. अनुरूपः प्रगाथः।

(२.३२.४-५) शोंसावो३म् अविदद्दक्षं मित्रो नवीयान्। पपानो देवेभ्यो वस्यो अचो३म् ससवान्स्तौलाभिर्धौतरीभिः। उरुष्या पायुरभवत् सखिभ्यो३म् ऋतस्य पथि वेधा अपायि। श्रिये मनांसि देवासो अक्रो३म् दधानो नाम महो वचोभिः। वपुर्दृशये वेन्यो व्यावो३म् द्युमत्तमं दक्षं धेह्यस्मे। सेधा जनानां पूर्वीरँरातो३म् वर्षीयो वयः कृणुहि शचीभिः। धनस्य सातावस्माँ अविड्ढो३म् (६.४४.७-९) शोंसावो३म् उदीरतामवर .... हवेषो३म् इदं पितृभ्यो .... सुविक्षो३म् आहं पितॄन् .... इहागमिष्ठो३म् (१०.१५.१-३) शोंसावो३म् इमं यम....मादयस्वो३म् (१०.१४.४) मातली कव्यैर्....मदन्तो३म् (१०.१४.३) अङ्गिरोभिरा गहि यज्ञियेभिः। यम वैरूपैरिह मादयस्वो३म् विवस्वन्तं हुवे यः पिता ते। अस्मिन् यज्ञे बर्हिष्या निषद्यो३म् (१०.१४.५) शोंसावो३म् स्वादुष्किलायं .... कचनारो३म् (६.४७.१-३) शोंसावो३म् ययोरोजसा .... पूर्वहूतो३म् (शांश्रौ ३.२०.४) शोंसावो३म् विष्णोर्नु कं.... त्रेधोरुगायो३म् (१.१५४.१) शोंसावो३म् तन्तुं तन्वन्....जनो३म् (१०.५३.६) शोंसावो३म् [1]एवा न इन्द्रो.... यज्जरित्रो३म् (४.१७.२०)॥

[2]अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः ....॥ ५.६०.८

शांब्रा [१६.७–९]—एकविंशत्याहावमाग्निमारुतं शंसति० वैश्वानरीयं शंसति० रौद्रीं शंसति० मारुतं शंसति०अथ यज्ञायज्ञीयस्य स्तोत्रियानुरूपौ० जातवेदसीयं शंसति तेनाग्निमारुतमित्याख्यायते तस्मादेनदग्न्यग्रं शंसेत्० आपोदेवत्याः शंसति० एना आरतं शंसेत्० अहिर्बुध्न्यं शंसति० देवानां च पत्नी राकां च शंसति० अक्षरपङ्क्तयः शंसति० पैत्रीश्च यामीश्च शंसति० स्वादुष्किलीयाः शंसति० तास्वध्वर्युर्मद्वत्प्रत्यागृणाति० वैष्णुवारुणीं शंसति० वैष्णवीं चाग्नेयीं च शंसति० ऐन्द्या परिदधाति० एष वा अग्निष्टोमः। एष वा उ कामाय कामायाह्रियते। यो ह वा एतेनानिष्ट्वाथान्येन यजते गर्तपत्यमेव तद्धीयते प्र वा मीयत इति ह स्माह। स वा एषोऽग्निष्टोम आज्यप्रभृत्याग्निमारुतान्तः। यच्छस्यं त्रीणि षष्टिशतान्यृचां संपद्यन्ते० अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिरित्युक्थं शस्त्वा यजत्याग्निमारुत्या० जगत्या०मद्वत्या० अनुवषट्करोति०॥

तैसं [३.२.८]—

द्यावापृथिवीभ्यां त्वा परि गृह्णामि॥ विश्वे त्वा देवा वैश्वानराः प्र च्यावयन्तु॥ दिवि देवान् दृꣳहान्तरिक्षे वयाꣳसि पृथिव्यां पार्थिवान्॥ ध्रुवं ध्रुवेण हविषाव सोमं नयामसि। यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत्॥ यथा न इन्द्र इद्विशः केवलीः सर्वाः समनसः करत्। यथा नः सर्वा इद्दिशोऽस्माकं केवलीरसन्॥

१. परिधानीया। २. याज्या।

[ ६.५.२ ]—यद्धोतृचमसे ध्रुवमवनयति० पुरस्तादुक्थस्यावनीय इत्याहुः० मध्यतोऽवनीय इत्याहुः० उत्तरार्धेऽवनीय इत्याहुः० वैश्वदेव्यामृचि शस्यमानायामव नयति० ॥

**मैसं [ १.३.१५ ]—**

**ध्रुवं ध्रुवेण हविषा वः सोमं नयामसि ।**
**यथा नः सर्वा इज्जनः संगमे सुमना असत् ।**
**दिवि दिव्यान् दृंहान्तरिक्षे अन्तरिक्ष्यान् पृथिव्यां पार्थिवान् ॥**

[४.६.६]—परिधानीयायां शस्यमानायामवनयति० होतुश्चमसेऽवनयति० तद् व्यङ्ग्य एव **ध्रुवं त्वा ध्रुवक्षितिममुमास्थानाच्च्यावयामि** इति[1]० तदभिमृश्यो दिवि दिव्यान् दृँहान्तरिक्षे अन्तरिक्ष्यान् पृथिव्यां पार्थिवानिति० द्वादशे स्तोत्रेऽवनयति० सकृच्छस्तायां मध्यतोऽवनीयः० **स्वयंभूरसि श्रेष्ठो रश्मिः प्रियो देवानां संसदनीयः । तं त्वा सुभव देवा अभिसंविशन्तु । आयुर्धा असि ध्रुवायुर्मे धेहि** इति० **वर्चोधा असि ध्रुव वर्चो मे धेहि** इति० **इषोऽसि त्वेषोऽसि नृम्णोऽसि व्रतोऽसि दक्षोऽसि तस्य त इषस्य त्वेषस्य नृम्णस्य व्रतस्य दक्षस्य भक्षीय स्वस्य चारणस्य च शूद्रस्य चार्यस्य च यथा त्वं सूर्यासि विश्वदर्शत एवमहँ विश्वदर्शतो भूयासम्** इति० ॥

**वामासं—**

**ध्रुवं ध्रुवेण मनसा वाचा सोममवनयामि ।**
**अथा न इन्द्र इद्विशोऽसपत्नाः समनसस्करत् ॥ ७.२५**

माशब्रा [ ४.२.४.६–१२; २२-२३ ]—तं न स्तूयमानेऽवनयेत्० तं शस्यमानेऽवनयति० तमवनयति० सोऽवनयति ध्रुवं ध्रुवेण मनसा वाचा सोममवनयामीति । **गृह्णामि** इति वा । अथा न इन्द्र इद्विशोऽसपत्नाः समनसस्करदिति० ॥

**वाकासं [ ७.१०.३ ] = वामासं**

काशब्रा [ ५.२.४.३-४;१५-१६ ] = माशब्रा

**अशौसं—**

**ध्रुवं ध्रुवेण हविषाव सोमं नयामसि ।**
**यथा न इन्द्रः केवलीर्विशः संमनसस्करत् ॥ ७.९९.१**

**अपैसं—**

**ध्रुवं ध्रुवेण हविषाभि सोमं मृशामसि । अत्रा त.... बलिहृतस्करत् ॥१९.६.४**

---

१. यदि ध्रुवग्रहणसमयेऽभिचारार्थं ध्रुवं प्रवर्तयेत् ( द्रष्टव्यं पृ. २६७ ) तर्हि इदानीं ध्रुवस्य होतृचमसेऽवनयनात् पूर्वम् अनेन मन्त्रेण ध्रुवं स्थानात् प्रच्यावयेत् ।

## १६२. होतृचमसप्रचारः

तांब्रा [ १.६.५ ]—

[1]ऋतस्य त्वा देव स्तोमपदे विष्णोर्धामनि विमुञ्चाम्येतत्त्वं देव स्तोमानवकरमगन्नशीमहि वयं प्रतिष्ठाम् ॥

अपैसं—

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।
मरुद्भिरग्न आ गहि ॥ ६.१७१ ॥

अशौसं—

इदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त ।
ते सौधन्वनाः स्वरानशानाः स्विष्टिं नो अभि वस्यो नयन्तु ॥ ६.४७.३
ऋभुरसि जगच्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं वहास्य यज्ञस्योदृचि स्वाहा ॥ ६.४८.२
यथा सोमस्तृतीये सवन ऋभूणां भवति प्रियः ।
एवा म ऋभवो वर्च आत्मनि ध्रियताम् ॥ ९.१.१३

अपैसं—

इदं तृतीयं सवनं .... चमसं समैरयन् । सौधन्वना अमृतमानशानाः स्विष्टिं नोऽभि वस्यो नयाथ ॥ १९.४३.१२ ॥ स्वरोऽसि गयोऽसि जगच्छन्दा .... सं पारय ॥ १९.४४.६ ॥ यथा सोमस्तृतीयसवन .... ॥ १६.३३.३

### यज्ञपुच्छम्

## १६३. अनूयाजादिहारियोजनग्रहप्रचारान्तम्

तैसं [ १.४.२८ ]—

हरिरसि हारियोजनो हर्योः स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य हरिवन्तं ग्रहं गृह्णामि ॥ हरीः स्थ हर्योर्धानाः॥ सहसोमा इन्द्राय स्वाहा ॥

[ ६.५.९ ]—धानाभिर्हारियोजनं श्रीणाति० बह्वीभिः श्रीणाति० प्रहृत्य परिधीञ्जुहोति० उन्नेता जुहोति० शीर्षन्नधिनिधाय जुहोति० विक्रम्य जुहोति० मनसा सं बाधते०॥

[1] अनेन मन्त्रेण सर्वे उद्गातारः स्तोमं विमुञ्चन्ति ।

मैसं [ १.३.३० ]—

उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिवान् हर्योः स्थाता स्तुतस्तोमस्य ते देव सोम शस्तोक्थस्येष्टयजुषः । हरिवतो हारियोजनस्य हरिवन्तं ग्रहꣳ राध्यासम् ॥ हर्योर्धाना हरिवतीः सहसोमा इन्द्राय ॥

[ ४.७.४ ]—[१]एतं द्रोणकलशेन जुहोति० यत् सꣳस्थिते प्रहृतेषु परिधिषु जुहोति० न वषट्करोति० एतमुन्नेता जुहोति० यद्धानाभिः श्रीणाति० ॥

कासं [ ४.११ ]—

उपयामगृहीतोऽसि हरिरसि हारियोजनो हर्योस्स्थाता हरिभ्यां त्वा स्तुतस्तोमस्य ते देव सोम शस्तोक्थस्येष्टयजुषो हरिवतो ग्रहमृध्यासम् ॥ हर्योस्स्थ हरिवतो धानास्सहसोमा इन्द्रस्य ॥

[ २८.९ ]—यद्धाना आवपति० यत् प्रहृतेषु परिधिषु हारियोजनं जुहोति० यदेतमतिरिक्तं सोमं जुहोति० द्रोणकलशेनोन्नेता हारियोजनं जुहोति० ॥

कपिसं [ ३.९ ] ≡ कासं ४.११

[ ४४.९ ] ≡ कासं २८.९

वामासं—

उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यां त्वा ॥ हर्योर्धानाः स्थ सहसोमा इन्द्राय ॥ ८.११

माशब्रा [४.२.२.५]—एतस्माद्[२] अन्ततो हारियोजनं ग्रहं गृह्णाति० ॥

[ ४.४.३.१-९ ]—अथ हारियोजनं गृह्णाति० तं वा अतिरिक्तं गृह्णाति। यदा हि शंयोराहाथैनं गृह्णाति० द्रोणकलशे गृह्णाति० तं वा अपुरोरुक्कं गृह्णाति० अथातो गृह्णात्येव उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यां त्वेति० अथ धाना आवपति हर्योर्धानाः स्थ सहसोमा इन्द्रायेति० तस्योन्नेताश्रावयति० मूर्धन्नभिनिधायाश्रावयति० अथाह धानासोमेभ्योऽनुब्रूहि इति। आश्राव्याह धानासोमान् प्रस्थितान् प्रेष्य इति। वषट्कृते जुहोत्यनुवषट्कृते ॥

वाकासं [ ७.१.१ ] ≡ वामासं

काशब्रा [ ५.२.२.३ ] ≡ माशब्रा ४.२.२.५

[ ५.५.१.१-८ ] ≡ माशब्रा ४.४.३.१-९

१. हारियोजनम्। २. आग्रयणात्।

अशौसं—

आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
मा त्वा के चिन्नि यमन् विं न पाशिनोऽति धन्वेव ताँ इहि ॥ ७.१२२.१

## १६४. हारियोजनग्रहप्रचारान्तं हौत्रम्

ऋसं—

[1]अग्निमद्य होतारमवृणीतायं सुन्वन् यजमानः पचन् पक्तीः पचन् पुरोळाशान् गृह्णन्नग्नय आज्यं गृह्णन् सोमायाज्यं बध्नन्नग्नये च्छागं सुन्वन्निन्द्राय सोमं भृज्जन् हरिभ्यां धानाः सूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नये च्छागेनेन्द्राय सोमेन हरिभ्यां धानाभिरघत्त मेदस्तः प्रति पचताग्रभीदवीवृधत पुरोळाशैरपादिन्द्रः सोमं गवाशिरं यवाशिरं तीव्रान्तं बहुरमध्यमुपोत्था मदा व्यश्रोद्भिमदाँ आनळवीवृधताङ्गूषैस्त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं सुन्वन् यजमानो बहुभ्य आ संगतेभ्यः । एष मे देवेषु वसु वार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्स्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ॥ खिलम् ५.७.४ (ङ)

ऋसं—

[2]अपाः सोममस्तमिन्द्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते ।
यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥ ३.५३.६

---

१. सूक्तवाकप्रैषः । प्रैषानन्तरं होत्रा आश्वलायनोक्तरीत्या (१.९.१; ५.३.१०–११) अग्रे निर्दिष्टप्रकारेण सूक्तवाकः पठनीयः– "इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि । उपश्रुती दिवस्पृथिव्योरोमन्वती तेऽस्मिन् यज्ञे यजमान द्यावापृथिवी स्ताम् । शंगयी जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ । वृष्टिद्यावा रीत्यापा शंभुवौ मयोभुवा ऊर्जस्वती पयस्वती सूपचरणा च स्वधिचरणा च तयोराविदि । अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । सोम इदं हविरजुषतावीवृधत महो ज्यायोऽकृत । अग्निरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । वनस्पतिरिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । इन्द्रो वसुमानिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । इन्द्रो रुद्रवानिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । इन्द्र आदित्यवानृभुमान् विभुमान् वाजवान् बृहस्पतिवान् विश्वदेव्यायानिदं हविरजुषतावीवृधत महो ज्यायोऽकृत । देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽक्रत । अग्निर्होत्रेणेदं हविरजुषतावीवृधत महो ज्यायोऽकृत । अस्यामृधेद्धोत्रायां देवंगमायामाशास्तेऽयं यजमानः अमुकशर्मा ( व्यावहारिकं नामोच्चार्य नाक्षत्रनामापि उच्चारणीयम् )। आयुराशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सजातवनस्यामाशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करणमाशास्ते दिव्यं धामाशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाशास्ते तदस्यात्तदृध्यात्तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्यो वनते वयमग्नेर्मानुषाः । इष्टं च वित्तं चोभे च नो द्यावापृथिवी अंहसस्पातामेह गतिर्वामस्येदं नमो देवेभ्यः '।

२. हारियोजनग्रहस्य पुरोनुवाक्या ।

[1]तिष्ठा सु कं मघवन् मा परा गाः सोमस्य नु त्वा सुषुतस्य यक्षि ।
पितुर्न पुत्रः सिचमा रभे त इन्द्र स्वादिष्ठया गिरा शचीवः ॥ ३.५३.२

[2]धानासोमानामिन्द्राद्धि च पिब च बब्धां ते हरी धाना उप ऋजीषं जिघ्रतामा रथचर्षणे सिञ्चस्व यत्त्वा पृच्छाद्विषं पत्नीः क्वामीमदथा इत्यस्मिन् सुन्वति यजमाने तस्मै किमरास्थाः । सुष्ठु सुवीर्यं यज्ञस्यागुर उदचं यद्यदचीकमतोत्तत्तथाभूद्धोतर्यज ॥
खिलम् ५.७.४ (च)

[3]युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे गभस्त्योः ।
उत् त्वा सुतासो रभसा अमन्दिषुः पूषण्वान् वज्रिन्त्समु पत्न्यामदः॥१.८२.६

शांब्रा [ १८.६ ]—अथ हारियोजनेन चरन्ति० त्रिष्टुभं हारियोजनस्य पुरोनुवाक्यामनूच्य जगत्या यजति० मद्वती याज्या० अनुवषट्करोति० ॥

[ ३०.११ ]—अथ हारियोजनेन चरन्ति तस्योक्तं ब्राह्मणम् । त्रिष्टुभं हारियोजनस्य पुरोनुवाक्यामन्वाह तस्या उक्तं ब्राह्मणम् । अथ यदतिप्रैषस्य पुरोनुवाक्यामन्वाह० अथ यदतिप्रैषमाह० ॥

## १६५. धानाभक्षणादि

तैसं [ १.४.४४ ]—

धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपतिर्नो अग्निः ।
त्वष्टा विष्णुः प्रजया सꣳरराणो यजमानाय द्रविणं दधातु ॥
समिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳ स्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानाꣳ सुमत्या यज्ञियानाम् ॥
सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा नो अत्र वरिवः कृणोत्वनु मार्ष्टु तनुवो यद्विलिष्टम् ॥
यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगयाडृधगुताशमिष्ठाः प्रजानन् यज्ञमुपयाहि विद्वान् ॥
स्वगा वो देवाः सदनमकर्म य आजग्म सवनेदं जुषाणाः ।
जक्षिवाꣳसः पपिवाꣳसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥
यानावह उशतो देव देवान् तान् प्रेरय स्वे अग्ने सधस्थे ।
वहमाना भरमाणा हवीꣳषि वसुं घर्मं दिवमा तिष्ठतानु ॥

1. शाङ्खा०मते पुरोनुवाक्या। २. प्रैषः। ३. याज्या।

यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा ॥

एष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीरः स्वाहा ॥

देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः ॥

[ ६.३.४ ]—सꣳस्थिते सोमे प्र प्रस्तरꣳ हरति जुहोति स्वरुम्० ॥

[ ६.६.२ ]—समिष्टयजूꣳषि जुहोति० नव जुहोति० षड् ऋग्मियाणि जुहोति० त्रीणि यजूꣳषि० ॥

[ ६.५.९ ]—उन्नेतर्युपहवमिच्छन्ते० उत्तरवेद्यां नि वपति० ॥

[ ३.२.५ ]—

अपाम सोमममृता अभूमादर्श्म ज्योतिरविदाम देवान् ।
किमस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥
यन्म आत्मनो मिन्दा भूदग्निस्तत् पुनराहार्जातवेदा विचर्षणिः ॥
पुनरग्निश्चक्षुरदात् पुनरिन्द्रो बृहस्पतिः ।
पुनर्मे अश्विना युवं चक्षुरा धत्तमक्ष्योः ॥

इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि ॥ आपूर्याः स्थामा पूरयत प्रजया च धनेन च ॥ एतत् ते तत ये च त्वामनु ॥ एतत् ते पितामह [ये च त्वामनु ॥ एतत् ते] प्रपितामह ये च त्वामनु ॥ अत्र पितरो यथाभागं मन्दध्वम् ॥ नमो वः पितरो रसाय [ पितरो नमो वो य एतस्मिँल्लोके स्थ युष्माꣳस्तेऽनु येऽस्मिँल्लोके मां तेऽनु य एतस्मिँल्लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिँल्लोकेऽहं तेषां वसिष्ठो भूयासम् ॥ ] नमो वः पितरः शुष्माय [ पितरो नमो वो य एतस्मिँल्लोके स्थ युष्माꣳस्तेऽनु येऽस्मिँल्लोके मां तेऽनु य एतस्मिँल्लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिँल्लोकेऽहं तेषां वसिष्ठो भूयासम् ॥ ] नमोः वः पितरो जीवाय [ पितरो नमो वो य एतस्मिँल्लोके स्थ युष्माꣳस्तेऽनु येऽस्मिँल्लोके मां तेऽनु य एतस्मिँल्लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिँल्लोकेऽहं तेषां वसिष्ठो भूयासम् ॥] नमो वः पितरः स्वधायै [ पितरो नमो वो य एतस्मिँल्लोके स्थ युष्माꣳस्तेऽनु येऽस्मिँल्लोके मां तेऽनु य एतस्मिँल्लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिँल्लोकेऽहं तेषां वसिष्ठो भूयासम् ॥] नमो वः पितरो मन्यवे [पितरो नमो वो य एतस्मिँल्लोके स्थ युष्माꣳस्तेऽनु येऽस्मिँल्लोके मां तेऽनु य एतस्मिँल्लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिँल्लोकेऽहं तेषां वसिष्ठो भूयासम्॥] नमोः वः पितरो घोराय पितरो नमो वो य एतस्मिँल्लोके स्थ युष्माꣳस्ते-

ऽनु येऽस्मिल्लँलोके मां तेऽनु य एतस्मिल्लँलोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिल्लँलोकेऽहं तेषां वसिष्ठो भूयासम् ॥

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम् ॥

देवकृतस्यैनसोऽवयजनमसि ॥ मनुष्यकृतस्यैनसोऽवयजनमसि ॥ पितृकृतस्यैनसोऽवयजनमसि ॥ अप्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो अश्वसनिर्यो गोसनिस्तस्य ते पितृभिर्भक्षंकृतस्योपहूतस्योपहूतो भक्षयामि ॥

तैब्रा [ २.२.८.३ ]—पितृयज्ञे [1]षड्ढोतारम् ॥

मैसं [ १.३.३० ]—

रय्यै त्वा पोषाय त्वा ॥

[ ४.७.४ ]—संदश्य रय्यै त्वा पोषाय त्वेत्युपवपति० ।

[ १.३.३८ ]—

धाता रातिः सवितेदं जुषन्तां प्रजापतिर्वरुणो मित्रो अग्निः ।
विष्णुस्त्वष्टा प्रजया सꣳरराणो यजमानाय द्रविणं दधातु ॥
समिन्द्र नो मनसा नेषि गोभिः सꣳ सूरिभिर्हरिवः सꣳ स्वस्त्या ।
सं ब्रह्मणा देवकृतꣳ यदस्ति सं देवानाꣳ सुमतौ यज्ञियानाम् ॥
सꣳ वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनु नो मार्ष्टु तन्वो यद्विरिष्टम् ॥
सुगा वो देवाः सदना कृणोमि य आजग्मेदꣳ सवनं जुषाणाः ।
यक्षिवाꣳसः पपिवाꣳसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥
यानावह उशतो देव देवाꣳस्तान् प्रेरय स्वे अग्ने सधस्थे ।
वहमाना भरमाणा हवीꣳष्यसुं घर्मं दिवमातिष्ठतानु ॥
यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगयाडृधगुताशमिष्ट विद्वान् प्रजानन्नुपयाहि यज्ञम् ॥
यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वꣳ योनिं गच्छ स्वाहा ।
एष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीरस्तेन संभव भ्राजं गच्छ ॥

देवा गातुविदो गातुꣳ वित्त्वा गातुमित मनसस्पते सुधात्विमꣳ यज्ञं दिवि देवेषु वाते धा स्वाहा ॥

---

१. द्रष्टव्यं श्रौ १ पृ. १२५ ।

[ ४.८.४ ]—षड्ऋग्म्याणि भवन्ति० त्रीणि यजूꣳषि० नवैतानि समिष्टयजूꣳषि जुहोति० ऊर्ध्वस्तिष्ठन् जुहोति० यं द्विष्यात् तस्य तूष्णीं तिष्ठन् जुहुयात्० संततं जुहोति० अविच्छिन्दन् जुहोति० यं द्विष्यात् तस्य विच्छिन्द्यात्० समानेन विग्राहं जुहोति० ॥

**कासं [ ४.१२ ]—**

**धाता रातिस्सवितेदं जुषन्तां प्रजापतिर्वरुणो मित्रो अग्निः ।**
**त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधातु ॥**
**समिन्द्र नो मनसा नेषि गोभिस्सं सूरिभिर्हरिवस्सं स्वस्त्या ।**
**सं ब्रह्मणा देवकृतं यदस्ति सं देवानां सुमत्या यज्ञियानाम् ॥**
**सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन ।**
**त्वष्टा सुदत्रो विदधातु रायोऽनु नो मार्ष्टु तन्वो यद्विलिष्टम् ॥**
**सुगा वो देवास्सदनेदमस्तु य आजग्म सवनेदं जुषाणाः ।**
**जक्षिवांसः पपिवांसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥**
**यानावह उशतो देव देवांस्तान् प्रेरय स्वे अग्ने सधस्थे ।**
**वहमाना भरमाणा हवीꣳष्यसुं घर्मं दिवमातिष्ठतानु ॥**
**यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।**
**ऋधगयाडृधगुताशमिष्ट विद्वान् प्रजानन्नुपयाहि यज्ञम् ॥**
**यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा ॥**
**एष ते यज्ञो यज्ञपते सहसूक्तवाकस्सुवीरस्स्वाहा ॥**
**देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं देव यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः ॥**

**[ ३.३ ]—**

**द्यां ते धूमो गच्छत्वन्तरिक्षमर्चिः पृथिवीं भस्म स्वाहा ॥**

[ २८.९ ]—उन्नेतर्युपहवमिच्छन्ते० समिव गृह्णीयात् निरिव धयेत्० उत्तरवेद्यां निवपति० ॥

[ २९.३ ]—प्राणा वै संस्थितयजूꣳषि नवैतानि यजूꣳषि० संततं जुहोति० यं कामयेत प्रमीयेतेति नव कृत्वो गृहीत्वा यजुष्केणैकैकं जुहुयात्० षडेतान्यृग्म्याणि० त्रीणि यजूꣳषि०॥

[ २६.६ ]—यत् स्वरुं जुहोति० ॥

**कपिसं [ ३.१० ]**

**---॥ समिन्द्र णो मनसा .... ॥ --- ॥ सुगा वो .... य आजग्मुः .... ॥ ---॥ यदद्य .... न्नुपयाहि साधु ॥ ---॥**

[२.१०] = कासं ३.३

[४१.४] = कासं २६.६

[४४.९] = कासं २८.९

[४५.४] = कासं २९.३

वामासं—

यस्ते अश्वसनिर्भक्षो यो गोसनिस्तस्य त इष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्योपहूतस्योपहूतो भक्षयामि ।। देवकृतस्यैनसोऽवयजनमसि ।। मनुष्यकृतस्यैनसोऽवयजनमसि ।। पितृकृतस्यैनसोऽवयजनमसि ।। आत्मकृतस्यैनसोऽवयजनमसि ।। एनस एनसोऽवयजनमसि ।। यच्चाहमेनो विद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसोऽवयजनमसि ।।

सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ।।
समिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन् सꣳ स्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानाꣳ सुमतौ यज्ञियानाꣳ स्वाहा ।।
सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन ।
त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् ।।
धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधिपा देवो अग्निः ।
त्वष्टा विष्णुः प्रजया सꣳरराणा यजमानाय द्रविणं दधात स्वाहा ।।
सुगा वो देवाः सदना अकर्म य आजग्मेदꣳ सवनं जुषाणाः ।
भरमाणा वहमाना हवीꣳष्यस्मे धत्त वसवो वसूनि स्वाहा ।।
याँ आवह उशतो देव देवांस्तान् प्रेरय स्वे अग्ने सधस्थे ।
जक्षिवाꣳसः पपिवाꣳसश्च विश्वेऽसुं घर्मꣳ स्वरातिष्ठतानु स्वाहा ।।
वयꣳ हि त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगया ऋधगुताशमिष्ठाः प्रजानन् यज्ञमुपयाहि विद्वान्त्स्वाहा ।।

देवा गातुविदो गातुं वित्त्वा गातुमित । मनसस्पत इमं देव यज्ञꣳ स्वाहा वाते धाः ।। यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा ।। एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहा ।। ८.१२-२२

माशब्रा [४.४.३.९–१५]—अथ धाना विलिप्सन्ते भक्षाय । तद्धैके होत्रे द्रोणकलशं प्रतिपराहरन्ति वषट्कर्तुर्भक्ष इति वदन्तः । तदु तथा न कुर्यात्० ता न दद्भिः

खादेयुः० प्राणैरेव भक्षयन्ति यस्ते अश्वसनिर्भक्षो यो गोसनिः .... इति० ता नाग्नौ प्रकिरेयुः० उत्तरवेदावेव निवपन्ति० अथ पूर्णपात्रान्त्समवमृशन्ति। यानेकेऽप्सुषोमा इत्याचक्षते० ते समवमृशन्ति सं वर्चसा पयसा .... यद्विलिष्टमिति० अथ मुखान्युपस्पृशन्ते० ॥

[ ४.४.४ ]—तानि वा एतानि नव समिष्टयजूँषि जुहोति० स जुहोति समिन्द्र णो मनसा नेषि गोभिः .... इति० ॥

वाकासं [ ८.७.२ ]—

यस्ते देव सोमाश्वसनिर्भक्षो....शस्तोक्थस्योपहूत उपहूतस्य भक्षयामि ॥---॥

[ ९.३.१–८ ]—

समिन्द्र णो .... यज्ञियानाम् ॥ सं वर्चसा .... ॥ धाता रातिः .... सꣳ रराणो .... दधातु ॥ सुगा वो .... वसूनि ॥ याँ आवह .... तिष्ठतानु ॥ वयꣳ हि .... विद्वान् ॥ देवा गातुविदो गातुमित्वा .... ॥ यज्ञ यज्ञं .... ॥

काशब्रा [ ५.५.१.९-१३ ]— अथ धाना विलिप्सन्ते भक्षाय। यथाचमसं वा अन्यान् भक्षान् भक्षयन्ति --- ॥

[ ५.५.२ ] ≡ माशब्रा [ ४.४.४ ]

ऋसं—

[1]यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेळनम्।
अरावा यो नो अभि दुच्छुनायते तस्मिन् तदेनो वसवो निधेतन॥१०.३७.१२
[2]अच्छायं वो मरुतः श्लोक एत्वच्छा विष्णुं निषिक्तपामवोभिः।
उत प्रजायै गृणते वयो धुर्यूयं पात स्वस्तिभिः सदा नः ॥ ७.३६.९
[3]दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।
सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत् ॥ ४.३९.६
[4]यथा ह त्यद्वसवो गौर्यं चित् पदि षिताममुञ्चता यजत्राः।
एवो ष्वस्मन्मुञ्चता व्यंहः प्र तार्यग्ने प्रतरं न आयुः ॥ ४.१२.६
[5]स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ।
अव यक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो न एधि ॥ ४.१.५

---

१. होता होत्रकाश्चाहवनीये यजुर्भिः पञ्च शकलान्यभ्याधाय अनया षष्ठं शकलमभ्यादधति। २. चमसिनः स्वस्वचमसस्था अपो भूमौ निषिक्ता अभिमृशन्ति। ३. आग्नीध्रीये दधिद्रप्सान् प्राश्नन्ति। ४. शाङ्खा०मते धिष्ण्यावेक्षणमन्त्रः। ५. शाङ्खा०मते एताभिस्तिसृभिः प्रायश्चित्ताहुतीर्जुह्वति।

त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळोऽव यासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत् ॥ ४.१.४
तदस्तु मित्रावरुणा तदग्ने शं योरस्मभ्यमिदमस्तु शस्तम् ।
अशीमहि गाधमुत प्रतिष्ठां नमो दिवे बृहते सादनाय ॥ ५.४७.७
[1]शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥
ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् ॥
अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशंभुवम् ॥
आपः पृणीत भेषजं वरूथं तन्वे मम । ज्योक् च सूर्यं दृशे ॥१०.९.४-७

शांश्रा [ १८.६-८ ]—तासां भूयिष्ठा धानानामाददीत० ता आहवनीयस्य भस्मान्ते निवपन्ति० अथ शाकलाञ्जुह्वति० अथ सव्यावृतोऽप्सु सोमानुपपरायन्ति। तानि हान्त-र्वेद्यासादयन्ति० व्यवदधति दर्भपिञ्जूलानि० ता वैष्णव्यर्चा निनयन्ति० अथ प्राणान् संमृशन्ति० भक्षपरिधीन् कुर्वते० ॥

तांश्रा [ १.६.६-१७ ]—

सोमेहानु मेहि सोम सह सदस इन्द्रियेण ॥ सुभूरसि श्रेष्ठो रश्मिर्देवानाꣳ सꣳसद् देवानां यातुर्यया तन्वा ब्रह्म जिन्वसि तया मा जिन्व तया मा जनय प्रकाशं मा कुरु ॥ अपां पुष्पमस्योषधीनाꣳ रस इन्द्रस्य प्रियतमꣳ हविः स्वाहा ॥ हारियोज-नस्य ते देव सोमेष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य योऽश्वसनिर्गोसनिर्भक्षस्तस्यो-पहूत उपहूतस्य भक्षयामि ॥ देवकृतस्यैनसोऽवयजनमसि ॥ पितृकृतस्यैनसोऽव-यजनमसि ॥ मनुष्यकृतस्यैनसोऽवयजनमसि ॥ अस्मत्कृतस्यैनसोऽवयजनमसि ॥ यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि ॥ यत् स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि ॥ यद्विद्वाꣳसश्चाविद्वाꣳसश्चैनश्चकृम तस्यावयजनमसि । एनस एनसोऽवयजनमसि ॥ अप्सु धौतस्य ते देव सोम नृभिः सुतस्य ॥ मधुमन्तं भक्षं करोमि ॥ शमद्भ्य ओषधीभ्यः ॥ काम कामं म आवर्तय ॥ ऊर्गस्यूर्जं मयि धेहि । प्राण सोमपीथे मे जागृहि ॥

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र न आयूꣳषि तारिषत् ॥

अशौसं—

यद्देवा देवहेडनं देवासश्चकृमा वयम् ।
आदित्यास्तस्मान्नो यूयमृतस्यर्तेन मुञ्चत ॥

---

१. शाङ्खा०मते मार्जनार्थाः ।

ऋतस्यर्तेनादित्या यजत्रा मुञ्चतेह नः ।
यज्ञं यद्यज्ञवाहसः शिक्षन्तो नोपशेकिम ॥
मेदस्वता यजमानाः स्रुचाज्यानि जुह्वतः ।
अकामा विश्वे वो देवाः शिक्षन्तो नोप शेकिम ॥ ६.११४
यद्विद्वांसो यदविद्वांस एनांसि चकृमा वयम् ।
यूयं नस्तस्मान्मुञ्चत विश्वे देवाः सजोषसः ॥
यदि जाग्रद्यदि स्वपन्नेन एनस्योऽकरम् ।
भूतं मा तस्माद्भव्यं च द्रुपदादिव मुञ्चताम् ॥
द्रुपदादिव मुमुचानः स्विन्नः स्नात्वा मलादिव ।
पूतं पवित्रेणेवाज्यं विश्वे शुम्भन्तु मैनसः ॥ ६.११५
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत् ॥ २०.१३७.३

अपैसं—

यद्देवा .... ॥ ऋतस्य ऋतेना .... । यज्ञैर्यद् .... शिक्षन्त उपारिम ॥ मेदस्वता .... स्रुचाज्येन .... ॥ यद्विद्वांसो .... । तस्मान्नो ह्यमुञ्चत .... ॥ यदि जाग्रदजत् स्वपन्नेन .... ॥ द्रुपदादिव .... सिन्धौ .... विश्वान् मुञ्चन्तु मैनसः ॥ १६.४९.१–६

गोब्रा [ २.४.६–७ ]—अथ शाकलाञ्जुहुति० द्रोणकलशे धाना भवन्ति। तासां हस्तैरादधति० ता आहवनीयस्य भस्मान्ते निवपन्ति० अथ सव्यावृतोऽप्सु सोमानाप्याययन्ति। तान् ह्यान्तर्वेद्यां सादयन्ति० चात्वालादपरेणाध्वर्युश्चमसानद्भिः पूरयित्वोदीचः प्रणिधाय हरितानि तृणानि व्यवदधाति० ता वैष्णव्यर्चा निनयन्ति० अथ यदेनं दध्नाभिहुत्यावभृथ-मुपहरन्ति० ॥

## १६६. धानाभक्षणाद्यौद्गात्रम्

### यज्ञसारथि[1]

साजैसं [ १.२९.४ ]—

बण्महं असि सूर्य बडादित्य महं असि।
महस्ते सतो महिमा पनिष्टम मह्ना देव महं असि ॥

1. संस्थितेऽहनि प्रस्तोतृसाम। त्रिर्गायेत्।

एवाण्मा। हंयासी सुरिया इळा। प्राहावुवाआथा। वाळादित्यम'हंय सायिइळा।
कि क टिच च्य श्य क्य क्य क्य टिच च्य श श्य

हरीहांवुवाआथा। माहस्तेसतो महिमापनायिष्टमाइळा। मतीहांवुवाआथा। मह्लादेव-
कि क्य क्य किच क्य टश्य यि श्य कि क्य क्य क्य

म'हंयसायिइळा ॥ [ आरण्य २.६.२ ]
टीच च श श्य

## १६७. अवभृथोपक्रमः

तैसं [ १.४.४५ ]—

उरु॰ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥
शतं ते राजन् भिषजः सहस्रमुर्वी गम्भीरा सुमतिष्टे अस्तु।
बाधस्व द्वेषो निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥
अभिष्ठितो वरुणस्य पाशः ॥

[ ६.५.१० ]—अवभृथमव यन्ति परा स्थालीरस्यन्त्युद्वायव्यानि हरन्ति० ॥

[६.६.३]—अवभृथयजू॰षि जुहोति० अपोऽवभृथमवैति० साम्ना प्रस्तोतान्ववैति० त्रिर्निधनमुपैति० पुरुषः पुरुषो निधनमुपैति० ॥

[ ३.३.८ ]—

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिमम् ॥

[ ३.३.८ ]—आयुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यन् जुहुयात्० ॥

तैब्रा [ ३.७.९.७ ]—

[1]नमो रुद्राय वास्तोष्पतये। आयने विद्रवणे। उद्याने यत् परायणे।
आवर्तने विवर्तने। यो गोपायति त॰ हुवे ॥

मैसं [ १.३.३९ ]—

उरु॰ हि राजा वरुणश्चकार .... ॥

शतं ते राजन् भिषजः सहस्रमुर्वी गभीरा सुमतिष्टे अस्तु।
आरे बाधस्व निर्ऋतिं पराचैः कृतं चिदेनः प्रमुमुग्ध्यस्मत् ॥

१. अवभृथगमनकाले होममन्त्र इति सायणभाष्यम्।

[ ४.८.५ ]—अतिरिक्तं वा एतद्यज्ञस्य यदृजीषः० तस्मात् तेनावभृथमभ्यवयन्ति । अपोऽभ्यवयन्ति० स्थावरा अभ्यवयन्ति० अथ यद्दक्षिणावभृथमभ्यवयन्ति० उरुं हि राजा वरुणश्चकारेति चात्वालात् प्रयन्तो वदन्ति० शतं ते राजन् भिषजः सहस्रमित्यपः परादस्य वदन्ति० ॥

**कासं [ ४.१३ ]—**

**उरुँ हि राजा वरुणश्चकार .... । शतं ते राजन् भिषजस्सहस्रमुर्वी .... ॥**

[ २९.३ ]—यज्ञस्यैतदतिरिच्यते यदृजीषम् । यदौदुम्बरी यदधिषवणे तेनापोऽवभृथमवयन्ति० न वहन्तीष्वभ्यवेयुः० नोदञ्चोऽभ्यवेयुः० न दक्षिणा० उदञ्चः प्राञ्चोऽभ्यवयन्ति० स्थावरास्ववयन्ति० ॥

**कपिसं [ ३.११ ] ≡ कासं**

[ ४५.४ ] ≡ कासं

**वामासं—**

**माहिर्भूर्मा पृदाकुः ॥ उरुँ हि राजा वरुणश्चकार .... ॥ ८.२३**

माशब्रा [ ४.४.५.१–६; ९–१० ]—स वा अवभृथमभ्यवैति० स हुत्वैव समिष्टयजूंषि यदेतमभितो भवति तेन चात्वालमुपसमायन्ति । स कृष्णविषाणां च मेखलां च चात्वाले प्रास्यति माहिर्भूर्मा पृदाकुरिति० अथ वाचयति उरुँ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ .... इति० अथाह **साम गाय** इति । **साम ब्रूहि** इति वा । **गाय** इति त्वेव ब्रूयात्० त उदञ्चो निष्क्रामन्ति जघनेन चात्वालमग्रेणाग्नीध्रम् । स यस्यां ततो दिश्यापो भवन्ति तद् यन्ति । स यः स्यन्दमानानाँ स्थावरो ह्रदः स्यात् तमपोऽभ्यवेयात्० यद्यु ता न विन्देदपि या एव काश्चापोऽभ्यवेयात् ॥

**वाकासं [ ९.४.१ ] ≡ वामासं**

काशब्रा [ ५.५.३.१–५ ] ≡ माशब्रा

ऐब्रा [ १.३ ]—उन्मुच्य कृष्णाजिनमवभृथमभ्यवैति० सहैव वाससाभ्यवैति० ॥

शांब्रा [ १८.९ ]—अवभृथः० वारुणमेककपालं पुरोलाशं निर्वपति० तेऽन्तरेण चात्वालोत्करा उपनिष्क्रामन्ति तद् हि यज्ञस्य तीर्थमाप्नानं नाम० ॥

# १६८. अवभृथौद्गात्रम्

## अवभृथसाम[1]

साकौसं [ १.५.२.३.९ ]—

अग्निꣳ होतारं मन्ये दास्वन्तं वसोः सूनुꣳ सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥

३ २ ^ ३ ५ ३२ ^ ३ ५ ३ २ ^ ३ ५ २ १
अहावोहा २३४ वाः। अहावोहा २३४ वाः। अहावोहा २३४ वाः। अग्निष्टपती।
३ २ ३ ४ ५ २ १ १२ ४ २२ ३ ५ ३ २ ^ ३ ५ ३ १ ^ ३
प्रतिदहती। अग्निꣳ हो। तारम्मा३ न्ये३ दास्वन्तम्। अहावोहा२३४ वाः। अहावोहा
५ ३ २ ^ ३ ५ २ १ ३ २ ३ ४ ५ २ १ २२
२३४ वाः। अहावोहा २३४ वाः। अग्निष्टपती। प्रतिदहती। वसोः। सूनुꣳ सह-
२ ४ २२^३ ५ ३ २ ^ ३ ५ ३ २ ^ ३ ५ ३ २ ^ ३
सोजा३ ता३ वे''दसम्। अहावोहा२३४ वाः। अहावोहा२३४ वाः। अहावोहा२३४
५ २ १ ३ १ ३ ४ ५ २ १ २ ४ १२^३ ५ ३ २ ^ ३ ५
वाः। अग्निष्टपती। प्रतिदहती। विप्राम्। नजा३ ता३ 'वे'दसम्। अहावोहा२३४ वाः।
३ १ ^ ३ ५ ३ २ ^ ३ ५ २ १ ३ १ ३ ४ ५ २ १ २
अहावोहा२३४ वाः। अहावोहा२३४ वाः। अग्निष्टपती। प्रतिदहती। यऊ ध्वया३
४ २^३ ५ ३ २ ^ ३ ५ ३ २ ^ ३ ५ ३ २ ^ ३ ५
सू३ वध्वरः। अहावोहा२३४ वाः। अहावोहा२३४ वाः। अहावोहा२३४ वाः।
२ १ ३ १ ३ ४ ५ २२ १ २२ ४ २२^ ३ ५२ ३ १ ^ ३ ५
अग्निष्टपती। प्रतिदहती। देवो। देवा३ ची३ या कृपा। अहावोहा२३४ वाः।
३ २ ^ ३ ५ ३ २ ^ ३ ५ २ १ ३ २ ३ ४ ५ १ १
अहावोहा२३४ वाः। अहावोहा२३४ वाः। अग्निष्टपती। प्रतिदहती। घृता।
२ २ ४ २२ ^ ३ ५ ३ २ ^ ३ ५ ३ २ ^ ३ ५
स्यविभ्राष्टिमनुशू३ क्रा३ शोचिषः। अहावोहा२३४ वाः। अहावोहा२३४ वाः।

1. अवभृथगमनकाले प्रस्तोतृसाम। त्रिर्गायेत्।

३ १^३ ५ २ १ ३ २३४५ २र१ २र ४ १^३५
अहावोहा२३४ वाः । अग्निष्टपती । प्रतिदहती । आजू । ह्वाना३ स्या३ सर्पिषः ।
३ २^३ ५ ३ २^३ ५ ३ २^३ ५ २ १
अहावोहा२३४ वाः । अहावोहा२३४ वाः । अहावोहा२३४ वाः । अग्निष्टपती ।
३ २३४ २ १२ १ २^३१११११ २ १२ १
प्रतिदहा५ ता६५६ इ । ए३ । विश्व॑ँ समत्रिणन्दहा२३४५ ।.... ए३ । विश्व॑ँ सम-
२^३ ११११ २ १२ १ २^३११११
त्रिणन्दहा२३४५ ।.... ए३ । विश्व॑ँ समत्रिणन्दहा२३४५ ॥ [ ग्राम १२.१.४० ]

षब्रा [ ३.१ ]—तेनान्तरेण प्रतिपद्यन्ते चात्वालं चोत्करं च । एतद्वै देवानां तीर्थं तदेतदृषिराहाप्नानं तीर्थं० तस्मादेतेनैव प्रसुते प्रपद्येतैतेन निष्क्रामेत्० स एतदग्नी रक्षोहा सामापश्यत्० तस्य अहावोहावः इति स्तोभान्तस्तोभति० अग्निष्टपति प्रतिदहति इत्याह० पादाय पादाय स्तोभा अनुवर्तन्ते० विश्वँ समत्रिणं दह विश्वँ समत्रिणं दह इति० तस्य त्रिर्निधनमाहुः० तद्वा अतिच्छन्दःसु भवति० तद्वै सप्तपदासु भवति० तस्य त्रिर्वचन एकविँशतिः पदानि त्रिः सामाह तच्चतुर्विँशतिः० तदाहुः कां दिशमवभृथमभ्यवेयुरिति। प्राञ्चोऽभ्यवेयुः० दक्षिणाभ्यवेयुः० प्रत्यञ्चोऽभ्यवेयुः० उदञ्चोऽभ्यवेयुः० अतो वाव यतमथैव कथमथा चापः स्युस्तदभ्यवेयुः० तदाहुः स्रवन्तीष्वभ्यवेयू३ स्थावरासू३ इति। स्रवन्तीष्वभ्यवेयुः० स्थावरा याः शैवल्यास्तास्वभ्यवेयुः० अतो वात्र यतरथैकतरथा चापः स्युस्तदभ्यवेयुः० ॥

## बार्हस्पत्यम् अग्नेर्वा राक्षोघ्नम्[1]

साजैसं [ १.४८.१० ]—

अग्निँ होतारं मन्ये दास्वन्तं वसोः सूनुँ सहसा जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥

अहावो' अहावो' अहावो' अहावो' अहावोअ' हा' वाः । अग्निष्टपतीप्रतिदहत्याग्नीँ
खि प्य खू श खू श श खिखू ण टयूच
हो' ता' र' म्मान्ये' दा' स्वन्तम् । अहावो अहावो अहावो अहावो अहावो अहावाः। अग्नि-
की की की ख्यखा श च्यका फ खि प्य खू श खू श खिखू ण टयूच
ष्टपतीप्रतिदहतिवसोस्सूनुँ सहसा जाता वे' ' दा' स' म् । अहावो' अहावो' अहावो' अहावो
किकी पख चचा क फ्यफ खि प्य खू श खू

१. अवभृथगमनकाले प्रस्तोतृसाम । त्रिर्गायेत् ।

अहावो'अहा'वाः । अग्निष्टपती'प्रतिदहति'वि'प्रान्नजाता'वे'दा'स'म् । अहावोअहावो
श खिलू ण टयूच चचा खखा चचाक फ्यफ खिप्य

अहावो'अ हावो''अहावो'अहावाः । अग्निष्टपतीप्रतिदह'तिय'ऊ'र्ध्व'या'सू अध्वाराः ।
खूश खू श खिलू ण टयूच चचा ख्यखा चचा फ्यफ

अहावोअहावोअहावोअहावोअहावोअहावाः।अग्निष्टपतीप्रतिदहतिदेवो'दे'वाचि'याकृपा।
खिप्य खूश खू श खिलू ण टयूच कफिकखक च्यचाकफ

अहावो'अहावो''अहावो' अहावो''अहावो'अहा'वाः । अग्निष्टपती'प्रतिदह'ति'घृतास्य
खिप्य खूश खू श खिलू ण टयूच

विभ्राष्टिमानुशुक्रा शोचि'षाः । अहावो'अहावो'अहावो''अहावो''अहावो''अहा'वाः।
कू शखि चचाक फ्यफ खिप्य खूश खू श खिलू ण

अग्निष्टपती'प्रतिदहत्याजुह्वा'नास्या'सर्पी'षाः । अहावो'अहावो'अहावो'अहावो'अहावो
टयूच कतिका ख चचाक फ्यफ खिप्य खूश खू श

अहावो । अग्निष्टप'तीप्रतिद''हा'''तायि । एविश्व६समत्रिणन्दहा ॥[ग्राम २.४.१०.१५]
खिलू ण टीचट्ट तकाखखा त्र श टीत खखू

माशश्रा [ ४.४.५.७–८ ]—आग्नेय्यां गायति० अतिच्छन्दसि गायति० स गायति अग्निष्टपति प्रतिदहत्यहावोऽहावः इति० ॥

काशश्रा [ ५.५.३–४ ] ≡ माशश्रा

## १६९. अवभृथेष्टिः

तैसं [ १.४.४५ ]—

अग्नेरनीकमप आ विवेश। अपां नपात् प्रतिरक्षन्नसुर्यं दमेदमे समिधं यक्ष्यग्ने ॥ प्रति ते जिह्वा घृतमुच्चरण्येत् ॥ समुद्रे ते हृदयमप्स्वन्तः ॥ सं त्वा विशन्त्वोषधी-रुतापः ॥ यज्ञस्य त्वा यज्ञपते हविर्भिः ॥ सूक्तवाके नमोवाके विधेम ॥ अवभृथ निचङ्कुण निचेरुरसि निचङ्कुणाव देवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहि ॥ सुमित्रा न आप ओषधयः सन्तु ॥ दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ देवीराप एष वो गर्भस्तं वः सुप्रीत१ सुभृतमकर्म देवेषु नः सुकृतो ब्रूतात् ॥ प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाशः ॥ एधोऽस्येधिषी-महि॥ समिदसि तेजोऽसि तेजो मयि धेहि॥ अपो अन्वचारिष१ रसेन समसृक्ष्महि। पयस्वा१ अग्न आगमं तं मा स१ सृज वर्चसा ॥

[ ६.६.३ ]— बर्हिरभि जुहोति० अपबर्हिषः प्रयाजान् यजति० आज्यभागौ यजति० वरुणं यजति० अग्नीवरुणौ यजति० अपबर्हिषावनूयाजौ यजति० पशवो वै सोमः। यद्भिन्दूनां भक्षयेत् पशुमान्त्स्यात् वरुणस्त्वेनं गृह्णीयात्। यन्न भक्षयेदपशुः स्यान्नैनं वरुणो गृह्णीयात्। उपस्पृश्यमेव० अप्रतीक्षमा यन्ति० ॥

[ ३.५.६ ]—

इमं वि ष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः।
धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि ॥

तैब्रा [ ३.७.१३ ]—

[1]यत्ते ग्राव्णा चिच्छिदुः सोम राजन्। प्रियाण्यङ्गानि स्वधिता परूꣳषि।
तत्संधत्स्वाज्येनोत वर्धयस्व। अनागसो अधमित् संक्षयेम ॥
यत्ते ग्रावा बाहुच्युतो अचुच्यवुः। नरो यत्ते दुदुहुर्दक्षिणेन।
तत्त आप्यायतां तत्ते। निष्ट्यायतां देव सोम ॥
यत्ते त्वचं बिभिदुर्यच्च योनिम्। यदास्थानात् प्रच्युतो वेनसि त्मना।
त्वया तत्सोम गुप्तमस्तु नः। सा नः संधासत् परमे व्योमन् ॥
अहाच्छरीरं पयसा समेत्य। अन्योऽन्यो भवति वर्णो अस्य।
तस्मिन् वयमुपहूतास्तव स्मः। आ नो भज सदसि विश्वरूपे ॥
नृचक्षाः सोम उत शुश्रुगस्तु। मा नो विहासीद्गिर आवृणानः।
अनागास्तनुवो वावृधानः। आ नो रूपं वहतु जायमानः ॥
उपक्षरन्ति जुह्वो घृतेन। प्रियाण्यङ्गानि तव वर्धयन्तीः।
तस्मै ते सोम नम इद्वषट् च। उप मा राजन्त्सुकृते ह्वयस्व ॥
सं प्राणापानाभ्याꣳ समु चक्षुषा त्वम्। सꣳ श्रोत्रेण गच्छस्व सोम राजन्।
यत्त आस्थितꣳ शमु तत्ते अस्तु। जानीतां नः संगमने पथीनाम् ॥
एतं जानीतात् परमे व्योमन्। वृकाः सधस्था विद रूपमस्य।
यदा गच्छात् पथिभिर्देवयानैः। इष्टापूर्ते कृणुतादाविरस्मै ॥
अरिष्टो राजन्नगदः परेहि। नमस्ते अस्तु चक्षसे रघूयते।
नाकमारोह सह यजमानेन। सूर्यं गच्छतात् परमे व्योमन् ॥
अभूद्देवः सविता वन्द्यो नु नः। इदानीमह्न उपवाच्यो नृभिः।
वि यो रत्ना भजति मानवेभ्यः। श्रेष्ठं नो अत्र द्रविणं यथा दधत् ॥
उप नो मित्रावरुणाविहावतम्। अन्वादीध्याथामिह नः सखाया।
आदित्यानां प्रसितिर्हेतिः। उग्रा शतापाष्ठा घ विषा परि णो वृणक्तु ॥

१. ऋजीषप्रोक्षणमन्त्राः।

आ प्यायस्व [समेतु ते विश्वतः सोम वृष्णियम् । भवा वाजस्य संगथे ॥]
सं ते [पयाँसि समु यन्तु वाजाः । सं वृष्णियान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवाँस्युत्तमानि धिष्व ॥]

[ ३.७.१४ ]—

[1]यद्दिदीक्षे मनसा यच्च वाचा । यद्वा प्राणैश्चक्षुषा यच्च श्रोत्रेण ।
यद्रेतसा मिथुनेनाप्यात्मना । अद्भ्यो लोका दधिरे तेज इन्द्रियम् ।
शुक्रा दीक्षायै तपसो विमोचनीः । आपो विमोक्त्रीर्मयि तेज इन्द्रियम् ॥
यदृचा साम्ना यजुषा । पशूनां चर्मन् हविषा दिदीक्षे ।
यच्छन्दोभिरोषधीभिर्वनस्पतौ । अद्भ्यो लोका दधिरे तेज इन्द्रियम् ।
शुक्रा दीक्षायै तपसो विमोचनीः । आपो विमोक्त्रीर्मयि तेज इन्द्रियम् ॥
येन ब्रह्म येन क्षत्रम् । येनेन्द्राग्नी प्रजापतिः सोमो वरुणो येन राजा ।
विश्वे देवा ऋषयो येन प्राणाः । अद्भ्यो लोका दधिरे तेज इन्द्रियम् ।
शुक्रा दीक्षायै तपसो विमोचनीः । आपो विमोक्त्रीर्मयि तेज इन्द्रियम् ॥

मैसं [ १.३.३९ ]—

अग्नेरनीकमप आविवेशापां नपात् प्रतिरक्षदसुर्यान् ॥
दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत् ॥
समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः ।
यज्ञस्य ते यज्ञपते सूक्तोक्तौ नमोवाके विधेम स्वाहा ॥

अवभृथ निचुङ्कुण निचेरुरसि निचुङ्कुणो गृहं गृहोऽव नो देवैर्देवकृतमेनो यक्ष्यव मर्त्यैर्मर्त्यकृतं चिकित्वानुरोरा नो देव रिषस्पाहि ॥ अप्सु धौतस्य ते देव सोम नृभिः ष्टुतस्य यस्ते गोसनिर्भक्षो यो अश्वसनिस्तस्य ता उपहूता उपहूतस्य भक्षयामि ॥ विचृत्तो वरुणस्य पाशः ॥ प्रत्यस्तो वरुणस्य पाशः ॥ नमो वरुणस्य पाशाय ॥ उन्नेतर्वसीयो ना उन्नयाभि ॥

उदुत्ते मधुमत्तमा गिरः स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ।
कण्वा इव भृगवः सूर्या इव विश्वमिद्धितमानशुः ।
उदेत प्रजामुत वर्चो दधाना युष्मान् राय उत यज्ञा असश्चत ।
गायत्रं छन्दो अनुसंरभध्वमथा स्यात सुरभयो गृहेषु ॥
एधोऽस्येधिषीमहि ॥ समिदसिसमेधिषीमहि ॥

1. त्रिभिर्यजमानोऽञ्जलिनापो विषिञ्चति इति भाष्यम् ।

.... अपो अद्यान्वचारिषꣳ रसेन समसृक्ष्महि।
पयस्वानग्ना आगमं तं मा सꣳसृज वर्चसा ॥

[ ४.८.५ ]—एककपाला भवन्ति० तृणं प्रास्य जुहोति० अपबर्हिषः प्रयाजान् यजति० आज्यभागौ यजति० वरुणꣳ यजति० अग्नीवरुणौ यजति० नानुयाजान् यजति। न सꣳस्थापयन्ति० समुद्रे ते हृदयमप्स्वन्तरिति सह स्रुचोपमारयति० ततो य ऋजीष उत्प्लवते तं भक्षयन्ति० अनपेक्षमाणा आयन्ति० परोगोष्ठं मार्जयन्ते० ॥

कासं [ ४.१३ ]—

अग्नेरनीकमप....घृतमुच्चरण्यत्॥ समुद्रे ते हृदयमप्स्वन्तस्सं त्वा विशन्त्वोषधीरुतापः। यज्ञस्य त्वा यज्ञपते सह सूक्तवाके नमोवाके विधेम स्वाहा॥ अवभृथ निचुङ्कुण निचेरुरसि निचुङ्कुणोऽव नो देवैर्देवकृतमेनो यक्ष्यव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहि॥ देवीराप एष वो गर्भस्तं वस्सुप्रीतं सुभृतमभार्षं देवेषु नस्सुकृतो ब्रूत॥ अभिष्ठितो वरुणस्य पाशोऽवहतो वरुणस्य पाशः॥ अप्सु धौतस्य ते देव सोम नृभिस्स्तुतस्य यो भक्षो गोसनिर्योऽश्वसनिस्तस्य त उपहूत उपहूतस्य भक्षं कृणोमि॥ प्रत्यस्तो वरुणस्य पाशो नमो वरुणस्य पाशाय॥ उदेत प्रजामायुर्वर्चो दधाना अध स्याम सुरभयो गृहेषु। गायत्री छन्दांस्यनु संरभन्तामस्मान् राय उत यज्ञस्सचन्ताम्॥ सुप्रीतश्शिशुरप आविवेश॥ उन्नेतर्वस्योऽभ्युन्नया नः॥ एधोऽस्येधिषीमहि॥ समिदसि समेधिषीमहि॥ तेजोऽसि तेजो मयि धेहि॥

अपो अद्यान्वचारिषं रसेन समगन्महि।
पयस्वानग्न आगमं तं मा संसृज वर्चसा॥
सं माग्ने वर्चसा सृज प्रजया च धनेन च।
विद्युर्मे अस्य देवा इन्द्रो विद्यात् सहर्षिभिः॥

[ २९.३ ]—अग्नेरनीकमप आविवेशेत्याघारमाघारयति० यत्र तृणं वा दारु वा पश्येत् तत् प्रत्याघारयेत्० अपबर्हिषः प्रयाजान् यजति० आज्यभागौ यजति० अथैष वारुणः० एककपालो भवति० अग्नीवरुणाभ्यां समवद्यति० अप्सु धौतस्य ते देव सोमेति बिन्दुमाचामति० ॥

कपिसं [ ३.११ ]—

अग्नेरनीक .... घृतमुच्चरण्येत्॥ समुद्रे ते .... यज्ञपते सूक्तवाके ....॥ अवभृथ निचुम्पुण .... निचुम्पुणो ....॥ देवीराप .... सुभृतमभारिषं देवेषु णः....॥ अभिष्ठितो वरुणस्य पाशः॥ अप्सु धौतस्य ....॥ प्रत्यस्तो .... पाशाय॥ गायत्री

छन्दांस्यनु .... उत यज्ञाः.... ॥ --- ॥ उन्नेतर्वस्योऽध्युन्नया नः ॥ आपो .... समगस्महि । आयुष्मानग्न .... ॥ एधोऽस्येधिषीमहि ॥ --- ॥

[ ४५.४ ] = कासं

**वामासं—**

**नमो वरुणायाभिष्ठितो वरुणस्य पाशः ॥ अग्नेरनीकमप .... । दमेदमे घृतमुच्चरण्यत् स्वाहा ॥ समुद्रे हृदयमप्स्वन्तः....यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत् स्वाहा ॥ देवीराप एष वो गर्भस्तꣳ सुप्रीतꣳ सुभृतं बिभृत । देव सोमैष ते लोकस्तस्मिञ्छं च वक्ष्व परि च वक्ष्व ॥ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः । अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि ॥ देवानाꣳ समिदसि ॥ ८.२३–२७**

माशब्रा [ ४.४.५.११–२३ ]—तमपोऽवक्रमयन् वाचयति नमो वरुणायाभिष्ठितो वरुणस्य पाश इति० अथ चतुर्गृहीतमाज्यं गृहीत्वा समिधं प्रास्याभिजुहोति अग्नेरनीकमप .... घृतमुच्चरण्यत् स्वाहेति० अथापरं चतुर्गृहीतमाज्यं गृहीत्वाश्राव्याह **समिधो यज** इति। सोऽपबर्हिषश्चतुरः प्रयाजान् यजति० अथ वारुण एककपालः पुरोडाशो भवति० स आज्यस्योपस्तीर्य पुरोडाशस्यावद्यन्नाह **वरुणायानुब्रूहि** इति। अत्र हैक ऋजीषस्य द्विरवद्यन्ति। तदु तथा न कुर्यात्० द्विरवद्यति[1]। सकृदभिघारयति। प्रत्यनक्त्यवदाने। आश्राव्याह **वरुणं यज** इति। वषट्कृते जुहोति। अथाज्यस्योपस्तीर्य पुरोडाशमवदधदाह **अग्नीवरुणाभ्यामनुब्रूहि** इति० स यद्यमुत्रर्जीषस्य द्विरवद्येदथात्र सकृत्। यद्यु न नाद्रियेत। अथोपरिष्टाद् द्विराज्यस्याभिघारयति। आश्राव्याह **अग्नीवरुणौ यज** इति। वषट्कृते जुहोति। ता वा एताः षडाहुतयो भवन्ति० एतदादित्यानामयनम्० यद्यु एनमितरथा यजमानः कर्तवै ब्रूयादितरथो तर्हि कुर्यात्। एतानेव चतुरः प्रयाजानपबर्हिषो यजेद् द्वावाज्यभागौ वरुणमग्नीवरुणौ द्वावनुयाजावपबर्हिषौ तद् दश० एतदङ्गिरसामयनम्। अतोऽन्यतरत् कृत्वा यस्मिन् कुम्भऋजीषं भवति तं प्रप्लावयति समुद्रे ते हृदयमप्स्वन्तः .... इति० अथानुसृज्योपतिष्ठते देवीराप एष वो गर्भः .... इति० अथोपमारयति अवभृथ निचुम्पुण .... इति० अथाभ्यवेत्य स्नातः। अन्योन्यस्य पृष्ठे प्रधावतः। तावन्ये वाससी परिधायोदेतः० स येनैव निष्क्रामन्ति तेन पुनरायन्ति। पुनरेत्याहवनीये समिधमभ्यादधाति देवानाꣳ समिदसीति० ॥

**बाकासं—**

**--- ॥ देवीराप .... लोकः परि च वक्षि शं च वक्षि ॥ --- ॥ ९.४.१-४**

काशब्रा [ ५.५.३.५–१५ ] = माशब्रा

1. पुरोडाशस्य।

अग्नौसं—

अप्सु ते जन्म दिवि ते सधस्थं समुद्रे अन्तर्महिमा ते पृथिव्याम् ।
शुनो दिव्यस्य यन्महस्तेना ते हविषा विधेम ॥ ६.८०.३
त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय ।
त्वं नो देव दातवे रयिं दानाय चोदय ॥ ३.२०.५
स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः ।
गामश्वं रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥ २०.९८.२
अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् । पृञ्चतीर्मधुना पयः ॥
अमूर्या उप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् ॥
अपो देवीरुप ह्वये यत्र गावः पिबन्ति नः । सिन्धुभ्यः कर्त्वं हविः ॥
अप्स्वन्तरमृतमप्सु भेषजम् ।
अपामुत प्रशस्तिभिरश्वा भवथ वाजिनो गावो भवथ वाजिनीः ॥ १.४
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥
ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् ॥ १.५
शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥
अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वशंभुवम् ॥
आपः पृणीत भेषजं वरूथं तन्वे मम । ज्योक् च सूर्यं दृशे ॥
शं न आपो धन्वन्याः शमु सन्त्वनूप्याः ।
शं नः खनित्रिमा आपः शमु याः कुम्भ आभृताः
शिवा नः सन्तु वार्षिकीः ॥ १.६
हिरण्यवर्णाः शुचयः पावका यासु जातः सविता यास्वग्निः ।
या अग्निं गर्भं दधिरे सुवर्णास्ता न आपः शं स्योना भवन्तु ॥
यासां राजा वरुणो याति मध्ये सत्यानृते अवपश्यन् जनानाम् ।
या अग्निं गर्भं दधिरे .... ॥
यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।
या अग्निं गर्भं दधिरे .... ॥
शिवेन मा चक्षुषा पश्यतापः शिवया तन्वोप स्पृशत त्वचं मे ।
घृतश्चुतः शुचयो याः पावकास्ता न आपः शं स्योना भवन्तु ॥ १.३३

कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन्त्सदनादृतस्यादिद् घृतेन पृथिवी व्यूदुः ॥
पयस्वतीः कृणुथाप ओषधीः शिवा यदेजथा मरुतो रुक्मवक्षसः ।
ऊर्जं च तत्र सुमतिं च पिन्वत यत्रा नरो मरुतः सिञ्चथा मधु ॥
उदप्रुतो मरुतस्ताँ इयर्त वृष्टिर्या विश्वा निवतस्पृणाति ।
एजाति ग्लहा कन्येव तुन्नैरुं तुन्दाना पत्येव जाया ॥ ६.२२
सस्रुषीस्तदपसो दिवा नक्तं च सस्रुषीः । वरेण्यक्रतुरहमपो देवीरुप ह्वये ॥
ओता आपः कर्मण्या मुञ्चन्त्वितः प्रणीतये । सद्यः कृण्वन्त्वेतवे ॥
देवस्य सवितुः सवे कर्म कृण्वन्तु मानुषाः ।
शं नो भवन्त्वप ओषधीः शिवाः ॥ ६.२३
हिमवतः प्र स्रवन्ति सिन्धौ समह संगमः ।
आपो ह मह्यं तद्देवीर्ददन् हृद्द्योतभेषजम् ॥
यन्मे अक्ष्योरादिद्योत पार्ष्ण्योः प्रपदोश्च यत् ।
आपस्तत्सर्वं निष्करन् भिषजां सुभिषक्तमाः ॥
सिन्धुपत्नीः सिन्धुराज्ञीः सर्वा या नद्य स्थन ।
दत्त नस्तस्य भेषजं तेना वो भुनजामहै ॥ ६.२४
वायोः पूतः पवित्रेण प्रत्यङ् सोमो अति द्रुतः । इन्द्रस्य युज्यः सखा ॥
आपो अस्मान् मातरः सूदयन्तु घृतेन नो घृतप्वः पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ॥
यत्किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरन्ति ।
अचित्त्या चेत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥ ६.५१
उद्वयं तमसस्परि रोहन्तो नाकमुत्तमम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ ७.५५.७
अगन्म स्वः स्वरगन्म सं सूर्यस्य ज्योतिषागन्म ॥ १६.९.३
अपो दिव्या अचायिषं रसेन समपृक्ष्महि ।
पयस्वानग्न आगमं तं मा सं सृज वर्चसा ॥ ७.९४.१
एधोऽस्येधिषीय समिदसि समेधिषीय ।
तेजोऽसि तेजो मयि धेहि ॥ ७.९४.४

विष्णोः क्रमोऽसि सपत्नहा पृथिवीसंशितोऽग्नितेजाः । पृथिवीमनु वि क्रमेऽहं पृथिव्यास्तं निर्भजामो योऽस्मान् द्वेष्टि यं वयं द्विष्मः । स मा जीवीत्तं प्राणो जहातु ॥

विष्णोः क्रमोऽसि सपत्नहान्तरिक्षसंशितो वायुतेजाः। अन्तरिक्षमनु वि क्रमेऽहमन्तरिक्षात्तं निर्भजामो... ॥

विष्णोः क्रमोऽसि सपत्नहा द्यौसंशितः सूर्यतेजाः। दिवमनु वि क्रमेऽहं दिवस्तं निर्भजामो.... ॥

विष्णोः क्रमोऽसि सपत्नहा दिक्संशितो मनस्तेजाः। दिशोऽनु विक्रमेऽहं दिग्भ्यस्तं निर्भजामो... ॥

विष्णोः क्रमोऽसि सपत्नहाशासंशितो वाततेजाः। आशा अनु वि क्रमेऽहमाशाभ्यस्तं निर्भजामो... ॥

विष्णोः क्रमोऽसि सपत्नह ऋक्संशितः सामतेजाः। ऋचोऽनु वि क्रमेऽहमृग्भ्यस्तं निर्भजामो... ॥

विष्णोः क्रमोऽसि सपत्नहा यज्ञसंशितो ब्रह्मतेजाः। यज्ञमनु वि क्रमेऽहं यज्ञात्तं निर्भजामो... ॥

विष्णोः क्रमोऽसि सपत्नहौषधीसंशितः सोमतेजाः। ओषधीरनु वि क्रमेऽहमोषधीभ्यस्तं निर्भजामो... ॥

विष्णोः क्रमोऽसि सपत्नहाप्सुसंशितो वरुणतेजाः। अपोऽनु वि क्रमेऽहमद्भ्यस्तं निर्भजामो... ॥

विष्णोः क्रमोऽसि सपत्नहा कृषिसंशितोऽन्नतेजाः। कृषिमनु वि क्रमेऽहं कृष्यास्तं निर्भजामो... ॥

विष्णोः क्रमोऽसि सपत्नहा प्राणसंशितः पुरुषतेजाः। प्राणमनु वि क्रमेऽहं प्राणात्तं निर्भजामो.... ॥

जितमस्माकमुद्भिन्नमस्माकमभ्यष्ठां विश्वाः पृतना अरातीः।

इदमहमामुष्यायणस्यामुष्याः पुत्रस्य वर्चस्तेजः प्राणमायुर्नि वेष्टयामीदमेनमधराञ्चं पादयामि ॥

सूर्यस्यावृतमन्वावर्ते दक्षिणामन्वावृतम्।
सा मे द्रविणं यच्छतु सा मे ब्राह्मणवर्चसम् ॥
दिशो ज्योतिष्मतीरभ्यावर्ते। ता मे द्रविणं यच्छन्तु ता मे ब्राह्मणवर्चसम् ॥
सप्तऋषीनभ्यावर्ते। ते मे द्रविणं यच्छन्तु ते मे ब्राह्मणवर्चसम् ॥
ब्रह्माभ्यावर्ते। तन्मे द्रविणं यच्छतु तन्मे ब्राह्मणवर्चसम् ॥
ब्राह्मणाँ अभ्यावर्ते। ते मे द्रविणं यच्छन्तु ते मे ब्राह्मणवर्चसम् ॥ १०.५.२५-४१

अगन्म स्वः स्वरगन्म सं सूर्यस्य ज्योतिषागन्म ॥
वस्योभूयाय वसुमान् यज्ञो वसु वंशिषीय वसुमान् भूयासं वसु मयि धेहि ॥
१६.९.३-४

अपैसं—

अप्सु ते .... समुद्र आत्मा ... दिव्यस्येदं महस्तस्मा एतेन हविषा जुहोमि ॥ १९.१६.१३ ॥ त्वं नो अग्ने .... । त्वं नो देवतातये .... ॥ ३.३४.८

यत्ते ग्रावा बाहुच्युतो अचुच्योन्नरो यद्वा ते हस्तयोरधुक्षन् ।
तत्त आ प्यायतां तत्ते नि ष्ट्यायतां सोम राजन् ॥
यत्ते ग्राव्णा चिच्छिदुः सोम राजन् प्रियाण्यङ्गा सुकृता पुरूणि ।
तत् सं धत्स्वाज्येनोत वर्धयस्वानागसो यथा सदमित् संक्षियेम ॥
यां ते त्वचं बिभिदुर्यां च योनिं यदि वा स्थानात् प्रच्युतो यदि वासुतोऽसि ।
तस्मै ते सोम लुप्तमस्माकमेतदुप नो राजन्त्सुकृते ह्वयस्व ॥
सं प्राणापानाभ्यां सं चक्षुषा सं श्रोत्रेण गच्छस्व सोम राजन् ।
यत्ते विरिष्टं सम्बु तत्त एतज्जानीतान्नः संगमने पथीनाम् ॥
अह्नाः शरीरं पयसा समेत्यान्योऽन्यो भवति वर्णो अस्य ।
तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयीणाम् ॥
अभिक्षरन्ति जुह्वो घृतेनाङ्गा परूंषि तव वर्धयन्ति ।
तस्मै ते सोम नम इद्वषट् चोप नो राजन्त्सुकृते ह्वयस्व ॥ २.३९.१-६

आपो हि ष्ठा ... ॥ --- ॥ १९.४५.८-१० ॥ हिरण्यवर्णाः शुचयः .... जातः कश्यपो यास्विन्द्रः । या अग्निं .... ॥ --- ॥ १.२५.१-४ ॥ कृष्णं नियानं .... पृथिवी व्युद्यते ॥ पयस्वतीः कृणुताप ओषधीरिमा .... सिञ्चता मधु ॥ उदप्लुतो मरुतस्तानियर्त वृष्ण्या यद्विश्वा निवतस्पृणाथ । एजाति कुह्वा कन्येव .... ॥ १९.२२.१०-१२ ॥ सस्रुषीस्तदपसो .... देवीरुप ब्रुवे ॥ ओता आपः .... । सद्यो भवन्त्वेतवे ॥ देवस्य सवितुः .... कृण्वन्ति मानुषाः । .... ओषधीरिमाः ॥ १९.४.१०-१२ ॥ हिमवतः प्र स्रवत ताः सिन्धुमुप गच्छत । आपो घ मह्यं .... ॥ अक्षिभ्यामादिद्योत पार्ष्णिभ्यां हृदयेन च । .... निः करन् त्वष्टा रिष्टमिवानशत् ॥ सिन्धुराज्ञीः सिन्धुपत्नीः .... । दत्त .... तेन वो .... ॥ १९.७.८-१० ॥ वायुः पूतः .... अधि स्नुतः । .... ॥ यत्किं चेदं .... । यदचित्या तव .... ॥ आपो अस्मान् .... । विश्वं .... प्रवहन्तु .... ॥ १९.४३.४-६ ॥ उद्वयं तमसस्परि ज्योति-

व्यपश्यन्त उत्तरम् । देवं .... ॥ २०.१०.३ ॥ अगन्म स्वः .... ॥ १८.२९.४ ॥ आपो अद्यान्वचारिषं रसेन समगन्महि । पयस्वान् .... ॥ १.२३.१ ॥ वि मुञ्चामि ब्रह्मणा जातवेदसमग्निं होतारमजरं रथस्पृतम् । सर्वा देवानां जनिमानि विद्वान् यथा भागं वहतु हव्यमग्निः ॥ १३.१०.१ ॥ विष्णोः क्रमोऽसि .... पृथिवीमनु .... । प्रथमजान् सपत्नानवैनान् बाधे तेनाप्राक्रामान्वपामपनुत्तस्सपत्नहा ॥ विष्णोः क्रमोऽसि .... । अन्तरिक्षमनु ....। सहजान् सपत्नान् ....॥ विष्णोः क्रमोऽसि ....। दिवमनु .... । अपरजान् .... तेनापक्रामान्वपाम् .... ॥ विष्णोः क्रमोऽसि सपत्नहा दिक्संशितो वायुतेजाः । दिशोऽनु .... । अपरजान् सपत्नान् .... तेनाप्राक्रामान्वपां .... ॥ विष्णोः क्रमोऽसि सपत्नहाशासंशितो वरुणतेजाः । आशा अनु .... अपरजान् .... ॥ विष्णोः क्रमोऽसि ... । ऋचो अनु ....। अपरजान् ....॥ विष्णोः क्रमोऽसि .... । यज्ञमनु .... । अपरजान् .... ॥ विष्णोः क्रमोऽसि ....। ओषधीरनु .... । अपरजान् ....॥ विष्णोः क्रमोऽसि सपत्नहा कृषिसंशितः पुरुषतेजाः । कृषिमनु .... । अपरजान् .... ॥ विष्णोः क्रमोऽसि सपत्नहा प्राणसंशितो अन्नतेजाः । प्राणमनु .... । अपरजान् ....॥ १६.१३१.१-१०॥ स्वभ्यावर्तये सूर्यस्यावर्तम् ....॥ दिशो ज्योतिष्मतीरभि पर्यावर्ते । ता मे .... ॥ सप्तऋषीनभि पर्यावर्ते । ते मे ...॥ ब्रह्माभिपर्यावर्ते । ते मे .... ॥ ब्राह्मणानभि पर्यावर्ते । ते मे .... ॥१६.१३२.२-६॥ अगन्म स्वः .... ॥ वस्योभूयाय .... वंसिषीय .... भूयासम् ॥ १८.२९.४-५ ॥

गोब्रा [ २.४.७ ] — अभूद्देवः सविता वन्द्यो नु नः इति जुहोति० तिसृभिः० द्रप्सवतीभिरभिजुहोति० सौमीभिरभिजुहोति० पञ्चभिरभिजुहोति० ॥

## १७०. अवभृथेष्टिहौत्रम्

ऋसं—

[1]अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे । गर्भे सञ्जायसे पुनः ॥ ८.४३.९
अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं च विश्वशंभुवम् ॥ १०.९.६
[2]अव ते हेळो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेता राजन्नेनांसि शिश्रथः कृतानि ॥
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ १.२४.१४-१५

---

१. अप्सुमन्तावाज्यभागौ । २. हविषो याज्यानुवाक्ये ।

[1]त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेळोऽव यासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत् ॥
स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अव यक्ष्व नो वरुणं रराणो वीहि मृळीकं सुहवो न एधि ॥ ४.१.४-५
आपो अस्मान् मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ॥ १०.१७.१०
इदमापः प्र वहत यत् किं च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ १.२३.२२
उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ १.५०.१०

शांब्रा [ १८.१० ]—ते यस्यां दिश्यापो भवन्ति तां दिशमभ्यावृत्य चरन्ति० चतुरः प्रयाजान् यजत्यृतेबर्हिष्कान्० वार्त्रघ्नावाज्यभागौ भवतः० अप्सुमन्तौ हैके कुर्वन्ति। वार्त्रघ्नौ त्वेव स्थितौ। अथ यदप्सु वरुणं यजति० अथ यदग्नीवरुणौ यजति० द्वावनुयाजौ यजत्यृतेबर्हिष्कौ० तदेतदङ्गिरसामयनं० अथ याः षड्वाष्टौ वा वषट्कृतयस्तदादित्यानामयनम्० ॥

तैब्रा [ २.५.८.६ ]—

[2]अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा ।
अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः ॥

## १७१. उदयनीयेष्टिः

तैसं [ ६.१.५.५ ]—प्रयाजवदनूयाजवदुदयनीयम्० प्रायणीयस्य निष्कास उदयनीयमभि निर्वपति० ॥

[ ३.५.५.३ ]—

यास्ते विश्वाः समिधः सन्त्यग्ने याः पृथिव्यां बर्हिषि सूर्ये याः ।
तास्ते गच्छन्त्वाहुतिं घृतस्य देवायते यजमानाय शर्म ॥

मैसं [ ३.७.१–२ ]—स्वस्ति॰ यजति० पथ्या॰ यजति० तामुत्तमामुदयनीये यजति० प्रयाजवत् स्यात् प्रायणीयमननुयाजमनुयाजवत् स्यादुदयनीयमप्रयाजम्० पयसि प्रायणीयः स्यात् पयस्युदयनीयः० आदित्यः प्रायणीयः स्यादादित्य उदयनीयः० ॥

कासं [ २३.८-९ ]—आदित्यं प्रायणीयं भवत्यादित्यमुदयनीयं० प्रयाजवती एवानुयाजवती स्याताम्० सँस्थाप्या३न्न सँस्थाप्या३ मिति मीमांसन्ते० सँस्थाप्यमेव। पत्नीं तु न संयाजयेत्[3]० तामुदयनीये संयाजयति० प्रायणीयस्य निष्काष उदयनीयमभिनिर्वपति० ॥

१. स्विष्टकृतो याज्यानुवाक्ये। २. द्वितीयाज्यभागस्य पुरोनुवाक्या। ३. प्रायणीयायाम्।

कपिसं [ ३६.५–६ ] ≡ कासं

माशब्रा [ ३.२.३.६, २१–२३ ]— एष आदित्य एव प्रायणीयो भवत्यादित्य उदयनीयः० तदाहुर्यदेव प्रायणीये क्रियेत तदुदयनीये क्रियेत। यदेव प्रायणीयस्य बर्हिर्भवति तदुदयनीयस्य बर्हिर्भवतीति। तदपोद्धृत्य निदधाति। ताꣳ स्थालीꣳ सक्षामकर्षां प्रमृज्य मेक्षणं निदधाति। य एव प्रायणीयस्यर्त्विजो भवन्ति त उदयनीयस्यर्त्विजो भवन्ति। तद्यदेतत् समानं यज्ञे क्रियते० तेन सरूपौ। तदु तथा न कुर्यात्। काममेवैतद्बर्हिरनुप्रहरेत्। एवं मेक्षणं निर्णिज्य स्थालीं निदध्यात्। य एव प्रायणीयस्यर्त्विजो भवन्ति त उदयनीयस्यर्त्विजो भवन्ति। यद्यु ते विप्रेताः स्युरप्यन्य एव स्युः० स वै पञ्च प्रायणीये देवता यजति पञ्चोदयनीये० तच्छंय्वन्तं भवति। न पत्नीः संयाजयन्ति०॥

[ ४.५.१.१–४ ]—आदित्येन चरुणोदयनीयेन प्रचरति० सोऽग्निमेव प्रथमं यजत्यथ सोममथ सवितारमथ पथ्याꣳ स्वस्तिमथादितिम्०॥

काशब्रा [ ४.२.३.३-१५, १६ ] ≡ माशब्रा ३.२.३.६, २१–२३

[ ५.५.४.१–२ ] ≡ माशब्रा ४.५.१.१–४

## १७२. उदयनीयेष्टिहौत्रम्

ऐब्रा [ १.११ ]—अथो खलु यस्यामेव स्थाल्यां प्रायणीयं निर्वपेत् तस्यामुदयनीयं निर्वपेत्० व्यतिषजेद्याज्यानुवाक्याः। याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः कुर्याद्या उदयनीयस्य पुरोनुवाक्यास्ताः प्रायणीयस्य याज्याः कुर्यात्[१]० पथ्ययैवेतः स्वस्त्या प्रयन्ति पथ्यां स्वस्तिमभ्युद्यन्ति०॥

शांब्रा [ ७.५ ]—य एव प्रायणीयस्यर्त्विजस्त उदयनीयस्य स्युः०॥

[ ७.७–८ ]—समे एव स्यातां प्रायणीयोदयनीये शंय्वन्तं प्रायणीयं शंय्वन्तमुदयनीयम्० अग्निं प्रथममुदयनीये यजत्यथ सोममथ सवितारमथ पथ्यां स्वस्तिमथादितिम्० ता वै पञ्च देवता यजति० याः प्रायणीयायां पुरोनुवाक्यास्ता उदयनीयायां याज्याः करोति या याज्यास्ताः पुरोनुवाक्याः॥

तैसं [६.१.५.५]—याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः करोति०॥

मैसं [ ३.७.२ ]—याः प्रायणीयेऽनुवाक्यास्ता उदयनीये याज्याः स्युर्या उदयनीयेऽनुवाक्यास्ताः प्रायणीये याज्याः स्युः॥

कासं [ २३.९ ]—याः प्रायणीयस्यानुवाक्यास्ता उदयनीयस्य याज्या या याज्यास्ता अनुवाक्याः०॥

कपिसं [ ३६.६ ] ≡ कासं

१. द्रष्टव्यं पृ. ४६।

## १७३. उदयनीयेष्ट्यौद्गात्रम्

### उद्वद्भार्गवम्[1]

साकौसं [ १.६.२.२.२ ]—

अचोदसो नो धन्वन्त्विन्दवः प्र स्वानासो बृहद्देवेषु हरयः ।
वि चिदश्नाना इषयो अरातयोऽर्यो नः सन्तु सनिषन्तु नो धियः ॥

२ २ १    २२ १    २२१    २ २ १    २ १
अचोदासो२३ । नोधनूवा२३ । तूइन्दवाः । प्रस्वानासो२३ । बृहद्दाइवे२३ ।
२२१    २ १    २२ १    २२१२    २ २ १
षूहरयाः । विचिदाश्ना२३ । नाइषाया२३ः । आरातयाः । अर्योनाःसा२३ ।
२२ १    २२१२ २    १ १ १ १
तूसनाइषा२३ । तूनोधिया३१ उ । वा २३४५ ॥ [ ग्राम १६.२.७ ]

### सामराजं वा विशालं वा उद्वत्

साजैसं [ १.५७.२ ]—

अचोदसो नो धन्वन्त्विन्दवः प्र स्वानासो बृहद्देवेषु हरयः ।
वि चिदश्नाना इषयो अरातयोऽर्यो नः सनिषन्तु नो धियः ॥

आचोदासोनो॰धनु॰वा॰॰न्तुइन्दवाः ॥ प्रस्वानासो॰बृहद्दा॰॰यिवेषू॰हरयाः ॥
त्य ल्य टथ    टिटया त   च शा    ध्य   टथ   चिह्य   टयतच चिशा
विचिदाश्नाना॰इषयो॰आरात॰याः । अर्योनास्सान्तुसानायि॰षा॰न्तू नो॰धि॰॰॰या॰॰बु॥
चि टह्य ठक्र   टिय्या त च   चिशा    ध्य   टथ    टुटथ   त   किकिच शच
॰वा॰ ॥ [ ग्राम ३.९.७ ]
णटख

## १७४. अनूबन्ध्यायागः

तैसं [ १.३.११ ]—

शुगसि तमभि शोच योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्च ॥

[ ६.४.१ ]—यत् पृथिव्या॰ हृदयशूलमुद्वासयेत् पृथिवी॰ शुचार्पयेत् । यदप्स्वपः शुचार्पयेत् । शुष्कस्य चार्द्रस्य च संधावुद्वासयति० यं द्विष्यात् तं ध्यायेत्० ॥

[ ६.६.७ ]—यन्मैत्रावरुणीं वशामालभते० ॥

---

१. प्रधानयागकाले प्रस्तोतृसाम ।

[ ३.३.८ ]—

यत् कुसीदमप्रतीत्तं मयि येन यमस्य बलिना चरामि ।
इहैव सन् निरवद्ये तदेतत् तदग्ने अनृणो भवामि ॥
विश्वलोप विश्वदावस्य त्वासन् जुहोमि ॥
अग्धादेकोऽहुतादेकः समसनादेकः ।
ते नः कृण्वन्तु भेषजꣳ सदः सहो वरेण्यम् ॥
अयं नो नभसा पुरः सꣳस्फानो अभि रक्षतु ।
गृहाणामसमर्त्यै बहवो नो गृहा असन् ॥
स त्वं नो नभसस्पत ऊर्जं नो धेहि भद्रया ।
पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि ॥
देव सꣳस्फान सहस्रपोषस्येशिषे स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् ॥

[ ३.३.८ ]— यत् कुसीदमप्रतीत्तं मयीत्युंपौषति० यदि मिश्रमिव चरेदञ्जलिना सक्तून् प्रदाव्ये जुहुयात्० ॥

[ ३.५.५ ]—

आशासानः सुवीर्यꣳ रायस्पोषꣳ स्वश्वियम् ।
बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय तिष्ठ ॥

तैब्रा [ २.४.७.११ ]—

[1]शृङ्गाणीवेच्छृङ्गिणाꣳ संददृश्रिरे । चषालवन्तः स्वरवः पृथिव्याम् ।
ते देवासः स्वरवस्तस्थिवाꣳसः । नमः सखिभ्यः सन्नान्मावगात ॥

[ ३.७.९.८ ]—

[2]यान्यपामित्यान्यप्रतीतान्यस्मि । यमस्य बलिना चरामि ।
इहैव सन्तः प्रति तद्यातयामः । जीवा जीवेभ्यो निहराम एनत् ॥
अनृणा अस्मिन्ननृणाः परस्मिन् । तृतीये लोके अनृणाः स्याम ।
ये देवयाना उत पितृयाणाः । सर्वान् पथो अनृणा आक्षीयेम ॥

भैसं [ १.२.१४ ]—

दिवं ते धूमो गछत्वन्तरिक्षं ज्योतिः पृथिवीं भस्म स्वाहा ॥

---

१. यजमानो यूपमुपतिष्ठते । २. सक्तुहोमे विनियोक्तव्यौ ।

[ १.२.१८ ]—

धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्न्या वरुणेति शपामहे। ततो वरुण नो मुञ्च ॥

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय।

अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥

सुमित्रा ना आपा ओषधयः सन्तु दुर्मित्रास्तस्मै सन्तु। यो अस्मान् द्वेष्टि यं च वयं द्विष्मः ॥

[ ४.८.६ ]—यः कामयेत सर्वो मे यज्ञः स्यात् सरसा इति स एतास्तिस्रो वशा आलभेत०वैश्वदेवीं मध्यत आलभेत०बार्हस्पत्यामन्तत आलभेत० यन्मैत्रावरुण्यनूबन्ध्या भवति०॥

[ ३.१०.७ ]—यदार्द्रमनूदकं तच्छान्तं० तत्रोपोप्यम्[१]०॥

कासं [ ३.८ ]—

धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नो मुञ्च ॥ उदुत्तमं वरुण पाशमस्मद्....॥ सुमित्रा ण आप ओषधयो भवन्तु दुर्मित्रास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥

द्विपे राज्ञो वरुणस्य गृहो हिरण्ययो मितः।

ततो धृतव्रतो राजा धाम्नो धाम्न इह मुञ्चतु ॥

[ २९.४ ]—यद् वशानूबन्ध्या भवति० यन्मैत्रावरुणी वशानूबन्ध्या भवति० यदि तिस्रोऽनूबन्ध्यास्स्युर्मैत्रावरुणीं प्रथमां कुर्यादथ वैश्वदेवीमथ बार्हस्पत्याम्० वैश्वदेवी मध्ये भवति० उपांशु यजति० बार्हस्पत्युत्तमा भवति० ॥

कपिसं [ २.१५ ]—

धाम्नोधाम्नो .... अघ्न्या इति वरुणेति .... ॥ --- ॥ सुमित्रिया न .... दुर्मित्रियास्तस्मै .... ॥ --- ॥

[ ४५.५ ] ≡ कासं

वामासं—

दिवं ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनापृण स्वाहा ॥ मापो मौषधीर्हिंसीः। धाम्नो धाम्नो राजंस्ततो वरुण नो मुञ्च। यदाहुरघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुञ्च ॥ सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ ६.२१-२२

माशब्रा [ ४.५.१.५–९ ]—अथ मैत्रावरुणीं वशामनुबन्ध्यामालभते० यदि वशां न विन्देदप्युक्षवश एव स्यात्० ॥

१. हृदयशूलम्।

[ ३.७.१.३२ ]—तथो एवैष एतंयूपशकलमेव जुहोति० स जुहोति दिवं ते धूमो .... भस्मनापृण स्वाहेति ।।

[ ३.८.५.८–११ ]—अथ हृदयशूलेनावभृथं यन्ति० अथ हृदयशूलं प्रयच्छति । तन्न पृथिव्यां परास्येन्नाप्सु० अप एवाभ्यवेत्य यत्र शुष्कस्य चार्द्रस्य च संधिः स्यात् तदुपगूहेत्० अग्रेण यूपमुदपात्रं निनीय यत्र शुष्कस्य चार्द्रस्य च संधिर्भवति तदुपगूहति मापो मौषधीर्हिंसी.... इति० अथाभिमन्त्रयन्ते सुमित्रिया .... द्विष्म इति० स वै नाग्नीषोमीयस्य पशोः करोति नाग्नेयस्य । वशाया एवानूबन्ध्यायै० एतदु हास्याग्नीषोमीयस्य च पशोराग्नेयस्य च हृदयशूलेन चरितं भवति यद् वशायाश्चरन्ति ।।

**वाकासं—**

**दिवं ते धूमो गच्छत्वन्तरिक्षं ज्योतिः .... ।। --- ।। इदमापः प्रवहत यत् किं च दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ।। ६.५.२–५**

काशब्रा [ ५.५.४.३–४ ] ≡ माशब्रा ४.५.१.५–९
[ ४.७.१.२५ ] ≡ माशब्रा ३.७.१.३२
[ ४.८.४.१८–१९ ] ≡ माशब्रा ३.८.५.८–११

**अशौसं—**

**सपत्नहनमृषभं घृतेन कामं शिक्षामि हविषाज्येन ।
नीचैः सपत्नान्मम पादय त्वमभिष्टुतो महता वीर्येण ।।
यन्मे मनसो न प्रियं न चक्षुषो यन्मे बभस्ति नाभिनन्दति ।
तद् दुष्वप्न्यं प्रति मुञ्चामि सपत्ने कामं स्तुत्वोदहं भिदेयम् ।।
दुष्वप्न्यं काम दुरितं च कामाप्रजस्तामस्वगतामवर्तिम् ।
उग्र ईशानः प्रति मुञ्च तस्मिन् यो अस्मभ्यमंहूरणा चिकित्सात् ।।
नुदस्व काम प्र णुदस्व कामावर्तिं यन्तु मम ये सपत्नाः ।
तेषां नुत्तानामधमा तमांस्यग्ने वास्तूनि निर्दह त्वम् ।।
सा ते काम दुहिता धेनुरुच्यते यामाहुर्वाचं कवयो विराजम् ।
तया सपत्नान् परि वृङ्ग्धि ये मम पर्येनान् प्राणः पशवो जीवनं वृणक्तु ।।
कामस्येन्द्रस्य वरुणस्य राज्ञो विष्णोर्बलेन सवितुः सवेन ।
अग्नेर्होत्रेण प्र णुदे सपत्नांछम्बीव नावमुदकेषु धीरः ।।
अध्यक्षो वाजी मम काम उग्रः कृणोतु मह्यमसपत्नमेव ।
विश्वे देवा मम नाथं भवन्तु सर्वे देवा हवमा यन्तु म इमम् ।।**

इदमाज्यं घृतवज्जुषाणाः कामज्येष्ठा इह मादयध्वम् ।
कृण्वन्तो मह्यमसपत्नमेव ॥
इन्द्राग्नी काम सरथं हि भूत्वा नीचैः सपत्नान्मम पादयाथः ।
तेषां पन्नानामधमा तमांस्यग्ने वास्तून्यनुनिर्दह त्वम् ॥
जहि त्वं काम मम ये सपत्ना अन्धा तमांस्यव पादयैनान् ।
निरिन्द्रिया अरसाः सन्तु सर्वे मा ते जीविषुः कतमच्चनाहः ॥
अवधीत्कामो मम ये सपत्ना उरुं लोकमकरन्मह्यमेधतुम् ।
मह्यं नमन्तां प्रदिशश्चतस्रो मह्यं षडुर्वीर्घृतमा वहन्तु ॥
तेऽधराञ्चः प्र प्लवन्तां छिन्ना नौरिव बन्धनात् ।
न सायकप्रणुत्तानां पुनरस्ति निवर्तनम् ॥
अग्निर्यव इन्द्रो यवः सोमो यवः । यवयावानो देवा यावयन्त्वेनम् ॥
असर्ववीरश्चरतु प्रणुत्तो द्वेष्यो मित्राणां परिवर्ग्यः स्वानाम् ।
उत पृथिव्यामव स्यन्ति विद्युत उग्रो वो देवः प्र मृणत्सपत्नान् ॥
च्युता चेयं बृहत्यच्युता च विद्युद्बिभर्ति स्तनयित्नूंश्च सर्वान् ।
उद्यन्नादित्यो द्रविणेन तेजसा नीचैः सपत्नान्नुदतां मे सहस्वान् ॥
यत्ते काम शर्म त्रिवरूथमुद्भु ब्रह्म वर्म विततमनतिव्याध्यं कृतम् ।
तेन सपत्नान् परि वृङ्ग्धि ये मम पर्येनान् प्राणः पशवो जीवनं वृणक्तु ॥
येन देवा असुरान् प्राणुदन्त येनेन्द्रो दस्यूनधमं तमो निनाय ।
तेन त्वं काम मम ये सपत्नास्तानस्माल्लोकात् प्र णुदस्व दूरम् ॥
यथा देवा असुरान् प्राणुदन्त यथेन्द्रो दस्यूनधमं तमो बबाधे ।
तथा त्वं काम मम ये.... ॥
कामो जज्ञे प्रथमो नैनं देवा आपुः पितरो न मर्त्याः ।
ततस्त्वमसि ज्यायान् विश्वहा महांस्तस्मै ते काम नम इत् कृणोमि ।
यावती द्यावापृथिवी वरिम्णा यावदापः सिष्यदुर्यावदग्निः ।
ततस्त्वमसि ....॥
यावतीर्दिशः प्रदिशो विषूचीर्यावतीराशा अभिचक्षणा दिवः ।
ततस्त्वमसि .... ॥
यावतीर्भृङ्गा जत्वः कुरूरवो यावतीर्वघा वृक्षसर्प्यो बभूवुः ।
ततस्त्वमसि .... ॥

ज्यायान्निमिषतोऽसि तिष्ठतो ज्यायान्त्समुद्रादसि काम मन्यो। ततस्त्वमसि....॥
न वै वातश्चन काममाप्नोति नाग्निः सूर्यो नोत चन्द्रमाः। ततस्त्वमसि....॥
यास्ते शिवास्तन्वः काम भद्रा याभिः सत्यं भवति यद् वृणीषे।
ताभिष्ट्वमस्माँ अभिसंविशस्वान्यत्र पापीरप वेशया धियः ॥ ९.२.१-२५

अपैसं—

सपत्नहनम् .... ॥ यन्मे मनसो .... यन्मे हृदये .... कामं जुष्टहानुदहं .... ॥ दुष्वप्न्यं काम .... ॥ सा ते काम .... प्रजाः पशवो .... ॥ कामस्येन्द्रस्य .... पिशाचान् शम्बीव .... ॥ अध्यक्षो वाजी .... ॥ यन्म आज्यं घृतमिज्जुषाणाः .... मादयन्ताम्। कृण्वन्तु .... ॥ इन्द्राग्नी काम .... तेषां सपत्नानामधमा .... ॥ जहि त्वं ....। अनिन्द्रिया .... यथा न जीवात् कतमश्चनैषाम्॥ अवधीत् कामो....॥ १६.७६.१–१० ॥ ते अधराञ्चः .... ॥ अग्नीर्यवः .... यवयावानो यावयन्त्वमूम्। आमुष्यायणममुष्याः पुत्रं जीवलोकं मृतलोकं कृतामुम् ॥ असर्ववीरः .... मित्राणां द्वेष्यः ....॥ च्युता च्येयं ....। तेषामादित्यो .... तेजसोधन् ....॥१६.७७.२–५॥ यत्ते काम शर्म त्रिवरूथमुद्भूद् .... प्राणः प्रजाः पशवो .... ॥ १६.७७.१ ॥ येन देवा .... तमो बबाधे। .... णुदस्व सर्वान् ॥ यथा देवा .... ॥ कामो जज्ञे प्रथमो नान्य आपुर्नैनं देवासः पितरो नोत मर्त्याः। .... ॥ १६.७७.६–८ ॥ यावती द्यावापृथिवी .... ॥ यावतीर्दिशः .... ॥ यावतीर्भृङ्गाः.... ॥ १६.७८.४- ६ ॥ न वै वातश्चन काममाप .... ॥ १६.७८.१॥ यास्ते शिवास्तन्वः .... अपसंविशस्वान्यत्र .... ॥ १६.७८.७

## १७५. अनूबन्ध्यायागहौत्रम्

ऋसं—

[१]आ वां मित्रावरुणा हव्यजुष्टिम् .... ॥ १.१५२.७ ॥ [२]युवं वस्त्राणि .... ॥ १.१५२.१ ॥ [३]आ यातं मित्रावरुणा .... ॥ ६.६७.३

[४]तत् सु वां मित्रावरुणा महित्वमीर्मा तस्थुषीरहभिर्दुदुहे।
विश्वाः पिन्वथः स्वसरस्य धेना अनु वामेकः पविरा ववर्त ॥ ५.६२.२

[५]प्र बाहवा सिसृतम् .... ॥ ७.६२.५ ॥ [६]आ नो मित्रावरुणा हव्यजुष्टिं .... ॥ ७.६५.४ ॥ [७]यद्बंहिष्ठं नातिविधे .... ॥ ५.६२.९

१. वपायागस्य पुरोनुवाक्या। २. याज्या। ३. पशुपुरोडाशस्य पुरोनुवाक्या। ४. शाङ्खा० मते पशुपुरोडाशस्य पुरोनुवाक्या। ५. पशुपुरोडाशस्य याज्या। शाङ्खा०मते हविर्यागस्य याज्या। ६. हविर्यागस्य पुरोनुवाक्या। ७. हविर्यागस्य याज्या। शाङ्खा० मते पशुपुरोडाशस्य याज्या। एतेषां मन्त्राणां सकलपाठः श्रौ. १ पृ. ६८३ अत्र द्रष्टव्यः।

ऐब्रा [ २.३ ]—तिष्ठेद्यूपा३ः अनुप्रहरे३दित्याहुः । तिष्ठेत् पशुकामस्य० अनुप्रहरेत् स्वर्गकामस्य० ॥

शांब्रा [ १८.११ ]—अनूबन्ध्या० अच्युता भवति० सा वै मैत्रावरुणी भवति० ॥

## १७६. अनूबन्ध्यायागौद्गात्रम्

### औक्ष्णोरन्ध्रे[1]

साकौसं [ १.६.१.३.७; २.४.१.१२ ]—

मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥
पुनानो वारे पवमानो अव्यये वृषो अचिक्रदद्वने ।
देवानाꣳ सोम पवमान निष्कृतं गोभिरञ्जानो अर्षसि ॥

२ २ १ २ ४ ५ २ १ २ ४ ५
मृज्यमानाः । सुहरितया३ । सामू२द्राइवा । चमिन्वसा३इ । रायी३म्पाइशा ।
२ १ ^३ ५ १ २२ १ २ २ १ ५ ४
गम्बहुला३म् । पूरू२स्पृ२३४हाम् । पवमा । ना । औ३हो । भियो२३४ वा । षा५सो६
५ २ २ १ २ ४५ २ १ २ ४ ५
हाइ ॥ [ १ ] पवमाना । भियर्षसा३इ । पावा२माना । भियर्षसा३इ । पूना३नोवा ।
२२ १२ ^ ३ ५ १२ २ १ २ २ १ ५
रेपवमा३ । नोआ२व्या२३४ याइ । वृषोअ । चा । औ३हो । क्रदो२३४ वा ।
४ ५ २२ १ २ ४ ५ २
वा५ नो६ हाइ ॥ [ २ ] वृषोअचाइ । क्रदद्वना३इ । वार्षो३ आचाइ । क्रदद्वना३इ ।
१ २ ४ ५ २ १ ^ ३ ५ १२ २ १ २ २
दाइवा३ नाꣳ सो । मपवमा३ । ननार इष्कृ२३४ त्ताम् । गोभिर । जा । औ३हो ।
१ ५ ४ ५
नओ २३४ वा । षा५ सो६ हाइ ॥ [ ३ ] [ ग्राम १५.१.६; ऊह ३.२.१ ]

२ १ २ २ २ २ १ २ १ २ ७ २ २ २
मृज्यमानःसुहस्त्या । समुद्रेवोवा । चामिन्वसि । रायिम्पिशा३ । हा३ हा ।
१ २ १ २ १ २ १ २ २ २ १ २ १
गम्बहुलम्पुरुस्पृहम् । पवमाना३ । हा३हा । भियर्षा२३ सा३४३इ । ओ२३४५

१. उक्ष्णो वपायागकाले प्रस्तोतृसाम्नी ।

१ २र २ १ २ र १ २ १ १ १ र र २
इ । डा ॥ [ १ ] पवमानाभियर्षसि । पवमानोवा । भायर्षसि । पूनानोवा२ ।
१ २ १र२ र र १ २र १ र २ २ २ १
हा२ हा । रेपवमानोअव्यये । वार्षोअचा२ इ । हा२ हाइ । क्रद्द्वा२३
२ १ १ र२ १ र २ र १ २
ना३४३ इ । ओ२३४५ इ । डा ॥ [ २ ] वृषोअचिक्रदद्वने । वृषोअचोवा ।
१ १र १ र र २ २ २ १२ र १ र २
क्रादद्वने । दाइवाना॑ सो२ । हा२हा । मपवमाननिष्कृतम् । गोभाइरञ्जा२ ।
१ २ र १ २ १
हा२हा । नोअर्षा२३ सा३४३ इ । ओ२३४५ इ । डा ॥ [ ३ ] [ग्राम १५.१.१२; ऊह ३.२.२ ]

## आर्षभम्[1]

साकौसं [ १.२.२.७.७; २.१.२.७ ]—

अभि त्वा वृषभा सुते सुत॑ सृजामि पीतये । तृम्पा व्यश्नुही मदम् ॥
मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन् । मा कीं ब्रह्मद्विषं वनः ॥
इह त्वा गोपरीणसं महे मन्दन्तु राधसे । सरो गौरो यथा पिब ॥

२ १ १र र १र २ १ २ र १ – १ २र १र
अभित्वावृषभासुते । सुत॑ सृजोवा । मिपीतायार२इ । सुत॑ सृजामि । पीता-
२ १ २ १ ^ ३ ५र २ र १ ३ १ १ १ १ १र र
२३याइ । त्रा२३म्पा२ । वा२या२३४ औहोवा । श्नुहीमदा२३४५म् ॥ [१] मात्वा-
१र१र २ १ २र १ २ र १ – १र२ १ २र १र २
मूराअविष्यवः । मोपहस्वोवा । नआदाभा२न् । मोपहस्वानः । आदा२३भान् ।
१ २ १ ^ ३ ५र र २ १ ३ १ १ १ १ २ १ २र १र
मा२३की३म् । ब्रा२ह्मा२३४ औहोवा । द्विषंवना२३४५ः ॥ [ २ ] इहत्वागोप-
२र र १ २ र १ – १र २ १र १ १ २
रीणसम् । महेमन्दोवा । तुराधासा२इ । महेमन्दन्तु । राधा२३साइ । सा२३रा२ः ।
१ ^ ३ ५र र २ र १ ३ १ १ १ १
गौ२रा२३४ औहोवा । यथापिबा२३४५ ॥ [ ३ ] [ग्राम ५.१.३; ऊह १.२.५ ]

---

१. ऋषभस्य वपायागकाले प्रस्तोतुस्साम ।

## त्रैककुभम्[1]

साकौसं [ १.४.२.१०.९; २.५.२.२२ ]—

य एक इद्विदयते वसु मर्ताय दाशुषे। ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥
यश्चिद्धि त्वा बहुभ्य आ सुतावाꣳ आविवासति। उग्रं तत्पत्यते शव इन्द्रो अङ्ग ॥
कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत्। कदा नः शुश्रवद्गिर इन्द्रो अङ्ग ॥

२ र र २ १ २ २ १ ३ ५ १ २र र
यएकइद्धिदाया२ताइ। वासुमर्त्ताया२दा। हुम्। शू२३४षाइ। आइशानो-
१ २ १ २र^ ३र २ १ ३ ५ २ र
अप्रतिष्कुतः। आइशा। नोअप्रताइ। ष्कू२३४ ताः ॥ [ १ ] यश्चिद्धित्वाबहुभ्या-
२ १ र र २ २ १ ३ ५ २१ २र१२ १२^
३आ। सुतावाꣳ आवी३वा। हुम्। सा२३४ ताइ। उग्रन्तत्पत्यतेशवः। ऊग्रम्।
३ २ १ ३ ५ १र र २ १र २ २
तत्पत्यताइ। शा२३४ वाः ॥ [ २ ] कदामर्त्तमराधा३ साम्। पदाक्षुम्पामी३वा।
१ ३ ५ १र २ १२ १ २र^ ३ २१ ३ ५
हुम्। स्फू२३४ रात्। कदानःशुश्रवद्गिरः। कादा। नःशुश्रवात्। गा२३४इराः।
१ २र १^ ३ ५रर ३ ५
आइन्द्रोअ। गा२। या२३४ औहोवा। ई२३४ न्द्राः ॥ [ ३ ] [ ग्राम १०.२.१४; ऊह ६.१.७ ]

## वाशम्[2]

साकौसं [ १.४.१.१.५; २.८.२.१५ ]—

क ईं वेद सुते सचा पिबन्तं कद्वयो दधे।
अयं यः पुरो विभिनत्योजसा मन्दानः शिप्र्यन्धसः॥
दाना मृगो न वारणः पुरुत्रा चरथं दधे।
नकिष्ट्वा नि यमदा सुते गमो महाꣳश्चरस्योजसा ॥
य उग्रः सन्ननिष्टृतः स्थिरो रणाय सꣳस्कृतः।
यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत् ॥

१. उत्सतम्य वपायागकाले प्रस्तोतृसाम। २. वशायाः वपायागकाले प्रस्तोतृसाम।

२ १ २     १ २   –   १     २   –   १   २
कईवेदा । सुताइसा१चा२ । पिबन्तङ्कद्रायो१दाधा२इ । अयंयःपुरोविभिनत्ता
२   –   १२   २   १ ^ ३   ५२ २   ३   ५
ओ१ जासा२ । मन्दाना२३ : शी३ । प्रा२ या२३४ औहोवा । षाधा२३४ साः ॥
२२ २   १ १ २   –   १   २   २   –   १   २
[ १ ] दानामृगाः । नवारा१ णा२ : । पुरुत्राचरथान्दा१ धा२इ । नकिष्ट्वानियम-
२   २   –   १२   २   १ ^ ३   ५२ २   ३   ५
दासुताइगा१ मा२ : । महाꣳ श्रा२३रा३ । सा२ ओ२३४ औहोवा । जा२३४ सा ॥
२   १ १   –   १ २   २   २   –   १   २
[ २ ] यउग्रःसान् । अनाइष्टा१ र्त्ता२ः । स्थिरोरणायसाꣳ स्का१र्त्ता२ः । यदिस्तो-
२   २   –   २ १२   २   १ ^ ३   ५२ २
तुर्म्मघवाशृणवाद्धा१ वा२म् । नेन्द्रोयो२३ षा३ । त्या२ आ२३४ औहोवा ।
३   ५
गा२३४ मात् ॥ [ ३ ] [ ग्राम ८.१.१८; ऊह १६.२.२० ]

## आजिगम्[१]

साकौसं [ १.५.२.४.२ ]—

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः ॥

१२   २   १   २   १   २   २   १   २   २   १   २
स्वादाइष्ठाया । मदाइष्ठाया । पवस्वसो । माधा१ रा२३ या । इन्द्रायापा ।
१   २   १
तवाइसु२३ ता३४३ : । ओ२३४५ इ । डा ॥ [ ग्राम १२.२.१४ ]

## और्णायवम्[२]

साकौसं [ १.५.२.९.१०; २.३.१.१६ ]—

परि प्रिया दिवः कविर्वयाꣳसि नप्त्योर्हितः । स्वानैर्याति कविक्रतुः ॥
स सूनुर्मातरा शुचिर्जातो जाते अरोचयत् । महान्मही ऋतावृधा ॥
प्रप्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः । वीत्यर्ष पनिष्टये ॥

---

१. अजस्य वपायागकाले प्रस्तोतृसाम ।   २. मेषस्य वपायागकाले प्रस्तोतृसाम ।

१ - १ - २ २१ २२२१ २२
परिप्रिया२ दिवःकवाइः । वया२ हो१ वा॑सिनप्त्योवोर्हिताः । स्वानैर्य्या२३
२ १ २ १ २ १ - ९ २^ ३ २१^ ३ ५२२
ती । हुवा । होवा । होवा । हुवा२ इ । ई३ या । कविक्रतो२ । या२३४ औहोवा ॥

१२ - २१ २ - २ २२१२ २२२१ २
[ १ ] सस्रनुर्म्मा२ तराशुचाइः । जाता२ हो१ वा जातेअरोवोचयात् । महान्मा२३
२ १ १२ १२ १ - ९ २^ ३२२१^ ३ ५२२
ही । हुवा । होवा । होवा । हुवा२इ । ई३ या । ऋतावृधो२ । या२३४ औहोवा ॥

१ १ - २२१२२ ११ २ २
[ २ ] प्रप्रक्षया२ यपन्यसाइ । जना२ हो१ वायजुष्टोवोअद्रुहाः । वीतिया२३ र्षा ।
१ १२ १२ १ - ९ २^ ३ २१^ ३ ५२२ २
हुवा । होवा । होवा । हुवा२ इ । ई३ या । पनिष्टयो२ । या२३४ औहोवा । ई३
११११
या२३४५ म् ॥ [ ३ ] [ ग्राम १३.१.३८; ऊह २.२.१५ ]

## स्वरं पयोनिधनम्[१]

साकौसं [ आरण्य २.७; २.६.२.१९ ]—

यज्जायथा अपूर्व्य मघवन् वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥
तत्ते यज्ञो अजायत तदर्क उत हस्कृतिः ।
तद्विश्वमभिभूरसि यज्जातं यच्च जन्त्वम् ॥
आमासु पक्वमैरय आ सूर्यं रोहयो दिवि ।
घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥

१ २१ २ १२ २ २ २ १-१ २ २ १
याज्जायाज्जा । यथाअपूर्विंयाऔ३हो । हा२ इया । औ३ हो । माघवन्वृत्र-
२ २ २ १-१ २ २ १ २ २ २ १-१
हत्यायाऔ३ हो । हा२ इया । औ३ हो । तातपृथिवीमप्राथयाऔ३ हो । हा२इया ।
२ २ १ २ २ २ १-१ २ २२२
औ३ हो । तादस्तभ्नाउतोदिवामौ३ हो । हा२ इया । औ३ होवा हाउवा३ ॥

१. अनूबन्ध्यास्थाने पयस्या चेत् पयस्यायाः प्रधानयागकाले प्रस्तोतुःसाम ।

१ २ १ १ १ र र २ २ १ – १ १ १ १
[ १ ] ताचेताचे । यज्ञोअजायता औ३ हो । हा२ इया । औ३हो । तादर्कउतहस्कृताइ-
२ २ १ – १ २ २ १ र २ २ १ – १ २ २
रौ३ हो । हा२ इया । औ३ हो । ताद्विश्वमभिभूरसाऔ३ हो । हा२ इया । औ३ हो ।
१ र २ २ १ – १ १ र र २ १ २ १ २
याज्जातव्यञ्चजन्तुवामौ३ हो । हा२ इया । औ३ होवाहाउवा३ [ २ ] आमाआमा ।
१ र १ . २ १ – १ १ २ १ र र र १ २ १ –
सुपक्मैरयाऔ३ हो । हा२ इया । औ३ हो । आसूर्यꣳ रोहयोदिवा औ३ हो । हा२
१ १ २ १ र र २ १ १ – १ २ १
इया । औ३ हो । घार्मन्नसामन्तपतासुवृक्तिभाइ रौ३ हो । हा२ इया । औ३ हो ।
१ २ र १ २ १ – १ २ र र २ २ १ १ १ १ १
जूष्टङ्गिर्वणसेबृहादौ३ हो । हा२ इया । औ३ होवाहाउवा३ । ए३ । पया२३४५ः॥ [३]
[ आरण्य ३.२.१२; ऊह्य २.१.३ ]

## औक्ष्णोरन्ध्रम्[१]

साजैसं [ १.५३.७ ]—

मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि । रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥

मृज्ज्यमानाः । सुहस्तियासामु'द्रा'यि'वा चमिन्वसा'यिरार्यी'पायिशा''ङ्ग्।
ती ती टथख्य श्यश ती श ढिश्च स श्यश
गम्बहुलाम्पुरुस्पृहम् । पवमाना औहो । भीयोवार्षासो । हायि ॥ [ ग्राम ३.५.४५ ]
तीतु ढथखण चिहव प्यश श्य प्य श्वसा

## दैवोदासम् आर्षभं वा वाभ्यश्वम्[२]

साजैसं [ १.१७.७ ]—

अभि त्वा वृषभा सुते सुतꣳ सृजामि पीतये । तृम्पा व्यश्नुही मदम् ॥

अभित्वावृषभासुतेसुतꣳ सृजोवा । मीपीतायायि । सूतꣳ सृ'जा''मीपीतायायि ।
तेतोत क्यल्या ढथतश कयका कयचका क स्याश्च त श
तृम्पावायाऔहोवा । श्नुहीमादाम् ॥ [ ग्राम २.१.५.२४ ]
ढ त ढढश वि श्वढश

## वाशम्[३]

साजैसं [ १.५२.२ ]—

आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे । पान्तमा पुरुस्पृहम् ॥

१. उक्ष्णो वपायागकाले प्रस्तोतृसाम । २. ऋषभस्य वपायागकाले प्रस्तोतृसाम ।
३. वशायाः वपायागकाले प्रस्तोतृसाम । द्रष्टव्यं कौग्राम १४.१.४

आतेदक्षम्मयोभू॒ वा॒र्ह॒ हा॒यि । वह्निमद्यावृणीमाहोहायि । पान्तामा । पूरू-
फू ख्यखा इयशी पू रे ख्य इय घ्यया त क्य

स्पृहामीळाभा । ओयि॒ळा ॥ [ ग्राम ३.४.४ ]
ल्यु टीखण प प प्य इयशा

## त्रैककुभम्[1]

साजैसं [ १.४३.९ ]—

य एक इद्विदयते वसु मर्ताय दाशुषे ।
ईशानो अमतिष्कुत इन्द्रो अङ्ग ॥

या एका इद्विदयातायि । वासूमर्ताहाया॒ दा॒शूषायि । आइशानोअप्रातहायि-
ख प्य ख श खीण श ह्य तक्यका खण श कि लू टी

ष्कूताः । आइन्द्रो॒अ॒ङ्गा॒या औहोवा । ईन्द्राः ॥ [ ग्राम २.४.५.२३ ]
खि ण टथटल्य ख थि ख प्य

## आजिकम्[2]

साजैसं [ १.४९.१ ]—

उच्चा ते जातमन्धसा दिवि सद्भूम्या ददे । उग्रꣳ शर्म महि श्रवः ॥

उच्चा । तेजातामान्धासा । दिविसद्भूम्याददाउग्रꣳ शार्मा । माहा औहोवा ।
त्यत थ्य यदा ट्य इच् चाकृल्यु टि त टट ख थि

उप्॒श्रा॒वाः ॥ [ ग्राम ३.१.१ ]
खिखा प्य

## पयः[3]

साजैसं [ १.३.५ ]—

अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्त्याशवः ॥

## अग्नेश्च दधिक्रम्[4]

साजैसं [ १.३७.७ ]—

दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूꣳषि तारिषत् ॥

१. उक्तस्य वपायागकाले प्रस्तोतृसाम ।
२. अजस्य वपायागकाले प्रस्तोतृसाम । द्रष्टव्यं कौग्राम ३.१.१
३. आमिक्षायाः प्रधानयागकाले प्रस्तोतृसाम । द्रष्टव्यं पृ. १२६ ।
४. वृष्णः प्रधानयागकाले प्रस्तोतृसाम । द्रष्टव्यं कौग्राम ९.९.२० ।

ओहायिदधिक्राविण्णो अकारिषमोहायि । ओ''हा''यि'जिष्णोरश्वस्यवाजिनो-
ते त श श च्यचा शश टे

ओहायि । सुरभिनोमूखाकारात् । प्र'ना''होआ'यूꣳ होयिम् । शीतारायि''''षा''''त् ।
का ल्य त टयच य टयच य टि ब्या ख्यणखाणाश

ओयिळा ॥ [ ग्राम २.३.५.१० ]
प श्यप्पा

## मधुश्चुन्निधनं च प्राजापत्यम्[1]

साजैसं [ १.३७.४ ]—

स पूर्व्यो महोनां वेनः क्रतुभिरानजे ।
यस्य द्वारामनुः पिता देवेषु धिय आनजे ॥

सपूर्व्योमहूनामे । वेनाःक्रातूभायिरानाजे । हाहा औहोवा'आ''यिही ।
त त वि क टी त टयत टयश त्यव्य

यस्याद्वारा'मानूः पीता । हाहा औहोवा'आयिही । दायिवायीषू । हाहा औहोवा
त्य व्य टीव्य त टयत व्यश त्यव्य टीव्य त टयत

आ''यिही । धि'या'' आना'जा औहोवा । म'धू'श्चूताः॥ [ग्राम २.३.५.७ ]
टयश त्यव्य क्यका टयट ख शि त्यताट तखव्य

## सौपर्णं वा घृतश्चुन्निधनम् आङ्गिरसं वा[2]

साजैसं [ १.१८.१ ]—

इदꣳ ह्यन्वोजसा सुतꣳ राधानां पते । पिबत्वस्य गिर्वणः ॥

इदꣳ ह्यनू ओजसा । सूतꣳ रा'धा'नांपातौ । हो'वा'हायि । पीबातुवास्य'गायिर्वाणो ।
ती ति क्य की क्यदा च य ट त्यता त्य श च्यचा च्यची च श ट

होवाहायि । पिबातुवौ । होवाहायि । स्यागायिर्वाणा औहोवा । घृताश्चू'ताः ॥
ता त श टयटीप्य ता त श टीट खि शि त टयख

[ ग्राम २.१.६.३ ]

## और्णायवम्[3]

साजैसं [ १.४९.१० ]—

परि प्रिया दिवः कविर्वयाꣳसि नप्त्योर्हितः । स्वानैर्याति कविक्रतुः ॥

---

१. मधुनः प्रधानयागकाले प्रस्तोतुसाम । द्रष्टव्यं कौग्राम ९.२.१७
२. आज्यस्य प्रधानयागकाले प्रस्तोतुसाम । द्रष्टव्यं कौग्राम ५.१.१२
३. आविकस्य मेषस्य च वपायागकाले प्रस्तोतुसाम ।

परिप्रियादिवः कवायिः । वयाःउ'वार्ऽसीनप्त्योर्वाहीताः । स्वानैर्याँतीहूवा ।
फी शका कींका श टयच कीच कि क च कल्या टय त च
हो'वा'हो'वा'हु'वाईया । कात्रीःक्रा'तोया औहोवा । ई'याम् ॥ [ ग्राम ३.१.६९ ]
क क्यकि क्यका टयत त च्य ह्य टयट ख शि तट ख

## १७७. उदवसानीयेष्टिः

तैसं [३.५.४.३]—आग्नेयं पञ्चकपालमुदवसानीयं निर्वपेत्० अष्टाकपालः कार्यः०॥

**तैब्रा [ ३.७.९.९ ]—**

**इदमूनुः श्रेयोऽवसानमागन्म । शिवे नो द्यावापृथिवी उभे इमे ॥**
**गोमद्धनवदश्ववदूर्जस्वत् । सुवीरा वीरैरनु संचरेम ॥**

मैसं [ ४.८.६ ]—यदाग्नेय उदवसानीयो भवति० अष्टाकपालो भवति० पञ्चकपालः कार्यः० ।

[ ३.९.४ ] तस्माद्यूपो नोपस्पृश्यः० यदाह **नमः स्वरुभ्यः** इति० यदाह **नमः स्वरुभ्यो बृहद्भ्यो मारुतेभ्यः सन्नान्मावगाम्** इति ॥

कासं [ २९.४ ]—आग्नेयं पञ्चकपालमुदवसानीयं निर्वपति० अष्टाकपालः कार्यः०॥

कपिसं [ ४५.५ ] ≡ कासं

माशब्रा [ ४.५.१.१३–१६ ]—अथोदवसानीययेष्ट्या यजते । स आग्नेयं पञ्चकपालं पुरोडाशं निर्वपति० तस्य हिरण्यं दक्षिणा० अनड्वान् वा० अथो चतुर्गृहीतमेवाज्यं गृहीत्वा वैष्णव्यर्चा जुहोति

**उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि ।**
**घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा ॥**

इति० तत्रो यच्छक्नुयात् तद्दद्यात्० अथ यदेवैषोदवसानीयेष्टिः संतिष्ठतेऽथ सायमाहुतिं जुहोति । काल एव प्रातराहुतिम् ॥

काशब्रा [ ५.५.४.७–८ ] ≡ माशब्रा

**अशौसं—**

**अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।**
**तं जानन्नग्न आ रोहाधा नो वर्धया रयिम् ॥ ३.२०.१**
**अपमित्यमप्रतीत्तं यदस्मि यमस्य येन बलिना चरामि ।**
**इदं तदग्ने अनृणो भवामि त्वं पाशान् विचृतं वेत्थ सर्वान् ॥**
**इहैव सन्तः प्रति दद्म एनज्जीवा जीवेभ्यो नि हराम एनत् ।**
**अपमित्य धान्यं यज्जघसाहमिदं तदग्ने अनृणो भवामि ॥**

अनृणा अस्मिन्ननृणाः परस्मिन् तृतीये लोके अनृणाः स्याम ।
ये देवयानाः पितृयाणाश्च लोकाः सर्वान् पथो अनृणा आ क्षियेम ॥
६.११७.१–३

यो अग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश ।
य इमा विश्वा भुवनानि चाक्लृपे तस्मै रुद्राय नमो अस्त्वग्नये ॥ ७.९२.१

अपैसं—

अयं ते .... रोहाथा .... ॥ ३.३४.१ ॥ अपमित्यमप्रतीत्तं यदस्मिन् .... भवामि जीवन्नेव प्रति ददामि सर्वम् ॥ १६.४९.१० ॥ इहैव सन्तः .... एतज्जीवा .... यज्जघसाग्निर्मा तस्मादनृणं कृणोतु ॥ अनृणा अस्मिन्ननृणाः परस्मिस्तृतीये नाके .... उत पितृयानाः सर्वान् पथो अनृणा अदीप ॥ १६.५०.१–२ ॥ यो रुद्रो अग्नौ यो .... नमो अस्त्वग्न ॥ २०.३२.६

गोब्रा [ २.४.९ ]—अयं ते योनिरित्यरण्योरग्निं समारोपयेत् । तदाहुर्यदरण्योः समारूढो नश्येदुदस्याग्निः सीदेत् । पुनराधेयः स्यादिति । या ते अग्ने यज्ञिया तनूस्तया मेह्यारोह तया मेह्याविश, अयं ते योनिरित्यात्मन्नग्नीन् समारोपयेत्० ।

[ २.४.८ ]—यत्कुसीदम्, अपमित्यमप्रतीत्तमिति वेदिमुपोषति० विश्वलोप विश्वदावस्य त्वासञ्जुहोमि इत्याह० यदु मिश्रमिव चरन्त्यञ्जलिना सक्तून् प्रदाव्ये जुहुयात्०॥

## १७८. उदवसानीयेष्टिहौत्रम्

ऋसं—

[1]अया ह्यग्ने....॥ ४.१०.२ ॥ आभिष्टे अद्य.... ॥ ४.१०.४ ॥ एभिर्नो अर्कैर्भवा.... ॥ ४.१०.३ ॥ अग्ने तमद्याश्वं.... ॥ ४.१०.१

शांब्रा [ १८.१४ ]—उदङ्ङुदवस्यति० उदङ्ङुदवसाय वैष्णव्यर्चा पूर्णाहुतिं जुहोति० पञ्चकपालः पुरोलाशो भवति० यद्यु वा अष्टाकपालः पौर्णमासमेव तन्त्रं भवति० यत्पदपङ्क्तयो याज्यापुरोनुवाक्यास्तथैव व्यतिषक्ताः० तस्यां संस्थितायां यजमानोऽग्निहोत्रं जुहुयात्० ॥

१. एतासां सकलपाठः श्री १ पृ. १७ अत्र द्रष्टव्यः ।

तैसं [ ३.५.४.३ ]—पङ्क्त्यौ याज्यानुवाक्ये भवतः० ॥
कासं [ २९.४ ]—पाङ्क्ते याज्यानुवाक्ये भवतः० ॥
कपिसं [ ४५.५ ] ≡ कासं
माशब्रा [ ४.५.१.१३ ]—तस्य पञ्चपदाः पङ्क्तयो याज्यानुवाक्या भवन्ति० ॥
काशब्रा [ ५.५.४.७ ] ≡ माशब्रा

## १७९. उदवसानीयेष्ट्यौद्गात्रम्

### उद्वंशीयम्[1]

साकौसं [ १.४.२.१.१; २.५.२.२३ ]—

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥
यत्सानोः सान्वारुहो भूर्यस्पष्ट कर्त्वम् ।
तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥
युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा ।
अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥

१र २ र र १ र १ र १र –
गायन्तित्वागायत्रिणआ । अर्च्चन्त्यर्कमर्का२३ इणाः । ब्रह्माणस्त्वा२ हो१ इ
२ १ २ २ १ ^ ३ ५ १ १ २
शतक्रा२३ ताउ । उद्वंशमिवया१ इमी३ रे । उद्वंशा २३४ मी । वाया३ उवा३ ।
२ १ २ १ र २र १र र २ १ र
उप् । मा२इरो३५ हाइ ॥ [ १ ] यत्सानोः सान्वारुहआ । भूर्यस्पष्टकर्तू२३
२ १ – र २ २१र २ १ २
वाम् । तदिन्द्रा२ हो१ इ । अर्थश्चेता२३ ताइ । यूथेनवृष्णिरा१ इजा३ ताइ ।
र^३ ५ १ १ र १ १ २ २
यू थेना२३४ वृ । ष्णाइरा३ उवा३ । उप् । जा२ तो३५ हाइ ॥ [ २ ] युक्
१र २र१२र१र१ र २ १ र – १ र
ष्वाहिकेशिनाहरीआ । वृषणाकक्षिया२३ प्रा । अथाना२ हो१इ । इन्द्रसोमा२३
२ १र २ १ २ र^३ ५ १ १ २ २ १
पाः । गिरामुपश्रुता१ इश्वा३ रा । गिरामू२३४ पा । श्रूता३ उवा३ । उप् चा२रो३५
२
हाइ ॥ [ ३ ] [ ग्राम ९.१.१६; ऊह ६.१.८ ]

१. प्रधानयागकाले प्रस्तोतृसाम ।

### उद्वंशीयम्[1]

साजैसं [ १.३६.१ ]—

गायन्ति त्वा गायत्रिणो अर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वँ॰शमिव येमिरे ॥

गायन्तित्वागायत्रिणया । अर्चन्त्यर्कमर्का॰यिणाः । ब्रह्माणस्त्वाहोयि ।
तू टूटयु त्यता टी च श

शतक्रा॰ता॰बु । उद्वँ॰शमिवयायिमीरे । उद्वँ॰शामीं । वयाउवा । उप्मायि॰रो॰ । हायि ॥
टिव्य तचश ध्यु पा श खि ण टय त्यता टय ख्यखा श्र श

[ ग्राम २.३.४.३ ]

## १८०. देविकाहवींषि

तैसं [ ३.४.९.४ ]—एता एव निर्वपेदीजानः० उत्तमं धातारं करोति० ॥

मैसं [ ४.३.६ ]—यासु स्थालीषु सोमाः स्युस्ते चरवः स्युः० य एव कश्च सोमेन यजेत त॰ याजयेत्० ॥

कासं [ १२.८ ]—यासु स्थालीषु सोमा भवन्ति तासु देविकाः कुर्यात्० य एव कश्च सोमेन यजेत स देविकाभिर्यजेत० ॥

## १८१. देविकाहविषां हौत्रम्

ऋसं—

[2]राकामहं सुहवां .... ॥ यास्ते राके सुमतयः .... ॥ सिनीवालि पृथुष्टुके .... ॥ या सुबाहुः स्वङ्गुरिः .... ॥ २.३२.४-७ ॥ [3]तरणिर्विश्वदर्शतो .... ॥ १.५०.४ ॥ चित्रं देवानामुदगाद् .... ॥ १.११५.१

[4]स्मत्पुरंधिर्न आ गहि विश्वतोधीर्न ऊतये ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥
आ नो याहि महेमते सहस्रोते शतामघ ।
दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ८.३४.६–७

---

१. प्रधानयागकाले प्रस्तोतृसाम । २. देविकाहविःषु धाता, अनुमतिः, राका, सिनीवाली, कुहूः इत्येता देवताः । तत्र धातृ-अनुमति-कुहूनां याज्यानुवाक्याः कल्पजाः । राकासिनीवालीकुहूनां याज्यानुवाक्याः श्रौ.१पृ.२४२ इत्यत्र सकलपाठेन द्रष्टव्याः । ३. देवीहविःषु सूर्यः, द्यौः, उषाः, गाः, पृथिवी इत्येता देवताः । ता देविकाभिर्विकल्प्यन्ते । तत्र सूर्यस्य याज्यानुवाक्ये श्रौ. १ पृ. ५३६ इत्यत्र सकलपाठेन द्रष्टव्ये । ४. दिवः याज्यानुवाक्ये ।

[1]आ द्यां तनोषि रश्मिभिरान्तरिक्षमुरु प्रियम्। उषः शुक्रेण शोचिषा ॥ ४.५२.७
आवहन्ती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना।
ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वैत् ॥ १.११३.१५
[2]न ता अर्वा रेणुककाटो अश्नुते न संस्कृतत्रमुप यन्ति ता अभि।
उरुगायमभयं तस्य ता अनु गावो मर्तस्य वि चरन्ति यज्वनः ॥ ६.२८.४
न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरा दधर्षति।
देवाँश्च याभिर्यजते ददाति च ज्योगित् ताभिः सचते गोपतिः सह ॥
६.२८.३

[3]बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥ ५.८४.१
दृळ्हा चिद्या वनस्पतीन् क्ष्मया दर्धर्ष्योजसा।
यत् ते अभ्रस्य विद्युतो दिवो वर्षन्ति वृष्टयः ॥ ५.८४.३

ऐब्रा [ ३.४७–४८ ]—मैत्रावरुणं पशुपुरोळाशमनु देविकाहवींषि निर्वपेत्। धात्रे पुरोळाशं द्वादशकपालम्० अनुमत्यै चरुम्० राकायै चरुम्० सिनीवाल्यै चरुम्० कुह्वै चरुम्० इति नु देविकानाम्। अथ देवीनाम्। सूर्याय पुरोळाशमेककपालम्० दिवे चरुम्० उषसे चरुम्० गवे चरुम्० पृथिव्यै चरुम्० अन्यतराभिर्वात्र तं काममाप्नोति य एतासूभयीषु। ता उभयीर्गतश्रियः प्रजातिकामस्य संनिर्वपेत्। न त्वेषिष्यमाणस्य ॥

तैसं [ ३.३.११ ]—

अनु नोऽद्यानुमतिर्यज्ञं देवेषु मन्यताम्।
अग्निश्च हव्यवाहनो भवतां दाशुषे मयः ॥
अन्विदनुमते त्वं मन्यासै शं च नः कृधि।
क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ॥ --- ॥[4]

मैसं [ ४.१२.६ ]—

अन्वद्य नो अनुमतिः.... ॥ --- ॥[4]

---

१. उषसो याज्यानुवाक्ये। २. गावो याज्यानुवाक्ये। ३. पृथिव्या याज्यानुवाक्ये।
४. देविकाहविषां सर्वा याज्यानुवाक्याः श्रौ. १ पृ. ३९८–९९ अत्र द्रष्टव्याः।

# अग्निष्टोमः

## सप्रवर्ग्यः

### १. ऋत्विग्वरणं देवयजनयाचनं च[1]

**बौधायनश्रौ०—**

[ १४.८ ]—अथ वै भवति देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत। ते देवा एतं महायज्ञमपश्यन्। तमतन्वत। अग्निहोत्रं व्रतमकुर्वत। तस्माद् द्विव्रतः स्यात्। द्विर्ह्यग्निहोत्रं जुह्वति। पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत। दार्श्यं यज्ञमाग्नेयं पशुमकुर्वत। वैश्वदेवं प्रातःसवनमकुर्वत। वरुणप्रघासान् माध्यन्दिनꣳ सवनम्। साकमेधान् पितृयज्ञं त्र्यम्बकाꣳस्तृतीयसवनमकुर्वतेति। तत् पृच्छन्ति कतमः स महायज्ञ इति। अयमेव चातुर्मास्यः सोम उक्तो भवति। अथो खलु य एव कश्च सौम्योऽध्वरः स महायज्ञः। तमेषामसुरा यज्ञमन्ववाजिगाꣳसन्। तं नान्ववायन्। तेऽब्रुवन्नध्वर्तव्या वा इमे देवा अभूवन्निति। तदध्वरस्याध्वरत्वम्। ततो देवा अभवन् परासुराः। य एवं विद्वान्त्सोमेन यजते भवत्यात्मना परास्य भ्रातृव्यो भवतीति ब्राह्मणम्।

[ ६.१ ]—अग्निष्टोमेन यक्ष्यमाणो भवति। [ २१.७—अथातोऽग्निष्टोमं व्याख्यास्यामः॥] [ २५.४— अग्निष्टोमेन यक्ष्यमाणः प्रज्यमात्मानं कुर्वीत। येनास्याकुशलꣳ स्यात्तेन कुशलं कुर्वीत। यान्यृणान्युत्थितकालानि स्युस्तानि व्यवहरेदनुज्ञापयीत वा। ] स उपकल्पयते कृष्णाजिनं च कृष्णविषाणां च वासश्च मेखलां च। सैषा पृश्नी वेणीकार्या भवति त्रिवृदेकतःपाशा। द्वाविꣳशतिं च दर्भपुञ्जीलानि नवनीतं चाञ्जनं च सतूलां च शरेषीकामौदुम्बरं च दण्डं चमसं च व्रतप्रदानꣳ स्थालीꣳ सशिक्याꣳ समेक्षणाम्। एतानि त्रयोदश यजमानः। [ २१.७—वाससामुपकल्पन इति ॥ अष्टाविति बोधायनः॥ सप्तेति शालीकिः॥ कृष्णाजिनानामुपकल्पन इति ॥ पञ्चेति बोधायनः ॥ षडिति शालीकिः॥ कृष्णविषाणाया उपकल्पन इति ॥ त्रिवलिरिति बोधायनः॥ पञ्चवलिरिति शालीकिः॥ सकलैवैषा स्यादित्यौपमन्यवः॥] तावन्त्येव पत्नीमभितो भवन्ति कुम्बं च कुरीरं च वासश्च योक्त्रं चापरिमितानि दर्भपुञ्जीलानि नवनीतं चाञ्जनं च सतूला च शरेषीका मृन्मयश्च पात्रः शङ्कुश्च स्थाली सशिक्या समेक्षणा। [ २५.४— स पुरस्तादेवोपकल्पयते प्रभूतं तृणवꣳशं पश्वाज्यꣳ स्थाल्यमत्रं कुम्बं च कुरीरं चेति। विदलमु ह कुम्बं भवति जालमु कुरीरम्। द्वादशशतं दक्षिणानाम्। विज्ञायते छन्दोगब्राह्मणं वीरहा वा एष देवानां यः सोममभिषुणोतीति। शतेन वीरं निरवदयते। दशभिर्दश प्राणान्। यैकादशी तयात्मानम्। यैव द्वादशी सा दक्षिणेति। अथ हैक एकविꣳशतिदक्षिणेन यजन्त एकविꣳशं यज्ञायज्ञियमिति वदन्तः। अथ हैके सप्तगुना यजन्ते सोमक्रयण्यातिथ्यग्नयनूबन्ध्याश्चतस्रो मध्यतः। तदपि दाशतये विज्ञायते प्र सप्तगुमृतधीतिं सुमेधामिति। ]

जुष्टे देवयजने शाला कारिता भवति। पुरोहविषि देवयजने याजयेदित्येतेषां यज्ञोषयते। [ २५.५—अथातो देवयजनकल्पः। स एतद्देवयजनकल्पं जोषयते पुरस्तादुदक्प्रवणमनूषरमनुपहितमविसृग्दार्यनिरिणमशुषिरमभङ्गुरमवल्मीकं बहुलौषधि यत्रान्या-

1. बौधायनश्रौतसूत्रानुसारेणात्रैव ऋत्विग्वरणं देवयजनयाचनं च भवतः। द्रष्टव्यं बौश्रौ. २. २-४; श्रौ. १ पृ. ३५-३७। अग्निष्टोमावसरे एतत् कर्तव्यमिति सूत्रान्तरेषु।

अन्या ओषधयो व्यतिषक्ताः स्युः प्रागुदक्प्रवणं यथा चात्वालसारिणीराप: स्युर्नातिप्रवणं यस्मादन्यत्पुरस्तात्समन्तिकं देवयजनं न विन्देयुः। तदेतां प्राचीनवंशाꣳ शालां मापयन्ति। कृत्तिकाः खल्विमाः प्राचीं दिशं न परिजहति। तासाꣳ संदर्शनेन मापये-दित्येतदेकम्। श्रोणासंदर्शनेन मापयेदित्येतदेकम्। चित्रास्वात्योरन्तरेणेत्येतदपरम्। दिक्ष्वतीकाशा भवतीति। द्वाभिरेवैषा दिक्ष्वतीकाशा भवति। अथाप्युदाहरन्ति वꣳशा-नामेवातीकाशान् कुर्यादिति। द्वौ स्तोमौ प्रातःसवनं वहत इति। त्रिवृत्पञ्चदशौ प्रातःसवनं वहतः। पञ्चदशसप्तदशौ माध्यन्दिनꣳ सवनम्। सप्तदशैकविꣳशौ तृतीयसवनम्। एष एव सꣳश्चतुष्टोमो भवति। चत्वारो हि स्तोमा भवन्ति। एष एव सन् द्वादशस्तोमो भवति। द्वादश हि स्तोत्राणि भवन्ति। यथो एतदौपमन्यवस्य कल्पं वेदयन्ते पुरस्तादेवैतत्त्रैविध्यगतेषु देवयजनमध्यवस्येद्विज्ञायते सा वा इयꣳ सर्वैव वेदिरिति।]

## २. प्राचीनवंशशालानिर्माणम्

बौधायनश्रौ०—

[६.१]— प्राचीनवꣳशा दिक्ष्वतीकाशा दक्षिणतो वर्षीयसी। तस्यै चतस्रो द्वारः कुर्वन्ति प्राचीं दक्षिणां प्रतीचीमुदीचीम्। दक्षिणतो व्रतश्रपणागारं कुर्वन्ति पश्चात्पत्नी-शालम्। अथ यदि दूरे तीर्थं भवत्युत्तरेण शालां द्वौ कटपरिवारौ कुर्वन्ति पूर्वं यजमानायापरं पत्न्यै। तयोः प्राची द्वारौ कुर्वन्ति। तदुदकुम्भौ निधापयति॥

## ३. अवान्तरदीक्षा

बौधायनश्रौ०—

[९,१९-२०]—अथातोऽवान्तरदीक्षां व्याख्यास्यामः। उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे केशश्मश्रु वापयित्वा पूर्ववदुपाकृत्य ग्रामात् प्राचीं वोदीचीं वा दिशमुप-निष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयति। अग्रेणाग्निं प्रवर्ग्याय कल्पयामि घर्माय कल्पयामि महावीराय कल्पयामि सम्राजे कल्पयामि इति। दक्षिणेनाग्निं ब्रह्मणे कल्पयामि प्रजापतये कल्पयामि इति। उत्तरेणाग्निम् ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यः कल्पयामि देवेभ्यो घर्मपेभ्यः कल्पयामि इति। अथ दक्षिणतः प्राचीनावीती पितृभ्यो घर्मपेभ्यः कल्पयामि यमायाङ्गिरस्वते पितृमते कल्पयामि इति। अथाप उपस्पृश्योत्तरतो यज्ञोपवीती रुद्राय रुद्रहोत्रे कल्पयामि इति। अथाप उपस्पृश्य सर्वाभ्यः प्रवर्ग्यदेवताभ्यः कल्पयामि इति। प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयति। अग्रेणाग्निं प्रवर्ग्यं तर्पयामि घर्मं तर्पयामि महावीरं तर्पयामि सम्राजं तर्पयामि इति। दक्षिणेनाग्निं ब्रह्माणं तर्पयामि प्रजापतिं तर्पयामि इति। उत्तरेणाग्निम् ऋषीन् मन्त्रकृतो मन्त्रपतीꣳस्तर्पयामि देवान् घर्मपाꣳस्तर्पयामि इति। अथ दक्षिणतः प्राचीनावीती पितॄन् घर्मपाꣳस्तर्पयामि यममङ्गिरस्वन्तं पितृमन्तं तर्पयामि इति। अथाप उपस्पृश्योत्तरतो यज्ञोपवीती रुद्रꣳ रुद्र-होतारं तर्पयामि इति। अथाप उपस्पृश्य सर्वाः प्रवर्ग्यदेवतास्तर्पयामि इति। चतस्र औदुम्बरीः समिधोऽप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति पृथिवी समित् इत्येतैः प्रति-मन्त्रम्। अथ देवता उपतिष्ठते अग्ने व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यतां, वायो व्रतपते,[1] आदित्य व्रतपते,[1] व्रतानां व्रतपते शुक्रियं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् इति। अथैतेषा

१. पूर्वमन्त्रानुसारेण अनुषङ्गः कर्तव्यः।

मनुवाकानां प्रभृतीर्वाचयति प्रथमोत्तमयोर्वा। अथैनꣳ सꣳशास्ति संमील्य वाचं यच्छ इति। अथास्याहतेन वाससा त्रिः प्रदक्षिणꣳ संमुखꣳ शिरो वेष्टयति चित स्थ परिचितः स्वाहा मरुद्भिः परिश्रयस्व इति। प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वा। अथास्तमित आदित्ये ग्राममायन्ति। वाग्यतस्तिष्ठेदेताꣳ रात्रिमुपविशेत् संविशेद्वा।

अथ प्रातरुदित आदित्ये ग्रामात् प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयित्वा वयः सुपर्णाः इति वासो विमुच्य। अथास्य षट्कतयमभिविदर्शयत्यग्निमप आदित्यं गां ब्राह्मणꣳ हिरण्यमिति। त्रीनादितोऽनुदर्शयित्वा यथोपपादमितराणि दर्शयित्वा प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वा। अथास्य व्रतचर्यामुपदिशेत्। न यानमारोहेत्। न वृक्षमधिरोहेत्। न कूपमवरोहेत्। न छत्रं धारयीत। नोपानहौ धारयीत। नासन्द्याꣳ शयीत। न स्त्रिया न शूद्रेण संभाषेत। यदि संभाषेत ब्राह्मणेन संभाषेत। न सायं भुञ्जीत। यदि सायं भुञ्जीतावज्वलितं भुञ्जीत। न स्नायात्। अष्टम्यां पर्वणि चोपवसेत् तदहश्च स्नायात्। वाग्यतस्तिष्ठेदेताꣳ रात्रिमुपविशेत् संविशेद्वा। अमेध्यलोहितशवापपात्रदर्शने ज्योतिषां संदर्शनम्। अमेध्यं दृष्ट्वा जपति अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा हासीः इति। अथ यद्येनमभिवर्षति उन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्ट इति जपति।

संवत्सरमेतद् व्रतं चरेत्। संवत्सरꣳ हि व्रतं नातीति। एतस्मिꣳस्त्वेवैतत् संवत्सरेऽधीयीत। यद्यु वा एतस्मिन् संवत्सरे नाधीयीत यावदध्ययनमेतद् व्रतं चरेत्। अथ संवत्सरे पर्यवेतेऽध्यापयते श्रावयते वा। पूर्ववदुपाकृत्य ग्रामात् प्राचीं वोदीचीं वा दिशमुपनिष्क्रम्य खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य मदन्तीरधिश्रित्य प्रथमेनानुवाकेन शान्तिं कृत्वा दर्भैः प्रवर्ग्यदेवताभ्य आसनानि कल्पयित्वाथाव्रत्यप्रायश्चित्ते जुहोति यन्म आत्मनो मिन्दाभूत्, पुनरग्निश्चक्षुरदात् इति द्वाभ्याम्। प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वा चतस्र औदुम्बरीः समिधोऽप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति द्यौः समित् इत्येतैः प्रतिमन्त्रम्।

अथ देवता उपतिष्ठते आदित्य व्रतपते शुकियं व्रतमचारिषं तदशकं तन्मेऽराधि, वायो व्रतपते, अग्ने व्रतपते, व्रतानां व्रतपते शुकियं व्रतमचारिषं तदशकं तन्मेऽराधि इति। प्रदक्षिणमग्निं परिषिच्य व्याहृतीभिर्वैकङ्कतीः समिधोऽभ्याधाय मदन्तीभिः प्रवर्ग्यदेवतास्तर्पयित्वोत्तमेनानुवाकेन शान्तिं कृत्वा। तस्यानध्यायानुपदिशेत्। नाधीयीतास्तमित आदित्ये। नानुदिते। न विप्रोषितः। न पर्यावृत्ते। नाभ्रच्छायायाम्। न ग्राम्यस्य पशोरन्ते। नारण्यस्य। नापामन्ते। न हरितयवान् प्रेक्षमाणः। न हर्म्याणि। न शरीराणि। न लोहितमुत्पतितं दृष्ट्वा। न माꣳसमशित्वा। न श्राद्धं भुक्त्वा। न केशश्मश्रु वापयित्वा। न केशान् प्रसार्य। न दतो धावते। नाभ्यक्ते। नार्द्रः। नार्द्रेण वाससा। नार्द्र इति। अथ स्वाध्यायमधीयीत। अपरेणाग्निं दर्भेष्वासीनो दर्भान् धारयमाणः पराचीनꣳ स्वाध्यायमधीयीत। यत्र क्व चाशान्तिकृतं पश्येत् पुनरेव शान्तिं कृत्वाधीयीत। अधीत्य चोत्तमेन। प्रवर्ग्यायोपनिष्क्रम्य नाप्रविश्य ग्राममन्यदधीयीतान्यदधीयीत॥

## ४. प्रवर्ग्यसंभरणम्

बौधायनश्रौ०—

[ ९.१-४ ]—प्रवर्ग्यᳪ संभरिष्यन्नुपकल्पयते खादिरीमौदुम्बरीं वैणवीं वैकङ्कतीं वाभ्रिं व्याममात्रीं वारत्निमात्रीं वोभयतःक्ष्णूं मृदं च भावितां करणीयां कृष्णाजिनं वराहविहतं वल्मीकवपामूतीकस्तम्बं वादारस्तम्बं वा छागापयोऽर्मकपालानि शर्करा अवाञ्जनपिष्टा अजलोमानि कृष्णाजिनलोमानि सूत्रामधिकरणीं कर्तारं कुशलं वेणुकाण्डं मदन्तीरिति। 'अथामावास्येन वा हविषेष्ट्वा नक्षत्रे वा पूर्वाᳪ शान्तिमुपयन्ति नमो वाचे इति। अथाग्रेण शालां धनुर्मात्रे वेद्यै गर्तं खानयति। तद्भावितां मृदमवलेपयति। समां बिलेन करोति। तदुपसादयति वराहविहतं वल्मीकवपामूतीकस्तम्बं वादारस्तम्बं वा स्थाले छागापय इति। अथोत्तरतः पार्श्वतः संभाराणां प्राचीनाग्राणि तृणानि सᳪस्तीर्य तेषूपरि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति। अथोत्तरᳪ शालाखण्डमग्रेण स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति। तं परिमण्डलं खरं करोति। अथैनᳪ सिकताभिराश्रशिनं करोति। तं कुशतरुणकैर्दूर्वाग्रन्थिभिरिति संप्रच्छाद्याथैनं परिश्रयन्ति। तस्योदीचीं द्वारं कुर्वन्ति। तदुपसादयत्यर्मकपालानि शर्करा अवाञ्जनपिष्टा अजलोमानि कृष्णाजिनलोमानि सूत्रामधिकरणीं कर्तारं कुशलं वेणुकाण्डमिति। अथ गार्हपत्ये मदन्तीरपोऽधिश्रयति। अन्तर्वेद्यभ्रिं निदधाति। परिश्रयन्ति द्वाराणि। पत्नीशाले पत्नीं परिश्रयन्ति। परिस्तृणन्ति। दक्षिणत उपविशतो ब्रह्मा च यजमानश्च।

अत्र पूर्वाᳪ शान्तिमुपयन्ति येषामनुपेता भवति। अथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये सावित्रं जुहोत्यन्वारब्धे यजमाने युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहा इति। जुहोत्यदीक्षितस्य। जपति दीक्षितस्य। अथाभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इति। आदायाभिमन्त्रयते अभ्रिरसि नारिरस्यध्वरकृद्देवेभ्यः इति। अथैनामादायोपोत्तिष्ठति उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा इति। प्रैति प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता। अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः इति। अथ भावितां मृदमुपतिष्ठते देवी द्यावापृथिवी अनु मेऽमᳪसाथाम् इति। अभ्रिया प्रहरति ऋध्यासमद्य मखस्य शिरः इति। मखाय त्वा इति हरति। मखस्य त्वा शीर्ष्णे इत्युत्तरतः कृष्णाजिने निवपत्युदूह्योपस्थानम्। एवमेव द्वितीयᳪ हरति। एवं तृतीयम्। तूष्णीं चतुर्थम्। पर्येतस्यै शिनष्टि। अथ वराहविहतमुपतिष्ठते इयत्यग्र आसीः इति। अभ्रिया प्रहरति ऋध्यासमद्य मखस्य शिरः इति। मखाय त्वा इति हरति। मखस्य त्वा शीर्ष्णे इत्युत्तरतः कृष्णाजिने निवपत्युदूह्योपस्थानम्। एवमेव द्वितीयᳪ हरति। एवं तृतीयम्। तूष्णीं चतुर्थम्। पर्येतस्य शिनष्टि। अथ वल्मीकवपामुपतिष्ठते देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीः इति। अभ्रिया प्रहरति ऋध्यासमद्य मखस्य शिरः इति। मखाय त्वा इति हरति। मखस्य त्वा शीर्ष्णे इत्युत्तरतः कृष्णाजिने निवपत्युदूह्योपस्थानम्। एवमेव द्वितीयᳪ हरति। एवं तृतीयम्। तूष्णीं चतुर्थम्। पर्येतस्यै शिनष्टि। अथोतीकस्तम्बं वादारस्तम्बं वोपतिष्ठते इन्द्रस्यौजोऽसि इति। अभ्रिया प्रहरति ऋध्यासमद्य मखस्य शिरः इति। मखाय त्वा इति हरति। मखस्य त्वा शीर्ष्णे इत्युत्तरतः कृष्णाजिने निवपत्युदूह्योपस्थानम्। एवमेव द्वितीयᳪ हरति। एवं तृतीयम्। तूष्णीं चतुर्थम्। पर्येतस्य शिनष्टि। अथ छागापय उपतिष्ठते अग्निजा असि प्रजापते रेतः इति। अभ्रिमवदधाति ऋध्यासमद्य मखस्य शिरः इति। मखाय त्वा इति हरति। मखस्य त्वा शीर्ष्णे इत्युत्तरतः कृष्णाजिने मृदि प्रश्चोतयत्युदूह्योपस्थानम्। एवमेव

द्वितीयं प्रश्चोतयति। एवं तृतीयम्। तूष्णीं चतुर्थम्। चतुर्थेन सह सर्वश एवैतच्छागापय स्थालेन मृदि परिषिञ्चति। अत्रैतानतिशेषानपोऽभ्यवहरन्ति। अत्रैव वा प्रकिरन्ति। प्रायश्चित्ताय वा परिशाययन्ति।

अथ प्रवर्ग्यमाददतेऽवनाम्य मुखान्यनभिप्रश्वसन्तः। न प्रवर्ग्यं चादित्यं चान्तर्दधति। बहवो हरन्तीति विज्ञायते। अथैनमानयन्ति ऐतु ब्रह्मणस्पतिरा देव्येतु सूनृता। अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः इति। अथैनं खर उपावहरन्ति आयुर्धेहि प्राणं धेह्यपानं धेहि व्यानं धेहि चक्षुर्धेहि श्रोत्रं धेहि मनो धेहि वाचं धेह्यात्मानं धेहि प्रतिष्ठां धेहि मां धेहि मयि धेहि इति। अथैनमर्मकपालैः शर्कराभिरवाञ्जनपिष्टाभिरजलोमैः कृष्णाजिनलोमैरिति सꣳसृज्य मदन्तीभिरुपसृजति मधु त्वा मधुला करोतु इति। पिण्डं करोति मखस्य शिरोऽसि इति। यज्ञस्य पदे स्थः इत्यङ्गुष्ठाभ्यामुपनिगृह्णाति। अथ तृतीयं मृदोऽपच्छिद्य त्रीन् पिण्डान् करोति। तेषामेकं कर्त्रे प्रयच्छति गायत्रोऽसि इति। तेनास्य बुध्नं करोति गायत्रेण त्वा छन्दसा करोमि इति। अतिशिष्टायै मृदोऽर्धं प्रयच्छति त्रैष्टुभोऽसि इति। तेनास्य मध्यं करोति त्रैष्टुभेन त्वा छन्दसा करोमि इति। सर्वामन्ततो मृदं प्रयच्छति जागतोऽसि इति। तेनास्य बिलं करोति जागतेन त्वा छन्दसा करोमि इति। तं प्रादेशमात्रं पृथुबुध्नं मध्ये लग्नं करोति। अथास्य वेणुकाण्डेन द्विभागमवविध्यति। तदस्य पिन्वनं भवति। अथास्य त्र्यङ्गुले वा चतुरङ्गुले वा रास्नां पर्यस्यति मखस्य रास्नासि इति। अथास्य बिलं गृह्णाति अदितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसा इति। अथैनमादित्येनाभितपति सूर्यस्य हरसा श्राय इति। अथैनं खरे निदधाति। निहितमनुमन्त्रयते मखोऽसि इति। एवमेव द्वितीयं महावीरं करोति। एवं तृतीयम्। तूष्णीं पिन्वने रौहिणकपाले चाज्यस्थालीं च।

अथ या मृदतिशिष्यते तया प्रवाते प्रतिलेपमुपवातयति। तेषूपवातेषूपकल्पयत एकविꣳशतिं वृष्णो अश्वस्य शकृत्पिण्डानग्निमग्निं पचनमिति। अथाश्वशकमादीप्य मुख्यं महावीरं धूपयति वृष्णो अश्वस्य निष्पदसि वरुणस्त्वा धृतव्रत आधूपयतु मित्रावरुणयोर्ध्रुवेण धर्मणा इति। अन्तरतश्च बाह्यतश्च सुधूपितं कृत्वा निदधाति। एवमेव द्वितीयं महावीरं धूपयति। एवं तृतीयम्। तूष्णीं पिन्वने रौहिणकपाले चाज्यस्थालीं च। अथोत्तरेण शालामुखबिलमिवावटं खानयति। तं पचनेनावस्तीर्य तस्मिन् प्राचो वोदीचो वा महावीरानायातयति। पुरस्तात् पिन्वने। पश्चाद्रौहिणकपाले चाज्यस्थालीं च। अथैनान् पचनेनोपरिष्टात् संप्रच्छाद्य मृदावलिम्पति। चतुरङ्गुलमनुदिशमादीपनायातिशिनष्टि। अथोपोषति अर्चिषे त्वा इति पुरस्तात्। शोचिषे त्वा इति दक्षिणतः। ज्योतिषे त्वा इति पश्चात्। तपसे त्वा इत्युत्तरतः। तेऽह्ना वा रात्र्या वा पच्यन्ते। यदि प्रातरुपोषति सायमुपैति। यदि सायं प्रातः। तेषु पक्केषूपकल्पयते गोपयश्छागापयो धृष्टिमश्मसंदावꣳ सतꣳ संदꣳशं खारीꣳ शिक्यं कृष्णाजिनमिति। एतत्समादायाभ्यैति अभीमं महिना दिवं मित्रो बभूव सप्रथाः। उत श्रवसा पृथिवीम्॥ मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम्। द्युम्नं चित्रश्रवस्तमम् इति। अथ धृष्टिमादत्ते सिद्ध्यै त्वा इति। तया मुख्यान्महावीरादङ्गारानुद्वपति देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः। सुबाहुरुत शक्त्या इति। अथैनमुच्छ्रयति उत्तिष्ठ बृहन् भवोर्ध्वस्तिष्ठ ध्रुवस्त्वम् इति। अथैनमाशये प्रतिष्ठापयति अपद्यमानः पृथिव्यामाशा दिश आपृण इति। अथैनमन्वीक्षते सूर्यस्य त्वा चक्षुषान्वीक्ष ऋजवे त्वा साधवे त्वा सुक्षित्यै त्वा भूत्यै त्वा इति। अथैनं प्रदक्षिणं पुरीषेण पर्यूहति इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामि इति यथावर्णम्। अथैनꣳ संदꣳशेन परिगृह्य सतेऽवधाय छागापयसाच्छृणत्ति गायत्रेण त्वा छन्दसाच्छृणद्मि त्रैष्टुभेन त्वा छन्दसाच्छृणद्मि जागतेन त्वा

छन्दसाच्छृणद्मि छृणत्तु त्वा वाक् छृणत्तु त्वोर्क् छृणत्तु त्वा हविश्छृन्द्धि वाचं छृन्ध्यूर्जं छृन्द्धि हविर्देव पुरश्चर सध्यासं त्वा इति । अन्तरतश्च बाह्यतश्च स्वाच्छृण्णं कृत्वा गोपयसाभिविष्यन्दयति । एवमेव द्वितीयं महावीरमाच्छृणत्ति । एवं तृतीयम् । तूष्णीं पिन्वने रौहिणकपाले चाज्यस्थालीं च । अथ यदि विधुर्वा प्रदरो वा जायतेऽश्मचूर्णानि छागापयसि संप्रकीर्य तैः प्रत्युक्ष्योल्मुकेनाभितपति विधुं दद्राणं, यद्दते चिदभिश्रिषे इति द्वाभ्याम् । सꣳ हैव रोहति । यद्यु वै सर्वश एव भिद्यत एतान्येव कपालान्यवाञ्जनं पिष्ट्वा यैषा मृत् प्रायश्चित्ताय परिशेते तया सꣳसृज्य कृत्वा पक्त्वाच्छृद्य निदधाति । तेषां यदा श्वसथ उपरमत्यथैतान् खार्याꣳ समवधाय कृष्णाजिनेनोपरिष्टात् संप्रच्छाद्योत्तरे शालाखण्डे शिक्य आसजति यथा पत्नी न पश्यति तथा। त आ कालात् परिशेरे । अथोत्तराꣳ शान्तिमुपयन्ति शं नो वातः पवतां मातरिश्वा इति ॥

## ५. अप्सुदीक्षा दीक्षणीयेष्टिश्च

बौधायनश्रौ०—

१. [ ६.१-३ ]—अथामावास्येन वा हविषेष्ट्वा नक्षत्रे वारण्योरग्नीन् समारोह्य शालामभिप्रैति । [ २१.७—स ह स्माह बोधायनो नाहुत्वा राजानं चार्त्विजश्च दीक्षयेदिति ॥ अत्रो ह स्माह शालीकिर्यदि दीक्षा दीर्घाः स्युराश्वासिवा आहर्तारस्तथोद्गीथः कामं दीक्षयेदिति ॥ शालाया अध्यवसान इति॥ स ह स्माह बोधायनो मध्यंदिने शालामध्यवस्येत् । आपः पूर्वा गच्छेयुरन्वग्यजमानो राज्ञा चारणिभ्यां चेति ॥ अत्रो ह स्माह शालीकिः कामं पूर्वाह्णे वापराह्णे वा शालामध्यवस्येत् । प्राक्त्वेवास्तमयाद्दीक्षणीयाꣳ संतिष्ठापयिषेदिति ॥ अग्नीनाꣳ हरण इति ॥ अजस्रान् हरेदिति बोधायनः ॥ अरण्योः समारोह्येति शालीकिः ॥] [ २४.१७—कथमु खल्वग्न्याधेये सोम इति । पूर्णाहुत्यन्तं कर्म कृत्वा शालामध्यवस्येत् । दीक्षणीयामाग्नेयोऽष्टाकपालोऽनुवर्तेत प्रायणीयामैन्द्राग्नश्चादित्यश्च चरुरातिथ्यामग्नये पवमानाय पुरोडाशोऽष्टाकपालोऽग्नीषोमीयस्य पशुपुरोडाशमग्नये पावकायाग्नये शुचये प्रातःसवनीयानन्वारम्भेष्टिः । अपि वा सर्वाण्येवाग्न्याधेयिकानि हवीꣳषि परिनिष्ठाप्य शालामध्यवस्येदुदवसानीयामन्वारम्भेष्टिरिति । ] उत्तरेण शालां परीत्य पूर्वया द्वारा शालां प्रपाद्य गार्हपत्यस्यायतने मथित्वाग्नीन् विहृत्य मध्यमे वꣳशे राजानं प्रग्रथ्नन्ति । परिस्तृणन्ति । दक्षिणत उपविशतो ब्रह्मा च यजमानश्च । अथ गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा सप्तहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहा इति । [ २१.७-सप्तहोतुर्होम इति ॥ सूत्रं बोधायनस्य ॥ षड्ढोतारꣳ हुत्वा सप्तहोतारं जुहुयादिति शालीकिः ॥ ] अपरं चतुर्गृहीतं गृहीत्वा यूपाहुतिं जुहोति यद्यत्र जुहोति । [ २१.७—यूपाहुत्यै हवन इति ॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः ॥] पूर्वाह्ण एवैतौ व्रतदुघयोर्वत्सौ बध्नन्ति । अथाभ्यां व्रतोपायनीयं पाचयति । तस्याशितौ भवतः सर्पिर्मिश्रस्य पयोमिश्रस्य । [ २१.७—व्रतप्रदान इति ॥ कꣳस इति बोधायनः ॥ चमस इति शालीकिः ॥ ] अथाध्वर्युस्तीर्थ्यान् संभारान् याचति । अथाह एहि यजमान इति । पूर्वया द्वारोपनिष्क्रम्य यत्रापस्तद्यन्ति । [ २१.८—तीर्थगमन इति ॥ स ह स्माह बोधायनः प्रदक्षिणमावृत्यैतत्तीर्थं गच्छेदथामुतोऽपसलैरावर्तेतेति ॥ अत्रो ह स्माह शालीकिरपसलैरावृत्यैतत्तीर्थं गच्छेदथामुतः प्रदक्षिणमावर्तेतेति ॥ ] अथास्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरुनत्ति आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे इति । ऊर्ध्वाग्रं बर्हिरनूच्छ्रयति ओषधे त्रायस्वैनम् इति । स्वधितिं तिर्यञ्चं निदधाति स्वधिते मैनꣳ हिꣳसीः इति । प्रवपति देवश्रूरेतानि प्र वपे इति । स्वस्त्युत्तराण्यशीय

इत्युप्तान्तं प्रत्यभिमृशते। एतयैवावृतोत्तरं गोदानमद्भिरुनत्ति यजुषा वा तूष्णीं वा। [२१.८—अथास्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरुनत्तीति ॥ सूत्रं बोधायनस्य। उभयमेवाप्यस्य मन्त्रेण कुर्यादिति शालीकिः ॥] नापिताय क्षुरं प्रयच्छन्नाह नापितोप्तकेशश्मश्रुं मे निकृत्तनखं प्रब्रूतात् इति। तं तथा प्राह। अथैनमद्भिरभिषिञ्चति आपो अस्मान् मातरः शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु इति। संप्रधाव्य रजः प्रप्लावयति विश्वमस्मत् प्र वहन्तु रिप्रम् इति। उदेति उदाभ्यः शुचिरा पूत एमि इति। वसनस्यान्तेन प्रतिच्छाद्याप आचामति। अपोऽश्नातीति ब्राह्मणम्। [१४.१—अथ वै भवति आङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन्। अप्सु स्नाति। साक्षादेव दीक्षातपसी अवरुन्द्धे इत्येतदिति ब्रूयादिति ॥] अथ प्रदक्षिणमहतं वासः परिधत्ते सोमस्य तनूरसि तनुवं मे पाहि इति। अथास्यैतन्नवनीतं विचितमुदशराव उपशेते। तस्य पाणिभ्याᳲं संप्रम्लाय मुखमेव प्रथममभ्यङ्क्ते महीनां पयोऽसि वर्चोधा असि वर्चो मयि धेहि इति। [२१.८—अभ्यञ्जन इति ॥ सूत्रᳲं शालीकेः ॥ अत्रो ह स्माह बोधायनः महीनां पयोऽसि इत्यादाय वर्चोधा असि वर्चो मयि धेहि इत्यभ्यञ्जीतेति ॥] अनुलोममा पादाभ्याम्। अन्योऽस्य पृष्ठमभ्यनक्ति। अथास्यैतदाञ्जनं पिष्टं दृषद्युपशेते सतूला च शरेषीका। तस्य प्राङ्मुखस्य प्रत्यङ्मुख उपविश्य सव्येन पाणिना दक्षिणमक्ष्यनक्ति वृत्रस्य कनीनिकासि चक्षुष्पा असि चक्षुर्मे पाहि इति त्रिरनिधावम्। द्विरुत्तरम्। अप्सु पञ्च कृत्व आङ्क्त इति ब्राह्मणम्। पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरम्। [२१.८—आञ्जन इति ॥ सूत्रᳲं शालीकेः ॥ अत्रो ह स्माह बोधायनः वृत्रस्य कनीनिकासि इत्यादाय चक्षुष्पा असि चक्षुर्मे पाहि इत्याञ्जीतेति ॥ त्रिरनिधावं द्विरुत्तरमप्सु पञ्च कृत्व आङ्क्त इति ब्राह्मणं पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरमिति ॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः ॥]

अथैनमेकविᳲंशत्या दर्भपुञ्जीलैः पवयति चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः इति। [२१.८—पवन इति ॥ स ह स्माह बोधायनस्त्रीन् सप्तवर्गान् कृत्वा तेषामेकेन प्राणदेशे पवयेदथेतरेण नाभिदेशेऽथेतरेण गुल्फदेशे। अथैनान्यद्भिरभ्युक्ष्योदञ्च्युत्खिदेदिति ॥ अत्रो ह स्माह शालीकिर्द्वाभ्यां पवयति त्रिभिः पवयतीत्येतैरेनमेकविᳲंशत्यावग्राहशः पवयित्वाथैनान्यद्भिरभ्युक्ष्योदञ्च्युत्खिदेदिति ॥ अत्रो ह स्माहौपमन्यवः समस्तैरेवैनं प्राणदेशे पवयेत् चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः इति। देवतायांदेवतायामतिवाच्याद्भिरभ्युक्ष्योदञ्च्युत्खिदेदिति ॥] यजमानमतिवाचयति तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयम् इति। अथैनᳲं सव्ये पाणावभिपाद्य शालामानयति आ वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामहे इति। [२.१८—अथैनᳲं सव्ये पाणावभिपाद्येति ॥ दक्षिण इति प्रोक्तम् ॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः ॥] पूर्वया द्वारा शालां प्रपादयति इन्द्राग्नी द्यावापृथिवी आप ओषधीः इति। अथैनमग्रेणाहवनीयं पर्याणीय दक्षिणत उदङ्मुखमुपवेश्याहवनीयमीक्षयति त्वं दीक्षाणामधिपतिरसि इति। [२१.८—अथैनमग्रेणाहवनीयं पर्याणीयेति ॥ जघनेनेति प्रोक्तम् ॥ पूर्वः कल्पः शालीकेरुत्तरो बोधायनस्य ॥] इह मा सन्तं पाहि इत्यात्मानम्। यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता पत्न्यै दक्षिणमुपपक्षमद्भिरुनत्ति तूष्णीम्। तूष्णीमूर्ध्वाग्रं बर्हिरनूच्छ्रयति। तूष्णीᳲं स्वधितिं तिर्यञ्चं निदधाति। तूष्णीं प्रवपति। तूष्णीमुप्तान्तं प्रत्यभिमृशते। एतयैवावृतोत्तरमुपपक्षमद्भिरुनत्ति तूष्णीमेव। नापिताय क्षुरं प्रयच्छन्नाह नापितोप्तोपपक्षां मे निकृत्तनखां प्रब्रूतात् इति। तां तथा प्राह। अथैनामद्भिरभिषिञ्चति तूष्णीम्। तूष्णीᳲं संप्रधाव्य रजः प्रप्लावयति तूष्णीम्।

अद्भिरुदेति तूष्णीम् । वसनस्यान्तेन प्रतिच्छाद्याप आचामति । तूष्णीं प्रदक्षिणमहतं वासः परिधत्ते । तूष्णीमभ्यङ्क्ते । तूष्णीमाङ्क्ते । अथैनामपरिमितैर्दर्भपुञ्जीलैः पवयति तूष्णींतूष्णीमेव । अथैनामानीयापरया द्वारा शालां प्रपाद्य प्राचीमुदानयन् वाचयति प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु । अथाहमनुकामिनी स्वे लोके विशा इह इति । [ २१.८ –पत्न्या उदानयन इति ॥ सूत्रं शालीकेः ॥ अत्रो ह स्माह बोधायनः शुचिमेवैनां पवयित्वा सर्वयर्चोदानीय जघनेन गार्हपत्यमुपवेशयेदिति ॥] [ १४.२२–उक्तानि पत्नीयजूंषि । ] अथ जघनेन गार्हपत्यमुपसीदति सुप्रजसस्त्वा वयं सुपत्नीरुपसेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् इति । [ २१.८–पत्न्या दीक्षण इति ॥ सूत्रमाचार्ययोः ॥ अत्रो ह स्माहौपमन्यवः प्रायणीये हविष्कृदन्ते पत्नीं दीक्षयेदिति ॥ ]

२. [ ६.३ ]– अथ पृष्ठ्यां स्तीर्त्वापः प्रणीयाग्नावैष्णवमेकादशकपालं दीक्षणीयामिष्टिं निर्वपति । [ २५.६—अथेममाग्नावैष्णवमेके प्रागप्सुदीक्षायै ब्रुवत उपरिष्टाद्वा । क उ खलु दीक्षणीयायै बर्हिर्यजुषा कुर्यादिति । व्युपनिधाय संभारान् प्राक् पाणिसंमर्शनात् । ] तस्यै दशतयमुत्सीदति न यजमानं व्रतमुपनयति न पत्नीं संनह्यति न यजमानभागं करोति न ब्रह्मभागं न बर्हिषदं पुरोडाशं करोति नान्वाहार्यं याचति न फलीकरणहोमेन चरति न समिष्टयजुर्जुहोति न पूर्णपात्रे यजमानं वाचयति न विष्णुक्रमान् क्रमते । [ २१ ८–न यजमानं व्रतमुपनयतीति ॥ सूत्रं शालीकेः ॥ अत्रो ह स्माह बोधायनः सौमिके तन्त्रे पौरोडाशिकं याजमानमभ्यावर्तेतान्यत्र यज्ञस्य पुनरालम्भादिति ॥ न पत्नीं संनह्यतीति ॥ सूत्रं शालीकेः ॥ अत्रो ह स्माह बोधायनो दीक्षणीयायामेनां संनह्य संस्थितायां विमुच्याध्वरिकेण सह याजमानेन तन्त्रेतन्त्रे वा । अत ऊर्ध्वं पौराडाशिकेन कर्मणाभिसंनह्येदिति । ] [ २५.६– न यजमानं व्रतमुपनयति न पत्नीं संनह्यतीत्यध्वरदीक्षायै व्रतं प्रणुदते । सर्वैवैषा व्रतोपायनीया भवतीष्टिरग्रमु पत्नीसंनहनम् । न यजमानभागं करोति न ब्रह्मभागमित्याशीःसंयोजनावेवैतावुक्तौ भवतः । किमुपक्रममाणो यज्ञमाशिषं वदेदिति । अथापि सुभिक्षो व्रतोपायनीयस्य भवतीति । कस्मै किं सुभिक्षायावद्येत् । यजमानभागस्य खलूत्सादनाद् ब्रह्मभाग उत्सीदति । संयुक्तौ ह्येतौ यजमानभागब्रह्मभागाविति । न बर्हिषदं पुरोडाशं करोति नान्वाहार्यं याचतीति । दक्षिणोक्तावेवैतावुक्तौ भवतः । अन्या उ खल्विह दक्षिणाः प्रतिख्याता भवन्ति । न फलीकरणहोमेन चरति न समिष्टयजुर्जुहोतीत्यन्तपरिक्रमिणावेवैतावुक्तौ भवतः । किमुपक्रममाणो यज्ञमन्तं परिणयेदिति । न पूर्णपात्रे यजमानं वाचयति न विष्णुक्रमान् क्रमत इत्यवभृथोक्तः खलु पूर्णपात्रो भवति । अन्यः खल्विहावभृथः प्रतिख्यातो भवति । अन्तपरिक्रमिणो विष्णुक्रमाः । किमुपक्रममाणो यज्ञमन्तं परिणयेदिति ॥ ] अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङुदुत्य पत्नीः संयाज्य ॥

## ८[1]. यजमानदीक्षा

बौधायनश्रौ०—

१. [ ६.३-५ ]—प्राङेत्य ध्रुवामाप्याय्याज्यस्थाल्यां प्रत्यवनीयाज्यस्थाल्याः स्रुवेणोपघातं दीक्षाहुतीर्जुहोति आकूत्यै प्रयुजेऽग्नये स्वाहा मेधायै मनसेऽग्नये स्वाहा

1. अग्निष्टोमप्रकरणे मुद्रितं मन्त्रब्राह्मणभागमनुरुध्यैव अत्रापि विभागानां संख्याः प्रदर्शिताः ।

दीक्षायै तपसेऽग्नये स्वाहा सरस्वत्यै पूष्णेऽग्नये स्वाहा इति। [२१.८– ध्रुवाया आप्यायन इति॥ स ह स्माह बोधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेति। अध्वर्युरेव ध्रुवामाप्याय्य दीक्षाहुतीर्जुहुयादिति शालीकिः॥] अथ स्रुचि चतुर्गृहीतं गृहीत्वा स्रुचा पञ्चमीं जुहोति आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा वृधातु स्वाहा इति। अपरं चतुर्गृहीतं गृहीत्वाज्यस्य पूर्णाᳪं स्रुचमौद्ग्रहणं जुहोति विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यम्। विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा इति। [२१.८—दीक्षाहुतीनाᳪं होम इति॥ सूत्रं बोधायनस्य॥ चतुर्थीं पञ्चमीमनुद्रुत्य जुहुयादिति शालीकिः॥ अत्रो ह स्माहौपमन्यव आकूत्यै प्रयुजे इति तिस्रोऽनन्तरा हुत्वा सरस्वत्यै पूष्णेऽग्नये इत्युपातीत्य आपो देवीर्बृहतीर्विश्वशम्भुवः इत्येतां जुहुयादथौद्ग्रहणमिति॥] [२५.७—द्वादशवात्सबन्धान्युदयच्छन्निति। कतमानि खल्विमानि वात्सबन्धानि भवन्तीति। एता एव स्रुवाहुतीरन्यत्र स्वाहाकारादिति।] अत्रैतत्पूर्णपात्रमन्तर्वेदि निनयति। अथाग्रेणाहवनीयं पर्याहृत्य यजमानाय प्रयच्छति कृष्णाजिनं च कृष्णविषाणां च वासश्च मेखलां चौदुम्बरं दण्डं पञ्चममुष्णीषᳪं षष्ठम्। अथ प्रतिप्रस्थाता पत्न्यै प्रयच्छति कुम्बं च कुरीरं च वासश्च योक्त्रं च शङ्कुं च॥

अथ यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति। [२१.९–कृष्णाजिनयोरिति॥ द्वाभ्याᳪं समुम्भिताभ्यां दीक्षयेदिति बोधायनः॥ अथ यद्यन्यतरत् स्याद् दक्षिणमीमं प्रतिषीव्येदिति॥ एकमेव कृष्णाजिनᳪं स्यादिति शालीकिः॥] तस्य शुक्लकृष्णे संमृशति शुक्लेऽङ्गुष्ठो भवति कृष्णेऽङ्गुलिः ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृचः इति। [२१.९–शुक्लकृष्णयोः संमर्शन इति॥ शुक्लेऽङ्गुष्ठो भवति कृष्णेऽङ्गुलिरिति। एवᳪं शुक्लकृष्णे संमृशेदिति बोधायनः॥ पृथेनैवैतᳪं संधिᳪं संमृशेदिति शालीकिः॥ अप्येनमेकाङ्गुल्यैव संमृशेदित्यौपमन्यवः॥] अथ दक्षिणं जान्वाच्याभिसर्पति इमां धियᳪं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सᳪंशिशाधि। ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावᳪं रुहेम इति। [२१.९–कृष्णाजिनस्याभिसर्पण इति॥ सूत्रᳪं शालीकेः॥ अत्रो ह स्माह बोधायनः पूर्वं वोत्तरं वार्धर्चं विगृह्णीयात्। तृतीयेन मध्यदेशं गच्छेदिति॥] [२५.७—अथाप्युदाहरन्ति समानसंख्यानोऽग्निर्ऋचि तिस्रो देवतास्तानि द्वादश। अथेदं कृष्णाजिनं नौरुक्तं भवति। आच्य जान्वेतत्पार्श्वेत एवाभिसर्पेद्दक्षिणं प्रति रन्ध्रं यथा नावम्।] अथोपस्थं कृत्वा प्रदक्षिणं मेखलां पर्यस्यति ऊर्गस्याङ्गिरस्यूर्णम्रदा ऊर्जं मे यच्छ इति। पाहि मा मा मा हिᳪंसीः इति निष्टर्क्यं ग्रन्थिं ग्रथ्नाति। [२१.९–आख्यातं ग्रन्थिकरणम्।] एतस्मिन् काले प्रतिप्रस्थाता योक्त्रेण पत्नीᳪं संनह्यति आशासाना सौमनसम्, सं त्वा नह्यामि इति द्वाभ्याम्। [१४.२२–उक्तानि पत्नीयजूᳪंषि।] अथ यजमानं वाससा प्रोर्णोति विष्णोः शर्मासि शर्म यजमानस्य शर्म मे यच्छ इति। वसनस्यातीकाशेषु वाचयति नक्षत्राणां मातीकाशात् पाहि इति। प्रतिकृष्य वसनस्यान्तान् प्रदक्षिणमुष्णीषेण शिरो वेष्टयति श्रिया ते शिरो वेष्टयामि श्रियै यशसे ब्रह्मवर्चसाय इति। [२१.९–अथास्य प्रदक्षिणमुष्णीषेण शिरो वेष्टयतीति॥ सूत्रं बोधायनस्य॥ वाससैव संप्रच्छन्नः स्यादिति शालीकिः॥] एतस्मिन् काले प्रतिप्रस्थाता पत्न्यै कुम्बकुरीरमध्यूहति तूष्णीम्। अथास्यैषा कृष्णविषाणा त्रिवलिर्वा पञ्चवलिर्वा शाण्या रज्ज्वा परितृण्णा मण्डचरवद्भिर्ग्रथिता। तां यजमानाय प्रयच्छति इन्द्रस्य योनिरसि इति। मा मा हिᳪंसीः इति यजमानः प्रतिगृह्णाति। तां वसनस्यान्तमार्यां दशायां बद्ध्वा तयान्तर्वेदि लोष्टमुद्धन्ति कृष्यै त्वा सुसस्यायै इति। सुपिप्पलाभ्यस्त्वौषधीभ्यः इति दक्षिणं गोदानं कण्डूयते। [२१.९— कृष्णविषाणायाः प्रदान इति॥ सूत्रᳪं शालीकेः॥ अत्रो ह स्माह बोधायनः समस्तेनैवास्मै मन्त्रेण कृष्णविषाणां प्रयच्छेत्। तूष्णीं वेयन्त-

मुद्बन्धात् । तूष्णीं केशान्तमुपस्पृशेदिति ॥ ] एतस्मिन् काले प्रतिप्रस्थाता पत्न्यै शङ्कुमाबध्नाति एतेन कण्डूयस्व इति । अथास्मा ऊर्ध्वाग्रमौदुम्बरं दण्डं प्रयच्छति मुखेन संमितम् सूपस्था देवो वनस्पतिः इति । ऊर्ध्वो मा पाह्योदृचः इति यजमानः प्रतिगृह्णाति । [ २१.९—दण्डस्य प्रदान इति ॥ सूत्रमाचार्ययोः ॥ अत्रो ह स्माहौपमन्यवः समस्तेनैवास्मै मन्त्रेण दण्डं प्रयच्छेत् सूपस्था देवो वनस्पतिरूर्ध्वो मा पाह्योदृचः इति ॥ ] अथैनं यज्ञस्यान्वारम्भं वाचयति स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात् स्वाहा यज्ञं वातादारभे इति । [ २१.९-अथैनं यज्ञस्यान्वारम्भं वाचयतीति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माह बोधायनो मुष्टिकरणाः खल्वेते मन्त्रा दृष्टा भवन्ति स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात् स्वाहा यज्ञं वातादारभे इति ॥ ] अत्र मुष्टी करोति वाचं यच्छति । [ २१.९-मुष्टिकरण इति ॥ वाचोयमसंयुक्तं मुष्टिकरणꣳ स्यादिति बोधायनः ॥ आवान्तरदीक्षायै विसर्गादिति शालीकिः ॥ ]

२. [ ६.५-६ ]-अथाह अदीक्षिष्टायं ब्राह्मणोऽसावित्थंगोत्रोऽमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ता तमिन्द्रायेन्द्राग्निभ्यां वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यश्च सोमपेभ्यः प्रब्रूमः इति । त्रिरुपाꣳश्वाह । देवेभ्य एवैनं प्राह । त्रिरुच्चैरुपनिष्क्रम्य । उभयेभ्य एवैनं देवमनुष्येभ्यः प्राहेति ब्राह्मणम् । [ २१.९-आवेदन इति ॥ यथावर्णमावेदयेदिति बोधायनः ॥ अदीक्षिष्टायं ब्राह्मणः इत्येव ब्रूयादिति शालीकिः ॥ ] अथैनꣳ सꣳशास्ति दीक्षितोऽसि दीक्षितवादं वद सत्यमेव वद मानृतं मा स्मयिष्ठा मा कण्डूयथा मापावृथा यदि स्मयासा अपिगृह्य स्मयासै यदि कण्डूयासै कृष्णविषाणया कण्डूयासै यदि वाचं विसृजेर्वैष्णवीमृचमनुब्रवतान्मा त्वान्यत्र दीक्षितविमितात् सूर्योऽभ्युदियान्माभिनिम्रुक्ताद्यानि देवतानामानि यथाख्यातं तान्याचक्ष्वाथ यान्यदेवतानामानि यथाख्यातं तान्याचक्षाण उपरिष्टाद्विचक्षणं धेहि चनसितवतीं विचक्षणवतीं वाचं वद कृष्णाजिनान्मा व्यवच्छेत्था दण्डाच्च इति । स एवमेवैतत्सर्वं करोति । [ १४.१—अथ वै भवति प्रजापतिरकामयत प्रजाः सृजेयेति । स तपोऽतप्यत । स सर्पानसृजत । सोऽकामयत प्रजाः सृजेयेति । स द्वितीयमतप्यत । स वयाꣳस्यसृजत । सोऽकामयत प्रजाः सृजेयेति । स तृतीयमतप्यत । स एतं दीक्षितवादमपश्यत् । तमवदत् ततो वै स प्रजा असृजतेति । तत् पृच्छन्ति कतमत्तत्तपो यत्तपस्तप्त्वा दीक्षितवादं वदतीति । ] अथोपसमिन्धनवेलायामुत्तरेणाहवनीयं तिष्ठन् संप्रैषमाह अग्नीज्ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ पत्नि वाचं यच्छ इति । संप्रेष्य वाचंयमयोर्व्रते दोहयतः । [ २१.९-व्रतदोहन इति ॥ सूत्रं बोधायनस्य ॥ अपरद्वारिकमेव यजमानव्रतꣳ स्यादिति शालीकिः ॥ ] [ २९.१३- सोमेन दीक्षितो न दद्यान्न जुहुयान्न पचेन्न जपेदिति । आदित एव विभजेदित्याहुः । व्रतोपेतो न स्नायान्नापोऽवगाहेत न वासो जह्यान्न रजः प्रप्लावयेत् । सर्वत्र यजमानस्यर्त्विजां च यावत्कर्म व्रतमुपदिशन्ति । नर्त्विजमार्त्विज्यमन्यत्र विद्यते न महर्त्विजाꣳ समासो न सर्वत्र यजमानस्यार्त्विज्यमन्यत्र सत्रात् । ] अथाध्वर्युः पूर्वया द्वारोपनिष्क्रम्य दोहयित्वैतेनैव यथेतमेत्य गार्हपत्येऽग्निहोत्रविधिं चेष्टित्वा तप्त्वोगुदद्वास्य शीतीकृत्वातच्य वानातच्य वोत्तरे शालाखण्डे शिक्य आसजति । अथ प्रतिप्रस्थाता दक्षिणया द्वारोपनिष्क्रम्य दोहयित्वैतेनैव यथेतमेत्य व्रतश्रपणे तप्त्वोदगुद्वास्य शीतीकृत्वातच्य वानातच्य वा दक्षिणे शालाखण्डे शिक्य आसजति ।

३. [ ६.६-७ ]— अथोदितेषु नक्षत्रेषु यजमानः कृष्णाजिनमासज्य पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन् भूर्भुवः सुवर्व्रतं कृणुत व्रतं कृणुत इति त्रिर्वाचं विसृजते । [२५.७- अथेमानि दैक्षाणि व्रतानि सायमुपक्रमाणि प्रातरपवर्गाणि । अथौपसदानि प्रातरुपक्रमाणि सायमपवर्गाणि । अथेदं दैक्षं व्रतं परिश्रित्यैव व्रतयेत् । आहवनीय एवैतत्पुराग्निहोत्रꣳ हूयते स मानुष्यास्यतीति । ] अथातिथीनामुपस्थामेति । चनसितवतीं विचक्षणवतीं वाचं वदति ।

स यद्यु हामेध्यमुपाधिगच्छति तज्जपति अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा हासीः इति ।। १४.१— अथ वै भवति यद्वै दीक्षितोऽमेध्यं पश्यत्यपास्माद्दीक्षा क्रामति। नीलमस्य हरो व्येतीति। सोऽमेध्यं दृष्ट्वा जपति अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा हासीः इत्याह। नास्माद् दीक्षापक्रामति। नास्य नीलं न हरो व्येतीति ब्राह्मणम्॥] [२५-७ नक्तं चेदमेध्यं पश्येदाहवनीयमेवैतेन यजुषोपतिष्ठेत।] अथ यद्येनमभिवर्षति उन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्ट इत्येवं तत्र जपति। [१४.१— अथ वै भवति यद्वै दीक्षितमभिवर्षति दिव्या आपोऽशान्ता ओजो बलं दीक्षां तपोऽस्य निर्घ्नन्तीति। सोऽभिवृष्यमाणो जपति उन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्ट इत्याह। एतदेव सर्वमात्मन् धत्ते। नास्यौजो बलं न दीक्षां न तपो निर्घ्नन्तीति ब्राह्मणम्॥] तस्यैते यजुषी परिप्लवे आ सꣳस्थायै भवतः। [२१.१०-यजुषोरनुषङ्ग इति॥ आ कृष्णाजिनप्रासनादनुषज्जेतामिति बोधायनः॥ आवान्तरदीक्षायै विसर्गादिति शालीकिः॥ आ दक्षिणानयनादित्यौपमन्यवः॥] अथास्मै निपतः काले यजमानायतने कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति। स यदि बहुतयमुपस्तीर्णं भवति कृष्णाजिनादेवानन्तर्हितः संविशति। अथ संवेशनयजुर्जपति अग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहि। गोपाय नः स्वस्तये प्रबुधे नः पुनर्ददः इति। [२१.१०-संवेशनयजुषीति॥ सूत्रꣳ शालीकेः॥ अत्रो ह स्माह बोधायनः अग्ने त्वꣳ सु जागृहि इत्येव संविशेत्। व्रतयिष्यन्नप आचामेत् दैवीं धियं मनामहे इति॥] दक्षिणतः शय एतद्वै यजमानस्यायतनꣳ स्व एवायतने शयेऽग्निमभ्यावृत्य शये देवता एव यज्ञमभ्यावृत्य शय इति ब्राह्मणम्। अथैषा पत्नी जघनेन गार्हपत्यꣳ संविशति तूष्णीम्। अथाध्वर्युर्मध्यरात्र आद्रुत्य प्रबुद्धयजुर्वाचयति त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा। त्वं यज्ञेष्वीड्यः इति। [२१.१०- संवेशनयजुः प्रबुद्धयजुः प्रयाणयजुः पर्याणयजुरिति॥ अनुषङ्गीण्येतानि भवन्तीति बोधायनः॥ सकृत्कृतान्येवैतान्यह्ने वा रात्रियै वा स्युरिति शालीकिः॥] अथाप आचामति दैवीं धियं मनामहे सुमृडीकामभिष्टये। वर्चोधां यज्ञवाहसꣳसुपारा नो असद् वशे इति। अथास्मै कꣳसे वा चमसे वा निःषिच्य व्रतं प्रयच्छति। तद्दक्षिणतः परिश्रित्य व्रतयति ये देवा मनोजाता मनोयुजः सुदक्षा दक्षपितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा इति। [२८.९-व्रतयित्वाप आचम्य जपति शिवाः पीता भवथ यूयमापोऽस्माकं योनावुदरे सुशेवाः। इरावतीरनमीवा अनागसः स्वस्ति नो भवथ जीवसे इति।] यजुषा यावन्मात्रं व्रतयित्वा तूष्णीं भूयो व्रतयति। एतस्मिन् काले प्रतिप्रस्थाता पत्न्यै पात्रे निःषिच्य व्रतं प्रयच्छति। तत् सा परिश्रित्य व्रतयति तूष्णीम्। निर्णिज्य पात्रे प्रयच्छतः। अथ तथैव पुरा नक्षत्राणामन्तर्धानात् संप्रेष्य वाचंयमयोर्व्रते दोहयतः। अथोदित आदित्ये यजमानः कृष्णाजिनमासज्य पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन् भूर्भुवः सुवर्व्रतं कृणुत व्रतं कृणुत इति त्रिर्वाचं विसृजते। समानो वाचो विसर्गः समानꣳ संवेशनयजुः समानं प्रबुद्धयजुः समानमपामाचमनꣳ समानं व्रतनम्।

४. [६.७-८]-अथ सनीहारान् प्रहिणोति। [२१.१०-अथ सनीहारान् प्रहिणोतीति॥ अन्यत्रोग्रशूद्रयोरिति बोधायनः॥ अन्यत्रोग्रेरिति शालीकिः॥ सर्वान् यज्ञसिद्धय इत्यौपमन्यवः॥] स यं मन्यते न मा प्रत्याख्यास्यतीति तं प्रथममभि प्रहिणोति विश्वे देवा अभि मामावृत्रन् पूषा सन्या सोमो राधसा देवः सविता वसोर्वसुदावा इति। आहरन्तं दृष्ट्वा जपति नानाहरन्तं रास्वेयत् सोमा भूयो भर मा पृणन् पूर्त्या वि राधि माहमायुषा इति। स यथारूपं प्रतिगृह्णाति। चन्द्रमसि इति हिरण्यम्। वृत्रमसि इति वासः। उस्राऽसि इति गाम्। हयोऽसि इत्यश्वम्। छागोऽसि इति छागम्। मेषोऽसि

इति गेषम् । [ २१.१०-दक्षिणानां प्रतिग्रह इति ॥ स ह स्माह बोधायनो यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात् पुनरत्यागतं मन्त्रेणैव प्रतिगृह्णीयादिति ॥ अत्रो ह स्माह शालीकिर्यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात् प्रतिगृहीतमेव तस्य स्यात् । आगन्त्वेवास्यात ऊर्ध्वं मन्त्रेणैव प्रतिगृह्णीयादिति ॥ ] अथ यद् ब्राह्मणेनानादिष्टं भवति प्राजापत्यमसि मम भोगाय भव इत्येव तत्प्रतिगृह्णाति । [ २१.१०- अविज्ञातार्थे दान इति ॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः ॥ ] ताः समुदायुत्य रक्षन्ति । तासां याऽनश्यति वा म्रियते वा वायवे त्वा इति तामनुदिशति । याप्सु वा पाशे वा वरुणाय त्वा इति ताम् । या सं वा शीर्यते गर्ते वा पतति निर्ऋत्यै त्वा इति ताम् । यामहिर्वा व्याघ्रो वा हन्ति रुद्राय त्वा इति ताम् । तासां तिस्रः पराच्यः । अथ येयं नष्टा यदि विन्देयुः कथꣳ स्यादिति । एतदनुदिष्टैव स्यादित्येतदेकम् । कमस्या अतः श्रेयाꣳसं प्रतिग्रहीतारं लभेत । दक्षिणाभिरेवैनाꣳ सह दद्यादित्येकम् । वायव्ययैवैनया यजेतेत्येतदपरम् ॥ [ ९.५—श्वो राज्ञः क्रय इत्युपकल्पयत औदुम्बरीꣳ सम्राडासन्दीमौदुम्बरीꣳ स्थूणां गोदोहनीमौदुम्बरं छागार्थे शङ्कुमौदुम्बरꣳ शफोपयमनमौदुम्बरꣳ स्रुवमौदुम्बर्यौ स्रुचावनिष्कीर्णे रौहिणहवणी द्वे औदुम्बरी धृष्टी त्रीणि धवित्राणि कार्ष्णाजिनान्यौदुम्बरदण्डानि । वैणवदण्डानीत्येके । षडौदुम्बराञ्छकलान् वैकङ्कतीं च समिधं त्रयोदश वैकङ्कतान् परिधीन् वैकङ्कतीꣳ स्रुचं प्रचरणीं कार्ष्मर्यमयान् परिधीन् सुवर्णरजतौ च रुक्मौ द्वे घर्मदुघे धेनुं च छागां च द्वौ कुशमयौ वेदावेकं मौञ्जं वेदमपरिवासितं मौञ्जं रज्जुदाम मुञ्जप्रलवान् रौहिणपिष्टानि खरेभ्यः सिकता इति ॥ ]

## ९. प्रयाणं प्रायणीयेष्टिश्च

बौधायनश्रौ०—

१. [ ६.९–१० ] अथातः प्रयाणस्यैव मीमाꣳसा । दीक्षितं वायोगक्षेमो विन्दत्यन्यत्र वा देवयजनाद्दीक्षते सꣳसृजन्ति व्रते । संबध्नन्ति व्रतदुघयोर्वत्सौ । आदधति यदाधेयं भवति नीडे गार्हपत्यं प्रउग आहवनीयम् । अपि वारण्योरग्नीन् समारोह्य बृहस्पतिवत्यर्चा प्रयाति भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्तु इति । [ १४.१- अथ वै भवत्यग्निर्वै दीक्षितस्य देवता । सोऽस्मादेतर्हि तिर इव यर्हि यातीति । सोऽस्मात् समारूढस्तिर इव भवति । सोऽरण्योरग्नीन्त्समारोह्य बृहस्पतिवत्यर्चा प्रयाति । भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्याह । ब्रह्म वै देवानां बृहस्पतिः । तमेवान्वारभते । स एनꣳ संपारयतीति ब्राह्मणम् । ] [ २१.१०-प्रयाण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बोधायनस्य ॥ ] अथ यद्येनं यान्तं व्रतनवेलोपाधिगच्छत्युत्तरतोऽरणी निधाय दक्षिणतः परिश्रित्य व्रतयति । तूष्णीं तृणोदकायावस्यति । [ २१.१०-अथ यद्येनं यान्तं व्रतनवेलोपाधिगच्छतीति ॥ मथित्वाग्नीन् विहृत्य व्रतयेदिति बोधायनः ॥ उत्तरतोऽरणी निधाय दक्षिणतः परिश्रित्य व्रतयेदिति शालीकिः ॥ ] अथ यद्यपर्याणा अप उपाधिगच्छति तज्जपति देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं वो माव क्रमिषमच्छिन्नं तन्तुं पृथिव्या अनु गेषम् इति । सं वा गाहते सं वा तरति । सेतुमेव कृत्वात्येतीति ब्राह्मणम् । [ २१.१०-अथ यद्यपर्याणा अप उपाधिगच्छतीति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माह बोधायनो यत्रैवापर्याणा अप उपाधिगच्छेत् तज्जपेत् देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तान् वो गृह्णामि इति । त्रीन् लोष्टानाददीत । तेषामेकमुदकान्ते निदध्यात् तं वो मावक्रमिषम् इति । अथान्यं ध्वꣳसयन्ननुव्रवेत् अच्छिन्नं तन्तुम् इति । अथान्यमुदकान्ते निदध्यात् पृथिव्या अनु गेषम् इति । सं

वा गाहते सं वा तरति । सेतुमेव कृत्वात्येतीति ब्राह्मणम् ॥ ] [ १४·१-प्रज्ञातमपां संयानस्य । ] अथ यत्र वत्स्यन् भवति तदवस्यति अथेमवस्य वर आ पृथिव्याः इति । अथादित्यमुद्यन्तमुपतिष्ठते आरे शत्रून् कृणुहि सर्ववीरः इति । अथ यत्र यक्ष्यमाणो भवति तदवस्यति एदमगन्म देवयजनं पृथिव्याः इत्यान्तादनुवाकस्य । [ १४·१-उक्तमध्यवसानस्य । ]

अथातः क्रयस्यैवोपवसथः पर्याप्लवते । स उपकल्पयते चन्द्रं च छागां च कृष्णबलक्ष्यावूर्णास्तुके उष्णीषं द्वे वाससी द्वे कृष्णाजिने सोमक्रयणीं सैषारुणा पिङ्गलैकहायनी भवति सोमवाहनावनड्वाहौ सोमवाहनमनः प्रक्षालितमुद्धृतफलकं रोहितं चर्मानडुहं इध्ममिध्माबर्हिः कार्ष्मर्यमयान् परिधीनाश्ववालं प्रस्तरमैक्षवी विधृती स्थालीं पञ्चरणीमंशुग्रहणं हिरण्यमौदुम्बरीं राजासन्दीं तस्यै नाभिदघ्नाः पादा भवन्त्यरत्निमात्राणि शीर्षाण्यनूच्यानि । [ २१·११-रोहिते चर्मणीति ॥ सूत्रं बोधायनस्य ॥ अप्यरोहितं स्यादिति शालीकिः ॥ अंशुग्रहणे हिरण्य इति ॥ कुर्यादिति बोधायनः ॥ न कुर्यादिति शालीकिः ॥ ] सा मौञ्जीभी रज्जुभिर्व्यूता भवत्येकसराभिः । मनाग्वर्षीयसीमिव सम्राडासन्दीं यदि प्रवर्ग्यवान् सोमो भवति । अथाध्वर्युरपररात्र आद्रुत्य संशास्ति त्रिस्तनव्रतं दोहयत इति ।

२. [ ६·१०-१२ ]— प्रातरुदित आदित्ये विसृष्टायां वाच्यग्रेण शालां तिष्ठन् देवयजनमध्यवस्यति यदि पुरस्तादनध्यवसितं भवति । [ २१·११- देवयजनस्याध्यवसान इति ॥ सूत्रमाचार्ययोः ॥ अत्रो ह स्माहौपमन्यवः पुरस्तादेवैतत् त्रैविध्यगतेषु देवयजनमध्यवस्येत् । विज्ञायते सा वा इयं सर्वैव वेदिरिति ॥ ] [ ९·५-अथ[1] प्रायणीयेन चरति । ] अथाह एहि यजमान इति । पूर्वया द्वारा शालां प्रपाद्य पृष्ठ्यां स्तीर्त्वापः प्रणीयादित्यं चरुं प्रायणीयामिष्टिं निर्वपति । [ २१·११-आख्यातं प्रायणीयस्य निर्वपणम् । ] हविष्कृता वाचं विसृज्य गार्हपत्य आज्यं विलाप्योत्पूयाहवनीये स्रुवाहुतिं जुहोति कविर्यज्ञस्य वितनोति पन्थां नाकस्य पृष्ठे अधिरोचने दिवः । येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान् स्वाहा इति । [ १४·२१-उक्ता प्रायणीयस्य स्रुवाहुतिः । ] अथोपनिष्क्रम्य संप्रैषमाह सोमविक्रयिन् सोमं शोधयोपरवाणां काले रोहिते चर्मण्यानडुहेऽपामन्ते ब्राह्मणो दक्षिणत आस्तां ता गावो दूरं मा गुर्यासु सोमक्रयणी च सोमवाहनौ चानड्वाहौ सोमवाहनमनः प्रक्षालयतोद्धृतफलकम् इति । यथासंप्रैषं ते कुर्वन्ति । अथैतेनैव यथेतमेत्य । अथैतं चरुं श्रपयित्वाभिघार्योदञ्चमुद्वास्य षड्ढोत्रा प्रायणीयमासादयति । [ २१·११-प्रायणीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बोधायनः ॥ अप्स्विति शालीकिः ॥ प्रायणीयस्यासादन इति ॥ षड्ढोत्रासादयेदिति बोधायनः ॥ तूष्णीमिति शालीकिः ॥ ] समानं कर्मा प्रयाजेभ्यः । पञ्च प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य संस्रावेण पञ्च कृत्वो ध्रुवामभिघार्य चरुमभिघारयत्युपभृतमन्ततः । अथ चतुर आज्यस्य गृह्णान आह पथ्यायै स्वस्तय इत्युपांशु अनुब्रूहि इत्युच्चैः । अत्याक्रम्याश्राव्याह पथ्यां स्वस्तिम् इत्युपांशु यज इत्युच्चैः । वषट्कृते पूर्वार्धे जुहोति । अथ चतुर एवाज्यस्य गृह्णान आह अग्नये इत्युपांशु अनुब्रूहि इत्युच्चैः । अत्याक्रम्याश्राव्याह अग्निम् इत्युपांशु यज इत्युच्चैः । वषट्कृते दक्षिणार्धे जुहोति । अथ चतुर एवाज्यस्य गृह्णान आह सोमाय इत्युपांशु अनुब्रूहि इत्युच्चैः । अत्याक्रम्याश्राव्याह सोमम् इत्युपांशु यज इत्युच्चैः । वषट्कृतेऽपरार्धे जुहोति । अथ चतुर एवाज्यस्य गृह्णान आह सवित्रे इत्युपांशु अनुब्रूहि इत्युच्चैः । अत्याक्रम्याश्राव्याह सवितारम् इत्युपांशु यज इत्युच्चैः । वषट्कृत उत्तरार्धे जुहोति । अथोपस्तीर्य पूर्वार्धाच्चरोरवद्यन्नाह अदित्यै इत्युपांशु अनुब्रूहि इत्युच्चैः ।

१. प्रवर्ग्योपकल्पनानन्तरम् ।

[ २१·११–प्रायणीयस्य चर्याया इति ॥ उपांशु चरेदिति बोधायनः ॥ उच्चैरिति शालीकिः॥] पूर्वार्धादवदायापरार्धादवद्यत्यभिघारयति प्रत्यनक्ति। अत्याक्रम्याश्राव्याह अदितिम् इत्युपांशु यज इत्युच्चैः। वषट्कृते मध्ये जुहोति। अथ वै भवत्यदितिमिष्ट्वा मारुतीमृचमन्वाह मरुतो यद्ध वो दिवः इति। अथोपस्तीर्योत्तरार्धाच्चरोरवद्यन्नाह अग्नये स्विष्टकृतेऽनुब्रूहि इति। अथ वै भवत्यष्टावत्तः स्विष्टकृद् द्वादशावत्तेडा। द्विरभिघारयति न प्रत्यनक्ति। अथैतन्मेक्षणमधोऽधः स्रुचावाग्नीध्रायोत्प्रयच्छन्नाह अतिवालयतादेव मानुप्रहार्षीः इति। अत्याक्रम्याश्राव्याह अग्निं स्विष्टकृतं यज इति। वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति। अत्रैतन्मेक्षणमाहवनीयेऽतिवाल्याद्भिरभ्युक्ष्योत्तरतः सादयति। अथोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा प्राशित्रमवदायेडामवद्यति। उपहूतायामिडायामग्नीध आदधाति षडवत्तम्। प्राश्नन्ति। मार्जयन्ते। अथ परिकर्मिणः संशास्ति अनुच्छिष्टीकुर्वन्त एतं चरुं व्युध्दृत्य प्राश्नीताथैतां चरुस्थालीं सक्षामकाषामेतन्मेक्षणमेतं वेदमेतद्बर्हिश्चतुष्टयमुदयनीयाय निधत्तात् इति। शंय्वन्तः प्रायणीयः संतिष्ठते। अत्रैतत् पूर्णपात्रमन्तर्वेदि निनयति। [ २५·८–अथायं प्रायणीयः। तस्य कः कर्मण उपक्रमो भवतीति। बर्हिर्यजुषा कुर्याद्यदि पुरस्तादयजुष्कृतं स्यात्। पाणी संमृशीत। परिस्तृणीयात्। पात्राणि निर्णिज्य संसादयेत्। ब्रह्माणं दक्षिणत उपवेश्यात्रैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यं स्फ्यं निदध्यात्। स्फ्योपरि पात्रीम्। पात्र्यां व्रीहीनावपेत्। शूर्पादानप्रभृति कर्मान्तस्तायत आ प्रस्कन्दनात्। प्रस्कन्दनान्तं कर्म कृत्वाहवनीये स्रुवाहुतिं हुत्वोपनिष्क्रम्य संप्रैषमुक्त्वाभिप्रपद्य तिरः पवित्रमप आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेत्। अथाज्यं निर्वपेत्। अथाज्यमधिश्रयेत्। उभयं पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य स्तम्बयजुर्हरेत्। सिद्धमत ऊर्ध्वम्। शंय्वन्तः प्रायणीयः संतिष्ठते। को नु खल्वस्य कर्मणोऽवशेषो भवतीति। आ स्रुचां विमोकात्। न चरुहविषामाप्यनिनयनं विद्यत इति। स्थालीभिश्चैव चरुं निर्वपेदिति नु बोधायनस्य कल्पः।]

## १२. सोमक्रयः

**बोधायनश्रौ०—**

१. [ ६·१२–१३ ]–अथैतद् ध्रुवाज्यमाप्याय्य स्रुचि चतुर्गृहीतं गृहीत्वा सूत्रेण हिरण्यं निष्टर्क्यं बध्द्वा दर्भनाड्यां प्रग्रथ्य स्रुच्यवदधाति इयं ते शुक्र तनूरिदं वर्चस्तया सं भव भ्राजं गच्छ इति। अत्रैतां दर्भनाडीं स्रुग्दण्ड उपसंगृह्याहवनीये जुहोत्यन्वारब्धे यजमाने जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहा इति। अपरं चतुर्गृहीतं गृहीत्वाथ याचति स्फ्यमुदपात्रं बर्हिर्हिरण्यमिति। एतत्समादायाह एहि यजमान इति। अन्वग्यजमानोऽनूची पत्नी स्थालीं पद्धरणीमादाय पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन् यजमानमाज्यमवेक्षयति शुक्रमस्यमृतमसि वैश्वदेवं हविः इति। अथैनं हिरण्यमन्तर्धायादित्यमुदीक्षयति सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिकां यदेतशेभिरीयसे भ्राजमानो विपश्चिता इति। [ २१·११–आदित्यस्योदीक्षण इति ॥ हिरण्यमन्तर्धायादित्यमुदीक्षयेदिति बोधायनः ॥ अनन्तर्धायैवेति शालीकिः ॥ ] अथैतां सोमक्रयणीमग्रेण शालामुदीचीमतिवित्सयन्ति। [ २१·११–सोमक्रयण्या अतिवित्सन इति॥ सदसः कालेऽतिवित्सयेदिति बोधायनः। उपरवकाल इति शालीकिः॥ ] तामनुमन्त्रयते चिदसि मनासि इत्यान्तादनुवाकस्य। अथाह दक्षिणस्येर्मस्य सप्तमं पदं जोषयध्वम् इति। तस्यै षट्पदान्यनुनिक्रामति। वस्व्यसि रुद्रास्यदितिरस्यादित्यासि शुक्रासि चन्द्रासि इति। [२१·११–सोमक्रयण्यै पदस्यानुनिक्रमण इति॥ अतिक्रान्तायै पृष्ठ्याकालं

दक्षिणस्य पूर्वपदस्यानुनिक्रामेदिति बोधायनः॥ महावेदिमेवातिक्रान्तायै यस्यैव कस्य चेति शालीकिः॥ ] सप्तमं पदमभिगृह्णाति बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो वसुभिरा चिकेतु इति। अथैतस्मिन् पदे हिरण्यं निधाय संपरिस्तीर्याभिजुहोति पृथिव्यास्त्वा मूर्धन्ना जिघर्मि देवयजन इडायाः पदे घृतवति स्वाहा इति। [ २५·८-किंदेवत्या उ खलु पदाहुतिर्भवतीति। आग्नेयीत्येके। वैष्णवीत्येके। प्राजापत्येत्येके। वाग्देवत्येत्येव ब्रूयात्। ] अपोद्धृत्य हिरण्यꣳ स्फ्येन वा कृष्णविषाणया वा पदं परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि इति। [ २१·११-सोमक्रयण्यै पदस्य परिलेखन इति॥ सूत्रꣳ शालीकेः॥ अत्रो ह स्माह बोधायनः स्फ्येन च कृष्णविषाणया च पदं परिलिखेत्। अन्तरतः कृष्णविषाणा स्यादिति। ] अथैनत्स्फ्येनोपसंग्राहं यावत्सूतं पद्धरण्याꣳ संवपति अस्मे रायोऽस्मे रायः इति त्रिः। त्वे रायः इति यजमानाय प्रयच्छति। तोते रायः इति यजमानः पत्न्यै। अथ पत्नीꣳ सोमक्रयण्या समीक्षयति सं देवि देव्योर्वश्या पश्यस्व इति। अथ पत्नी यजमानमीक्षते त्वष्टीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव संदृशि इति। अथ यजमानः सोमक्रयणीमीक्षते माहꣳ रायस्पोषेण वि योषम् इति। अथैनद्धिरण्यमद्भिः प्रक्षाल्य मध्यमायामङ्गुलौ बध्नीते। अथैनं पदाशयमद्भिरुपसृजति। [ २१·१२-उदपात्रस्योपनिनयन इति। प्रदक्षिणमुपनिनयेदिति बोधायनः॥ यथोपपादमिति शालीकिः॥ ] उत्सृजन्ति सोमक्रयणीम्। नयन्ति पत्नीम्। नि पदं दधति॥ [ ९·५-प्रायणीयेन चरित्वा पदेन चरति। ]

२. [ ६·१४-१५ ]-अथात्रैव तिष्ठन् याचति चन्द्रं च छागां च कृष्णबलक्ष्यावूर्णास्तुके उष्णीषं द्वे वाससी द्वे कृष्णाजिने सोमक्रयणीमिति। अथ पृच्छति सोमविक्रयिञ्छुद्धस्ते सोमा३ इति। शुद्धः इतीतरः प्रत्याह। सुविचितꣳ राजानं पुरस्ताद्भागाभिरुपतिष्ठते एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतात् इति। [ २१·१२-राज्ञ उपस्थान इति। स ह स्माह बोधायन उपसा नामेयमोषधिर्भवति। तां दूर्तीं कुर्वीत एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतात् इति॥ अत्रो ह स्माह शालीकिः प्रत्यक्षः खल्वयꣳ राजा भवति प्रत्यक्षवदेवोपतिष्ठेत एष ते गायत्रो भाग एष ते त्रैष्टुभो भाग एष ते जागतो भागश्छन्दोमानाꣳ साम्राज्यं गच्छ इति॥ ] [ १४·१-२-अथ वै भवति यो वै सोमꣳ राजानꣳ साम्राज्यं लोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यम्। छन्दाꣳसि खलु वै सोमस्य राज्ञः साम्राज्यो लोकः। पुरस्तात् सोमस्य क्रयादेवमभिमन्त्रयेतेति। स पुरस्तात् सोमस्य क्रयादेवमभिमन्त्रयते एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतात् इति। साम्राज्यमेवैनं लोकं गमयित्वा क्रीणाति। गच्छति स्वानाꣳ साम्राज्यमिति ब्राह्मणम्। ] अथैतल्लोहितं चर्मानडुहमुत्तरलोमास्तीर्य। अथैतद् द्विगुणं वासः प्राचीनदशमुत्तरार्धे चर्मण उपस्तृणाति। अथ हिरण्यवता पाणिना राजानमभिमृशति अꣳशुना ते अꣳशुः पृच्यतां परुषा परुर्गन्धस्ते काममवतु मदाय रसो अच्युतोऽमात्योऽसि शुक्रस्ते ग्रहः इति। अथैनमतिछन्दसर्चा मिमीते। एकयैकयोत्सर्गं मिमीते। अयातयाम्नियायातयाम्नियैवैनं मिमीते। सर्वास्वङ्गुष्ठमुपनिगृह्णाति अभि त्यं देवꣳ सवितारमूण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि प्रियं मतिम्। ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा सुवः इति [ २१·१२-राज्ञो मान इति॥ सूत्रं बोधायनस्य॥ निगदन्नेवैतामृचं पञ्च कृत्वो मिमीतेति शालीकिः॥ ] पञ्च कृत्वो यजुषा

पञ्च कृत्वस्तूष्णीम्। दश कृत्वो मिमानोऽर्धवेलाꣳ राज्ञो मिमीते। अथातिशिष्टꣳ राजानम् प्रजाभ्यस्त्वा इत्युपसमूहति। समुच्चित्य वसनस्यान्तान् प्रदक्षिणमुष्णीषेणोपनह्यति प्राणाय त्वा इति। व्यानाय त्वा इत्यनुशृन्थति। अथोपरिष्टादङ्गुल्यावकाशं कृत्वा यजमानमवेक्षयति प्रजास्त्वमनु प्राणिहि प्रजास्त्वामनु प्राणन्तु इति। अथैनं चर्मणि निदधाति। तं ततः कौत्स आदत्ते। अद्भिरभ्युक्ष्य चर्मोदूहति। अथोपोत्थाय पृच्छति सोमविक्रयिन् क्रय्यस्ते सोमा ३ इति। क्रय्यः इतीतरः प्रत्याह। मूजवता ३ इति। मूजवतो हि इतीतरः प्रत्याह। अथैनं गवा पणते गवा ते क्रीणानि इति। [ २१·१२–राज्ञः पणन इति॥ सूत्रं बोधायनस्य॥ गवा ते क्रीणानि इत्येव ब्रूयादिति शालीकिः॥ ] क्रीतः सोमः इत्याह सोमविक्रयी वयाꣳसि व्याचक्ष्व इति। एषा ते सोमक्रयणी चन्द्रं ते छागा ते वस्त्रं ते इति। अथैनꣳ हिरण्येन पणते सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तमभिमातिषाहꣳ शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन संयत्ते गो: इत्युक्त्वा अस्मे चन्द्राणि इति यजमानाय प्रयच्छति। अथैनं प्रतीचीनग्रीवयाजया पणते तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामि इति। [ २१·१२– अजाया उपनिग्रहण इति॥ सूत्रं बोधायनस्य॥ अनुपनिगृह्णन्नेवाजां मन्त्रं जपेदिति शालीकिः॥ ] अस्मे ते बन्धुः इति यजमानमीक्षते। मयि ते रायः श्रयन्ताम् इत्यात्मानम्। अथैनां प्रदक्षिणमावर्त्याद्भिरभ्युक्ष्योदीचीमुत्सृजति। सैषा कौत्सस्य भवति। अथ कौत्साद्राजानमादत्ते मित्रो न एहि सुमित्रधाः इति। तं यजमानस्योरौ दक्षिण आसादयति इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनम् इति। अथैनं प्रत्यपोर्णुते यजमानः। [२५·८–९ राजानं प्रत्यपोर्णुते यजमानः वयः सुपर्णा उपसेदुरिन्द्रम् इत्येतया।] अद्भिरभ्युक्ष्य कौत्साय वा परिकर्मिणे वोष्णीषं प्रयच्छति। अथ यजमानꣳ शुक्लयोर्णास्तुकयाध्यस्यति अस्मे ज्योतिः इति। अथैतां कृष्णामुपग्रथ्नाति इदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामि इति। तया सोमविक्रयिणं विध्यति सोमविक्रयिणि तमः इति। [ २५·८–९— कृष्णयोर्णास्तुकया सोमविक्रयिणमन्तरेण भ्रुमके विध्यति। अथ यदि न सोमविक्रयी स्यादग्रेण यूपावटकालं पलाशशाखां निहत्य समुपनह्य राजानं पलाशशाखायाꣳ समासज्योपासीत। अथ यदि कश्चित् प्रसवसंयुक्तं व्याहरेत् क्षिप्रम् इति वा त्वरध्वम् इति वा कुरुत इति वा तद्राजानमाददीत। न संवादा आवर्तेरन्। स सोमविक्रयी स्यात्। ] अथ सोमक्रयणाननुदिशति स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन् इति। [ २१·१२– मैत्रावरुणस्य दण्डप्रदान इति॥ सूत्रमाचार्ययोः॥ अत्रो ह स्माहौपमन्यवः सोमविक्रयिणमुदकुम्भेनोपवृत्यात्रैव मैत्रावरुणाय दण्डं प्रयच्छेदिति॥ ]

३. [ ६. १५–१६ ]—अथैनमादायोपोत्तिष्ठति उदायुषा स्वायुषोदोषधीनाꣳ रसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳ अनु इति। दक्षिणत एतत् सोमवाहनमनः प्राग्गीषं योग्यकृतमुपस्थितं भवति। तदभिप्रैति उर्वन्तरिक्षमन्विहि इति। तस्य नीडे कृष्णाजिनमास्तृणाति अदित्याः सदोऽसि इति। अदित्याः सद आसीद इति कृष्णाजिने राजानम्। अथैनमुपतिष्ठते अस्तभ्नाद् द्यामृषभो अन्तरिक्षममिमीत वरिमाणं पृथिव्या आसीदद्विश्वा भुवनानि सम्राड् विश्वेत्तानि वरुणस्य व्रतानि इति। अथैनं वाससा परितनोति वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अघ्नियासु। हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्रौ इति। अथ उदु त्यं जातवेदसम् इति सौर्यर्चा कृष्णाजिनं पुरस्तात् प्रत्यानह्यति। [ २१·१२–राज्ञः प्रत्यानहन इति॥ अन्तर्लोम्ना चर्मणा प्रत्यानह्येदिति बोधायनः॥ ऊर्ध्वग्रीवेण बहिर्लोम्नेति शालीकिः॥ ] अथ सोमवाहनावानीयमानौ प्रतिमन्त्रयते उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनौ इति। तयोर्दक्षिणं पूर्वं युनक्ति वरुणस्य स्कम्भनमसि इति। वरुणस्य स्कम्भसर्ज-

नमसि इति शम्यामवगूहति प्रत्यस्तो वरुणस्य पाशः इति योक्त्रम्। एतयैवावृतोत्तरमनड्वाहं युनक्ति। अथ दक्षिणामीषामन्वारभ्य संप्रैषमाह सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि सुब्रह्मण्य सुब्रह्मण्यामाह्वय मा तु त्वमाह्वा यजमान आह्वास्यति इति। [२१·१२–ईषाया अन्वारम्भ इति ॥ सूत्रं बोधायनस्य ॥ अनन्वारभ्यैवेषां प्रत्यङ् द्रवन् मन्त्रं जपेदिति शालीकिः ॥] यदा यजमानस्त्रिरुपांशुभ्याह्वयते-ऽथैष सुब्रह्मण्योऽन्तरेणेषे तिष्ठन् पलाशशाखां धारयन् सुब्रह्मण्यामाह्वयति सुब्रह्मण्योꣳ सुब्रह्मण्योम् इति त्रिः। [२५·९–अथेयं प्रथमा सुब्रह्मण्यौकारान्तैवैषोक्ता भवति।] त्रिरुक्तायां प्रच्यावयन्ति प्र च्यवस्व भुवस्पते विश्वान्यभि धामानि मा त्वा परिपरी विदन् मा त्वा परिपन्थिनो विदन् मा त्वा वृका अघायवो मा गन्धर्वो विश्वावसुरा दघच्छ्येनो भूत्वा परा पत यजमानस्य नो गृहे देवैः सꣳस्कृतम् इति। प्रदक्षिणꣳ राजानं परिवहन्ति। [२१·१२–राज्ञः परिवहण इति ॥ प्रदक्षिणं परिवहेदिति बोधायनः ॥ यथोपपादमिति शालीकिः ॥] अथैतावञ्जसोपसंक्रामतोऽध्वर्युश्च यजमानश्च यजमानस्य स्वस्त्ययन्यस्यपि पन्थामगस्महि स्वस्ति गामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु इति। अथाग्रेण शालां तिष्ठन्नोह्यमानꣳ राजानं प्रतिमन्त्रयते नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्यत दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शꣳसत इति। [२१·१२–राज्ञः प्रत्युपस्थान इति ॥ स ह स्माह बोधायनो व्रीहिभिश्चारणीभ्यां च राजासन्द्या च राजानं प्रत्युपतिष्ठेतेति ॥ अत्रो ह स्माह शालीकिरजेन च कर्णगृहीतेनोल्मुकेन च राजासन्द्या च राजानं प्रत्युपतिष्ठेत। सोऽग्नीषोमीयः पशुः स्याल्लोहः स्यात् तूपरः स्यात् साण्डः स्याच्छ्मश्रुमान् स्यात् पीवान् स्यादिति विज्ञायते।] अथैतत् सोमवाहनमनोऽग्रेण शालामुदगीषमुपस्थापयन्ति। तदुपस्तभ्नोति वरुणस्य स्कम्भनमसि इति। वरुणस्य स्कम्भसर्जनमसि इति शम्यामुद्गूहति। उन्मुक्तो वरुणस्य पाशः इति योक्त्रम्।

## १४. आतिथ्येष्ट्यादि

बौधायनश्रौ०—

१ [६·१६–१८] अथ वै भवति विमुक्तोऽन्योऽनड्वान् भवत्यविमुक्तोऽन्योऽथातिथ्यं गृह्णाति यज्ञस्य संतत्यै पत्न्यन्वारभत इति ब्राह्मणम्। अथाह एहि यजमान इति। पूर्वया द्वारा शालां प्रपाद्य पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयातिथ्यं निर्वपत्यन्वारब्धायां पत्न्याम्। [२१·१३–आतिथ्यस्य बर्हिषः सꣳस्कार इति ॥ असिदादानप्रभृतीन् मन्त्रान् साधयेदिति बोधायनः ॥ शुल्बप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः ॥ आतिथ्यस्य निर्वपण इति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माह बोधायन उभौ विमुच्य राजानं प्रपाद्यातिथ्यं निर्वपेदिति ॥] अथ देवस्य त्वा सवितुः प्रसवे इति प्रतिपदं कृत्वा अग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामि इति। एतामेव प्रतिपदं कृत्वा सोमस्यातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामि इति। एतामेव प्रतिपदं कृत्वा अतिथेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामि इति। एतामेव प्रतिपदं कृत्वा अग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा जुष्टं निर्वपामि इति। एतामेव प्रतिपदं कृत्वा श्येनाय त्वा सोमभृते विष्णवे त्वा जुष्टं निर्वपामि इति। पञ्च कृत्वो यजुषा। [९·५–पदेन चरित्वा राजानं क्रीत्वोह्यातिथ्यं निर्वपति।] हविष्कृता वाचं विसृज्यैतयैवावृतोत्तरमनड्वाहं विमुञ्चति। अथैते ब्राह्मणाश्चत्वार आसन्दीमाददते। अथ यजमानो नीडाद्राजानमादत्ते या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् इति। पूर्व एवासन्द्या प्रतिपद्यन्ते। अन्वग्राज्ञा यजमानोऽन्वक् छूद्र उदपात्रेण। पूर्वया द्वारा शालां प्रपादयति गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान् इति। अथैता-

मासन्दीमग्रेणाहवनीयं पर्याहृत्य दक्षिणतो निदधाति । तस्यां कृष्णाजिनमास्तृणाति अदित्याः सदोऽसि इति । अदित्याः सद आ सीद इति कृष्णाजिने राजानम् । अथैनमुपतिष्ठते वरुणोऽसि धृतव्रतो वारुणमसि इति । समुच्चित्य कृष्णाजिनस्यान्तान् स्पन्द्यया विग्रथ्य वंशे प्रग्रथ्नाति शंयोर्देवानां सख्यात् इति । अथापरावासन्दीपादावन्तरेण ब्राह्मणोऽभिषिञ्चति शूद्रः प्रक्षालयति मा देवानामपसश्छिल्महि इति । अथैनं वारुण्यर्चा परिचरति तत्त्वा यामि ब्रह्मणा वन्दमानः इति । [२१·१३-राज्ञः परिचर्याया इति ॥ सूत्रं शालीकेः ॥ अत्रो ह स्माह बोधायन ऋचैव राजानं परिचरेद्दचार्घ्यमुपनिगृह्णीयादिति । ] अथैनं सं शास्ति मा राजानं चाहवनीयं चान्तरेण कश्चन संचारीन्मैनं सायुधो मा सदण्डो मा सच्छत्रो मा सोष्णीषो मा साधस्याद्योऽनुप्रपादीत इति । अथास्मै मधुपर्कं च गां च प्राहुः । [ २१·१३—अर्हण इति ॥ यथागतमर्हयेदिति बोधायनः ॥ राजानमर्हयित्वर्त्विजोऽर्हयेदिति शालीकिः ॥ ] तामध्वर्युर्विशास्ति । श्रपयन्त्येतमातिथ्यं वैष्णवं नवकपालम् । [ २१·१३-आतिथ्यस्य करण इति ॥ पुरोडाशश्च गौश्च स्यातामिति बोधायनः ॥ पुरोडाश एवेति शालीकिः ॥ ] तेन सह मदन्तीरधिश्रयति । शिल्पवदेतदिध्माबर्हिरातिथ्यस्य भवति । कार्ष्मर्यमयैः परिधिभिराश्ववालेन प्रस्तरेणैक्षवीभ्यां विधृतीभ्यां तेन शिल्पवत् । त्वचं पुरोडाशस्य ग्राहयित्वा श्रपयित्वाभिवास्य प्राङेत्याप्येभ्यो निनीय स्तम्बयजुर्हरति । इदमेव प्रसिद्धं पौरोडाशिकं त्रियजुषा तूष्णीं चतुर्थम् । पूर्वं परिग्राहं परिगृह्णाति । करणं जपति । उद्धन्ति । उद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चं स्फ्यं स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहि इति । आहृतासु प्रोक्षणीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचश्च संमाष्ट्र्याज्येनोदेत्याज्यं च प्रोक्षणीश्चोत्पूय प्रसिद्धं चतुर्गृहीतानि वा पञ्चगृहीतानि वाज्यानि गृहीत्वा प्रोक्षणीभिरुपोत्तिष्ठति । [२१·१३- आज्यग्रहाणां ग्रहण इति ॥ चतुर्गृहीतानि वा पञ्चगृहीतानि वा स्युरिति बोधायनः ॥ पञ्चगृहीतान्येवेति शालीकिः ॥ ] इध्मं प्रोक्षति । वेदिं प्रोक्षति । बर्हिः प्रोक्षति । बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णाति । पञ्चविधं बर्हिं स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान् परिधीन् परिदधाति । ऊर्ध्वे समिधावादधाति । ऐक्षवी विधृती तिरश्ची सादयति । विधृत्योराश्ववालं प्रस्तरम् । प्रस्तरे जुहूम् । बर्हिषीतरे । एता असदन् इति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्याथैतं पुरोडाशमुपस्तीर्णाभिघारितमुद्वास्य चतुर्होत्रातिथ्यमासादयति । [ २१·१३- आतिथ्यस्यासादन इति ॥ चतुर्होत्रासादयेदिति बोधायनः ॥ तूष्णीमिति शालीकिः ॥ ] अत्र संभारान् व्याचष्टे । अथ निर्मन्थ्यस्यावृता निर्मन्थ्येन चरति । [ २१·१३—आतिथ्यस्य चर्याया इति ॥ उपांशु चरेदिति बोधायनः ॥ उच्चैरिति शालीकिः ॥ ] प्रहृत्याभिहुत्याथेध्मात् समिधमाददान आह अग्नये समिध्यमानायानुब्रूहि इति । अभ्यादधातीध्मम् । न समिधं परिशिनष्टि । वेदेनोपवाजयति । अनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति संमृष्टे स्रुग्भ्यामुत्तरम् । अथासंस्पर्शयन् स्रुचावुदङ्ङत्याक्रम्य जुह्वा ध्रुवां समज्य सादयित्वा स्रुचौ प्रवरं प्रवृणीते । प्रसिद्धं होतारं वृणीते । सीदति होता । प्रसवमाकाङ्क्षति । प्रसूतः स्रुचावादायात्याक्रम्याश्राव्याह समिधो यज इति । वषट्कृते जुहोति । यज यज इति चतुर्थ यक्ष्यन्नेतदौपभृतमाज्यं सर्वश एव जुह्वां समानयते । पञ्च प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य सं स्रावेण ध्रुवामभिघार्य पुरोडाशमभिघारयति नोपभृतम् । अथ अग्नये, सोमाय इत्याज्यभागाभ्यां चरति । उपांशु हविषा चरति विष्णवेऽनुब्रूहि, विष्णुं यज इति । अथ स्विष्टकृता चरति । इडान्त आतिथ्यः संतिष्ठते । अग्नेतत् पूर्णपात्रमन्तर्वेदि निनयति । [ २५·९·१०-अथायमा-

तिथ्यः। तस्य कः कर्मण उपक्रमो भवतीति। बर्हिर्यजुषा कुर्याद्यदि पुरस्तादयजुष्कृतꣳ स्यात्। पाणी संमृशीत। परिस्तृणीयात्। पात्राणि निर्णिज्य सꣳसादयेत्। ब्रह्माणं दक्षिणत उपवेश्य दक्षिणमनड्वाहं विमुच्यात्रैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं निदध्यात्। स्फ्योपरि पात्रीम्। पात्र्यां व्रीहीनावपेत्। शूर्पादानप्रभृति कर्मान्तस्तायत आ प्रस्कन्दनात्। प्रस्कन्दनान्तं कर्म कृत्वोत्तरमनड्वाहं विमुच्य राजानं प्रपादयेत्। सिद्धमत्राग्निष्टोमिकं कर्म जानीयादा संप्रैषात्। कृष्णाजिनावधवनेनैवातिथ्यं प्रतिपद्यते। सिद्धमत ऊर्ध्वम्। स दर्भपुञ्जील-मुद्वृह्येति[1]। कतरन्नु खल्विदं दर्भपुञ्जीलं भवतीति। यदेवैतद्धोदानयोर्निदधातीति॥ सप्त गिरीन् भित्त्वेति[1]। कतमे नु खल्विमे गिरयो भवन्तीति। प्रयाजानूयाजा एवैता उक्ता भवन्तीति दीक्षणीयायाः प्रायणीयाया आतिथ्याया अग्नीषोमीयस्य चेति[2]। अथाप्युदाहरन्ति दीक्षणीया प्रायणीयातिथ्योपसदोऽग्नीषोमीयः सप्तम इति॥ यज्ञो देवेभ्यो निलायतेति[1]। कतमो नु खल्वयं यज्ञो भवतीति। य एवैष इडान्त आतिथ्यः संतिष्ठते॥ तं देवा हस्तान् सꣳरभ्यैच्छन्निति[1]। यदेवैतत्तानूनप्त्रꣳ समवमृशन्तीति॥ तमिन्द्र उपर्युपर्यत्यक्रामदिति[1]। यदेवैतदुपसद्भिश्चर-न्तीति॥ तमेभ्यो यज्ञ एव यज्ञमाहरदिति[1]। कतमो नु खल्वयं यज्ञो यज्ञमाहरदिति। दीक्षणीया प्रायणीयातिथ्या। एष एव यज्ञो यज्ञमाहरदिति॥ वराहोऽयं वाममोष इति[1]। सुत्यमह्नां वर्षिष्ठम्। तद्यजमानं वामं वसु मुष्णातीति॥ के नु खल्वातिथ्यस्यानूयाजा भवन्तीति। उपसद इत्येव ब्रूयात्।]

२. [६·१८-१९]—अत्रैतद् ध्रुवाज्यमाप्याय्य कꣳसं वा चमसं वा याचति। तमन्तर्वेदि निधाय तस्मिन्नेतत् तानूनप्त्रं निगृह्णाति आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि शाक्वराय त्वा गृह्णामि शक्मन्नोजिष्ठाय त्वा गृह्णामि इति। स यावन्त ऋत्विजस्त एनत् समवमृशन्ति अनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यम् इति। यजमानमति-वाचयति अनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिरञ्जसा सत्यमुपगेषꣳ सुविते मा धाः इति। स यावन्त ऋत्विजस्तेषूपहवमिष्ट्वा यजमान एव त्रिरवजिघ्रति प्रजापतौ त्वा मनसि जुहोमि इति। [१४·२—अथ वै भवति यो वै तानूनप्त्रस्य प्रतिष्ठां वेद प्रत्येव तिष्ठति। ब्रह्मवादिनो वदन्ति न प्राश्नन्ति न जुह्वत्यथ क तानूनप्त्रं प्रतितिष्ठतीति। प्रजापतौ मनसीति ब्रूयात्। त्रिरवजि-घ्रेदिति। स त्रिरवजिघ्रति प्रजापतौ त्वा मनसि जुहोमि इति। एषा वै तानूनप्त्रस्य प्रतिष्ठा। य एवं वेद प्रत्येव तिष्ठतीति ब्राह्मणम्।] [२१·१३—तानूनप्त्रस्य भक्षण इति॥ सूत्रꣳ शालीकेः॥ अत्रो ह स्माह बोधायनो निगुप्तमेवैनं निधापयित्वा व्रतकाले व्रतेन सह भक्षयेदिति॥]

३. [६·१९]—अथैनदद्भिरभ्युन्नीयोत्तरतः सिञ्चति। अथाह अग्नीन्मदन्त्यापा३ इति। मदन्ति देवीरमृता ऋतावृधः इति। ताभिराद्रव इति। अथ मदन्तीरुपस्पृश्योपोत्थाय विस्रस्य हिरण्यमवधाय राजानमाप्याययन्ति अꣳशुरꣳशुस्ते देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व इति। यजमानमतिवाचयति आप्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय इति। अथाप उपस्पृश्य यथायतनमुपविशन्ति। अथाध्वर्युर्वाज-वतीभ्याꣳ स्रुचौ व्यूहति। विधृतीभ्यां प्रस्तरꣳ समुल्लुप्याप्रतिशृणꣳस्त्रेधानक्ति। न प्रस्तरायाश्रावयति। न बर्हिरनुप्रहरति॥

४. [६·१९]—तं दक्षिणार्धे वेद्यै निधाय तस्मिन् दक्षिणोत्तरिणो निह्नुवते एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्यै इति। परिधिषु शकलानुपसंगृह्णाति।

---

१. द्रष्टव्यं तैसं ६. २. ४। २ एवं केषुचित् लिखितपुस्तकेषु। 'अग्नीषोमीयस्येति' इति मुद्रितपाठः।

प्रस्तरे बर्हिर्यावन्मात्रं स्पन्द्यया विग्रथ्याहवनीयेऽतिवाल्याद्भिरभ्युक्ष्योत्तरतः सादयति। अथ यजमानमवान्तरदीक्षामुपनयति अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरियं सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानि इति। अथैनं संशास्ति संतरां मेखलां समायच्छस्व संतरां मुष्टी कुरुष्व तप्तव्रत एधि मदन्तीभिमार्जयस्वोर्पूर्वं व्रतनं सृज। या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहा इत्येतेनातोऽधि व्रतय इति। स एवमेवैतत् सर्वं करोति ॥

# १७. प्रथमपौर्वाह्णिकप्रवर्ग्यप्रचारः

**बौधायनश्रौ०—**

१. [ ६.२० ]—अथ प्रवर्ग्यस्यावृता प्रवर्ग्येण चरति। [ २१.७—प्रवर्ग्यस्य करण इति॥ स ह स्माह बोधायनो न प्रथमसोमे प्रवृञ्ज्यात्। उपनामुको हैनमुत्तरो यज्ञो भवतीति॥ न प्रवर्ग्यं गच्छेच्चनेति शालीकिः॥] [ ९.५ ]—आतिथ्येन प्रचर्य पूर्वां शान्तिमुपयन्ति नमो वाचे इति। अथाग्रेण गार्हपत्यं तृणानि संस्तीर्य तदेतत् परिघर्म्यं सर्वं संसादयन्ति। अत्र सम्राडासन्दीमत्र स्थूणां गोदोहनीमत्र छागायै शङ्कुमिति। अथोत्तरेण गार्हपत्यं स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति। तं प्रादेशमात्रं परिमण्डलं प्रवृञ्जनीयं खरं करोति। अथैनं सिकताभिराश्राशिनं करोति। अथोत्तरेणाहवनीयं स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति। तं प्रादेशमात्रं परिमण्डलमुद्वासनीयं खरं करोति। अथैनं सिकताभिराश्राशिनं करोति। अथोत्तरे शालाखण्डे स्फ्येनोद्धत्यावोक्ष्य सिकता निवपति। तं चतुरश्रं निष्यन्दनवन्तमुच्छिष्टखरं करोति। अथैनं सिकताभिराश्राशिनं करोति। अथाध्वर्युः प्रचरणीयं महावीरं शफाभ्यां परिगृह्य प्रवृञ्जनीये खरे सादयति। अथैनं मौञ्जेन वेदेनापिदधाति। अथैतां सम्राडासन्दीमग्रेणाहवनीयं[1] पर्याहृत्य दक्षिणतो निदधाति। तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति। अथैतावुपशयौ महावीरौ वेदाभ्यां परिगृह्याग्रेणाहवनीयं पर्याहृत्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने प्राचीनबिलौ सादयति। अथैतामभ्रिमग्रेणाहवनीयं पर्याहृत्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने सादयति। अथैतां मृदमतिशिष्टामग्रेणाहवनीयं पर्याहृत्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने सादयति। अथैतां स्थूणां गोदोहनीं छागायै शङ्कुमित्यादाय जघनेन दक्षिणेन गार्हपत्यं परिक्रम्य दक्षिणया द्वारोपनिर्हृत्य होतुः संदर्शे स्थूणां निहत्य मौञ्जेन दाम्ना घर्मदुघो वत्सं बध्नन्ति। तमुत्तरेण छागायै शङ्कुं निहत्य छागां निग्रथ्नन्ति। प्रत्युञ्जति छगलम्। अथैतेनैव यथेतमेत्य निष्क्रामयन्ति[2] वृषलान्। ह्वयन्ति पत्नीम्। ह्वयन्ति होतारम्। ह्वयन्ति ब्रह्माणम्। ह्वयन्ति प्रतिप्रस्थातारम्। ह्वयन्ति प्रस्तोतारम्। ह्वयन्त्याग्नीध्रम्। परिश्रयन्ति द्वाराणि। पत्नीशाले पत्नीं परिश्रयन्ति। परिस्तृणन्ति। दक्षिणत उपविशतो ब्रह्मा च यजमानश्च। अत्र पूर्वां शान्तिमुपयन्ति येषामनुपेता भवति।

२. [ ९.६–७ ]—अथाध्वर्युः सपवित्राः प्रोक्षणीरादददान आह ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामो होतर्धर्ममभिष्टुह्यग्नीध्रौहिणौ पुरोडाशावधिश्रय प्रतिप्रस्थातः प्रवर्ग्यं विहर प्रस्तोतः सामानि गाय इति। तद् ब्रह्मा प्रसौति यजुर्युक्तं सामभिराक्तखं त्वा विश्वैर्देवैरनुमतं मरुद्भिः। दक्षिणाभिः प्रततं पारयिष्णुं स्तुभो वहन्तु सुमनस्यमानं स नो रुचं धेह्यहृणीयमानो भूर्भुवः सुवरोमिन्द्रवन्तः प्रचरत इति।

१. एवमेकस्मिन् लिखितपुस्तके। 'अथैतामासन्दी°' इति मुद्रितपाठः। २. एवं केषुचिल्लिखितपुस्तकेषु। 'निष्क्रमयन्ति' इति मुद्रितपाठः।

[ १४.९- ते यत्रान्तःशालं प्रचरिष्यन्तो भवन्ति तदाह ब्रह्मन् प्रचरिष्यामो होतर्घर्ममभिष्टुहि इति तद् ब्रह्मा प्रसौति देव सवितरेतत्ते प्राह तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाह्यौ प्रचरत इति। प्रतिष्ठ इतीह हविर्यज्ञेषु भवति। ] अथाध्वर्युः प्रचरणीयं महावीरं प्रोक्षति यमाय त्वा मखाय त्वा सूर्यस्य हरसे त्वा इति। अभिप्राप्नुवन् परान् परान् संभारान् प्रोक्षति। तमेव प्रतिप्रस्थाता प्रवर्ग्यं विहरति। अथाहवनीये कार्ष्मर्यमयान् परिधीन् परिदधाति। तदुपसादयति षडौदुम्बराञ्छकलान् वैकङ्कतीं च समिधं गार्हपत्ये त्रयोदश वैकङ्कतान् परिधीन् सुवर्णरजतौ च रुक्मौ मुञ्जप्रलवान् रौहिणपिष्टानीति। अथैष आग्नीध्रो जघनेन गार्हपत्यमुपविश्य धृष्टीभ्यां प्रतीचोऽङ्गारान् निरूह्य तेषु रौहिणकपाले उपदधाति। अथ दारुणसंयुतानि पिष्टानि संयुत्य रौहिणौ पुरोडाशावधिश्रयति। अथाज्यं निर्वपति। अथाज्यमधिश्रयति। उभयं पर्यग्नि कृत्वा रौहिणौ पुरोडाशौ श्रपयति। एतस्मिन् काले प्रतिप्रस्थाता मौञ्जेन वेदेन होमार्थानि पात्राणि संमृशति महावीरꣳ स्रुवं पिन्वने रौहिणहवनी उपयमनमिति। अथ प्रतिप्रस्थाताज्यमुत्पूय रौहिणौ पुरोडाशावुपस्तीर्णाभिघारितावुद्वास्य रौहिणहवनीभ्यां परिगृह्यान्तर्वेद्या-सादयति। दक्षिणं परिधिसंधिमन्वेकम्। उत्तरं परिधिसंधिमन्वितरम्। प्राञ्चौ पूर्वाह्णिके। प्रत्यञ्चावापराह्णिके। अथाध्वर्युः प्रचरणीयं महावीरꣳ शफाभ्यां परिगृह्य सव्ये पाणौ समावृत्याज्यस्थाल्याः सकृदुपहतेनाज्येन गार्हपत्येऽनवानꣳ संततः सप्त प्राणाहुतीर्जुहोति प्राणाय स्वाहा, व्यानाय स्वाहा, अपानाय स्वाहा, चक्षुषे स्वाहा, श्रोत्राय स्वाहा, मनसे स्वाहा, वाचे सरस्वत्यै स्वाहा इति। चतस्र उत्तरा यथोपपादम् दक्षाय स्वाहा, क्रतवे स्वाहा, ओजसे स्वाहा, बलाय स्वाहा इति। अथैनमाज्येनानक्ति देवस्त्वा सविता मध्वानक्तु इति। एतस्मिन् काले प्रतिप्रस्थाता राजतꣳ रुक्मं प्रवृञ्जनीये खर उपगूहति पृथिव्यै तपसस्त्रायस्व इति। अथ मुञ्जप्रलवान् व्यतिषज्यादीपयति अर्चिरसि शोचिरसि ज्योतिरसि तपोऽसि इति। तान् प्रवृञ्जनीये खरे संप्रकीर्य तेषु प्रचरणीयं महावीरꣳ सꣳसादयति सꣳसीदस्व महाꣳ असि शोचस्व देववीतमः। विधूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम् इति। अथैनमाज्येन पूरयति अञ्जन्ति यं प्रथयन्तो न विप्रा वपावन्तं नाग्निना तपन्तः। पितुर्न पुत्र उपसि प्रेष्ठ आ घर्मो अग्निमृतयन्नसादीत् इति। अथास्य प्रादेशेन दिशो व्यास्थापयति अनाधृष्या पुरस्तादग्नेराधिपत्य आयुर्मे दाः इति पुरस्तात्। पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये प्रजां मे दाः इति दक्षिणतः। सुषदा पश्चाद्देवस्य सवितुराधिपत्ये प्राणं मे दाः इति पश्चात्। आश्रुतिरुत्तरतो मित्रावरुणयोराधिपत्ये श्रोत्रं मे दाः इत्युत्तरतः। विधृतिरुपरिष्टाद् बृहस्पते-राधिपत्ये ब्रह्म मे दाः क्षत्रं मे दास्तेजो मे धा वर्चो मे धा यशो मे धास्तपो मे धा मनो मे धाः इत्युपरि-ष्टात्। अथेमामभिमृशति मनोरश्वासि भूरिपुत्रा विश्वाभ्यो मा नाष्ट्राभ्यः पाहि सूपसदा मे भूया मा मा हिꣳसीः इति। अथ धृष्टीभ्यामुदीचोऽङ्गारान् निरूहति तपो ष्वग्ने अन्तराꣳ अमित्रान् तपा शꣳसमररुषः परस्य। तपा वसो चिकितानो अचित्तान् वि ते तिष्ठन्तामजरा अयासः इति। तैरेनं प्रदक्षिणं परि-चिनोति चित स्थ परिचितः स्वाहा मरुद्भिः परिश्रयस्व इति। अथैनं त्रयोदशभिर्वैकङ्कतैः परिधिभिः परिचिनुतोऽध्वर्युश्च प्रतिप्रस्थाता च। मा असि इति प्राञ्चावध्वर्युः। प्रमा असि इत्युदञ्चौ प्रतिप्रस्थाता। तावेवमेव व्यतिषङ्गम् प्रतिमा असि, संमा असि, विमा असि, उन्मा असि इति। अथैनं त्रयोदशं परिधिं दक्षिणत ऊर्ध्वाग्रं निमिनोति अन्तरिक्षस्यान्तर्धिरसि इति। अथैनꣳ सौवर्णेन रुक्मेनापिदधाति दिवं तपसस्त्रायस्व इति। अथैनमुपतिष्ठते आभिर्गीर्भिः, शुक्रं ते अन्यत्, अर्हन् बिभर्षि सायकानि धन्व इति। प्रज्वलिते रुक्ममपकर्षति।

३. [ ९.८ ] — अथ धवित्राण्यादत्ते गायत्रमसि इत्यन्यतरत् त्रैष्टुभमसि इत्यन्यतरत् जागतमसि इत्यन्यतरत्। तैरेनं पश्चात् प्राङ् जान्वाच्योर्ध्वं धूनोति मधु मधु इति। उत्तर-

तस्तिष्ठते प्रतिप्रस्थात्रे द्वे धवित्रे प्रयच्छति । तयोरन्यतरदाग्नीध्रायोत्प्रयच्छति । अथैनं त्रिः प्रदक्षिणं परियन्ति प्रणवेप्रणवे धून्वन्तः । त्रिः परीत्योत्तरतस्तिष्ठन्ति । अथ धवित्राण्यादत्ते । अपरेण परिक्रान्तायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वे धवित्रे प्रयच्छति । तयोरन्यतरदाग्नीध्रायोत्प्रयच्छति । अथैनं पर्युपविशन्ति । पश्चात् प्राङ्मुखोऽध्वर्युरुपविशति । पुरस्तात् प्रत्यङ्मुखः प्रतिप्रस्थाता । उत्तरतो दक्षिणामुख आग्नीध्रः । त एवमेव प्रणवेप्रणवे धून्वन्त आसत उपसमासमुल्मुकान्याप्याययन्तो महावीरम् । अथ यत्र होतुरभिजानाति याभिर्वर्तिकां ग्रसिताममुञ्चतम् इति तदेनमुपोत्थाय रोचयतोऽध्वर्युश्च यजमानश्च दश प्राचीर्दश भासि दक्षिणा इत्येतेनानुवाकेन । अथ यत्र होतुरभिजानाति अप्नस्वतीमश्विना वाचमस्मे इति तद्धवित्राण्युपोद्यच्छन्ते । अथ यत्र होतुरभिजानाति अरूरुचदुषसः पृश्निरग्रियः इति तत् रुचितो घर्मः इत्युक्त्वा यथेतं त्रिः पुनः प्रतिपरियन्ति । निधाय धवित्राण्यवकाशैरवेक्षमाणा उपतिष्ठन्ते अपश्यं गोपाम् इति प्रतिपद्य अशीमहि त्वा मा मा हिꣳसीः इत्यातः । अथ गार्हपत्यमुपतिष्ठते त्वमग्ने गृहपतिर्विशामसि विश्वासां मानुषीणाꣳ शतं पूर्भिर्यविष्ठ पाह्यꣳहसः समेद्धारꣳ शतꣳ हिमास्तन्द्राविणꣳ हार्दिवानमिहैव रातयः सन्तु इति । अन्तर्हिते प्रतिप्रस्थाता वेदे पत्नीं वाचयति त्वष्टीमती ते सपेय इत्यान्तादनुवाकस्य । एतस्मिन् काले प्रतिप्रस्थाता दक्षिणꣳ रौहिणं जुहोति अहर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहा इति ॥

## २०. प्रथमपौर्वाह्णिकघर्मयागः

**बौधायनश्रौ०—**

१. [ ९.९-१० ]-अथ रशनामादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इति । आदायाभिमन्त्रयते अदित्यै रास्नासि इति । दोहनं कꣳसं पिन्वने इति प्रतिप्रस्थातापरेण परिक्रम्य । अथैतां घर्मदुघं त्रिरुपाꣳशु देवनामभिराह्वयति इड एह्यदित एहि सरस्वत्येहि इति । त्रिरुच्चैर्दक्षिणया द्वारोपनिष्क्रम्य यदस्यै नाम भवति तेन असावेह्यसावेहि इति । अथैनाꣳ रशनयाभिदधाति अदित्या उष्णीषमसि इति । वायुरस्यैडः इति घर्मदुघो वत्समभिमृशति । अथैनमुपावसृजति पूषा त्वोपावसृजत्वश्विभ्यां प्रदापय इति । धयन्तमनुमन्त्रयते यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि । यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः इति । प्रत्तायामुन्नयति उस्र घर्मꣳ शिꣳषोस्र घर्मं पाहि घर्माय शिꣳष इति । नियुज्य संधायोपसीदति बृहस्पतिस्त्वोपसीदतु इति । स्तनान् संमृशति दानव स्थ पेरवो विष्वग् वृतो लोहितेन इति । अथ यत्र होतुरभिजानाति आ दशभिर्विवस्वतः इति तदेनां पिन्वने पिन्वयति अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व पूष्णे पिन्वस्व बृहस्पतये पिन्वस्वेन्द्राय पिन्वस्वेन्द्राय पिन्वस्व इति । अतिशिष्टं कꣳसे दोहयति । एतस्मिन् काले प्रतिप्रस्थाता पिन्वने छागां पिन्वयति तूष्णीम् । अथ यत्र होतुरभिजानाति उत्तिष्ठ ब्रह्मणस्पते इति तत् प्रतिप्रस्थात्रे पयसी संप्रदायैतेनैव यथेतमेत्य शफोपयमानादत्ते गायत्रोऽसि इत्यन्यतरत् त्रैष्टुभोऽसि इत्यन्यतरत् जागतमसि इत्युपयमनम् । अथ यत्र होतुरभिजानाति उप द्रव पयसा गोधुगोषम् इति तत् पयसी आह्रियमाणे अभिमन्त्रयते सहोर्जो भागेनोप मेहीन्द्राश्विना मधुनः सारघस्य घर्मं पात वसवो यजता वट् इति । अथ पुरस्तात् प्रत्यञ्चावुपविश्य महावीरे पयसी अवनयतोऽध्वर्युश्च प्रतिप्रस्थाता च । अध्वर्युः पूर्वो गोपयोऽवनयति स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमि स्वाहा इति । अथास्योष्माणमन्वीक्षते मधुहविरसि सूर्यस्य तपस्तप इति । एतस्मिन् काले प्रतिप्रस्थाता छागापयोऽवनयति तूष्णीम् । उभयꣳ समानीयाध्वर्युस्तृतीयमवनयति । अत्र यत् कꣳसे पयस्तदुपयमने समवनयति । प्रत्यूह्याङ्गारानथाध्वर्युः प्रचरणीयं

महावीरꣳ शफाभ्यां परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामि इति। वेदेनाधस्तादुपमृज्योपयमनेनोपयच्छति अन्तरिक्षेण त्वोपयच्छामि इति। अथैनमादायोपोत्तिष्ठति देवानां त्वा पितृणामनुमतो भर्तुꣳ शकेयम् इति। प्राङ् हरति तेजोऽसि तेजोऽनु प्रेह्यग्निर्मा पृथिव्याः पातु वायुरन्तरिक्षात् सूर्यो दिवो दिविस्पृक्त्वा मा हिꣳसीरन्तरिक्षस्पृक्त्वा मा हिꣳसीः पृथिस्पृक्त्वा मा हिꣳसीः सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाहि इति। अथ वातनामानि व्याचष्टे समुद्राय त्वा वाताय स्वाहा इति पञ्चानवानम्। एवमेव द्वे उत्तरे। षडुत्तराणि यथोपपादम् अग्नये त्वा वसुमते स्वाहा, सोमाय त्वा रुद्रवते स्वाहा, वरुणाय त्वादित्यवते स्वाहा, बृहस्पतये त्वा विश्वदेव्यावते स्वाहा, सवित्रे त्वर्भुमते विभुमते प्रभुमते वाजवते स्वाहा, यमाय त्वाङ्गिरस्वते पितृमते स्वाहा इति। विश्वा आशा दक्षिणसत् इति दक्षिणत आसीनं ब्रह्माणमीक्षते। विश्वान् देवानयाडिह इति पश्चादासीनꣳ होतारम्। सव्येनात्याकामञ्जपति स्वाहाकृतस्य घर्मस्य मधोः पिबतमश्विना स्वाहाग्नये यज्ञियाय शं यजुर्भिः इति। यजमानमतिवाचयति अश्विना घर्मं पातꣳ हार्दिवानमहर्दिवाभिरूतिभिरनु वां द्यावापृथिवी मꣳसाताम् इतिं। उच्चैराश्राव्याह घर्मस्य यज इति। वषट्कृते जुहोति स्वाहेन्द्राय इति। स्वाहेन्द्रावट् इत्यनुवषट्कृते हुत्वा वाचयति घर्ममपातमश्विना हार्दिवानमहर्दिवाभिरूतिभिरनु वां द्यावापृथिवी अमꣳसातां तं प्राव्यं यथावट् नमो दिवे नमः पृथिव्यै दिवि धा इमं यज्ञं यज्ञमिमं दिवि धा दिवं गच्छान्तरिक्षं गच्छ पृथिवीं गच्छ पञ्च प्रादिशो गच्छ देवान् घर्मपान् गच्छ पितॄन् घर्मपान् गच्छ इति। एतस्मिन् काले प्रतिप्रस्थाता पिन्वनेनोपयमनादुपहत्य प्रचरणीयं महावीरं पूरयति। अथैनमन्तःपरिध्यभिपीपयतोऽध्वर्युश्च प्रतिप्रस्थाता च सहैव इषे पीपिह्यूर्जे पीपिहि ब्रह्मणे पीपिहि क्षत्राय पीपिह्यद्भ्यः पीपिह्योषधीभ्यः पीपिहि वनस्पतिभ्यः पीपिहि द्यावापृथिवीभ्यां पीपिहि सुभूताय पीपिहि ब्रह्मवर्चसाय पीपिहि यजमानाय पीपिहि। मह्यम् इत्युपांꣳशूक्त्वा ज्यैष्ठ्याय पीपिहि इत्युच्चैः। अथैनमनुदिशमात्मानमभिपीपयति त्विष्यै त्वा द्युम्नाय त्वेन्द्रियाय त्वा भूत्यै त्वा इति। अत्र यन्महावीरे पयस्तदुपयमने समवनयति।

[९.१०-१२]—अथोदङ्ङत्याक्रम्याथैतदुपयमनमन्तर्वेदि प्राचीनबिलꣳ सादयति। एतस्मिन् काले प्रतिप्रस्थाता राजतꣳ रुक्ममुद्वासनीये खर उपगूहति। तस्मिन् प्रचरणीयं महावीरꣳ सादयति धर्मासि सुधर्मा मे न्यस्मे ब्रह्माणि धारय क्षत्राणि धारय विशं धारय नेत्त्वा वात स्कन्दयात् इति। अथ यद्यभिचरेत् अमुष्य त्वा प्राणे सादयाम्यमुना सह निरर्थं गच्छ योऽस्मान् द्वेष्टि यं च वयं द्विष्मः इति। अथाप उपस्पृश्य षडौदुम्बराञ्छकलान् याचति। तेषामेकैकेनोपयमनादुपहत्य पूर्वार्धे आहवनीयस्य प्रश्चोतयति पूष्णे शरसे स्वाहा इति। अथैनमन्तराञ्जनं मध्यमे परिधौ सꣳस्पृष्टꣳ सादयति। एवमेव द्वितीयेनोपयमनादुपहत्य पूर्वार्धे एवाहवनीयस्य प्रश्चोतयति ग्रावभ्यः स्वाहा इति। तं तथैवान्तराञ्जनं[1] मध्यमे परिधौ सꣳस्पृष्टꣳ सादयति। एवमेव तृतीयेनोपयमनादुपहत्य मध्यत आहवनीयस्य प्रश्चोतयति प्रतिरेभ्यः स्वाहा इति। तं तथैवान्तराञ्जनं[1] मध्यमे परिधौ सꣳस्पृष्टꣳ सादयति। एवमेव चतुर्थेनोपयमनादुपहत्यापरार्धे आहवनीयस्य प्रश्चोतयति द्यावापृथिवीभ्याꣳ स्वाहा इति। अथैनमूर्ध्वाञ्जनं भस्मान्त उपगूहति। एवमेव पञ्चमेनोपयमनादुपहत्य दक्षिणार्धे आहवनीयस्य प्रश्चोतयति पितृभ्यो घर्मपेभ्यः स्वाहा इति। अथैनं बहिराञ्जनं दक्षिणे परिधौ सꣳस्पृष्टꣳ सादयति। अथैतꣳ षष्ठꣳ शकलꣳ सर्वेषु लेपेषु समज्योपयमनादन्तत उपहत्योत्तरार्धे आहवनीयस्य प्रश्चोतयति रुद्राय रुद्रहोत्रे स्वाहा इति। अथैनमुत्तरेण शालाया अतीकाशेनानन्वीक्षमाणो निरस्यति अमुना सह निरर्थं गच्छ योऽस्मान् द्वेष्टि यं च वयं द्विष्मः इति। अथाप उप-

१. एवं केषुचिल्लिखितपुस्तकेषु। 'तथैवाञ्जनं' इति मुद्रितपाठः।

स्पृश्यातिशिष्टाञ्छकलानद्भिः सꣳस्पर्श्याहवनीयेऽनुप्रहरति । एतस्मिन् काले प्रतिप्रस्थातोत्तरꣳ रौहिणं जुहोति अहर्ज्योतिः केतुना जुषताꣳ सुज्योतिर्ज्योतिषाꣳ स्वाहा इति । अत्रैताꣳ समिधं मध्यत आहवनीयस्याभ्यादधाति तूष्णीम् । तस्यामादीप्तायां प्रतिमुखं द्विर्जुहोति भूः स्वाहा इति । अथैतदुपयमनमन्तर्वेदि प्राचीनबिलꣳ सादयित्वा तस्मिन्नग्निहोत्रविधिं चेष्टित्वा । स यावन्तः प्रवर्ग्यस्यर्त्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रत्यक्षं भक्षयति हुतꣳ हविर्मधु हविरिन्द्रतमेऽग्नौ पिता नोऽसि मा मा हिꣳसीरश्याम ते देव घर्म मधुमतो वाजवतः पितुमतोऽङ्गिरस्वतः स्वधाविनोऽशीमहि त्वा मा मा हिꣳसीः इति । अथैतदुपयमनं परिकर्मी वाग्नीध्रो वोच्छिष्टखरे मार्जयित्वान्तर्वेदि प्राचीनबिलꣳ सादयित्वा तस्मिन् सुवर्णरजतौ च रुक्मौ प्रास्य मदन्तीरप आनीय हिरण्यवतीभिर्मार्जयन्ते हिरण्यवर्णाः शुचयः पावकाः इति चतसृभिः । अत्रैव मदन्तीरपो निनीयाज्यस्थाल्याः स्रुवेणोपघातं घर्मप्रायश्चित्तानि जुहोति प्राणाय स्वाहा, पूष्णे स्वाहा इत्येताभ्यामनुवाकाभ्याम् । [ ९.१७ — प्राणाय स्वाहा, पूष्णे स्वाहा इत्युक्तानि घर्मप्रायश्चित्तानि । ] अथैतदुपयमनमन्तर्वेदि प्राचीनबिलꣳ सादयित्वा तदेतत् परिघर्म्यꣳ सर्वꣳ समवशमयन्नाह घर्मायोꣳसाद्यमानायानुब्रूहि इति । अथैतदुपयमनमग्रेणाहवनीयं पर्याहृत्य दक्षिणतः सम्राडासन्द्यां कृष्णाजिने प्राचीनबिलꣳ सादयति स्वाहा त्वा सूर्यस्य रश्मिभ्यः इति । अथोत्तराꣳ शान्तिमुपयन्ति शं नो वातः पवतां मातरिश्वा इति ।

## २३. प्रथमपौर्वाह्णिकोपसदादि

**बौधायनश्रौ० —**

[ ६.२०-२१ ]— अथ स्फ्यमाददान आह अग्नीन्मदन्तीरधिश्रय हविरधिश्रयेह्युपसीद इति । [ २१.१३ — औपसदस्य बर्हिषः सꣳस्कार इति ॥ असिदादानप्रभृतीन् मन्त्रान् साधयेदिति बोधायनः ॥ शुल्बप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः ॥ उपसदां मन्त्रामन्त्र इति ॥ मन्त्रवत्यः स्युरिति बोधायनः ॥ तूष्णीका इति शालीकिः ॥ यत्पर्याज्यं तत्तूष्णीकꣳ स्यात् । अथेतरन्मन्त्रवत् स्यादित्यौपमन्यवः ॥ सर्वमेवैतत् कर्मावृता कुर्यादित्यौपमन्यवीपुत्रः ॥ ] एतास्वेव मदन्तीषु भूयसीरप आनयति । आज्यमधिश्रयति तद्धविः । अथैतस्यैव बर्हिष स्तीर्णस्य पर्यवलोपꣳ स्तम्बयजुर्हरति । इदमेव प्रसिद्धं पौरोडाशिकम् । त्रिर्यजुषा तूष्णीं चतुर्थम् । पूर्वं परिग्राहं परिगृह्णाति । करणं जपति । उद्धन्ति । उद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथोत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह मदन्तीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचौ च संमृड्ढि हविषादेहि इति । आहृतासु मदन्तीषूदस्य स्फ्यं मार्जयित्वेध्माबर्हिरुपसाद्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य स्रुवं च स्रुचौ च संमार्ष्टि । हविषोदेति । हविश्च मदन्तीश्चोत्पूयाग्नौ कृत्वो जुह्वां गृह्णीते । चतुरुपभृति । आज्यस्थाल्यां तृतीयामुत्प्रदाय मदन्तीभिरुपोत्तिष्ठति । इध्मं प्रोक्षति । वेदिं प्रोक्षति । बर्हिः प्रोक्षति । बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णाति । एकविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य काष्मर्यमयान् परिधीन् परिदधाति । ऊर्ध्वे समिधावादधाति । ऐक्षवी विधृती तिरश्ची सादयति । विधृत्योराश्ववालं प्रस्तरम् । प्रस्तरे जुह्वम् । बर्हिषीतरे । एते असदताम् इति समभिमृश्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य जघनेन गार्हपत्यमुपविश्य देवपत्नीर्व्याचष्टे । अथैतेनैव यथेतमेत्याथेध्मात् समिधमाददान आह अग्नये समिध्यमानायानुब्रूहि इति । अभ्यादधातीध्मꣳ सकृद्वा त्रिर्वा । न समिधं परिशिनष्टि । वेदेनोपवाजयति । अनूक्तासु सामिधेनीषु स्रुवेणाघारमाघारयति । संमृष्टे न

स्रुग्भ्यामुत्तरम्। अथ प्रवरं प्रवृणीते। अथाश्रावयति ओ श्रावयास्तु श्रौषट्। सीद होतः इत्येतावान् प्रवरः। सीदति होता। प्रसवमाकाङ्क्षति। प्रसूतः स्रुचावाददान आह अग्नये इत्युपांशु अनुब्रूहि इत्युच्चैः। अत्याक्रम्याश्राव्याह अग्निम् इत्युपांशु यज इत्युच्चैः। वषट्कृते पूर्वार्धेऽर्धवेलां जुहोति। अथात्रैव तिष्ठन्नाह सोमाय इत्युपांशु अनुब्रूहि इत्युच्चैः। आश्राव्याह सोमम् इत्युपांशु यज इत्युच्चैः। वषट्कृते मध्ये जुहोति। अथ समानयमान आह विष्णवे इत्युपांशु अनुब्रूहि इत्युच्चैः। आश्राव्याह विष्णुम् इत्युपांशु यज इत्युच्चैः। वषट्कृते पश्चात् सर्वं जुहोति। [ २१·१२—आहुतीनां होम इति॥ सूत्रं बोधायनस्य॥ प्राचीरेवैता आहुतीः संस्थापयेदिति शालीकिः॥ ] [ २५·१०– किंदेवत्या उ खलूपसदो भवन्तीति। आग्नेय्य इत्येव ब्रूयात्। कथमु खलूपसदामुपक्रमो भवतीति। बर्हिर्यजुषा कुर्याद्यदि पुरस्तादयजुष्कृतं स्यात्। पाणी संमृशीत। परिस्तृणीयात्। पात्राणि निर्णिज्य संसादयेत्। मदन्तीः संस्कृत्य पात्राणि प्रोक्षेत्। आज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य स्तम्बयजुर्हरेत्। सिद्धमत ऊर्ध्वम्। यथा प्रकृत्यामेवं प्रथमायामुपसदि स्रुचः सादयेत्। अभ्यूढा द्वितीयस्यामभ्यूढतरास्तृतीयस्याम्। संत्वरमाणा इवोपसद्भिः प्रचरेयुर्नाकृतमाद्रियेरन्। समग्राङ्गुलिः स्रुवमादायास्यन्निवोपसदं जुहुयादिति॥ ] अथोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा। [ २१·१३– स्रुचां परिशायन इति॥ अहोरात्रं परिशयीरन्निति बोधायनः॥ अहरेवेति शालीकिः॥ कर्मणः कर्मणः प्रयुञ्जीतेत्यौपमन्यवः॥] अथाह अग्नीन्मदन्त्यापा ३ इति। मदन्ति देवीरमृता ऋतावृधः इति। ताभिराव्रज इति। अथ मदन्तीरुपस्पृश्योपोत्थाय विस्रस्य हिरण्यमवधाय राजानमाप्याययन्ति अंशुरंशुस्ते देव सोमा प्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व इति। यजमानमतिवाचयति आप्यायय सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय इति। अथाप उपस्पृश्य यथायतनमुपविशन्ति। अथाध्वर्युर्वाजवतीभ्यां स्रुचौ व्यूहति। विधृतीभ्यां प्रस्तरं समुल्लुप्याप्रतिशृणंस्त्रेधानक्ति। न प्रस्तरायाश्रावयति। न बर्हिरनुप्रहरति। तं दक्षिणार्धे वेद्यै निधाय तस्मिन् दक्षिणोत्तरिणो निह्नुवते एष्टा रायः प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्यै इति। सव्ये पाणौ प्रस्तरं समावृत्याज्यस्थाल्याः स्रुवेणोपहत्य प्रथमामुपसदं जुहोति या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा इति। [ २१·१३– उपसदां होम इति॥ सूत्रं बोधायनस्य॥ अनत्याक्रम्यैवोपसदो जुहुयादिति शालीकिः॥ ] परिधिषु शकलानुपसंगृह्णाति प्रस्तरे बर्हिर्यावन्मात्रं स्पन्द्यया विग्रथ्याहवनीयेऽतिवाल्याद्भिरभ्युक्ष्योत्तरतः सादयति। अथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय त्रिस्तनव्रतं प्रयच्छत इति। आह्वयति सुब्रह्मण्यः सुब्रह्मण्याम्। त्रिस्तनव्रतं प्रयच्छति।

## २६. प्रथमापराह्णिकप्रवर्ग्यः

बौधायनश्रौ० —

[ ६·२१ ] — अथापराह्ण आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति। [ ९·१२ ]- अथापराह्ण आपराह्णिकेन प्रवर्ग्येण प्रचरति। तस्य यद्विहितं विहितमेवास्य तत्। समानं कर्मा दक्षिणस्य रौहिणस्य होमात्। अथ दक्षिणं रौहिणं जुहोति रात्रिर्ज्योतिः केतुना जुषतां सुज्योतिर्ज्योतिषां स्वाहा इति। एवमेवोत्तरं रौहिणं जुहोति। समानं कर्मा समिदाधानात्। अग्नेतां समिधं मध्यत आहवनीयस्याभ्यादधाति अग्नीपरो माहूनो रात्रियै मा पाह्येषा ते अग्ने समित्तया

समिध्यस्वायुर्मे दा वर्चसा माजीः इति सायम् । सायंमन्त्रेणापराह्णिके । तस्यामादीप्तायां प्रतिमुखं द्विर्जुहोति अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति सायम् । समानं कर्मा संप्रैषात् । अथैतदुपयमनमग्रेणाहवनीयं पर्याहृत्य दक्षिण तः सम्राडासन्द्यां कृष्णाजिने प्रतीचीनबिलꣳ सादयति स्वाहा त्वा नक्षत्रेभ्यः इति । अथोत्तराꣳ शान्तिमुपयन्ति शं नो वातः पवतां मातरिश्वा इति ।

## २८. प्रथमापराह्णिकोपसदादि

बौधायनश्रौ०—

[ ६.२१–२२ ] — ( अथापराह्ण आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । ) तयोः समानी चर्या । एतावदेव नाना । सव्योत्तरिणो निह्नुवते । अथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय त्रिस्तनव्रतं दोहयत इति । आह्वयति सुब्रह्मण्यः सुब्रह्मण्याम् । त्रिस्तनव्रतं दोहयति । तदर्धरात्रे प्रयच्छति । अथाध्वर्युरपररात्र आद्रुत्य सꣳशास्ति द्विस्तनव्रतं दोहयत इति ।

## ३१. मध्यमपौर्वाह्णिकप्रवर्ग्योपसदौ

बौधायनश्रौ०—

[ ६.२२ ] — प्रातरुदित आदित्ये विसृष्टायां वाचि मध्यमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । [ ९.१२ — अग्निपरो मा रात्रिया अह्नो मा पाहि इति प्रातः । प्रातर्मन्त्रेणात ऊर्ध्वं पूर्वाह्णिकेऽभ्यादधाति । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा इति प्रातः । ] रजाशयामत्र जुहोति । अथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विस्तनव्रतं प्रयच्छत इति । आह्वयति सुब्रह्मण्यः सुब्रह्मण्याम् । द्विस्तनव्रतं प्रयच्छति ।

## ३२. महावेदिकरणम् उत्तरवेदिनिवपनं च

बौधायनश्रौ०—

[ ६.२२–२३ ]–स आहवनीयादेवाग्रे षट् प्राचः प्रक्रमान् प्रक्रामति । तच्छङ्कुं निहन्ति । स शालामुखीयः शङ्कुः । शालामुखीयाच्छङ्कोः षट्त्रिꣳशत्प्राचः प्रक्रमान् प्रक्रामति । तच्छङ्कुं निहन्ति । स यूपावटीयः शङ्कुः । शालामुखीयाच्छङ्कोः पञ्चदश दक्षिणा प्रक्रमान् प्रक्रामति पञ्चदशोदीचः । तच्छङ्कू निहन्ति । ते श्रोणी । यूपावटीयाच्छङ्कोर्द्वादश दक्षिणा प्रक्रमान् प्रक्रामति द्वादशोदीचः । तच्छङ्कू निहन्ति । तावꣳसौ । अथैनामक्ष्णया मानेन प्रमाय समन्तꣳ स्पन्द्यया परितनोति । पृष्ठ्यामातनोति । यूपावटीयाच्छङ्कोरनुस्पन्द्यं द्वादश प्रत्यञ्चि क्षुद्रपदानि प्रक्रामति । तच्छङ्कुं निहन्ति । स मध्यम औत्तरवेदिकः शङ्कुः । मध्यमादौत्तरवेदिकाच्छङ्कोः पञ्च दक्षिणा क्षुद्रपदानि प्रक्रामति पञ्चोदञ्चि । तच्छङ्कू निहन्ति । ते श्रोणी । यूपावटीयाच्छङ्कोश्चत्वारि दक्षिणा क्षुद्रपदानि प्रक्रामति चत्वार्युदञ्चि । तच्छङ्कू निहन्ति । तावꣳसौ । अथैनामक्ष्णया मानेन प्रमाय समन्तꣳ स्पन्द्यया परितनोति । पृष्ठ्यामातनोति । मध्यमादौत्तरवेदिकाच्छङ्कोरनुस्पन्द्यꣳ षट् प्रतीचः प्रक्रमान् प्रक्रामति दक्षिणा सप्तमम् । तत्स्फ्यं निदधाति । स उपरवाणां कालः । अथ महावेद्या उत्तरादꣳसीयाच्छङ्कोर्वेद्यन्तेन द्वादश प्रतीचः प्रक्रमान् प्रक्रामत्युदञ्चं त्रयोदशम् । तदाग्नीध्र उपसीदति । स उत्करस्य

कालः । अथोपरवाणां कालात् स्तम्बयजुर्हरति । [ २१·१४-स्तम्बयजुषो हरण इति ॥ सूत्रं बोधायनस्य ॥ उपरवकालादाग्नीध्रो हरेदिति शालीकिः ॥ ] इदमेव प्रसिद्धं पौरोडाशिकम् । त्रिर्यजुषा तूष्णीं चतुर्थम् । पूर्वं परिग्राहं परिगृह्णाति । करणं जपति इमां नराः कृणुत वेदिमेत्य वसुमतीꣳ रुद्रवतीमादित्यवतीं विश्वदेव्यावतीं वर्ष्मन्दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येत् इति । उद्धन्ति । उद्धतादाग्नीध्रस्त्रिर्हरति । यदाग्नीध्रस्त्रिर्हरत्यथाग्रेण शालां तिष्ठन् संप्रैषमाह वेदिकारा वेदिं कल्पयत प्र स्थलानि भिन्दत प्रति निम्नान् पूरयत किꣳशारूणि निरस्यत प्राचीमुदीचीं [1]प्रवणां निस्तिष्ठत इति । यथासंप्रैषं ते कुर्वन्ति । अथ महावेद्या उत्तरादꣳसीयाच्छङ्कोर्वेद्यन्तेन त्रीन् प्रतीचः प्रक्रमान् प्रक्रामत्युदञ्चं चतुर्थम् । तच्चात्वालस्यावृता चात्वालं परिलिखति । [ २१·१४—आख्यातं चात्वालस्य परिलेखनम् ॥ ] उत्तरवेदेरावृतोत्तरवेदिं निवपति । [ २१·१४-आख्यातं लोकाग्नीनाꣳ हरणम् ॥ ] उत्तरनाभिमुत्सायाथैनां प्रतिच्छाद्य ।

## ३३. मध्यमापराह्णिकप्रवर्ग्योपसदौ

बौधायनश्रौ०—

[ ६·२३-२४ ] — आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । अथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय द्विस्तनव्रतं दोहयत इति । आह्वयति सुब्रह्मण्यः सुब्रह्मण्याम् । द्विस्तनव्रतं दोहयति । तदर्धरात्रे प्रयच्छति । अथाध्वर्युरपररात्र आद्रुत्य सꣳशास्ति एकस्तनव्रतं दोहयत इति ॥

## ३४. उत्तमपौर्वाह्णिकापराह्णिकप्रवर्ग्योपसदौ

बौधायनश्रौ०—

[ ६·२४ ] — प्रातरुदित आदित्ये विसृष्टायां वाच्युत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति । हराशयामत्र जुहोति । अथोपनिष्क्रम्य संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वयार्धस्तनव्रतं प्रयच्छत इति । आह्वयति सुब्रह्मण्यः सुब्रह्मण्याम् । अर्धस्तनव्रतं प्रयच्छति । अथ तदानीमेवापराह्णिकी प्रवर्ग्योपसदौ समस्यति[2] । अथोपनिष्क्रम्य[2] संप्रैषमाह सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रतिप्रस्थातः प्रवर्ग्यस्यावृता प्रवर्ग्यꣳ सꣳसादयोद्वासनाय इति । [ ९·१२ ]-स एवमेव प्रवर्ग्येण प्रचरति त्र्यहꣳ षडहं द्वादशाहꣳ संवत्सरम् । चतुरो वा मासाꣳस्तापश्चितेऽग्नौ । प्रवर्ग्यं भक्षयित्वा संवत्सरं न माꣳसमश्नीयात् । न रामामुपेयात् । न मृन्मयेन पिबेत् । नास्य राम उच्छिष्टं पिबेत् । तेज एव तत् सꣳश्यतीति ब्राह्मणम् ॥

## ३५. प्रवर्ग्योद्वासनम्

बौधायनश्रौ०—

१. [ ६·२४ ] --त्रेधैतत्पदं कुर्वन्ति । गार्हपत्ये तृतीयमुपयमनीषु तृतीयं नि तृतीयं दधति । अथ प्रवर्ग्यस्यावृता प्रवर्ग्यमुद्वासयति । [ ९·१२ ]—प्रवर्ग्यमुद्वासयिष्यन्नुपकल्पयते त्रीञ्छालाकानिध्माꣳस्त्रीणि सतान्युदकुम्भौ दधि मधुमिश्रं मुष्टिमवकाभारं विꣳशतिमौदुम्बरीः समिधो मुञ्जप्रलवान् रौहिणापिष्टानि खरेभ्यः सिकता इति । अत्र पूर्वाꣳ शान्तिमुपयन्ति नमो वाचे इति । अथाग्रेणाहवनीयं तृणानि सꣳस्तीर्य तदेतत् परिघर्म्यꣳ सर्वꣳ

१. 'प्रणवां' इति मुद्रितपाठः । प्रायः मुद्रणदोषः ।

२. एवं बहुषु लिखितपुस्तकेषु । 'समस्योप°' इति मुद्रितपाठः ।

सह सं॰सादयन्ति। अत्र सम्राडासन्दीमत्र स्थूणां गोदोहनीमत्र छागायै शङ्कुमिति। अथैतौ खरौ नानैव सतयोः समुप्यात्रैव सह सं॰सादयन्ति। अथैतमुच्छिष्टखरं परिकर्मी वाग्नीध्रो वा सते समुप्य दक्षिणया द्वारोपनिर्हृत्य मार्जालीयदेशे निवपति। अथैतेनैव यथेतमेत्य निष्क्रामयन्ति[1] वृषलान्। ह्वयन्ति पत्नीम्। ह्वयन्ति होतारम्। ह्वयन्ति ब्रह्माणम्। ह्वयन्ति प्रतिप्रस्थातारम्। ह्वयन्ति प्रस्तोतारम्। ह्वयन्त्याग्नीध्रम्। परिश्रयन्ति द्वाराणि। अथैतां पत्नीमुदग्दशेन वाससान्तर्दधाति। परिस्तृणन्ति। दक्षिणत उपविशतो ब्रह्मा च यजमानश्च। अत्र पूर्वां॰ शान्तिमुपयन्ति येषामनुपेता भवति। अथ गार्हपत्य आज्यं विलाप्योत्पुनाति। एतस्मिन् काले प्रतिप्रस्थाताहवनीये शालाकमिध्ममादीप्य मुखदघ्ने धारयन् पुरस्तात् प्रत्यङ्मुखस्तिष्ठति। तमध्वर्युः पश्चात् प्राङ्मुखस्तिष्ठन् स्रुवाहुत्याभिजुहोति घर्म या ते दिवि शुग् या गायत्रे छन्दसि या ब्राह्मणे या हविर्धाने तां त एतेनावयजे स्वाहा इति। तमत्रैव प्रास्यापरमादीप्य नाभिदघ्ने धारयन् पुरस्तात् प्रत्यङ्मुखस्तिष्ठति। तमध्वर्युः पश्चात् प्राङ्मुखस्तिष्ठन् स्रुवाहुत्याभिजुहोति घर्म या तेऽन्तरिक्षे शुग् या त्रैष्टुभे छन्दसि या राजन्ये याग्नीध्रे तां त एतेनावयजे स्वाहा इति। तमत्रैव प्रास्यापरमादीप्य जानुदघ्ने धारयन् पुरस्तात् प्रत्यङ्मुखस्तिष्ठति। तमध्वर्युः पश्चात् प्राङ्मुखस्तिष्ठन् स्रुवाहुत्याभिजुहोति घर्म या ते पृथिव्यां॰ शुग् या जागते छन्दसि या वैश्ये या सदसि तां त एतेनावयजे स्वाहा इति। तमत्रैव प्रास्य विवृत्य द्वाराण्यथ प्रवर्ग्यमादाय पूर्वया द्वारोपनिष्क्रामन्ति अनु नोऽद्यानुमतिः, अन्विदनुमते त्वम् इति द्वाभ्याम्।

२. [९.१३-१६]—अथ महावेदिमवक्रम्य प्रस्तोतारमाह प्रस्तोतः साम गाय इति। साम्ना प्रस्तोतान्ववैति। त्रिर्निधनमुपैति। पुरुषःपुरुषो निधनमुपैतीति ब्राह्मणम्। अथाभिक्रामन्ति दिवस्त्वा परस्पाया अन्तरिक्षस्य तनुवः पाहि पृथिव्यास्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे इति। विषुवति द्वितीयं निधनमुपयन्ति। अथाभिक्रामन्ति ब्रह्मणस्त्वा परस्पायाः क्षत्रस्य तनुवः पाहि विशस्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे इति। उपरवकाले तृतीयं निधनमुपयन्ति। अथाभिक्रामन्ति प्राणस्य त्वा परस्पायै चक्षुषस्तनुवः पाहि श्रोत्रस्य त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे इति। अथोत्तरेणोत्तरवेदिमुपरमन्ति। स यो बलवां॰स्तमाह अनेनोदकुम्भेन संततया धारया त्रिः प्रदक्षिणं परिषिञ्चन् परीहि इति। स तथा करोति। परिषिच्यमाने यजमानं वाचयति वल्गुरसि शंयुधायाः शिशुर्जनधायाः शं च वक्षि परि च वक्षि इति। निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येति। अथोत्तरनाभिमभिमृशति चतुःस्रक्तिर्नाभिर्ऋतस्य सदो विश्वायुः शर्म सप्रथा अप द्वेषो अपह्वरोऽन्यव्रतस्य सश्चिम इति। अथैतौ खरावुत्तरेणोत्तरनाभिमवकिरति। तं धृष्टीभ्यां प्राग्दीर्घं खरं करोति। तस्मिन् सुवर्णं॰हिरण्यं निधाय कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमोपस्तृणाति। अथैनं॰ रौहिणपिष्टैरनुप्रकीर्य मुञ्जप्रलवैरनुविशाद्य सिकताभिरनुप्रकिरति। अथाध्वर्युः प्रचरणीयं महावीरं॰ शफाभ्यां परिगृह्य दध्ना मधुमिश्रेण पूरयति घर्मैतत्तेऽन्नमेतत् पुरीषं तेन वर्धस्व चा च प्यायस्व वर्धिषीमहि च वयमा च प्यासिषीमहि इति। अथैनमभिपूरयति महीनां पयोऽसि विहितं देवत्रा ज्योतिर्भा असि वनस्पतीनामोषधीनां॰ रसो वाजिनं त्वा वाजिनोऽवनयामः इति। [९.१७-महीनां पयोऽसीत्युक्तं महावीरेऽवनयनम्।] अथैनं पूर्वार्धे खरस्य सादयति ऊर्ध्वं मनः सुवर्गम् इति। अथैतावुपशयौ महावीरौ वेदाभ्यां परिगृह्य दध्ना मधुमिश्रेण पूरयित्वाग्रेण प्रचरणीयं महावीरं॰ सं॰स्पृष्टौ सादयति। अथैतां प्रचरणीं दध्ना मधुमिश्रेण पूरयित्वोपरिष्टान्महावीरेषु प्रतीचीनबिलां॰ सादयति। अथैतौ रुक्मौ दध्ना मधुमिश्रेण समज्याभितः प्रचरणीयं महावीरं॰ सं॰स्पृष्टौ सादयति। अथैते पिन्वने दध्ना मधुमिश्रेण पूरयित्वाभितः प्रचरणीयं

१. एवं केषुचिल्लिखितपुस्तकेषु। 'निष्क्रमयन्ति' इति मुद्रितपाठः।

महावीरं प्रतीचीनबिले सꣳस्पृष्टे सादयति । अथैतं मौञ्जं वेदं विस्रस्य दध्ना मधुमिश्रेण समज्याग्रेण महावीरान् प्रतीचीनाग्रꣳ सꣳस्पृष्टं विस्तृणाति । अथैतौ शफौ दध्ना मधुमिश्रेण समज्य जघनेन प्रचरणीयं महावीरं तिरश्चीनाग्रौ व्यतिषक्तौ सꣳस्पृष्टौ सादयति । अथैते रौहिणहवनी दध्ना मधुमिश्रेण समज्य शफाग्राभ्यां प्रतीचीनाग्रे सꣳस्पृष्टे सादयति । अथैता दशौदुम्बरीः समिधो दध्ना मधुमिश्रेण समज्य जघनेन रौहिणहवनी प्रतीचीनाग्राः सꣳस्पृष्टा विस्तृणाति । अथैतं कुशमयं वेदं विस्रस्य दध्ना मधुमिश्रेण समज्य जघनेन प्रचरणीयं महावीरं प्रतीचीनाग्रꣳ सꣳस्पृष्टं विस्तृणाति । अथैते स्थूणे दध्ना मधुमिश्रेण समज्य जघनेन शफौ प्रतीचीनाग्रे सꣳस्पृष्टे सादयति । अथैतदुपयमनं दध्ना मधुमिश्रेण पूरयित्वोपरिष्टात् स्थूणयोः प्रतीचीनबिलꣳ सादयति । अथैतद् रज्जुदाम[1] विस्रस्य दध्ना मधुमिश्रेण समज्यात्रैवोपयमने समवशमयति । अथैतान् कार्ष्मर्यमयान् परिधीन् धवित्रदण्डानिति विस्रस्य दध्ना मधुमिश्रेण समज्योपरिष्टादुपयमनं तिरश्चीनाग्रान् व्यतिषक्तान् सꣳस्पृष्टान् विस्तृणाति । अथैतामभ्रिं दध्ना मधुमिश्रेण समज्य जघनेन स्थूणे तिरश्चीनाग्राꣳ सꣳस्पृष्टाꣳ सादयति । अथैते धृष्टी दध्ना मधुमिश्रेण समज्याभ्य्रग्राभ्यां प्रतीचीनाग्रे सꣳस्पृष्टे सादयति । अथैते धवित्रे दध्ना मधुमिश्रेण समज्य जघनेन धृष्टी सꣳस्पृष्टे सादयति । अथैता दशौदुम्बरीः समिधो दध्ना मधुमिश्रेण समज्य जघनेन धवित्रे प्रतीचीनाग्राः सꣳस्पृष्टा विस्तृणाति । अथैतामाज्यस्थालीं दध्ना मधुमिश्रेण पूरयित्वा जघनेनाभ्रिꣳ सꣳस्पृष्टाꣳ सादयति । अथैतद् धवित्रं दध्ना मधुमिश्रेण समज्य तेनाज्यस्थालीमपिदधाति । अथैते रौहिणकपाले दध्ना मधुमिश्रेण समज्य जघनेनाज्यस्थालीꣳ सꣳस्पृष्टे सादयति । अथैतꣳ स्रुवं दध्ना मधुमिश्रेण पूरयित्वा जघनेनाज्यस्थालीमन्तरेण रौहिणकपाले प्रतीचीनबिलꣳ सꣳस्पृष्टꣳ सादयति । अथैतं कुशमयं वेदं विस्रस्य दध्ना मधुमिश्रेण समज्य जघनेनाज्यस्थालीं प्रतीचीनाग्रꣳ सꣳस्पृष्टं विस्तृणाति । अथैतामासन्दीं विस्रस्य दध्ना मधुमिश्रेण समज्यात्रैवोत्तरतः सꣳस्पृष्टाꣳ सादयति । अथैतां मृदमतिशिष्टां दध्ना मधुमिश्रेण समज्यान्तरेण सक्थिनी निवपति घर्मैतत्तेऽन्नमेतत्पुरीषं तेन वर्धस्व चा च प्यायस्व वर्धिषीमहि च वयमा च प्यासिषीमहि इति । अथैनꣳ सिकताभिरनुप्रकीर्य मुञ्जप्रलवैरनुविशाद्य रौहिणपिष्टैरनुप्रकीर्य कृष्णाजिनेन प्राचीनग्रीवेणोत्तरलोम्ना प्रोर्णोति । अपि वाभितः प्रचरणीयं महावीरं परिचिनोत्यादित्यमण्डलवत् ।

३. [ ९.१६ ] — अथैनमुपतिष्ठते अयं यः पुरुषरूपोऽसि स न आस्ये न तिष्ठसि । नोर्ध्वो न तिर्यङ्विधां तेऽनु विहितोऽस्मि विधां मेऽनु विहितोऽसि यस्त्वमसि सोऽहमस्मि योऽहमस्मि स त्वं नाकमारोह सह यजमानेन साकम् इति । अथ शुमुष्टिमादाय दध्ना मधुमिश्रेणावोक्षति अस्कान् द्यौः पृथिवीमस्कानृषभो युवा गाः । स्कन्नेमा विश्वा भुवना स्कन्नो यज्ञः प्रजनयतु । अस्कानजनि प्राजनि । आ स्कन्नाज्जायते वृषा । स्कन्नात् प्रजनिषीमहि इति । अथ प्रस्तोतारमाह प्रस्तोतर्वार्षाहरꣳ साम गायेष्टाहोत्रीयं च इति । स यो बलवाꣳस्तमाह अनेनोदकुम्भेन संततया धारया त्रिः प्रदक्षिणं परिषिञ्चन् परीहि इति । स तथा करोति । परिषिच्यमाने यजमानं गन्धर्वयजूꣳषि वाचयति रन्तिर्नामासि दिव्यो गन्धर्वः इति प्रतिपद्य इन्द्रो दक्षं परिजानादहीनम् इत्यातः । निधाय कुम्भं यथेतं त्रिः पुनः प्रतिपर्येति । अथैनमुपतिष्ठते एतत्त्वं देव घर्म देवो देवानुपागा इदमहं मनुष्यो मनुष्यान् सोमपीथानु मेहि सह प्रजया सह रायस्पोषेण इति । अथाञ-

---

१. एवं केषुचिल्लिखितपुस्तकेषु । 'रज्जुद्वयं' इति मुद्रितपाठः ।

लिनाप उपहन्ति सुमित्रा न आप ओषधयः सन्तु इति। तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः इति। अथाप उपस्पृश्य ज्योतिष्मत्यादित्यमुपतिष्ठते उद्वयं तमसस्परि इति। अथैनमवकाभारेण प्रतिच्छाद्य गोप्तारꣳ समादिशति वयोभ्यो महावीरं गोपाय। प्रस्तोतः श्येतेनान्वेहि इति प्रस्तोतारमाह। अथैतेनैव यथेतमेत्य गार्हपत्ये द्वे स्रुवाहुती जुहोति उदु त्यम्, चित्रम् इति। अथाहवनीयमुपतिष्ठते[1] इमम् षु त्यमस्मभ्यꣳ सनिं गायत्रं नवीयाꣳसमग्ने देवेषु प्रवोचः इति। अथाग्नीध्रं[2] हुत्वाग्नीध्रदेश उत्तरꣳ शान्तिमुपयन्ति शं नो वातः पवतां मातरिश्वा इति।

## ३७. अग्निप्रणयनादिहविर्धानप्रवर्तनान्तम्

बौधायनश्रौ०—

[ ६·२४–२५ ]—अग्नेरावृताग्निं प्रणयति। अग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा संप्रैषमाह प्रोक्षणीरासादयेध्माबर्हिरुपसादय इत्येतावान् संप्रैषः। [ २१·१४–अग्नीषोमीयस्य बर्हिषः सꣳस्कार इति ॥ असिदादानप्रभृतीन् मन्त्रान् साधयेदिति बोधायनः॥ शुल्बप्रभृतीनिति शालीकिः॥ संभरणप्रभृतीनित्यौपमन्यवः ॥ इध्माबर्हिषोरुपसादन इति ॥ सूत्रमाचार्ययोः ॥ अत्रो ह स्माहौपमन्यवोऽत्रेवास्मा आसीनायेध्माबर्हिराहरेत्। तदादाय प्राङियात् कुशाहस्तश्च पृष्ठ्याकालं प्राङ् स्तृणन् गच्छेदिति ॥ ] [ २५·११–क उ खल्वग्नीषोमीयस्य बर्हिर्यजुषा कुर्यादिति ॥ उद्वास्य प्रवर्ग्यं प्रागाहवनीयस्य प्रणयनात्। सवनीयेभ्यश्च वत्सानपाकुर्यात्। व्यवच्छिन्न आहवनीये गार्हपत्ये पदतृतीयमुपवपेदेवमुपयमनीषु।] अत्रैवैतद्बर्हिरनुस्पन्द्यꣳ स्तृणाति सकृदेव। एतदेवेध्माबर्हिरग्नीषोमीयाय पशवे परिशयीतेत्येक आहुः। अथास्यैते अनसी प्रक्षालिते प्रपन्ने योग्यकृते अभितः शालां तिष्ठतः। तयोर्दक्षिणं वर्षीय उत्तरꣳ ह्रसीयः। उद्धृतफलकं दक्षिणमनुद्धृतफलकमुत्तरम्। तयोर्यदक्षे बद्धं तदवस्यति। अथैने अन्तर्वेद्यभ्यावर्तयन्ति। [ २१·१४–हविर्धानयोरभ्यावर्तन इति ॥ काष्ठानि वा तृणानि वान्तर्धायाभ्यावर्तयेदिति बोधायनः ॥ अनन्तर्धायैवेति शालीकिः ॥ ] अथाग्रेण शालामरत्निमात्रमभित स्पन्द्याꣳ स्थापयित्वा। अथैने प्रोक्षति वैष्णवी विष्णवे शुन्धेथाम् इति। [ २१·१४–हविर्धानयोः प्रोक्षण इति ॥ तूष्णीꣳ सꣳस्कृताभिरद्भिः प्रोक्षेदिति बोधायनः ॥ कमण्डलुभिरिति शालीकिः ॥ ] अथाह एहि यजमान इति। पूर्वया द्वारा शालां प्रपाद्य गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये सावित्रं जुहोत्यन्वारब्धे यजमाने युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः स्वाहा इति। अपरं चतुर्गृहीतं गृहीत्वाथ याचत्याज्यस्थालीꣳ सस्रुवाꣳ स्फ्यमुदपात्रं बर्हिर्हिरण्यमिति। एतत् समादायाह एहि यजमान इति। अन्वग्यजमानोऽनूची पत्नी पदतृतीयमादाय पूर्वया द्वारोपनिष्क्रम्य दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य दक्षिणस्यां वर्तन्याꣳ स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय संपरिस्तीर्याभिजुहोति इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्। समूढमस्य पाꣳसुरे स्वाहा इति। अथैतेषां पदपाꣳसूनामर्धान् पत्न्यञ्जलावावपति। अथैनान् सꣳस्रावेणाभिघारयति। सा प्राच्योत्तानेन पाणिना दक्षिणमक्षधुरमुपानक्ति आ नो वीरो जायतां कर्मण्यो यꣳ सर्वेऽनुजीवाम यो बहूनामसद्वशी इति। अपरं चतुर्गृहीतं गृहीत्वोत्तरस्य हविर्धानस्य पश्चादक्षमुपसृप्योत्तरस्यां वर्तन्याꣳ स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय संपरिस्तीर्याभिजुहोति इरावती धेनुमती हि भूतꣳ सूयवसिनी मनवे

१. एवं केषुचिल्लिखितपुस्तकेषु। '॰तिष्ठन्ते' इति मुद्रितपाठः। २. एवं केषुचिल्लिखितपुस्तकेषु। 'आग्नीध्रदेशं' इति मुद्रितपाठः।

यशसे । व्यस्कभ्नाद् रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः स्वाहा इति । अत्रैतान् पदपांसून् सर्वश एव पत्न्यञ्जलावावपति । अथैनान् संस्रावेणाभिघारयति । सा प्राचोत्तानेनैव पाणिनोत्तरमक्षधुरमुपानक्ति । समान उपाञ्जनः । [ १४·३– अथ वै भवति यज्ञं वा एतत् संभरन्ति यत् सोमक्रयण्यै पदम् । यज्ञमुखं हविर्धाने । यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यादिति । स यर्हि हविर्धाने प्राची प्रवर्तयति तर्हि तेन पदतृतीयेन पत्न्यक्षधुरमुपानक्ति । यज्ञमुख एव यज्ञमनुसंतनोतीति ब्राह्मणम् । ] [ २१·१४–वर्त्मनोरभिहोम इति ॥ सूत्रमौपमन्यवीपुत्रस्य ॥ अत्रो ह स्माह बोधायनो दक्षिणस्य हविर्धानस्य वर्तनिमभिजुहुयात् सर्वा अक्षधुर उपाञ्ज्यात् सर्वतश्च परिमृशेदिति ॥ अत्रो हस्माह शालीकिः सर्वा एव वर्तनीरभिजुहुयात् सर्वा अक्षधुर उपाञ्ज्यात् सर्वतश्च परिमृशेदिति ॥ ] अथैतानि शस्त्राणि प्रतिप्रस्थात्र उत्प्रयच्छति । नयन्ति पत्नीं ह्वयन्ति होतारम् ।

अथैने संपरिगृह्य संप्रैषमाह हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहि इति । त्रिरुक्तायां प्रवर्तयन्ति प्राची प्रेतमध्वरं कल्पयन्ती ऊर्ध्वं यज्ञं नयतं मा जीह्वरतम् इति । अथ यदक्ष उत्सर्जति सुवाग्देव दुर्यां आ वद इत्येव तत्र जपति । अथैतावञ्जसोपसंक्रामतोऽध्वर्युश्च प्रतिप्रस्थाता च । उत्तरेण हविर्धाने परीत्य पूर्वावुपातीत्य मध्यमादौत्तरवेदिकाच्छङ्कोरनुस्पन्द्यं त्रीन् प्रतीचः प्रक्रमान् प्रक्रामतः । तदेनयोर्नभ्यस्थयोश्चुबुके रमयतः अत्र रमेथां वर्ष्मन् पृथिव्याः इति । अथ दिवो वा विष्णवुत वा पृथिव्याः इत्याशीर्पदयर्चाध्वर्युर्दक्षिणस्य हविर्धानस्य दक्षिणतो मेथीं निहन्ति । अथैनां स्पन्द्यया सूपनिबद्धामुपनिबध्नाति विष्णोर्नु कं वीर्याणि प्र वोचम् इति । एवमेव प्रतिप्रस्थातोत्तरस्य हविर्धानस्योत्तरतो मेथीं निहन्ति । अथैनां स्पन्द्यया सूपनिबद्धामुपनिबध्नात्येतेनैव मन्त्रेण । [ २१·१४–मेथ्योर्निहनन इति ॥ स ह स्माह बोधायनो दक्षिणस्य हविर्धानस्य दक्षिणतो मेथीं निहन्यादुत्तरस्य दक्षिणत इति ॥ दक्षिणतश्चोत्तरतश्चेति शालीकिः ॥ मध्य इत्यौपमन्यवः ॥ ]

## ४०. सदोहविर्धानादिनिर्माणम्

बौधायनश्रौ०—

१. [ ६·२५ ]—अथाध्वर्युर्दक्षिणस्य हविर्धानस्य चुबुकात् प्राञ्चमरत्निं मीत्वा लोके न्यस्य गर्तं खानयति । अथ दक्षिणाद्युगान्तात् प्राञ्चं बाहुं मीत्वा लोके न्यस्य गर्तं खानयति । तावुभावुत्तरेणान्यं गर्तं खानयति । एवमेव प्रतिप्रस्थातोत्तरतस्त्रीन् गर्तान् खानयति । एवमपरतः । तेषु प्राचीनकर्णा स्थूणा उच्छ्रयन्ति । तासूदञ्चौ वंशौ प्रोहन्ति । अध्यस्यन्ति पुरस्ताद्रराटीम् विष्णो रराटमसि इति । विष्णोः पृष्ठमसि इति मध्यमं छदिरधिनिदधाति । विष्णो श्नप्त्रे स्थः इति ये अभितो भवतः । दक्षिणतश्चोत्तरतश्च परिश्रयन्ति । प्राचीं च प्रतीचीं च द्वारौ कुर्वन्ति । अथ दक्षिणे द्वार्बाहौ कुशहस्तमुपनिगृह्य दर्भणं प्रवयति दर्भणे स्पन्द्यान् विष्णोः स्यूरसि इति । [ २१·१४–द्वार्बाह्वोः परिषीवण इति ॥ सर्वान् द्वार्बाहून् मन्त्रेण परिषीव्येदिति बोधायनः ॥ पूर्वौपूर्वाविति शालीकिः ॥ दक्षिणौदक्षिणावित्यौपमन्यवः ॥ ] विष्णोर्ध्रुवमसि इति ग्रन्थिं करोति । तं तदानीमेव विस्रस्याह अकुर्वन्तो ग्रन्थीन् हस्तकौशलैर्निरितष्ठत इति । एवमेवोत्तरं द्वार्बाहुम् । एवमपरे द्वार्बाहू निरितष्ठति । अथैनदभिमृशति वैष्णवमसि विष्णवे त्वा इति ।

२. [ ६·२५–२६ ] — अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य शालामुखीयाच्छङ्कोरनुस्पन्द्यं षट् प्राचः प्रक्रमान् प्रक्रामति दक्षिणा सप्तमम् । तदग्निं निदधाति । स

औदुम्बर्यै कालः। औदुम्बर्यै कालादभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इति। आदायाभिमन्त्रयते अभ्रिरसि नारिरसि इति। तयौदुम्बर्या अवटं परिलिखति परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि इति। अथोद्गातारमाह उद्गातरेहीममौदुम्बर्या अवटं खन प्राक् पुरीषमुद्वपतात् इति। तꣳ स खनति वा खानयति वा। सोऽत एव सदो विमिमीते। यथा त्रीणि छदीꣳषि तिर्यञ्च्येवं प्राक्शः। यथा त्रीणि छदीꣳष्यन्वञ्च्येवमुदक्शः। अपि वा यथा द्वौ भागावुदक् स्पन्द्यायै स्यातामेको दक्षिणत इति। तस्य त्रिश्रेणिगर्तान् खानयति। सोऽत एव प्राङ् द्रुत्वा दक्षिणस्य हविर्धानस्य पुरोऽक्षमुपरवान् विमिमीते प्रादेशमुखान् प्रादेशान्तस्पादान्। अथोन्नेतारमाह उन्नेतरेहीमानुपरवान् खन प्रादेशमुखान् प्रादेशान्तस्पादान् बाहुमात्रानवाचोऽसंभिन्दन्नुपरिष्टादधस्तात् संतृणान् इति। तान् स खनति वा खानयति वा। अथैषां पुरीषं दक्षिणस्य हविर्धानस्याग्रेणोपस्तम्भनं निवपति। तं चतुरश्रं खरं करोति। अथैनꣳ सिकताभिराश्राशिनं करोति। अथोपरवाणां कालादभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इति। आदायाभिमन्त्रयते अभ्रिरसि नारिरसि इति। तया यूपावटं परिलिखति यथान्तर्वेद्यर्धꣳ स्याद्बहिर्वेद्यर्धम् परिलिखितꣳ रक्षः परिलिखिता अरातय इदमहꣳ रक्षसो ग्रीवा अपिकृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामि इति। अथाग्नीध्रमाह अग्नीदेहीमं यूपावटं खनोपरसंमितं प्राक् पुरीषमुद्वपताच्चतुरङ्गुलेनोपरमतिखनतात् इति। तꣳ स खनति वा खानयति वा।

३. [ ६.२६-२७ ] — यात्रदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थातौदुम्बरीꣳ स्थूणां यजमानेन संमायाधस्तात् परिवासयति अच्छिन्नो रायः सुवीरः इति। [ २५.११ — अथेयमौदुम्बरी स्थूणा यजमानेन संमिता कार्या भवति। ] अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य याचति यवमतीः प्रोक्षणीर्बर्हिर्हस्तमाज्यस्थालीꣳ सस्रुवां मैत्रावरुणदण्डꣳ हिरण्यमुदपात्रमिति। एतत् समादायाह एहि यजमान इति। औदुम्बर्येषा स्थूणा प्रक्षालिता प्रपन्ना प्रागवटादुपशेते। तां पुरस्तादर्वाचीं प्रोक्षति दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा इति। अवटेऽपोऽवनयति शुन्धतां लोकः पितृषदनः इति। यवान् प्रस्कन्दयति यवोऽसि यवयास्मद्द्वेषो यवयारातीः इति। बर्हिर्हस्तं व्यतिषज्यावस्तृणाति पितृणाꣳ सदनमसि इति। अथैनद्धिरण्यमन्तर्धाय स्रुवाहुत्याभिजुहोति पितृभ्यः स्वाहा इति। अथैनामुच्छ्रयति उद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीं दृꣳह इति। अथैनां प्राचीनकर्णां मिनोति द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणा इति। अथैनां प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि इति। मैत्रावरुणदण्डेन सꣳहन्ति ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह इति। अन्यूनमनतिरिक्तं परिन्यस्योदपात्रमुपनिनीय। अथास्यै विशाखे हिरण्यं निधाय स्रुवाहुत्याभिजुहोति घृतेन द्यावापृथिवी आपृणेथाꣳ स्वाहा इति। [ २१.१५- औदुम्बर्या अभिहोम इति ॥ सूत्रमौपमन्यवीपुत्रस्य ॥ अत्रो ह स्माह बोधायन एवमेव जुह्वदन्तर्धाय हिरण्यमभिजुहुयादिति। उभयोरेव विशाखयोर्हिरण्ये निधायाभिजुहुयादिति शालीकिः ॥ ] आन्तमन्ववस्रावयति। आन्तमेव यजमानं तेजसानक्तीति ब्राह्मणम्। अथैनामुद्गातृभ्यः प्राहुः। तस्यां तच्चेष्टन्ति यत्ते विदुः। एतस्या उच्छ्रयणमनु प्राचीनकर्णा स्थूणा उच्छ्रयन्ति। तासूदीचो वꣳशान् प्रोहन्ति। अध्यस्यन्ति मध्यमं छदिः इन्द्रस्य सदोऽसि इति। विश्वजनस्य छाया इति ये अभितो भवतः। नवच्छदि तेजस्कामस्य मिनुयादिति। त्रीणित्रीण्येव सर्वाणि

भवन्ति। दक्षिणान्युत्तराणि करोति। स दक्षिणानिदक्षिणान्येवोत्तराणि करोति। अन्तर्वर्तान् करोति व्यावृत्या इति। संधिषु तृणवर्तान् प्रत्यस्यति। तेऽन्तर्वर्ताः। अथैनत् परिश्रयन्ति परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः इति। दक्षिणतश्चोत्तरतश्च परिश्रयन्ति। प्राचीं च प्रतीचीं च द्वारौ कुर्वन्ति। अथ दक्षिणे द्वार्बाहौ कुशहस्तमुपनिगृह्य दर्भणं प्रवयति दर्भणे स्पन्द्याम् इन्द्रस्य स्यूरसि इति। इन्द्रस्य ध्रुवमसि इति ग्रन्थिं करोति। तं तदानीमेव विस्रस्याह अकुर्वन्तो ग्रन्थीन् हस्तकौशलैर्निस्तिष्ठत इति। एवमेवोत्तरं द्वार्बाहुम्। एवमपरे द्वार्बाहू निस्तिष्ठति। अथैनदभिमृशति ऐन्द्रमसीन्द्राय त्वा इति। अथ महावेद्या उत्तराद्द्वँ-सीयाच्छङ्कोर्वेद्यन्तेनाष्टादश प्रतीचः प्रक्रमान् प्रक्रामति। तदाग्नीध्रागारं विमिमीते यथा-न्तर्वेद्यर्धँ स्याद्बहिर्वेद्यर्धम्। अथैनत् समुच्चित्य परिश्रयन्ति। तस्य दक्षिणां द्वारं कुर्वन्ति। आग्नीध्रागारस्य पार्श्वमानी पञ्चारत्निः। एतेन मार्जालीयो व्याख्यातः। तस्योदीचीं द्वारं कुर्वन्ति॥

४. [ ६.२८-२९ ] — अथात्रैव तिष्ठन् याचत्यभ्रिं यवमतीः प्रोक्षणीर्बर्हिर्हस्त-माज्यस्थालीँ सस्रुवामधिषवणं चर्माधिषवणे फलके षट् छङ्कून् ग्रावाणँ हिरण्यमुदपात्र-मिति। एतत् समादायाह एहि यजमान इति। पूर्वया द्वारा हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्य नीड एतच्चर्मोत्सादयति। पुरोऽक्षमितराणि सँसादयन्ति। अथोपरवाणां कालादभ्रिमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इति। आदायाभिमन्त्र-यते अभ्रिरसि नारिरसि इति। तयोपरवान् परिलिखति पूर्वयोर्दक्षिणमेवाग्रे परिलिखितँ रक्षः परिलिखिता अरातय इदमहँ रक्षसो ग्रीवा अपिकृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपिकृन्तामि इति सर्वानेवानुपूर्वम्। [ २१.१५– उपरवाणां परिलेखन इति॥ त्रिस्त्रिरेकैकं परिलिखेदिति बोधायनः॥ सकृत्सकृदिति शालीकिः॥ ] खनति रक्षोहणो वलगहनो वैष्णवान् खनामि इति सर्वानेवानुपूर्वम्। अथैभ्यः पाँसूनुद्वपति इदमहं तं वलगमुद्वपामि यं नः समानो यम-समानो निचखानेदमेनमधरं करोमि यो नः समानो योऽसमानोऽरातीयति गायत्रेण छन्दसा इति। अवबाढो वलगः इति यजमानस्याधस्पदं पाँसूनुद्वपति पूर्वयोर्दक्षिणात्। त्रैष्टुभेन छन्दसा इत्यपरयो-र्दक्षिणात्। जागतेन छन्दसा इत्यपरयोरुत्तरात्। आनुष्टुभेन छन्दसा इति पूर्वयोरुत्तरात्। [ २१.१५– उपरवपाँसूनाँ हरण इति॥ सूत्रँ शालीकेः॥ अत्रो ह स्माह बोधायनो यजमानस्या-धस्पदमुपोप्योत्करँ हृत्वोपस्पृशेदिति॥ ] अत्रैतान् पदपाँसूनसञ्चरे परावपति। अत्र यं यजमानो द्वेष्टि तं मनसा ध्यायति। अथाप उपस्पृश्याथैनानवमृशतोऽध्वर्युश्च यजमानश्च। पूर्वयोर्दक्षिणमेवाध्वर्युरवमृशत्युत्तरं यजमानः। अथ यजमानः पृच्छति अध्वर्यो किमत्र इति। भद्रम् इति। तन्नौ सह इति। अथाध्वर्युः पृच्छति यजमान किमत्र इति। भद्रम् इति। तन्नौ सह इति। यमेवाध्वर्युः प्रजहाति तं यजमानोऽवमृशति। दक्षिणयोरपरमेवाध्वर्युरवमृशति पूर्वं यजमानः। अध्वर्युरत्र पृच्छति। अथ यजमानः। अपरयोरुत्तरमेवाध्वर्युरवमृशति दक्षिणं यजमानः। यजमानोऽत्र पृच्छति। अथाध्वर्युः। उत्तरयोः पूर्वमेवाध्वर्युरवमृश-त्यपरं यजमानः। अध्वर्युरत्र पृच्छति। अथ यजमानः। यजमानः प्रथमः पृच्छति यजमान उत्तमः। अथैनानभिमृशति विराडसि सपत्नहा सम्राडसि भ्रातृव्यहा स्वराडस्यभि-मातिहा विश्वाराडसि विश्वासां नाष्ट्राणाँ हन्ता इति सर्वानेवानुपूर्वम्। अथैनानद्भिः प्रोक्षति रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान् इति सर्वानेवानुपूर्वम्। अथैष्वपोऽवनयति रक्षोहणो वलगहनोऽवनयामि वैष्णवान् इति सर्वेष्वेवानुपूर्वम्।

अथैषु यवान् प्रस्कन्दयति यवोऽसि यवयास्मद्द्वेषो यवयारातीः इति सर्वेष्वेवानुपूर्वम्। [ २१·१५—उपरवाणां प्रोक्षण इति ॥ त्रिस्त्रिरेकैकं प्रोक्षेदिति बोधायनः ॥ सकृत्सकृदिति शालीकिः ॥ तस्मिन्नपोऽवनयेत् तस्मिन् यवान् प्रस्कन्दयेदित्येवमेवैतत्त्रिविधं कर्म कुर्यादित्यौपमन्यवः ॥ सर्वमेवैतत्कर्मावृता कुर्यादित्यौपमन्यवीपुत्रः ॥ ] अथैनान् बर्हिषावस्तृणाति रक्षोहणो वलगहनोऽवस्तृणामि वैष्णवान् इति सर्वानेवानुपूर्वम्। अथैनान् हिरण्यमन्तर्धाय स्रुवाहुत्याभिजुहोति रक्षोहणो वलगहनोऽभिजुहोमि वैष्णवान् स्वाहा इति सर्वानेवानुपूर्वम्। अथास्यैते फलके दीर्घसोमे संतृण्णे भवतोऽसंतृण्णे एकाहे। ते सꣳस्पृष्टे उपदधाति रक्षोहणौ वलगहनावुपदधामि वैष्णवी इति। अथैने शङ्कुभिः परिणिहन्ति द्वाभ्यां पुरस्ताद् द्वाभ्यां पश्चाद् द्वाभ्याममितोऽनवसर्पणाय। अथैने प्रदक्षिणं पुरीषेण पर्यूहति रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी इति। अथैने बर्हिषा परिस्तृणाति रक्षोहणौ वलगहनौ परिस्तृणामि वैष्णवी इति। अथैने अभिमृशति रक्षोहणौ वलगहनौ वैष्णवी इति। अथैतच्चर्म फलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यज्ञ प्रतितिष्ठ इति वा तूष्णीं वा। तिरश्चर्मन् फलके ग्रावाणोद्वादयति बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वद इति। नीड एतच्चर्मोत्सादयति। ग्रावसु ग्रावाणमभ्यर्जति। अथ दक्षिणस्य हविर्धानस्याग्रेणोपस्तम्भनं बर्हिर्मुष्टिमुपनिबध्नाति स्तोत्रेभ्यः।

५. [ ६·२९ ]—अथ याचति स्फ्यमुदपात्रं चात्वालात् पुरीषꣳ सिकता इति। एतत् समादायाह एहि यजमान इति। आग्नीध्रं द्रुत्वा स्फ्येनोद्धत्यावोक्ष्य चात्वालात् पुरीषꣳ सिकता इति निवपति विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा हिꣳसीः इति। तं परिमण्डलं धिष्णियं करोति। अथैनꣳ सिकताभिराश्राशिनं करोति। अथान्तःसदसं धिष्णियान्निवपति होतुः प्रथमम् वह्निरसि हव्यवाहनः इति। श्वात्रोऽसि प्रचेताः इति दक्षिणतो मैत्रावरुणस्य। तुथोऽसि विश्ववेदाः इत्युत्तरतो ब्राह्मणाच्छꣳसिनः। उशिगसि कविः इत्युत्तरतः पोतुः। अङ्घारिरसि बम्भारिः इत्युत्तरतो नेष्टुः। अवस्युरसि दुवस्वान् इत्युत्तरतोऽच्छावाकस्य। अथ दक्षिणे वेद्यन्ते मार्जालीयं धिष्णियं निवपति शुन्ध्यूरसि मार्जालीयः इति। सर्वेष्वेव रौद्रमनुवर्तयति। आग्नीध्रेऽन्ततो निवपत्युदक्सꣳस्थताया इति। अष्टौ न्यवाप्सीदिति। [ २१·१५—धिष्णियानां निवपन इति ॥ स ह स्माह बोधायनो वेद्यन्त आग्नीध्रीयं निवपेद् वेद्यन्ते मार्जालीयम्। धिष्णियान् न्युप्योदीचीनसꣳस्थतां कुर्यादिति ॥ अत्रो ह स्माह शालीकिरन्तर्वेद्याग्नीध्रीयं निवपेदन्तर्वेदि मार्जालीयम्। धिष्णियान् न्युप्य न चोदीचीनसꣳस्थतां कुर्यादिति ॥ ] अथाष्टावनुदिशति। सम्राडसि कृशानुः इत्याहवनीयमुपतिष्ठते। परिषद्योऽसि पवमानः इत्यास्तावम्। प्रतक्कासि नभस्वान् इति चात्वालम्। असंमृष्टोऽसि हव्यसूदः इति पशुश्रपणम्। अथ सदसो द्वारि तिष्ठन्नौदुम्बरीमुपतिष्ठते ऋतधामासि सुवर्ज्योतिः इति। ब्रह्मज्योतिरसि सुवर्धाम इति ब्रह्मसदनम्। अथात्रैव तिष्ठन् गार्हपत्यमुपतिष्ठते अजोऽस्येकपात् इति। अहिरसि बुध्नियः इति यं प्रहास्यन्तो भवन्ति ॥

## ४२. अग्नीषोमप्रणयनम्

**बौधायनश्रौ०—**

१. [ ६·३० ]— अथात्रैव तिष्ठन् संप्रैषमाह स्तृणीत बर्हिः प्र व्रतं यच्छत समपिव्रतान् ह्वयध्वमास्तावं बहुलꣳ स्तृणीत सदोहविर्धाने बहुले स्तृणीतोन्नेतर्ग्राव्णो वायव्यानि द्रोणकलशे दशापवित्रे समवधाय पत्नीशाले सꣳसादयाग्नीदाज्यमधिश्रय प्रतिप्रस्थातः स्रुचः संमृड्ढ्याज्येनोदेहि

पृषदाज्यायं दध्याहर इति। यथासंप्रैषं ते कुर्वन्ति। अथ दक्षिणे वेद्यन्ते बर्हिर्मुष्टिꣳ स्तृणाति देवबर्हिरूर्णाम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः इति। तां बहुलां पुरस्तात् प्रत्यञ्च स्तृणन्तो यन्ति। [ २१·१४—वेद्यै स्तरण इति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माह बोधायनस्त्रयो दक्षिणतस्त्रय उत्तरतो मध्ये सप्तमः पृष्ठ्याकालं प्राञ्च स्तृणन्तो गच्छेयुरिति ॥ पुरस्तादेवैनां प्रत्यञ्च स्तृणन्तोऽभ्यवक्रामेयुरित्यौपमन्यवः ॥ ] अथान्तःशालं पृषदाज्यवन्त्याज्यानि गृहीत्वा परिकर्मिभ्य उत्प्रदाय। [ १४·९ — उक्तं पृषदाज्यस्याविकृतस्य ग्रहणम्। ] [ २१·१५—अग्नीषोमीयस्याज्यानां ग्रहणे सादन इति ॥ सूत्रं बोधायनस्य ॥ पत्नीशाल एवाग्नीषोमीयस्याज्यानि गृह्णीयात् तानि खरे सादयेदिति शालीकिः ॥ ] [ २५·११-१२—अत्रो हैवैतानि कुर्याद्यूपावटं तु परिलिख्य पाणी संमृशीत। परिस्तृणीयात् पात्राणि निर्णिज्य सꣳसादयेत्। प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेत्। आज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि। ता उत्तरवेदिꣳ हरन्ति प्रोक्षणीश्च। अथ प्रतिप्रस्थाता पत्नीमभिसंनह्येत् पौरोडाशिकेन। अथैनां गार्हपत्यमीक्षयेत्। अथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्। पत्न्या तदवेक्षितमुपयच्छीत तेजोऽसि इति। अथैनच्छकलेनोपयत्य हरेत् तेजोऽनु प्रेहि इति। अथैनदाहवनीयेऽधिश्रयेत् अग्निस्ते तेजो मा वि नैत् इति। अथैनद्धृत्वोत्तरेण प्रोक्षणीः सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः। प्रसिद्धमाहवनीयसकाशे पृषदाज्यवन्त्याज्यानि गृह्णीतेति सिद्धमत ऊर्ध्वम्। यथो एतच्छालीकेः कल्पं वेदयन्ते पत्नीशाल एवाग्नीषोमीयस्याज्यानि[1] गृह्णीयात् तानि खरे सादयेदिति। समन्वानीय वासमन्वानीय वा पुराणगार्हपत्यं पाणी संमृशीत। परिस्तृणीयात्। पात्राणि निर्णिज्य सꣳसादयेत्। प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेत्। आज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि। ता अत्रैव सह सꣳसादयन्ति प्रोक्षणीश्च। न प्रतिप्रस्थाता पत्नीमभिसंनह्येत् पौरोडाशिकेन। नैनां गार्हपत्यमीक्षयेत्। अथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्। पत्न्या तदवेक्षितमुपयच्छीत तेजोऽसि इति। अथैनच्छकलेनोपयत्य हरेत् तेजोऽनु प्रेहि इति। अथैनद्गार्हपत्येऽधिश्रयेत् अग्निस्ते तेजो मा वि नैत् इति। अथैनद्धृत्वोत्तरेण प्रोक्षणीः सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः। प्रसिद्धं गार्हपत्यसकाशे पृषदाज्यवन्त्याज्यानि गृहीत्वा। परिकर्मिभ्य उत्प्रदाय ब्रह्मणे राजानमुत्प्रयच्छेत्। ] ब्रह्मणे राजानमुत्प्रयच्छति। तं ब्रह्मादायोत्तरतस्तिष्ठति। उत्तरतस्तिष्ठन्नग्निमन्वानयति उदग्ने तिष्ठानु मामुदेहि विश्वेर्देवैर्यज्ञियैः संविदानः। सुवर्गे लोके यजमानꣳ हि धेहि मास्यै ह्वास्था आहुत्यै यामुपेमः इति। [ २१·१५—समन्वानयन इति ॥ सूत्रं बोधायनस्य ॥ नाद्रियेतेति शालीकिः ॥ अर्धस्तनव्रतप्रदान इति ॥ समन्वानीय वासमन्वानीय वा पुराणगार्हपत्यमर्धस्तनव्रतं प्रयच्छेदिति बोधायनः ॥ नार्धस्तनव्रतं प्रयच्छेदिति शालीकिः ॥ ] अथाभ्यादधातीध्मं प्रणयनीयम्। उपोपयमनीः कल्पयन्ति चात्वालात्। समन्वारब्धेष्वपिव्रतेषु संप्रच्छन्नेषु गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा शालामुखीये वैसर्जनानि जुहोति त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ स्वाहा इति। [ २१·१५—वैसर्जनानाꣳ होम इति ॥ सूत्रं बोधायनस्य ॥ चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः॥] स्रुवेणाप्तुं प्रस्कन्दयति जुषाणो अप्तुराज्यस्य वेतु स्वाहा इति। अपरं चतुर्गृहीतं गृहीत्वा संप्रैषमाह अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहि इति। त्रिरनूक्तायामुद्यच्छन्ते[2]। होतुर्वशं यन्ति। अथ वै भवति

१. '°षोमस्या°' इति मुद्रितपुस्तके। परमुपरितनं द्वैधसूत्रमवधार्य '°षोमीयस्या°' इति पाठः स्वीकृतः।

२. एवं केषुचिल्लिखितपुस्तकेषु। 'त्रिरुक्ता°' इति मुद्रितपुस्तकपाठः।

प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्त्यन्वनांꣳसि प्रवर्तयन्तीति। [१४.२–अथ वै भवति प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्त्यन्वनांꣳसि प्रवर्तयन्ति।] यदस्यात्र शस्त्रं भवति पूर्वं तेनाग्निमन्ववस्यन्ति। अथाग्निप्रथमाः प्रतिपद्यन्तेऽन्वग्राज्ञा चाज्यैश्चान्वग्ग्रावोवायव्यानि[1]। पूर्वया द्वारोपनिष्क्रामन्ति अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन्। अयꣳ शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ इति। उत्तरेण सदः परीत्याग्नीध्रागारेऽग्निं निधाय नयवत्यर्चाग्नीध्रे जुहोति अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहा इति।

२. [६. ३०–३१]—अत्रैवैतद् ग्रावोवायव्यꣳ समुपसाद्योपातियन्ति राज्ञा चाज्यैश्च। आहवनीये स्रुवाहुतिं जुहोति उरु विष्णो वि क्रमस्वोरु क्षयाय नः कृधि। घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा इति। [२५.१२–संप्रच्छन्नेषु स्रुवाहुती जुहुयात्। संप्रच्छन्नाश्चैव गच्छेयुराहवनीयात्। राजा दक्षिणार्ध्यः स्यादथाग्निरथ ग्रावोवायव्यान्युत्तरार्ध्यान्येवाज्यानि। अपि वाग्निर्दक्षिणार्ध्यः स्यादथ राजाथ ग्रावोवायव्यान्युत्तरार्ध्यान्येवाज्यानि। पूर्वया द्वारोपनिष्क्रम्योत्तरेण सदः परीत्याग्नीध्रागारेऽग्निं निधायाभिहुत्य प्रोक्षणीहस्त उत्तरेणाग्नीध्रीयं धिष्णियं प्रतिपद्यते। अन्वञ्च आज्यैः।

अथ प्रोक्षणीभिरुपोत्तिष्ठति। इध्मं प्रोक्षति। वेदिं प्रोक्षति। बर्हिःप्रोक्षति। बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृह्णाति। पञ्चविधं बर्हिं स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान् परिधीन् परिदधाति। ऊर्ध्वे समिधावादधाति। पैक्षवी विधृती तिरश्ची सादयति। विधृत्योराश्ववालं प्रस्तरम्। प्रस्तरे जुहूम्। बर्हिषीतराः। एता असदन् इति समभिमृश्याथाप उपस्पृश्य ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं प्रपादयति[2] सोमो जिगाति गातुविद्देवानामेति निष्कृतमृतस्य योनिमासदम् इति। अथ दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमास्तृणाति अदित्याः सदोऽसि इति। अदित्याः सद आ सीद इति कृष्णाजिने राजानम्। अथैनं देवताभ्यः संप्रयच्छति एष वो देव सवितः सोमस्तꣳ रक्षध्वं मा वो दभत् इति। संप्रदायोपतिष्ठते एतत्त्वꣳ साम देवो देवानुपागा इदमहं मनुष्यो मनुष्यान् सह प्रजया सह रायस्पोषेण इति। नमो देवेभ्यः इति प्राञ्चमञ्जलिं करोति। स्वधा पितृभ्यः इति दक्षिणा न्यञ्चति। अथोपनिष्क्रामति इदमहं निर्वरुणस्य पाशात् इति। अथाहवनीयमुपतिष्ठते सुवर भि वि ख्यषं वैश्वानरं ज्योतिः इति। [२५.१२–१३–आहवनीये हुत्वेध्मं प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृहीत्वा पञ्चविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य कार्ष्मर्यमयान् परिधीन् परिधायोर्ध्वे समिधावभ्याधाय बर्हिर्मुष्टिं विधृती प्रस्तरमित्येतत समादाय प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरार्धे खरस्य बर्हिर्मुष्टिꣳ स्तृणीयात्। बर्हिषि विधृती। विधृत्योराश्ववालं प्रस्तरम्। प्रस्तरे जुहूम्। बर्हिषीतराः। एता असदन् इति समभिमृश्याप उपस्पृश्य ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं प्रपद्येदात्मानमभिपरिहरमाण इव। सिद्धमत ऊर्ध्वम्। क्व उ खलु शिल्पवदिध्माबर्हिरपवर्गं गच्छतीति। अग्नीषोमीय इत्येव ब्रूयात्।] अथ यजमानमवान्तरदीक्षां विसर्जयति अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानि इति। अथैनꣳ सꣳशास्ति स्रस्नीष्व मेखलां प्र मुष्टी सारय मैत्रावरुणाय दण्डं प्रयच्छ यजमान इति स्वाचक्षतां नामग्राहं ते पितृभिः पितामहैः प्रपितामहैः पुत्रैः पौत्रैः सुब्रह्मण्यः सुब्रह्मण्यामाह्वयतु इति। स

१. एवं केषुचिल्लिखितपुस्तकेषु। 'ग्राव्णो वायव्यानि' इति मुद्रितपुस्तकपाठः। २. यजमानः।

एवमेवैतत् सर्वं करोति। [ २५·१३ – का उ खलु देवता सुब्रह्मण्या प्रथमाहूयत इति। वागेव वाचमाह्वयतीति । क उ खलु पितापुत्रीया सुब्रह्मण्या प्रथमाहूयत इति। अग्नीषोमीयस्य हुतायां वपायाम्। परिहृतासु वसतीवरीषु द्वितीया । प्रातरनुवाके तृतीया। दक्षिणानामु ह काल एक आह्वयन्तीति ॥ ]

## ४ ५. अग्नीषोमीयपशुवपायागः

बौधायनश्रौ०—

[ ६.३१–३२ ]—अथ यूपाहुतिꣳ हुत्वा यूपं यजुषा करोति[1]। [ २५.११—अथायं यूपो यजमानस्यारत्निभिर्निर्मितो भवति। स[2]सोपर[2] इत्येके। ] यूपावटं यजुषा करोति[3]। तदेतद्यूपावटान्तम्। अथ यूपस्यावृता यूपमुच्छ्रयति[4]। स्वर्वन्तं यूपमुत्सृज्याग्नीषोमीयं पशुमुपाकरोति। [१४·३-अथ वा अस्यैष धिष्णियो हीयते सोऽनुध्यायति स ईश्वरो रुद्रो भूत्वा प्रजां पशून् यजमानस्य शमयितोः। यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणꣳ हरेदिति। स यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणꣳ हरति। तेनैवैनं भागिनं करोतीति ब्राह्मणम्। अथ वै भवति यजमानो वा आहवनीयः यजमानं वा एतद्वि कर्षन्ते यदाहवनीयात् पशुश्रपणꣳ हरन्ति। स वैव स्यान्निर्मन्थ्यं वा कुर्यादिति। स यद्यु[5] हैनं[5] करिष्यन् भवति नैनमन्वानयते। अजस्र एवाप्येष दीप्यमानः शेते। यद्यु वा एनमन्वानयते तस्य पशुवेलायामुल्मुकमादायारणी उपसंगृह्य पूर्वः पशोः प्रतिपद्यते। निर्मन्थ्येनात्र पशुꣳ श्रपयन्ति। वपया तत्सहोल्मुकमाहरन्ति यजमानस्य सात्मत्वायेति ब्राह्मणम्। ] [ १४·३-प्रज्ञातमुपाकरणस्य। उक्तमपाव्यानां चरणम्। ब्राह्मणमुत्तरम्। ] तस्य प्रसिद्धं वपया चरित्वा[6] वपाश्रपणी अनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्ते ॥

## ४ ८. वसतीवरीग्रहणम्

बौधायनश्रौ०—

[ ६·३२ ]—अथ यो वीडितः कुम्भस्तं याचति। [ २५·१३–अथ यो वीडितः कुम्भस्तं याचतीति दृढ इत्येवेदमुक्तं भवति। ] तमादायान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्रापस्तद् यन्ति। [ २१·१५-वसतीवरीणामनुसꣳहरण इति ॥ अनुसꣳहरेदिति बोधायनः। नानुसꣳहरेदिति शालीकिः ॥ ] नान्तमा वहन्तीरत्येति। न स्थावराणां गृह्णाति। प्रतीपं तिष्ठन् गृह्णाति। छायायै चातपतश्च संधौ गृह्णाति हविष्मतीरिमा आपो हविष्मान् देवो अध्वरो हविष्माꣳआ विवासति हविष्माꣳ अस्तु सूर्यः इति। [ २१·१५—वसतीवरीणां ग्रहण इति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माह बोधायन उभयतःशुक्रा आदित्यवतीर्वसतीवरीर्गृह्णीयात्। ताः शुक्राः। ताभिराप्याययेत्। ताभिरभिषुणुयादिति[7]। धिष्णियान् न्युप्य वसतीवरीर्गृह्णीयादित्यौपमन्यवः ॥ ] अथैना आदाय प्रदक्षिणमावृत्य सव्येऽꣳसे निधायैतेनैव यथेतमेत्योत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः परीत्य पूर्वया द्वारा शालां प्रपाद्य जघनेन गार्हपत्यमौपसदायां वेद्याꣳ सꣳस्पृष्टाः सादयति अभ्रेर्वोऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत्त इति ॥

---

१. द्रष्टव्यं श्रौ. १ पृ. ५८७। २. एवं केषुचन लिखितपुस्तकेषु। 'सहोपर' इति मुद्रितपुस्तकपाठः। ३. द्रष्टव्यं श्रौ. १ पृ. ५८९। ४. द्रष्टव्यं श्रौ. १ पृ. ५९१। ५. एवं केषुचिल्लिखितपुस्तकेषु। 'यद्यहैनं' इति मुद्रितपुस्तकपाठः। ६. द्रष्टव्यं श्रौ. १ पृ. ५९५ ७. एतद्विषयकं कर्मान्तसूत्रम् अग्रे 'अपां ग्रहणम्' इति प्रकरणे ( पृ. ५५३ ) द्रष्टव्यम्।

## ४९. अग्नीषोमीयपशुपुरोडाशहविर्यागौ[1]

**बौधायनश्रौ०—**

[ ६·३२ ]—अथ पशुपुरोडाशं निर्वपति । इडान्तः पशुपुरोडाशः संतिष्ठते । पत्नीसंयाजान्तः पशुः हृदयशूलान्त इत्येके ।

## ५१. वसतीवरीपरिहरणं पितापुत्रीयसुब्रह्मण्याह्वानं च

**बौधायनश्रौ०—**

१. [ ६ · ३३ ] — अथ वसतीवरीः परिहरिष्यन्नाह व्यपक्रामत मा वोऽभिपरिहारिषम् इति । यजमानायतने यजमान उपविशति । जघनेन गार्हपत्यं पत्नी । अथैना आदाय दक्षिणया द्वारोपनिर्हृत्य सव्येऽꣳसे निधाय दक्षिणेन सदः परीत्य दक्षिणेन मार्जालीयं धिष्णियं पर्याहृत्य दक्षिणतो यूपेन सꣳस्पृष्टाः सादयति इन्द्राग्नियोर्भागधेयीः स्थ इति । अथैना आदायोदङ्ङावृत्य दक्षिणेऽꣳसे निधायैतेनैव यथेतमेत्य जघनेन गार्हपत्यमौपसदायां वेद्याꣳ सꣳस्पृष्टाः सादयति मित्रावरुणयोर्भागधेयीः स्थ इति । अथैना आदाय पूर्वया द्वारोपनिर्हृत्य दक्षिण एवाꣳसे निधायोत्तरेण सदः परीत्योत्तरेणाग्नीध्रीयं धिष्णियं पर्याहृत्योत्तरतो यूपेन सꣳस्पृष्टाः सादयति विश्वेषां देवानां भागधेयीः स्थ इति । अथैना आदाय प्रदक्षिणमावृत्य सव्येऽꣳसे निधायैतेनैव यथेतमेत्य जघनेनाग्नीध्रीयं धिष्णियꣳ सꣳस्पृष्टाः सादयति यज्ञे जागृत इति । [ २१·१५ -- वसतीवरीणां परिहरण इति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माह बोधायन एवमेवैनाः परिहरन्नग्रेण यूपꣳ सादयित्वा जघनेन गार्हपत्यमुपसाद्याग्नीध्रे सन्ना अभिमृशेत् यज्ञे जागृत इति ॥ ]

२. [ ६ · ३४ ]—अथ पयाꣳसि विशास्ति या सम्राड्धुक् तस्यै दधिघर्माय दधि कुरुत या यजमानस्य तस्या आमिक्षायै या पत्न्यै तस्या आशिरे पयश्च सक्तूꣳश्च कुरुत शृतातङ्क्यमादित्यग्रहाय दधि कुरुत पुरोडाशीयानि पिष्टानि कुरुत धाना हारियोजनीः कुरुत चतुरोऽम्भृणाꣳस्त्रीनुदचनानयुज एकधनाꣳस्त्र्यवमानेकादशपरमाꣳश्चतस्रो रशनाश्चतस्रो वपाश्रपणीर्द्वयमिध्माबर्हिरौदुम्बरान् महापरिधीन् कुरुत सुब्रह्मण्यः सुब्रह्मण्यामाह्वयतु इति । यथासंप्रैषं ते कुर्वन्ति । अथैनानम्भृणानायातयति[2] उत्तरस्य हविर्धानस्य नीड आधवनीयम् । प्रउगे पूतभृतम् । तयोः समान उदचनः । आग्नीध्र एकꣳ सोदचनम् । मार्जालीय एकꣳ सोदचनम् । आग्नीध्र एताꣳ रात्रिं यजमानः संविशति । हविर्धाने राजानं गोपायन्ति । [ २५.१२ — पयश्च सक्तूꣳश्च कुरुत इति । श्रयणार्थे एवैते उक्ते भवतः । चतस्रो रशनाश्चतस्रो वपाश्रपणीर्द्वयमिध्माबर्हिरिति सवनीयस्य चानूबन्ध्यस्य चैतानि भवन्ति । काश्चतस्रः स्थालीर्वायव्याः सोमग्रहणीरिति । आदित्यस्थाल्युक्थ्यस्थाल्याग्रयणस्थाली ध्रुवस्थालीति । अथेमानि द्वादशोर्ध्वपात्राणि भवन्ति दधिग्रहपात्रमुपाꣳश्वन्तर्यामयोर्द्विदेवत्यानाꣳ शुक्रामन्थिनोर्ऋतुपात्रे आदित्यस्थाल्या औपशयं पात्रमुक्थ्यस्थाल्या औपशयं पात्रम् । अथेम एकादश चमसा भवन्ति यजमानस्य ब्रह्मणो होतुरुद्गातुर्मैत्रावरुणस्य ब्राह्मणाच्छꣳसिनोऽच्छावाकस्य सदस्यस्याग्नीधः पोतुर्नेष्टुरिति । तेषां त्सरूणि सरूपाणि कारयेन्नैयग्रोधानाम् । विज्ञायत

---

१. पशुपुरोडाशयागहविर्यागयोः संपूर्णो विधिः श्रौ. १ पृ. ५९७–६०२ इत्यत्र द्रष्टव्यः ।

२. एवं बहुषु लिखितपुस्तकेषु । ' अथैता° ' इति मुद्रितपुस्तकपाठः ।

उत्तरस्यां ततौ यदुत्सरुकैश्चमसैर्भक्षयन्ति न्यग्रोधचमसैरिति। एतस्मान्नैयग्रोधा एव भवन्ति। रश्मिश्च म इत्यदाभ्य एवैष उक्तो भवति। अधिपतिश्च म इति प्राजापत्य एष दधिग्रहो भवति। सारस्वतश्च म पौष्णश्च म इति वसतीवरीरित्येक आहुः। अथ हैक आहू राजसूयिक एष महाग्रहो भवति। पोषणादु ह पौष्णो भवति ग्रहणादु सारस्वत इति॥]

# प्रातःसवनम्

## ५२. सुत्योपक्रमः

**बौधायनश्रौ०—**

[७:१-२] — अथातो महारात्र एव बुध्यन्ते। संबोधयन्त्येतानृत्विजोऽध्वर्युं होतारं ब्रह्माणमुद्गातारं प्रतिप्रस्थातारं प्रस्तोतारं प्रशास्तारं ब्राह्मणाच्छꣳसिनमच्छावाकं नेष्टारं पोतारꣳ सदस्यमुन्नेतारमाग्नीध्रं ग्रावस्तुतꣳ सुब्रह्मण्यं प्रतिहर्तारं ये चान्ये परिकर्मिणो भवन्ति। ते हस्तपादान् प्रक्षाल्याग्नीध्रे यजमानमुपसंगच्छन्ते। अथाध्वर्युर्हस्तौ संमृशते कर्मणे वां देवेभ्यः शकेयम् इति। अथात्रैव तिष्ठन् संप्रैषमाह उन्नेतर्प्राणो वायव्यानि द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ सꣳसादयाग्नीदाज्यमधिश्रय प्रतिप्रस्थातः स्रुचः संमृड्ढ्याज्येनोदेहि पृषदाज्याय दध्याहर इति। यथासंप्रैषं ते कुर्वन्ति। अथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशति अग्निर्मूर्धा दिवः इति। वैष्णव्या हविर्धानम् विष्णो त्वं नो अन्तमः इति। आग्नेय्या स्रुचः अयमग्निः सहस्रिणः इति। वायव्यया वायव्यानि वायो शतꣳ हरीणाम् इति। ऐन्द्या सदः इन्द्रं विश्वा अवीवृधन् इति। [१४·४—अथ वै भवति यो वा अयथादेवतं यज्ञमुपचरत्या देवताभ्यो वृश्च्यते पापीयान् भवति यो यथादेवतं न देवताभ्य आ वृश्च्यते वसीयान् भवत्याग्नेय्यर्चाग्नीध्रमभिमृशेद्वैष्णव्या हविर्धानमाग्नेय्या स्रुचो वायव्यया वायव्यान्यैन्द्रिया सद इति। स आग्नेय्यर्चाग्नीध्रमभिमृशति वैष्णव्या हविर्धानमाग्नेय्या स्रुचो वायव्यया वायव्यान्यैन्द्रिया सदः। यथादेवतमेव यज्ञमुपचरति न देवताभ्य आ वृश्च्यते वसीयान् भवतीति ब्राह्मणम्।] अथ पृषदाज्यवन्त्याज्यानि गृहीत्वा। [२१·१६ — सवनीयस्याज्यानां ग्रहणे सादन इति॥ सूत्रं बोधायनस्य॥ आग्नीध्र एव सवनीयस्याज्यानि गृह्णीयात्। तानि खरे सादयेदिति शालीकिः॥] प्रोक्षणीभिरुपोत्तिष्ठति। इध्मं प्रोक्षति। वेदिं प्रोक्षति। बर्हिः प्रोक्षति। बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात् प्रस्तरं गृह्णाति। एकविधं बर्हि स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्यौदुम्बरान् महापरिधीन् परिदधाति नित्येन परिधानेन। [२१·१६ — औदुम्बराणां महापरिधीनां परिधान इति॥ सूत्रमाचार्ययोः॥ अत्रो ह स्माहौपमन्यवः स्रुङ्मन्त्रा एवैते स्युरिति॥] अथैनान् योगेन युनक्ति युनज्मि ते पृथिवीं ज्योतिषा सह इति मध्यमम्। युनज्मि वायुमन्तरिक्षेण ते सह इति दक्षिणम्। युनज्मि वाचꣳ सह सूर्येण ते इत्युत्तरम्। अथ स्रुचः सन्ना अभिमृशति युनज्मि तिस्रो विपृचः सूर्यस्य ते इति। [१४·४ — उक्तमौदुम्बराणां महापरिधीनां परिधानम्। उक्तꣳ स्रुचाꣳ सादनम्। उक्तं पात्राणामभिमर्शनम्।] [२५·१४-१६ — अथेदं महारात्रिकं कर्म। तस्य कः कर्मण उपक्रमो भवतीति। हस्तपादान् प्रक्षाल्यान्तरेण चात्वालोत्करौ देवयजनमभिप्रपद्यन्ते। तेषां यथासंप्रैषं विहितानि कर्माणि भवन्ति। अथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशेद् वैष्णव्या हविर्धानमिति। अथोपरमति। अथैष आग्नीध्रः पूर्वः पत्नीशालं हुत्वा-

ग्नीनुपसमाधाय संपरिस्तीर्य पात्राणि निर्णिज्य सꣳसाद्याज्यं विलाप्योपास्ते । अपरः प्रतिप्रस्थाता प्रोक्षणीः सꣳ स्कृत्य पात्राणि प्रोक्षेत् । आज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि ता उत्तरवेदिꣳ हरन्ति प्रोक्षणीश्च । अथाध्वर्युराग्नेय्यर्चा स्रुचोऽभिमृशति । संमृष्टानि द्विधा पात्राण्यभिप्रक्ष्यन्त इति । वायव्यया वायव्यान्यैन्द्र्या सदः । अथैष उन्नेता ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ सꣳसादयति । उपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दधि । आग्नीध्र इध्माबर्हिरुपसादयति । अथ प्रतिप्रस्थाता पत्नीमभिसंनह्येत् पौरोडाशिकेन । अथैनां गार्हपत्यमीक्षयेत् । अथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत् । पत्न्या तदवेक्षितमुपयच्छीत तेजोऽसि इति । अथैनच्छकलेनोपयत्य हरेत् तेजोऽनु प्रेहि इति । अथैनदाहवनीयेऽधिश्रयेत् अग्निस्ते तेजो मा वि नैत् इति । अथैनद्धृत्वोत्तरेण प्रोक्षणीः सादयित्वावेक्षेत । उत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः । प्रसिद्धमाहवनीयसकाशे पृषदाज्यवन्त्याज्यानि गृहीते । सिद्धमत ऊर्ध्वम् । अथ शालीकेः । एवमेवैषां यथासंप्रैषं विहितानि कर्माणि भवन्ति । अथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशेद्वैष्णव्या हविर्धानमिति । अथोपरमति । अथैष आग्नीध्रः पूर्वः पत्नीशालं द्रुत्वाग्निमुपसमाधाय संपरिस्तीर्य पात्राणि निर्णिज्य सꣳसाद्याज्यं विलाप्योपास्ते । अपरः प्रतिप्रस्थाता प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्षेत् । आज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि । ता आग्नीध्रꣳ हरन्ति प्रोक्षणीश्च । अथाध्वर्युराग्नेय्यर्चा स्रुचोऽभिमृशति । संमृष्टानि द्विधा पात्राण्यभिप्रक्ष्यन्त इति । वायव्यया वायव्यान्यैन्द्र्या सदः । अथैष उन्नेता ग्रावोवायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ सꣳसादयति । उपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दधि । आग्नीध्र इध्माबर्हिरुपसादयति । न प्रतिप्रस्थाता पत्नीमभिसंनह्येत् पौरोडाशिकेन । नैनां गार्हपत्यमीक्षयेत् । अथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत् । पत्न्या तदवेक्षितमुपयच्छीत तेजोऽसि इति । अथैनच्छकलेनोपयत्य हरेत् तेजोऽनु प्रेहि इति । अथैनदाग्नीध्रीयेऽधिश्रयेत् अग्निस्ते तेजो मा वि नैत् इति । अथैनद्धृत्वोत्तरेण प्रोक्षणीः सादयित्वावेक्षेत । उत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः । प्रसिद्धमाग्नीध्रीयसकाशे पृषदाज्यवन्त्याज्यानि गृहीत्वा परिकर्मिभ्य उत्प्रदाय प्रोक्षणीहस्त उत्तरेणाग्नीध्रीयं धिष्णियं प्रतिपद्यते । अन्वञ्च आज्यैः । अथेध्मं प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात् प्रस्तरं गृहीत्वैकविधं बर्हिं स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्योदुम्बरान् परिधीन् परिधायोर्ध्वे समिधावभ्याधाय बर्हिर्मुष्टिं विधृती प्रस्तरमित्येतत्समादाय प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरार्धे खरस्य बर्हिर्मुष्टिꣳ स्तृणीयात् । बर्हिषि विधृती । विधृत्योः प्रस्तरम् । प्रस्तरे जुहूम् । बर्हिषीतराः । एता असदन् इति समभिमृश्य योगेन युनक्ति । सिद्धमत ऊर्ध्वम् । किमग्निहोत्रो दीक्षितः किमौपसदः किंप्रसुत इति । विज्ञायते व्रतमेव दीक्षितस्याग्निहोत्रम् । घर्मोच्छिष्टमौपसदस्य । उपांꣳश्वन्तर्यामौ प्रसुतस्य । यो हानुदिते स सायमग्निहोत्रभक्तिः । य उदिते स प्रातरग्निहोत्रभक्तिः । किंदर्शपूर्णमास इति । विज्ञायते पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत दार्शं यज्ञमाग्नेयं पशुमकुर्वत इति ॥ ]

अथाप उपस्पृश्याह एहि यजमान इति । पूर्वया द्वारा हविर्धानं प्रपाद्याथैतच्चर्म फलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति । यज्ञ प्रतितिष्ठ इति वा तूष्णीं वा । तस्मिन् संमुखान् ग्राव्णः कृत्वा दक्षिणस्य हविर्धानस्यान्तरेणेषे राजानमुपावहरति हृदे त्वा मनसे त्वा, सोम राजन्नेव रोह इति द्वाभ्याम् । [ २१·१६ — राज्ञ उपावहरण इति ॥ सूत्रमाचार्ययोः ॥ अत्रो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो

राजानमुपावहरेदिति ॥ ] अथैनमुद्धारात्भ्यः प्राह् । तस्मिंस्तच्चेत्पन्ति यत्ते विदुः । अथाप उपस्पृश्याह एहि यजमान इति । आग्नीध्रं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसानुद्रुत्याग्नीध्रे जुहोत्यन्वारब्धे यजमाने स्वाहा इति । [ २१.१६— पञ्चहोतुर्होम इति ॥ सूत्रं बोधायनस्य ॥ चतुर्होतारं हुत्वा पञ्चहोतारं जुहुयादिति शालीकिः ॥ ] अपरं चतुर्गृहीतं गृहीत्वाग्नीध्र एवासन्यां जुहोति आसन्यान्मा मन्त्रात् पाहि कस्याश्चिदभिशस्त्याः स्वाहा इति । [ १४.४ — अथ वै भवति इष्टर्गो वा अध्वर्युर्यज-मानस्येष्टर्गः खलु वै पूर्वोऽर्ष्टुः क्षीयते आसन्यान्मा मन्त्रात् पाहि कस्याश्चिदभिशस्त्याः इति पुरा प्रातरनुवाकाज्जुहुयादिति । पुरा प्रातरनुवाकान्महारात्र उत्थायाग्नीध्र आसन्यां जुहोति आसन्यान्मा मन्त्रात् पाहि कस्याश्चिदभिशस्त्याः स्वाहा इति । आत्मन एव तदध्वर्युः पुरस्ताच्छर्म नह्यतेऽनार्त्यै इति ब्राह्मणम् । ] अथाहवनीये घृतानुषिक्तं शकलमभ्यादधाति तूष्णीम् ।

अथात्रैव तिष्ठन् संप्रैषमाह प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि ब्रह्मन् वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यामाह्वयाग्नीत् सवनीयान् निर्वप प्रतिप्रस्थातः खरे पात्राणि युङ्धि इति । यथा-संप्रैषं ते कुर्वन्ति । [ २१.१६—प्रातरनुवाकस्योपाकरण इति ॥ सूत्रमाचार्ययोः ॥ अत्रो ह स्माहार्तभागीपुत्रस्तूष्णीकेनैककपालेन प्रातरनुवाकमुपाकुर्यादिति ॥ ] प्रतिपद्यत एष होता प्रातरनुवाकम् । यच्छति ब्रह्मा वाचम् । आह्वयति सुब्रह्मण्यः सुब्रह्मण्याम् । तस्यामाहूतायां ब्रह्मा वाचं विसृजते । निर्वपत्येष आग्नीध्र ऐन्द्राग्नेकादशकपालान् सवनीयान् । [ २१.१६— सवनीयानां निर्वपण इति ॥ सूत्रमाचार्ययोः ॥ अत्रो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान् निर्वपेदिति ॥] [२५.१६—यथो एतदौपमन्यवस्य कल्पं वेदयन्ते प्रातःसवन एव सर्वेभ्यः सवनीयान् निर्वपेत् सकृदुपहितान्येव कपालानि स्युः । आ समभि-वासनात् संसृष्टं कर्म तायते । तेषामेकैकमुद्वासयेदनुसवनं येनयेन प्रचरिष्यन् स्यात् । अपि वा व्यभिमृष्टानां पिण्डानां परिशाययीतोत्तरयोः[1] सवनयोः । यद्येककपालश्चिकीर्षितः स्यात् प्रातःसवनिकैरेव वर्तयेत् कृतान्तात् पौरोडाशिकं कर्म प्रत्याददीतोत्तरयोः[1] सवनयोरनुस-वनमङ्गाराध्यूहनेनैव कपालेषु प्रतिपद्येत । सिद्धमत ऊर्ध्वम् ॥ ] तेषां व्रीहिष्वेव हवि-ष्कृतमुद्वादयति । उपोद्यच्छन्ते यवान् । [ २१.१६-तेषां व्रीहिष्वेव हविष्कृतमुद्वाद-यत्युपोद्यच्छन्ते यवानिति ॥ सूत्रं शालीकेः ॥ अत्रो ह स्माह बोधायन आवपन-प्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत् स्यादिति ॥ आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनयेदिति बोधायनः ॥ अग्रेणातिहायेति शालीकिः ॥ अग्रेण वा जघनेन वेत्यौपमन्यवः ॥ ] अथ प्रतिप्रस्थाता खरे पात्राणि युनक्ति । पूर्वार्धे खरस्य दक्षिणाशिरसमुपांशुसवनं निदधाति दक्षिणत उपांशुपात्रमुत्तरतोऽन्तर्याम-पात्रमुपसंसृष्टे । असंस्पृष्टे अभिचरतः । पश्चाद् द्विदेवत्यपात्राण्यन्वञ्च्यैन्द्रवायवपात्रं मैत्रावरुणपात्रमाश्विनपात्रम् । पश्चाच्छुक्रामन्थिनोः प्रबाहुग्दक्षिणं शुक्रपात्रमुत्तरं मन्थिपात्रम् । अग्रेण मन्थिपात्रमृतुपात्रे । पश्चादाग्रयणस्थालीम् । दक्षिणस्यां खरश्रोण्या-मादित्यस्थालीं सोपशयाम् । उत्तरस्यां खरश्रोण्यामुक्थ्यस्थालीं सोपशयाम् । उत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनमनुपोप्ते ध्रुवस्थालीम् । अन्तरेण पूतभृदाधवनीयौ चमसान् । दक्षिणस्य हविर्धानस्य पश्चादक्षं द्रोणकलशं दशापवित्रे इति निदधाति । [ २१.१६— पात्राणां सादन इति ॥ सूत्रं शालीकेः ॥ अत्रो ह स्माह बोधायनः खरे पात्राणि साद-येत् । तेषां यथार्थमाददीतेति ॥ ] अथैनान्यभिमृशति अग्निर्देवता गायत्री छन्द उपांशोः पात्रमसि इति दशभिर्दश । अथाध्वर्युः सं वा विशति कर्माणि वानुप्रेक्षमाण आस्ते ॥

---

1. एवं बहुषु लिखितपुस्तकेषु । '°तेतरयोः' इति मुद्रितपुस्तकपाठः ।

## ५३. प्रातरनुवाकः

बौधायनश्रौ० —

[ ७.२ ] — प्रतिपद्यत एष होता प्रातरनुवाकम् । [ २५.२१-क उ खलु वसतीवरस्य स्तोत्रभक्तिर्भवति शस्त्रभक्तिश्चेति । विश्वरूपासु ह्यस्य स्तोत्रभक्तिर्भवति प्रातरनुवाके तु शस्त्रभक्तिः । ]

## ५५. अपां ग्रहणम्

बौधायनश्रौ०—

[ ७.३-४ ]—अथ यत्र होतुरभिजानाति अभूदुषा रुशत्पशुराग्निरधाय्यृत्वियः । अयोजि वां वृषण्वसू रथो दस्रावमर्त्यो माध्वी मम श्रुतं हवम् इति तत्प्रचरण्याᳪ स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः । शृणोत ग्रावाणो विदुषो नु यज्ञᳪ शृणोतु देवः सविता हवं मे स्वाहा इति । अपरं चतुर्गृहीतं गृहीत्वा बर्हिरादाय संप्रैषमाह अप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन एत नेष्टः पत्नीमुदानयाग्नीद्धोतृचमसेन च मा वसतीवरीभिश्च चात्वाले प्रत्युपलम्बस्व इति । यथासंप्रैषं ते कुर्वन्ति । आनयति नेष्टा पत्नीं पान्नेजनं कलशमादाय प्रेह्युदेहि इत्येतेन निगदेन । अथैनां पूर्वया द्वारोपनिष्क्रमय्योत्तरेण सदः परीत्योत्तरेणाग्नीध्रीयं धिष्णियं पर्याणीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य यत्रापस्तद्यन्ति । अथाप्सु बर्हिः प्रास्याभिजुहोति देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान् मदिन्तमस्तं देवेभ्यो देवत्रा धत्त शुक्रᳪ शुक्रपेभ्यो येषां भाग स्थ स्वाहा इति । मैत्रावरुणचमसेनाहुतिमपप्लावयति कार्षिरस्यपापां मृध्रम् इति । बर्हिषी अन्तर्धायोन्नयति समुद्रस्य वोऽक्षित्या उन्नये इति । अथैकधनान् गृह्णाति इन्द्राय वो जुष्टान् गृह्णामि इति वा तूष्णीं वा । [ २१.१६ – अथैकधनान् गृह्णाति इन्द्राय वो जुष्टान् गृह्णामि इति वा तूष्णीं वेति ॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः ॥ ] अथ पन्नेजनीर्गृह्णाति वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीर्गृह्णामि इति । [ १४.२२ – उक्तानि पत्नीयजूᳪषि । ] ताः पत्न्यै संप्रदायोदायन्ति । अन्वारब्धे यजमान एतेनैव यथेतमेत्य चात्वाले होतृचमसं च मैत्रावरुणचमसं च सᳪस्पर्श्य वसतीवरीर्व्यानयति । पूरयति होतृचमसम् । अप्तुं मैत्रावरुणचमसे प्रस्कन्दयति । [ २१.१७ – अप्तोः प्रस्कन्दन इति ॥ होतृचमसादत्राप्तुं प्रस्कन्दयेदिति बोधायनः ॥ वासतीवरात् कलशादिति शालीकिः ॥ ] अथ होतृचमसं वसतीवरीमैत्रावरुणचमसमिति त्रयᳪ संनिधाय प्रतिस्तोमं प्रचरण्या समनक्ति सं ज्योतिषा ज्योतिरङ्क्ताᳪ सᳪ शुक्राः शुक्रेण सᳪ हविषा हविः सं यज्ञपतिराशिषा इति । अथैषा पत्न्येतेनैव यथेतमेत्य जघनेन गार्हपत्यमौपसदायां वेद्याᳪ संस्पृष्टाः सादयति तूष्णीम् । अथाध्वर्युर्होतुरुत्काशमेति । होताध्वर्युं पृच्छति अध्वर्योऽवेरपा३ इति । उतेमनन्नमुरुतेमाः पश्य इतीतरः प्रत्याह । अथ यद्यग्निष्टोमो जुहोति यमग्ने पृत्सु मर्त्यमावो वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः स्वाहा इति । अथ यद्युक्थ्य एतेनैव यजुषा मध्यमे परिधौ निमार्ष्टि । अथ यद्यतिरात्र एतदेव यजुर्वदन् प्रपद्यते । यज्ञक्रतूनां व्यावृत्त्या इति ब्राह्मणम् । [ २१.१७–क्रतुकरण इति ॥ सूत्रं बोधायनस्य ॥ यथाक्रत्वेवास्य क्रतुकरणानि कुर्यादिति शालीकिः ॥ ] अथैता होतृचमसीया

दक्षिणस्य हविर्धानस्यान्तरेणेषे उपातिहृत्य नीड उत्सादयति । अथोदुञ्ज्याधवनीयꣳ सर्वश एव मैत्रावरुणचमसीयाः पर्यस्यति । तृतीयं वसतीवरीणामवनयति । तृतीयमेकधनानाम् । पुरोऽक्षं वसतीवरीः सादयति । पश्चादक्षमेकधनान् । [ २५·१७—यथो एतद् बोधायनस्य कल्पं वेदयन्त उभयतःशुक्रा आदित्यवतीर्वसतीवरीर्गृह्णीयात् ताः शुक्रास्ताभिराप्याययेत् ताभिरभिषुणुयादिति[1] । उपर्यर्धꣳ होतृचमसं कृत्वेत्येतेनैवापि तृतीयेन वर्तयेत् । त्रयीरपः पूर्वया द्वारा हविर्धानं प्रपादयेद्धोतृचमसीया वसतीवरीया मैत्रावरुणचमसीया इति दक्षिणेन होतारं परिगृह्यापरया द्वारैकधनान् । एतस्मिꣳश्च काले सर्वश एव मैत्रावरुणचमसीयाः पर्यस्येत् तृतीयं वसतीवरीणामवनयेत् तृतीयमेकधनानाम् । एवमस्य प्राक्केवलः शुक्रो भवति । ]

## ५७. दधिग्रहप्रचारः अदाभ्यांशुप्रचारश्च

बौधायनश्रौ०—

१. [ ७·४ ]—अथान्तरेण हविर्धाने उपविश्यौदुम्बरं पात्रं चतुःस्रक्ति याचति । तस्मिन् बर्हिषी अन्तर्धाय प्राजापत्यं दधिग्रहं गृह्णाति उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्योऽग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्यः इति । [ २५·१७—सोमग्रहं गृह्णीयाद् ब्रह्मवर्चसकामस्येति । अनिरुक्तस्यैवैष राज्ञो ग्रहीतव्यो भवति । का उ खलु देवताः प्रथमꣳ सोमं भक्षयन्तीति । आप इत्येव ब्रूयात् । विज्ञायत उपहूताः सोमस्य पिबतोपहूतो युष्माकꣳ सोमः पिबत्विति ॥ ] अपोद्धृत्य बर्हिषी अथैनमादायोपोत्तिष्ठति दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा इति । पूर्वया द्वारोपनिष्क्रामति अपेन्द्र द्विषतो मनोऽप जिज्यासतो जह्यप यो नोऽरातीयति तं जहि इति । एत्याहवनीये जुहोत्यन्वारब्धे यजमाने प्राणाय त्वापानाय त्वा व्यानाय त्वा सते त्वाऽसते त्वाद्भ्यस्त्वौषधीभ्यो विश्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अक्खिद्रा अजायन्त तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि स्वाहा इति । [ १४·२२—उक्तो दधिग्रहः । अथ वै भवत्याज्यग्रहं गृह्णीयात् तेजस्कामस्येति । बर्हिषी अन्तर्धायाज्यग्रहं गृह्णाति । सोमग्रहं गृह्णीयाद् ब्रह्मवर्चसकामस्येति । अꣳशूनुपसंगृह्य सोमग्रहं गृह्णाति । ] अथास्य संक्षालनमन्तःपरिधि निनयति । [ २१·१७—दधिग्रहस्य ग्रहण इति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माह बोधायन औदुम्बरेणैनं पात्रेण गृह्णीयाद्धुत्वा चैतत्पात्रमत्रैवानुप्रहरेदिति ॥ ] धेनुवरं वानडुद्वरं वा दद्यादिति ह स्माह बोधायनः । द्वादश पष्ठौहीरित्याश्मरथ्यः(?) ... जीगविः । ऋषभमिति कात्यः । मणिकुण्डलमिति राथीतरः । [ २१·१७—दक्षिणायै दान इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥ ]

२. [ १४·१२ ]—अथातोऽꣳश्वदाभ्ययोरेव ग्रहणम् । अꣳश्वदाभ्यौ ग्रहीष्यन्नुपकल्पयते द्वे औदुम्बरे नवे पात्रे तयोश्चतुःस्रक्त्यꣳशुपात्रं भवति श्लक्ष्णमदाभ्यपात्रं ते सुवर्णरजताभ्यां रुक्माभ्यां पर्यस्ते भवतः शतमानं च हिरण्यम् । अथोपनद्धस्य राज्ञस्त्रीनꣳशून् प्रवृहति वसवस्त्वा प्र वृहन्तु गायत्रेण छन्दसाग्नेः प्रियं पाथ उपेहि रुद्रास्त्वा प्र वृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथ उपेह्यादित्यास्त्वा प्र वृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि इति । [ २३·५—अꣳशूनां प्रवृꣳहण इति ॥ एकैकशः प्रवृहेदिति बोधायनः ॥ सर्वान् सहेति शालीकिः ] अथ होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य द्वादशभिरधावैराधूनोति मान्दासु ते शुक्र शुक्रमा धूनोमि इति प्रतिपद्य शुक्रासु ते शुक्र शुक्रमा धूनोमि इत्यातः । [ २३·६--आधवन इति ॥ व्यतिचारमाधुनु-

[1] द्वैधसूत्रमेतद् ' वसतीवरीग्रहणम् ' ( पृ. ५४७ ) इत्यत्र द्रष्टव्यम् ।

यादिति बोधायनः ॥ यथाधवित्रमिति शालीकिः ॥ प्रेक्षयेदित्यौपमन्यवः ॥ ] अथैतस्मिन्नदाभ्य-पात्रेऽ१शूनुपसंगृह्य गृह्णाति शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः । आस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चत इति । अथैनमादायोपोत्तिष्ठति ककुह१ रूपं वृषभस्य रोचते बृहत् इति । ऐति सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः इति । एत्याहवनीये जुहोत्यन्वारब्धे यजमाने यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा इति । अथ प्रदक्षिणमावृत्य राजन्येवा१शूनपिसृजति उशिक् त्वं देव सोम गायत्रेण छन्दसाग्नेः प्रियं पाथो अपीहि वशी त्वं देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीह्यस्मत्सखा त्वं देव सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथो अपीहि इति । अथाह प्रतिप्रस्थातरुदक१सेन [1]वोदचमसेन वा जघनेनाहवनीयं प्रत्युपलम्बस्व इति । स तथा करोति । अथैतद्धिरण्यमद्भिः प्रक्षाल्य मध्यमायामङ्गुलौ बध्नीतेऽनामिकायां[2] वा प्रग्रथ्नाति । अथ सकृदभिषुतस्य राज्ञोऽ१शुं गृह्णाति वामदेव्यमिति साम मनसा गायमानोऽनवानम् । प्रजापतये त्वा इति गृह्णाति प्रजापतये त्वा इति जुहोति । [ २ ·६—अ१शोर्होम इति ॥ सूत्र१ शालीकेः ॥ अत्रो ह स्माह बोधायनो याभ्यामेतद्गभ्यासुपस्पृशेत्ताभ्यामेनं जुहुयात् । अथ तूष्णीमुपस्पृशेदिति ॥ ] अथ हिरण्यमभिव्यनिति आ नः प्राण एतु परावत आन्तरिक्षाद्दिवस्परि । आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा इति । अथान्तर्वेद्यद्भिर्मार्जयते इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः । वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना । दधन्वे वा यदीमनु वोचद् ब्रह्माणि वेरु तत् । परि विश्वानि काव्या नेमिश्चक्रमिवाभवत् इति । अध्वर्योरेतद्धिरण्यं भवति । ब्राह्मणमुत्तरम् ॥

## ५८. उपांशुग्रहप्रचारः

**बौधायनश्रौ०—**

[ ७.५ ] — अथैता होतृचमसीया दक्षिणस्य हविर्धानस्यान्तरेणेषे उपावहृत्य चर्मणि निदधाति । तासु निग्राभ्यासु यजमानं वाचयति निग्राभ्या स्थ देवश्रुत आयुर्मे तर्पयत इति प्रतिपद्य गणा मे मा वि तृषन् इत्यातः । [ १४·४ — उक्तं निग्राभ्यासु वाचनम् । ] [ २१·१७— तासु निग्राभ्यासु यजमानं वाचयतीति ॥ सूत्र१ शालीकेः ॥ अत्रो ह स्माह बोधायन ऊरौ वोरसि वोपनिगृह्य तासु निग्राभ्यासु यजमानं वाचयतीति ॥ ] [ २५·१७— निग्राभ्यासु वाचयित्वादाभ्येन चरेत् । अथोपा१शुसवनमाददीत । अथ राजानं निर्वपेत् । सिद्धमत्राग्निष्टोमिकं कर्म जानीयादा फलकयोरभिमर्शनात् । ] ता यजमानाय संप्रदायाथैतेषां ग्राव्णां यः सुजन्तुरिव तमादत्ते देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे इति । आदायाभिमन्त्रयते ग्रावास्यध्वरकृद्देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोम१ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिम् इति । अथैनं प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमुपा१शुसवनमभि मिमीते इन्द्राय त्वा वृत्रघ्ने, इन्द्राय त्वा वृत्रतुरे, इन्द्राय त्वाभिमातिघ्ने, इन्द्राय त्वादित्यवते, इन्द्राय त्वा विश्वदेव्यावते इति । पञ्च कृत्वो यजुषा । पञ्च कृत्वस्तूष्णीम् । दश कृत्वो मिमानोऽर्धवेला१ राज्ञो मिमीते । अथातिशिष्ट१ राजानमुष्णीषेण विग्रथ्य दक्षिणस्य हविर्धानस्यान्तरेणेषे उपातिहृत्य नीड उत्सादयति । [२१·१७–राज्ञो निर्वपण इति ॥ सूत्रमाचार्ययोः ॥ अत्रो

१. एवं केषुचिल्लिखितपुस्तकेषु । 'मोदचमसेन' इति मुद्रितपुस्तकपाठः ।
२. 'नासिकायां' इति मुद्रितपुस्तकपाठः ।

ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानं निर्वपेदिति ॥ ] अथ मित१ राजान१ होतृचमसीयाभिरुपसृजति श्वात्राः स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकः सोमः पिबतु इति। अथैन१ संप्रयौति यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राया कृध्यधि दात्रे वोचः इति। तिरश्चमेन् फलके अभिमृशति धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वा१ हि१सिषं मा मा हि१सिष्टम् इति। अथ वृद्धीर्वाचयति अवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम। इन्द्रेण देवीर्वीरुधः संविदाना अनु मन्यन्ता१ सवनाय सोमम् इति। [ १४·४– अथ वै भवति ओषधयो वै सोमस्य विशो विशः खलु वै राज्ञः प्रदातोरीश्वरा ऐन्द्रः सोम इति। सोऽभिषोष्यन्नोषधीभ्योऽधि राजानं निर्याचते अवीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम। इन्द्रेण देवीर्वीरुधः संविदाना अनु मन्यन्ता१ सवनाय सोमम् इत्याह। ओषधीभ्य एवैन१ स्वायै विशः स्वायै देवतायै निर्याच्याभि षुणोतीति ब्राह्मणम्। ] संतृप्तस्य राज्ञः प्रतिप्रस्थाता सव्ये पाणौ षड१शून् सचते। अथैतेनैव पाणिनोपा१शुपात्रमादत्ते। अथोपसृष्ट१ राजानमष्टौ कृत्वोऽग्रेऽभिषुणोति। सोऽ१शौ स्कन्ने वाचयति आ मास्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीः इति। [ १४·४–अथ वै भवति यो वै सोमस्याभिषूयमाणस्य प्रथमोऽ१शुः स्कन्दति स ईश्वर इन्द्रियं वीर्यं प्रजां पशून् यजमानस्य निर्हन्तोस्तमभि मन्त्रयेतेति। स यः सोमस्याभिषूयमाणस्य प्रथमोऽ१शुः स्कन्दति तमभिमन्त्रयेत आ मास्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीः इति। आशिषमेवैतामाशास्त इन्द्रियस्य वीर्यस्य प्रजायै पशूनामनिर्घातायेति ब्राह्मणम्। ] [ २१·१७–सोऽ१शौ स्कन्ने वाचयतीति ॥ सूत्रं बोधायनस्य ॥ उपा१शावेवा१शौ स्कन्ने वाचयेदिति शालीकिः ॥ ] अथाञ्जलिनोपहन्ति तूष्णीम्। अन्तर्दधाति प्रतिप्रस्थाता। प्रथमाभ्याम१शुभ्यामानयत्यध्वर्युः वाचस्पतये पवस्व वाजिन् इति। सचत एताव१शू। तथोपसृष्ट१ राजानमेकादश कृत्वो द्वितीयमभिषुणोति नात्रा१शौ स्कन्ने वाचयति। तथाञ्जलिनोपहन्ति तूष्णीमेव। अन्तर्दधाति प्रतिप्रस्थाता मध्यमाभ्याम१शुभ्यामानयत्यध्वर्युः वृषा वृष्णो अ१शुभ्यां गभस्तिपूतः इति। सचत एताव१शू। तथैवोपसृष्ट१ राजानं द्वादश कृत्वस्तृतीयमभिषुणोति। नैवात्रा१शौ स्कन्ने वाचयति। तथैवाञ्जलिनोपहन्ति तूष्णीमेव। अन्तर्दधाति प्रतिप्रस्थाता। उत्तमाभ्याम१शुभ्यामानयत्यध्वर्युः देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वा इति। सचत एताव१शू। अथैनमुपा१शुसवनं दशापवित्रेण परिमृज्य पूर्वार्धे खरस्य दक्षिणाशिरसं निदधाति। अथ प्रतिप्रस्थातुर्ग्रहमादत्ते स्वाङ्कृतोऽसि इति। ग्रहमुपयच्छति[१]। अथैनमवेक्षते मधुमतीर्न इषस्कृधि इति। अथैनमूर्ध्वमुन्मार्ष्टि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः इति। अथैनमादायोपोत्तिष्ठति मनस्त्वाष्टु इति। एति उर्वन्तरिक्षमन्विहि इति। एत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहा त्वा सुभवः सूर्याय स्वाहा इति। हुत्वानुप्राणिति। वाचयति भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि इति। [ १४.१०–उक्तमुपा१श्वन्तर्यामयोरनुमन्त्रणम्। ] अथैनमवाचीनमवमृज्य प्रतीचा नीचा पाणिना मध्यमे परिधौ निमार्ष्टि देवेभ्यस्त्वा मरीचिपेभ्यः इति। अथ प्रदक्षिणमावृत्याग्रयणस्थाल्यां ग्रहस्य स१स्रावमवनयति एष ते योनिः इति। अथैतस्मिन्नुपा१शुपात्रेऽ१शुं प्रास्यति[२]। अथैनद्[३] दक्षिणत उपा१शुसवनेन स१स्पृष्ट१ सादयति प्राणाय त्वा इति। व्यानाय त्वा इत्युपा१शुसवनं प्रत्यभिमृशते ॥

---

१. एवं केषुचिल्लिखितपुस्तकेषु। 'ग्रहमपयच्छति' इति मुद्रितपुस्तकपाठः।

२. तृतीयसवने ऋजीषाभिषवावसरे एनमंशुं तस्मिन् ऋजीषे प्रास्य ततोऽभिषुणोति।

३. एवं केषुचिल्लिखितपुस्तकेषु। 'अथैनं' इति मुद्रितपुस्तकपाठः।

# ५९. सोमाभिषवः

बौधायनश्रौ०—

[ ७. ६ ]—यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता राजन्येवांऽशूनां द्वौद्वावपिसृजति यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा इति, यत्ते सोम, यत्ते सोम इति । [ २५.१७–क उ खलु सोमस्य सोमपीथो भवतीति । विज्ञायते यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा इति । एष एवापि सोमस्य सोमपीथः । तेषाꣳ संनिपतितानामानुपूर्वतेति । ] अथाभिषोष्यन्तः सर्वेश एव राजानं पर्युपविशन्ति । पश्चात् प्राङ्मुखोऽध्वर्युरुपविशति । तस्य दक्षिणं बाहुमनु यजमानः। दक्षिणतः प्रतिप्रस्थाता। उत्तरत आग्नीध्रः। अन्तरेण प्रतिप्रस्थातारं चाग्नीध्रं च यश्चतुर्थोऽभिषुणोति । अथोन्नेतारमाह आहरोपसृज इति । उपसृजत्युन्नेताधवनीयादुदचनेन । उपर्यर्धे होतृचमसेऽꣳशून् परिप्लावयन्ति प्रागपागुदगधराक्तास्त्वा दिश आ धावन्त्वम्ब नि ष्वर इति । एष निग्राभः । आप्याययन्ति । व्यपोहन्ते । अभिषुण्वन्ति । निग्राभमुपयन्ति । आप्याययन्ति । व्यपोहन्ते । अभिषुण्वन्ति । निग्राभमुपयन्ति । आप्याययन्ति । व्यपोहन्ते । अभिषुण्वन्ति । न चतुर्थे निग्राभमुपयन्ति । अथैनꣳ सुसंभृतꣳ संभरण्याꣳ संभृत्योन्नेत्र उत्प्रयच्छति । तमुन्नेताधवनीयेऽवनयति । एवमेव द्वितीयः पर्यायः संतिष्ठते । एवं तृतीयः । ऋजीषमन्ततो दशापवित्रेण परिवेष्ट्योन्नेत्र उत्प्रयच्छति । तदुन्नेताधवनीये विक्षाल्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणेषे उपातिहृत्य[1] चर्मणि निदधाति । तस्मिन् संमुखान् ग्राव्णः कृत्वा चतुर्धैतदृजीषं ग्रावमुखेभ्यो व्यपोहति । अथोद्गाता वा प्रस्तोता वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य प्राञ्चं ग्रावसु द्रोणकलशमध्यूहति । तस्मिन्नुदीचीनदशं दशापवित्रं वितन्वन्ति । तेन तथा कृतेनादित्यस्योदयमाकाङ्क्षन्ते ॥

# ६०. अन्तर्यामग्रहप्रचारः

बौधायनश्रौ०—

[ ७.६ ]— उदित आदित्येऽन्तर्यामं गृह्णात्यतिपवमानस्य राज्ञः उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षꣳ सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन् मादयस्व इति । [ २१.१७— उपाꣳश्वन्तर्यामयोर्होम इति ॥ सूत्रं बोधायनस्य ॥ उभावेवोदिते जुहुयादिति शालीकिः ॥ उभावेवानुदिते जुहुयादित्यौपमन्यवः ॥ ] स्वाङ्कृतोऽसि इति ग्रहमुपयच्छति[2] । अथैनमवेक्षते मधुमतीर्न इषस्कृधि इति । अथैनमूर्ध्वमुन्मार्ष्टि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यः इति । अथैनमादायोपोत्तिष्ठति मनस्त्वाष्टु इति । येति उर्वन्तरिक्षमन्विहि इति । पत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहा त्वा सुभवः सूर्याय स्वाहा इति । हुत्वान्वपानिति । वाचयति भूरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि इति । [ १४.१०— उक्तमुपाꣳश्वन्तर्यामयोरनुमन्त्रणम् । ] अथैनमूर्ध्वमुन्मृज्य प्राचोत्तानेन पाणिना मध्यमे परिधावुन्मार्ष्टि देवेभ्यस्त्वा मरीचिपेभ्यः इति । अथ प्रदक्षिणमावृत्याग्रयणस्थाल्यां ग्रहस्य सꣳस्रावमवनयति एष ते योनिः इति । अथैनमुत्तरत उपाꣳशुसवनेन सꣳस्पृष्टꣳ सादयति अपानाय त्वा इति । व्यानाय त्वा इत्युपाꣳशुसवनं प्रत्यभिमृशते ॥

१. एवं केषुचन लिखितपुस्तकेषु । ‘ उपावहृत्य ’ इति मुद्रितपुस्तकपाठः ।

२. एवं केषुचिल्लिखितपुस्तकेषु । ‘ ग्रहमपयच्छति ’ इति मुद्रितपुस्तकपाठः ।

# ६१. ग्रहग्रहणम्

बौधायनश्रौ०—

[ ७.६-७ ] — अथोन्नेतारमाह अप्रमत्तः संततमानयोपाꣳशु ग्रहान् ग्रहीष्यामि इति। अथादत्त ऐन्द्रवायवपात्रम्। तदेतद् रास्नावत् परिग्रीवि भवति। तेन गृह्णात्यतिपवमानस्य राज्ञः आ वायो भूष शुचिपाः इत्यनुद्रुत्य उपयामगृहीतोऽसि वायवे त्वा जुष्टं गृह्णामि इति। अथैनमपयत्य पुनरेवोपयच्छति इन्द्रवायू इमे सुताः इत्यनुद्रुत्य उपयामगृहीतोऽसीन्द्रवायुभ्यां त्वा जुष्टं गृह्णामि इति। परिमृज्य सादयति एष ते योनिः सजोषाभ्यां त्वा इति। अथादत्ते मैत्रावरुणपात्रम्। तदेतत् पिलकावद्भवति। तेन गृह्णात्यतिपवमानस्य राज्ञः अयं वां मित्रावरुणा इत्यनुद्रुत्य उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामि इति। बर्हिषी अन्तर्धाय पयसा श्रीणाति। [ २१.२२-मैत्रावरुणस्य श्रयण आशिरोऽवनयन इति॥ सूत्रꣳ शालीकेः॥ अत्रो ह स्माह बोधायनः श्रीणीयादेव मैत्रावरुणं पयसाशिरमवनयेदिति॥ ] अपोद्धृत्य बर्हिषी दशापवित्रेण परिमृज्य सादयति एष ते योनिर्ऋतायुभ्यां त्वा इति। अथोपातीत्याश्विनपात्रꣳ शुक्रपात्रमादत्ते। तदेतद्बैल्वं वा पालाशं वा श्लक्ष्णं भवति। तेन गृह्णात्यतिपवमानस्य राज्ञः अयं वेनश्चोदयत् इत्यनुद्रुत्य उपयामगृहीतोऽसि शण्डाय त्वा जुष्टं गृह्णामि इति। परिमृज्य सादयति एष ते योनिर्वीरतां पाहि इति। अथादत्ते मन्थिपात्रम्। तदेतद् वैकङ्कतꣳ श्लक्ष्णं भवति। तेन गृह्णात्यतिपवमानस्य राज्ञः तं प्रत्नथा इत्यनुद्रुत्य उपयामगृहीतोऽसि मर्काय त्वा जुष्टं गृह्णामि इति। बर्हिषी अन्तर्धाय सक्तुभिः श्रीणाति। [ २५.१८—संपूतꣳ राजानं त्रयेण श्रीणीयात् पयसा सक्तुभिर्हिरण्येनेति। स यं कं चन ग्रहं गृह्णात्युभयत उद्बुध्नꣳ हिरण्यश्रयणमेवैनं करोति।] अपोद्धृत्य बर्हिषी दशापवित्रेण परिमृज्य सादयति एष ते योनिः प्रजाः पाहि इति। अथादत्त आग्रयणस्थालीम्। तया गृह्णात्यतिपवमानस्य राज्ञः ये देवा दिव्येकादश स्था इत्यनुद्रुत्य उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामि इति। [२१.१७—आग्रयणस्य ग्रहण इति॥ सूत्रꣳ शालीकेः॥ अत्रो ह स्माह बोधायनो द्वयोर्धारयोः प्रातःसवने गृह्णीयात् तिसृणां माध्यन्दिने सवने चतसृणां तृतीयसवन इति॥ ][ २५.१८-यथो एतद् बोधायनस्य कल्पं वेदयन्त आग्रयणस्य ग्रहणे द्वयोर्धारयोः प्रातःसवने गृह्णीयात् तिसृणां माध्यन्दिने सवने चतसृणां तृतीयसवन इति। उपाꣳश्वन्तर्यामयोश्च सꣳस्रावः संततश्च शुक्र एते द्वे प्रातःसवने। संततश्चैव शुक्र आग्रयणश्चोदचनेन च तृतीया माध्यंदिने सवने। आदित्यस्थाल्यामतिशिष्टो राजादित्यग्रहस्य च सꣳस्राव आग्रयणश्चैवोदचनेन च चतुर्थी तृतीयसवने। ]

अथैनां त्रिरभिहिङ्करोति हिं हिं हिं सोमः पवते सोमः पवते सोमः पवतेऽस्मै ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्यै विशे पवत इषे पवत ऊर्जे पवतेऽद्भ्यः पवत ओषधीभ्यः पवते वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ब्रह्मवर्चसाय पवतेऽस्मै सुन्वते यजमानाय पवते मह्यम् इत्युपाꣳशूक्त्वा ज्यैष्ठ्याय पवते इत्युच्चैः। अथैनमधिवदते आग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेण इति। परिमृज्य सादयति एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः इति। उपब्दिमतोऽत ऊर्ध्वं ग्रहान् गृह्णाति। त्रिꣳशत् त्रयश्च गणिनो रुजन्तः इति रुग्णवत्यर्चा भ्रातृव्यवतो गृह्णीयादिति ब्राह्मणम्। [ १४.४-५—अथ वै भवति यो वै देवान् देवयशसेनार्पयति मनुष्यान् मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु यान् प्राचीनमाग्रयणाद् ग्रहान् गृह्णीयात् तानुपाꣳशु गृह्णीयात्। यानूर्ध्वाꣳस्तानुपब्दिमत इति। या प्राचीनमाग्रयणाद् ग्रहान् गृह्णाति तानुपाꣳशु

गृह्णाति । यानूर्ध्वांस्तानुपब्दिमतः । देवानेव तद्देवयशसेनार्पयति मनुष्यान् मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येष्विति ब्राह्मणम् । ]

[ १४·११—अथातोऽतिग्राह्याणामेव ग्रहणम् । स यद्येको यदि वा बहव आग्रयणमेवैनान् गृहीत्वा गृह्णाति । माहेन्द्रस्यैव होममनु हूयन्ते । स आग्नेयं गृह्णाति अग्न आयूंषि पवस इत्यनुद्रुत्य उपयामगृहीतोऽस्यग्नये त्वा तेजस्वते जुष्टं गृह्णामि इति । परिमृज्य सादयति एष ते योनिरग्नये त्वा तेजस्वते इति । ] [ १४·११—अथैन्द्रं गृह्णाति उत्तिष्ठन्नोजसा सह इत्यनुद्रुत्य उपयामगृहीतोऽसीन्द्राय त्वौजस्वते जुष्टं गृह्णामि इति । परिमृज्य सादयति एष ते योनिरिन्द्राय त्वौजस्वते इति । ] [ १४·११— अथ सौर्यर्चा सौर्यं गृह्णाति तरणिर्विश्वदर्शतः इत्यनुद्रुत्य उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वते जुष्टं गृह्णामि इति । परिमृज्य सादयति एष ते योनिः सूर्याय त्वा भ्राजस्वते इति । [ १४·११—अप्यग्निष्टोमे ग्रहीतव्या[1] यज्ञस्य सतनुत्वायेति ब्राह्मणम् । ]

अथादत्त उक्थ्यस्थालीम् । तया गृह्णात्यतिपवमानस्य राज्ञः उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत्त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वा जुष्टं गृह्णामि इति । परिमृज्य सादयति एष ते योनिरिन्द्राय त्वोक्थायुवे इति । अथादत्ते ध्रुवस्थालीम् । स आह ये पूर्वया द्वारा प्रापत्सत प्राञ्चस्ते निष्क्रामन्तु येऽपरया प्रत्यञ्चस्ते मा वोऽभिपरिहारिषम् इति । जघनेनाभिषोतॄन् सोन्नेतृकानभिपरिहृत्योत्तरत उपयच्छति मूर्धानं दिवो अरतिं पृथिव्याः इत्यनुद्रुत्य उपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय जुष्टं गृह्णामि इति । अथैनमधिवदते ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तमः इति । अथैनं[2] यथाहृतं प्रतिपर्याहृत्योत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनमनुपोप्ते सादयति एष ते योनिरग्नये त्वा वैश्वानराय इति । ध्रुवेण राजानं परिदधाति । अथोपर्यधे द्रोणकलशे परिप्लु पात्रं प्रास्य द्रप्सानुमन्त्रयते द्रप्सश्चस्कन्द, यस्ते द्रप्स, यो द्रप्स, यस्ते द्रप्सः इति । [ १४.४—अत्रैषा द्रप्सानुमन्त्रणीया । तामितराभिः सह वक्ष्यामः ]
[ १४·५—अथ द्रप्साननुमन्त्रयते द्रप्सश्चस्कन्द, यस्ते द्रप्स, यो द्रप्स, यस्ते द्रप्सः इति । ] [ २१·१७—द्रप्सानुमन्त्रणीयास्विति ॥ सूत्रं बोधायनस्य ॥ स्रुवाहुतीरेवैता जुहुयादिति शालीकिः ॥ ] [ २५·१८—यथो एतच्छालीकेः कल्पं वेदयन्ते द्रप्सानुमन्त्रणीयास्विति । स्रुवाहुतीरेवैता जुहुयात् । कस्मिन्नु खल्वेनाः काले जुहुयादिति । संतनीर्हुत्वैतस्मिन्नेनाः काले जुहुयादिति॥ ] अथोन्नेतारमाह अरिक्तं पूतभृतं कुरु पवमानस्य ग्रहान् ग्रहीष्यामि इति । तच्छ्रुत्वोन्नेता पूतभृतो बिले पवित्रं वितत्य द्वौ वा त्रीन् वा राज्ञ उदचनानानयति । अथारिक्ते पूतभृति पवमानस्य ग्रहान् गृह्णाति । उपयामगृहीतोऽसि प्रजापतये त्वा इति द्रोणकलशमभिमृशति । इन्द्राय त्वा इत्याधवनीयम् । विश्वेभ्यस्त्वा देवेभ्यः इति पूतभृतम् । [ १४·६—अथ वै भवति यो वै पवमानस्य संततिं वेद सर्वमायुरेति न पुरायुषः प्र मीयते पशुमान् भवति विन्दते प्रजां पवमानस्य ग्रहा गृह्यन्तेऽथ वा अस्यैते गृहीता द्रोणकलश आधवनीयः पूतभृत् तान्यदगृहीत्वोपाकुर्यात् पवमानं वि छिन्द्यात् तं विच्छिद्यमानमध्वर्योः प्राणोऽनुन् वि च्छिद्येत उपयामगृहीतोऽसि प्रजापतये त्वा इति द्रोणकलशमभिमृशेदिति । स प्रजापतये त्वा इति द्रोणकलशमभिमृशति । इन्द्राय त्वा इत्याधवनीयम् । विश्वेभ्यस्त्वा देवेभ्यः इति पूतभृतम् । पवमानमेव तत् सं तनोति सर्वमायुरेति न पुरायुषः प्र मीयते पशुमान् भवति विन्दते प्रजामिति ब्राह्मणम् । [ २१·१८—पवमान ग्रहाणां ग्रहण इति ॥ सूत्रं बोधायनस्य ॥ सजुष्टान् परिमृज्य सादयेदिति शालीकिः ॥ ]

१. अतिग्राह्याः ।

२. एवं केषुचिल्लिखितपुस्तकेषु । 'अथैनत्' इति मुद्रितपुस्तकपाठः ।

अथ उन्नेतः इत्याह प्राञ्चꣳ राजानं पूतभृतमभि संप्लवयताद् दशाभिराधवनीयं मृष्ट्वा न्युब्जताद इति । स तथा करोति । [ १४.२३--अथ वै भवत्युभये वा एते प्रजापतेरध्यसृज्यन्तेति ब्राह्मणमेव ॥ ]

## ६३. बहिष्पवमाननिःसर्पणम्

बौधायनश्रौ०—

[ ७.७–८ ] — अथाप उपस्पृश्य बर्हिषी आदायोपनिःसर्पति । [ २१.१८-- पवमानानामुपाकरण इति ॥ सूत्रं बोधायनस्य ॥ सदस एव बर्हिषी आदायोपाकुर्यादिति शालीकिः ॥ ] तं निःसर्पन्तमन्वारभत उद्गाता । उद्गातारं प्रस्तोता । प्रस्तोतारं प्रतिहर्ता । प्रतिहर्तारं यजमानः । यजमानं ब्रह्मा । प्रतिप्रस्थाता सप्तमः सर्पति । तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति अग्निः प्रातःसवने पात्वस्मान् वैश्वानरो महिना विश्वशम्भूः । स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम स्वाहा इति । एतयाध्वर्यू जुहुतः । [ १४.५-- ते यत्र बहिष्पवमानꣳ सप्स्यन्तो भवन्ति तेषु समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति अग्निः प्रातःसवने पात्वस्मान् वैश्वानरो महिना विश्वशम्भूः । स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्याम स्वाहा इति । ] [ २१.१८--संतनीनाꣳ होम इति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माह बोधायनो वसतीवरीरप्येतैर्मन्त्रैरवनयेदिति ॥ ] यथावेदमितरे जुह्वति । अथोदङ्चोऽभि पवमानꣳ सर्पन्ति । प्रह्व एवाध्वर्युः प्रथमो बर्हिषी धुवानः[1] सर्पति वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान् पशुषु प्रजां मयि च यजमाने च इति । [ १४.५-- अथ वै भवत्यध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन स्तोमो योक्तव्य इति । ते यत्र बहिष्पवमानꣳ सर्पन्ति तत्प्रह्व एवाध्वर्युः प्रथमो बर्हिषी धुवानः[1] सर्पति वागग्रेगा अग्र एत्वृजुग देवेभ्यो यशो मयि दधती प्राणान् पशुषु प्रजां मयि च यजमाने च इत्याह । वाचमेव तद्यज्ञमुखे युनक्तीति ब्राह्मणम् । ] अथास्तावे यथायतनमुपविशन्ति । [ २१.१८--ब्रह्मण उपवेशन इति ॥ यथा सदस्येवमुपविशेदिति बोधायनः ॥ यथा दर्शपूर्णमासयोरेवमिति शालीकिः ॥ यजमानस्योपवेशन इति ॥ यथा सदस्येवमुपविशेदिति बोधायनः ॥ यथा दर्शपूर्णमासयोरेवमिति शालीकिः ॥ ]

## ६४. बहिष्पवमानस्तोत्रम्

बौधायनश्रौ०—

[ ७.८ ] — अथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छति ऋक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्यै इति वा तूष्णीं वा । [ २१.१८– अथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छतीति ॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः ॥ ऋक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्यै इति वा तूष्णीं वेति ॥ पूर्वः कल्पः शालीकेरुत्तरो बोधायनस्य ॥ ] अथोपाकरणं जपति वायुर्हिङ्कर्ताग्निः प्रस्तोता प्रजापतिः साम बृहस्पतिरुद्गाता विश्वे देवा उपगातारो मरुतः प्रतिहर्तार इन्द्रो निधनं ते देवाः प्राणभृतः प्राणं मयि दधत्वोꣳ स्तुध्वम इति । [ १४.११-अथोपाकरणं जपति वायुर्हिङ्कर्ता इति । स एष त्रिवृद् बहिष्पवमानो भवति । ] [ १४.९-यत्राह

---

[1] एवं केषुचिल्लिखितपुस्तकेषु । 'धुन्वानः' इति मुद्रितपुस्तकपाठः ।

ब्रह्मन् स्तोष्यामः प्रशास्तः इति तद्ब्रह्मा प्रसौति देव सवितरेतत्ते प्राह तत् प्र च सुव प्र च यजं बृहस्पतिर्ब्रह्मायुष्मत्या ऋचो मा गात तनूपात् साम्नः सत्या व आशिषः सन्तु सत्या आकूतय ऋतं च सत्यं च वदत स्तुत देवस्य सवितुः प्रसवे भूरिन्द्रवन्तः स्तुत इति प्रातःसवने। भुवरिन्द्रवन्तः स्तुत इति माध्यंदिने सुवरिन्द्रवन्तः स्तुत इति तृतीयसवने। स्तुते स्तुतस्य दोहं वाचयति स्तुतस्य स्तुतमस्यूर्जं मह्यं स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्यात् इति। शस्त्रे शस्त्रस्य दोहं वाचयति शस्त्रस्य शस्त्रमस्यूर्जं मह्यं शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यात् इति। तयोरुभयोरभ्यासं वाचयति इन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषं सा मे सत्याशीर्देवेषु भूयाद् ब्रह्मवर्चसं मा गम्यात् इति। अथ यज्ञस्य पुनरालम्भं जपति यज्ञो बभूव स आ बभूव स प्र जज्ञे स वावृधे। स देवानामधिपतिर्बभूव सो अस्मां अधिपतीन् करोतु वयं स्याम पतयो रयीणाम् इति। अथ वै भवति यज्ञो वा वै यज्ञपतिं दुहे यज्ञपतिर्वा यज्ञं दुहे स यः स्तुतशस्त्रयोर्दोहम-विद्वान् यजते तं यज्ञो दुहे स इष्ट्वा पापीयान् भवति। य एनयोर्दोहं विद्वान् यजते स यज्ञं दुहे स इष्ट्वा वसीयान् भवति। स्तुतस्य स्तुतमस्यूर्जं मह्यं स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रमस्यूर्जं मह्यं शस्त्रं दुहामा मा, शस्त्रस्य शस्त्रं गम्यादित्याहैष वै स्तुतशस्त्रयोर्दोहस्तं य एवं विद्वान् यजते दुह एव यज्ञमिष्ट्वा वसीयान् भवतीति ब्राह्मणम्।] [१४.२० — अथ वै भवत्यृषयो वा इन्द्रं प्रत्यक्षं नापश्यन्। तं वसिष्ठः प्रत्यक्षमपश्यत्। सोऽब्रवीद् ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्तेऽथ मेतरेभ्य ऋषिभ्यो मा प्र वोच इति। तस्मा एतान्स्तोमभागानब्रवीत्। ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्तेति। तस्माद्वासिष्ठं ब्रह्मत्वमिति। स यत्राह ब्रह्मन् स्तोष्यामः प्रशास्तः इति तद् ब्रह्मा प्रसौति। देव सवितः इत्येतां प्रतिपदं कृत्वा रश्मिरसि क्षयाय त्वा क्षयं जिन्व इत्येतस्यानुवाकस्यैकैकमुपादाय प्रसौति।] [२३.७ — प्रसव इति॥ स ह स्माह बोधायन उभयेन प्रसौयाद्वासिष्ठीयाभिश्च सावित्रेण चेति॥ सावित्रेणैवेति शालीकिः।] [१४.२० — स एवमेव प्रसुवन् द्वादश-भिरग्निष्टोमं प्रसौति।] तस्य पञ्चम्यां प्रस्तुतायां वाचयति श्येनोऽसि गायत्रछन्दा अनु त्वा रभे स्वस्ति मा सं पारय इति।। [१४.६ — अथ वै भवति यो वै पवमानानामन्वारोहान् विद्वान् यजतेऽनु पवमानानारोहति न पवमानेभ्योऽवाच्छिद्यत इति। बहिष्पवमाने पञ्चम्यां प्रस्तुतायां वाचयति श्येनोऽसि गायत्रछन्दा अनु त्वा रभे स्वस्ति मा सं पारय इति।] [२१.१८ — पञ्चम्यां प्रस्तुतायां वाचयतीति॥ सूत्रं बोधायनस्य॥ यस्यामेव कस्यांचिद् वाचयेदिति शालीकिः॥] अत्र दशहोतारं व्याचष्टे॥

## ६५. सवनीयपशुवपायागान्तम्

बौधायनश्रौ०—

[७.८]—उद्द्रुते साम्नि संप्रैषमाह अग्नीदग्नीन् विहर बर्हिं स्तृणाहि पुरोडाशां अलंकुरु प्रतिप्रस्थातः पशुरन्तिकेऽस्तु इति। यथासंप्रैषं तौ कुरुतः। अथाप उपस्पृश्याह एहि यजमान इति। पूर्वया द्वारा हविर्धाने प्रपाद्य समस्तं राजानमुपतिष्ठते विष्णो त्वं नो अन्तमः इति। [१४.५ — अथ वै भवति वास्तु वा एतद्यज्ञस्य क्रियते यद् ग्रहान् गृहीत्वा बहिष्पवमानं सर्पन्ति पराञ्चो हि यन्ति पराचीभिः स्तुवते वैष्णव्यर्चा पुनरेत्योप तिष्ठत इति। स वैष्णव्यर्चा

नरेत्योप तिष्ठते । यज्ञो वै विष्णुः । यज्ञमेवाकः । विष्णो त्वं नो अन्तमः शर्म यच्छ सहन्त्य । प्र ते धारा मधुश्चुत उत्सं दुह्रते अक्षितम् इत्याह । यदेवास्य शयानस्योपशुष्यति तदेवास्यैतेना प्याययतीति ब्राह्मणम् । ] अथादत्त आश्विनपात्रम् । तदेतद् द्व्यश्रि भवति । तस्मिन् गृह्णाति द्रोणकलशात् परिप्लुना पात्रेण या वां कशा इत्यनुद्रुत्य उपयामगृहीतोऽस्यश्विभ्यां त्वा जुष्टं गृह्णामि इति । परिमृज्य सादयति एष ते योनिर्माध्वीभ्यां त्वा इति । अथाप उपस्पृश्याह एहि यजमान इति । आहवनीयं हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा सप्तहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहा इति । [ २१·१८--सप्तहोतुर्होम इति ॥ सूत्रं बोधायनस्य ॥ अनुसवनमेव सप्तहोतारं जुहुयादिति शालीकिः ॥ ] अथावकाशैश्चरति परिभूरग्निं परिभूरिन्द्रम् इत्येतेनानुवाकेन । [ १४·८—अथ समस्तꣳ राजानमुपतिष्ठते परिभूरग्निं परिभूरिन्द्रं परिभूर्विश्वान् देवान् परिभूर्माꣳ सह ब्रह्मवर्चसेन स नः पवस्व शं गवे शं जनाय शमर्वते शꣳ राजन्नोषधीभ्योऽच्छिन्नस्य ते रयिपते सुवीर्यस्य रायस्पोषस्य ददितारः स्याम । तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे इति । चत्वारो ब्राह्मणसंपन्नाः कामास्तेषां यं कामं कामयते तमादिश्योन्मृष्टे । अथावकाशैश्चरति । प्राणाय मे वर्चोदा वर्चसे पवस्व इत्युपाꣳशुपात्रमवेक्षते । अपानाय इत्यन्तर्यामपात्रम् । व्यानाय इत्युपाꣳशुसवनम् । वाचे इत्यैन्द्रवायवम् । दक्षक्रतुभ्याम् इति मैत्रावरुणम् । श्रोत्राय इत्याश्विनम् । चक्षुर्भ्याम् इति शुक्रामन्थिनौ । आत्मने इत्याग्रयणम् । अङ्गेभ्यः इत्युक्थ्यम् । आयुषे इति ध्रुवम् । प्रतिष्ठायै इत्यृतुपात्रे माध्यंदिने सवने । न प्रातःसवने । वीर्याय इत्यतिग्राह्यं वा षोडशिनं वावेक्षते । विष्णोर्जठरमसि इति द्रोणकलशमवेक्षते । इन्द्रस्य जठरमसि इत्याधवनीयम् । विश्वेषां देवानां जठरमसि इति पूतभृतम् । अथ समस्तमेव राजानमुपतिष्ठते कोऽसि को नाम कस्मै त्वा काय त्वा यं त्वा सोमेनातीतृपं यं त्वा सोमेनामीमदꣳ सुप्रजाः प्रजया भूयासꣳ सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषैर्विश्वेभ्यो मे रूपेभ्यो वर्चोदा वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे इति । चत्वारो ब्राह्मणसंपन्नाः कामास्तेषां यं कामं कामयते तमादिश्योन्मृष्टे आयुरुन्मृजे भूतिमुन्मृजे ब्रह्मवर्चसमुन्मृजेऽमुष्य प्राणमुन्मृज इदमुन्मृजे इति । यमेव तर्पयति स एनं तृप्तः प्राणापानाभ्यां वाचो दक्षक्रतुभ्यां चक्षुर्भ्याꣳ श्रोत्राभ्यामात्मनोऽङ्गेभ्य आयुषोऽन्तरेति । ताजक् प्र धन्वतीति ब्राह्मणम् । ]

अथ प्रचरण्यां नव कृत्वो गृह्णीते । अथैष आग्नीध्र आग्नीध्रीयाद् धिष्णियादनुपूर्वं धिष्णियेष्वङ्गारान् विहरति । [ २१·१८—धिष्णियानां विहरण इति ॥ स ह स्माह बोधायन आग्नीध्रीयादङ्गारानादाय तत आग्नीध्रीये प्रस्कन्दयेदथानुपूर्वमितरेषु । धिष्णियान् विहृत्योदीचीनसꣳस्थतां कुर्यादिति ॥ अत्रो ह स्माह शालीकिराग्नीध्रीयादङ्गारानादाय तत आग्नीध्रीये प्रस्कन्दयेदथानुपूर्वमितरेषु । धिष्णियान् विहृत्य न चोदीचीनसꣳस्थतां कुर्यादिति ॥ ] अथ पुरस्तात् प्रत्यङ्ङासीनो विहृतान् धिष्णियान् व्याघारयति यथान्युप्तैर्मन्त्रैः । स यद्यु ह यथान्युप्तमभिजुहोति सप्त ते इत्याग्नीध्रीयेऽन्ततो[1] जुहोति । यद्यु वै स्वाहास्वाहेति स्वाहेत्येवान्तत आग्नीध्रीये जुहोत्युदक्सꣳस्थताया इति । [ २१·१८—धिष्णियानां व्याघारण इति ॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः ॥ ] [ २५·१९—आ धिष्णियव्याघारणसंपातादित्येष समुद्देशो भवति । कथमु खलु धिष्णियानां यथान्युप्तं व्याघारणं भवतीति । विभुवे प्रवाहणाय स्वाहा इति व्याघार्य रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा हिꣳसीः इति । ] अथोत्तरस्य हविर्धानस्य चुबुके प्रचरणीꣳ सादयति । अथ सांकाशिनेन पथा पृष्ठ्याꣳ स्तृणाति संततां गार्हपत्यादाहवनीयात् ।

१. एवं केषुचिल्लिखितपुस्तकेषु । ' इत्याग्नीध्रेऽन्ततो ' इति मुद्रितपुस्तकपाठः ।

२. [ ७.९ ]—अथाध्वर्यू रशनाहस्तो यूपमभ्यैति । उदूह्य पूर्वां२ रशनां नाभिदघ्ने परिव्ययन्नाह परिवीयमाणायानुब्रूहि इति । स्वर्वन्तं१ यूपमुत्सृज्याग्नेयं पशुमुपाकरोति । [ २१.१८—स्वरुरशनस्योत्पादन इति ॥ यूपः स्वरुरशनमुत्पादयेदिति बोधायनः ॥ पशुरिति शालीकिः ॥ तन्त्रमित्यौपमन्यवः ॥ देवतेत्यौपमन्यवीपुत्रः ॥ ] समानं कर्मा प्रवरात्२ । प्रसिद्धं होतारं वृणीते । [ २५.१९—सप्त वृणीत इति । होतैवैषां सप्तमो भवति । ] अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, अश्विनाध्वर्यू आध्वर्यवात् इति । अहं चासौ च मानुषौ इति प्रतिप्रस्थातुर्नाम गृह्णाति । अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, मित्रावरुणौ प्रशास्तारौ प्रशास्त्रात् इति । असौ मानुषः इति मैत्रावरुणस्य नाम गृह्णाति । अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, इन्द्रो ब्रह्मा ब्राह्मणात् इति । असौ मानुषः इति ब्राह्मणाच्छंसिनो नाम गृह्णाति । अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, मरुतः पोत्रात् इति । असौ मानुषः इति पोतुर्नाम गृह्णाति । अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, ग्नावो नेष्ट्रात् इति । असौ मानुषः इति नेष्टुर्नाम गृह्णाति । अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, अग्निराग्नीध्रात् इति । असौ मानुषः इत्यग्नीधो नाम गृह्णाति । तेषां प्रवृतःप्रवृत एव प्रवृताहुतीर्जुहोति । जुष्टो वाचो भूयासम्, ऋचा स्तोमं समर्धय, सूर्यो मा देवो देवेभ्यः पातु इत्येताभिरध्वर्यू जुहुतः । [ १४.५—अथ द्वे प्रवृताहुती जुहोति जुष्टो वाचो भूयासम्, ऋचा स्तोमं समर्धय इति । उपरिष्टात् तृतीया । तामु तत्रैव वक्ष्यामः । ] [ १४.२१—अत्रैतां तृतीयां प्रवृताहुतिं जुहोति सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानोऽग्निर्मा पातु चक्षुषः स्वाहा इति । अथाभिचरन् बभ्रुवे बभ्रुवत्सायै कार्ष्मर्यमयेन पात्रेण पयो जुहोति सक्ष शूष सवितर्विश्वचर्षण एतेभिः सोम नामभिर्विधेम ते तेभिः सोम नामभिर्विधेम ते स्वाहा इति । साक्षादस्य हृदयं भित्वान्त्राणि परिकासयातै । स्तृणुते हैव तं भ्रातृव्यम् । अथ येनास्यर्त्विजां स्पर्धा स्यात्तमाह मास्य चमसमनुप्रसृपतदाभिमर्शनं करिष्यामि इति । तस्यैतेनैव मन्त्रेण चमसं जुहुयात् । तमूर्ध्वोऽवाङ् वा राजातिपवते । ] यथावेदमितरे जुह्वति । अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, अग्निर्दैवीनां विशां पुरएतायं सुन्वन् यजमानो मनुष्याणां तयोरस्थूरि गार्हपत्यं दीदयच्छतं हिमा द्वा यू राधांसीव संपृञ्चानावसंपृञ्चानौ तन्वः इति । समानं कर्मा वपायै । वपया प्रचर्य३ वपाश्रपणी अनुप्रहृत्य समुत्क्रम्य चात्वाले मार्जयन्ते ॥

## ६८. सदःप्रसर्पणम्

बौधायनश्रौ०—

[ ७.९-११ ]—अथ यजमानमुत्करे स्फ्यविघनानुपस्थापयति स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः । यज्ञिया यज्ञकृत स्थ ते मास्मिन् यज्ञ उपह्वयध्वमुप मा द्यावापृथिवी ह्वयेतामुपास्तावः कलशः सोमो अग्निरुप देवा उप यज्ञ उप मा होत्रा उपहवे ह्वयन्ताम् इति । [ २१.१९—स्फ्यविघनानामुपस्थान इति ॥ सूत्रं शालीकेः ॥ अत्रो ह स्माह बोधायनोऽग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा तिर्यञ्चं स्फ्यं स्तब्ध्वा यजमानमुत्करे स्फ्यविघनानुपस्थापयेदिति । ] अथ नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यात् इत्याहवनीयमुपतिष्ठते । नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहि इत्याग्नीध्रम् । नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीः इति होत्रीयम् ।

---

१. द्रष्टव्यं श्रौ. १ पृ. ५९१ । २. द्रष्टव्यं श्रौ. १ पृ. ५९४ । ३. द्रष्टव्यं श्रौ. १ पृ. ५९५ ।

अथ प्राङावृत्य जपति दृढे स्थः शिथिरे समीची माऽंहसस्पातं सूर्यो मा देवो दिव्यादंहसस्पातु वायु-रन्तरिक्षादग्निः पृथिव्या यमः पितृभ्यः सरस्वती मनुष्येभ्यः इति। अथ प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संमृशति देवी द्वारौ मा मा संताप्तम् इति। [ २१.१९—सर्पण इति ॥ सूत्रं बोधायनस्य ॥ अपर-द्वारिक एव यजमानः स्यादिति शालीकिः ॥] अथ सदः प्रपद्यते नमः सदसे नमः सदसस्पतये नमः सखीनां पुरोगाणां चक्षुषे नमो दिवे नमः पृथिव्यै इति। अथासनाद्बहिःसदसं तृणं निरस्यति अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरः इति। उपविशति उन्निवत उदुद्वतश्च गेषम् इति। अथेमे समीक्षते पातं मा द्यावापृथिवी अद्याह्नः इति। अथ दक्षिणार्धं परेक्षते आगन्त पितरः पितृमानहं युष्माभिर्भूयासं सुप्रजसो मया यूयं भूयास्त इति। अथोत्तरार्धं परेक्षत उदक्सꣳस्थताया इति। [ १४.८—उक्तꣳ स्फ्यविघनानामुपस्थानम्। उक्तꣳ संप्रसर्पणस्य।]

अथेमावध्वर्यू आहवनीयप्रभृत्येवमेवाहवनीयमुपतिष्ठेते। एवमाग्नीध्रीयम्। एवꣳ होत्रीयम्। एवं प्राञ्चावावृत्य जपतः। एवं प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संमृशतः। एवꣳ सदः प्रपद्येते। एवमासनाभ्यां बहिःसदसं तृणे निरस्यतः। दक्षिणमेवाध्वर्युर्बाहुं निश्रयमाण उपविशति। उत्तरं प्रतिप्रस्थाता। एवमिमे समीक्षेते। एवं दक्षिणार्धं चोत्तरार्धं च परेक्षेते। उदक्सꣳस्थताया इति। अथेमे वषट्कर्तार आहवनीयप्रभृत्येवमेवाहवनीयमुपतिष्ठन्ते। एवमाग्नीध्रीयम्। तमुत्तरेण परियन्ति। एवꣳ होत्रीयम्। एवं प्राञ्च आवृत्य जपन्ति। एवं प्रदक्षिणमावृत्य पूर्वे द्वारौ सदसः संमृशन्ति। एवꣳ सदः प्रपद्यन्ते। अग्रेण धिष्णियानुत्तरेणाच्छावाकस्य धिष्णियं परीत्यैवमासनेभ्यो बहिःसदसं तृणानि निरस्यन्ति। एवꣳ स्वꣳस्वमेव धिष्णियमनूपविशन्ति। एवमिमे समीक्षन्ते। एवं दक्षिणार्धं चोत्तरार्धं च परेक्षन्ते। उदक्सꣳस्थताया इति। अथेमे सर्वे उद्गातारो ब्रह्मा सदस्य इत्यवषट्कर्तार आहवनीयप्रभृत्येवमेवाहवनीयमुपतिष्ठन्ते। एवमाग्नीध्रीयम्। तमुत्तरेण परियन्ति। एवꣳ होत्रीयम्। एवं प्राञ्च आवृत्य जपन्ति। एवं प्रदक्षिणमावृत्योत्तरेण सदः परीत्यैवमपरे द्वारौ सदसः संमृशन्ति। एवꣳ सदः प्रपद्यन्ते। एवमासनेभ्यो बहिःसदसं तृणानि निरस्यन्ति। औदुम्बरीमेवोद्गातारः पर्युपविशन्ति। दक्षिणत उदङ्मुखौ ब्रह्मा सदस्य इत्युपविशतः। एवमिमे समीक्षन्ते। एवं दक्षिणार्धं चोत्तरार्धं च परेक्षन्ते। उदक्सꣳस्थताया इति। अथैषां[1] विसꣳस्थितसंचरः। अन्तरेण होतुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च येऽधिष्णियाः। अथ धिष्णियवन्तः स्वꣳस्वमेव धिष्णियमुत्तरेणोत्तरेण परियन्ति। ते सꣳस्थिते सवने यथाप्रसृप्तमेव विनिःसर्पन्ति। [२१.१९-तार्तीयसवनिकेषूक्थ्यविग्रहेष्विति॥ स ह स्माह बोधायनः प्रसर्पेदेव तार्तीयसवनिकेभ्य उक्थ्यविग्रहेभ्यः षोडशिने रात्रिपर्यायेभ्यो राथंतराय संधय इति॥ अथो ह स्माह शालीकिस्तृतीयसवनातिवृद्धिरेवैषा भवति। यदेव तृतीयसवने प्रसर्पेत् तत्प्रसृप्तमेवैतेषुं[2] स्यादिति॥ प्रातःसवन एव सर्वेभ्यः सवनेभ्यः संप्रसर्पेदित्यौपमन्यवः॥ ][ २५.१९–कथमु खल्वेषां विसꣳस्थितसंचरः स्यादिति। अन्तरेण होतुश्च धिष्णियं ब्राह्मणाच्छꣳसिनश्च येऽधिष्णियाः। अथ धिष्णियवन्तः स्वꣳस्वमेव धिष्णियमुत्तरेण परिक्रामेयुः। ]

---

१. एवं केषुचिल्लिखितपुस्तकेषु। 'अथैतेषां' इति मुद्रितपुस्तकपाठः।

२. एवं लिखितपुस्तके। '०मेव तेषाꣳ' इति मुद्रितपुस्तकपाठः।

## ६९. सवनीयपुरोडाशयागः

**बौधायनश्रौ०—**

[७.१२]—संप्रसृप्तान् विदित्वाध्वर्युः सवनीयान् पुरोडाशान् याचति। अथैष आग्नीध्रो जघनेन गार्हपत्यमुपविश्य पात्र्यां पञ्चधोपस्तृणीते। मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्वासयति। पुरस्ताद्धानाः। दक्षिणतः करम्भम्। पश्चात् परिवापम्। आमिक्षामुत्तरतः। [२१.१९– आमिक्षार्थे मन्त्रामन्त्र इति॥ मन्त्रवती च स्यात् सर्वाणि च सवनान्यनुसमियादिति बोधायनः॥ तूष्णीका च स्यात् सर्वाणि च सवनान्यनुसमियादिति शालीकिः॥ मन्त्रवती च स्यात् प्रातःसवने चैवैषा स्यादित्यौपमन्यवः॥ सवनीयानामुद्वासन इति॥ सूत्रं बोधायनस्य॥ नानापात्रीष्वेव सवनीयानुद्वासयेदिति शालीकिः॥] [२५.२०—यथो एतद् बोधायनस्य कल्पं वेदयन्ते समानपात्र्यामेव सवनीयानुद्वासयेत् पुरोडाशस्यैवैषोऽलङ्कारो दृष्टो भवति। मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्वासयेत् पुरस्ताद्धाना दक्षिणतः करम्भं पश्चात् परिवापमामिक्षामुत्तरतः।] अथैनानि संपरिगृह्य पूर्वया द्वारोपनिर्हृत्योत्तरेण सदः परीत्योत्तरेणाग्नीध्रीयं धिष्णियं पर्याहृत्यान्तर्वेद्यासादयति। अथ जुहूपभृतोरुपस्तृणान आह प्रातः प्रातःसावस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहि इति। [२१.१९– प्रातः प्रातःसावस्येति॥ सूत्रं बोधायनस्य॥ प्रातःसावस्येत्येव ब्रूयादिति शालीकिः॥] [२५.२०– कथमु खल्वेषां संचरी स्यादिति। प्रज्ञातो हविष्पथः। अथापरम्। पूर्वया द्वारोपनिर्हृत्यापरया द्वारा सदः प्रपाद्याग्रेण कर्तृन् जघनेन धिष्णियानुत्तरेणाच्छावाकस्य धिष्णियं पर्याहृत्यान्यस्मै प्रदायैतेनैव यथेतमेत्योत्तरेण सदः परीत्य पूर्वया द्वारोपनिर्हृत्योत्तरेणाग्नीध्रीयं पर्याहृत्यान्तर्वेद्यासादयेत्। अध्वर्युश्चेद्धविर्धानं प्रपन्नः स्यात् उपनिष्क्राम मा त्वाभिपरिह्वारिषम् इत्येव ब्रूयात्।] द्विः पुरोडाशस्यावद्यति। द्विर्धानानाम्। द्विः करम्भस्य। द्विः परिवापस्य। द्विरामिक्षायाः। [२१.१९–सवनीयानामनुसंहरण इति॥ अनुसंहरेदिति बोधायनः॥ नानुसंहरेदिति शालीकिः॥] अभिघारयति। प्रत्यनक्ति। अथोपभृति विहृते सर्वेषां सकृत्सकृदुत्तरार्धादवद्यति। द्विरभिघारयति। न प्रत्यनक्ति। अत्याक्रम्याश्राव्याह प्रातः प्रातःसावस्येन्द्राय पुरोडाशान् प्रस्थितान् प्रेष्य इति। वषट्कृते जुहोति। अथ समावपमान आह अग्नयेऽनुब्रूहि इति। आश्राव्याह अग्नये प्रेष्य इति। वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति। अथोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा पात्र्यामिडां समवधाय प्रतीचः पुरोडाशान् प्रहिणोति। अनु हैके संयन्ति पशव इडेति वदन्तः॥

## ७१. द्विदेवत्यग्रहप्रचारः

**बौधायनश्रौ०—**

[७.१२-१३]—अथ प्राङायन्नाह वायव इन्द्रवायुभ्यामनुब्रूहि इति। तच्छ्रुत्वा प्रतिप्रस्थातैन्द्रवायवस्य प्रतिनिग्राह्यं[1] गृह्णाति द्रोणकलशात् परिप्लुना पात्रेणादित्यस्थाल्या औपशये पात्रे उपयामगृहीतोऽसि वाक्षसदसि वाक्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि इति।

---

१. एवं केषुचिल्लिखितपुस्तकेषु। 'प्रतिनिग्राह्यं' इति मुद्रितपुस्तकपाठः।

ग्रहावादायोपनिष्क्रामति। उपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहावादत्ते। उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिग्राह्यं प्रयच्छति। [ २१·१९—प्रतिनिग्राह्याणां ग्रहण इति ॥ सूत्रं बोधायनस्य ॥ द्विदेवतेभ्य एव प्रतिनिग्राह्यान् गृह्णीयादिति शालीकिः ॥ ] [२५·२०-यथो एतद्बोधायनस्य कल्पं वेदयन्ते द्विदेवत्येषूत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिग्राह्यं प्रयच्छतीति। यदाध्वर्युः पुरोडाशान् प्रत्यङ् हरेत् तद्वविर्धानं प्रपद्यमानं प्रतिप्रस्थातारं परिगृह्णीयात्। ग्रहावादायोपनिष्क्रामति। उपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहावादत्ते। अपरेण परिक्रान्तायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिग्राह्यं प्रयच्छतीति। हुत्वा ऽप्यवनीय प्रदक्षिणमावृत्य प्रतिप्रस्थाताध्वर्युं परिगृह्णीयात्। अथाध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् द्रवन् पात्रेण। सिद्धमत ऊर्ध्वम्। ] अथ वै भवत्यैन्द्रवायवमादायाघारमाघारयेदिति। स आज्यस्थाल्याः स्रुवेणोपहत्यैन्द्रवायवमादायाघारमाघारयति अध्वरो यज्ञोऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाध्वरोऽसि स पिन्वस्व घृतवद्देव सोम स्वाहा इति। [२१·१९-आघार इति ॥ सूत्रं बोधायनस्य ॥ ग्रहादेवैतमाघारमाघारयेदिति शालीकिः ॥ द्रोणकलशात् परिप्लुना पात्रेणेत्यौपमन्यवः ॥ यजुरेवैतज्जपेन्नैतमाघारमाघारयेदित्याञ्जीगविः ॥ ] [ १४·५—अथ वै भवत्यायतनवतीर्वा अन्या आहुतयो हूयन्तेऽनायतना अन्याः। या आघारवतीस्ता आयतनवतीर्याः सौम्यास्ता अनायतनाः। ऐन्द्रवायवमादायाघारमाघारयेदिति। स ऐन्द्रवायवमादायाघारमाघारयति अध्वरो यज्ञोऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाध्वरोऽसि स पिन्वस्व घृतवद्देव सोम स्वाहा इति। सौम्या एव तदाहुतीरायतनवतीः करोत्यायतनवान् भवति य एवं वेदाथो द्यावापृथिवी एव घृतेन व्युनक्ति ते व्युक्ते उपजीवनीये भवत उपजीवनीयो भवति य एवं वेदेति ब्राह्मणम्। ] अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, वायव इन्द्रवायुभ्यां प्रेष्य इति। वषट्कृतेऽध्वर्युः पूर्वो जुहोति। द्वितीयं वषट्कृते सहोभौ जुहुतः। [ २५·२० — अथेमे द्विदेवत्या अननुवषट्कारा भवन्ति। क उ खल्वेषामनुवषट्कारो भवतीति। विज्ञायते 'द्विदेवत्यानृतुयाजान् यश्च पात्नीवतो ग्रहः। आदित्यग्रहसावित्रौ तान् स्म मानुवषट्कृथाः' इति। ] हुत्वा वाचयति यो न इन्द्रवायू अभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानि इति। अथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य संस्रावमवनयति। उभयोरर्धमध्वर्युः प्रतिप्रस्थातुः पात्रेऽवनयति। तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति देवेभ्यस्त्वा इति।

अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे पात्रं प्रदाय प्राङायन्नाह मित्रावरुणाभ्यामनुब्रूहि इति। तच्छ्रुत्वा प्रतिप्रस्थाता मैत्रावरुणस्य प्रतिनिग्राह्यं गृह्णाति द्रोणकलशात् परिप्लुना पात्रेणादित्यस्थाल्या औपशये पात्रे उपयामगृहीतोऽस्यृतसदसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि इति। ग्रहावादायोपनिष्क्रामति। उपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहावादत्ते। उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिग्राह्यं प्रयच्छति। अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, मित्रावरुणाभ्यां प्रेष्य इति। वषट्कृते सहोभौ जुहुतः। हुत्वा वाचयति यो नो मित्रावरुणावभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानि इति। अथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य संस्रावमवनयति। उभयोरर्धमध्वर्युः प्रतिप्रस्थातुः पात्रेऽवनयति। तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति विश्वेभ्यस्त्वा इति।

अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे पात्रं प्रदाय प्राङायन्नाह अश्विभ्यामनुब्रूहि इति। तच्छ्रुत्वा प्रतिप्रस्थाताश्विनस्य प्रतिनिग्राह्यं गृह्णाति द्रोणकलशात् परिप्लुना पात्रेणादित्यस्थाल्या औपशये पात्रे उपयामगृहीतोऽसि श्रुतसदसि श्रोत्रपाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि इति। ग्रहावादायोपनिष्क्रामति। उपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहावादत्ते।

उत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिग्राह्यं प्रयच्छति। अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, अश्विभ्यां प्रेष्य इति। वषट्कृते सहोभौ जुहुतः। हुत्वा वाचयति यो नोऽश्विनावभिदासति भ्रातृव्य उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानि इति। अथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य सꣳस्रावमवनयति। उभयोरर्धमध्वर्युः प्रतिप्रस्थातुः पात्रेऽवनयति। तं प्रतिप्रस्थातादित्यस्थाल्यामवनयति विश्वेभ्यस्त्वा देवेभ्यः इति। स यद्यु हैतैः सꣳस्रावैरुपर्यर्धा स्थाली भवत्येतेनैनां पात्रेणापिदधाति। यद्यु वै नोपर्यर्धा भवति द्रोणकलशादेनामुपर्यर्धां कृत्वैतेनैव पात्रेणापिदधाति विष्णवुरुक्रमैष ते सोमस्तꣳ रक्षस्व तं ते दुश्चक्षा माव ख्यत् इति। [ २१·१९–सꣳस्रावस्यापिधान इति ॥ सूत्रं बोधायनस्य ॥ यावानेव सꣳस्रावः स्यात् तमपिदध्यादिति शालीकिः ॥ ] [ १४·१०–उक्तं प्रतिनिग्राह्याणां ग्रहणम्। उक्तꣳ सꣳस्रावस्यापिधानम्। उक्ता द्विदेवत्यानां चर्या। ] [ २५·२१–क उ खलूपाꣳश्वन्तर्यामयोर्द्विदेवत्यानाꣳ स्तोत्रशस्त्रभक्तिर्भवतीति। यदुपाꣳशु शꣳसति तदुपाꣳश्वन्तर्यामयोः। प्रउग उक्थे द्विदेवत्यानाम्। ] अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रे पात्रं प्रदाय प्राङ्ङायन्नाह उन्नेतर्यजमानेभ्यो ऽनुब्रूहि होतुश्चमसमनूनयस्वमुमयतःशुक्रान् कुरुष्वाच्छावाकस्य चमसाध्वर्यो मा तु स्वमुन्नेष्ठाः प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपलम्बस्व इति। यथासंप्रैषं ते कुर्वन्ति। [ २५·२२–चत्वार्युन्नीयमानसूक्तानि भवन्तीति। सवनमुखेष्वच्छावाकचमसे[१] च। ]

## ७३. शुक्रामन्थिप्रचारः

**बौधायनश्रौ०—**

[ ७·१३–१४ ]—द्रोणकलशादेव प्रथममुन्नयन्ति। अथ पूतभृतः। अथ द्रोणकलशात्। त उभयतःशुक्राः। होतृचमसमेव प्रथममुन्नयन्ति। यथोपपादमितरान्। समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्ति। [ २१·१९–चमसानामायातन इति ॥ अग्रेण स्रुचः प्राच आयातयेदिति बोधायनः ॥ जघनेन स्रुच उदीच आयातयेदिति शालीकिः ॥ ] अथ प्रतिप्रस्थाता चतुर्णाꣳ शकलानां द्वौ प्रोक्षति। द्वावप्रोक्षितौ भवतः। प्रोक्षिताभ्यामपिधायाप्रोक्षिताभ्यामुपयच्छतः। शुक्रमेवाध्वर्युरादत्ते। मन्थिनं प्रतिप्रस्थाता। ग्रहावादायोपनिष्क्रामतः। दक्षिणमेवाध्वर्युर्द्वार्बाहुं निश्रयमाण उपनिष्क्रामति। उत्तरं प्रतिप्रस्थाता। तौ जघनेनोत्तरवेदिं ग्रहौ संधत्तः आयुः संधत्तं तन्मे जिन्वतं प्राणꣳ संधत्तं तं मे जिन्वतमपानꣳ संधत्तं तं मे जिन्वतं व्यानꣳ संधत्तं तं मे जिन्वतं चक्षुः संधत्तं तन्मे जिन्वतꣳ श्रोत्रꣳ संधत्तं तन्मे जिन्वतम् इति। [ २१·२०–ग्रहयोः संधान इति ॥ अरत्नी च ग्रहौ च संदध्यातामिति बोधायनः ॥ ग्रहावेति शालीकिः ॥ ] षड्भिः संधाभिः संधाय व्युत्क्रामतः। स्तुतोऽसि जनधा देवास्त्वा शुक्रपाः प्रणयन्तु सुवीराः प्रजाः प्रजनयन् परीहि शुक्रः शुक्रशोचिषा इत्यध्वर्युर्दक्षिणेनोत्तरवेदिं परिक्रामति। स्तुतोऽसि जनधा देवास्त्वा मन्थिपाः प्रणयन्तु सुप्रजाः प्रजाः प्रजनयन् परीहि मन्थी मन्थिशोचिषा इति प्रतिप्रस्थातोत्तरेणोत्तरवेदिं परिक्रामति। तौ पुरस्तात्प्रत्यञ्चावुत्तरवेदिमधिद्रवतः इन्द्रेण सयुजो वयꣳ सासह्याम पृतन्यतः। घ्नन्तो वृत्राण्यप्रति ॥ यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत्ते अग्ने

---

१. एवं केषुचिल्लिखितपुस्तकेषु। 'सवनमुखेषु वाच्छावाक°' इति मुद्रितपुस्तकपाठः।

हरस्तेनाहं हरस्वी भूयासम् इति। [१३.२०- उक्तं शुक्रामन्थिनोरधिद्रवणम्। ] अथान्तरेण यूपं चाहवनीयं च ग्रहौ संधत्तः आयुः स्थ आयुर्मे धत्तमायुर्यज्ञाय धत्तमायुर्यज्ञपतये धत्तं प्राणः स्थः प्राणं मे धत्तं प्राणं यज्ञाय धत्तं प्राणं यज्ञपतये धत्तमपानः स्थोऽपानं मे धत्तमपानं यज्ञाय धत्तमपानं यज्ञपतये धत्तं व्यानः स्थो व्यानं मे धत्तं व्यानं यज्ञाय धत्तं व्यानं यज्ञपतये धत्तं चक्षुः स्थश्चक्षुर्मे धत्तं चक्षुर्यज्ञाय धत्तं चक्षुर्यज्ञपतये धत्तं श्रोत्रं स्थः श्रोत्रं मे धत्तं श्रोत्रं यज्ञाय धत्तं श्रोत्रं यज्ञपतये धत्तम् इति। षड्भिः संधाभिः संधाय व्युत्क्रामतः तौ देवौ शुक्रामन्थिनौ कल्पयतं दैवीर्विशः कल्पयतं मानुषीरिषमूर्जमस्मासु धत्तं प्राणान् पशुषु प्रजां मयि च यजमाने च इति। अथाप्रोक्षितौ शकलौ बहिर्वेदि निरस्यतः। निरस्तः शण्डः सहामुना इत्यध्वर्युः। यं यजमानो द्वेष्टि तं मनसा ध्यायति। निरस्तो मर्कः सहामुना इति प्रतिप्रस्थाता। यं यजमानो द्वेष्टि तं मनसा ध्यायति। अथाप उपस्पृश्य प्रोक्षितावभ्याधत्तः। शुक्रस्यैषा ते समित् तया समिध्यस्व स्वाहा इत्यध्वर्युः। मन्थिनैषा ते समित् तया समिध्यस्व स्वाहा इति प्रतिप्रस्थाता। एतस्मिन् काले चमसाध्वर्यवश्चमसानुपोद्यच्छन्ते। अथाध्वर्युः पुरस्तात्प्रत्यङ् तिष्ठन्नाश्रावयति ओश्रावय, अस्तु श्रौषट्, प्रातः प्रातःसावस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान् प्रस्थितान् प्रेष्य इति। [२१.२०- शुक्रवतो मन्थिवत इति॥ सूत्रं बोधायनस्य॥ मन्थिवत इत्येव ब्रूयादिति शालीकिः॥ ] वषट्कृते सहोभौ जुहुतः स प्रथमः संकृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणो अग्निः। स प्रथमो बृहस्पतिश्चिकित्वान् तस्मा इन्द्राय सुतमा जुहोमि स्वाहा इति। वषट्कृतानुवषट्कृते द्विर्जुहुतः। तथैव त्रिर्द्विः सर्वांश्चमसाञ्जुह्वति। अथ संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य प्र सदस्यस्य होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्द्रोणकलशादभ्युन्नीयोपावर्तध्वं होतुश्चमसाध्वर्यवुप रमैहि प्रतिप्रस्थातरुत्तरार्धं आहवनीयस्य मन्थिनः संस्रावं जुहुधि इति। यथासंप्रैषं ते कुर्वन्ति।

अथ प्रदक्षिणमावृत्य होतृचमसे ग्रहस्य संस्रावमवनयति हुतं त्वा हुतेऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्यः इति वा तूष्णीं वा। अथ प्रतिप्रस्थातोत्तरार्धे आहवनीयस्य मन्थिनः संस्रावं जुहोति एष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यं रायस्पोषं सुवीर्यं संवत्सरीणां स्वस्तिं स्वाहा इति। [ २१.२०-मन्थिसंस्रावस्य होम इति॥ सूत्रं शालीकेः॥ अत्रो ह स्माह बोधायन आहवनीयादेवोदीचोऽङ्गारान्निर्वर्त्य तेषु मन्थिनः संस्रावं जुहुयादिति। ] [ १४.५- अथ प्रतिप्रस्थातोत्तरार्धे आहवनीयस्य मन्थिनः संस्रावं जुहोति एष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यं रायस्पोषं सुवीर्यं संवत्सरीणां स्वस्तिं स्वाहा इति। अथ वै भवति मनुः पुत्रेभ्यो दायं व्यभजत् स नाभानेदिष्ठं ब्रह्मचर्यं वसन्तं निरभजत् स आगच्छत् सोऽब्रवीत् कथा मा निरभागिति न त्वा निरभाक्षमित्यब्रवीदङ्गिरस इमे सत्रमासते ते सुवर्गं लोकं न प्र जानन्ति तेभ्य इदं ब्राह्मणं ब्रूहि ते सुवर्गं लोकं यन्तो य एषां पशवस्तांस्ते दास्यन्तीति तदेभ्योऽब्रवीदिति। तत्पृच्छन्ति किमेभ्यस्तदुवाचेत्यपाठ्यानि सन्तनीर्ध्वंसानुमन्त्रणीया अच्छावाकीया स्तोत्रीयाः शस्त्रीयाः सत्यं वदत श्रद्धा वो मा वि गादित्येतदेभ्यस्तदुवाचेति। तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छदित्युक्तस्यैष कर्मणोऽनुवादः ]। [ २५.१८—तिष्ठता ग्रहा होतव्या अन्यत्र प्राजापत्याच्च मन्थिसंस्रावाच्चेति। ] अथाप उपस्पृश्य शुक्रपात्रं च मन्थिपात्रं च खरे यथायतनं सादयति। यन्त्येते महर्त्विजां चमसाः॥

## ७५. होत्रकचमसप्रचारः

बौधायनश्रौ०—

[ ७.१४ ]—अथैते होत्रकाणां चमसाध्वर्यवः सकृत्सकृद् द्रोणकलशादभ्युन्नीयोपा-

वर्तन्ते। तेषां मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यज इति। वषट्कृतानुवषट्कृते द्विर्जुहोति। ब्रह्मन् यज, पोतर्यज, नेष्टर्यज, अग्नीद्यज इति पञ्च होत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङुद्दुत्याग्रेण होतारमुपविशति अयाडग्नीत् इति। स भद्रमकः इत्याह होता यो नः सोमꣳ राजानं पाययिष्यति इति। [ २१.२० – होत्रकचमसानाꣳ होम इति ॥ स ह स्माह बोधायनः शुक्रामन्थिभ्यामेनान् सह सकृज्जुहुयाद् द्विरभ्युन्नीतानिति ॥ अत्रो ह स्माह शालीकिर्नैनाञ्छुक्रामन्थिभ्याꣳ सह सकृज्जुहुयाद् द्विरेवाभ्युन्नीतानिति ॥ ]

## ७७. द्विदेवत्यसोमभक्षणम्

**बौधायनश्रौ०—**

[ ७.१४ ]—अथ होतादत्त ऐन्द्रवायवपात्रम्। आत्तमेवाध्वर्युरन्वारभते। अन्वारब्धेऽध्वर्यौ होतोपहवमिष्ट्वा भक्षयति यथा स वेद। तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्ट्वा भक्षयति मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहि इति। अथ होता भक्षयति। अथाध्वर्युः। अथैनद्धोत्रेऽनुषजति। तद्धोता यथायतनꣳ सादयति। अथ होतादत्ते मैत्रावरुणपात्रम्। आत्तमेवाध्वर्युरन्वारभते। अन्वारब्धेऽध्वर्यौ होतोपहवमिष्ट्वा भक्षयति यथा स वेद। तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्ट्वा भक्षयति मयि वसुर्विदद्वसुश्चक्षुष्पाश्चक्षुर्मे पाहि इति। अथैनद्धोत्रेऽनुषजति। तद्धोता यथायतनꣳ सादयति। अथ होतादत्त आश्विनपात्रम्। आत्तमेवाध्वर्युरन्वारभते। अन्वारब्धेऽध्वर्यौ होतोपहवमिष्ट्वा भक्षयति यथा स वेद। तथान्वारब्धे होतर्यध्वर्युरुपहवमिष्ट्वा भक्षयति मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहि इति। सर्वतःपरिहारमाश्विनं भक्षयतीति ब्राह्मणम्। अथैनद्धोत्रेऽनुषजति। तद्धोता यथायतनꣳ सादयति। [ २१.२०—द्विदेवत्यानां भक्षण इति ॥ सूत्रं बोधायनस्य ॥ प्राणेषूपनिग्राहं द्विदेवत्यान् भक्षयेदिति शालीकिः ॥ दीर्घभक्षेणैवैनान् भक्षयेदित्यौपमन्यवः ॥ ] [ २५.२०—यथो एतदौपमन्यवस्य कल्पं वेदयन्ते द्विदेवत्येषु दीर्घभक्षेणैवैनान् भक्षयेत् भक्षेहि मा विश इति प्रतिपद्य क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै इत्यातः। प्रत्यभिमृशते मा मा राजन् विबीभिषो मा मे हार्दि त्विषा वधीः। वृषणे शुष्मायायुषे वर्चसे इति। अथानुसवनभक्षेणैव सवनमुखीयान् भक्षयेदिति। ]

## ७८. सवनीयेडा

**बौधायनश्रौ०—**

[ ७.१४-१५ ]—अथाप उपस्पृश्य होत्र इडामुपोद्यच्छन्ते उपहूयमानायामिडायामुपप्रगृह्णन्ति चमसान्। उपहूतायामिडायामनाहितमग्नीधे भवति। अथैतानि द्विदेवत्यपात्राण्यरिक्तानि करोति। [ २१.२०–अथैतानि द्विदेवत्यपात्राण्यरिक्तानि करोतीति ॥ सूत्रं बोधायनस्य ॥ सोमेनैवैतान्यरिक्तानि स्युरिति शालीकिः ॥ ] पुरोडाशशकलमैन्द्रवायवपात्रे प्रास्यति। आमिक्षां मैत्रावरुणपात्रे। धाना आश्विनपात्रे। अथैनानि संपरिगृह्य पूर्वया

द्वारोपनिर्हृत्यापरया द्वारा हविर्धानं प्रपाद्य दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याꣳ सादयति । [ २१·२०– अथैनानि दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याꣳ सादयतीति ॥ सूत्रं बोधायनस्य ॥ अधस्तादेवैनान्युपहृतस्य सादयेदिति शालीकिः ॥ वाचि वचं दधामि इति वा तूष्णीं वेति ॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः ॥ ] तान्या तृतीयसवनात् परिशेरे । अथाग्नीध्र आदधाति षडवत्तम् । प्राश्नन्ति । मार्जयन्ते ॥

## ७९. सवनमुखसोमभक्षणम्

बौधायनश्रौ०—

[ ७·१५ ]— इडोपहूताꣳश्चमसान् भक्षयन्ति अश्वेहि मा विश इति दीर्घभक्षमनुद्रुत्य वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति । [ २५·२२- सवनमुखेषु[1] त्रयो दीर्घभक्षाः । ] होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । [ २५·१९- अथेमावध्वर्यू अचमसौ भवतः । क खल्वेतयोर्भक्षो भवतीति । होतृचमस इत्येव ब्रूयात् । क उ खल्वृत्विजामेकाहे सोमं न भक्षयन्तीति । उन्नेता ग्रावस्तुत् सुब्रह्मण्य इत्येव ब्रूयात् । ] यथाचमसं चमसान् । [ २१·२०- होत्रकचमसानां प्रतिभक्षण इति ॥ प्रतिभक्षयेदिति बोधायनः ॥ न प्रतिभक्षयेदिति शालीकिः ॥ ] हिन्व मे इत्यात्मानं प्रत्यभिमृशन्ते । [ २१·२०- प्रत्यभिमर्शन इति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माह बोधायनो भक्षयन्नेव भक्षाणां पारे प्रत्यभिमृशीतेति ॥ ] आप्याययन्ति चमसान् आ प्यायस्व समेतु ते इति । [ १४·८ — उक्तो भक्षानुवाकः । ] सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽध ऐन्द्राग्नाय ॥

## ८०. अच्छावाकचमसप्रचारः

बौधायनश्रौ०—

[ ७·१५ ]— अथैषोऽच्छावाकोऽग्रेण सद आस्ते । तस्मै महत् पुरोडाशशकलमादधदाह अच्छावाक वदस्व यत्ते वाद्यम् इति । स यत्राच्छावाकस्याभिजानाति उपो अस्मान् ब्राह्मणान् ब्राह्मणा ह्वयध्वम् इति तदाह होतरच्छावाको वा अयमुपहवमिच्छते तमुपह्वयस्व इति । तमृचा होतोपह्वयते । अथ प्राङ्आश्राह उन्नीयमानायानुब्रूह्यच्छावाकस्य चमसाध्वर्युन्नयस्वोभयतःशुक्रं कुरुत्व इति । स तथा करोति । अथ प्राङेत्याच्छावाकचमसमादायाश्राव्याह अच्छावाक यज इति । वषट्कृतानुवषट्कृते हुत्वा हरति भक्षम् । स यद्यस्मिन्नच्छावाक उपहवमिच्छत उपैवैनꣳ ह्वयते । नो त्वेव संभक्षयतः । सीदत्यस्य नाराशꣳस आप्यायितः । अथाह अच्छावाक सीद नेष्टः पत्नीमुदानयाग्नीदच्छावाकं मे सर्वं प्रब्रूतात् इति । सीदत्येषोऽच्छावाको जघनेन स्वं धिष्णियम् । आनयति नेष्टा पत्नीं पन्नेजनीरादाय प्रेह्युदेहि इत्येतेन निगदेन । अथैनां पूर्वया द्वारोपनिष्क्रमय्यापरया द्वारा सदः प्रपाद्य जघनेन नेष्टुर्धिष्णियमसंचरे सामपथे पन्नेजनीः सादयति वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो

---

1. एवं केषुचिल्लिखितपुस्तकेषु । मुद्रितपुस्तके नास्ति ।

देवेभ्यः पन्नेजनीः सादयामि यज्ञाय वः पन्नेजनीः सादयामि इति । अथाह आग्नीध्रः सन्नोऽच्छावाकोऽच्छावाक३ सन्नपुप पन्नेजनीरसीषदन् इति । एतस्मिन् काल आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति । यद्‌शना स्यात् पत्नी पत्नीशाले ॥

## ८२. ऋतुग्रहप्रचारः

**बौधायनश्रौ०—**

[७.१६]—अथर्तुपात्रे आददाते दक्षिणमेवाध्वर्युरुत्तरं प्रतिप्रस्थाता । अध्वर्युः पूर्वो वायव्येन द्रोणकलशाद् गृह्णाति उपयामगृहीतोऽसि मधवे त्वा जुष्टं गृह्णामि इति । अथ प्रतिप्रस्थाता गृह्णाति उपयामगृहीतोऽसि माधवाय त्वा जुष्टं गृह्णामि इति । ग्रहावादायोपनिष्क्रामतः । दक्षिणमेवाध्वर्युर्द्वार्बाहुं निश्रयमाण उपनिष्क्रामति । उत्तरं प्रतिप्रस्थाता द्वार्बाहुं निश्रयमाण उपरमति । [२५.२१– अथायं प्रतिप्रस्थातर्तुग्रहेष्वध्वर्योरुत्तरतःसेवी भवति। इतश्चामुतश्च यन्तं प्रतिप्रस्थाताध्वर्युं परिगृह्णीयात् । अथाध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् द्रवन् पात्रेण । सिद्धमत ऊर्ध्वम् । ] अथाध्वर्युराश्रावयति ओश्रावय, अस्तु श्रौषट्, ऋतुना प्रेष्य इति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यतेऽध्वर्युः । स गृह्णाति उपयामगृहीतोऽसि शुक्राय त्वा जुष्टं गृह्णामि इति । अथ प्रतिप्रस्थाताश्रावयति ओश्रावय, अस्तु श्रौषट्, ऋतुना प्रेष्य इति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता । स गृह्णाति उपयामगृहीतोऽसि शुचये त्वा जुष्टं गृह्णामि इति । अथाध्वर्युराश्रावयति ओश्रावय, अस्तु श्रौषट्, ऋतुना प्रेष्य इति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यतेऽध्वर्युः । स गृह्णाति उपयामगृहीतोऽसि नभाय त्वा जुष्टं गृह्णामि इति । अथ प्रतिप्रस्थाताश्रावयति ओश्रावय, अस्तु श्रौषट्, ऋतुना प्रेष्य इति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता । स गृह्णाति उपयामगृहीतोऽसि नभस्याय त्वा जुष्टं गृह्णामि इति । अथाध्वर्युराश्रावयति ओश्रावय, अस्तु श्रौषट्, ऋतुना प्रेष्य इति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यतेऽध्वर्युर्विपर्यस्य पात्रम् । स गृह्णाति उपयामगृहीतोऽसीषाय त्वा जुष्टं गृह्णामि इति । अथ प्रतिप्रस्थाताश्रावयति ओश्रावय, अस्तु श्रौषट्, ऋतुना प्रेष्य इति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता विपर्यस्य पात्रम् । स गृह्णाति उपयामगृहीतोऽस्यूर्जाय त्वा जुष्टं गृह्णामि इति । अथाध्वर्युराश्रावयति ओश्रावय, अस्तु श्रौषट्, ऋतुभिः प्रेष्य इति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यतेऽध्वर्युः । स गृह्णाति उपयामगृहीतोऽसि सहाय त्वा जुष्टं गृह्णामि इति । अथ प्रतिप्रस्थाताश्रावयति ओश्रावय, अस्तु श्रौषट्, ऋतुभिः प्रेष्य इति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता । स गृह्णाति उपयामगृहीतोऽसि सहस्याय त्वा जुष्टं गृह्णामि इति । अथाध्वर्युराश्रावयति ओश्रावय, अस्तु श्रौषट्, ऋतुभिः प्रेष्य इति । वषट्कृते जुहोति । निष्क्रामत्येव प्रतिप्रस्थाता । प्रपद्यतेऽध्वर्युर्विपर्यस्य पात्रम् । स गृह्णाति उपयामगृहीतोऽसि तपाय त्वा जुष्टं गृह्णामि इति । अथ प्रतिप्रस्थाताश्रावयति ओश्रावय, अस्तु श्रौषट्, ऋतुभिः प्रेष्य इति । वषट्कृते जुहोति । निष्क्रामत्येवाध्वर्युः । प्रपद्यते प्रतिप्रस्थाता विपर्यस्य पात्रम् । तमाह प्रतिप्रस्थातरपैतेन पात्रेण रम इति । अथाध्वर्युराश्रावयति ओश्रावय, अस्तु श्रौषट्, ऋतून् प्रेष्य इति । अध्वर्यू यजतम् इत्याह प्रशास्ता । होतरेतद्यज इत्याहाध्वर्युः । वषट्कृते जुहोति । सोऽत्रैवासीनं प्रतिप्रस्थातारमनुप्रपद्यते । प्रतिप्रस्थातात्र पूर्वो गृह्णाति उपयामगृहीतोऽसि तपस्याया त्वा जुष्टं गृह्णामि इति । अथाध्वर्युर्गृह्णाति उपयामगृहीतोऽसि संसर्पोऽस्यंहस्पत्याय त्वा जुष्टं गृह्णामि इति । ग्रहावादायोपनिष्क्रामतः । दक्षिणमेवाध्वर्युर्द्वार्बाहुं निश्रयमाण उपनिष्क्रामति । उत्तरं

प्रतिप्रस्थाता। अत्र[1] प्रतिप्रस्थाताश्रावयति[1] ओश्रावय, अस्तु श्रौषट्, ऋतुना प्रेष्य इति। गृहपते यज इत्याह प्रशास्ता। होतरेतद्यज इत्याह गृहपतिः। वषट्कृते सहोभौ जुहुतः। [२१·२१–किंदेवत्या उ खल्वृतुयाजा भवन्तीति। ऋतुदेवता इत्येनदेकम्। अथापरम्। इन्द्रꣳ होता यजति। मरुतः पोता यजति। ग्नाः नेष्टा यजति। अग्निमाग्नीध्रो यजति। इन्द्रं ब्राह्मणाच्छꣳसी यजति। मित्रावरुणौ मैत्रावरुणः। देवं द्रविणोदां चत्वारः। अश्विनाध्वर्यू अध्वर्यू। अग्निं गृहपतिं गृहपतिः। ]

## ८४. ऐन्द्राग्नग्रहग्रहणम्

बौधायनश्रौ०—

[७·१६]—अथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य सꣳस्रावमवनयति। तमाह प्रतिप्रस्थातरेतेन पात्रेणैन्द्राग्नं ग्रहं गृहाण इति। तेन प्रतिप्रस्थातैन्द्राग्नं ग्रहं गृह्णाति द्रोणकलशात् परिप्लुना पात्रेण इन्द्राग्नी आगतꣳ सुतम् इत्यनुद्रुत्य उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वा जुष्टं गृह्णामि इति। [२१·२०–ऐन्द्राग्नस्य ग्रहण इति॥ सूत्रमाचार्ययोः। अत्रो ह स्माह दीर्घवात्स्यो मुख्येनैनं पात्रेण गृह्णीयादिति॥ ] परिमृज्य सादयति एष ते योनिरिन्द्राग्निभ्यां त्वा इति। अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रैतत् पात्रꣳ संभक्षयति ऋतुना पीतस्य इति। होत्रा पोत्रा नेष्ट्राग्नीधा ब्राह्मणाच्छꣳसिना मैत्रावरुणेनेति। अथ विपर्यस्य पात्रꣳ होत्रैव चतुः संभक्षयति ऋतुभिः पीतस्य इति। होत्रा पोत्रा नेष्ट्राच्छावाकेनेति। अथ विपर्यस्यैव पात्रꣳ होत्रैव द्विः संभक्षयति ऋतुना पीतस्य इति॥

## ८५. आज्यशस्त्रम्

बौधायनश्रौ०—

[७·१७]—अथ होतारं विपृच्छति प्रणवमुपाꣳशुशꣳसꣳ शꣳसिष्यसी३ विग्राहा३म् इति। स यथैनꣳ होता प्रत्याह तच्छ्रुत्वा निगृह्य पात्रं पराङावर्तते। इडा देवहूः इति यावदेतस्य यजुषः पर्याप्नोति तावज्जपति। [१४·११—आर्त्विज्यं वा करिष्यञ्छस्त्रं वा प्रतिगरिष्यन्नेतद्यजुर्जपति इडा देवहूः इति। प्रियो हैवार्त्विज्यस्य भवति। प्रश्नꣳ संव्याख्यास्यन्नेतद्यजुर्जपन् सभां प्रपद्यते। अभि हैव तं प्रश्नं जयति। ] अभ्येनमाह्वयते होता। प्रत्याह्वयतेऽध्वर्युः। शꣳसति। प्रतिगृणाति। यदुपाꣳशु शꣳसति तदुपाꣳशु प्रतिगृणाति। यदुच्चैः शꣳसति तदुच्चैः प्रतिगृणाति संततं वा विग्राहं वा [१४·१०—अथ वै भवति यद्वै होताध्वर्युमभ्याह्वयत आज्यमस्मिन् दधाति तद्यन्नापहनीत पुरास्य संवत्सराद् गृह आ वेवीरञ्छोꣳसा मोद इवेति प्रत्याह्वयत इति। सोऽभ्याहूतः शोꣳसा मोद इवेति प्रत्याह्वयते। तेनैव तद्रूप हत इति ब्राह्मणम्। अथ वै भवति यथा वा आयतां प्रतीक्षत एवमध्वर्युः प्रतिगरं प्रतीक्षते यदभिप्रतिगृणीयाद् यथायतया समृच्छते तादृगेव तद् यदर्धर्चाल्लुप्येत यथा धावद्भ्यो हीयते तादृगेव तत्। तदाहुर्नाशाप्रतिगरी स्यात्। आशाप्रतिगरी ह वा अभि वा प्रतिगृणात्यर्धर्चाद्वा लुप्यते। प्रणौतीत्येव प्रणौयादपानितीत्येवापान्यात्। य एवं विद्वान् प्रतिगृणात्यन्नाद एव भवत्यास्य प्रजायां वाजी जायत इति ब्राह्मणम्। अथ वै भवतीयं वै होतासावध्वर्युर्यदासीनः शꣳसत्यस्या एव तद्धोता नैत्यास्त इव हीयमथो इमामेव

1. एवं लिखितपुस्तकेषु। 'प्रतिप्रस्थातात्र श्रावयति' इति मुद्रितपुस्तकपाठः।

तेन यजमानो दुहे यत्तिष्ठन् प्रतिगृणात्यमुष्या एव तदध्वर्युर्नैति। तिष्ठतीव ह्यसावथो अमुमेव तेन यजमानो दुहे यदासीनः शंसति तस्मादितःप्रदानं देवा उप जीवन्ति यत्तिष्ठन् प्रतिगृणाति तस्मादमुतःप्रदानं मनुष्या उप जीवन्ति यत् प्राङासीनः शंसति प्रत्यङ् तिष्ठन् प्रतिगृणाति तस्मात् प्राचीनꣳ रेतो धीयते प्रतीचीः प्रजा जायन्त इति ब्राह्मणम्। अथ वै भवति यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभि प्र वर्तयति। पराङा वर्तत इति। सोऽभ्याहूतः पराङावर्तते। वज्रमेव तन्नि करोतीति ब्राह्मणम्।] [ '१४.९—शस्त्रे शस्त्रस्य दोहं वाचयति शस्त्रस्य शस्त्रमस्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यात् इति।[1]]

## ८६. ऐन्द्राग्नग्रहप्रचारः वैश्वदेवग्रहग्रहणं च

बौधायनश्रौ०—

१. [७.१७]—प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतमैन्द्राग्नं ग्रहम्। अनूद्यच्छन्ते नाराशंसान्। [२१.२२—नाराशंसमुपहूतꣳ हुनादेवेनꣳ होतृचमसाद् गृह्णीयात्। द्विनाराशंसं प्रातःसवनं च माध्यन्दिनसवनं चैकनाराशंसं तृतीयसवनम्।] अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, उक्थशा यज सोमस्य इति। [१४.१३-प्रजापतिर्देवासुरानसृजतेति ब्राह्मणमेव।] वषट्कृतानुवषट्कृते द्विर्जुहोति। [२१.२१-क उ खल्वैन्द्राग्नस्य स्तोत्रभक्तिर्भवतीति। बहिष्पवमान इत्येव ब्रूयात्। ये के चन ग्रहा अस्तोत्राः पवमान एव तेषाꣳ स्तोत्राणि भवन्ति।] तथैव द्विर्द्विर्नाराशंसाननुप्रकम्पयन्ति। [२१.२०—नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बोधायनः ॥ नानुप्रकम्पयेरन्निति शालीकिः ॥ नैनानुपोद्यच्छेरंश्चेत्यौपमन्यवः ॥] एतत् पात्रं नाराशंसा अन्वायन्ति। अनुसवनभक्षः इन्द्राग्निभ्यां पीतस्य इति। होता चैवाध्वर्युश्चैतत् पात्रꣳ संभक्षयतो नराशंसपीतेन नाराशंसान् नराशंसपीतस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति। होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसान्। हिन्व मे इत्यात्मानं प्रत्यभिमृशन्ते। आप्याययन्ति चमसान् आ प्यायस्व समेतु ते इति। सीदन्ति नाराशंसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो वैश्वदेवाय।

२. [७.१७]—अथ प्राङेत्य शुक्रपात्रमाददान आह उन्नेतर्यदेमं वैश्वदेवं ग्रहं गृह्णाम्यथोदञ्चꣳ राजानं पूतभृतमभि संनयताद् दशाभिर्द्रोणकलशं मृष्ट्वा न्युब्जतात् इति। स तथा करोति। स शुक्रपात्रेण वैश्वदेवं कलशाद् गृह्णाति ओमासश्चर्षणीधृतः इत्यनुद्रुत्य उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामि इति। परिमृज्य सादयति एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः इति। [ १४.२—अथ वै भवति यो वा अध्वर्योः प्रतिष्ठां वेद प्रत्येव तिष्ठति यतो मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठन्ना श्रावयेदिति। स यतो मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठन्नाश्रावयति। एषा वा अध्वर्योः प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठतीति ब्राह्मणम्। अथ वै भवति यदभिक्रम्य जुहुयात् प्रतिष्ठाया इयात् तस्मात् समानत्र तिष्ठता होतव्यं प्रतिष्ठित्या इति। तदेतदन्यत्र हविर्यज्ञेभ्यः। अभिक्रामं जुहोतीति हविर्यज्ञेषु भवति।] [ २३.५-अभिक्रामं जुहोतीति ॥ कियति नु खल्वेतदुक्तं भवतीति ॥ पञ्च प्रयाजा इति बोधायनः ॥ यत्प्राक् शालाया इति

---

१. शस्त्रदोहवाचनानन्तरं स्तुतशस्त्रयोरभ्यासं वाचयति इन्द्रियावन्तो वनामहे इति। द्र. पृ. ५६०।

शालीकिः ॥ ] [ १९·२ -अथ वै भवति यो वा अध्वर्योः स्वं वेद स्ववानेव भवति स्रुग्वा अस्य स्वं वायव्यमस्य स्वं चमसोऽस्य स्वं यद्वायव्यं वा चमसं वानन्वारभ्याश्रावयेत स्वादियादिति । स वायव्यं चैव चमसं चान्वारभ्याश्रावयति । स्वादेव नैतीति ब्राह्मणम् । अथ वै भवति यो वै सोममप्रतिष्ठाप्य स्तोत्रमुपाकरोत्यप्रतिष्ठितः सोमो भवत्यप्रतिष्ठितः स्तोमोऽप्रतिष्ठितान्युक्थान्यप्रतिष्ठितो यजमानोऽप्रतिष्ठितोऽध्वर्युर्वायव्यं वै सोमस्य प्रतिष्ठा चमसोऽस्य प्रतिष्ठा सोमः स्तोमस्य स्तोम उक्थानां ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति । उन्नयनꣳ ह्येव चमसस्य ग्रहणम् । स ग्रहं वैव गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति । प्रत्येव सोमꣳ स्थापयति प्रति स्तोमं प्रत्युक्थानि प्रति यजमानस्तिष्ठति प्रत्यध्वर्युरिति ब्राह्मणम् । ]

## ८७. प्रथमाज्यस्तोत्रम्

**बौधायनश्रौ०—**

[ ७·१७ ]—अथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ्ङ् हुत्वा स्तोत्रमुपाकरोति । [ २९·४—स्तोत्रोपाकरणप्रभृत्या होमाद्वाचं यच्छेत् । ] स्तुवते वैश्वदेवाय । होत्रे एषोत्तमा इति प्राहुः ॥

## ८८. प्रउगशस्त्रम्

**बौधायनश्रौ०—**

[ ७·१७ ]-होतुः कालात् पराङावर्ततेऽध्वर्युः । अभ्येनमाह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । शꣳसति । प्रतिगृणाति ॥

## ८९. वैश्वदेवग्रहप्रचारः मैत्रावरुणग्रहग्रहणं च

**बौधायनश्रौ०—**

१. [ ७·१७ ]—प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं वैश्वदेवं ग्रहम् । अनूद्यच्छन्ते नाराशꣳसान् । अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, उक्थशा यज सोमस्य इति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशꣳसाननुप्रकम्पयन्ति । एतत् पात्रं नाराशꣳसा अन्वायन्ति । अनुसवनभक्षः विश्वैर्देवैः पीतस्य इति । होता चैवाध्वर्युश्चैतत् पात्रꣳ संभक्षयतो नराशꣳसपीतेन नाराशꣳसान् नराशꣳसपीतस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान् । हिन्व मे इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान् । सर्वभक्षा मार्जयन्ते । अथाह प्रतिप्रस्थातरिमे चर्तुपात्रे एतच्च शुक्रपात्रं मार्जालीये मार्जयित्वा पात्रेष्वपिसृज इति । स तथा करोति ।

२. [ ७·१७–१८ ]—अथ प्राङायन्नाह मैत्रावरुणस्य चमसमनून्नयध्वमुन्नेतः सोमं प्रभावय इति । मैत्रावरुण चमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान् । समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्ति । अथादत्त उक्थ्यस्थाल्या औपशयं पात्रम् । तस्मिन्नेतस्य राक्षस्तृतीयवेलां गृह्णाति य उक्थ्यस्थाल्यां भवति उपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं यज्ञस्यायुषे

मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामि इति। पुनर्हविरसि इति उक्थ्यस्थालीं प्रत्यभिमृशति। परिमृज्य सादयति एष ते योनिर्मित्रावरुणाभ्यां त्वा इति॥

## १०. द्वितीयाज्यस्तोत्रम्

**बौधायनश्रौ०—**

[ ७.१८ ]—अथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति। स्तुवते। मैत्रावरुणाय एषोत्तमा इति प्राहुः॥

## ११. मैत्रावरुणशस्त्रम्

**बौधायनश्रौ०—**

[ ७.१८ ]—मैत्रावरुणस्य कालात् पराङावर्ततेऽध्वर्युः। अभ्येनमाह्वयते मैत्रावरुणः। प्रत्याह्वयतेऽध्वर्युः। शंसति। प्रतिगृणाति॥

## १२. मैत्रावरुणग्रहप्रचारः ऐन्द्रग्रहग्रहणं च

**बौधायनश्रौ०—**

१. [ ७.१८ ]—प्रसिद्धमुक्थं प्रतिगीर्य प्राडेत्योद्यच्छत एतं ग्रहम्। अनूद्यच्छन्ते चमसान्। अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, उक्थशा यज सोमानाम् इति। वषट्कृतानुवषट्कृते द्विर्जुहोति। तथैव द्विर्द्विः सर्वांश्चमसाञ्जुहोति। अथ प्रदक्षिणमावृत्य मैत्रावरुणस्य चमसे ग्रहस्य सꣳस्रावमवनयति हुतं त्वा हुतेऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्यः इति वा तूष्णीं वा। अत्रैवैतत् पात्रमुपनिधाय भक्षैः प्रत्यञ्च आद्रवन्ति। अनुसवनभक्षः मित्रावरुणाभ्यां पीतस्य इति। मैत्रावरुणचमसमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसान्। हिन्व मे इत्यात्मानं प्रत्यभिमृशन्ते। नाप्याययन्ति चमसान्। सर्वभक्षा मार्जयन्ते।

२. [ ७.१८-१९ ]—अथाह प्रतिप्रस्थातर्ग्रहो ते प्रचर इति। तच्छ्रुत्वा प्रतिप्रस्थाता प्राङायन्नाह ब्राह्मणाच्छꣳसिनश्चमसमनून्नयध्वमुन्नेतः सोमं प्रभावय इति। ब्राह्मणाच्छꣳसिनश्चमसमेव प्रथममुन्नयन्ति। यथोपपादमितरान्। समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्ति। अथादत्त उक्थ्यस्थाल्या औपशयं पात्रम्। तस्मिन्नेतस्य राज्ञोऽर्धवेलां गृह्णाति य उक्थ्यस्थाल्यां भवति उपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्राय त्वा जुष्टं गृह्णामि इति। पुनर्हविरसि इत्युक्थ्यस्थालीं प्रत्यभिमृशति। परिमृज्य सादयति एष ते योनिरिन्द्राय त्वा इति॥

## १३. तृतीयाज्यस्तोत्रम्

**बौधायनश्रौ०—**

[ ७.१९ ]—अथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति। स्तुवते। ब्राह्मणाच्छꣳसिने एषोत्तमा इति प्राहुः॥

## ९४. ब्राह्मणाच्छंसिशस्त्रम्

**बौधायनश्रौ०—**

[ ७.१९ ]—ब्राह्मणाच्छꣳसिनः कालात् पराङावर्तते प्रतिप्रस्थाता । अभ्येनमाह्वयते ब्राह्मणाच्छꣳसी । प्रत्याह्वयते प्रतिप्रस्थाता । शꣳसति । प्रतिगृणाति ॥

## ९५. ऐन्द्रग्रहप्रचारः ऐन्द्राग्नग्रहग्रहणं च

**बौधायनश्रौ०—**

१. [ ७.१९ ]—प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं ग्रहम् । अनूद्यच्छन्ते चमसान् । अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, उक्थशा यज सोमानाम् इति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वाꣳश्चमसाञ्जुहोति । अथ प्रदक्षिणमावृत्य ब्राह्मणाच्छꣳसिनश्चमसे ग्रहस्य सꣳस्रावमवनयति हुतं त्वा हुतेऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्यः इति वा तूष्णीं वा । अत्रैवैतत् पात्रमुपनिधाय भक्षैः प्रत्यञ्च आद्रवन्ति । अनुसवनभक्षः इन्द्रेण पीतस्य इति । ब्राह्मणाच्छꣳसिनश्चमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान् । हिन्व मे इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान् । सर्वभक्षा मार्जयन्ते ।

२. [ ७.१९-२० ]—अथ प्राङायन्नाह अच्छावाकस्य चमसमनून्नयध्वमुन्नेतः सर्वश एव राजानमुन्नय मातिरीरिचः प्रतिप्रस्थातरुपैतेन ग्रहेण रमैहि यजमान इति । पूर्वया द्वारा हविर्धानं प्रपाद्याथैतच्चर्म फलकयोः प्राचीनग्रीवमुत्तरलोमोपस्तृणाति यज्ञ प्रतितिष्ठ इति वा तूष्णीं वा । तस्मिन् संमुखान् ग्राव्णः कृत्वा दक्षिणस्य हविर्धानस्यान्तरेणेषे राजानमुपावहरति हृदे त्वा मनसे त्वा, सोम राजन्नेह्यव रोह इति द्वाभ्याम् । अथैनमुद्गातृभ्यः प्राहुः । तस्मिꣳस्तच्चेष्टन्ति यत्ते विदुः । अथोदुञ्ज्याधवनीयमर्धं वसतीवरीणामवनयति । अर्धमेकधनानाम् । पुरोऽक्षं वसतीवरीः सादयति । पश्चादक्षमेकधनान् । अच्छावाकचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान् । सर्वश एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्ति । अथादत्त उक्थ्यस्थाल्या औपशयं पात्रम् । तस्मिन्नेतꣳ सर्वश एव राजानं गृह्णाति य उक्थ्यस्थाल्यां भवति उपयामगृहीतोऽसि देवेभ्यस्त्वा देवायुवमुक्थ्येभ्य उक्थायुवं यज्ञस्यायुष इन्द्राग्निभ्यां त्वा जुष्टं गृह्णामि इति । नात्र पुनर्हविरसि इत्युक्थ्यस्थालीं प्रत्यभिमृशति । दशाभिरेवैनां मृष्ट्वा न्युब्जति । परिमृज्य सादयति एष ते योनिरिन्द्राग्निभ्यां त्वा इति ॥

## ९६. चतुर्थाज्यस्तोत्रम्

**बौधायनश्रौ०—**

[ ७.२० ]—अथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते । अच्छावाकाय एषोत्तमा इति प्राहुः ॥

## ९७. अच्छावाकशस्त्रम्

**बौधायनश्रौ०—**

[ ७.२० ]—अच्छावाकस्य कालात् पराङावर्तते प्रतिप्रस्थाता । अभ्येनमाह्वयतेऽच्छावाकः । प्रत्याह्वयते प्रतिप्रस्थाता । शꣳसति । प्रतिगृणाति ॥

## ९८. ऐन्द्राग्नग्रहप्रचारः

बौधायनश्रौ०—

[ ७.२० ]—प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं ग्रहम् । अनूद्यच्छन्ते चमसान् । अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, उक्थशा यज सोमानाम् इति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विः सर्वांश्चमसाञ्जुहोति । अथ प्रदक्षिणमावृत्याच्छावाकस्य चमसे ग्रहस्य संस्रावमवनयति हुतं त्वा हुतेऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्यः इति वा तूष्णीं वा । अत्रैवैतत् पात्रमुपनिधाय भक्षैः प्रत्यञ्च आद्रवन्ति । अनुसवनभक्षः इन्द्राग्निभ्यां पीतस्य इति । अच्छावाकचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान् । हिन्व मे इत्यात्मानं प्रत्यभिमृशन्ते । नाप्याययन्ति चमसान् । सर्वभक्षा मार्जयन्ते । अथ उक्थशाः इत्याह प्रातःसवनं प्रतिगीर्य । [ १४.९–१०—अथ वै भवति यद्वै होताध्वर्युमभ्याह्वयते वज्रमेनमभि प्र वर्तयत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्येति । स उक्थमुक्थं वैव प्रतिगीर्योक्थशा इत्याह सवनंसवनं वा ] [ २३.५—स उक्थमुक्थं वैव प्रतिगीर्योक्थशा इत्याह सवनंसवनं वेति ॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः ॥ ] [ १४.१०-उक्थं वाचीत्याह माध्यंदिनं सवनं प्रतिगीर्य । उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य । सप्तैतान्यक्षराणि सप्तपदा शाकरी शाकरो वज्रो वज्रेणैव तृतीयसवने वज्रमन्तर्धत्त इति ब्राह्मणम् । अथ वै भवति ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यो यथासवनं प्रतिगरे छन्दांसि संपादयेत् तेजः प्रातःसवन आत्मन् दधीतेन्द्रियं माध्यंदिने सवने पशूंस्तृतीयसवन इत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्य । उक्थं वाचीत्याह माध्यंदिनं सवनं प्रतिगीर्य । उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य । सप्तैतान्यक्षराणि सप्तपदा शाकरी शाकराः पशवो जागतं तृतीयसवनं तृतीयसवन एव प्रतिगरे छन्दांसि संपादयत्यथो पशवो वै जगती पशवस्तृतीयसवनं पशूनेव तृतीयसवन आत्मन् धत्त इति ब्राह्मणम् । प्रशास्तः प्रसुहि इति । सर्पत इत्याह प्रशास्ता । संतिष्ठते प्रातःसवनम् ॥

## माध्यंदिनसवनम्

## ९९. सोमाभिषवः

बौधायनश्रौ०—

[ ८.१ ]—प्रसर्पन्ति माध्यंदिनाय सवनाय देवी द्वारौ इत्यत एवोर्ध्वं । संप्रसृप्तान् विदित्वाध्वर्युः प्राङायन्नाह अभिषोतार एत ह्वयत ग्रावस्तुतमेहि यजमान इति । पूर्वया द्वारा हविर्धानं प्रपाद्य होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य तासु तथैव[1] निग्राभ्यासु यजमानं वाचयति । तास्तथैव[1] यजमानाय संप्रदाय ग्रावाणमादत्तेऽन्यमुपांशुसवनात् । तं तथैव[1] प्राञ्चं प्रश्रित्य विस्रस्य राजानं ग्रावाणमभि मिमीते इन्द्राय त्वेन्द्राय त्वा इति । पञ्च कृत्वो यजुषा पञ्च कृत्वस्तूष्णीम् । दश कृत्वो मिमानः सर्वश एव राजानं मिमीते । अद्भिरभ्युक्ष्य ग्रावस्तुत उष्णीषं प्रय च्छति । अद्भिरेवाभ्युक्ष्याध्वर्योरावसथं वासो हरन्ति । तथा मितं राजानं होतृचमसी

१. द्रष्टव्यं पृ. ५५४ ।

-याभिरुपसृजति। तथा[1] संप्रयौति। तथा[1] तिरश्चर्मन् फलके अभिमृशति। [ २५·२२-तिरश्चर्मन् फलके ग्राव्णोद्वादयतीति। शुष्काभिषव इत्येतदाचक्षते। ] तथा[1] वृद्धीर्वाचयति। नात्रा१शून् सचते। घोषवन्त एवाभिषुण्वन्ति इहा३ इहा३ इहा३ इति। तदेव संहिनयन्ति इहा३ इह इहा३ इह इहा३ इह इति। अथ संभरणीये निष्क्रीडयन्ति इहा३ इहा३ इहा३ इति। अथैन१ सुसंभृत१ संभरण्या१ संभृत्योन्नेत्र उत्प्रयच्छति। तमुन्नेताधवनीयेऽवनयति। एवमेव द्वितीयः पर्यायः संतिष्ठते। एवं तृतीयः। तृतीयस्य तृतीये बृहदुपयन्ति बृहद् बृहद् बृहद् इति। [ २१·२१-माध्यंदिनीयेऽभिषव इति॥ नव कृत्वो नव कृत्वोऽभिषुत्य निग्राभमुपेयुरिति बोधायनः॥ अपरिमितमिति शालीकिः॥ ] ऋजीषमन्ततो दशापवित्रेण परिवेष्ट्योन्नेत्र उत्प्रयच्छति। तदुन्नेताधवनीये विक्षाल्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणेषे उपातिहृत्य[2] चर्मणि निदधाति। तस्मि१स्तथैव संमुखान् ग्राव्णः कृत्वा चतुर्धर्तदृजीषं ग्रावमुखेभ्यो ऽध्यपोहति। अथोद्गाता[3] वा प्रस्तोता वा दक्षिणस्य हविर्धानस्य पश्चादक्षमुपसृप्य प्राञ्चं ग्रावसु द्रोणकलशमभ्यूहति॥

## १०१. ग्रहग्रहणम्

बौधायनश्रौ०—

[ ८·१-२ ]—तस्मि१स्तथैवोदीचीनदशं[4] दशापवित्रं वितत्य प्रसिद्ध१ शुक्रामन्थिनौ ग्रहौ गृह्णाति। अथर्तुपात्राभ्यां द्वौ मरुत्वतीयौ ग्रहौ गृह्णाति मरुत्वन्तं वृषभं वावृधानम्, इन्द्र मरुत्व इह पाहि सोमम् इति द्वाभ्याम्। [ २१·२१-मरुत्वतीययोर्ग्रहण इति॥ सूत्र१ शालीकेः॥ अत्रो ह स्माह बोधायन उपरिष्टादेवाग्रयणाद् गृह्णीयादिति। ग्राह्यलोको ह्येष भवतीति॥ ] अथोपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति। तं तथैव[5] त्रिरभिहिङ्कृत्य परिमृज्य सादयति। तथोक्थ्यं[6] गृह्णाति। उक्थ्येन राजानं परिदधाति। तथोपर्यधे[6] द्रोणकलशे परिप्लु पात्रं प्रास्य द्रप्सानुनुमन्त्रयते द्रप्सश्चस्कन्द, यस्ते द्रप्सो, यो द्रप्सो, यस्ते द्रप्सः इति। तथोन्नेतारमाह अरिक्तं पूतभृतं कुरु पवमानस्य ग्रहान् ग्रहीष्यामि इति। तथारिक्ते[6] पूतभृति पवमानस्य ग्रहान् गृह्णाति उपयामगृहीतोऽसीन्द्राय त्वा इति द्रोणकलशमभिमृशति। इन्द्राय त्वा इत्याधवनीयम्। इन्द्राय त्वा इति पूतभृतम्। तथा[6] उन्नेतः इत्याह प्राञ्च१ राजानं पूतभृतमभि संपवयताद् दशाभिराधवनीयं मृष्ट्वा न्युब्जतात् इति। स तथा करोति॥

## १०२. माध्यंदिनपवमाननिःसर्पणम्

बौधायनश्रौ०—

[ ८·२ ]—तथाप उपस्पृश्य[7] बर्हिषी आदायोपनिःसर्पति। तेषु तथैव[7] समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति। विश्वे देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जह्युः। आयुष्मन्तः प्रियमेषां वदन्तो वयं देवाना१ सुमतौ स्याम स्वाहा इत्येतयाध्वर्यू जुहुतः। [ १४·५-माध्यंदिने पवमाने तथैव[7] समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्

---

१. द्रष्टव्यं पृ. ५५५। २. एवं केषुचिल्लिखितपुस्तकेषु। 'उपावहृत्य' इति मुद्रितपुस्तकपाठः। ३. एवं केषुचिल्लिखितपुस्तकेषु। 'तथोद्गाता' इति मुद्रितपुस्तकपाठः। ४. द्रष्टव्यं पृ. ५५६। ५. द्रष्टव्यं पृ. ५५७। ६. द्रष्टव्यं पृ. ५५८। ७. द्रष्टव्यं पृ. ५५९।

द्वितीये सवने न जह्युः । आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाꣳ सुमती स्याम स्वाहा इति । ] यथावेदमितरे जुह्वति । अथ प्रदक्षिणमावृत्य सदोऽभि पवमानꣳ सर्पन्ति । तथा[1] सदसि यथायतनमुपविशन्ति । तथोद्गात्रे[1] वा प्रस्तोत्रे वा बर्हिषी प्रयच्छति ऋक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्यै इति वा तूष्णीं वा । तथोपाकरणं[1] जपति वायुर्हिंकर्ता इति ॥

## १०३. माध्यंदिनपवमानस्तोत्रम्

बौधायनश्रौ०—

[ ८.२ ]—स एव पञ्चदशो माध्यंदिनः पवमानो भवति । तस्याष्टम्यां प्रस्तुतायां वाचयति सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वा रभे स्वस्ति मा सं पारय इति । [ १४.६—माध्यंदिने पवमानेऽष्टम्यां प्रस्तुतायां वाचयति सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वा रभे स्वस्ति मा सं पारय इति ॥ ] [ २१.२१-अष्टम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बोधायनस्य ॥ यस्यामेव कस्यांचिद् वाचयेदिति शालीकिः ॥ ] अत्र चतुर्होतारं व्याचष्टे ॥

## १०४. दधिघर्मप्रचारः

बौधायनश्रौ०—

[ ८.२-३ ]—उद्द्रुते साम्नि संप्रैषमाह अग्नीदग्नीन् विहर बर्हि स्तृणाहि पुरोडाशाꣳ अलंकुरु प्रतिप्रस्थातर्दधिघर्माय दध्याहर इति । यथासंप्रैषं तौ कुरुतः । अथाप[2] उपरपृष्ट्याह एहि यजमान इति । पूर्वया द्वारा हविर्धानं प्रपाद्य तथा[3] समस्तꣳ राजानमुपतिष्ठते । तथाव-काशैश्चरति[3] । [ १४.८—प्रतिष्ठायै इत्यृतुपात्रे माध्यंदिने सवने । ] तथा[3] प्रचरण्यां नव कृत्वो गृह्णीते । तथैव[3] आग्नीध्र आग्नीध्रीयाद् धिष्णियादनुपूर्वं धिष्णि-येष्वङ्गारान् विहरति । तथा[3] पुरस्तात्प्रत्यङ्ङासीनो विहृतान् धिष्णियान् व्याघारयति । तथोत्तरस्य[3] हविर्धानस्य चुबुके प्रचरणीꣳ सादयति । तथा[3] सांकाशिनेन पथा पृष्ठ्याꣳ स्तृणाति संततां गार्हपत्यादाहवनीयात् । अथान्तरेण हविर्धाने उपविश्य दधिघर्माय दधि याचति । तदाहृतमवेक्षते ज्योतिरसि वैश्वानरं पृश्न्यै दुग्धम् इति । बर्हिषी अन्तर्धाय कꣳसे वा चमसे वा गृह्णाति यावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः । तावन्त इन्द्र ते ग्रहꣳ सहोर्जा गृह्णाम्यस्तृतम् इति । [ २१.२१-दधिघर्मस्य ग्रहण इति ॥ सूत्रं बोधायनस्य ॥ आग्नीध्र एनं गृह्णीयादिति शालीकिः ॥ परिश्रित्यो-भयतः शान्तिं कृत्वाग्नीध्र एवेत्यौपमन्यवः ॥ ] [ १४.९—उक्तो दधिघर्मः । ] अपोद्धृत्य बर्हिषी अथैनꣳ श्रीणाति वाक् च त्वा मनश्च श्रीणीतां प्राणश्च त्वापानश्च श्रीणीतां चक्षुश्च त्वा श्रोत्रं च श्रीणीतां दक्षश्च त्वा बलं च श्रीणीतामोजश्च त्वा सहश्च श्रीणीतामायुश्च त्वा जरा च श्रीणीतामात्मा च त्वा तनूश्च श्रीणीताꣳ शृतोऽसि शृतंकृतः शृताय त्वा शृतेभ्यस्त्वा शृतं कृणु इति । अथाह होतर्वदस्व यत्ते वाद्यम् इति । अथैनमादायोपोत्तिष्ठन्नाह श्रातꣳ हविः इति । अत्याक्रम्याश्राव्याह दधिघर्मस्य यज इति । वषट्कृते जुहोति यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः । यो देवानां देवतमस्तपोजास्तस्मै त्वा तेभ्यस्त्वा स्वाहा इति । अनुवषट्कृते

१. द्रष्टव्यं पृ. ५५९ । २. एवं केषुचिल्लिखितपुस्तकेषु । 'तथाप' इति मुद्रितपुस्तकपाठः ।
३. द्रष्टव्यं पृ. ५६०–६१ ।

हुत्वा हरति भक्षम् । [ २१.२१—दधिघर्मस्य चर्याया इति ॥ उपांशु चरेदिति बोधायनः ॥ उच्चैरिति शालीकिः ॥ ] स यावन्तः प्रवर्ग्यस्यर्त्विजस्तेषूपहवमिष्ट्वा यजमान एव प्रत्यक्षं भक्षयति मयि त्यदिन्द्रियं महन्मयि दक्षो मयि क्रतुः । मयि धायि सुवीर्यं त्रिशुग्घर्मो विभातु मे । आकूत्या मनसा सह विराजा ज्योतिषा सह । यज्ञेन पयसा सह ब्रह्मणा तेजसा सह । क्षत्रेण यशसा सह सत्येन तपसा सह । तस्य दोहमशीमहि तस्य सुम्नमशीमहि । तस्य भक्षमशीमहि तस्य त इन्द्रेण पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति । [ ९.१८—प्रवर्ग्यवति सोमे दधिघर्मं भक्षयन्ति भूर्भुवः सुवर्मयि त्यदिन्द्रियं महत् इत्येतेनानुवाकेन । ] [ २१.२१—दधिघर्मस्य भक्षण इति ॥ सूत्रं शालीकेः ॥ अत्रो ह स्माह बोधायनोऽवघ्रभक्षणेनैवेतरे भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदरण्येऽनुवाक्येन मन्त्रेणेति ॥ ] निर्णिज्य पात्रं प्रयच्छति । [ २५.२२—क उ खलु प्रवर्ग्यः सुत्यमहरनुसमेतीति । दधिघर्म इत्येव ब्रूयात् ॥ ]

## १०८. सवनीयपुरोडाशयागः[1]

**बौधायनश्रौ०—**

[ ८.६-४ ]- तथा सवनीयान् पुरोडाशान् याचति । [ २५.२१—क उ खलु माध्यंदिनीयाः सवनीया निरुप्यन्त इति । क्षुल्लकवैश्वदेवस्य स्तोत्र[2] इत्येव ब्रूयात् । ] तेषां तथैव समवद्यन्नाह माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहि इति । पूर्वार्धादवदायापरार्धादवद्यति । अभिघारयति । प्रत्यनक्ति । तथोपभृति स्विष्टकृते सर्वेषां सकृत्सकृदुत्तरार्धादवद्यति । द्विरभिघारयति । न प्रत्यनक्ति । अत्याक्रम्याश्राव्याह माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशान् प्रस्थितान् प्रेष्य इति । वषट्कृते जुहोति । तथा समावपमान आह अग्नयेऽनुब्रूहि इति । आश्राव्याह अग्नये प्रेष्य इति । वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति । तथोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा तथैव पात्र्यामिडां समवधाय प्रतीचः पुरोडाशान् प्रहिणोति । अनु हैके संयन्ति पशव इडेति वदन्तः । अथ प्राङायन्नाह उन्नीयमानेभ्योऽनुब्रूहि होतुश्चमसमनून्नयध्वमुभयतःशुक्रान् कुरुध्वमच्छावाकस्य चमसाध्वर्योऽपि त्वमुन्नयस्व प्रतिप्रस्थातश्चतुर्भिर्मा शकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपलम्भस्व इति । यथासंप्रैषं ते कुर्वन्ति ॥

## ११०. शुक्रामन्थिप्रचारः[3]

**बौधायनश्रौ०—**

[ ८.४ ]—समानं कर्माश्रावणात् । आश्रावण एव व्येति । अथाध्वर्युः पुरस्तात्प्रत्यङ् तिष्ठन्नाश्रावयति ओश्रावय, अस्तु श्रौषट्, माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान् प्रस्थितान् प्रेष्य इति । वषट्कृते सहोभौ जुहुतः स प्रथमः संकृतिर्विश्वकर्मा इति । वषट्कृतानुवषट्कृते द्विर्जुहुतः । तथैव द्विर्द्विः सर्वांश्चमसाञ्जुहति । तथा संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मणः इति । तथा प्रदक्षिणमावृत्य होतृचमसे ग्रहस्य संस्रावमवनयति हुतं स्वा हुतेऽवनयाम्यूर्जस्वन्तं देवेभ्यो मधुमन्तं मनुष्येभ्यः इति वा तूष्णीं वा । तथा प्रतिप्रस्थातोत्तरार्ध आहवनीयस्य मन्थिनः संस्रावं जुहोति । तथाप उपस्पृश्य शुक्रपात्रं च मन्थिपात्रं च खरे यथायतनं सादयति । यन्त्येते महर्त्विजां चमसाः ॥

१. द्रष्टव्यं पृ. ५६४ । २. द्रष्टव्यं पृ. ५७३ । ३. द्रष्टव्यं पृ. ५६६ ।

## ११३. होत्रकचमसप्रचारः[1]

**बौधायनश्रौ०—**

[ ८.४ ]—तथैते होत्रकाणां चमसाध्वर्यवः सकृत्सकृद् द्रोणकलशादभ्युन्नीयोपावर्तन्ते । तेषां तथैव मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यज इति । वषट्कृतानुवषट्कृते द्विर्जुहोति । ब्रह्मन् यज, पोतर्यज, नेष्टर्यज, अच्छावाक यज, अग्नीद्यज इति । षड्ढोत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङुदुत्याग्रेण होतारमुपविशति अयाडग्नीत् इति । स भद्रमकः इत्याह होता यो नः सोमꣳ राजानं पाययिष्यति इति ॥

## ११४. सवनीयेडा[2]

**बौधायनश्रौ०—**

[ ८.४ ]—तथाप उपस्पृश्य होत्र इडामुपोद्यच्छन्ते । उपहूयमानायामिडायामुपप्रगृह्णन्ति चमसान् । उपहूतायामिडायामग्नीध आदधाति षडवत्तम् । प्राश्नन्ति । मार्जयन्ते ॥

## ११५. सवनमुखसोमभक्षणम्

**बौधायनश्रौ०—**

[ ८.४ ]—इडोपहूताꣳश्चमसान् भक्षयन्ति भक्षेहि माविश इति दीर्घभक्षमनुद्रुत्य-रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान् । हिन्व मे इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसान् आ प्यायस्व समेतु ते इति । सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधस्तृतीयाय मरुत्वतीयाय । एतस्मिन् काल आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति । यदशना स्यात् पत्नी पत्नीशाले ॥

## ११६. दक्षिणाः

**बौधायनश्रौ०—**

[ ८.५-६ ]—अथ दाक्षिणानि होष्यन् याचत्याज्यस्थालीꣳ सस्रुवाꣳ स्रुचं वासः तस्यैतस्य वसनस्यान्तमायां दशायां हिरण्यशल्कः प्रग्रथितो भवति । एतत् समादायाह एहि यजमान इति । उत्तरेणाग्नीध्रीयं परीत्योत्तरेण सदः परीत्य पूर्वया द्वारा शालां प्रपाद्य समन्वारब्धेष्वृत्विक्षु संप्रच्छन्नेषु गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा वसनस्यान्तꣳ स्रुग्दण्ड उपसंगृह्य सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यꣳ स्वाहा इति । ४.परं चतुर्गृहीतं गृहीत्वा गार्हपत्य एव जुहोति चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च

---

१. द्रष्टव्यं पृ. ५६७ । २. द्रष्टव्यं पृ. ५६८ ।

स्वाहा इति । अथाग्नीध्रं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा वसनस्यैवान्तं स्रुग्दण्ड उपसंगृह्य नयवत्यर्चाग्नीध्रे जुहोति अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम स्वाहा इति । अथ दिवं गच्छ सुवः पत इति हिरण्यं हुत्वोद्गृह्णाति । सृज्यन्ते दक्षिणा दक्षिणापथेनान्तरेण सदश्च गार्हपत्यं चान्तरेण सदश्चाग्नीध्रं चान्तरेण चात्वालोत्करौ । एवमुदीच्यः प्रतिपद्यन्ते । [ २१·२१--दक्षिणानामत्याकरण इति ॥ सूत्रं शालीकेः ॥ अत्रो ह स्माह बोधायन एकामेव दक्षिणां दक्षिणापथेनात्याकुर्यात् ॥ अथेतरा यथावकाशं गच्छेयुरिति ॥ ] ताः प्रदक्षिणं कृत्वाभ्यैति रूपेण वो रूपमभ्यैमि वयसा वयः इति । अथैना विभजति तुथो वो विश्ववेदा वि भजतु वर्षिष्ठे अधि नाके इति । अथ सदोऽभ्यैति एतत्ते अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्तीः इति । अथैष आत्रेयोऽग्रेण सद आस्ते । तमभ्यैति ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यं सुधातुदक्षिणम् इति । अथैनमुत्क्रम्य पृच्छति क आत्रेयः इति । अयमहम् इतीतरः प्रत्याह । तं तथैव द्वितीयमुत्क्रम्य पृच्छति क आत्रेयः इति । अयमहम् इत्येवेतरः प्रत्याह । तं तथैव तृतीयमुत्क्रम्य पृच्छति क आत्रेयः इति । अयमहम् इत्येवेतरः प्रत्याह । [ २१·२१–आत्रेयस्य संवदन इति ॥ सूत्रं शालीकेः ॥ अत्रो ह स्माह बोधायनस्त्रिरेवाव्यतिषजन् पृच्छेत् क आत्रेयः क आत्रेय इति ॥ ] तस्य पाणौ हिरण्यमादधाति चन्द्र मंह इति यदु चान्यदुपकल्पयते[1] । अथाग्नीध्रं द्रुत्वा हिरण्यमुखमग्नीधे ददाति । अथ सद आगत्य ब्रह्मणे ददाति होत्र उद्गात्रे ॥ अथ हविर्धानं द्रुत्वाध्वर्यवे ददाति य उ चैनमन्येऽभितो भवन्ति । [ २१·२२–दक्षिणानां दान इति ॥ स ह स्माह बोधायनो महर्त्विग्भ्य एना दद्यान्न होत्रकाननुसंचरेरन्निति ॥ न च होत्रकाननुसंचरेन्न च सदस्याय दद्यान्न ह्येतस्यानुख्या विज्ञायत इति शालीकिः ॥ ] अथ सद आगत्य प्रस्तोत्रे ददाति प्रशास्त्रे ब्राह्मणाच्छंसिनेऽच्छावाकस्य सदस्यस्याग्नीधः पोतुर्नेष्टुर्ग्रावस्तुत उन्नेतुः सुब्रह्मण्यस्य प्रतिहर्तुरन्ततः । यथासमुदितं प्रसर्पकेभ्यः । अथाह एहि यजमान इति । आग्नीध्रं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाग्नीध्रे पञ्च वैश्वकर्मणानि जुहोति यज्ञपतिमृषय एनसाहुः इति । [ १४·९–उक्तानि वैश्वकर्मणानि । ] अथातिक्रामातीमोक्षैश्चरति अग्निना देवेन, ये देवा यज्ञहनः इत्येताभ्यामनुवाकाभ्याम् । [ १४·२०–अथातोऽतिक्रामाणामेव । अभिचरन् भ्रातृव्यवान् स्पर्धमानोऽभिचरणीयशिल्पान्यायात्य संवत्सरमेतैः क्रमैः क्रमेत अग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेण पूर्वजान् भ्रातृव्यानधरान् पादयाम्यवैनान् बाधे प्रत्येनान्नुदेऽस्मिन् क्षयेऽस्मिन् भूमिलोके योऽस्मान् द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि । इन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण सहजान् भ्रातृव्यानधरान् पादयाम्यवैनान् बाधे प्रत्येनान्नुदेऽस्मिन् क्षयेऽस्मिन् भूमिलोके योऽस्मान् द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि । विश्वेभिर्देवेभिः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेणापरजान् भ्रातृव्यानधरान् पादयाम्यवैनान् बाधे प्रत्येनान्नुदेऽस्मिन् क्षयेऽस्मिन् भूमिलोके योऽस्मान् द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामि इति । अपि वाभिचरणीयास्विष्टिष्वनुवर्तेत । अपि वापोद्धृत्येतरान् क्रमान् संवत्सरमेतैः क्रमैः क्रमेत ।] [२३·८–अतिक्रामेष्विति ॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः ॥] [१४·२०–२१–अथातोऽतीमोक्षाणामेव । वैश्वकर्मणानि हुत्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा गार्हपत्ये जुहोत्यन्वारब्धे यजमाने ये देवा यज्ञहनः पृथिव्यामध्यासते । अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयं स्वाहा इति । अपरं चतुर्गृहीतं गृहीत्वा गार्हपत्य एव जुहोति ये देवा

---

1. एवं केषुचिल्लिखितपुस्तकेषु । 'उपकल्पते' इति मुद्रितपुस्तकपाठः ।

यज्ञमुषः पृथिव्यामध्यासते। अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहा इति। अथाग्नीध्रमभिप्रैति आगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति। नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिवः इति। अथाग्नीध्रं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाग्नीध्रे जुहोत्यन्वारब्धे यजमाने ये देवा यज्ञहनोऽन्तरिक्षेऽध्यासते। वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहा इति। अपरं चतुर्गृहीतं गृहीत्वाग्नीध्र एव जुहोति ये देवा यज्ञमुषोऽन्तरिक्षेऽध्यासते। वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहा इति। अथाहवनीयमभिप्रैति यास्ते रात्रीः सवितर्देवयानीरन्तरा द्यावापृथिवी वियन्ति। गृहैश्च सर्वैः प्रजया न्वग्रे सुवो रुहाणास्तरता रजाꣳसि इति। अथाहवनीयं द्रुत्वा स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने ये देवा यज्ञहनो दिव्यध्यासते। सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहा इति। अपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति ये देवा यज्ञमुषो दिव्यध्यासते। सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयꣳ स्वाहा इति। अथाहवनीयमुपतिष्ठते येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जातवेदः। तेनाग्ने त्वमुत वर्धयेमꣳ सजातानाꣳ श्रैष्ठ्य आ धेह्येनम् इति। यज्ञहनो वै देवा यज्ञमुषः सन्ति त एषु लोकेष्वासत आददाना विमथ्नाना यो ददाति यो यजते तस्य। ये देवा यज्ञहनः पृथिव्यामध्यासते ये अन्तरिक्षे ये दिवीत्याहेमानेव लोकाꣳस्तीर्त्वा सगृहः सपशुः सुवर्गं लोकमेतीति ब्राह्मणम्। अपि वा तिस्र एव गार्हपत्ये जुहोति तिस्र आग्नीध्रे तिस्र आहवनीये। अपि वा गार्हपत्याज्जपन्ननुद्रवेदाहवनीयात्। ] [ २३·८—अतीमोक्षेष्विति ॥ पूर्वः कल्पः शालीकेरुत्तरो बोधायनस्य ॥ ] अथ यजमानं प्राञ्चमीक्षयति वि सुवः पश्य व्यन्तरिक्षम् इति। अथैनꣳ सदस्युपवेशयति यतस्व सदस्यैः इति। अथ दक्षिणाः समनुदिशति अस्मद्रात्रा देवत्रा गच्छत मधुमतीः प्रदातारमाविशतानवहायास्मान् देवयानेन पथेत सुकृतां लोके सीदत तन्नः सꣳस्कृतम् इति॥ [ २१·२१—संचर इति ॥ नीतासु दक्षिणासु यथार्थꣳ संचरेरन्निति बोधायनः॥ नासꣳस्थिते सोमेऽध्वर्युः प्रत्यङ् सदोऽतीयादिति शालीकिः ॥ कृष्णविषाणायाः प्रासन इति ॥ सूत्रं बोधायनस्य[1]॥ नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्येदिति शालीकिः ॥ ] [ २८·१३—दक्षिणानां काले गोर्हिरण्यं वासः। तेषामलाभे फलानां मूलानां भक्ष्याणां दद्यात्। न त्वेव न यजेत।

नित्यं नित्येषु युक्तः स्यात् तथैवाजस्रिकेषु च।
यस्य नित्यानि लुप्तानि तथैवाजस्रिकाणि च॥
विपथस्थो न स स्वर्गं गच्छते पतितो हि सः।
तस्मान्मूलैः फलैर्वापि मधुना तरसेन वा।
नित्यं नित्यानि कुर्वीत न च नित्यानि लोपयेत् ॥ ]

## ११७. मरुत्वतीययागः

बौधायनश्रौ०—

[ ८·७ ]—अथ प्राकायन्नाह इन्द्राय मरुत्वतेऽनुब्रूहि इति। तच्छ्रुत्वा प्रतिप्रस्थाता ग्रहावादायोपनिष्क्रामति। उपनिष्क्रान्तस्यैवाध्वर्युर्ग्रहावादत्ते। उत्तरतस्तिष्ठते प्रतिप्रस्थात्रेऽन्यतरं प्रयच्छति। अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, इन्द्राय मरुत्वते प्रेष्य इति। वषट्कृते सह्वोभौ

---

१. अवभृथमवेष्यन् चात्वाले समन्त्रकं कृष्णविषाणां प्रास्येदिति बोधायनमतम्। द्रष्टव्यं पृ० ५९४।

जुहुतः । [ २१·२२-मरुत्वतीययोर्होम इति ॥ स ह स्माह बोधायनो यमेवाध्वर्युर्जुहुयात् स वषट्कृतानुवषट्कृतः स्यादथेतरोऽननुवषट्कृतः स्यादिति । उभावेवाननुवषट्कृतौ स्यातामिति शालीकिः ॥ उभावेवानुवषट्कृतौ स्यातामित्यौपमन्यवः ॥ ]

## ११९. मरुत्वतीयग्रहग्रहणम्

**बौधायनश्रौ०—**

[ ८·७ ]—अथ प्रतिप्रस्थाताध्वर्योः पात्रे ग्रहस्य संस्रावमवनयति । तमाह प्रतिप्रस्थातरेतेन पात्रेण तृतीयं मरुत्वतीयं ग्रहं गृहाण इति । तेन प्रतिप्रस्थाता तृतीयं मरुत्वतीयं ग्रहं गृह्णाति द्रोणकलशात् परिप्लुना पात्रेण मरुत्वाꣳ इन्द्र वृषभो रणाय इत्यनुद्रुत्य उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते जुष्टं गृह्णामि इति । [ २१·२२-तृतीयस्य मरुत्वतीयस्य ग्रहण इति । सूत्रमाचार्ययोः ॥ अत्रो ह स्माह द्रोणकलशादेव मुख्येनैनं पात्रेण गृह्णीयादिति । ] परिमृज्य सादयति एष ते योनिरिन्द्राय त्वा मरुत्वते इति । अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रैतत् पात्रꣳ संभक्षयति इन्द्रेण मरुत्वता पीतस्य इति ॥

## १२०. मरुत्वतियशस्त्रम्

**बौधायनश्रौ०—**

[ ८·७ ]—अथ निगृह्य पात्रं पराङावर्तते इडा देवहूः इति । यावदेतस्य यजुषः पर्याप्नोति तावज्जपति । अध्वर्युमाह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । शꣳसति । प्रतिगृणाति ॥

## १२१. मरुत्वतीयग्रहप्रचारः माहेन्द्रग्रहग्रहणं च

**बौधायनश्रौ०—**

१. [ ८·७ ]—प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योपच्छन्न एतं तृतीयं मरुत्वतीयं ग्रहम् । अनूपच्छन्ने नाराशꣳसान् । अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, उक्थशा यज सोमस्य इति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव द्विर्द्विर्नाराशꣳसाननुप्रकम्पयन्ति । [ २१·२२—नाराशꣳसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बोधायनः ॥ नानुप्रकम्पयेरन्निति शालीकिः ॥ नैनानुपोपच्छेरꣳश्चनेत्यौपमन्यवः ॥ ] एतत् पात्रं नाराशꣳसा अन्वायन्ति । अनुसवनभक्षः इन्द्रेण मरुत्वता पीतस्य इति । होता चैवाध्वर्युश्चैतत् पात्रꣳ संभक्षयतो नराशꣳसपीतेन नाराशꣳसान् नराशꣳसपीतस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति । होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति । यथाचमसं चमसान् । हिन्व मे इत्यात्मानं प्रत्यभिमृशन्ते । आप्याययन्ति चमसान् : आ प्यायस्व समेतु ते इति । सीदन्ति नाराशꣳसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽधो माहेन्द्राय ।

२. [ ८·८ ]—अथ प्राङेत्य शुक्रपात्रमाददान आह उन्नेतर्यदेमं माहेन्द्रं ग्रहं गृह्णाम्यथोदञ्चं राजानं पूतभृतमभि संप्लवयताद् दशाभिर्द्रोणकलशं मृष्ट्वा न्युब्जतात् इति । स तथा करोति । स शुक्रपात्रेण माहेन्द्रं द्रोणकलशाद् गृह्णाति महाꣳ इन्द्रो य ओजसा इत्यनुद्रुत्य उपयामगृहीतोऽसि महेन्द्राय त्वा जुष्टं गृह्णामि इति । परिमृज्य सादयति एष ते योनिर्महेन्द्राय त्वा इति । [ २५·२२-कथमु खलु

रथन्तरपृष्ठे माहेन्द्रं ग्रहं गृह्णीयात् । महाꣳ इन्द्रो य ओजसा इत्येतया गायत्र्या माहेन्द्रं गृह्णीयात् अथ बृहत्पृष्ठे महाꣳ इन्द्रो नृवदा चर्षणिप्राः इत्येतया त्रिष्टुभा माहेन्द्रम् । अथोभयपृष्ठे यथा पृष्ठं तथा गृह्णीयात् पुरोरुचमितरां कुर्यादिति । ]

## १२२. प्रथमपृष्ठस्तोत्रम्

**बौधायनश्रौ० –**

[८·८]—अथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते माहेन्द्राय । प्रस्तुते साम्नि संप्रैषमाह अभिषोतारोऽभिषुणुताग्नीदाशिरं विनयोलूखलमुद्वादय प्रतिप्रस्थातर्वारुणमेककपालं निर्वप सौम्यस्य विद्धि इति । [ २१·२२—सौम्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवान् स्यादिति बोधायनः ॥ तूष्णीक इति शालीकिः ॥ सौम्य एव मन्त्रवान् स्यात् तूष्णीक एककपाल इत्यौपमन्यवः ॥ ] यथासंप्रैषं ते कुर्वन्ति । होत्रे एषोत्तमा इति प्राहुः ॥

## १२३. निष्केवल्यशस्त्रम्

**बौधायनश्रौ०—**

[८·८]—होतुः कालात् पराङावर्ततेऽध्वर्युः । अभ्येनमाह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । शꣳसति । प्रतिगृणाति ॥

## १२४. माहेन्द्रग्रहप्रचारः ऐन्द्रग्रहग्रहणं च

१. [८·८]—प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतं माहेन्द्रं ग्रहम् । अनूद्यच्छन्ते नाराशꣳसान् । अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, उक्थशा यज सोमस्य इति । वषट्कृते द्विर्जुहोति । [ १४·११—माहेन्द्रस्यैव होममनु हूयन्ते[1] । अथैनꣳ होष्यन्नवेक्षते अग्ने तेजस्विन् तेजस्वी त्वं देवेषु भूयास्तेजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु इति । जुहोति दीक्षायै च त्वा तपसश्च तेजसे जुहोमि इति । हुत्वा वाचयति तेजोविदसि तेजो मा मा हासीन्माहं तेजो हासिषं मा मां तेजो हासीत् इति । भक्षयति मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु इति । [ २३·५—पृष्ठ्यग्रहाणां भक्षण इति ॥ स ह स्माह बोधायनोऽनुसवनभक्षेण चैवैनान् भक्षयेन्नित्येन चेति ॥ नित्येनैवेति शालीकिः ॥ ] [ १४·११—अथैनꣳ होष्यन्नवेक्षते इन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूया ओजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु इति । जुहोति ब्रह्मणश्च त्वा क्षत्रस्य चौजसे जुहोमि इति । हुत्वा वाचयति ओजोविदस्योजो मा मा हासीन्माहमोजो हासिषं मा मामोजो हासीत् इति । भक्षयति मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु इति । अथैनꣳ होष्यन्नवेक्षते सूर्य भ्राजस्विन् भ्राजस्वी त्वं देवेषु भूया भ्राजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु इति । जुहोति वायोश्च त्वापां च भ्राजसे जुहोमि इति । हुत्वा वाचयति सुवर्विदसि सुवर्मा मा हासीन्माहꣳ सुवर्हासिषं मा माꣳ सुवर्हासीत् इति । भक्षयति मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु इति । ] तथैव द्विर्द्विर्नाराशꣳसाननुप्रकम्पयन्ति । एतत् पात्रं नाराशꣳसा अन्वायन्ति । अनुसवनभक्षः महेन्द्रेण पीतस्य इति । होता चैवाध्वर्युश्चैतत् पात्रꣳ संभक्षयतो नराशꣳसपीतेन नाराशꣳसान् नराशꣳसपीतस्य सोम

1. अतिग्राह्याः । द्रष्टव्यं पृ. ५५८ ।

देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति। होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसान्। हिन्व मे इत्यात्मानं प्रत्यभिमृशन्ते। नाप्याययन्ति चमसान्। सर्वभक्षा मार्जयन्ते।

२. [ ८.८ ]—अथ इन्द्राय त्वेन्द्राय त्वा इत्येवं त्रिभिरुक्थ्यपर्यायैश्चरति॥

## १३०. ऐन्द्रग्रहप्रचारः ऐन्द्रग्रहग्रहणं च

**बौधायनश्रौ०—**

[ ८.८ ]—तं [1]तथैवोत्तमेऽतिशिष्ट आह अच्छावाकस्य चमसमनूत्नयध्वमुन्नेतः सर्वश एव राजानमुन्नय मातिरीरिचः प्रतिप्रस्थातरुपैतेन ग्रहेण रमैहि यजमान इति। पूर्वया द्वारा हविर्धानं प्रपाद्याथोदुब्ज्याधवनीयꣳ सर्वश एव वसतीवरीः पर्यस्यति। सर्वश एवैकधनान्। पुरोक्षमेव वसतीवरीकलशं मृष्ट्वा न्युब्जति। पश्चादक्षमेकधनान्। अच्छावाकचमसमेव प्रथममुन्नयन्ति। यथोपपादमितरान्। सर्वश एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्ति। अथादत्त उक्थ्यस्थाल्या औपशयं पात्रम्। तस्मिन्नेतꣳ सर्वश एव राजानं गृह्णाति य उक्थ्यस्थाल्यां भवति। स उ वा ऐन्द्र एव भवति॥

## १३३. ऐन्द्रग्रहप्रचारः

**बौधायनश्रौ०—**

[ ८.८ ]—अथ उक्थं वाचि इत्याह माध्यंदिनꣳ सवनं प्रतिगीर्य। प्रशास्तः प्रब्रुहि इति। सर्पत इत्याह प्रशास्ता। संतिष्ठते माध्यंदिनꣳ सवनम्॥

# तृतीयसवनम्

## १३४. ऋजीषाभिषवः आदित्यग्रहप्रचारश्च

**बौधायनश्रौ०—**

१. [ ८.९ ]—प्रसर्पन्ति तृतीयसवनाय देवी द्वारौ इत्यत एवोर्ध्वेन। संप्रसृप्तान् विदित्वाध्वर्युः प्राकायन्नाह अग्नीत् परिश्रयणमाहर प्रतिप्रस्थातराशिरमानय शृतातङ्क्यमादित्यग्रहाय दध्याहरेहि यजमान इति। पूर्वया द्वारा हविर्धानं प्रपाद्य य एष उपांशुपात्रेऽꣳशुः प्रास्तो भवति तं माध्यंदिनीय ऋजीषेऽपिसृज्य यमेव कं च ग्रावाणमाद्रायोन्नेतारमाह आहरोपसृज इति। [ १४.६- अथ वै भवति त्रीणि वाव सवनान्यथ तृतीयꣳ सवनमव लुम्पन्त्यनꣳशु कुर्वन्तः उपांꣳशुꣳ हुत्वोपांꣳशुपात्रेऽꣳशुमवास्य तं तृतीयसवनेऽपिसृज्याभिषुणुयादिति। स य एवैष उपांꣳशुपात्रेऽꣳशुः प्रास्तो भवति तं माध्यंदिनीय ऋजीषेऽपिसृज्याभिषुणोति। यदाप्याययति तेनाꣳशुमद्यदभिषुणोति तेनर्जीषिः सर्वाण्येव तत्सवनान्यꣳशुमन्ति शुक्रवन्ति समावद्वीर्याणि करोतीति ब्राह्मणम्। ] [ २१.२२-तार्तीयसवनिकेऽभिषव इति॥ सूत्रं बोधायनस्य॥ यदाप्याययति तेनाꣳशुमदित्येव ब्रूयादिति शालीकिः॥ ] उपसृजत्युन्नेताधवनीयादुदचनेन। अपरिमितमभिषुत्याथैनꣳ सुसंभृतꣳ संभरण्या संभृत्योन्नेत्र उत्प्रयच्छति। तमुन्नेताधवनीयेऽवनयति। एवमेव द्वितीयः पर्यायः संतिष्ठते। एवं तृतीयः। ऋजीष-

1. द्रष्टव्यं पृ. ५७५।

मन्ततो दशापवित्रेण परिवेष्ट्योन्नेत्र उत्प्रयच्छति। तदुन्नेताधवनीये विश्राल्य प्रपीड्य दक्षिणस्य हविर्धानस्यान्तरेणेषे उपातिहृत्य नीड उत्सादयति। परिश्रयन्ति पूर्वां द्वारमपरां च।

२. [ ८.९-१० ]—अथादत्त आदित्यस्थाल्या औपशयं पात्रम्। तस्मिन्नेतस्य राज्ञस्तृतीयवेलां गृह्णाति य आदित्यस्थाल्यां भवति कदा चन स्तरीरसि इत्यनुद्रुत्य उपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामि इति। बर्हिषी अन्तर्धाय शृतातङ्क्येन श्रीणाति कदा चन प्रयुच्छसि इत्यनुद्रुत्य उपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामि इति। अपोद्धृत्य बर्हिषी अर्धवेलांꣳ राज्ञो गृह्णाति यज्ञो देवानां प्रत्येति सुम्नम् इत्यनुद्रुत्य उपयामगृहीतोऽस्यादित्येभ्यस्त्वा जुष्टं गृह्णामि इति। [ २१.२२-आदित्यग्रहस्य ग्रहण इति॥ सूत्रंꣳ शालीकेः॥ अत्रो ह स्माह बोधायनः पुरस्तादेनमभिषवाद् गृह्णीयात् तूष्णींꣳ शृतातङ्क्यमवनयेदिति॥ ] अथैनंꣳ स्थविमत उपांꣳशुसवनेन श्रीणाति विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वयं तर्पयितारो या दिव्या वृष्टिस्तया त्वा श्रीणामि इति। अथैनमुद्गृह्णाति। अत्र विज्ञानमुपैति यदि ताजक् प्रस्कन्दत्यप्तुर्वर्षुकः पर्जन्यो भवति। यदि चिरमवर्षुकः। न सादयतीति ब्राह्मणम्। अथैनमुपांꣳशुसवनं दशापवित्रेण परिवेष्ट्य तेनाधस्तात् पात्रमुद्धन्त्यूर्मिकारमविषिञ्चन् आ समुद्रादान्तरिक्षात् प्रजापतिरुदधिं च्यावयातीन्द्रः प्रस्नौतु मरुतो वर्षयन्तूलम्भय पृथिवीं भिन्धीदं दिव्यं नभः उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम् इति। [ २१.२२—आदित्यग्रहस्योद्धनन इति॥ अर्धर्चश उदाहन्यादिति बोधायनः॥ ऋचचैति शालीकिः॥ ] [ १४.२१—उक्तमादित्यग्रहस्योद्धननम्। ] अथैनमुपांꣳशुसवनं दशापवित्रेण परिमृज्य ग्रावस्वपिसृजति। विवृण्वन्ति पूर्वां द्वारमपरां च। अथैतं ग्रहं बर्हिर्हस्तेनापिधायोपोत्तिष्ठन्नाह आदित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्योऽनुब्रूहि इति। अत्याक्रम्याश्राव्याह आदित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः प्रेष्य इति। वषट्कृत ओषधीः प्रास्याग्नावादित्यं जुहोति सकृदेव। न हुत्वान्वीक्षते। पर्यावृत्तस्यैव प्रतिप्रस्थाता पात्रमादत्ते॥

## १३६. ग्रहग्रहणम्

**बौधायनश्रौ०—**

[ ८.१० ]—एतस्मिन् काले प्रतिहर्ता पूतभृतो बिले पवित्रं वितत्य द्वौ वा त्रीन् वा राज्ञ उदचनानानयति। आग्रयणमेवाध्वर्युरादत्ते। आदित्यस्थालीं प्रति प्रस्थाता सोपशयांꣳ संप्रगृह्णाति। तासां तिसृणां चतसृणां वा धाराणां [1]तथोपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति। तं तथैव[1] त्रिरभिहिङ्कृत्य परिमृज्य सादयति। अपोद्धृत्य पवित्रं बर्हिषी अन्तर्धायाशिरमवनयत्यन्वारब्धायां पत्न्याम् अस्मे देवासो वपुषे चिकित्सत इति चतसृभिरनुच्छन्दसम्। [ १४.९—उक्तमाशिरोऽवनयनम्। ] [ २१.२२— मैत्रावरुणस्य श्रयण आशिरोऽवनयन इति॥ सूत्रंꣳ शालीकेः॥ अत्रो ह स्माह बोधायनः श्रीणीयादेव मैत्रावरुणं पयसाशिरमवनयेदिति॥ ] अपोद्धृत्य बर्हिषी पूतभृतो बिले द्रप्सानमुमन्त्रयते। द्वौ पवमानस्य ग्रहौ इति। स तथा करोति॥ उन्नेतः इत्याह प्राञ्चꣳ राजानं पूतभृतमभि संप्रवयताद् दशाभिराधवनीयं मृष्ट्वा न्युब्जताद्

---

१. द्रष्टव्यं पृ. ५५७।

## १३७. आर्भवपवमाननिःसर्पणम्

**बौधायनश्रौ०—**

[ ८·१०-११ ]—तथाप[1] उपसृज्य बर्हिषी आदायोपनिःसर्पति। तेषु तथैव[1] समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति। इदं तृतीयꣳ सवनं कवीनामृतेन ये चमसमैरयन्त। ते सौधन्वनाः सुवरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु स्वाहा इत्येतयाध्वर्यू जुहुतः। [ १४·५—आर्भवे पवमाने तथैव समन्वारब्धेष्वाहवनीये स्रुवाहुतिं जुहोति इदं तृतीयꣳ सवनं कवीनामृतेन ये चमसमैरयन्त। ते सौधन्वनाः सुवरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु स्वाहा इति। ] यथावेदमितरे जुह्वति। तथा प्रदक्षिणमावृत्य सदोऽभि पवमानꣳ सर्पन्ति। तथा[1] सदसि यथायतनमुपविशन्ति। तथोद्गात्रे[1] वा प्रस्तोत्रे वा बर्हिषी प्रयच्छति ऋक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्यै इति वा तूष्णीं वा। तथोपाकरणं[1] जपति वायुर्हिंकर्ता इति ॥

## १३८. आर्भवपवमानस्तोत्रम्

**बौधायनश्रौ०—**

[ ८·११ ]—स एष सप्तदश आर्भवः पवमानो भवति। तस्य नवम्यां प्रस्तुतायां वाचयति। सघासि जगतीछन्दा अनु त्वा रभे स्वस्ति मा सं पारय इति। [ १४·६—आर्भवे पवमाने नवम्यां प्रस्तुतायां वाचयति सघासि जगतीछन्दा अनु त्वा रभे स्वस्ति मा सं पारय इत्याह। एते वै पवमानानामन्वारोहास्तान् य एवं विद्वान् यजतेऽनु पवमानाना रोहति न पवमानेभ्योऽव च्छिद्यत इति ब्राह्मणम्। ] [ २१·२२—नवम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बोधायनस्य ॥ यस्यामेव कस्यांचिद् वाचयेदिति शालीकिः ॥ ] अत्र पञ्चहोतारं व्याचष्टे ॥

## १३९. सवनीयपशुहविर्योगः

**बौधायनश्रौ०—**

[ ८·११-१२ ]—उद्द्रुते साग्नि संप्रैषमाह अग्नीच्छालाकान् विहर बर्हि स्तृणाहि पुरोडाशाꣳ अलंकुरु प्रतिप्रस्थातः पशौ संवदस्व इति। यथासंप्रैषं तौ कुरुतः। तथाप[2] उपस्पृश्याह एहि यजमान इति। पूर्वया द्वारा हविर्धानं प्रपाद्य तथा[1] समस्तꣳ राजानमुपतिष्ठते। नात्रावकाशैश्चरति। तथा[2] प्रचरण्यां नव कृत्वो गृह्णीते। तथैव[2] आग्नीध्र आग्नीध्रीयाद् धिष्णियादनुपूर्वं धिष्णियेषु शालाकान् विहरति। [ २१·२३-तार्तीयसवनिकानां धिष्णियानां विहरण इति॥ सूत्रꣳ शालीकेः॥ अत्रो ह स्माह बोधायनश्चरित्वा वाचरित्वा वा सौम्येनाङ्गारैश्चतुर्धिष्णियान् विहरेदिति॥ ] तथा[2] पुरस्तात्प्रत्यङ्ङासीनो विहृताञ्छालाकान् व्याघारयति। तथोत्तरस्य[2] हविर्धानस्य चुबुके प्रचरणीꣳ सादयति। तथा[2] सांकाशिनेन पथा पृष्ठ्याꣳ स्तृणाति संततं गार्हपत्यादाहवनीयात्। अथ पशुना चरति मनोताप्रभृतिनेडान्तेन[3]। [ २५·२३-कथमु

---

१. द्रष्टव्यं पृ. ५५९। २. द्रष्टव्यं पृ. ५६०-५६१। ३. द्रष्टव्यं श्रौ. १ पृ. ५९९-६००।

खलु सवनीयस्य पशोश्चर्याया उपक्रमो भवतीति । इडसूनꣳ सꣳस्तीर्य पृषदाज्यं विहृत्य जुह्वाꣳ समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवद्देताभिघारयेदासादयेत् पशुं पञ्चहोत्रा चतसृभूपस्तृणीते । मनोताप्रभृतिनेडान्तेन चरेत् । सिद्धमत ऊर्ध्वम् । ]

## १४१. सवनीयपुरोडाशयागः[1]

बौधायनश्रौ०—

[ ८·१२ ]-तथा सवनीयान् पुरोडाशान् याचति । [ २५·२१- क्व तृतीयसवनीयाः[2] । माहेन्द्रस्य स्तोत्र इत्येव ब्रूयात् ॥ ] तेषां तथैव समवद्यन्नाह तृतीयस्य सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहि इति । पूर्वार्धादवदायापरार्धादवद्यति । अभिघारयति । प्रत्यनक्ति । तथोपभृति स्विष्टकृते सर्वेषाꣳ सकृत्सकृदुत्तरार्धादवद्यति । द्विरभिघारयति । न प्रत्यनक्ति । अत्याक्रम्याश्राव्याह तृतीयस्य सवनस्येन्द्राय पुरोडाशान् प्रस्थितान् प्रेष्य इति । वषट्कृते जुहोति । तथा समावपमान आह अग्नयेऽनुब्रूहि इति । आश्राव्याह अग्नये प्रेष्य इति । वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति । अथोदङ्ङत्याक्रम्य यथायतनꣳ स्रुचौ सादयित्वा तथैव पात्र्यामिडाꣳ समवधाय प्रतीचः पुरोडाशान् प्रहिणोति । अनु हैके संयन्ति पशाव इडेति वदन्तः । अथ प्राङायन्नाह उन्नीयमानेभ्योऽनुब्रूहि होतुश्चमसमनून्नयध्वं तीव्राꣳ आशीर्वतः कुरुध्वमुन्नेतः सोमं प्रभावय इति ॥

## १४३. सवनमुखयागः

बौधायनश्रौ०—

[ ८·१२ ]-होतृचमसमेव प्रथममुन्नयन्ति । यथोपपादमितरान् । समुन्नीयोत्तरवेद्याꣳ सꣳ सादयन्ति । अथ प्राङेत्य होतृचमसमादायाश्राव्याह तृतीयस्य सवनस्यर्भुमतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्राꣳ आशीर्वत इन्द्राय सोमान् प्रस्थितान् प्रेष्य इति । वषट्कृते जुहोति श्येनाय पत्वने स्वाहा इति । अनुवषट्कृते तृम्पन्ताꣳ होत्रा मधोर्घृतस्य स्वाहा इति । वषट्कृतानुवषट्कृते द्विर्जुहोति । तथैव[1] द्विर्द्विः सर्वाꣳश्चमसाञ्जुहोति । तथा[2] संप्रैषमाह प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य प्र सदस्यस्य होत्रकाणां चमसाध्वर्यवः सकृत्सकृदाशीर्वतोऽभ्युन्नीयोपावर्तध्वम् इति । यन्त्येते महर्त्विजां चमसाः ॥

## १४५. होत्रकचमसप्रचारः[3]

बौधायनश्रौ०—

[ ८·१२ ]-तथैते होत्रकाणां चमसाध्वर्यवः सकृत्सकृदाशीर्वतोऽभ्युन्नीयोपावर्तन्ते । तेषां तथैव मैत्रावरुणचमसमादायाश्राव्याह प्रशास्तर्यज इति । वषट्कृते जुहोति विष्टम्भाय धर्मणे स्वाहा इति । परिधये जनप्रथनाय इति ब्राह्मणाच्छꣳसिनः । ऊर्जे होत्राणाम् इति पोतुः । पयसे होत्राणाम् इति

---

१. द्रष्टव्यं पृ. ५६४ । २. पुरोडाशा निरुप्यन्ते । ३. द्रष्टव्यं पृ. ५६७ ।

नेष्टुः। प्रजापतये मनवे इत्यच्छावाकस्य। ऋतमृतपाः सुवर्वाट् इत्यग्नीधः। चमसं चमसमेवानु वषट्करोति तृम्पन्तां होत्रा मधोर्घृतस्य स्वाहा इति। [ १४.९—उक्तं होत्रकाणां संतर्पणम्। ] सप्त होत्राः संयाज्य प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्याग्रेण होतारमुपविशति अयाडग्नीत् इति। [ २१.२२—होत्राणां[1] संतर्पण इति ॥ सूत्रं शालीकेः ॥ अत्रो ह स्माह बोधायनोऽनु सवनमेव होत्राः संतर्पयेदिति ॥ पञ्च प्रातःसवने षण्माध्यंदिने सवने सप्त तृतीयसवन इत्यौपमन्यवः ॥ ] स भद्रमकः इत्याह होता यो नः सोमं राजानं पाययिष्यति इति ॥

## १४७. सवनीयेडा[2]

**बौधायनश्रौ०—**

[ ८.१२ ]—तथाप उपस्पृश्य होत्र इडामुपोद्यच्छन्ते। उपहूयमानायामिडायामुप-प्रगृह्णन्ति चमसान्। उपहूतायामिडायामग्नीध आदधाति षडवत्तम्। प्राश्नन्ति। मार्जयन्ते ॥

## १४८. सवनमुखसोमभक्षणम्

**बौधायनश्रौ०—**

[ ८.१२ ]—इडोपहूतांश्चमसान् भक्षयन्ति भक्षेहि माविश इति दीर्घभक्षमनुद्रुत्य आदित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति। होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसान्। हिन्व मे इत्यात्मानं प्रत्यभिमृशन्ते। आप्याययन्ति चमसान्। आ प्यायस्व समेतु ते इति। सीदन्ति नाराशंसा आप्यायिता दक्षिणस्य हविर्धानस्यापालम्बमधोऽध उपासनवन्तो वैश्वदेवाय ॥

## १४९. पिण्डदानम्

**बौधायनश्रौ०—**

[ ८.१२ ]—चमसायचमसायैव त्रींस्त्रीन् पुरोडाशशकलानुपास्यति। नव होतृचमसे। [ २५.२३ – चमसायचमसायैव त्रींस्त्रीन् पुरोडाशशकलानुपास्येन्नव होतृ-चमस इति। त्रयाणामेवैष उक्तो भवति। ] तानत एवानुमन्त्रयते अत्र पितरो यथाभागं मन्दध्वम् इति। [ २१.२२—औपासनेष्विति ॥ स ह स्माह बोधायनोऽनुसंव्रज्यौपासनाननुमन्त्रयेत चमसेभ्यश्च पुरोडाशशकलानुपास्येदत्र चैव षड्ढोतारं व्याचक्षीतेति ॥ अत्रो ह स्माह शालीकिरनुसंव्रज्यैवौपासनाननुमन्त्रयेत पार्श्वतश्चमसेभ्यः पुरोडाशशकलानुपास्येदु-परिष्टाच्च षड्ढोतारं व्याचक्षीतेति। ] एतस्मिन् काल आग्नीध्रे यजमानः पुरोडाशानां प्राश्नाति। यदशना स्यात् पत्नी पत्नीशाले ॥

## १५०. सावित्रग्रहप्रचारः

**बौधायनश्रौ०—**

[ ८.१३ ]—अथ प्राङायन्नाह देवाय सवित्रेऽनुब्रूहि प्रतिप्रस्थातरन्तर्यामपात्रेण सावित्रमाग्रय-णाद् ग्रहं गृहीत्वोपास्व मा सीषदः इति। तच्छ्रुत्वा प्रतिप्रस्थातान्तर्यामपात्रेण सावित्रमाग्रयणाद्

---

१. एवं केषुचिल्लिखितपुस्तकेषु। 'होत्रकाणां' इति मुद्रितपुस्तकपाठः। २. द्रष्टव्यं पृ. ५६८।

ग्रहं गृह्णाति वाममद्य सवितर् इत्यनुद्रुत्य उपयामगृहीतोऽसि देवाय त्वा सवित्र जुष्टं गृह्णामि इति। न सादयतीति ब्राह्मणम्। [२१·२३—सावित्रस्य ग्रहणे सादन इति॥ सूत्रं बोधायनस्य॥ सजुष्टं परिमृज्य सादयेदिति शालीकिः॥] असादयित्वैवोपनिष्क्रम्याश्राव्याह देवाय सवित्रे प्रेष्य इति। वषट्कृते जुहोति॥

## १५२. वैश्वदेवग्रहग्रहणम्

बौधायनश्रौ०—

[८·१३]—अथ वै भवति सवितृपात्रेण वैश्वदेवं कलशाद् गृह्णाति सोमे सोममभिगृह्णातीति। स सवितृपात्रेण वैश्वदेवं कलशाद् गृह्णाति सोमे सोममभिगृह्णाति उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नमो विश्वेभ्यस्त्वा देवेभ्यो जुष्टं गृह्णामि इति। परिमृज्य सादयति एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः इति।

## १५३. वैश्वदेवशस्त्रम्

बौधायनश्रौ०—

[८·१३]—अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य होत्रा समीक्ष्य पराङावर्तते इडा देवहूः इति। यावदेतस्य यजुषः पर्याप्नोति तावज्जपति। अभ्येनमाह्वयते होता। प्रत्याह्वयतेऽध्वर्युः। शंसति। प्रतिगृणाति। अथ यत्र होतुरभिजानाति एकया च दशभिश्च स्वभूतः इति तत्प्रतिप्रस्थाता द्विदेवत्यपात्राणि मार्जालीये मार्जयित्वा पात्रेष्वपिसृजति। अथ यत्र होतुरभिजानाति प्र द्यावा यज्ञैः पृथिवी ऋतावृधा इति तदन्यतोमदं प्रतिगृणाति ओथा मोद इव मदा मोद इव इत्या व्याहावात्। [२१·२३-तदन्यतोमदं प्रतिगृणातीति॥ सूत्रं बोधायनस्य॥ मदा मोद इव इत्येव प्रतिगृणीयादिति शालीकिः॥] अथ यत्र होतुरभिजानाति तद्राधो अद्य सवितुर्वरेण्यम् इति तदुभयतोमदमेव प्रतिगृणाति मदा मोद इव मदा मोद इव इत्या व्याहावात्॥

## १५४. वैश्वदेवग्रहप्रचारः

बौधायनश्रौ०—

[८·१३]—प्रसिद्धमुक्थं प्रतिगीर्य प्राडेत्योद्यच्छत एतं वैश्वदेवं ग्रहम्। अनूद्यच्छन्ते नाराशंसान्। अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, उक्थशा यज सोमस्य इति। वषट्कृतानुवषट्कृते द्विर्जुहोति। तथैव द्विर्द्विर्नाराशंसाननुप्रकम्पयन्ति। [२१·२३-नाराशंसानामनुप्रकम्पन इति॥ अनुप्रकम्पयेरन्निति बोधायनः॥ नानुप्रकम्पयेरन्निति शालीकिः॥ नैनानुपोद्यच्छेरंश्चनेत्यौपमन्यवः॥] एतत् पात्रं नाराशंसा अन्वायन्ति। अनुसवनभक्षः विश्वैर्देवैः पीतस्य इति। होता चैवाध्वर्युश्चैतत् पात्रं संभक्षयतो नराशंसपीतेन नाराशंसान् नाराशंसपीतस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति। होतृचमसमेवैते त्रयः समुपह्वय भक्षयन्ति। यथाचमसं चमसान्। हिन्व मे इत्यात्मानं प्रत्यभिमृशन्ते। नाप्याययन्ति चमसान्। सर्वभक्षा मार्जयन्ते॥

## १५५. सौम्यचरुयागः

**बौधायनश्रौ०—**

[ ८·१४ ]—अथ होतारं विपृच्छति परियक्ष्यसि सौम्यां३ न परियक्ष्यसी३ इति । स यथैनꣳ होता प्रत्याह तच्छ्रुत्वासन्नꣳ सौम्यमागच्छति । [ २१·२३—सौम्यस्य चर्याया इति ॥ उपाꣳशु चरेदिति बोधायनः ॥ उच्चैरिति शालीकिः ॥ ] स्रुचि चतुर्गृहीतं गृहीत्वात्याक्रम्याश्राव्याह घृतस्य यज इति । वषट्कृते जुहोति । अथोपस्तीर्य द्विश्चरोरवद्यति । पूर्वार्धादवदायापरार्धादवद्यति । अभिघारयति । न प्रत्यनक्ति । अत्याक्रम्याश्राव्याह सौम्यस्य यज इति । वषट्कृते दक्षिणार्धपूर्वार्धे प्राचीनावीती सौम्यं जुहोति । अथैनं वैष्णव्यर्चा स्रुवाहुत्याभिजुहोति विष्णो त्वं नो अन्तमः इति । यद्यु वै होताग्नावैष्णव्यर्चा परियजति संपन्नमिति नाद्रियेत । [ २१·२३-सौम्यस्य परीज्याया इति ॥ स ह स्माह बोधायनो यदि चैव समस्तौ यदि च विहृतावग्नाविष्णू उपाꣳश्वेव स्यातामिति ॥ समस्तावुपाꣳशु विहृतावुच्चैरिति शालीकिः ॥ ] तस्मिन्नाज्यमानीयावेक्षते । पवित्रं वै सौम्य आत्मानमेव पवयन्ते य आत्मानं न परिपश्येदितासुः स्यादभिदर्दि कृत्वावेक्षेतेति । तस्मिन् भूय आज्यमानीयावेक्षते यन्मे मनः परागतं यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसि इति । मन एवात्मन् दाधार न गतमना भवतीति ब्राह्मणम् । अथैनमुद्गातृभ्यो हरन्ति । तस्मिꣳस्तच्चेष्टन्ति यत्ते विदुः । [ २५·२२-किमुपसदाम्[1] । सौम्यस्य परीज्या इति । ]

## १५७. पात्नीवतग्रहप्रचारः

**बौधायनश्रौ०—**

[ ८·१४ ]—अथ प्राञ्चायन्नाह प्रतिप्रस्थातरुपाꣳशुपात्रेण पात्नीवतमाग्रयणाद् ग्रहं गृहीत्वोपास्व मा सीषदः इति । तच्छ्रुत्वा प्रतिप्रस्थातोपाꣳशुपात्रेण पात्नीवतमाग्रयणाद् ग्रहं गृह्णाति उपयामगृहीतोऽसि बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णाम्यग्ना३इ पत्नीवा३ इति । बर्हिषी अन्तर्धाय घृतेन श्रीणाति अहं परस्तादहमवस्तादहं ज्योतिषा वि तमो ववार । यदन्तरिक्षं तदु मे पिताभूदहꣳ सूर्यमुभयतो ददर्शाहं भूयासमुत्तमः समानानाम् इति । [ २१·२३-पात्नीवतस्य श्रयण इति ॥ सूत्रं बोधायनस्य ॥ दध्ना वा पयसा वा पात्नीवतꣳ श्रीणीयादिति शालीकिः ॥ धिष्णियानां व्याघारणशेषेणाज्येन पात्नीवतꣳ श्रीणीयादित्यौपमन्यवः ॥ ] [ १४·२१—उक्तं पात्नीवतस्य श्रयणम् । ] अपोद्धृत्य बर्हिषी न सादयतीति ब्राह्मणम् । असादयित्वोपनिष्क्रम्याश्राव्याह अग्नीत् पात्नीवतस्य यज इति । वषट्कृते जुहोति । सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा इत्युपाꣳश्वनुवषट्कृते हुत्वा हरति भक्षम् । स यद्यस्मिन्नाग्नीध्र उपहवमिच्छत उपैवैनꣳ ह्वयते । नो त्वेव संभक्षयतः । [ २५·२३—अथायमाग्रयणस्त्रयस्त्रिꣳशतो देवतानां गृह्यते । क उ खल्वेताः प्रदाने विज्ञायन्त इति । पात्नीवते । विज्ञायते पत्नीवतस्त्रिꣳशतं त्रीꣳश्च देवानिति । कथमु खलु पात्नीवतं भक्षयेत् । आदित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दसोऽग्निना वैश्वानरेण पत्नीवतः त्वष्ट्रा पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति ॥ ]

---

1. हुत्यमहरनुसमेतीति ।

## १५९. होतृचमसोन्नयनम्

**बौधायनश्रौ०—**

[ ८·१४ ]—अथाह अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा संख्याप्याप उपप्रवर्तयतादूरुणोपप्रवर्तयतान्नग्नं कृत्वोरुमुपप्रवर्तयताद्धोतुश्चमसनून्नयध्वमुन्नेतः सर्वंश एव राजानमुन्नय मातिरीरिचः प्रतिप्रस्थातर्होतृचमसे ध्रुवायावकाशं कुरुतादेहि यजमान इति । पूर्वया द्वारा हविर्धानं प्रपाद्य यजमानं ध्रुवमुपस्थापयति भूनमसि भूते मा धा मुखमसि मुखं भूयासम् इति । होतृचमसमेव प्रथममुन्नयन्ति । यथोपशादमितरान् । सर्वंश एव राजानꣳ समुन्नीयोत्तरवेद्याꣳ सꣳसादयन्ति ॥

## १६०. अग्निष्टोमस्तोत्रम्

**बौधायनश्रौ०—**

[ ८.१४-१५ ]—अथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति । स्तुवते यज्ञायज्ञियेन । अत्र सप्तहोतारं व्याचष्टे । प्रस्तुते साम्नि नेष्टा पत्नीमुद्गात्रा संख्याप्य वाचयति विश्वस्य ते विश्वावतो वृष्णियावतस्तवाग्ने वामीरनु संदृशि विश्वा रेताꣳसि धिषीयागन् देवान् यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्त्सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा गन्धर्वमातिष्ठतानु वातस्य पत्मन्निड ईडिताः इति । [ १४·२२—उक्तानि पत्नीयजूꣳषि । ] स यदेवैनामुद्गातोपमीवति तदेषा पत्न्यूरुणा पन्नेजनीरुपप्रवर्तयति । नग्नं कृत्वोरुमुपप्रवर्तयति । [ २१·२३—पत्न्या उदानयन इति । सूत्रं बोधायनस्य ॥ अत्रैवासीतापोहिष्ठीयाभ्य इति शालीकिः ॥ ] होत्रे एषोत्तमा इति प्राहुः ॥

## १६१. आग्निमारुतशास्त्रम्

**बौधायनश्रौ०—**

[ ८·१५ ]—होतुः कालात् पराङावर्ततेऽध्वर्युः । अभ्येनमाह्वयते होता । प्रत्याह्वयतेऽध्वर्युः । शꣳसति । प्रतिगृणाति । अथ यत्र होतुरभिजानाति स्वादुष्किलायं मधुमाꣳ उतायम् इति तदुभयतोमोदं प्रतिगृणाति मोदा मोद इव मदा मोद इव इत्या व्याहावात् । [ २१·२३-तदुभयतोमदं प्रतिगृणातीति ॥ सूत्रं बोधायनस्य ॥ मोदा मोद इव इत्येव प्रतिगृणीयादिति शालीकिः ॥ ] अथ यत्र होतुरभिजानाति तन्तुं तन्वन् रजसो भानुमन्विहि इति तत्प्रतिप्रस्थातः ध्रुवं परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामि इति । अथैनं प्रच्यावयति विश्वे त्वा देवा वैश्वानराः प्रच्यावयन्तु इति । [ २१·२३-ध्रुवस्य प्रच्यावन इति ॥ सूत्रं बोधायनस्य ॥ सर्व एवैषोऽवनयनमन्त्र स्यादिति शालीकिः ॥ ] अथैनमाहरति दिवि देवान् दृꣳहान्तरिक्षे वयाꣳसि पृथिव्यां पार्थिवान् इति । अथैनꣳ होतृचमसेऽवनयति ध्रुवं ध्रुवेण हविषाव सोमं नयामसि । यथा नः सर्वमिज्जगदक्ष्मꣳ सुमना असत । यथा न इन्द्र इद्विशः केवलीः सर्वाः समनसः करत् । यथा नः सर्वा इद्दिशोऽस्माकं केवलीरसन् इति । [ १४·९ – उक्ता ध्रुवस्य चर्या । ]

## १६२. होतृचमसप्रचारः

**बौधायनश्रौ०—**

[ ८·१५ ]– प्रसिद्धमुक्थं प्रतिगीर्य प्राङेत्योद्यच्छत एतꣳ होतृचमसम् । अनूद्यच्छन्ते चमसान् । अथाश्रावयति ओश्रावय, अस्तु श्रौषट्, उक्थशा यज सोमानाम् इति । वषट्कृतानुवषट्कृते

द्विर्जुहोति। तथैव द्विर्द्विः सर्वांश्चमसाञ्जुहति। अथ भक्षैः प्रत्यञ्च आद्रवन्ति। अनुसवनभक्षः अग्निना वैश्वानरेण मरुद्भिः पीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति। होतृचमसमेवैते त्रयः समुपहूय भक्षयन्ति। यथाचमसं चमसान्। हिन्व मे इत्यात्मानं प्रत्यभिमृशन्ते। नाप्याययन्ति चमसान्। सर्वभक्षा मार्जयन्ते। अथैतांश्चमसानद्भिः पूरयित्वोत्तरेणाहवनीयं प्राचो वोदीचो वायातयति। [२१.२४-चमसानामायातन इति॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः॥] तेषु त्रींस्त्रींश्च दूर्वाग्रन्थीन् प्रास्यत्येकैकं च दर्भपुञ्जीलम्। [२१.२४—तेषु त्रींस्त्रींश्च दूर्वाग्रन्थीन् प्रास्यत्येकैकं च दर्भपुञ्जीलमिति॥ सूत्रं बोधायनस्य॥ अद्भिरेवैते दक्षाः स्युरिति शालीकिः॥] अथ उक्थं वाचीन्द्राय इत्याह तृतीयसवनं प्रतिगीर्य। प्रशास्तः प्रसुहि इति। सर्पत इत्याह प्रशास्ता। संतिष्ठते तृतीयसवनम्॥

## यज्ञपुच्छम्

## १६३. अनूयाजादिहारियोजनग्रहप्रचारान्तम्

बौधायनश्रौ०—

१. [८.१६]—अथ संप्रैषमाह अग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन् प्रस्थास्यामः समिधमाधायाग्नीदग्नीन् सकृत्सकृत् संमृड्ढि इति। आहरन्त्येतानाग्नीध्रादौपयजानङ्गारान्। [२१.२४-औपयजेष्विति॥ सूत्रं शालीकेः॥ अत्रो ह स्माह बोधायनः आग्नीध्रादग्नीषोमीयस्य च सवनीयस्य चाङ्गारानाहरेच्छामित्रान्मैत्रावरुण्यै वशाया इति॥] तानग्रेण होतारं निवपति। उपसीदत्युपयष्टा गुदतृतीयेन। अथाध्वर्युः पृषदाज्यं विहृत्य जुह्वां समानीयात्याक्रम्याश्राव्याह देवेभ्यः प्रेष्य इति। वषट्कृते जुहोति। प्रेष्य प्रेष्य इति। एकादशानूयाजानिष्ट्वोदङ्ङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा वाजवतीभ्यां स्रुचौ व्यूहति। शंयुना प्रस्तरपरिधि संप्रकीर्य संप्रस्राव्य स्रुचौ विमुच्योन्नेतारमाह उन्नेतर्ग्रहस्व प्रचर इति।

२. [८.१६]—तच्छ्रुत्वोन्नेता द्रोणकलश आग्रयणतृतीयं ग्रहं गृह्णाति उपयामगृहीतोऽसि हरिरसि हारियोजनो हर्योः स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य हरिवन्तं ग्रहं गृह्णामि इति। बर्हिषी अन्तर्धाय धानाभिः श्रीणाति हरीः स्थ हर्योर्धानाः इति। अपोद्धृत्य बर्हिषी अथैनमादायोपोत्तिष्ठन्नाह इन्द्राय हरिवते धानासोमानामनुब्रूहि इति। शीर्षन्नधि निधाय विक्रम्याश्राव्याह इन्द्राय हरिवते धानासोमान् प्रस्थितान् प्रेष्य इति। वषट्कृते जुहोति सहसोमा इन्द्राय स्वाहा इति। अनुवषट्कृते हुत्वा हरति भक्षम्॥

## १६५. धानाभक्षणादि

बौधायनश्रौ०—

[८.१६-१८]—स यावन्त ऋत्विजस्तेभ्य उन्नेता धाना व्यावपति। त उन्नेतर्युपहवमिष्ट्वैकैकामन्वस्यन्ते। मनसा संबाधते इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति। अथैना निर्णिज्योत्तरवेद्यां संनिवपन्ति आपूर्याः स्था मा पूरयत प्रजया च धनेन च इति। निवपन्नेव यजमानस्तिस्रो धानाः सचते। अथ

याचति स्फ्यमुदपात्रं बर्हिरिति। एतत् समादायाह एहि यजमान इति। जघनेन दक्षिणेन हविर्धाने परीत्य दक्षिणेन मार्जालीयं धिष्णियꣳ स्फ्येनोद्धत्यावोक्ष्य दक्षिणाग्रं बर्हि स्तीर्त्वाद्भिर्मार्जयति मार्जयन्तां पितरो मार्जयन्तां पितामहा मार्जयन्तां प्रपितामहाः इति। अथ तिस्रो धाना ददाति एतत्ते ततासौ ये च त्वामनु, एतत्ते पितामहासौ ये च त्वामनु, एतत्ते प्रपितामहासौ ये च त्वामनु इति। अत्र पितरो यथाभागं मन्दध्वम् इत्युक्त्वोदङ् पर्यावृत्यात्र षड्ढोतारं व्याचष्टे। अथाभिपर्यावृत्य तथैवाद्भिर्मार्जयित्वैतेनैव यथेतमेत्याग्नीध्रीये द्वे स्रुवाहुती जुहोति यन्म आत्मनो मिन्दाभूत्, पुनरग्निश्चक्षुरदात् इति द्वाभ्याम्। [ २१·२४—मिन्दाहुत्योर्होम इति॥ सूत्रमाचार्ययोः॥ अत्रो ह स्माहौपमन्यवः पुरस्तान्मिन्दाहुती जुहुयात्। मिन्दाहुती हुत्वा हारियोजनं ग्रहं गृह्णीयादिति॥ ] [ २५·२४—यथो एतदौपमन्यवस्य कल्पं वेदयन्ते पुरस्तान्मिन्दाहुती जुहुयात् मिन्दाहुती हुत्वा हारियोजनं ग्रहं गृह्णीयादिति। ] अथाहवनीये शाकलैश्चरन्ति देवकृतस्यैनसोऽवयजनमसि स्वाहा, मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा, पितृकृतस्यैनसोऽवयजनमसि स्वाहा इति। [ २१·२४—शाकलैश्चर्यायां इति॥ सूत्रꣳ शालीकेः॥ अत्रो ह स्माह बोधायनो यावन्त्येनाꣳसि कृतान्यभिविजानीयात् तेषामवयजनमसीत्यभ्यादध्यादिति॥ ] अथाप्सुषोमान् पर्युपविश्यावद्रेण भक्षयन्ति अप्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो अश्वसनिर्यो गोसनिस्तस्य ते पितृभिर्भक्षंकृतस्योपहूतस्योपहूतो भक्षयामि इति। अथैना निनीयोपोत्थायादित्यमुपतिष्ठन्ते अपाम सोमममृता अभूमादर्श्म ज्योतिरविदाम देवान्। किमस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य इति। यद्यु वा अस्तमित आदित्यो भवत्याहवनीयमेवैतेन यजुषोपतिष्ठन्ते। [ २१·२४—आदित्यस्योपस्थान इति॥ सूत्रं बोधायनस्य॥ आहवनीयमेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः॥ ] अथाग्नीध्रं हुत्वाग्नीध्रे दधिद्रप्सान् भक्षयन्ति दधिक्राव्णो अकारिषम् इति। अथ सख्यविसर्जनं जपन्ति उभा कवी युवाना सत्या त धर्मणस्पती। सत्यस्य धर्मणस्पते वि सख्यानि सृजामहे इति। अथाध्वर्युः प्रदक्षिणमावृत्य प्रत्यङ्ङुद्रुत्य पत्नीः संयाज्य प्राङेत्य ध्रुवामाप्याय्य षडृग्मियाणि जुहोति धाता रातिः सवितेदं जुषन्ताम् इति। त्रीणि यजूꣳषि यज्ञ यज्ञं गच्छ, एष ते यज्ञो यज्ञपते, देवा गातुविदः इति॥

## १६७. अवभृथोपक्रमः

**बौधायनश्रौ०—**

[ ८·१८–१९ ]—अथ स्रुचि चतुर्गृहीतं गृहीत्वायुर्दा दशमीं जुहोति आयुर्दा अग्ने हविषो जुषाणः इति। [ १४·१३—अथ वै भवत्यानूच्यते वा एतद्यजमानोऽग्निभ्यां यदेनयोः शृतंकृत्याथान्यत्रावभृथमवैति। आयुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यञ्जुहुयादिति। सोऽवभृथमवैष्यन्नायुर्दा दशमीं जुहोति आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि। घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमꣳ स्वाहा इति। आहुत्यैवैनां शमयति नार्तिमार्च्छति यजमान इति ब्राह्मणम्। एतस्मिन् काले चात्वाले यजमानः कृष्णविषाणां प्रास्यति इन्द्रस्य योनिरसि यज्ञस्य त्वा योनौ सादयामि इति वा तूष्णीं वा। [ २१·२४—कृष्णविषाणायाः प्रासन इति॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः[1]॥ ] अथ प्रतिप्रस्थाता पत्नीमुदानयति सा चात्वाले शङ्कुं प्रास्यति तूष्णीम्। अत्रैतमवभृथꣳ सꣳसादयन्त्यग्रे-

१. नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्येदिति शालीकेरभिप्रायः। द्रष्टव्यं पृ. ५८२।

णाग्नीध्रमुच्छ्राय्यां वा चर्मणि वा । [ २१·२४—अवभृथ इति ॥ सूत्रमाचार्ययोः ॥ अत्रो ह स्माहौपमन्यवोऽत्रैवैनꣳ स्थण्डिले कुम्भमिश्रं प्ररोप्य स्थालीभिश्च ग्रावोवायव्येन चावभृथमवेयादिति ॥ ] पत्नीशालादाददते वारुणमुपस्तीर्णाभिघारितमाज्यस्थालीꣳ सस्रुवाꣳ स्रुचं बर्हिः प्रतिवसनीये वाससी औदुम्बरीꣳ राजासन्दीम् । सदस औदुम्बरीꣳ स्थूणां मैत्रावरुणदण्डम् । हविर्धानाभ्यां पूतभृदाधवनीयौ चमसानधिषवणं चर्माधिषवणे फलके षट्छङ्कून् ग्रावोवायव्यानि स्थालीर्द्रोणकलशं दशापवित्रे ऋजीषमित्येतत् सह कृष्णाजिनेन यत्किञ्चित् सोमलिप्तं भवति । अथ वै भवति परा स्थालीरस्यन्त्युद्वायव्यानि हरन्तीति । एतत् समादाय प्रस्तोतारमाह प्रस्तोतः साम गाय इति । साम्ना प्रस्तोतान्ववैति । त्रिर्निधनमुपैति । पुरुषः पुरुषो निधनमुपैतीति ब्राह्मणम् । अथान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामन्ति उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ । अपदे पाद प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् इति । विषुवति द्वितीयं निधनमुपयन्ति । अपः पराख्याय वाचयति शतं ते राजन् भिषजः सहस्रमुर्वी गम्भीरा सुमतिष्टे अस्तु । बाधस्व द्वेषो निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् इति ॥ उदकान्ते तृतीयं निधनमुपयन्ति । अथापामन्त अभितिष्ठन्ति अभिष्ठितो वरुणस्य पाशः इति ॥

## १६९. अवभृथेष्टिः

बौधायनश्रौ०—

[ ८·१९-२० ]—अथाप्सु बर्हिः प्रास्यति अग्नेरनीकमप आ विवेश । अपां नपात् प्रतिरक्षन्नसुर्यं दमेदमे समिधं यक्ष्यग्ने इति । अथैनत् स्रुवाहुत्याभिजुहोति प्रति ते जिह्वा घृतमुच्चरण्येत् स्वाहा इति । अथ स्रुचि चतुर्गृहीतं गृहीत्वापबर्हिषश्चतुरः प्रयाजान् यजति । अथ अग्नये, सोमाय इत्याज्यभागाभ्यां चरति । अथोपस्तीर्य पूर्वार्धात् पुरोडाशस्यावद्यन्नाह वरुणायानुब्रूहि इति । पूर्वार्धादवदायापरार्धादवद्यति । अभिघारयति । प्रत्यनक्ति । अत्याक्रम्याश्राव्याह वरुणं यज इति । वषट्कृते जुहोति । अथोपस्तीर्य सर्वश एव वारुणमवद्यन्नाह अग्नीवरुणाभ्याꣳ स्विष्टकृद्भ्यामनुब्रूहि इति । द्विरभिघारयति । आश्राव्याह अग्नीवरुणौ स्विष्टकृतौ यज इति । वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति । अथ स्रुचि चतुर्गृहीतं गृहीत्वापबर्हिषौ द्वावनूयाजौ यजति । अथाप्सु स्रुचं प्रतिष्ठापयति समुद्रे ते हृदयमप्स्वन्तः इति । अथैनामद्भिः पूरयति सं त्वा विशन्त्वोषधीरुतापः इति । अप्स्वेवापो जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमोवाके विधेम स्वाहा इति । अत्रैतमवभृथꣳ संप्रकिरन्ति यत्किञ्चित् सोमलिप्तं भवति अवभृथ निचङ्कुण निचेरुरसि निचङ्कुणाव देवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहि इति । [ २१·२४—ग्रावोवायव्यस्य प्रप्लावन इति ॥ सूत्रं बोधायनस्य प्रक्षाल्योदाहरेयुरिति शालीकिः ॥ प्रक्षाल्यैवैता स्थालीरुदाहरेयुः॥ तास्वेतानि देविकाहवीꣳषि श्रपयेयुरिति बोधायनः ॥ प्रप्लावयेयुरेवेति शालीकिः॥ ] अथाञ्जलिनाप उपहन्ति सुमित्रा न आप ओषधयः सन्तु इति । तां दिशं निरुक्षति यस्यामस्य दिशि द्वेष्यो भवति दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः इति । अथाप उपस्पृश्यात्रैतदृजीषं प्रप्लावयन्ति सह कृष्णाजिनेन देवीराप एष वो गर्भस्तं वः सुप्रीतꣳ सुभृतमकर्म देवेषु नः सुकृतो ब्रूतात् इति । [ २१·२५—कृष्णाजिनस्य प्रप्लावन इति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माह बोधायनः कृष्णाजिनमुन्मुच्याद्भिरभ्युक्ष्य पुत्राय वान्तेवासिने वा दद्यात् स्रुचोपधानं वैनत् कुर्वीत । अपि वैनेन पुनर्दीक्षेत । अपि वैनेन पुनर्यजेतेति ॥ ] बिन्दूनुपैव स्पृशति । न

भक्षयति । अथानुपमजन्तावन्योन्यस्य पृष्ठे धावयतो विस्रस्य मेखले प्रतिवसनीये वाससी परिधायोन्नेतारमाह उन्नेतरुन्नो नय इति । तिसृभिरुद्वतीभिरुदायन्ति उद्वयं तमसस्परि, उदु त्यम्, चित्रम् इति । अथापामन्तं प्रतियौति प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाशः इति । अथाप्रतीक्षमायन्ति । वरुणस्यान्तर्हित्यै । प्रपथे समिधः कुर्वते एधोऽस्येधिषीमहि इति । एत्याहवनीयेऽभ्यादधति[1] समिदसि तेजोऽसि तेजो मयि धेहि इति । अथाहवनीयमुपतिष्ठन्ते अपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आगमं तं मा सꣳसृज वर्चसा इति । व्यवच्छिन्दन्ति परिश्रयणानि । विवर्तयन्ति हविर्धाने दक्षिणेन दक्षिणमुत्तरेणोत्तरम् ॥

## १७१. उदयनीयेष्टिः

बौधायनश्रौ०—

[८·२१]—यावदेवात्राध्वर्युश्चेष्टति तावदेष प्रतिप्रस्थाता प्रायणीयस्य निष्कास उदयनीयमभिनिर्वपति । एष एव वेद एतन्मेक्षणमेतद्बर्हिः । [२१·२५—उदयनीयस्य बर्हिषः सꣳस्कार इति ॥ असिदादानप्रभृतीन् मन्त्रान् साधयेदिति बोधायनः ॥ शुल्बप्रभृतीनिति शालीकिः ॥ संभरणप्रभृतीनित्यौपमन्यवः ॥ उदयनीयस्य निर्वपण इति ॥ स्रुचि वावधाय क्षामकाषꣳ स्थाल्यां वा सक्षामकाषायां निर्वपेदिति ॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः ॥] अथैतां चरुस्थालीꣳ सक्षामकाषामुत्खिद्य निर्णिज्य तयोदयनीयꣳ श्रपयति । [२१·२५—उदयनीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बोधायनः ॥ अप्स्विति शालीकिः ॥ चरोरनुपरिहरण इति ॥ अनुपरिहरेदिति बोधायनः ॥ नानुपरिहरेदिति शालीकिः ॥ उदयनीयस्यासादन इति ॥ षड्ढोत्रासादयेदिति बोधायनः ॥ तूष्णीमिति शालीकिः ॥ उदयनीयस्य चर्याया इति ॥ सूत्रं बोधायनस्य ॥ आहवनीय एवोदयनीयेन चरेदिति शालीकिः ॥] तस्मिꣳस्तथैव श्रप्यमाणे जघनेन गार्हपत्यमौपसदायां वेद्याꣳ स्तम्बयजुर्हरति । इदमेव प्रसिद्धं पौरोडाशिकम् । त्रिर्यजुषा तूष्णीं चतुर्थम् । पूर्वं परिग्राहं परिगृह्णाति । करणं जपति । उद्धन्ति । उद्धतादाग्नीध्रस्त्रिर्हरति । समानं कर्म यथा प्रायणीयस्य[2] । एतावदेव नाना । पथ्यामनुत्र स्वस्तिं प्रथमां यजति तामिहोपोत्तमां यजति । नो तु दिशश्चयवन्ते । अथ पुरस्तात् स्विष्टकृतः स्रुवाहुतिमुपजुहोति यास्ते विश्वाः समिधः सन्त्यग्ने इति । [१४·२१—उक्तोदयनीयस्य ।] उपस्तरणाभिघारणाभ्यामेवैतद् ध्रुवाज्यं विच्छिꣳषन्ति । समिष्टयजुरु हैके जुह्वति । शंय्वन्त उदयनीयः संतिष्ठते । अत्रैतत् पूर्णपात्रमन्तर्वेदि निनयति ॥

## १७४. अनूबन्ध्यायागः

बौधायनश्रौ०—

[८·२१]—अथ पृषदाज्यवन्त्याज्यानि गृहीत्वा मैत्रावरुणीं वशामुपाकरोति । [२१·२५—अनूबन्ध्यस्य करण इति ॥ सूत्रं बोधायनस्य ॥ मैत्रावरुण्यामिक्षया यजेतेति शालीकिः ॥ अत्रो ह स्माहौपमन्यवोऽजं पशुमप्यत्रालभेत । एकादशप्रयाजं त्वेव तन्त्रꣳ संतिष्ठापयिषेदिति ॥] तस्यै प्रसिद्धं वपया चरित्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते । नखानि निकृन्तते । सर्वसꣳस्थां पशोः कुर्वन्ति । [२५·२६—अथ यदि पशुरुपक्लृप्तः स्यात् पाणी

---

१. एवं केषुचिल्लिखितपुस्तकेषु । '०दधाति' इति मुद्रितपुस्तकपाठः । २. द्रष्टव्यं पृ. ५२३–५२४ ।

संमृशीत । परिस्तृणीयात् । पात्राणि निर्णिज्य संसादयेत् । प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्षेत् । आज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यमाददीत । संप्रैषप्रभृति पाशुबन्धिकं कर्म तायते । सिद्धमत ऊर्ध्वम् । ] [ १४·१३—उक्तं बर्हिषः पर्युपोषणम् । उक्तं सक्तुहोमस्य । अथ वै भवति यदि मिश्रमिव चरेदञ्जलिना सक्तून् प्रदाव्ये जुहुयादिति । ] [ १४·२१—उक्तं यूपस्योपस्थानम् । ] अथ यदि वशां न लभते मैत्रावरुणीमामिक्षां गार्हपत्ये श्रपयित्वा तथाहवनीये प्रचरति । [२१·२६—आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बोधायनः ॥ तूष्णीकेति शालीकिः ॥ मैत्रावरुण्यै परिधिष्विति ॥ सूत्रं शालीकेः ॥ अत्रो ह स्माह बोधायनः पूर्वे स्थूणे सदसो वा हविर्धानयोर्वा भित्त्वा वैदलकान् परिधीन् मैत्रावरुण्यै कुर्यादिति ॥ ] साज्यभागप्रतिपत्केडान्ता संतिष्ठते ॥ [ २५·२६—यथो एतच्छालीकेः कल्पं वेदयन्ते मैत्रावरुण्यामिक्षया यजेतेति तस्यै सह सवनीयैर्वत्सापाकरणं सह सायंदोहम् । उदयनीयेन चरित्वा पाणी संमृशीत । परिस्तृणीयात् । पात्राणि निर्णिज्य संसादयेत् । प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्षेत् । अथ प्रातर्दोहं धेनूर्दोहयेत् । अथैनां गार्हपत्ये श्रपयित्वानभिघारितामुद्वासयेत् । अथाज्यं निर्वपेत् । अथाज्यमधिश्रयेत् । उभयं पर्यग्नि कृत्वाहवनीये वैदलकान् परिधीन् परिधायाथैनां पुनरधिश्रित्याभिघारितामुद्वास्यान्तर्वेद्यासादयेत् । अथ अग्नये, सोमाय इत्याज्यभागाभ्यां चरेत् । आज्यभागान्तं कर्म कृत्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते नखानि निकृन्तते । अथाज्यभागप्रतिपत्केडान्ता संतिष्ठते । ]

## १७७. उदवसानीयेष्टिः

बौधायनश्रौ०—

[ ८·२२ ]—अथारण्योरग्नीन् समारोह्योदवसाय मथित्वाग्नीन् विहृत्याग्नेयमष्टाकपालमुदवसानीयामिष्टिं निर्वपति । [ २१·२६—उदवसान इति ॥ सूत्रं बोधायनस्य ॥ पूर्णाहुत्यैवोदवस्येदिति शालीकिः ॥ ] श्रपयित्वासादयति । अन्वाहार्यमासाद्यानड्वाहं ददाति । [ २१·२६—दक्षिणायै दान इति ॥ सूत्रं बोधायनस्य ॥ नात्राकामनियतं देयमिति शालीकिः ॥ ] सा प्रसिद्धेष्टिः संतिष्ठते । [ १४·२१—उक्तोदवसानीयेष्टिः । ] [ २९·२६—अथेयमुदवसानीयेष्टिः भवति पुनराधेयधर्मा हि । संकृन्महावेद्यै स्तम्बयजुषो हरणम् । असंनद्धा पत्नी यज्ञपुच्छमन्वास्ते । ]

## १७८. उदवसानीयेष्टिहौत्रम्

बौधायनश्रौ०—

[ ८·२२ ]—तस्याः पञ्चदश सामिधेन्यः । पञ्च प्रयाजाः । वार्त्रघ्नावाज्यभागौ । अथ हविषः अग्ने तमद्य, अभा ह्यग्ने इति । त्रिष्टुभौ संयाज्ये ॥

## १८०. देविकाहवींषि

बौधायनश्रौ०—

[ ८·२२ ]—अथारण्योरग्नीन् समारोह्योद्वसाय मथित्वाग्नीन् विहृत्य पूर्वाणि देविकाहवींषि निर्वपत्यनुमत्यै चरुं राकायै चरुं धात्रे पुरोडाशं द्वादशकपालमिति। अन्वाहार्यमासाद्य वत्सतरीं ददाति। सा प्रसिद्धेष्टिः संतिष्ठते। अथ तदानीमेव पृष्ठ्यां स्तीर्त्वापः प्रणीयोत्तराणि देविकाहवींषि निर्वपति सिनीवाल्यै चरुं कुह्वै चरुं धात्रे पुरोडाशं द्वादशकपालमिति। अन्वाहार्यमासाद्य वत्सतरं ददाति। सा प्रसिद्धेष्टिः संतिष्ठते। [ २१·२६-देविकाहविषां करण इति॥ सूत्रमौपमन्यवीपुत्रस्य॥ अत्रो ह स्माह बोधायन-स्त्रीण्यनूबन्ध्यस्य पशुपुरोडाशमनुवर्तेरंस्त्रीण्युदवसानीयामिति॥ सर्वाण्येवानूबन्ध्यस्य पशुपुरोडाशमनुवर्तेरन्निति शालीकिः॥ आज्येनैव देविका यजेतेत्याञ्जीगविः॥ ] अथारण्योरग्नीन् समारोह्य स्वान्यग्न्यायतनान्यध्यवसाय मथित्वाग्नीन् विहृत्य सायंप्रातरग्निहोत्रे प्रतिजुहोति। [ २१·२६—अग्निभिः प्रत्यवसान इति॥ अजस्रैः प्रत्यवस्येदिति बोधायनः॥ अरण्योः समारोह्येति शालीकिः॥ अग्निहोत्रयोः प्रतिहोम इति॥ प्रतिजुहुयादिति बोधायनः॥ न प्रतिजुहुयादिति शालीकिर्न प्रतिजुहुयादिति शालीकिः॥ ] [ २८·१२—औत्तरवसन्तज्योतिष्टोमस्य कालात् पूर्ववसन्तज्योतिष्टोमस्य कालो नातीयात्। समस्तस्य संवत्सरस्याभिज्यासुत्यै। ] संतिष्ठतेऽग्निष्टोमः संतिष्ठतेऽग्निष्टोमः॥

---

# २. एकादशिनी

तैसं [ ६.६.४–६ ]––स्फ्येन वेदिमुद्धन्ति रथाक्षेण वि मिमीते यूपं मिनोति ० वेद्यन्तस्य संधौ मिनोति ० उपरसंमितां मिनुयात् पितृलोककामस्य रशनसंमितां मनुष्यलोककामस्य चषालसंमितामिन्द्रियकामस्य सर्वान्त्समान् प्रतिष्ठाकामस्य ये त्रयो मध्यमास्तान्त्समान् पशुकामस्य ० व्यतिषजेदितरान् ० यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसीयाꣳसम् ० दक्षिणार्ध्यं वर्षिष्ठं मिनुयात् सुवर्गकामस्याथ ह्रसीयाꣳसम् ० यदेकस्मिन् यूपे द्वे रशने परिव्ययति ० यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेत् ० यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्र वेष्टयेत् ० यद्दक्षिणत उपशय उपशये ० सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशुः ० असौ ते पशुः इति निर्दिशेद्यं द्विष्याद्यमेव द्वेष्टि तमस्मै पशुं निर्दिशति । यदि न द्विष्यात् आखुस्ते पशुः इति ब्रूयात् ० यद्दश यूपा भवन्ति ० य एकादशः ० यत् पात्नीवतं मिनोति ० यदेषैकादशिनी भवति ० प्रैवाग्नेयेन वापयति मिथुनꣳ सारस्वत्या करोति रेतः सौम्येन दधाति प्र जनयति पौष्णेन बार्हस्पत्यो भवति ० वैश्वदेवो भवति ० इन्द्रियमेवैन्द्रेणाव रुन्धे विशं मारुतेनौजो बलमैन्द्राग्नेन प्रसवाय सावित्रो निर्वरुणत्वाय वारुणः ० पुरस्तादैन्द्रस्य वैश्वदेवमा लभते ० ऐन्द्रमालभ्य मारुतमा लभते ० यदि कामयेत योऽवगतः सोऽप रुध्यतां योऽपरुद्धः सोऽव गच्छत्वित्यैन्द्रस्य लोके वारुणमा लभेत वारुणस्य लोक ऐन्द्रम् ० यदि कामयेत प्रजा मुह्येयुरिति पशून् व्यतिषजेत् ० दक्षिणत उदञ्चमा लभतेऽपवाहतोऽपाम् ० यत् पर्यग्निकृतं पात्नीवतमुत्सृजति ० यदाज्येन पात्नीवतꣳ सꣳस्थापयति ० इष्टं वपया भवत्यनिष्टं वशयाथ पात्नीवतेन प्र चरति तीर्थ एव प्र चरति ० त्वाष्ट्रो भवति ० ॥

मैसं [ ३.१०.५ ]––ये के चार्वाचीनमेकादशिन्याः पशवस्तानुत्तरमर्धꣲ यूपस्य नियुञ्ज्यात् ० ॥

[४.७.८–४.८.१]––कृष्णशीर्षाग्नेयो मेषी सारस्वती बभ्रुः सौम्यः श्यामः पौष्णः शितिपृष्ठो बार्हस्पत्यः पिशङ्गो वैश्वदेवो वृष्णिरैन्द्रः कल्माषो मारुतः सꣲहित ऐन्द्राग्नोऽधोरामः सावित्रः पेत्वो वारुणः ० य एवं विद्वानेतामेकादशिनी विबध्नीते ० यदाग्नेयः सौम्यो बार्हस्पत्यस्ते सार्धमालभ्यन्ते ० यदाग्नेयश्च बार्हस्पत्यश्च सौम्यमभितः ० स्फ्येन परिलिखति रथाक्षेण विमिमीते यूपो भवति ० तिरश्चीं मिनोति ० दक्षिणत उन्नता मेतव्या ० त्रयो मध्यतः समा मेतव्याः ० यं कामयेत पितृलोकमृध्नुयादिति तस्योपरसंमितां मिनुयात् ० यं कामयेत मनुष्यलोकमृध्नुयादिति तस्य मध्यमसंमितां मिनुयात् ० यं कामयेत देवलोकमृध्नुयादिति

तस्य चषालसंमितां मिनुयात् ० यस्य पश्चादुपस्थः पुरस्तान्निर्णतं तं मिनुयात् ० यं कामयेत भ्रातृव्याय लोकं कुर्यात् ० यजमानं निर्बाधेतेति ० अथ यस्य परस्तादुपस्थः पश्चान्निर्णतं तं मिनुयात् यं कामयेत यजमानाय लोकं कुर्याद् भ्रातृव्यं निर्बाधेतेति ० सर्वेऽग्निष्ठाः कार्या या अग्निष्ठा अश्रयस्ता अग्निष्ठाः कार्याः ० अथ य एष द्वादशः ० यं द्विष्यात् तं ब्रूयात् असौ ते पशुः इति ० यद्यभिचरेत् ० इदमहममुमामुष्यायणममुष्याः पुत्रमिन्द्रवज्रेणाभिनिदधामि इत्यभिनिदध्यात् ० पात्नीवतस्त्वाष्ट्रः स्यात् ० अवाचीनं नाभ्याः कार्यः ० ॥

कासं [ २९.८–३०.१ ]—आग्नेयस्सौम्यो बार्हस्पत्यस्ते समानमर्धमालभ्यन्ते ० येऽग्निष्ठात्त्रयस्तान् समान् कुर्यात्० इतरौ तौ ऋधीयांसौ कुर्यात्० यौ परौ ता अग्निष्ठेन समौ० आ परार्धादेवं मिनुयात् पापवसीयसस्य व्यावृत्त्यै० येऽग्निष्ठादुदीचीनं तान् वर्षीयसः कुर्याद्यदि कामयेत विट् क्षत्रादोजीयसी स्यादिति० येऽग्निष्ठाद्दक्षिणात् तान् वर्षीयसः कुर्याद्यदि कामयेत क्षत्रं विश ओजीयस्स्यादिति० सर्वान् समान् कुर्याद्यदि कामयेत पापवसीयसं स्यादिति० तिरश्ची मीयते० ऊर्ध्वा मीयन्ते० न यूपं बहिर्वेदि मिनुयान्न वेद्या अतिरेचयेत्० समां वेद्यन्तेन मिनुयात्० उपरसंमितां मिनुयाद्यदि कामयेत पितृलोक ऋध्नुयादिति रशना-संमितां मिनुयाद्यदि कामयेत मनुष्यलोक ऋध्नुयादिति० चषालसंमितां मिनुयाद्यदि कामयेत देवलोक ऋध्नुयादिति० रथाक्षेण मिमीते० सर्वेऽग्निष्ठाः कार्या या अग्निष्ठा अश्रयस्ता अग्निमभिपर्यूहेत्० द्वे द्वे रशने यूपमृच्छतः० उपशयो द्वादशो भवति० तं दक्षिणतः परिहृत्य निदधाति ० यद्यभिचरेत् पुरुषपशुं कुर्यात् इदमहममुमामुष्यायणममुष्याः पुत्रं नियुनज्मि इति रशनां यूपेऽधिन्यस्येत् ० यदि नाभिचरेदारण्यं पशुं निर्दिशेत् तस्य नाश्नीयात्० यदेकादशिन्या वेदिर्मीयते ० यदुपशयो गुहेव शये ० यो रिरिचान इव मन्येत स एतामेका-दशिनीमाहरेत् ० आग्नेयीं सारस्वतीं सौम्यं बार्हस्पत्यं तान् सहालभेत ब्रह्मवर्चसकामः प्रजाकामः पशुकामः पुरोधाकामः ० अथ पौष्णः ० अथैन्द्राग्नोऽथैन्द्रः ० अथ वैश्वदेवोऽथ मारुतः ० सावित्रः ० वारुणः ० प्रजननं वै पात्नीवतः ० त्वाष्ट्रो भवति ० यत् पर्यग्निकृतं पात्नीवतमुत्सृजति ० संस्थाप्या३ न संस्थाप्या३ इति मीमांसन्ते ० संस्थाप्य एव ० यदि संस्थापयेद्यावन्ति पशोरवदानानि तावन्त्याज्यस्यावद्येत् ० ॥

वासं—

एष ते पृथिव्यां लोक आरण्यस्ते पशुः ॥ ६.६

माशब्रा [ ३.७.१.२२ ]—तस्माद्यदि यूपैकादशिनी स्यात् स्वं स्वमेवावगूहेद-विपर्यासम् ० ॥

[ ३. ७. २ ]—तस्माद् यूपैकादशिनी भवति। द्वादश उपशयो भवति वितष्टः। तं दक्षिणत उपनिदधाति ० तं निदधाति एष ते पृथिव्यां लोक आरण्यस्ते पशुरिति ० तद्द्वयं यूपैकादशिन्यै संमयनमाहुः। श्वः सुत्यायै ह न्वेवैके संमिन्वन्ति। प्रकुब्द्रतायै चैव श्वः सुत्यायै यूपं मिन्वन्तीत्यु च। तदु तथा न कुर्यात्। अग्निष्ठमेवोच्छ्रयेत् ० तस्मादु प्रातरेवोच्छ्रयेत्। स य उत्तरोऽग्निष्ठात् स्यात् तमेवाग्र उच्छ्रयेत्। अथ दक्षिणम्। अथोत्तरम्। दक्षिणार्ध्यमुत्तमम् ० अथो इतरथाहुः। दक्षिणमेवाग्रेऽग्निष्ठादुच्छ्रयेत्। अथोत्तरम्। अथ दक्षिणम्। उत्तरार्ध्यमुत्तमम् ० स यो वर्षिष्ठः स दक्षिणार्ध्यः स्यात्। अथ ह्रसीयान्। अथ ह्रसीयानुत्तरार्ध्यो ह्रसिष्ठः ० अथ पत्नीभ्यः पत्नीयूपमुच्छ्रयन्ति ० तत् त्वाष्ट्रं पशुमालभते ० मुष्करो भवति ० तन्न सꣳस्थापयेत्। पर्यग्निकृतमेवोत्सृजेत् ०॥

[ ३. ९. १ ]– तस्मै कमेकादशिन्या यजेत ० स आग्नेयं प्रथमं पशुमालभते ० अथ सारस्वतम् ० अथ सौम्यम् ० अथ पौष्णम् ० अथ बार्हस्पत्यम् ० अथ वैश्वदेवम् ० अथैन्द्रम् अथ मारुतम् ० अथैन्द्राग्नम् ० अथ सावित्रम् ० अथ वारुणमन्तत आलभते ० तस्माद्यदि यूपैकादशिनी स्यादाग्नेयमेवाग्निष्ठे नियुञ्ज्यात्। अथेतरान् व्युपनयेयुर्यथापूर्वम्। यद्यु पश्वेकादशिनी स्यादाग्नेयमेव यूप आलभेरन्। अथेतरान् यथापूर्वम्। तान् यत्रोदीचो नयन्त्याग्नेयमेव प्रथमं नयन्ति। अथेतरान् यथापूर्वम्। तान् यत्र निविध्यन्त्याग्नेयमेव प्रथमं दक्षिणार्ध्यं निविध्यन्ति। अथेतरानुदीचोऽतिनीय यथापूर्वम् ० आग्नेयस्यैव प्रथमस्य वपया प्रचरन्ति। अथेतरेषां यथापूर्वम् ० आग्नेयेनैव प्रथमेन प्रचरन्ति। अथेतरैर्यथापूर्वम्॥

**वाकासं [ ६.७ ] = वामासं**

काशब्रा [ ४.७.१.२० ] = माशब्रा ३.७.१.२२

[४.७.२]---तद्धैके य एवाग्निष्ठादुत्तरतस्तमग्र उच्छ्रयन्त्यथ दक्षिणमथोत्तरम्। यथा दक्षिणार्ध्यमुत्तममुच्छ्रयेदेवं तथा०तदु तथा न कुर्यात्। य एवाग्निष्ठाद्दक्षिणस्तमेवाग्र उच्छ्रयेत्॥

[ ४.९.१ ] = माशब्रा ३.९.१

शांब्रा [ १०.२ ]—अथ यद्येकयूप एकादशिनीमालभेरन् पशौपशावेवाध्वर्युः संप्रेष्यति पशौपशावेव युवा सुवासाः परिवीत आगादिति सैव परिधानीया सा परिवीयमाणाय। इति न्वेकयूपे। अथ कथं यूपैकादशिन्यामिति। एता एव सप्त सप्त दशभ्योऽनुब्रूयात्। अथ यमुत्तमं संमिन्वन्ति तस्मिन् यत्सूक्तस्य परिशिष्येत तदनुवर्तयेत् पुरस्तात् प्रगाथस्य० युवा सुवासाः परिवीत आगात् इति सैव परिधानीया ०॥

[ १२.७–८ ]—एकादशिनीं त्वेवान्वायातयेयुरिति सा स्थितिर्यदि पृष्ठ्योपायं भवति ० तस्यै वा एतस्या एकादशिन्यै याज्यापुरोनुवाक्याश्चैव नाना मनोतायै च हविषोऽथेतरत् समानम्। आग्नेयः प्रथमः ० सारस्वतो द्वितीयः ० सौम्यस्तृतीयः ० पौष्णश्चतुर्थः ० बार्हस्पत्यः पञ्चमः ० वैश्वदेवः षष्ठः ० ऐन्द्रः सप्तमः ० मारुतोऽष्टमः ० ऐन्द्राग्नो नवमः ० सावित्रो दशमः ० वारुण एकादशः ०॥

# एकादशिनी

**बौधायनश्रौ०—**

१. [ १७·११-१३ ]—एकादशिनीं करिष्यन् यूपाहुतिꣳ हुत्वाथ तां दिशमेति यत्र त्रयोदश यूपान् वेत्स्यन् मन्यते । [ २३·१४-एकादशिन्यै संप्रदान इति ॥ सूत्र ꣳ शालीकेः ॥ अत्रो ह स्माह बोधायन एकादशाग्नीषोमीया एकादश सवनीया एकादशानूबन्ध्या इति ॥ ] [ २६·२३-अथास्यामेकादशिन्यां यूपाहुतिस्तन्त्रं याग्नौ हूयते । अथाव्रश्चनजा संचारिणी । सꣳस्पर्शकं कर्म तद्भवति । अग्निष्ठां प्रथमस्याश्रिꣳ सकृदाहन्याद्द्विर्द्वितीयस्य त्रिस्तृतीयास्यैवमेवेतरेषामनुपूर्वं छेदनज्ञानाय च । ] तानुपशयद्वादशान् पात्नीवतत्रयोदशाञ्छित्त्वा-वाहयत्या वा हारयति । [ २३·१४-उपशयस्य मन्त्रामन्त्र इति ॥ लभेत ग्रामे नारण्य इति-बोधायनः ॥ लभेतारण्ये न ग्राम इति शालीकिः ॥ नैव ग्रामे नारण्य इत्यौपमन्यवः ॥ ] उह्य निस्तिष्ठति । अवतक्षणानामेव स्वरून् कुरुते । अथास्यैषा पूर्वेद्युरेव रथाक्षेणैकादशधा वेदिर्विमिता भवति । [ २६·२३-अथ वेदिविमानम् । दशानां च रथाक्षाणामेकादशानां च पदानामष्टाङ्गुलस्य च चतुर्विंꣳशं भागमाददीत । स प्रक्रमः स्यात् । तेन वेदिं विमिमीत । ] स यत्राग्निष्ठस्य यूपावटं परिलिखति तदेतꣳ रथाक्षं याचति । तेन दक्षिणतो मिमीत उपरसंमितं यूपावटं परिलिखति । अथोदङ् मिमीत उपरसंमितमेव यूपावटं परिलिखति । स एवमेव दक्षिणमुत्तरमित्यष्टौ यूपावटान् परिलिखति । तद्धैतदेक उपवसथीय एवाहन्येतान् यूपानुच्छ्रयन्ति यजमानो वा अग्निष्ठोऽङ्गानामितरे रूपमिति वदन्तः । स यदेनं तत्रानुच्छ्रयन्तं ब्रूयाद्व्यङ्गो न्वा अयं यजमानो भविष्यतीति तथा हैव स्यात् । तदु वा आहुर्यदिमे यूपा अपशवः शूलीभूतास्तिष्ठेयुर्यज्ञवास्तुरूपमिव स्याद्यज्ञवेशसमिव । श्वो भूत एवाहन्येतान् यूपानुच्छ्रयेदिति । ताञ्छ्वो भूत एवोच्छ्रयन्ति । अग्निष्ठ एकादश रशनाः[1] परिवीय वासयन्ति । समानं कर्माश्विनाद् ग्रहात् । आश्विनं ग्रहं गृहीत्वैकादश रशना आदाय यूपानभ्यैति[2] । तदेते यूपाः प्रक्षालिताः प्रपन्नाः संपन्नचषालाः प्रागवटेभ्य उपशेरते । स्वर्वन्तमग्निष्ठमुत्सृज्य तस्माद्दक्षिणमेव पूर्वमुपस्थावानमुच्छ्रयत्यथोत्तरम् । स एवमेव दक्षिणमुत्तरमित्यष्टौ यूपानुच्छ्रयति । [ २६·२३-अथेमावुपस्थावानौ चतुरङ्गुलमात्रेण विकृष्टतमौ स्याताम् । अथेतरे रथाक्षान्तराला एव स्युरिति । ] अथ वै भवत्युपरसंमितां मिनुयात् पितृलोककामस्येति समा उपरेषु भवन्ति । [ २६·२३-अथ वै भवत्युपरसंमितां मिनुयात् पितृलोककामस्येति यावत्यग्निष्ठस्योपरं तावन्मात्रा इतरे भवन्ति । ] रशनसंमितां मनुष्यलोककामस्येति समा रशनासु भवन्ति । चषालसंमिता-मिन्द्रियकामस्येति समाश्चषालेषु भवन्ति । [ २६·२३-चषालसंमितामिन्द्रियकामस्येति यावदग्निष्ठस्य रशना तावन्मात्रा इतरे भवन्ति । ] सर्वान् समान् प्रतिष्ठाकामस्येति सर्वान् समान् प्रतिष्ठाकामस्य करोति । ये त्रयो मध्यमास्तान् समान् पशुकामस्येति तान् समान् पशुकामस्य करोति । व्यतिषजेदितरानिति व्यतिषजति । स एवमेव दक्षिणमुत्तरमित्यष्टौ यूपान् व्यतिषजति । [ २६·२३—सर्वान् समान्

१. एवं केषुचिल्लिखितपुस्तकेषु । 'एकादशिनीरशनाः' इति मुद्रितपुस्तकपाठः ।
२. एवं केषुचिल्लिखितपुस्तकेषु । 'यूपमभ्यैति' इति मुद्रितपुस्तकपाठः ।

प्रतिष्ठाकामस्येति सर्वान् समान् प्रतिष्ठाकामस्य करोति। ये त्रयो मध्यमास्तान् समान् पशुकामस्येति तान् समान् पशुकामस्य करोति। व्यतिषजेदितरानिति। स एवमेव दक्षिणमुत्तरमित्यष्टौ यूपान् व्यतिषजति। ] अथ वै भवति यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसीयाꣳसमिति। उत्तरार्ध्यमत्र वर्षिष्ठं मिनोति दक्षिणार्ध्यꣳ ह्रसीयाꣳसम्। एषा वै गर्तमिद्यस्यैवं मिनोति ताजक् प्रमीयत इति ब्राह्मणम्। दक्षिणार्ध्यं वर्षिष्ठं मिनुयात् सुवर्गकामस्याथ ह्रसीयाꣳसमिति। दक्षिणार्ध्यमत्र वर्षिष्ठं मिनोत्युत्तरार्ध्यꣳ ह्रसीयाꣳसम्। आक्रमणमेव तत्सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्या इति ब्राह्मणम्। [ २६·२३-२४—अथ वै भवति यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसीयाꣳसमिति। उत्तरार्ध्यमत्र वर्षिष्ठं मिनोति दक्षिणार्ध्यꣳ ह्रसीयाꣳसम्। एषा वै गर्तमिद्यस्यैवं मिनोति ताजक् प्रमीयत इति ब्राह्मणम्। दक्षिणार्ध्यं वर्षिष्ठं मिनुयात् सुवर्गकामस्याथ ह्रसीयाꣳसमिति। अङ्गुष्ठपर्वमात्रेणाङ्गुष्ठ-पर्वमात्रेणोत्तरमुत्तरं यूपꣳ ह्रसीयाꣳसं मिनुयात्। अपि वा यूपावटानामेवैता मात्रा अतिखनेत्। अपि वोपशयमेवोपनिदधते। ताभिर्मात्राभिः अभिसंपादयेत्। ] अथ वै भवति यदेकस्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते। यन्नैकाꣳ रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दत इति ब्राह्मणम्। अथ वै भवति यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेदिति। उपान्ते तस्य व्यतिषजति। स्त्र्येवास्य जायत इति ब्राह्मणम्। अथ वै भवति यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्रवेष्टयेदिति। आन्तं तस्य प्रवेष्टयति। पुमानेवास्य जायत इति ब्राह्मणम्। अत्रैतमुपशयं दक्षिणतो न्यस्यति तूष्णीम्। [ २३·१४—उपशयस्योपासन इति ॥ सूत्रं बोधायनस्य ॥ अत्रैवोत्तरत उपास्येदिति शालीकिः ॥ ] स्वर्वन्तान् यूपानुत्सृज्य ॥

२. [ १७·१३-१४ ]—आग्नेयमेवाग्निष्ठ उपाकरोति। सारस्वतीमुत्तरे सौम्यं दक्षिणे पौष्णमुत्तरे बार्हस्पत्यं दक्षिणे वैश्वदेवमुत्तर ऐन्द्रं दक्षिणे मारुतमुत्तर ऐन्द्राग्नं दक्षिणे सावित्रमुत्तरे वारुणं दक्षिणे। अथ वै भवति यदि कामयेत योऽवगतः सोऽप रुध्यतां योऽपरुद्धः सोऽव गच्छत्वित्यैन्द्रस्य लोके वारुणमा लभेत वारुणस्य लोक ऐन्द्रं य एवाव-गतः सोऽप रुध्यते योऽपरुद्धः सोऽव गच्छतीति ब्राह्मणम्। अथ वै भवति यदि कामयेत प्रजा मुह्येयुरिति पशून् व्यतिषजेदिति। पशूनेवात्र व्यतिषजति। प्रजा एव मोहयतीति ब्राह्मणम्। अथ वै भवति यदभिवाहतोऽपां वारुणमालभेत प्रजा वरुणो गृह्णीयाद् दक्षिणत उदञ्चमा लभतेऽपवाहतोऽपां प्रजानामवरुणग्राहायेति ब्राह्मणम्। अथैतस्मिन्नुपशये मनसैवं यं द्वेष्टि तमुपाकरोति। यद्यु वै न द्वेष्टि आखुस्ते पशुः इत्यनुदिशति। समानं कर्मा पर्यग्नि-करणात्। पर्यग्निकृतानामेतेषां पशूनां पञ्च दक्षिणार्ध्यान् पशूनुपकृत्यैव स्थापयित्वा द्वावुपातिनीयाथेतरैर्व्यतिषजति। अथ पर्यग्निकृतैः पशुभिरुदञ्चः प्रतिपद्यन्ते। [ २६·२५—कथमु खलु यूपावटाꣳश्च परिलिखतो यूपाꣳश्चोच्छ्रयतः पशूꣳश्चोपाकुर्वतः संचरी स्यादिति। अन्तरेणाग्निष्ठं चोपस्थावानं चोपातीत्य जघनेनोत्तरवेदिं परिक्रम्यान्तरेणाग्निष्ठं चैवोपस्थावानं चोपातीत्यैकैकं परिलिखेद्वोच्छ्रयेद्वोपाकुर्याद्वा। अपि वा यंयं परिलिखे-द्वोच्छ्रयेद्वोपाकुर्याद्वा तंतं न व्ययेयाद्दक्षिणेन दक्षिणमुत्तरेणोत्तरम्। अपि वा सर्वा-नेवाग्रेण यूपान् परीत्यैकैकं परिलिखेद्वोच्छ्रयेद्वोपाकुर्याद्वा। व्यतिषङ्गं तेन पूर्वाः संपद्यन्ते। एवं व्यतिषक्तानामेवैषां पशूनां पञ्च दक्षिणार्ध्यान् पशूनुपकृत्यैव स्थापयेयुः।] तेषां वारुण उत्तरार्ध्यो भवति। आग्नेय उपकारतः। आग्नेयमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते पृथगित-

रान् परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमव्यतिषजन्तः। तेषां प्रसिद्धं वपाभिश्चरित्वा प्रसर्पन्ति प्रातःसवनाय। [ २१·१५, २५–वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बोधायनः ॥ आदितश्चान्ततश्चेति शालीकिः ॥ हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बोधायनः ॥ सर्वान् सहेति शालीकिः ॥ ] [ २१·२६–उत्स्रण इति ॥ सर्वान् गोपशूनुत्स्रयेदिति बोधायनः ॥ अन्यत्रर्षभाच्च वशायै चेति शालीकिः ॥ ] [ २६·२४– वारुणं प्रथममत्यानयेयुरथानुपूर्वमितरान्। अन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य प्रस्थान् वा निहन्युरपि वा मण्डलीकृतान्। तेषां वपा उत्खिग्राहरेयुर्यथा वपाभिर्विहारं चात्मानं च न व्ययेयुः। ] तदृजुधा संतिष्ठते ॥

३. [ १७·१५–१६ ]—अथ वै भवतीष्टं वपया भवत्यनिष्टं वशयाथ पात्नीवतेन प्रचरतीति। स यत्रैकादशिन्या अनूबन्ध्यस्येष्टं वपया भवत्यनिष्टं वशया तज्जघनेन गार्हपत्यमौपसदायां वेद्याᳫं स्तम्बयजुर्हरति। इदमेव प्रसिद्धं पौरोडाशिकम्। त्रिर्यजुषा तूष्णीं चतुर्थम्। पूर्वं परिग्राहं परिगृह्णाति। करणं जपति। उद्धन्ति। उद्धतादाग्नीध्रस्त्रिर्हरति। यदाग्नीध्रस्त्रिर्हरत्यथाग्रेण गार्हपत्यं पात्नीवतस्य यूपावटं परिलिखति। [ २३·१४–पात्नीवतस्य परिलेखन इति ॥ शालामुखीयᳫं शङ्कुमभिपरिलिखेदिति बोधायनः ॥ उत्तरत एकादशिन्यै पात्नीवतं मिनुयादिति शालीकिः ॥ ] समानं कर्मा स्रुचाᳫं सादनात्। सादयित्वा स्रुचोऽग्रेण गार्हपत्यं पात्नीवतमुच्छ्रित्य तस्मिᳫंस्त्वाष्ट्रᳫं साण्डमजं पशुमुपाकरोति। [ २३·१४–त्वाष्ट्रस्य मन्त्रामन्त्र इति ॥ मन्त्रवान् स्यादिति बोधायनः ॥ तूष्णीक इति शालीकिः ॥ ] [ २६·२४–अथायं पात्नीवतोऽङ्गुष्ठपर्वमात्रेणोत्तराध्र्याद्यूपाद् ह्सीयान् स्यात्। अपि वा यथाब्राह्मणमवाङ्नाभिमचषालमनवस्तीर्णम्। ] तं पर्यग्निकृतमुत्सृज्याज्येन सᳫंस्थां करोति। [ २३·१४–त्वाष्ट्रस्योत्सर्ग इति ॥ सूत्र ᳫं शालीकेः ॥ अत्रो ह स्माह बोधायनोऽभिपर्यग्निकृतमेनमन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रमय्याद्भिरभ्युक्ष्य यजमानस्याजास्वपिसृजेदिति ।] अथ चतुर आज्यस्य गृह्णान आह त्वष्ट्रे इत्युपांᳫंशु अनुब्रूहि इत्युच्चैः। अत्याक्रम्याश्राव्याह त्वष्टारम् इत्युपाᳫंशु यज इत्युच्चैः। वषट्कृते जुहोति। इति नु वपायाः प्रतिचरति। चतुर एवाज्यस्य गृह्णान आह त्वष्ट्रे इत्युपाᳫंशु अनुब्रूहि इत्युच्चैः। अत्याक्रम्याश्राव्याह त्वष्टारम् इत्युपाᳫंशु यज इत्युच्चैः। [ २३·१४–त्वाष्ट्रस्य चर्याया इति। उपाᳫंशु चरेदिति बोधायनः ॥ उच्चैरिति शालीकिः ॥ ] वषट्कृते जुहोति। इति नु पशुपुरोडाशस्य प्रतिचरति। चतुर एवाज्यस्य गृह्णान आह अग्नये इत्युपाᳫंशु अनुब्रूहि इत्युच्चैः। अत्याक्रम्याश्राव्याह अग्निम् इत्युपाᳫंशु यज इत्युच्चैः। वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति। इति नु पशुपुरोडाशस्य स्विष्टकृतः प्रतिचरति। चतुर एवाज्यस्य गृह्णान आह त्वष्ट्रे इत्युपाᳫंशु अनुब्रूहि इत्युच्चैः। अत्याक्रम्याश्राव्याह त्वष्टारम् इत्युपाᳫंशु यज इत्युच्चैः। वषट्कृते जुहोति। इति नु हविषः प्रतिचरति। आज्येन दिशो जुहोति। पृषदाज्येन वनस्पतिम्। आज्यस्य स्विष्टकृतम्। आज्यस्येडामवद्यति। पृषदाज्येनानूयाजान् यजति। सोऽत्रैव पत्नीः संयाज्यात्रैव समिष्टयजूᳫंषि जुहोति। संतिष्ठते पात्नीवतः ॥

# ३. अग्निष्टोमप्रायश्चित्तानि

यद्यज्ञस्याच्छेत्

वामासं—

परमेष्ठ्यभिधीतः प्रजापतिर्वाचि व्याहृतायामन्धो अच्छेतः सविता सन्यां विश्वकर्मा दीक्षायां पूषा सोमक्रयण्याम् । इन्द्रश्च मरुतश्च क्रयायोपोत्थितोऽसुरः पण्यमानो मित्रः क्रीतो विष्णुः शिपिविष्ट ऊरावासन्नो विष्णुर्नरन्धिषः । प्रोह्यमाणः सोम आगतो वरुण आसन्द्यामासन्नोऽग्निराग्नीध्र इन्द्रो हविर्धानेऽथर्वोपावह्रियमाणः । विश्वे देवा अꣳशुषु न्युप्तो विष्णुराप्रीतपा आप्याय्यमानो यमः सूयमानो विष्णुः संभ्रियमाणो वायुः पूयमानः शुक्रः पूतः शुक्रः क्षीरश्रीर्मन्थी सक्तुश्रीः । विश्वे देवाश्चमसेषून्नीतोऽसुर्होमायोद्यतो रुद्रो हूयमानो वातोऽभ्यावृत्तो नृचक्षाः प्रतिख्यातो भक्षो भक्ष्यमाणः पितरो नाराशꣳसाः । सन्नः सिन्धुरवभृथायोद्यतः समुद्रोऽभ्यवह्रियमाणः सलिलः प्रप्लुतः ॥ ८.५४–५९

माशब्रा [ ४.५.७.६ ] – अथ यद्यज्ञस्य ह्वलेत् तत् समन्वीक्ष्य जुहुयात् । दीक्षोपसत्स्वाहवनीये प्रसुत आग्नीध्रे ।

[ १२.६.१.१–३८ ]–स यद्यज्ञस्याच्छेत् यां तत्प्रति देवतां मन्येत तामनुसमीक्ष्य जुहुयात् । यदि दीक्षोपसत्स्वाहवनीये । यदि प्रसुत आग्नीध्रे ० स यद्येनं मनसाभिध्यातो यज्ञो नोपनमेत् **परमेष्ठिने स्वाहा** इति जुहुयात् ० अथ यद्येनं वाचाभिव्याहृतो यज्ञो नोपनमेत् **प्रजापतये स्वाहा** इति जुहुयात् ० अथ यस्य राजानमच्छेत्वा नाहरन्त एयुः **अन्धसे स्वाहा** इति जुहुयात् ० अथ यदि सातः किंचिदापद्येत **सवित्रे स्वाहा** इति जुहुयात् ० अथ यदि दीक्षासु किंचिदापद्येत **विश्वकर्मणे स्वाहा** इति जुहुयात् ० अथ यदि सोमक्रयण्यां किंचिदापद्येत **पूष्णे स्वाहा** इति जुहुयात् ० अथ यदि क्रयायोपोत्थितः किंचिदापद्येत **इन्द्राय च मरुद्भ्यश्च स्वाहा** इति जुहुयात् ० अथ यदि पण्यमानः किंचिदापद्येत **असुराय स्वाहा** इति जुहुयात् ० अथ यदि क्रीतः किंचिदापद्येत **मित्राय स्वाहा** इति जुहुयात्० अथ यद्यूरावासन्नः किंचिदापद्येत **विष्णवे शिपिविष्टाय स्वाहा** इति जुहुयात् ० अथ यदि पर्युह्यमाणः किंचिदापद्येत **विष्णवे नरन्धिषाय स्वाहा** इति जुहुयात् ० अथ यद्यागतः किंचिदापद्येत **सोमाय स्वाहा** इति जुहुयात् ० अथ यद्यासन्द्यामासन्नः किंचिदापद्येत **वरुणाय स्वाहा** इति जुहुयात् ० अथ

यद्याग्नीध्रगतः किंचिदापद्येत **अग्नये स्वाहा** इति जुहुयात् ० अथ यदि हविर्द्धानगतः किंचिदापद्येत **इन्द्राय स्वाहा** इति जुहुयात् ० अथ यदुपात्रह्रियमाणः किंचिदापद्येत **अथर्वणे स्वाहा** इति जुहुयात् ० अथ यद्यꣳशुषु न्युप्तः किंचिदापद्येत **विश्वेभ्यो देवेभ्यः स्वाहा** इति जुहुयात् ० अथ यद्याप्याय्यमानः किंचिदापद्येत **विष्णव आप्रीतपाय स्वाहा** इति जुहुयात् ० अथ यद्यभिषूयमाणः किंचिदापद्येत **यमाय स्वाहा** इति जुहुयात् ० अथ यदि संभ्रियमाणः किंचिदापद्येत **विष्णवे स्वाहा** इति जुहुयात् ० अथ यदि पूयमानः किंचिदापद्येत **वायवे स्वाहा** इति जुहुयात् ० अथ यदि पूतः किंचिदापद्येत **शुक्राय स्वाहा** इति जुहुयात् ० अथ यदि क्षीरश्रीः किंचिदापद्येत **शुक्राय स्वाहा** इति जुहुयात् ० अथ यदि सक्तुश्रीः किंचिदापद्येत **मन्थिने स्वाहा** इति जुहुयात् ० अथ यदि चमसेषून्नीतः किंचिदापद्येत **विश्वेभ्यो देवेभ्यः स्वाहा** इति जुहुयात् ० अथ यदि होमायोद्यतः किंचिदापद्येत **असवे स्वाहा** इति जुहुयात् ० अथ यदि हूयमानः किंचिदापद्येत **रुद्राय स्वाहा** इति जुहुयात् ० अथ यद्यभ्यावृत्तः किंचिदापद्येत **वाताय स्वाहा** इति जुहुयात् ० अथ यदि प्रतिख्यातः किंचिदापद्येत **नृचक्षसे स्वाहा** इति जुहुयात् ० अथ यदि भक्ष्यमाणः किंचिदापद्येत **भक्षाय स्वाहा** इति जुहुयात् ० अथ यदि नाराशꣳसेषु सन्नः किंचिदापद्येत **पितृभ्यो नाराशꣳसेभ्यः स्वाहा** इति जुहुयात् ० अथ यद्यवभृथायोद्यतः किंचिदापद्येत **सिन्धवे स्वाहा** इति जुहुयात् ० अथ यद्यभ्यवह्रियमाणः किंचिदापद्येत **समुद्राय स्वाहा** इति जुहुयात् ० अथ यदि प्रप्लुतः किंचिदापद्येत **सलिलाय स्वाहा** इति जुहुयात् ० ता वा एताश्चतुस्त्रिꣳशतमाज्याहुतीर्जुहोति ० ता ब्रह्मैव जुहुयात् । नाब्रह्मा । ब्रह्मा वै यज्ञस्य दक्षिणत आस्ते ० यदि तु ब्रह्मा न विद्यात् । अपि य एव कश्च विद्यात् स जुहुयात् । ब्रह्माणं त्वामन्त्र्य ब्रह्मणातिसृष्टः ० ॥

**वाकासं—**

**परमेष्ठ्यभिधीतः ... विष्णुः शिपिविष्ट ऊरा आसन्नो .... अꣳशुषु न्युप्यमानेषु .... भक्षः पीतः पितरो नाराशꣳसाः साद्यमानाः....॥** ९.७. १–७

काशब्रा [ १४.८.१.१–३६ ] = माशब्रा

**यद्येनं मनसाभिध्यातो यज्ञो नोपनमेत्**

दृश्यताम् ' यद्यज्ञस्याच्छेत् '

**यद्येनं वाचाभिव्याहृतो यज्ञो नोपनमेत्**

दृश्यताम् ' यद्यज्ञस्याच्छेत् '

## यदि स्नातः किंचिदापद्येत

दृश्यताम् ' यद्यङ्गस्याच्छेत् '

## यदि दीक्षासु किंचिदापद्येत

दृश्यताम् ' यद्यङ्गस्याच्छेत् '

## दीक्षितस्य जाया ऋतुमती स्यात्

गोब्रा [ १.३.२३ ]-- अथ यस्य दीक्षितस्यर्तुमती जाया स्यात् प्रतिस्नावा प्रतिस्नावा सारूपवत्साया गोः पयसि स्थालीपाकं श्रपयित्वाभिघार्योद्वास्योद्धृत्याभिहिंकृत्य गर्भवेदनपुंसवनैः संपातवन्तं कृत्वा तं परैव प्राश्नीयात् ० ॥

## यदि दीक्षितोऽवकिरेत्

## कासं [ ३५.१४ ]—

अप्स्वग्ने....॥

तपोऽष्वग्ने अन्तरॉं अमित्रान् तपा शंसमररुषः परस्य ।
तपो वसो चिकितानो अचित्तान् वि ते तिष्ठन्तामजरा अयासः ॥
यो नस्सनुत्यो अभिदासदग्ने यो अन्तरो मित्रमहो अनुष्यात् ।
तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वान् ॥
स स्मा कृणोतु केतुमा नक्तं चिद्दूर आ सते ।
पावको यद्वनस्पतीन् प्र स्मा मिनात्यजरः ॥
नहि ते अग्ने तन्वः क्रूरमानाश मर्तः ।
कपिर्बभस्ति तेजनं स्वं जरायु गौरिव ॥
मेष इव यदुप च वि च चर्वति यदप्सरद्रूरुपरस्य खादति ।
शीर्ष्णा शिरो वक्षसा वक्ष एजयन्नंशुं बभस्ति हरितेभिरासभिः ॥
सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषुः ।
न्यङ् नियन्त्युपरस्य निष्कृतं पुरू रेतो दधिरे सूर्यश्रितः ॥

## यदि सोमं न विन्देयुः

कासं [ ३४.३ ]--यदि सोमं न विन्देयुः पूतीकानभिषुणुयुः । यदि न पूतीकानार्जुनानि ० प्रतिधुक् च प्रातः पूतीकाश्च दधि मध्यंदिने पूतीकाश्च शृतं चापराह्णे पूतीकाश्च ० ॥

तांब्रा [ ९.५.३-७ ]—यदि सोमं न विन्देयुः पूतीकानभिषुणुयुः । यदि न पूतीकानर्जुनानि ० प्रतिधुक् च प्रातः पूतीकाश्च । शृतं च मध्यंदिने पूतीकाश्च । दधि चापराह्णे पूतीकाश्च ० यानि बभ्रुतूलान्यर्जुनानि तान्यभिषुणुयात् ० ॥

जैब्रा [ १.३५४–३५५ ]—यदि तं न विन्देयुर्बभ्रुतूलानि फाल्गुनान्यभिषुणुयुः० यदि तं न विन्देयुरूतीकानभिषुणुयुः ० यदि तं न विन्देयुः शुक्लाः शादोऽभिषुणुयुः ० यदि तं न विन्देयुः पर्णमभिषुणुयुः ० यदि तं न विन्देयुर्या एव काश्चौषधीरभिषुणुयुः ० प्रतिधुक् प्रातस्सवनेऽवनयेच्छृतं माध्यंदिने सवने दधि तृतीयसवने ० पञ्च दक्षिणा दद्यात् ० अवभृथादुदेत्य पुनर्दीक्षेत । स यावद्दास्यन् स्यात्तद्दद्यात् । सैव तत्र प्रायश्चित्तिः ॥

**यस्य राजानमच्छेत्वा नाहरन्त एयुः**

दृश्यताम् ' यद्यङ्गस्याच्छेंत् '

**यदि सोमक्रयण्यां किंचिदापद्येत**

दृश्यताम् ' यद्यङ्गस्याच्छेंत् '

**यदि क्रयायोपोत्थितः किंचिदापद्येत**

दृश्यताम् ' यद्यङ्गस्याच्छेंत् '

**यदि पण्यमानः किंचिदापद्येत**

दृश्यताम् ' यद्यङ्गस्याच्छेंत् '

**यदि क्रीतः किंचिदापद्येत**

दृश्यताम् ' यद्यङ्गस्याच्छेंत् '

**यद्यूरावासन्नः किंचिदापद्येत**

दृश्यताम् ' यद्यङ्गस्याच्छेंत् '

**यदि पर्युह्यमाणः किंचिदापद्येत**

दृश्यताम् ' यद्यङ्गस्याच्छेंत् '

**यस्य सोममपहरेयुः**

तैब्रा [ १.४.७ ]—यस्याक्रीतꣳ सोममपहरेयुः । क्रीणीयादेव ० यस्य क्रीतमपहरेयुः । आदाराꣳश्च फाल्गुनानि चाभिषुणुयात् ० शृतेन प्रातःसवने श्रीणीयात् । दध्ना मध्यंदिने । नीतमिश्रेण तृतीयसवने । अग्निष्टोमः सोमः स्याद्रथन्तरसामा । य एवर्त्विजो वृताः स्युः । त एनं याजयेयुः । एकां गां दक्षिणां दद्यात्तेभ्य एव । पुनः सोमं क्रीणीयात् ॥

कासं [ ३४.३ ]—यद्यक्रीतमपहरेयुरन्यः क्रीतव्यः । यदि क्रीतं यो नेदिष्ठं स्यात् स आहृत्याभिषुत्यो राजाहाराय तु किंचिद्दीयते ॥

माशब्रा [ ४·५·१०·१–६ ]—यदि सोममपहरेयुः विधावतेच्छत इति ब्रूयात्। स यदि विन्दन्ति किमाद्रियेरन् । यद्यु न विन्दन्ति तत्र प्रायश्चित्तिः क्रियते । द्वयानि वै फाल्गुनानि। लोहितपुष्पाणि चारुणपुष्पाणि च। स यान्यरुणपुष्पाणि फाल्गुनानि तान्यभिषुणुयात् ० यद्यरुणपुष्पाणि न विन्देयुः श्येनहृतमभिषुणुयात् ० यदि श्येनहृतं न विन्देयुरादारानभिषुणुयात् ० यद्यादारान्न विन्देयुररुणदूर्वा अभिषुणुयात् ० यद्यरुणदूर्वा न विन्देयुरपि यानेव कांश्च हरितान् कुशानभिषुणुयात् । तत्राप्येकामेव गां दद्यात् । अथावभृथादेवोदेत्य पुनर्दीक्षेत । पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिः ० ॥

बहिष्पवमानस्तोत्रम्[1]

चत्वारि आज्यस्तोत्राणि[2]

माध्यंदिनपवमानस्तोत्रम्[3]

प्रथमद्वितीयपृष्ठस्तोत्रे[4]

तृतीयपृष्ठस्तोत्रम्

| | | |
|---|---|---|
| | श्रायन्तीयम्[5] | ऊह ५.२.९ |

चतुर्थपृष्ठस्तोत्रम्

| | | |
|---|---|---|
| | कालेयम्[6] | ऊह २१.१.१० |

आर्भवपवमानस्तोत्रम्

| | | |
|---|---|---|
| १–३ स्तोमाः | गायत्रम्[7] | |
| ४–६ ,, | संहितम्[7] | ऊह १.१.८ |
| ७ स्तोमः | सफम्[8] | ऊह १.१.९ |
| ८ ,, | पौष्कलम्[9] | ऊह १.१.१० |
| ९ ,, | श्यावाश्वम्[9] | ऊह १.१.११ |
| १० ,, | आन्धीगवम्[10] | ऊह १.१.१२ |
| ११ ,, | औदलम्[11] | ऊह १०.१.३ |
| १२–१४ स्तोमाः | यज्ञायज्ञीयम्[12] | ऊह २१.३.१ |
| १५-१७ ,, | कावम्[13] | ऊह १.१.१३ |

---

१. द्रष्टव्यं पृ. २५८ । २. द्रष्टव्यं पृ. ३२८, ३३६, ३४०, ३४५ । ३. द्रष्टव्यं पृ. ३५७ । ४. द्रष्टव्यं पृ. ३८८, ३९८ । ५. यथा द्वादशाहे नवमेऽहनि । ६. द्रष्टव्यं काम्याग्निष्टोमे 'यज्ञविभ्रष्टः स्यात्' । ७. द्रष्टव्यं पृ. ४२०–४२१ । ८. द्रष्टव्यं पृ. ४२१ । ९. द्रष्टव्यं पृ. ४११ । अत्र प्रथमायामेव। १०. द्रष्टव्यं पृ. ४२३ । अत्र द्वितीयायामेव । ११. यथा एकाहे महाव्रते। अत्र तृतीयायामेव । १२. द्रष्टव्यम् अग्निष्टोमप्रायश्चित्तेषु 'यद्यूनं स्तुयुः' । १३. द्रष्टव्यं पृ. ४२८ ।

## अग्निष्टोमस्तोत्रम्

वारवन्तीयम्[1]	ऊह १३.१.११

तांब्रा [ ९.५.१,२,८–१३ ]—यदि सोममक्रीतमपहरेयुरन्यः क्रेतव्यः। यदि क्रीतं योऽन्योऽभ्याशर्ड्. स्यात् स आहृत्यः । सोमविक्रयिणे तु किंचिद्दद्यात् । श्रायन्तीयं ब्रह्मसाम कार्यम् ० यज्ञायज्ञीयमनुष्टुभि प्रोहेत् ० वारवन्तीयमग्निष्टोमसाम कार्यम् ० पञ्च दक्षिणा देयाः ० अवभृथादुदेत्य पुनर्दीक्षेत । तत्र तद्दद्याद्यद्दास्यन् स्यात् ॥

जैब्रा [ १·३५४ ]—यद्यक्रीतं राजानमपहरेयुरा वेत्तोरिच्छेयुः ० यदि क्रीतमपहरेयुर्यमेव कं चाधिगत्याभिषुणुयुः । येनैवास्य पूर्वक्रयेण क्रीतो भवति तेनैवास्यायं क्रीतो भवति । सोमविक्रयिणे तु किंचित्कं देयम् ० ॥

### यस्य सोममभिदहेत्

कासं [ ३५·१६ ]—यस्य सोममभिदहेद् ग्रहानध्वर्युस्स्पाशयेत स्तोत्राण्युद्गाता शस्त्राणि होताथ यथापूर्वं यज्ञेन चरेयुः । पञ्च वरा देयाः ० अवभृथं गत्वा पुनरुदेत्य पुरा द्वादश्याः पुनर्दीक्षेत । यद् द्वादशीमतिनयेदन्तर्धीयेत । तत्र ता दक्षिणा दद्याद्याः पूर्वस्मिन् दास्यन् भवति । सैव तत्र प्रायश्चित्तिः ॥

तांब्रा [ ९·९·१५ ]—यदि सोममभिदहेद् ग्रहानध्वर्युः स्पाशयेत स्तोत्राण्युद्गाता शस्त्राणि होताथ यथापूर्वं यज्ञेन चरेयुः । पञ्च दक्षिणा देयाः ० अवभृथादुदेत्य पुनर्दीक्षते । तत्र तद्दद्याद्यद्दास्यन् स्यात् । पुरा द्वादश्या दीक्षेत ० ॥

### यदि राजानमववर्षेत्

जैब्रा [ १·३५१ ]—यदि राजानमववर्षेत् इन्दुरिन्दुमवागात्तस्य त इन्दविन्द्रियावतो मधुमतो विचक्षणस्योपहूतस्योपहूतो भक्षयामि॥ वाग् जुषाणा सोमस्य तृप्यतु इति ० कृत्स्नं वेदममृतमन्नाद्यमिमं लोकमगादित्येव मन्यमानो भक्षयेत्। सैव तत्र प्रायश्चित्तिः ॥

### यद्यागतः किंचिदापद्येत

दृश्यताम् ' यद्यङ्गस्याच्छेत् '

### यद्यासन्द्यामासन्नः किंचिदापद्येत

दृश्यताम् ' यद्यङ्गस्याच्छेत् '

---

१. यथा एकाहे प्रथमचतुष्टोमे ।

यदि महावीरो विधुर्वा प्रदरो वा जायते

तैआ [ ४·२० ]—

विधुं दद्राणꣳ समने बहूनाम् । युवानꣳ सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार । स ह्यः समान ॥
यदृते चिदभिश्रिषः । पुरा जर्तृभ्य आतृदः ।
संधाता संधि मघवा पुरोवसुः । निष्कर्ता विहृतं पुनः ॥

वासं—

स्वाहा प्राणेभ्यः साधिपतिकेभ्यः ॥ पृथिव्यै स्वाहा ॥ अग्नये स्वाहा ॥ अन्तरिक्षाय स्वाहा ॥ वायवे स्वाहा ॥ दिवे स्वाहा ॥ सूर्याय स्वाहा ॥ दिग्भ्यः स्वाहा ॥ चन्द्राय स्वाहा ॥ नक्षत्रेभ्यः स्वाहा ॥ अद्भ्यः स्वाहा ॥ वरुणाय स्वाहा ॥ नाभ्यै स्वाहा पूताय स्वाहा ॥ वाचे स्वाहा ॥ प्राणाय स्वाहा ॥ प्राणाय स्वाहा ॥ चक्षुषे स्वाहा चक्षुषे स्वाहा ॥ श्रोत्राय स्वाहा ॥ श्रोत्राय स्वाहा ॥ मनसः काममाकूतिं वाचः सत्यमशीय । पशूनाꣳ रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा ॥ प्रजापतिः संभ्रियमाणः सम्राट् संभृतो वैश्वदेवः सꣳसन्नो घर्मः प्रवृक्तस्तेज उद्यत आश्विनः पयस्यानीयमाने पौष्णो विष्यन्दमाने मारुतः क्लथन् । मैत्रः शरसि संताय्यमाने वायव्यो ह्रियमाण आग्नेयो हूयमानो वाग्घुतः ॥ ३९. १–५

माशब्रा [ १४·३·२. १–२१ ]—यस्य घर्मो विदीर्यते । तत्र प्रायश्चित्तिः । पूर्णाहुतिं जुहोति ० स्वाहा प्राणेभ्यः साधिपतिकेभ्य इति ० त्रयोदशैता आहुतयो भवन्ति ० वाचे स्वाहेति ० सप्तैता आहुतयो भवन्ति ० पूर्णाहुतिमुत्तमां जुहोति ० मनसः काममाकूतिम् .... स्वाहेति ० अथ तं चोपशयां च पिष्ट्वा मार्त्स्नया मृदा सꣳसृज्यावृता करोति । आवृता पचति । उत्सादनार्थम् । अथ य उपशययोर्दृढः स्यात् तेन प्रचरेत् ॥

वाकासं—

स्वाहा प्राणेभ्यः .... ॥ --- ॥ प्रजापतिः .... पूषा विष्यन्दमाने मारुतः क्लथन् .... ॥ ३९. १–३

काशब्रा [ १६·२·४. १–१७ ] ≡ माशब्रा

तांब्रा [ ९·१०·१ ]—यदि महावीरो भिद्येत तं भिन्नमभिमृशेत्

य ऋते चिदभिश्रिषः पुरा जतृभ्य आतृदः ।
संधाता संधिं मघवा पुरूवसुर्निष्कर्ता विहुतं पुनः ॥

मा भेम निष्टया इवेन्द्र त्वदरणा इव ।
वनानि न प्रजहितान्यद्रिवो दुरोषासो अमन्महि ॥
अमन्महीदनाशवोऽनुग्राभश्च वृत्रहन् ।
सकृत् सुते महता शूर राधसानुस्तोमं मदेमहि ॥
इति महवीरं भिन्नमभिमृशेत् । सैव तस्य प्रायश्चित्तिः ॥

यदि प्रमत्ता घर्ममतिपरीयुः
तैआ [ ४.२० ]—पुनरूर्जा .... । सह रय्या.... ॥

यदि प्रवर्ग्ये प्रचर्यमाणे एकसृको वाश्येत
तैआ [ ४.२८ ]—
वि गा इन्द्र विचरन्त्स्पाशयस्व । स्वपन्तमिन्द्र पशुमन्तमिच्छ ।
वज्रेणामुं बोधय दुर्विदत्रम् । स्वपतोऽस्य प्रहर भोजनेभ्यः ॥
अग्ने अग्निना संवदस्व । मृत्यो मृत्युना संवदस्व ॥
नमस्ते अस्तु भगवः । सकृत्ते अग्ने नमः । द्विस्ते नमः । त्रिस्ते नमः । चतुस्ते नमः ।
पञ्चकृत्वस्ते नमः । दशकृत्वस्ते नमः । शतकृत्वस्ते नमः । आसहस्रकृत्वस्ते नमः ।
अपरिमितकृत्वस्ते नमः । नमस्ते अस्तु मा मा हिंसीः ॥

यदि प्रवर्ग्ये प्रचर्यमाणे गृध्रो वाश्येत
तैआ [ ४.२९ ]—
असृङ्मुखो रुधिरेणाव्यक्तः । यमस्य दूतः श्वपाद्विधावसि ।
गृध्रः सुपर्णः कुणपं निषेवसे । यमस्य दूतः प्रहितो भवस्य चोभयोः ॥
मैसं [ ४.९.१९ ]—
असृङ्मुखो रुधिरेणाभ्यक्तो यमस्य दूतश्च वाग्विधावति ।
गृध्रः सुपर्णः कुणपं निषेवति यमस्य दूतः प्रहित एष एति ।
व्यसौ यो अस्मान् द्वेष्टि यं च वयं द्विष्मः ॥

यदि प्रवर्ग्ये प्रचर्यमाणे भयेडकः काकपिञ्जको वाश्येत
तैआ [ ४.३१ ]—
यदिषितो यदि वा स्वकामी । भयेडको वदति वाचमेताम् ।
तामिन्द्राग्नी ब्रह्मणा संविदानौ । शिवामस्मभ्यं कृणुतं गृहेषु ॥

यदि प्रवर्ग्ये प्रचर्यमाणे सालावृकी वाश्येत

तैआ [ ४.३२ ]—

दीर्घमुखि दुर्हणु । मा स्म दक्षिणतो वदः ।
यदि दक्षिणतो वदाद् द्विषन्तं मेऽवबाधासै ॥

यदि प्रवर्ग्ये प्रचर्यमाणे उलूकोलूकी वाश्येत

तैआ [ ४.३३ ]—

इत्थादुलूक आपप्तत् । हिरण्याक्षो अयोमुखः ।
रक्षसां दूत आगतः । तमितो नाशयाग्ने ॥

योऽन्य एतेभ्यो वाश्येत

तैआ [ ४.२९ ]—

उत्तुद शिमिजावरी । तल्पेजे तल्प उत्तुद । गिरीꣳरनुप्रवेशय ।
मरीचीरुप संनुद । यावदितः पुरस्तादुदयाति सूर्यः ।
तावदितोऽमुं नाशय । योऽस्मान् द्वेष्टि । यं च वयं द्विष्मः ॥

यदि प्रवर्ग्ये प्रचर्यमाण आर्ता वागुदियात्

तैआ [ ४.३० ]—

यदेतद्वृकसो भूत्वा । वाग्देव्यभिरायसि ।
द्विषन्तं मेऽभिराय । तं मृत्यो मृत्यवे नय । स आर्त्यार्तिमार्च्छतु ॥

यदि प्रवर्ग्ये प्रचर्यमाण उन्मत्ता वागुदियात्

तैआ [ ४.३४ ]—

यदेतद्भूतान्यन्वाविश्य । दैवीं वाचं वदसि । द्विषतो नः परावद ।
तान्मृत्यो मृत्यवे नय । त आर्त्यार्तिमार्च्छन्तु । अग्निनाग्निः संवदताम् ॥

यद्युद्धुन्वन्निव वातो वायात्

तैआ [ ४.४० ]—

भूर्भुवः सुवो भूर्भुवः सुवो भूर्भुवः सुवः । भुवोऽद्धायि भुवोऽद्धायि भुवोऽद्धायि । नृम्णायि नृम्णं नृम्णायि नृम्णं नृम्णायि नृम्णम् । निधाय्योऽवायि निधाय्योऽवायि निधाय्योऽवायि । ए अस्मे अस्मे । सुवर्नज्योतीः ॥

यदि प्रवर्ग्ये प्रचर्यमाणे विद्युदापतेत्
तैआ [ ४·१४ ]—

या पुरस्ताद्विद्युदापतत् । तां त एतेनावयजे स्वाहा ॥ या दक्षिणतः....॥ या पश्चात्.... ॥ योत्तरतः....॥ योपरिष्टाद्विद्युदापतत् । तां त एतेनावयजे स्वाहा ॥

यदि प्रवृत्तं प्रवर्ग्यं भ्रातृव्योऽभिप्रपद्येत
तैआ [ ४·३७ ]—

आहरावद्य । शृतस्य हविषो यथा । तत्सत्यं यदमुं यमस्य जम्भयोः ।
आदधामि तथा हि तत् । खण्फण्म्रसि ॥

यदि महावीरः प्रवृत्तः प्रपतेत्
तैआ [ ४·२० ]—

भूर्भुवः सुवः ॥ ऊर्ध्व ऊ षु ण ऊतये....॥ ऊर्ध्वो नः पाह्यँहसः.... ॥

यदि महावीर उद्यतः प्रपतेत्
तैआ [ ४·२० ]—

मा नो घर्म व्यथितो विव्यथो नः । मा नः परमधरं मा रजोऽनैः ।
मो ष्वस्माँस्तमस्यन्तराधाः । मा रुद्रियासो अभिगुर्वृधानः ॥
मा नः क्रतुभिर्हीडितेभिरस्मान् । द्विषा सुनीते मा परादाः ।
मा नो रुद्रो निर्ऋतिर्मा नो अस्ता । मा द्यावापृथिवी हीडिषाताम् ॥

घर्मदुघं महावीरं वा वयोऽभिप्रस्रावयेत्
तैआ [ ४·२० ]—

उप नो मित्रावरुणाविहावतम् । अन्वादीध्याथामिह नः सखाया ।
आदित्यानां प्रसितिर्हेतिः । उग्रा शतापाष्ठा घ विषा परि णो वृणक्तु ॥
इमं मे वरुण .... ॥ तत्त्वा यामि.... ॥ त्वं नो अग्ने .... ॥ स त्वं नो अग्ने .... ॥ त्वमग्ने अयासि.... ॥ उद्वयं तमसस्परि .... ॥ उदु त्यं .... ॥ चित्रम् .... ॥ वयः सुपर्णाः .... ॥

यदि घर्मदुघं महावीरं वा वयोऽभिप्रपतेत्
तैआ [ ४·३५ ]—

प्रसार्य सक्थ्यौ पतसि । सव्यमक्षि निपेपि च मेह कस्यचनाममत् ॥

यदि घर्मदुघं महावीरं वा क्रिमय उपाधिगच्छेयुः
तैआ [ ४·३६ ]—

अत्रिणा त्वा क्रिमे हन्मि । कण्वेन जमदग्निना । विश्वावसोर्ब्रह्मणा हतः । क्रिमीणाꣳ राजा । अप्येषाꣳ स्थपतिर्हतः । अथो माताथो पिता । अथो स्थूरा अथो क्षुद्राः । अथो कृष्णा अथो श्वेताः । अथो आशातिका हताः । श्वेताभिः सह सर्वे हताः ॥

यदि घर्मदुघं महावीरं वा स्तेनोऽपहरेत्
तैआ [ ४·२६ ]—

अहोरात्रे त्वोदीरयताम् । अर्धमासास्त्वोर्दीजयन्तु । मासास्त्वा श्रपयन्तु ।
ऋतवस्त्वा पचन्तु । संवत्सरस्त्वा हन्त्वसौ ॥

यदि घर्मदुघा ह्वलेत

माशब्रा [ ४·५·७·१–५ ]—ता वा एताश्चतुस्त्रिꣳशद्व्याहृतयो भवन्ति प्रायश्चित्तयो नाम ० सा यदि घर्मदुघा ह्वलेदन्यामुपसंक्रामेयुः । स यस्यामेवैनां वेलायां पुरा पिन्वयन्ति तद्वैवैनामुदीचीꣳ स्थापयेत् । अग्रेण वा शालां प्राचीम् । तद् ये एते अभितः पुच्छकाण्डꣳ शिखण्डास्थेऽनुच्छ्याते तयोर्यद्दक्षिणं तस्मिन्नेताश्चतुस्त्रिꣳशतमाज्याहुतीर्जुहोति[1] ० ॥

काशब्रा [ ५·७·४·५·६ ] ≡ माशब्रा

यदि घर्मः स्कन्देत
तैआ [ ४·१३ ]—

अस्कान् द्यौः पृथिवीम् । अस्कानृषभो युवा गाः ।
स्कन्नेमा विश्वा भुवना । स्कन्नो यज्ञः प्रजनयतु ॥
अस्कानजनि प्राजनि । आ स्कन्नाज्जायते वृषा । स्कन्नात् प्रजनिषीमहि ॥

यद्याग्नीध्रगतः किंचिदापद्येत

द्रश्यताम् ' यद्यज्ञस्यार्च्छेत् '

यदि हविर्धानगतः किंचिदापद्येत

द्रश्यताम् ' यद्यज्ञस्यार्च्छेत् '

कृष्णशकुनः पृषदाज्यमवमृशेत्

द्रश्यताम् ' पृषदाज्यं स्कन्देत् '

---

१. ' यद्यज्ञस्यार्च्छेत् ' इत्यत्र मन्त्रा द्रष्टव्याः ।

**पृषदाज्यं श्वावमृशेत्**

द्रष्टव्यतां 'पृषदाज्यं स्कन्देत्'

**पृषदाज्यं स्कन्देत्**

तैसं [ ३·२·६ ]—**भूतिर्दध्ना घृतेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमा गम्यात्**० यत् कृष्णशकुनः पृषदाज्यमवमृशेत्० यच्छ्वावमृशेत्० यस्य पृषदाज्यं स्कन्दति यत् पृषदाज्यं पुनर्गृह्णाति० हिरण्यमवधाय गृह्णाति० शतमानं भवति० अश्वमव घ्रापयति० वैष्णव्यर्चा पुनर्गृह्णाति० ॥

**आहुतं बहिष्परिधि स्कन्देत्**

मैसं [ ३·८·६ ]—यदाहुतं बहिष्परिधि स्कन्देत्तदभिमन्त्रयेत **भूपतये स्वाहा। भुवनपतये स्वाहा। भूतानां पतये स्वाहा** इति० ॥

कासं [ २५·७ ]—यदि हविर्भूतं बहिष्परिधि स्कन्देत् **भूपतये स्वाहा। भुवनपतये स्वाहा। भूतानां पतये स्वाहा** इत्यनुमन्त्रयेत० अक्त्वा दक्षिणार्ध्ये प्रहरति० उपवपत्युत्तरार्ध्यम्० यत्र स्कन्देत् तदपो निनीय **भूपतये स्वाहा** इति प्राक् प्रादेशेन मिमीते। **भुवनपतये स्वाहा** इति दक्षिणा। **भूतानां पतये स्वाहा** इति प्रत्यक्० दिशो मिमीते० प्रादेशेन मिमीते० अपो निनयति० यदि प्रातस्सवने स्कन्देत् **देवाञ्जनमगन् यज्ञस्तस्य यज्ञस्य मेष्टस्य वीतस्य द्रविणेहागम्या** इत्यनुमन्त्रयेत। यदि मध्यंदिने **अप ओषधीर्जनमगन् यज्ञस्तस्य मेष्टस्य वीतस्य द्रविणेहागम्या** इत्यनुमन्त्रयेत। यदि तृतीयसवने **पितॄञ्जनमगन् यज्ञस्तस्य मेष्टस्य वीतस्य द्रविणेहागम्या** इत्यनुमन्त्रयेत। यदि नक्तं **द्यावापृथिवी जनमगन् यज्ञस्तस्य वीतस्य द्रविणेहागम्या** इत्यनुमन्त्रयेत। यदि तिरोह्नयेषु **गन्धर्वाञ्जनमगन् यज्ञस्तस्य मेष्टस्य वीतस्य द्रविणेहागम्या** इत्यनुमन्त्रयेत० ॥

जैब्रा [ १·३५३ ]—यदि पृषदाज्यं प्रवर्तेताभ्युत्पूर्य पुनर्गृह्णीयात् ॥

**यद्यनुपाकृतः पशुः म्रियेत**

शांब्रा [ १८·१२ ]—अथ यदि पशुरानीतोऽनुपाकृतो म्रियेतर्त्विग्भ्यस्तं कारयेत्। अथान्यं तद्रूपं तद्देवत्यं पशुमालभेरन्। तमाप्रीतं पर्यग्निकृतमुदञ्चं नयेयुस्तं संज्ञपयेयुः। तस्यानुज्ञायमितरं कर्षयेयुः। तयोर्नाना वपे उत्खिद्य नाना श्रपयित्वा नानावदाय समाने वषट्कारे जुहुयुः। तयोर्नानैव पशुपुरोळाशौ श्रपयित्वा नानावदाय समाने वषट्कारे जुहुयुः। तयोर्नानैव हविषी श्रपयित्वा नानावदाय समाने वषट्कारे जुहुयुः। एवं तृतीयगुदावेवं जाघन्यौ। यदि त्वप्येकयैवाप्रियाप्रीतः स्यात्तेनैव प्रचरेयुरिति सा स्थितिः ॥

**यदि पशुं विमथ्नीरन्**

तैसं [ ३·१·३ ]—ये पशुं विमथ्नीरन् यस्तान् कामयेतार्तिमार्च्छेयुरिति **कुविदङ्ग** . . . इति नमोवृक्तिवत्यर्चाग्नीध्रे जुहुयात्० ॥

मैसं [ ४·८·९ ]—यदि कामयेत ये पशुꣳ व्यमथिषत त आर्तिमार्छेयुरिति **कुविदङ्ग यवमन्तो यवं चित्** इति नमउक्तिमत्य ऋचाग्नीध्रे जुहुयात्० ॥

**गर्भं चेत् पश्येयुः**

**तैसं [ ३·३·१० ]—**

**सूर्यो देवो दिविषद्भ्यो धाता क्षत्राय वायुः प्रजाभ्यः ।**
**बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मतीं जुहोतु ॥**
**यस्यास्ते हरितो गर्भोऽथो योनिर्हिरण्ययी ।**
**अङ्गान्यहुता यस्यै तां देवैः समजीगमम् ॥**
**आ वर्तन वर्तय नि निवर्तन वर्तयेन्द्र नर्दबुद ।**
**भूम्याश्चतस्रः प्रदिशस्ताभिरा वर्तया पुनः ॥**
**वि ते भिनद्मि तकरीं वि योनिं वि गवीन्यौ ।**
**वि मातरं च पुत्रं च वि गर्भं च जरायु च ॥**
**बहिस्ते अस्तु बालिति ॥**
**उरुद्रप्सो विश्वरूप इन्दुः पवमानो धीर आनञ्ज गर्भम् ॥**
**एकपदी द्विपदी त्रिपदी चतुष्पदी पञ्चपदी षट्पदी सप्तपद्यष्टापदी भुवनानु प्रथताꣳ स्वाहा ॥**
**मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥**

[ ३·४·१ ]—वि वा एतस्य यज्ञ ऋध्यते यस्य हविरतिरिच्यते० भस्मनाभि समूहति० पुरस्तान्नाभ्या अन्यदवद्येदुपरिष्टादन्यत्० यावानेव पशुस्तस्याव द्यति० विष्णवे शिपिविष्टाय जुहोति० अष्टाप्रूड्ढिरण्यं दक्षिणा० अन्तरकोश उष्णीषेणाविष्टितं भवति० ॥

मैसं [ ४·८·९ ]—अथैषाष्टापदी । यद्गर्भस्यावद्येदवदानान्यतिरेचयेद् यन्नावद्येत् प्रोक्षितस्य हविषो नावद्येत् । रसेन जुहोति० ॥

**कासं [ १३·९ ]—**

**धाता रातिस्सवितेदं जुषन्तां प्रजापतिर्वरुणो मित्रो अग्निः ।**
**त्वष्टा विष्णुः प्रजया संरराणा यजमानाय द्रविणं दधात ॥**

आवर्तय निवर्तया वर्तन वर्तय नि निवर्तन वर्तय ।
इन्द्र नन्दबल भूम्याश्चतस्रस्प्रक्तयस्ताभ्यस्त्वा वर्तयामसि ॥
वि ते भिनद्मि तकरिं वि योनिं वि परीणहम् ।
वि मातरं च पुत्रं च वि गर्भं च जरायु च ॥ बहिष्टे अस्तु बालिति ॥
पुरुदस्मवद् विश्वरूपमिन्दुः पवमानो गर्भमानञ्ज धीरः ।
एकपादं द्विपादं त्रिपादं चतुष्पादं भुवनानु प्रथन्ताम् ॥
गर्भो यस्ते यज्ञियो योनिर्यस्ते हिरण्ययः ।
अङ्गान्यहुता यस्य तं देवास्समचीक्लृपन् ॥
मही द्यौः पृथिवी च न .... ॥
नमो महिम्न उत चक्षुषे ते मरुतां पितरुत तद्गृणीमः ।
हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥
देवानामेष उपनाह आसीदपां पतिरोषधीनाम् ।
सोमस्य द्रप्समवृणीत पूषा बृहन्नद्रिरभवद्यत् तदासीत् ॥
पिता वत्सानां पतिरघ्न्यानामथो पिता महतां गर्गराणाम् ।
गर्भो जरायुः प्रतिधुक् पीयूष आमिक्षा मस्तु घृतमस्य योनिः ॥
द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥

[ १२·१० ]—यदाष्टापद्यभूदित्यनुबुध्येत धाता रातिस्सवितेदं जुषन्तामिति स्रुवेणाहवनीये जुहुयात्० अन्तरा श्रोणी निघ्नन्ति० पुरुदस्मवदिति पात्रमुपदधाति० पुरस्तादन्यन्नाभ्या अवद्येत् पश्चादन्यत्० यद्दस्मवदानेषु व्यानयति० अष्टापृडि हिरण्यं दक्षिणा० तृतीयेऽन्तरकोश उष्णीषेणावेष्टितं भवति। विबिलानिव कोशान् कुर्यात्० तद्द्विष्णवे शिपिविष्टाय जुहोति० मही द्यौः पृथिवी च न इति पशुश्रपण उपवपति० ॥

वामासं—

एजतु दशमास्यो गर्भो जरायुणा सह ।
यथायं वायुरेजति यथा समुद्र एजति ।
एवायं दशमास्यो अस्रज्जरायुणा सह ॥
यस्यै ते यज्ञियो गर्भो यस्यै योनिर्हिरण्ययी ।
अङ्गान्यहुता यस्य तं मात्रा समजीगमꣳ स्वाहा ॥
पुरुदस्मो विषुरुप इन्दुरन्तर्महिमानमानञ्ज धीरः ।
एकपदीं द्विपदीं त्रिपदीं चतुष्पदीमष्टापदीं भुवनानु प्रथन्ताꣳ स्वाहा ॥

**मरुतो यस्य हि क्षये पाथा दिवो विमहसः। स सुगोपातमो जनः ॥**
**मही द्यौः पृथिवी च न .... ॥ ८.२८–३२**

माशब्रा [४.५.२]—वशामालभन्ते। तामालभ्य संज्ञपयन्ति। संज्ञप्याह **वपामुत्खिद** इति। उत्खिद्य वपाम् **अनुमर्शं गर्भमेष्टवै** ब्रूयात्। स यदि न विन्दन्ति किमाद्रियेरन्। यद्यु विन्दन्ति तत्र प्रायश्चित्तिः क्रियते० **स्थालीं चैवोष्णीषं चोपकल्पयितवै** ब्रूयात्। अथ वपया चरन्ति० वपया चरित्वाध्वर्युश्च यजमानश्च पुनरेतः। स आहाध्वर्युः **निरूहैतं गर्भम्** इति। त ᳪ ह नोदरतो निरूहेत्० तमपि **विरुज्य श्रोणी प्रत्यञ्चं निरूहितवै** ब्रूयात्। तं निरुह्यमाणमभिमन्त्रयते एजतु दशमास्यो गर्भो जरायुणा सह....इति० तदाहुः कथमेतं गर्भं कुर्यादिति। अङ्गादङ्गाद्धैवास्यावद्येयुः० तदु तथा न कुर्यात्० अधस्तादेव ग्रीवा अपिकृत्यैतस्याᳪ स्थाल्यामेतं मेधᳪ श्चोतयेयुः० तानि पशुश्रपणे श्रपयन्ति० उष्णीषेणावेष्ट्य गर्भं पार्श्वतः पशुश्रपणस्योपनिदधाति। यदा शृतो भवत्यथ समुद्यावदानान्येवाभिजुहोति० तं जघनेन चात्वालमन्तरेण यूपं चाग्निं च हरन्ति। दक्षिणतो निधाय प्रतिप्रस्थातावद्यति। अथ स्रुचोरुपस्तृणीते। अथ मनोतायै हविषोऽनुवाच आह। अवद्यन्ति वशाया अवदानानाम्० अथ प्रचरणीति स्रुग्भवति। तस्यां प्रतिप्रस्थाता मेधायोपस्तृणीते द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदाने। अथानुवाच आह। आश्राव्याह **प्रेष्य** इति। वषट्कृतेऽध्वर्युर्जुहोति। अध्वर्योरनु होमं जुहोति प्रतिप्रस्थाता यस्यै ते यज्ञियो गर्भः.... इति० अथाध्वर्युर्वनस्पतिना चरति। वनस्पतिनाध्वर्युश्चरित्वा यान्युपभृत्यवदानानि भवन्ति तानि समानयमान आह **अग्नये स्विष्टकृतेऽनुब्रूहि** इति। अत्याक्रामति प्रतिप्रस्थाता। स एतᳪ सर्वमेव मेधं गृह्णीते। अथोपरिष्टाद् द्विराज्यस्याभिघारयति। आश्राव्याह **प्रेष्य** इति। वषट्कृतेऽध्वर्युर्जुहोति। अध्वर्योरनु होमं जुहोति प्रतिप्रस्थाता पुरुदस्मो विषुरूप इन्दुः....इति० तदाहुः क्वैतं गर्भं कुर्यादिति० अप एवैनमभ्यवहरेयुः० आखूत्कर एवैनमुपकिरेयुः० पशुश्रपण एवैनं मरुद्भ्यो जुहुयात्० स हुत्वैव समिष्टयजूᳪषि प्रथमावशान्तेष्वङ्गारेष्वेतᳪ सोष्णीषं गर्भमादत्ते। तं प्राङ् तिष्ठञ्जुहोति मारुत्यर्चा मरुतो यस्य हि .... जन इति। न स्वाहाकरोति० अथाङ्गारैरभिसमूहति मही द्यौः पृथिवी .... भरीमभिरिति ॥

**वाकासं**—

**एजतु दशमास्यो....॥ यस्यास्ते यज्ञियो गर्भो यस्या.... ॥---॥**
**९.२७–३१.**

काशब्रा [ ५.६.४ ]——— अथ शमितारमाह **योनिं प्रतिमृश्येक्षस्व** इति यद्यष्टापदी भवत्यथैतत्कर्म क्रियते --- तस्य शिरः छित्वा रसं प्रस्राव्य प्रतिवेशमवदानानाᳪ श्रपयति।

यदाह अष्टापदीं भुवनानु प्रथन्ता ५ स्वाहेति । अथास्योष्णीषेण वा वकलेन वा शिरः प्रतिनह्य व्युह्य पशुश्रपणं तदेनमुपसमादधाति मरुतो यस्य हि....इति ॥

शांब्रा [ १८·१२-१३ ]—अथ यद्यष्टापदी स्यात् कथं स्यादिति । गर्भस्य त्वचो वपारूपं फलीकरणानां फालीकरणं गर्भमिति शामित्रे श्रपयित्वेतरस्य वषट्कारेषु शामित्रा एव जुहुयुः० अथ यदि गोपशुर्भवति० **युवं वस्त्राणि पीवसा वसाथे** इति वपायै याज्या० **यद्बंहिष्ठं नातिविधे सुदानू** इति पुरोळाशस्य० **प्र बाहवा सिसृतं जीवसे नः** इति हविषः० ॥

**यदि पशोरवदानं नश्येत्**

तैसं [ ३·१·३ ]—यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमव द्येत् सैव ततः प्रायश्चित्तिः ॥

मैसं [ ४·८·९ ]—यदवदानं न विन्देत्तदाज्यस्यावद्येत्० ॥

**यस्यागृहीता वसतीवरीः सूर्योऽभिनिम्रोचेत्**

तैसं [ ६·४·२ ]—यस्यागृहीता अभि निम्रोचेत्० ज्योतिष्या वा गृह्णीयाद् हिरण्यं वावधाय० यो वा ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात्० ॥

मैसं [ ४·५·१ ]—यस्यागृहीताः सूर्योऽभिनिम्रोचेद् य आहिताग्निः सोमयाजी तस्य कुम्भाद् गृह्याः० अग्निमुपरिष्टाद्धारयेयुरथ गृह्णीयात्० हिरण्यं हस्ते भवत्यथ गृह्णाति० वरो दक्षिणा० यत्तत्र धनमदास्यन्त्स्यात् तद्देयम् ॥

माशब्रा [ ३·९·२·८-९ ]—स यस्यागृहीता अभ्यस्तमियात् तत्र प्रायश्चित्तिः क्रियते । यदि पुरेजानः स्यान्निनाह्याद् गृह्णीयात्० यद्यु अनीजानः स्याद् य एनमीजान उपावसितो वा पर्यवसितो वा स्यात् तस्य निनाह्याद् गृह्णीयाद्० यद्यु एतदुभयं न विन्देदुल्कुषीमेवादायोपपरेयात् । तामुपर्युपरि धारयन् गृह्णीयात् । हिरण्यं वोपर्युपरि धारयन् गृह्णीयात्० ॥

**यद्यध्वर्युः प्रत्यङ् धिष्ण्यानतीयात्**[1]

मैसं [ ३·८·१० ] यदध्वर्युः प्रत्यङ् धिष्ण्यानतीयात् प्राणात्संकर्षेत प्रमायुकः स्यात् । यद्यतीयाद्यज्ञपरुष्यतीयात् । ऐन्द्रीमनुब्रूयात्० ॥

**वसतीवरीषु विषिक्तासु**

**कासं [ ३५·३ ]—**

**पृथिवि विभूवरि सिनीवाल्युरंध आचित्ते मनस्ते भुवो विवस्ते । य ऊर्मिर्दविष्य**

१. तैत्तिरीयकाठकयोरयं विध्यपराधः १६९, २९२, २९३ पृष्ठेषु द्रष्टव्यः ।

इन्द्रियावीस्तं व ऋध्यासी सोमस्याज्यमसि हविषो हविर्ज्योतिषो ज्योतिर्विश्वेषां देवानां भागधेयीस्स्थ देववीतये वो गृह्णामि ॥

सं वस्सिञ्चन्तु मरुतस्सं पूषा सं धाता समिन्द्रस्सं बृहस्पतिः ।
सं वोऽयमग्निस्सिञ्चतु प्रजया च धनेन च । आयुष्मन्तं कृणोत मा ॥
मान्दा वशाः .... ॥
आपो देवीर्घृतमिदाप आसन्नग्नीषोमौ बिभ्रत्याप इत्ताः ।
तीव्रो रसो मधुपृचामरंगम आ मा प्राणेन सह वर्चसागन् ॥
आदित् पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ्म आसाम् ।
मेने भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः ॥
समन्या यन्त्युप यन्त्यन्यास्समानमूर्वं नद्यः पृणन्ति ।
तमू शुचिं शुचयो दीदिवांसमपां नपातं परितस्थुरापः ।
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे ॥
योवश्शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥

**आहिताग्निरुपवसथे म्रियेत**

ऐब्रा [ ७·३२ ]—तदाहुः य आहिताग्निरुपवसथे म्रियेत कथमस्य यज्ञः स्यादिति । नैनं याजयेदित्याहुः० अत्रैवैनान्यनुपर्यादध्याद्यथा सर्वाणि संदह्येरन्० ॥

**यदुपावह्रियमाणः किंचिदापद्येत**

दृश्यताम् ‘ यद्यज्ञस्यार्च्छेत् ’

**यद्यंशुषु न्युप्तः किंचिदापद्येत**

दृश्यताम् ‘ यद्यज्ञस्यार्च्छेत् ’

**यद्याप्याय्यमानः किंचिदापद्येत**

दृश्यताम् ‘ यद्यज्ञस्यार्च्छेत् ’

**यद्यभिषूयमाणः किंचिदापद्येत**

दृश्यताम् ‘ यद्यज्ञस्यार्च्छेत् ’

**यदि संभ्रियमाणः किंचिदापद्येत**

दृश्यताम् ‘ यद्यज्ञस्यार्च्छेत् ’

**यदि पूयमानः किंचिदापद्येत**

दृश्यताम् ‘ यद्यज्ञस्यार्च्छेत् ’

**यदि पूतः किंचिदापद्येत**

दृश्यताम् ' यद्यज्ञस्याच्छेत् '

**यदि बहिष्पवमानप्रसर्पणे ऋत्विगवच्छिद्येत**

तांब्रा [ ६·७·१३–१५ ]—यदि प्रस्तोतावच्छिद्यते० ब्रह्मणे वरं दत्त्वा स एव पुनर्वर्तव्यः० यद्युद्गातावच्छिद्यते० सर्ङ्स्थाप्यः । अथान्य आहृत्यः । तस्मिन् देयं यावद्दास्यन् स्यात् । यदि प्रतिहर्तावच्छिद्यते० सर्ववेदसं देयम्० ॥

**यदि क्षीरश्रीः किंचिदापद्येत**

दृश्यताम् ' यद्यज्ञस्याच्छेत् '

**यदि सक्तुश्रीः किंचिदापद्येत**

दृश्यताम् ' यद्यज्ञस्याच्छेत् '

**यदि ब्रह्मा प्रमत्तो व्याहरेत्**

षब्रा [ १·६ ]—ब्रह्मा वाचंयमो बुभूषेत् । स यदि प्रमत्तो व्याहरेदेता वा व्याहृतीर्मनसानुद्रवेत् भूर्भुवः स्वः इति । वैष्णवीं वर्चम् इदं विष्णुर्विचक्रमे इति० ॥

**यदि सोमः स्कन्देत्**

मैसं [ ४·८·९ ]—पशुभिर्वा एष व्यृध्यते यस्य सोमः स्कन्दति० **मनो ज्योतिर्जुषतामाज्यस्य विच्छिन्नँ यज्ञँ समिमं दधातु** इति० **वर्धतां भूतिर्दध्ना घृतेन मुञ्चतु यज्ञँ यज्ञपतिमँहसः स्वाहा** इति जुहुयात्० **द्रप्सश्चस्कन्द पृथिवीमनु द्याम्** इत्यभिमृशति० त्रयस्त्रिँशदपोऽन्वतिषिञ्चति० ॥

**कासं [ ३५. ३–४ ]—**

स ईं वृषा जनयँस्तासु गर्भँ स ईँ शिशुर्धयति तं रिहन्ति ।
सो अपां नपादर्जयन्नप्स्वन्तर्वसुधेयाय विधते विभाति ॥
इह गावः प्रजायध्वमिहाश्वा इह पूरुषाः ।
इहो सहस्रदक्षिणो रायस्पोषः प्रजायताम् ॥
अयं यज्ञो वर्धतां गोभिरश्वैरियं वेदिस्स्वपत्या सुवीरा ।
इदं बर्हिरति बर्हीं ष्यन्येमं यज्ञं विश्वे अवन्तु देवाः ॥
स आ दमे सुदुघा यस्य धेनुस्स्वधां पीपाय सुभ्वन्नमत्ति ।
सो अपां नपादनभिम्लातवर्णोऽन्यस्य वेह तन्वा विवेष ॥

स्कन्ना द्यौस्स्कन्ना पृथिवी स्कन्नं विश्वमिदं हविः ।
स्कन्नादो विश्वा भूतानि प्र स्कन्नं जायतां हविः ॥

इह गावो .... ॥ अयं यज्ञः ....॥

पयस्वतीराप ओषधयः पयस्वन्मामकं वचः ।
अपां पयस्वद्यत् पयस्तेन नस्सह वर्धताम् ॥

यद्वामृक्षच्छकुनिर्मुखेन निर्ऋते तव ।
अग्निष्टत् सर्वं शुन्धतु हव्यवाड् घृतसूदनः ॥

यद्वामृक्षच्छ्वपान्मुखेन निर्ऋते तव ।
अग्निष्टत् सर्वं शुन्धतु हव्यवाड् घृतसूदनः ॥

भूतिर्दध्ना घृतेन वर्धतां यज्ञं यज्ञाय मुञ्चतु स्वाहा ।
घृतेन वर्धतां भूतिर्मुञ्चेमं यज्ञपतिमंहसस्स्वाहा ॥

यास्ते अग्ने समिधो अप्स्वन्तर्वर्ष्मन् पृथिव्या उप सूर्ये याः ।
तास्ते गच्छन्त्वाहुतीर्घृतस्य देवाव्ये यजमानाय शर्म ॥

कासं [ ३५.८ ]—

द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
समानं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥

यस्ते द्रप्सस्स्कन्दति यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थे ।
अध्वर्योर्वा परि वा यः पवित्रात् तत् ते जुहोमि मनसा वषट्कृतम् ॥

यो द्रप्सो अंशुः पतितः पृथिव्यां परिवापात् पुरोडाशात् करम्भात् ।
धानासोमान् मन्थिन इन्द्र शुक्रात् स्वाहाकृतमिन्द्राय तं जुहोमि ॥

यस्ते द्रप्सो मधुमां इन्द्रियावान् स्वाहाकृतः पुनरप्येति देवान् ।
अध्वर्योर्वा परि वा यः पवित्रात् तत् ते जुहोमि मनसा वषट्कृतम् ॥

यस्ते द्रप्सस्स्कन्दति यस्ते अंशुरवश्च यः परो दिवः ।
अयं देवो बृहस्पतिस्सं तत् सिञ्चतु राधसा ॥

कासं [ ३४.१८ ]—ब्रह्मन् सोमोऽस्कानिति० यत्र स्कन्देत् तदपो निनीय । अभूद्देवस्सविता वन्द्यो नु न इदानीमह्न उपवाच्यो नृभिः । वि यो रत्ना भजति मानवेभ्यश्श्रेष्ठं नो अत्र द्रविणं यथा दधत् इत्यभिमन्त्रयेत० ॥

वामासं—

ययोरोजसा स्कभिता रजा ँ सि वीर्येभिर्वीरतमा शविष्ठा ।
या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ ॥

देवान् दिवमगन् यज्ञस्ततो मा द्रविणमष्टु मनुष्यानन्तरिक्षमगन् यज्ञस्ततो मा द्रविणमष्टु पितॄन् पृथिवीमगन् यज्ञस्ततो मा द्रविणमष्टु यं कं च लोकमगन् यज्ञस्ततो मे भद्रमभूत् ॥ ८.५९–६०

माशब्रा [ ४.५.७.७–९ ]—अथ यदि स्कन्देत् तदद्भिरुपनिनयेत्० वैष्णववारुण्यर्चा० ययोरोजसा स्कभिता.... पूर्वहूतावितिः० अथो अभ्येव मृशेत् देवान् दिवमगन् यज्ञस्ततो मा द्रविणमष्टु.... अभूदिति ॥

वाकासं [ ९.४५–४६ ] ≡ वामासं

काशब्रा [ ५.७.४.९–१० ] = माशब्रा ४.५.७.७–९ --- अथ यदि पृषदाज्यँ स्कन्देत्तदद्भिरनुनिनेतवै ब्रूयात् --- ॥

षब्रा [ १.५ ]—अधःस्कन्नाद्वा भिन्नाद्वा त्रेधा यज्ञ उत्क्रामति० तदभिमृशेत् देवान् दिवं यज्ञोऽगात्ततो मा द्रविणमष्टु । अन्तरिक्षं मनुष्यान् यज्ञोऽगात्ततो मा द्रविणमष्टु । पृथिवीं पितॄन् यज्ञोऽगात्ततो मा द्रविणमष्टु । यत्र क्व च यज्ञोऽगात्ततो मा द्रविणमष्टु इति० यद्यज्ञ उल्बणं क्रियते तदप उपनिनयेत् ययोरोजसा स्कभिता रजाँसि वीर्येभिर्वीरतमा शविष्ठा । या पत्येते अप्रतीता सहोभिर्विष्णू अगन् वरुणा पूर्वहूतौ स्वाहा इति० ॥

अशौसं—

ये अग्नयो अप्स्वन्तर्ये वृत्रे ये पुरुषे ये अश्मसु ।
य आविवेशोषधीर्यो वनस्पतींस्तेभ्यो अग्निभ्यो हुतमस्त्वेतत् ॥
यः सोमे अन्तर्यो गोष्वन्तर्य आविष्टो वयःसु यो मृगेषु ।
य आविवेश द्विपदो यश्चतुष्पदस्तेभ्यो .... ॥
य इन्द्रेण सरथं याति देवो वैश्वानर उत विश्वदाव्यः ।
यं जोहवीमि पृतनासु सासहिं तेभ्यो .... ॥
यो देवो विश्वाद्यमु काममाहुर्यं दातारं प्रतिगृह्णन्तमाहुः ।
यो धीरः शक्रः परिभूरदाभ्यस्तेभ्यो .... ॥
यं त्वा होतारं मनसाभि संविदुस्त्रयोदश भौवनाः पञ्च मानवाः ।
वर्चोधसे यशसे सूनृतावते तेभ्यो .... ॥

उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । वैश्वानरज्येष्ठेभ्यस्तेभ्यो.... ॥
दिवं पृथिवीमन्वन्तरिक्षं ये विद्युतमनुसंचरन्ति ।
ये दिक्ष्वन्तर्ये वाते अन्तस्तेभ्यो.... ॥ ३.२१.१–७ ॥

अपैसं—

यो अप्स्वन्तरग्निर्यो वृत्रे अन्तर्यः पुरुषे योऽश्मनि । य आविवेशौषधीर्यो....॥ यः सोमे....वयसि.... ॥ य इन्द्रेण सरथं संबभूव वैश्वानर...॥ यो देवो विश्वाद्यमु...॥ यं त्वा होतारं... ॥ उक्षान्नाय... ॥ दिवं पृथिवी... । यो दिक्ष्वन्तर्यो वाते... ॥ ३.१२. १–७.

गोब्रा [ २.२.१२ ]—यत्र विजानाति ब्रह्मन्त्सोमोऽस्कन् इति तमेतयालभ्याभिमन्त्रयते अभूद्देवः सविता वन्द्यो नु न इदानीमह्न उपवाच्यो नृभिः । वि यो रत्ना भजति मानवेभ्यः श्रेष्ठं नो अत्र द्रविणं यथा दधत् इति । ये अग्नयो अप्स्वन्तरिति सप्तभिरभिजुहोति० ॥

**यस्य ग्रावापिशीर्यते**

कासं [ ३५.१६ ]—यस्य ग्रावापिशीर्यते० द्युतानस्य मारुतस्य ब्रह्मसामेन स्तुवीरन्० प्रजापतये स्वाहा इत्यभक्षणीयानुपरवेष्ववनयेत्० सैव तत्र प्रायश्चित्तिः ॥

साकौसं—

**बहिष्पवमानस्तोत्रम्**[1]
**चत्वारि आज्यस्तोत्राणि**[2]
**माध्यंदिनपवमानस्तोत्रम्**

| | | |
|---|---|---|
| १–३ स्तोमाः | गायत्रम्[3] | |
| ४–६ ,, | आमहीयवम्[4] | ऊह १.१.१ |
| ७ स्तोमः | रौरवम्[5] | ऊह १.१.२ |

साकौसं [ १.६.१.३.१; २.१.१.९ ]—

पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥
दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नꣳ सधस्थमासदत् ।
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥

---

१. द्रष्टव्यं पृ. २७८ । २. द्रष्टव्यं पृ. ३२८, ३३६, ३४०, ३४५ । ३. द्रष्टव्यं पृ. ३५७ ।
४. द्रष्टव्यं पृ. ३५८ । ५. द्रष्टव्यं पृ. ३५८ । अत्र तु प्रथमायामेव ।

८ स्तोमः द्यौतानम्

१ २ १ २ १ २ २ १ र र ^ ३ २ ३ ५ १ २ १ २
हुम् हा२ओ२हा२ओ२हा२हावुत्सोदेवो२हिरण्या२३४याः ॥ ओ६हा२ओ२हा
१ २ २ १ र र ^ ३ २ ३ ५ २ १ २ १ २ २ १ र र
२ओ२हा२हावुत्सोदेवो२हिरण्या२३४याः ॥ हा२ओ२हा२ओ२हा२हाइदुहान ऊध-
^ ३२ ३ ५ २ १ २ १ २ २ १ ^ ३ २ ३
र्दिविया२म्मधुम्रा२३४याम् ॥ हा२ओ२हा२ओ२हा२हाइप्रत्न६सधा२स्थमासा२३४
५ २ १ २ १ २ ० ५र र १ १ १ १ १
दाद्धा२ओ२हा२ओ२हा२हा३४ औहोवा ॥* आ२३इन्द्रा२३४५म् ॥ [ऊह २१·३·९]

९ स्तोमः दैर्घश्रवसम्[१] ऊह ११.२.१६

९ „ उद्वत् प्राजापत्यम्[२] ऊह २१.१.१

१०–१२ स्तोमाः यौधाजयम्[३] ऊह १.१.३

१३–१५ स्तोमाः औशनम्[४] ऊह १.१.४

चत्वारि पृष्ठस्तोत्राणि[५]

आर्भवपवमानस्तोत्रम्[६]

अग्निष्टोमस्तोत्रम्[७]

तांब्रा [ ९·९·१३–१४ ]—यदि ग्रावापिशीर्यते० द्युतानस्य मारुतस्य साम्ना स्तुयुः० ॥

जैब्रा [ १·३५२ ]—यदि ग्रावा विशीर्येत द्युतानस्य मारुतस्य ब्रह्मसाम्ना स्तुवीरन् । यदि वान्यो ग्रावा स्यात्तेनाभिषुणुयुः । यदि तं न विन्देयुरौदुम्बरं वा पालाशं वा कृत्वा तेनाभिषुणुयुः । सैव तत्र प्रायश्चित्तिः ॥

---

१ १ १ १ १ १ २ ३ १ १ १ १
* आ२३इन्द्रा२३४५ म् इति निधनं आऔ३हो२३४५ इत्यस्य स्थाने ।

१. यथा सौमिकचातुर्मास्येषु साकमेधे द्वितीयेऽहनि । अत्र तृतीयायामेव । २. वैकल्पिकम् । द्रष्टव्यं काम्याग्निष्टोमेषु 'ज्योगामयाविनि' । ३. द्रष्टव्यं पृ. ३५९ । ४. द्रष्टव्यं पृ. ३६० । ५. द्रष्टव्यं पृ. ३८८, ३९८, ४०३, ४११ । ६. द्रष्टव्यं पृ. ४२० । ७. द्रष्टव्यं पृ. ४५३ ।

ऋक्सं—

[1]अध्वर्यो शोंसावो३म् [2]वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः। मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासो३म् त्रिः षष्टिस्त्वा मरुतो वावृधाना उस्रा इव राशयो यज्ञियासः। उप त्वेमः कृधि नो भागधेयं शुष्मं त एना हविषा विधेमो३म् तिग्ममायुधं मरुतामनीकं कस्त इन्द्र प्रति वज्रं दधर्ष। अनायुधासो असुरा अदेवाश्चक्रेण ताँ अप वप ऋजीषो३म् (८.९६.७–९) शोंसावो३म् [3]मह उग्राय तवसे सुवृक्तिं प्रेरय शिवतमाय पश्वः। गिर्वाहसे गिर इन्द्राय पूर्वीर्धेहि तन्वे कुविदङ्ग वेदो३म् उक्थवाहसे विभ्वे मनीषां द्रुणा न पारमीरया नदीनाम्। नि स्पृश धिया तन्वि श्रुतस्य जुष्टतरस्य कुविदङ्ग वेदो३म् तद्विविड्ढि यत् त इन्द्रो जुजोषत् स्तुहि सुष्टुतिं नमसा विवास। उप भूष जरितर्मा रुवण्यः श्रावया वाचं कुविदङ्ग वेदो३म् ( ८.९६. १०–१२ )॥

[4]अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना।
मुषायद् विष्णुः पचतं सहीयान् विध्यद् वराहं तिरो अद्रिमस्ता॥ १.६१.७
दिवो न तुभ्यमन्विन्द्र सत्रासुर्यं देवेभिर्धायि विश्वम्।
अहिं यद् वृत्रमपो वव्रिवांसं हन्नृजीषिन् विष्णुना सचानः॥ ६.२०.२
सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य।
जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता॥
या विश्वासां जनितारा मतीनामिन्द्राविष्णू कलशा सोमधाना।
प्र वां गिरः शस्यमाना अवन्तु प्र स्तोमासो गीयमानासो अर्कैः॥
इन्द्राविष्णू मदपती मदानामा सोमं यातं द्रविणो दधाना।
सं वामञ्जन्त्वक्तुभिर्मतीनां सं स्तोमासः शस्यमानास उक्थैः॥
आ वामश्वासो अभिमातिषाह इन्द्राविष्णू सधमादो वहन्तु।
जुषेथां विश्वा हवना मतीनामुप ब्रह्माणि शृणुतं गिरो मे॥

---

१. शाङ्खा०मते ब्राह्मणाच्छंसिशस्त्रम्। 'द्युतानस्य मारुतस्य साम्ना स्तुयुः' इति ताण्ड्यब्राह्मणम्। 'पुनानः सोम धारयेति रौरवमेकस्यां द्यौतानमेकस्याम्' (१.११) इत्यादिक्षुद्रसूत्रानुसारेणापि द्यौतानं मारुतं साम माध्यंदिने पवमानेऽन्तर्भाव्यमिति कौथुमानामभिप्रायः स्पष्टो भवति। परं द्युतानस्य मारुतस्य ब्रह्मसाम्ना स्तुवीरन्निति काठकवचनं जैमिनीयब्राह्मणं चानुसृत्य शाङ्खा०मतानुसारेण च ब्राह्मणाच्छंसिशस्त्रात् पूर्वं द्यौतानं तृतीयं पृष्ठसाम कुर्यात्। २. स्तोत्रियस्तृचः। ३. अनुरूपस्तृचः। ४. एतदादय ऐन्द्रावैष्णव्य ऋचः स्तोमातिशंसनार्थाः। ताभ्यो यथार्थमृच आदाय शंसनीयाः। 'ऐन्द्रावैष्णवीभिः स्तोममतिशंसेत्' इति शाङ्खा०सूत्रम् ( १३.१२.५ )। भाष्यानुसारेणैता ऋचोऽत्र उध्दृताः।

इन्द्राविष्णू तत् पनयाय्यं वां सोमस्य मद उरु चक्रमाथे ।
अकृणुतमन्तरिक्षं वरीयोऽप्रथतं जीवसे नो रजांसि ॥
इन्द्राविष्णू हविषा वावृधानाग्राद्वाना नमसा रातहव्या ।
घृतासुती द्रविणं धत्तमस्मे समुद्रः स्थः कलशः सोमधानाः ॥
इन्द्राविष्णू पिबतं मध्वो अस्य सोमस्य दस्रा जठरं पृणेथाम् ।
आ वामन्धांसि मदिराण्यग्मन्नुप ब्रह्माणि शृणुतं हवं मे ॥
उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः ।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥ ६.६९
उरुं यज्ञाय चक्रथुरु लोकं जनयन्ता सूर्यमुषासमग्निम् ।
दासस्य चिद् वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ॥
इन्द्राविष्णू दृंहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् ।
शतं वर्चिनः सहस्रं च साकं हथो अप्रत्यसुरस्य वीरान् ॥
इयं मनीषा बृहती बृहन्तोरुक्रमा तवसा वर्धयन्ती ।
ररे वां स्तोमं विदथेषु विष्णो पिन्वतमिषो वृजनेष्विन्द्र ॥ ७.९९. ४–६
व्यर्यमा वरुणश्चेति पन्थामिषस्पतिः सुवितं गातुमग्निः ।
इन्द्राविष्णू नृवदु षु स्तवाना शर्म नो यन्तममवद् वरूथम् ॥ ४.५५.४
[1]वर्धान् यं विश्वे मरुतः सजोषाः पचच्छतं महिषाँ इन्द्र तुभ्यम् ।
पूषा विष्णुस्त्रीणि सरांसि धावन् वृत्रहणं मदिरमंशुमस्मै ॥ ६.१७.११
[2]प्रोतये वरुणं मित्रमिन्द्रं मरुतः कृष्वावसे नो अद्य ।
प्र पूषणं विष्णुमग्निं पुरंधिं सवितारमोषधीः पर्वतांश्च ॥ ६.२१.९
[3]या विश्वासां जनितारा मतीनामिन्द्राविष्णू कलशा सोमधाना ।
प्र वां गिरः शस्यमाना अवन्तु प्र स्तोमासो गीयमानासो अर्कैः ॥ ६.६९.२
[4]इन्द्राविष्णू तत् पनयाय्यं वां सोमस्य मद उरु चक्रमाथे ।
अकृणुतमन्तरिक्षं वरीयोऽप्रथतं जीवसे नो रजांसि ॥ ६.६९.५

## यदि द्रोणकलशो दीर्येत

कासं [ ३४.४ ]—यदि प्रातस्सवने कलशो दीर्येत वैष्णवीषु शिपिविष्टवतीषु माध्यंदिने पवमाने स्तुयुः० यदि मध्यंदिन आर्भवस्य पवमानस्य पुरस्ताद्वषट्कारनिधनं साम कुर्युः । यदि तृतीयसवन एतदेव० ॥

---

१. परिधानीया । २. वैकल्पिकी परिधानीया । ३. याज्या । ४. वैकल्पिकी याज्या ।

कासं [ ३५.१० ]—

असवे स्वाहा ॥ वसवे स्वाहा ॥ विभवे स्वाहा ॥ विवस्वते स्वाहा ॥ शूषाय स्वाहा ॥ संसर्पाय स्वाहा ॥ मलिम्लुचाय स्वाहा ॥ गणश्रिये स्वाहा ॥ चन्द्राय स्वाहा ॥ ज्योतिषे स्वाहा ॥ अभिभवे स्वाहा ॥ अधिपतये स्वाहा ॥ दिवापतये स्वाहा ॥ इन्द्रस्य ग्रहोऽस्यगृहीतो ग्राह्यो देवानां पूरसि तां त्वा प्रविशामि तां त्वा प्रपद्ये सह गृहैस्सह प्रजया सह पशुभिस्सहर्त्विग्भिस्सह सदस्यैस्सह सोम्यैस्सह दक्षिणीयैस्सह यज्ञेन सह यज्ञपतिना ॥ इन्द्राग्नी परिधी मम वाता देव पुरा कृता तत्त्वेन्द्रग्रह प्रपद्ये सगुस्साश्वस्सपूरुषस्सह यन्मेऽस्ति तेन ॥ अरिष्ट्या अव्यथ्यै संवेशायोपवेशाय गायत्र्यै छन्दसेऽभिभुवे स्वाहा ॥ अरिष्ट्या अव्यथ्यै संवेशायोपवेशाय त्रिष्टुभे छन्दसे .... ॥ अरिष्ट्या.... जगत्यै छन्दसे ....॥ अरिष्ट्या ....अनुष्टुभे छन्दसेऽभिभुवे स्वाहा ॥

माशब्रा [ ४.५.१०.७ ]—अथ कलशदिराम् । यदि कलशो दीर्येत अनुलिप्सध्वम् इति ब्रूयात् । स यद्यनुलभेरन् प्रसृतमात्रं वाञ्जलिमात्रं वा तदन्यैरेकधनैरभ्युनीय यथाप्रभावं प्रचरेयुः । यद्यु नानुलभेरन्नाग्रयणस्यैव प्रस्कन्द्यान्यैरेकधनैरभ्युनीय यथाप्रभावं प्रचरेयुः । स यद्यनीतासु दक्षिणासु कलशो दीर्येत तत्राप्येकामेव गां दद्यात् । अथावभृथादेवोदेत्य पुनर्दीक्षेत । पुनर्यज्ञो ह्येव तत्र प्रायश्चित्तिः० ॥

साकौसं—

बहिष्पवमानस्तोत्रम्[1]

चत्वारि आज्यस्तोत्राणि[2]

माध्यंदिनपवमानस्तोत्रम्[3]

प्रथमद्वितीयपृष्ठस्तोत्रे[4]

तृतीयपृष्ठस्तोत्रम्

श्रायन्तीयम्[5] ऊह ५.२.९

चतुर्थपृष्ठस्तोत्रम्

कालेयम्[6] ऊह २१.१.१०

आर्भवपवमानस्तोत्रम्

१–३ स्तोमाः गायत्रम्[7]

४–६ ,, संहितम्[7] ऊह १.१.८

---

१. द्रष्टव्यं पृ. २७८ । २. द्रष्टव्यं पृ. ३१८, ३३६, ३४०, ३४५ । ३. द्रष्टव्यं पृ. ३५७ । ४. द्रष्टव्यं पृ. ३८८, ३९८ । ५. यथा द्वादशाहे नवमेऽहनि । ६. द्रष्टव्यं काम्याग्निष्टोमेषु 'यज्ञविभ्रष्टः स्यात्'। ७. द्रष्टव्यं पृ. ४२०–४२१ ।

| | | |
|---|---|---|
| ७ स्तोमः | सफम्[1] | ऊह २१ १.१४ |
| ८ ,, | पौष्कलम्[1] | ऊह २१ १.१५ |
| ९ ,, | श्यावाश्वम्[2] | ऊह १५.२.१९ |
| १० ,, | आन्धीगवम्[3] | ऊह १५.२.२० |
| ११ ,, | वषट्कारनिधनम् | |

साकौसं [ २·३·२·१९·१ ]—

पवस्व वाजसातये पवित्रे धारया सुतः ।
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तरः ॥

१ ३४ र ३र४५र २ ४र५ ४र ५ १ २ र र १ ७ - १
हुम् पवस्ववाजसातयेपवस्वा३वाजसातयाइ ॥ ओम्पवित्रेधारा३यासूता२रया-
२ १र९ १ २ र र १ ७ - १ २ १र९ २
सू१ता२३ओमो३वा ॥ इन्द्रायसोमा३वाइष्णवा२इमवाइष्णा१वा२३ओमो३वा ॥
र र र १ ७ - १.२ १र ^३ ५र र ३ ५
देवेभ्योमधू३मात्तरा२धुमात्ता१रा२३ओमो२वा२३४औहोवा ॥ *वा२३४षाट् ॥
[ ऊह २१·३·२ ]

| | | |
|---|---|---|
| १२–१४ स्तोमाः | यज्ञायज्ञीयम्[4] | ऊह ८.२.१६ |
| १५–१७ ,, | कावम्[5] | ऊह १.१.१२ |

अग्निष्टोमस्तोत्रम्

| | |
|---|---|
| वारवन्तीयम्[6] | ऊह १३.१.११ |

साकौसं—( वैकल्पिको विधिः )

बहिष्पवमानस्तोत्रम्[7]
चत्वारि आज्यस्तोत्राणि[8]
माध्यंदिनपवमानस्तोत्रम्[9]
प्रथमद्वितीयपृष्ठस्तोत्रे[10]

---

१. यथा काम्याग्निष्टोमेषु 'योनेर्यज्ञं प्रतन्वानः'। २. यथा अहीनेषु पञ्चशारदीयस्य पञ्चमेऽहनि । अत्र तु तृतीयायामेव । ३. यथा अहीनेषु पञ्चशारदीयस्य पञ्चमेऽहनि । अत्र तु द्वितीयायामेव ।

३ ५ ३ ५
*वा२३४ षाट् इति निधनं ऊ२३४पा इत्यस्य स्थाने ।

४. यथा गवामयनेऽभिजिति । ५. द्रष्टव्यं पृ. ४२४ । ६. यथा एकाहेषु प्रथमचतुष्टोमे । ७. द्रष्टव्यं पृ. २७८ । ८. द्रष्टव्यं पृ. ३२८, ३३६, ३४०, ३४५ । ९. द्रष्टव्यं पृ. ३५७ । १०. द्रष्टव्यं पृ. ३८८, ३९८ ।

## तृतीयपृष्ठस्तोत्रम्

### वषट्कारनिधनम्

साकौसं [ २.९.१.७.१–३ ]—

विधुं दद्राणꣳ समने बहूनां युवानꣳ सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥
शाक्मना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीडः ।
यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥
ऐभिर्ददे वृष्ण्या पौꣳस्यानि येभिरौक्षद् वृत्रहत्याय वज्री ।
ये कर्मणः क्रियमाणस्य मह्न ऋतेकर्ममुदजायन्त देवाः ॥

१ ४ ३ ४ र ३ ४५र र १ ४र५४र५ १ २ र र
हुम् विधुन्दद्राणꣳसमनेबहूना३म्मनेबहूनाम् ॥ ओꣳयुवानꣳसन्तंपलितोजा३
१ –१ १र ९ २ र र १ – २ १र ९
गारा२रा२ ३ओमो३वा ॥ देवस्यपश्यकाव्यम्मा३ह्नाइत्वा२वियम्माहा१इत्वा२ ३ओमो
२ २ र २ १ ^१ १र ^३ ५र र १ ५
३वा ॥ अद्याममारसह्यःसा३माना२ना२ ३ओमो२वा२ ३४औहोवा ॥ वा२३४षाट् ॥
४र ३र ४र ३र ४ ५ २ ४ ५ ४ ५ १ २र र र र १
[ १ ] शाक्मनाशाकोअरुणःसुपर्णा३रुणःसुपर्णाः ॥ ओमायोमहःशूरःसनादा३नाइडा
–१ १र ९ २ र १ १ – १ १ १र ९ २
२डा२ ३ओमो३वा ॥ यच्चिकेतसत्यमित्तन्ना३मोघा२मित्तन्नामो१घा२ ३मोमो३वा ॥
२ र र र १ –१ १र ^३ १र र १ ५
वसुस्पार्हमुतजेतोता३दाता२ता२ ३ओमो२वा२ ३४औहोवा ॥ वा२३४षाट् ॥ [ २ ]
३र४ र २ र ५ ३र १ ४र र ५ ४र ५ १ रर र र
ऐभिर्ददेवृष्ण्यापौꣳसियाना३इवृष्ण्यापौꣳसियानाइ ॥ ओꣳयेभिरौक्षद्वृत्रहत्याया३
१ – १र १र ९ २ २र र १ –१ १ २
वाज्रा२इज्रा२ ३इओमो३वा ॥ येकर्म्मणःक्रियमाणस्या३माह्ना२माणस्यामा१ह्ना२३
१र ९ २ २ र र १ – १ १र ^ ३ ५र र ३
ओमो३वा ॥ ऋतेकर्म्मुदजायन्ता३दाइवा२वा२ ३ओमो२वा२ ३४औहोवा ॥ *वा
५
२३४ षाट् ॥ [ ३ ] [ ऊह २१.३.४ ]

---

१ ५ ३ ५
* वा २३४षाट् इति निधनम् ऊ २३४ पा इत्यस्य स्थाने ।

## चतुर्थपृष्ठस्तोत्रम्

कालेयम्[1] ऊह २१.१.८

## आर्भवपवमानस्तोत्रम्

१–३ स्तोमाः गायत्रम्[2]

४–६ ,, संहितम्[2] ऊह १.१.८

७ स्तोमः सफम्[3] ऊह १०.१.९

८ ,, पौष्कलम्[4] ऊह १.१.१०

९ ,, श्यावाश्वम्[5] ऊह १५.२.१९

१० ,, आन्धीगवम्[6] ऊह १५.२.२०

११ ,, श्रायन्तीयम्

साकौसं [ २.३.२.१९.१ ]—

पवस्व वाजसातये पवित्रे धारया सुतः ।
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तरः ॥

१ २ र २ २ १ –१र – १–१ र २ र
हुम् पवस्ववाजसा१तायाइ ॥ ओम्पवा२इत्रेधा२रया२सूताआइन्द्रायसोमवा-
१ २ – २र१र२र १ २ र १ २ १र २ २ १ ३ १ १ ५
इष्णा१वा२इ ॥ देवेभ्योमधुमत्तरोदे२३वे ॥ भ्योमाधू३माहुन्तरा३ओ२३४वा ॥
२११ ११
हे२३४५ ॥ [ ऊह २१.३.७ ]

१२–१४ स्तोमाः यज्ञायज्ञीयम्[7] ऊह ८.२.१६

१५–१७ ,, कावम्[8] ऊह १.१.१३

## अग्निष्टोमस्तोत्रम्

वारवन्तीयम्[9] ऊह १३.१.११

तांब्रा [ ९.६. १–११ ]—यदि कलशो दीर्येत वषट्कारणिधनं ब्रह्मसाम कुर्यात्० विधुं दद्राणᳪ समने बहूनामित्येतासु कार्यम्० तदाहुर्न वा आर्त्यार्तिरनूद्या । आर्त्या वा एष आर्तिमनुवदति यः कलशे दीर्णे दद्राणवतीषु करोतीति । श्रायन्तीयमेव कार्यम्० यदि श्रायन्तीयं ब्रह्मसाम स्याद्वैष्णवीष्वनुष्टुप्सु वषट्कारणिधनं कुर्यात्० वारवन्तीयमग्निष्टोमसाम कार्यम्० ॥

---

१. द्रष्टव्यं काम्याग्निष्टोमेषु 'अभिचरन्'। २. द्रष्टव्यं पृ. ४२०–४२१। ३. यथा एकाहे चतुर्थे साहस्रे। ४. द्रष्टव्यं पृ. ४२२। ५. यथा अहीने पञ्चशारदीयस्य पञ्चमेऽहनि। अत्र तु तृतीयायामेव। ६. यथा अहीने पञ्चशारदीयस्य पञ्चमेऽहनि। अत्र तु द्वितीयायामेव। ७. यथा गवामयनेऽभिजिति। ८. द्रष्टव्यं पृ. ४२४। ९. यथा एकाहे प्रथमचतुष्टोमे।

साजैसं [ ४·११·४–५ ]—

विश्वेत्ता विष्णुरा भरदुरुक्रमस्त्वेषितः ।
शतं महिषान् क्षीरपाकमोदनं वराहमिन्द्र एमुषम् ।।
तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः ।
उभा ते बाहू रण्या सुसꣳस्कृत ऋदूपे चिदृदूवृधा ।।

साजैसं [ ३·३०·९–११ ]—

पवस्व वाजसातये पवित्रे धारया सुतः ।
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तमः ।।
त्वाꣳ रिहन्ति धीतयो हरिं पवित्रे अद्रुहः ।
वत्सं जातं न मातरः पवमाना विधर्मणि ।।
त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे ।
प्रति द्रापिममुञ्चथाः पवमान महित्वना ।।

साजैसं [ १·४३·४–६ ]—

यत्सोममिन्द्र विष्णवे यद्वा घ त्रित आप्त्ये । यद्वा मरुत्सु मन्दसे समिन्दुभिः ।।
एदु मधोर्मदिन्तरं सिञ्चाध्वर्यो अन्धसा । एवा हि वीरः स्तवते सदावृधः ।।
एन्दुमिन्द्राय सिञ्चत पिबत सोम्यं मधु । प्र राधाꣳसि चोदयता महित्वना ।।

जैब्रा [ १·३५२ ]—यदि प्रातस्सवने कलशो दीर्येत विश्वेत्ता विष्णुराभरदिति वैष्णवीर्बृहतीर्माध्यंदिने कुर्युः । यदि माध्यंदिने सवने कलशो दीर्येत पवस्व वाजसातय इति वैष्णवीरनुष्टुभ आर्भवपवमाने कुर्युः । यदि तृतीयसवने कलशो दीर्येतोक्थ्यं कृत्वा यत् सोममिन्द्र विष्णव इत्येतासु ब्रह्मसाम कुर्युः ० श्रायन्तीयं ब्रह्मसाम० यज्ञायज्ञीयमनुष्टुप्सु प्रोहन्ति० वारवन्तीयमग्निष्टोमसाम० दीर्णस्य परिलिप्सेतापि[1] । अथ उपस्थितमिच्छेत् । स ब्रूयात् अन्यं कलशमाहरत इति । तदुदीचीनदशं पवित्रं वितत्य शल्कमस्याथ राजानमानयेत् । अथाग्रयणस्य ग्रहस्याश्चोतयेत् । अथैकधनमवनयेत् । एकं वा द्वौ वा यावदलं मन्येत । सैव तत्र प्रायश्चित्तिः ।।

ऋसं—

[2]अध्वर्यो शोंसावो३म् [3]विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार । देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समानो३म् शाक्मना शाको अरुणः सुपर्ण आयो महः शूरः सनादनीळाः । यच्चिकेत सत्यमित् तन्न मोघं वसु स्पार्हमुत

१. 'परिलाप्सेतापि' इति मुद्रितपाठः ।
२. यदि वषट्कारनिधनं ब्रह्मसाम भवति तदा शाब्रा०मते माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रम् ।
३. स्तोत्रियस्तृचः ।

जेतोत दातो३म् ऐभिर्ददे वृष्ण्या पौंस्यानि येभिरौक्षद् वृत्रहत्याय वज्री। ये कर्मणः क्रियमाणस्य मह्न ऋतेकर्ममुदजायन्त देवो३म् (१०.५५.५-७) शोंसावो३म् [1]महत् तन्नाम गुह्यं पुरुस्पृग् येन भूतं जनयो येन भव्यम्। प्रत्नं जातं ज्योतिर्यदस्य प्रियं प्रियाः समविशन्त पञ्चो३म् आ रोदसी अपृणादोत मध्यं पञ्च देवाँ ऋतुशः सप्तसप्त। चतुस्त्रिंशता पुरुधा वि चष्टे सरूपेण ज्योतिषा विव्रतेनो३म् यदुष औच्छः प्रथमा विभानामजनयो येन पुष्टस्य पुष्टम्। यत् ते जामित्वमवरं परस्या महन्महत्या असुरत्वमेको३म् (१०.५५.२-४)[2] ॥

आधवनीये दीर्णे प्रवृत्ते वा

तैसं [ ३.२.२ ]—

द्वौ समुद्रौ विततावजूर्यौ पर्यावर्तेते जठरेव पादाः।
तयोः पश्यन्तो अतियन्त्यन्यमपश्यन्तः सेतुनातियन्त्यन्यम् ॥

पूतभृति दीर्णे प्रवृत्ते वा

तैसं [ ३.२.२ ]—

द्वे द्रधसी सतती वस्त एकः केशी विश्वा भुवनानि विद्वान्।
तिरोधायैत्यसितं वसानः शुक्रमा दत्ते अनुहाय जार्यै ॥

यस्य सोम उपदस्येत्

तैब्रा [ १.४.७ ]—यस्य सोम उपदस्येत्। सुवर्णं९ हिरण्यं द्वेधा विच्छिद्य। ऋजीषेऽन्यदा धूनुयात्। जुहुयादन्यत्० ॥

यस्य द्रोणकलश उपदस्यति

कासं [ ३५.१६ ]—यस्य द्रोणकलश उपदस्यति० तदाहुः पयोऽवनयेदिति० अथो खल्वाहुः० हिरण्यमेवापोऽभ्यवनयेद्धिरण्यमभ्युन्नयेत्० चत्वारो वरा देया ब्रह्मण उद्गात्रे होत्रेऽध्वर्यवे० सैव तत्र प्रायश्चित्तिः ॥

तांब्रा [ ९.९.१-३ ]—यस्य कलश उपदस्यति० तदाहुः पयोऽवनयेदिति। अथो खल्वाहुः० हिरण्यमेवापोऽभ्यवनयेद्धिरण्यमभ्युन्नयेदिति ॥

आग्रयण उपदस्येत्

तैसं [ ६.५.१० ]—यदाग्रयण उपदस्येत् कलशाद् गृह्णीयात्० ॥

---

१. अनुरूपस्तृचः। २. स्तोमातिशंसनार्था ऋचः याज्या च द्रष्टव्याः पृ. ६२७।

मैसं [४.८.९]—यद्याग्रायणः स्कन्देदुप वा दस्येदितरेभ्यो ग्रहेभ्यो निर्गृह्णीयात्० ॥

कासं [ २७.९ ]—यद्याग्रायण उपदस्येद् ग्रहेभ्यो गृह्णीयात् ० ॥

जैब्रा [ १.३५३ ]—यद्याग्रयणो ग्रहः प्रवर्तेतेतरेभ्योऽभ्युत्पूरयेत् ० ॥

## यदि ध्रुवः स्कन्देदुपदस्येत् दीर्येत वा

मैसं [ ४.६.६ ]—यस्य ध्रुवः स्कन्दति० तदभिमृश्यः आयुर्धा असि ध्रुवायुर्मे धेहि इति० वरो दक्षिणा० पुत्रसेनस्य ह वै भैमसेने ध्रुव उपददास। तँ शृण्वानः स्थैरब्रह्मण ऋतेनैभ्यो लोकेभ्य आप्याययांचकार। स्वाहा दिव आप्यायस्व इति स तृतीयं बभूव। स्वाहान्तरिक्षादाप्यायस्व इति स द्विभागं बभूव। स्वाहा पृथिव्या आप्यायस्व इति स पुपूरे तदृतेनैवैभ्यो लोकेभ्यो ध्रुव आप्याययितव्यः ॥

कासं [ २५.७ ]—

वसवस्त्वोदीरयन्तु रुद्रास्त्वोदीपयन्त्वादित्यास्त्वोच्छ्रयन्तु
विश्वे त्वा देवा दृंहन्तु ॥
ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत्।
देवा ह धर्मणा ध्रुवा यजमानः पशुभिर्ध्रुवः।
दिवि दिव्यान् दृंहान्तरिक्षेऽन्तरिक्ष्यान् दृंह पृथिव्यां पार्थिवान् दृंह ॥
आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत्।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्यज्ञो अधिभ्रशत् ॥
ध्रुवं ध्रुवेण हविषा हविरव सोमं नयामसि।
यथा न इन्द्रः केवलीर्विशो बलिहृतस्करत् ॥

स्वाहा दिव आप्यायस्व स्वाहान्तरिक्षादाप्यायस्व स्वाहा पृथिव्या आप्यायस्वायुर्धा असि ध्रुवायुर्मे धेहि वयोधा असि ध्रुव वयो मे धेहि तनूपा असि ध्रुव तन्वं मे पाहि चक्षुष्पा असि ध्रुव चक्षुर्मे पाहि वर्चोधा असि ध्रुव वर्चो मे धेहि ॥

अध्वर्योऽयं यज्ञो अस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय।
विश्वस्मै भूताय ध्रुवो अस्तु देवास पिन्वस्व घृतवद्देव यज्ञ ॥
इहैवैधि मापच्योष्ठाः पर्वत इवाविचाचलत्।
इन्द्र इवेह ध्रुवस्तिष्ठेह यज्ञमु धारय ॥
इममिन्द्रो अदीधरद् ध्रुवं ध्रुवेण हविषा हविः।
तस्मै सोमो अधिब्रुवत् तस्मा उ ब्रह्मणस्पतिः ॥

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ।
ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामसि ॥

जैब्रा [ १.३५३ ]—यदि ध्रुवः प्रवर्तेत संलिख्य न्युब्ज्य यच्छुद्धं तेनाभ्युत्पूरयेत् ॥

**यदि मृण्मयं भिद्येत**

षब्रा [ १.६ ]—अथ यद्वै किं च यज्ञे मृण्मयं भिद्येत तभिदमृशेत् **भूमिर्भूमिमगान्माता मातरमप्यगाद् भूयाम पुत्रैः पशुभिर्योऽस्मान् द्वेष्टि स भिद्यताम्** इति० ॥

**यदीतरे ग्रहाः स्कन्देयुरुप वा दस्येयुः**

तैसं [ ६.५.१० ]—यद् ग्रहो वा कलशो वोपदस्येदाग्रयणाद् गृह्णीयात्० ॥

मैसं [ ४.८.९ ]—यदीतरे ग्रहाः स्कन्देयुरुप वा दस्येयुराग्रायणान्निर्गृह्णीयात्० ॥

कासं [ २७.९ ]—यदि ग्रह उपदस्येदाग्रायणाद्गृह्णीयात् ॥

**यस्य चमस उपदस्यति**

कासं [ ३५.१६ ]—यस्य चमस उपदस्यति० यमध्वर्युरन्तमं ग्रहं गृह्णीयात् तस्य संपातमवनयेत्० सैव तत्र प्रायश्चित्तिः ॥

**यदि ऋतुग्रहैः प्रचरन्तौ मुह्येयाताम्**

**कासं [ ३५.९ ]—**

**विसृष्टधेनास्सलिला घृतश्चुतो वसन्तो ग्रीष्मो मधुमन्ति वर्षाः ।**
**शरद्धेमन्त ऋतवो मयाभुव उदप्रुतो नभसी संवसन्ताम् ॥**
**आ नः प्रजाम् .... ॥ आ देवानां .... ॥ त्वमग्ने व्रतपा असि.... ॥**
**यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः ।**
**अग्निष्टद्विश्वमापृणाति विद्वान् येभिर्देवी ऋतुभिः कल्पयाति ॥**
**मधुश्च माधवश्च वासन्तिका ऋतू शुक्रश्च शुचिश्च ग्रैष्मा ऋतू नभश्च नभस्यश्च वार्षिका ऋतू इषश्चोर्जश्च शारदा ऋतू सहश्च सहस्यश्च हैमन्तिका ऋतू तपश्च तपस्यश्च शैशिरा ऋतू त इमं यज्ञमवन्तु ते मामवन्त्वनु व आरभेऽनु मारभध्वम् ॥**

**यदि चमसेषून्नीतः किंचिदापद्येत**

दृश्यताम् ' यद्यज्ञस्याच्छेत् '

**यदि होमायोद्यतः किंचिदापद्येत**

दृश्यताम् ' यद्यज्ञस्याच्छेत् '

यदि हूयमानः किंचिदापद्येत
दृश्यताम् ' यद्यज्ञस्यार्च्छेत् '

यद्यभ्यावृत्तः किंचिदापद्येत
दृश्यताम् ' यद्यज्ञस्यार्च्छेत् '

यदि प्रतिख्यातः किंचिदापद्येत
दृश्यताम् ' यद्यज्ञस्यार्च्छेत् '

भक्षो व्यापद्येत
कासं [ ३५.५–६ ]—

सप्तर्त्विजस्सप्त सदीस्येषां दश क्षिपो अश्विना पञ्च वाजा ।
प्राणो व्यानोऽपानो मन आकूतमग्निस्स्वाहा देवा हविरिदं जुषन्ताम् ॥
आत्मा यज्ञस्य रंह्या सुष्वाणः पवते सुतः । प्रत्नानि पाति काव्यः ॥
गोषा इन्दो नृषा अस्यश्वसा वाजसा उत । आत्मा यज्ञस्य पूर्व्यः ॥
आत्मन्वन्नभो दुह्यते घृतं पय ऋतस्य योनिरमृतं विजायते ।
समीचीनास्सुदानवः प्रीणन्ति तन्नरो हितमवमेहन्ति पेरवः ॥

यदि भक्ष्यमाणः किंचिदापद्येत
दृश्यताम् ' यद्यज्ञस्यार्च्छेत् '

यदि भक्षणीयं सोममववर्षेत्
तांब्रा [ ९.९.१०–११ ]—इन्दुरिन्दुमवागात् इत्यववृष्टस्य भक्षयेत् तस्य त इन्दविन्द्रपीतस्येन्द्रियावतः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि ॥

यदि सोमोऽभक्षणीयो भवेत्
तांब्रा [ ९.९.९ ]—प्रजापतये स्वाहा इत्यभक्षणीयस्य जुहुयादुत्तरार्ध्यपूर्वार्ध्य उपरवे ॥

यदि श्वावलिह्यादहविष्यं वा स्यात्
जैब्रा [ १.३५३ ]—यदि श्वावलिह्यादहविष्यं वा स्यात् तदुत्तरवेद्यां निनीय मार्जयित्वा स्रुचमन्यद्गृह्णीयात् ॥

यदि पीतापीतौ सोमौ संगच्छेयाताम्
कासं [ ३५.४–५ ]—

यास्ते अग्ने समिधो अप्स्वन्तर्वर्ष्मन् पृथिव्या उप सूर्ये याः ।
तास्ते गच्छन्त्वाहुतीर्घृतस्य देवायते यजमानाय शर्म ॥

मा नो ध्वारिषुः पितरो मोत देवा मा नस्सबन्धुरुत वान्यबन्धुः ।
मा नो दुश्शंसो अघशंसो ईशताहुतोऽयं यज्ञो अप्येतु देवान् ॥
यज्ञस्य हि स्थ ऋत्विजा इन्द्राग्नी कल्पना युवम् ।
हुताहुतस्य तृम्पन्तमहुतस्य हुतस्य च ॥
हुतस्य चाहुतस्य चाहुतस्य हुतस्य च ।
पीतापीतस्य सोमस्यास्य हव्यस्येन्द्राग्नी वीतं पिबतमागतम् ॥
मेमं यज्ञं तमो विदन्मर्त्विजो मो इमाः प्रजाः ।
मा यस्सोमं पिबादिमं संसृष्टमुभयं कृतम् ॥

तांब्रा [ ९.९.८ ]—यदि पीतापीतौ सोमौ संगच्छेयातामन्तःपरिध्यङ्गारान्निर्वर्त्य जुहुयात् हुतस्य चाहुतस्य चाहुतस्य हुतस्य च। पीतापीतस्य सोमस्येन्द्राग्नी पिबतꣳ सुतꣳ स्वाहा इति। सैव तस्य प्रायश्चित्तिः ॥

यदि चमसभक्षणात् पूर्वं स्तोत्रमुपाकुर्यात्

कासं [ ३५.१३ ]—
हिरण्यगर्भः .... ॥
तदित्पदं न विचिकेत विद्वान् यन्मृतः पुनरप्येति जीवान् ।
त्रिवृद्भुवनं यद्रथवृज्जीवो गर्भो न मृतस्स्वाहा ॥
आप्यायस्व.... ॥ सं ते पयांसि .... ॥
आप्यायस्व मदिन्तम सोम विश्वेभिरंशुभिः ।
भवा नस्सुश्रवस्तमस्सखा वृधे ॥

तांब्रा [ ९.९.१२ ]—हिरण्यगर्भः समवर्तताग्रे इत्याज्येनाभ्युपाकृतस्य जुहुयादाग्नीध्रं परेत्य भूतानां जातः पतिरेक आसीत् स दाधार पृथिवीं द्यामुतेमां तस्मै त इन्दो हविषा विधेम स्वाहा इति । सैव तस्य प्रायश्चित्तिः ॥

यदि चमसमभ्युपाकुर्युः

जैब्रा [ १.३५१ ]—यदि चमसमभ्युपाकुर्युः तमुत्तरवर्गेणाभिप्रवृत्यासीत० तमध्वर्युः प्रत्याकीर्य यत्नादायेयाद् यद्यु मार्त्विज्यस्याद्य एवैनं संप्राति धिष्ण्यः स्यात्तं प्रतिसदसोऽपियुत्य प्रयच्छेत् । तं मार्जयित्वा यद्विधा इतरे चमसास्तद्विधं कुर्युः । सैव तत्र प्रायश्चित्तिः ॥

यस्य नाराशंस उपवायति

तांब्रा [ ९.९.५.६ ]—यस्य नाराशꣳस उपवायति० यमध्वर्युरन्ततो ग्रहं गृह्णीयात तस्याप्तुमवनयेत् ॥

## यदि नाराशंसेषु सन्नः किंचिदापद्येत

दृश्यताम् ' यद्यज्ञस्याच्छेत् '

## यदि नाराशंसं सन्नं चमसमभ्युन्नयेरन्

जैब्रा [ १·३५३ ]—यदि नाराशꣳसꣳ सन्नं चमसमभ्युन्नयेरन्नाह **सोऽहुतो भक्षाय नो भक्षितो होमाय**। तमन्तरा परिधीꣳश्चमसं च निनयेत् **हुतस्य चाहुतस्य चाहुतस्य हुतस्य च पीतापीतस्य सोमस्येन्द्राग्नी पिबतꣳ सुतꣳ स्वाहा** इति। यजुषा हैके निनयन्ति। तूष्णीमेवेति ह स्माह शाट्यायनिः। मार्जयित्वा चमसं येनाध्वर्युर्ग्रहेण प्रतिष्ठेत तस्य लिप्सेत०॥

## यदि पर्युन्नयेरन्

जैब्रा [ १·३५३ ]—यदि पर्युन्नयेरन् पुनः **समवनयध्वम्** इति ब्रूयात्। अथ तमेवानून्नयेरन्। यद्युद्गायेयुरपि तेषामेव संप्रच्छिन्द्युः। यदि परिभक्षयेयुरुपहवमिच्छेत ॥

## यद्यूनं स्तुयुः

साकौसं—

**बहिष्पवमानस्तोत्रम्**[1]
**चत्वारि आज्यस्तोत्राणि**[2]
**माध्यंदिनपवमानस्तोत्रम्**[3]
**चत्वारि पृष्ठस्तोत्राणि**[4]
**आर्भवपवमानस्तोत्रम्**

| | | |
|---|---|---|
| १–३ स्तोमाः | गायत्रम्[5] | ऊह १·१·८ |
| ४–६ ,, | संहितम्[6] | ऊह १·१·९ |
| ७ स्तोमः | सफम्[7] | ऊह १·१·१० |
| ८ ,, | पौष्कलम्[8] | ऊह १·१·११ |
| ९ ,, | श्यावाश्वम्[8] | ऊह १·१·१२ |
| १० ,, | आन्धीगवम्[9] | ऊह १०·१·३ |
| ११ ,, | औदलम्[10] | |
| १२–१४ स्तोमाः | यज्ञायज्ञीयम् | |

साकौसं [ २·१·१·१८·१–३ ]—

पुरोजिती वो अन्धसः सुताय मादयित्नवे।
अप श्वानꣳ श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥
यो धारया पावकया परिप्रस्यन्दते सुतः। इन्दुरश्वो न कृत्व्यः ॥
तं दुरोषमभी नरः सोमं विश्वाच्या धिया। यज्ञाय सन्त्वद्रयः ॥

१. द्रष्टव्यं पृ. २७८। २. द्रष्टव्यं पृ. ३२८, ३३६, ३४०, ३४५। ३. द्रष्टव्यं पृ. ३५७। ४. द्रष्टव्यं पृ. ३८८, ३९८, ४०३, ४११। ५. द्रष्टव्यं पृ. ४२०। ६. द्रष्टव्यं पृ. ४२१। ७. द्रष्टव्यं पृ. ४२१। अत्र प्रथमायामेव। ८. द्रष्टव्यं पृ. ४२२। अत्र प्रथमायामेव। ९. द्रष्टव्यं पृ. ४२३। अत्र द्वितीयायामेव। १०. यथा एकाहेषु महाव्रते। अत्र तृतीयायामेव।

१ ४३ ४ २ ४ ५ १ र २ १ २ ११ -
हुम् पुरोऽ५जिता२इवो२अन्धासाः ॥ ओ६ सूतायमादा३यायित्ना३वेअपा२
१र २ १ २ २ १ र र र ^ ३ २ ^१११
श्वान६श्वा२३थाहुम्माइ ॥ ष्टा३ना ॥ साखायोदीर्घजा२इह्वियाउ ॥ वा३४५ ॥ [ १ ]
१ २ १ १ २ १ २ २१ - १ २१ २ २
यांयाः ॥ ओन्धारयापा२वाका३यापरा२इप्रस्यन्दा२३ताहुम्माइ ॥ सू३ताः ॥
१ र ^३ २ २^१११ १ २ १ र २ १ २
आइन्दुरश्वोनका२र्त्विंयाउ ॥ वा३४५ ॥ [ २ ] यास्ताम् ॥ ओन्दुरोषामा३भाइना-
२ १र - १ र , २ १ २ २ १ र ^ ३ २ २^१११
३राःसोमा२म्विश्वाचा२३याहुम्माइ ॥ धा३या ॥ याज्ञायसन्तुवा२द्रयाउ ॥ वा३४५
( ५ ) ॥ [ ३ ] [ ऊह २१·३·३ ]

१५–१७ स्तोमाः

कावम्[१]

ऊह १.१.१३

## अग्निष्टोमस्तोत्रम्

### महावैश्वामित्रम्

साकौसं [ २·१·१·२०·१–२ ]—

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शꣳसिषम् ॥
ऊर्जो नपातꣳ स हिनायमस्मयुर्दाशेम हव्यदातये ।
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥

१ २ ^ ४५ ४५२ ^ ४५ ४५२ ^ ४५ ४५२ र
हुम् हयाइहया३ओहाओहाहयाइहया३ओहाओहाहयाइहया३ओहाओहायज्ञा-
^३र २ २ - १ २ ^ ४ ५ ४ ५२ ^ ४५ ४५२ ^
यज्ञावोअग्नाया२इ ॥ ओ६ हयाइहया३ओहाओहाहयाइहया३ओहाओहाहयाइहया३
४५ ४५२र ^३२१ - २ ^ ४ ५ ४ ५ २ ^ ४ ५ ४ ५ २
ओहाओहाइराइराचदक्षासा२इ ॥ हयाइहया३ओहाओहाहयाइहया३ओहाओहाहयाइ-
^ ४५ ४५१र ^३ २र१ - २ ^ ४५ ४५२ ^
हया३ओहाओहापर्प्रीम्वयममृतञ्ज्ञातवेदासा२म् ॥ हयाइहया३ओहाओहाहयाइहया३-

---

१. द्रष्टव्यं पृ. ४२४ ।

४५ ४५२ ^ ४५४५ २ ३२ १ - २ ^ ४५४५२
ओहाओहाहयाइहया३ओहाओहाप्रियम्मित्रार्ऽसुश्र्ऽसाइषा२ऽहयाइहया३ओहाओहाह-
^ ४५४५२ ^ ४५४५३ ५३ ५ ३
याइहया३ओहाओहाहयाइहया३ओहाओहाहो४इडाहो४इडा ॥ हो२३४५इडा ॥ [ १ ]
२ ^ ४५४५२ ^ ४५४५२ ^ ४५४५२ ^३२
हयाइहया३ओहाओहाहयाइहया ३ओहाओहाहयाइहया३ओहाओहाप्रियम्मित्रार्ऽसुश्र्ऽ-
१ - १ २ ^ ४५ ४५२ ^ ४५४५२ ^ ४५४५
साइषा२म् ॥ ओर्ऽहयाइहया३ओहाओहाहयाइहया३ओहाओहाहयाइहया३ओहाओहा-
२ ^ ३२१ - २ ^ ४५ ४५२ ^ ४५४५२
प्रियम्मित्रार्ऽसुश्र्ऽसाइषा२म् ॥ हयाइहया३ओहाओहाहयाइहया३ओहाओहाहयाइह-
^ ४५४५२२२ २ ^३२ १ - २ ^ ४५४५२ ^
या३ओहाओहाउर्जोनपातर्ऽसहिनायमस्मायू२ः ॥ हयाइहया३ओहाओहाहयाइहया३-
४५४५२ ^ ४५४५ २२२ ^ ३ २२१ २ ^ ४५४५२
ओहाओहाहयाइहया ३ओहाओहादाशेमहाव्यदाताया २ इहयाइहया ३ओहाओहाहयाइ-
^ ४५४५२ ^ ४५४५३ ५३ ५ ३
हया३ओहाओहाहयाइहया३ओहाओहाहो४इडाहो४इडा ॥ हो २३४५इडा ॥ [ २ ]
२ ^ ४५४५ २ ^ ४५ ४५२ ^ ४५४५२२२ ^ ३२२१
हयाइहया३ओहाओहाहयाइहया३ओहाओहाहयाइहया३ओहाओहादाशेमहाव्यदाताया-
- १ २ ^ ४५४५२ ^ ४५ ४५२ ^ ४५ ४५ २२२
२इ ॥ ओर्ऽहयाइहया३ओहाओहाहयाइहया३ओहाओहाहयाइहया३ओहाओहादाशे-
^ ३२२ १ - २ ^ ४५४५२ ^ ४५४५२ ^ ४५
महाव्यदाताया२इ ॥ हयाइहया३ओहाओहाहयाइहया३ओहाओहाहयाइहया३ओहा-
४५२२२ ^३२१ - २ ^ ४५ ४५२ ^ ४५४५२
ओहाभुवद्वाजेष्ववितावृद्धाद्वी२इ ॥ हयाइहया३ओहाओहाहयाइहया३ओहाओहाहया-
^ ४५ ४५२ २ २ १ - २ ^ ४५४५२ ^ ४५४५२
इहया३ओहाओहाउतत्रातातनूना२ ऽहयाइहया३ओहाओहाहयाइहया३ओहाओहाहया-
^ ४५४५ ३ ५ ३ ५ ३
इहया३ओहाओहाहो४इडाहो४इडा ॥ हो२३४५इडा ॥ [ ३ ] [ ऊह २१·२·२० ]

तांब्रा [ ९·३·७—८,१० ]—यद्यर्वाक् स्तुयुर्यावतीभिर्न स्तुयुस्तावतीभिर्वाति-
ष्टुयुर्भूयोक्षराभिर्वा० यद्यर्वाक् स्तुयुस्त्वीडमग्निष्टोमसाम कार्यम्० ॥

जैब्रा [ १·३५६ ]—यदर्वाक् स्तुयुरुत्तरे स्तोत्रे तावतीर्वोपप्रस्तुयुर्भूयोक्षराशु वा स्तुवीरन् ० यदर्वाक् स्तुयुर्वीळमग्निष्टोमसाम कुर्युः ० ॥

यद्यतिष्टुयुः

साकौसं—

बहिष्पवमानस्तोत्रम्[१]
चत्वारि आज्यस्तोत्राणि[२]
माध्यंदिनपवमानस्तोत्रम्[३]
चत्वारि पृष्ठस्तोत्राणि[४]
आर्भवपवमानस्तोत्रम्

| | | |
|---|---|---|
| १–३ स्तोमाः | गायत्रम्[५] | |
| ४–६ " | संहितम्[६] | ऊह १.१.८ |
| ७ स्तोमः | सफम्[७] | ऊह १.१.९ |
| ८ " | पौष्कलम्[८] | ऊह १.१.१० |
| ९–११ स्तोमाः | श्यावाश्वम्[९] | ऊह १.१.११ |
| १२–१४ " | आन्धीगवम्[९] | ऊह १.१.१२ |
| १५–१७ " | यज्ञायज्ञीयम्[१०] | ऊह १६.१.१५ |

अग्निष्टोमस्तोत्रम्
दैर्घश्रवसम्

साकौसं [ २·१·१·२०·१–२ ]—

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शꣳसिषम् ॥
ऊर्जो नपातꣳ स हिनायमस्मयुर्दाशेम हव्यदातये ।
भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥

१ २र २र २र २ १ २ १र २र १ २र ९ २ ९ २
हुम् यज्ञायज्ञावोअग्नयओहाओहा३ए ॥ ओमिराइराचदक्षसओ३हाओ३हा३
२ ३१ ३ २ १ २ २ १र २ ९ २ ९ २ १ ३ २
ए३४ ॥ पप्री३४म्वयाम् ॥ आमृतञ्जातावेदसामो३हाओ३हा३ए३४ ॥ प्रिया३४-

१. द्रष्टव्यं पृ. २७८ । २. द्रष्टव्यं पृ. ३२८, ३३६, ३४०, ३४५ । ३. द्रष्टव्यं पृ. ३५७ । ४. द्रष्टव्यं पृ. ३८८, ३९८, ४०३, ४११ । ५. द्रष्टव्यं पृ. ४२० । ६. द्रष्टव्यं पृ. ४२१ । ७. द्रष्टव्यं पृ. ४२१ । अत्र प्रथमायामेव । ८. द्रष्टव्यं पृ. ४२२ । अत्र प्रथमायामेव । ९. द्रष्टव्यं पृ. ४२२–४२३ । १०. यथा त्रिककुद्दशरात्रे प्रथमेऽहनि ।

३ २ २ १ ५ ४ ५ २ २ २
म्मित्रा३म् ॥ सुशो२३४वासा५इषो६ ॥ हाइ ॥ [ १ ] प्रियम्मित्रꣳसुशꣳसिषमोहा-
२ २ १२२१२ १ ९ २ ९ २ १ ३ २ ३२ १ २ ९ २
ओहा३ए ॥ ओमूजोनपाओ३हाओ३हा३ए३४ ॥ तꣳसा३४हिना ॥ यामस्मयुरो३हा-
९ २ २ ३२ २ ३ २ २ १ ५ ४ ५
ओ३हा३ए३४ ॥ दाशा३४इमहा२ ॥ व्यदो२३४वाता५योर६ ॥ हाइ ॥ [ २ ]
२२ २ २ २ २ २ २ १ २ १ २ २ ९ २ ९ २ २ ३ २
दाशेमहव्यदातयओहाओहा३ए ॥ ओम्भवद्वाजाओ३हाओ३हा३ए३४ ॥ षुवा३४
३ २ १ २ ९ २ ९ २ ३ २ ३२ २ १ ५ ४
विता ॥ भूवद्वृधओ३हाओ३हा३ए३४ ॥ उता३४त्राता३ ॥ तो२३४वानू५नो६ ॥
५
हाइ ॥ [ ३ ] [ ऊह २१·२·२१ ]

तांब्रा [ ९·३·९, ११ ]—यद्यतिष्टुयुर्यावतीभिरतिष्टुयुस्तावतीभिर्वा न स्तुयुः कनीयोक्षराभिर्वा० यद्यतिष्टुयुः स्वारमग्निष्टोमसाम कार्यम् ॥

जैब्रा [ १·३५६ ]—यद्यतिष्टुयुरुत्तरे स्तोत्रे तावतीभिर्वा न स्तुवीरन् कनीयोक्षरासु वा स्तुवीरन् ० यद्यतिष्टुयुः स्वारमग्निष्टोमसाम कुर्युः ० ॥

**स्थानं चेन्निविदोऽतिहरेत्**

**ऋसं—**

[१] मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः। मान्तः स्थुर्नो अरातयो३म् यो यज्ञस्य प्रसाधनस्तन्तुर्देवेष्वाततः। तमाहुतं नशीमहो३म् मनो न्वा हुवामहे नाराशंसेन सोमेन। पितॄणां च मन्मभो३म् आ त एतु मनः पुनः क्रत्वे दक्षाय जीवसे। ज्योक् च सूर्यं दृशो३म् पुनर्नः पितरो मनो ददातु दैव्यो जनः। जीवं व्रातं सचेमहो३म् वयं सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहो३म् ॥ १०·५७

**यस्य प्रातःसवने सोमोऽतिरिच्येत**

तैब्रा [ १·४·५ ]—यस्य प्रातःसवने सोमोऽतिरिच्यते० गौर्धयति मरुताम् इति धयद्वतीषु कुर्वन्ति० गायत्रꣳ साम भवति पञ्चदशः स्तोमः० मरुत्वतीषु कुर्वन्ति० होतुश्चमसमनून्नयन्ते। होतानुशꣳसति० ॥

---

१. सूक्तमिदं शस्त्वा तद्देवतेऽन्यस्मिन् सूक्ते निविदं दध्यात्।

साकौसं—

बहिष्पवमानस्तोत्रम्[1]
चत्वारि आज्यस्तोत्राणि[2]
पञ्चमाज्यस्तोत्रम्
गायत्रम्

साकौसं [ २.९.१.८ ]—

अस्ति सोमो अयꣳ सुतः पिबन्त्यस्य मरुतः । उत स्वराजो अश्विना ॥
पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः । त्रिषधस्थस्य जावतः ॥
उतो न्वस्य जोषमा इन्द्रः सुतस्य गोमतः । प्रातर्होतेव मत्सति ॥

हुम् अस्तिसोमोअयꣳसुतोम् ॥ ओमोओओओओओओओ२ओओओओओ-ओ१२१२॥ हुमूआ२ ॥ ओओ ॥ आ२३४५ ॥ [ १ ] पिबन्तिमित्रोअर्यमोम् ॥ ओमोओओओओओओओ२ओओओओओओ१२१२ ॥ हुमूआ२ ॥ ओओ ॥ आ२३४५॥ [ २ ] उतोनुवस्यजोषमोम् ॥ ओमोओओओओओओओ२ओओओ-ओओओ१२१२ ॥ हुमूआ२ ॥ ओओ ॥ आ२३४५ ॥ [ ३ ]

माध्यंदिनपवमानस्तोत्रम्[3]
प्रथमद्वितीयपृष्ठस्तोत्रे[4]
तृतीयपृष्ठस्तोत्रम्[5]
चतुर्थपृष्ठस्तोत्रम्[6]
आर्भवपवमानस्तोत्रम्[7]
अग्निष्टोमस्तोत्रम्[8]

तांब्रा [ ९.७.१.५ ]—यदि प्रातःसवनात् सोमोऽतिरिच्येत अस्ति सोमो अयꣳ सुत इति मरुत्वतीषु गायत्रेण स्तुयुः ० यस्मात् स्तोमादतिरिच्यते स एव स्तोमः कार्यः ० ऐन्द्रावैष्णवं होतानुशꣳसति ॥

साजैसं [ ४.१०.८–१० ]—

गौर्धयति मरुतां श्रवस्युर्माता मघोनाम । युक्ता वह्नी रथानाम् ॥

१. द्रष्टव्यं पृ. २७८ । २. द्रष्टव्यं पृ. ३२८, ३३६, ३४०, ३४५ । ३. द्रष्टव्यं पृ. ३५७ । ४. द्रष्टव्यं पृ. ३८८, ३९८ । ५. द्रष्टव्यं पृ. ३४१ । त्रिवृत्स्तोमम् । ६. द्रष्टव्यं पृ. ४११ । पञ्चदशस्तोमम् । ७. द्रष्टव्यं पृ. ४२० । ८. द्रष्टव्यं पृ. ४५३ ।

यस्या देवा उपस्थे व्रता विश्वे धारयन्ते । सूर्यामासा दृशे कम् ॥
तत्सु नो विश्वे अर्य आ सदा गृणन्ति कारवः । मरुतः सोमपीतये ॥

जैब्रा [ १·३५० ]---यदि प्रातस्सवनात् सोमोऽतिरिच्यते गौर्धयति मरुतामिति माध्यंदिनस्य पवमानस्य पुरस्तात् स्तुयुः । गायत्रीषु स्तुवन्ति ० मरुत्वतीषु स्तुवन्ति० धय-द्वतीषु स्तुवन्ति० यावदाज्यानां स्तोत्रं तावत् स्तोत्रं भवति ० ॥

ऋसं—

[1]शोंसावो३म् [2]अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः । उत स्वराजो अश्विनो३म् पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः । त्रिषधस्थस्य जावतो३म् उतो न्वस्य जोषमाँ इन्द्रः सुतस्य गोमतः । प्रातर्होतेव मत्सतो३म् ( ८·९४·४–६ ) शोंसावो३म् [3]गौर्धयति मरुतां श्रवस्युर्माता मघोनाम् । युक्ता वह्नी रथानो३म् यस्या देवा उपस्थे व्रता विश्वे धारयन्ते । सूर्यामासा दृशे को३म् तत् सु नो विश्वे अर्य आ सदा गृणन्ति कारवः । मरुतः सोमपीतयो३म् ( ८·९४·१–३ ) ॥

[4]महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव । स्तोमैर्वत्सस्य वावृधे ॥
प्रजामृतस्य पिप्रतः प्र यद् भरन्त वह्नयः । विप्रा ऋतस्य वाहसा ॥
कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् । जामि ब्रुवत आयुधम् ॥
समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः । समुद्रायेव सिन्धवः ॥ ८·६·१–४
अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्त धामभिः ॥
इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे ॥
त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।
अतो धर्माणि धारयन् ॥ १·२२·१६–१८
[5]आ नो याहि परावतो हरिभ्यां हर्यताभ्याम् ।
इममिन्द्र सुतं पिब ॥ ८·६·३६
[6]त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।
अतो धर्माणि धारयन् ॥ १·२२·१८
[5]विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥ १·२२·१९
[6]सं वां कर्मणा समिषा हिनोमीन्द्राविष्णू अपसस्पारे अस्य ।
जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ॥ ६·६९·१

१. होतुः शस्त्रम् । २. स्तोत्रियस्तृचः । ३. अनुरूपस्तृचः । ४. स्तोमातिशंसनार्था ऋचः । ५. याज्या । ६. वैकल्पिकी याज्या ।

ऋसं—

[1]शोंसावो३म् [2]अस्ति सोमो अयं सुतः.... प्रातर्होतेव मत्सतो३म् ( ८.९४.४–६ ) शोंसावो३म् [3]कद्त्विषन्त सूरयस्तिर आप इव स्निधः । अर्षन्ति पूतदक्षसो३म् कद्वो अद्य महानां देवानामवो वृणे । त्मना च दस्मवर्चसो३म् आ ये विश्वा पार्थिवानि पप्रथन् रोचना दिवः । मरुतः सोमपीतयो३म् ( ८.९४.७–९ ) ॥

[4]इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥
इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा । इन्द्रो वज्री हिरण्ययः ॥
इन्द्रो दीर्घाय चक्षस आ सूर्यं रोहयद् दिवि । वि गोभिरद्रिमैरयत् ॥
इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभिः ॥
इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे । युजं वृत्रेषु वज्रिणम् ॥
स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि । अस्मभ्यमप्रतिष्कुतः ॥
तुञ्जेतुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः । न विन्धे अस्य सुष्टुतिम् ॥
वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा । ईशानो अप्रतिष्कुतः ॥
य एकश्चर्षणीनां वसूनामिरज्यति । इन्द्रः पञ्च क्षितीनाम् ॥
इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥ १.७
अतो देवा अवन्तु नो....॥ इदं विष्णुर्वि चक्रमे....॥ त्रीणि पदा वि चक्रमे....॥
विष्णोः कर्माणि पश्यत .... ॥
तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥
तद् विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत् परमं पदम् ॥
१.२२.१६–२१

[5]विष्णोः कर्माणि पश्यत.... ॥ १.२२.१९

अशुक्रः परिशिष्यते

जैब्रा [ १.३६२ ]—अथाशुक्रः परिशिष्यते । तस्यैषा प्रायश्चित्तिः । अमावास्यायां रात्रिमग्निमुपसमाधाय परिस्तीर्य परिषिच्यैते आहुती जुहुयात् कामावकीर्णोऽस्म्यवकीर्णोऽस्मि काम कामाय स्वाहा ॥ कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि काम कामाय स्वाहा इति । सोऽञ्जलिं कृत्वा त्रिरुपतिष्ठतु सं मा सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः । सं मायमग्निः सिञ्चत्वायुषा च बलेन च । दीर्घमायुः कृणोतु मे इति ० ॥

---

१. शाङ्खा०मते होतुः शस्त्रम् । २. स्तोत्रियस्तृचः । ३. अनुरूपस्तृचः । ४. एतदाद्याः षोडश ऐन्द्रावैष्णव्य ऋचः स्तोमातिशंसनार्थाः । ५. याज्या ।

**यदि मध्यंदिने हविः बहिष्परिधि स्कन्देत्**

दृश्यताम् 'यदि हविः बहिष्परिधि स्कन्देत्'

**यदि ब्रह्मान्यस्मै भूयो दीयमानं पश्येत्**

कासं [ ३४·१८ ]—यदि ब्रह्मान्यस्मै भूयो दीयमानं पश्येत् इदमहममुष्यामुष्यायणस्येन्द्रियं वीर्यं वृञ्जे इति यजमानं ब्रूयात्० ॥

**यस्य माध्यंदिने सवने सोमोऽतिरिच्येत**

तैब्रा [ १·४·५ ]—यस्य माध्यंदिने सवने सोमोऽतिरिच्यते० गौरिवीत[५] साम भवति० बण्महा[६] असि सूर्य इति कुर्वन्ति० सप्तदशः स्तोमः० होतुश्चमसमनून्नयन्ते । होतानुशंसति० ॥

साकौसं—

बहिष्पवमानस्तोत्रम्[१]
चत्वारि आज्यस्तोत्राणि[२]
माध्यंदिनपवमानस्तोत्रम्[३]
चत्वारि पृष्ठस्तोत्राणि[४]
पञ्चमपृष्ठस्तोत्रम्
गौरीवितम्

साकौसं [ २·९·१·९·१–२ ]—

बण्महाँ असि सूर्य बडादित्य महाँ असि ।
महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि ॥
बट् सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि ।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥

१ ५ ३र २ ४ र ५ १ र र १ र २
हुम् बण्महाँ आ३सिसूरिया ॥ ओंबडादित्यमहाँ असा२३इमाहस्तेसा३१२३
४र १ र र २ ४ ५ ४ ५ ५ र
तोमहिमापना५इष्टमा ॥ माह्नादेवा३१२३ ॥ महोवाआ५सो६ ॥ हाइ ॥ [ १ ] मह्ना-
३र१ ४र ५ १ र र र १ र २ ४ र
देवा ३महाँ असाइ ॥ओम्मह्नादेवमहाँ असा२ ३इबाट्सूर्यश्रा३१२३वसामहाँ ५असाइ॥
१ र र २ ४ ५ ४ ५ ५ र ३र १ ४ र ५
सात्रादेवा३१२३ ॥ महोवाआ५सो६ ॥ हाइ ॥ [ २ ] सत्रादेवा३महाँ असाइ ॥

१. द्रष्टव्यं पृ. १७८ । २. द्रष्टव्यं पृ. ३२८, ३३६, ३४०, ३४५ । ३. द्रष्टव्यं पृ. ३५७ ।
४. द्रष्टव्यं पृ. ३८८, ३९८, ४०३, ४११ ।

१ २२ २ १२२२ ४२ १ २ २
ओं॑सत्रादेवमहा॑असा२३इमाह्नादेवा३१२३नामसुर्यः पु॑रो॰हिताः ॥ वाइमुज्योता-
४ ५४ ५
३१२३इः ॥ अदोवाभा॰योद् ॥ हाइ ॥ [ ३ ] [ ऊह २१·३·५ ]

## आर्भवपवमानस्तोत्रम्

| | | |
|---|---|---|
| १ स्तोमः | गायत्रम्[१] | |
| २ ,, | संहितम्[२] | ऊह १.१.८ |
| ३ ,, | सफम्[३] | ऊह १०.१.९ |
| ४ ,, | पौष्कलम्[४] | ऊह १.१.१० |
| ५ ,, | श्यावाश्वम्[५] | ऊह ६.१.१८ |
| ६ ,, | आन्धीगवम् | |

साकौसं [ २·५·१·१७·१ ]—

पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥

१ २ २ १ १ २१ — १२ ११ २१२ २२१२३ १ १
हुम् पा१वास्वा ॥ ओं॑सोर३माहुम्मा२१२ ॥ महान्त्समुद्रःपितादेवाना२३
११ १ २ २ १ २१ २ ४५ ४
४५म्* ॥ वाइश्वा२उवा ॥ भा२३इधामाओ३होवा ॥ हो॰इडा ॥ [ ऊह २१·३·८ ]

| | | |
|---|---|---|
| ७-९ स्तोमाः | कावम्[६] | ऊह १.१.१२ |

## अग्निष्टोमस्तोत्रम्[७]

तांब्रा [ ९·७·६,८ ]—यदि माध्यंदिनात् सवनादतिरिच्येत बण्महाँ असि सूर्येत्यादित्यवतीषु गौरीवितेन स्तुयुः ० यस्मात् स्तोमादतिरिच्येत स एव स्तोमः कार्यः० ऐन्द्रावैष्णवं होतानुशं॑सति० ॥

साजैसं [ ४·३·२-३ ]—

बण्महं असि सूर्य बडादित्य महं असि ।
महस्ते सतो महिमा पनिष्टम मह्ना देव महं असि ॥
बट् सूर्य श्रवसा महं असि सत्रा देव महं असि ।
मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥

---

१. द्रष्टव्यं पृ. ४२० । अत्र प्रथमायाम् । २. द्रष्टव्यं पृ. ४२१ । अत्र प्रथमायाम् । ३. यथा एकाहेषु चतुर्थसाहस्रे । ४. द्रष्टव्यं पृ. ४१२ । अत्र प्रथमायाम् । ५. यथा द्वादशाहे दशमेऽहनि । अत्र प्रथमायाम् । *अन्तर्निधनम् । ६. द्रष्टव्यं पृ. ४२४ । ७. द्रष्टव्यं पृ. ४५३ । त्रिवृत्स्तोमम् ।

जैन्रा [ १·२५० ]—यदि माध्यंदिनात् सवनात् सोमोऽतिरिच्यते[1] बण्महं असि सूर्य इत्यार्भवस्य पवमानस्य पुरस्तात् स्तुयुः । बृहतीषु स्तुवन्ति० सौरीषु स्तुवन्ति० यावत् पृष्ठानाꣳ स्तोत्रं तावत् स्तोत्रं भवति० ॥

ऋसं—

[2]अध्वर्यो शोंसावो३म् [3]बण्महाँ असि सूर्य बळादित्य महाँ असि । महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ असो३म् अद्धा देव महाँ असि बट् सूर्य श्रवसा महाँ असि । सत्रा देव महाँ असो३म् सत्रा देव महाँ असि मह्ना देवानामसुर्यः पुरोहितः । विभु ज्योतिरदाभ्यो३म् ( ८·१०१·११–१२ ) शोंसावो३म् [4]उदु त्यद् दर्शतं वपुर्दिव एति प्रतिह्वरे । यदीमाशुर्वहति देव एतशो विश्वस्मै चक्षसे अरो३म् विश्वस्मै चक्षसे अरं शीर्ष्णःशीर्ष्णो जगतस्तस्थुषस्पतिम् । समया विश्वमा रजो३म् समया विश्वमा रजः सप्त स्वसारः सुविताय सूर्यम् । वहन्ति हरितो रथो३म् ( ७·६६·१४–१५ ) ॥

[5]महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥
इन्द्रमेव धिषणा सातये धाद् बृहन्तमृष्वमजरं युवानम् ।
अषाळ्हेन शवसा शूशुवांसं सद्यश्चिद् यो वावृधे असामि ॥
पृथू करस्ना बहुला गभस्ती अस्मद्र्यक् सं मिमीहि श्रवांसि ।
यूथेव पश्वः पशुपा दमूना अस्माँ इन्द्राभ्या ववृत्स्वाजौ ॥
तं व इन्द्रं चतिनमस्य शाकैरिह नूनं वाजयन्तो हुवेम ।
यथा चित् पूर्वे जरितार आसुरनेद्या अनवद्या अरिष्टाः ॥
धृतव्रतो धनदाः सोमवृद्धः स हि वामस्य वसुनः पुरुक्षुः ।
सं जग्मिरे पथ्या रायो अस्मिन्त्समुद्रे न सिन्धवो यादमानाः ॥
शविष्ठं न आ भर शूर शव ओजिष्ठमोजो अभिभूत उग्रम् ।
विश्वा द्युम्ना वृष्ण्या मानुषाणामस्मभ्यं दा हरिवो मादयध्यै ॥
यस्ते मदः पृतनाषाळमृध्र इन्द्र तं न आ भर शूशुवांसम् ।
येन तोकस्य तनयस्य सातौ मंसीमहि जिगीवांसस्त्वोताः ॥
आ नो भर वृषणं शुष्ममिन्द्र धनस्पृतं शूशुवांसं सुदक्षम् ।
येन वंसाम पृतनासु शत्रून् तवोतिभिरुत जामीँरजामीन् ॥

१. 'सोममतिरिच्यते' इति मुद्रितपाठः । २. होतुः शस्त्रम् । ३. स्तोत्रियः प्रगाथः । ४ अनुरूपः प्रगाथः । ५. स्तोमातिशंसनार्था ऋचः ।

आ ते शुष्मो वृषभ एतु पश्चादोत्तरादधरादा पुरस्तात् ।
आ विश्वतो अभि समेत्वर्वाङिन्द्र द्युम्नं स्वर्वद्धेह्यस्मे ॥
नृवत् त इन्द्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः ।
ईक्षे हि वस्व उभयस्य राजन् धा रत्नं महि स्थूरं बृहन्तम् ॥
मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यं शासमिन्द्रम् ।
विश्वासाहमवसे नूतनायोग्रं सहोदामिह तं हुवेम ॥
जनं वज्रिन् महि चिन्मन्यमानमेभ्यो नृभ्यो रन्धया येष्वस्मि ।
अधा हि त्वा पृथिव्यां शूरसातौ हवामहे तनये गोष्वप्सु ॥
वयं त एभिः पुरुहूत सख्यैः शत्रोःशत्रोरुत्तर इत् स्याम ।
घ्नन्तो वृत्राण्युभयानि शूर राया मदेम बृहता त्वोताः ॥ ६.१९
विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥
प्र तद् विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥
प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे ।
य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित् पदेभिः ॥
यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति ।
य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥
तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति ।
उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः ॥
ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥ १.१५४
[1]या विश्वासां जनितारा मतीनामिन्द्राविष्णू कलशा सोमधाना ।
प्र वां गिरः शस्यमाना अवन्तु प्र स्तोमासो गीयमानासो अर्कैः ॥ ६.६९.२

ऋसं—

[2]अध्वर्यो शोंसावो३म् [3]बण्महाँ असि सूर्य .... विभु ज्योतिरदाभ्यो३म् (८.१०१.११–१२) शोंसावो३म् [4]उदु त्यद् दर्शतं .... वहन्ति हरितो रथो३म् (७.६६.१४–१५)[5] ॥

---

१. याज्या । २. शाङ्खा०मते होतुः शस्त्रम् । ३. स्तोत्रियः प्रगाथः । ४. अनुरूपः प्रगाथः । ५. स्तोमातिशंसनार्था ऋचो याज्या च द्रष्टव्याः पृ. ६२७ ।

**यदि तृतीयसवने हविः बहिष्परिधि स्कन्देत्**

दृश्यताम् 'यदि हविः बहिष्परिधि स्कन्देत्'

**यस्य तृतीयसवने सोमोऽतिरिच्येत**

तैब्रा [ १·४·५ ]—यस्य तृतीयसवने सोमोऽतिरिच्येत । उक्थ्यं कुर्वीत ॥

माशब्रा [ ४·५·१०·८ ]—अथ सोमातिरिक्तानाम् । यद्यग्निष्टोममतिरिच्येत पूतभृत एवोक्थ्यं गृह्णीयात् ॥

साकौसं—

**बहिष्पवमानस्तोत्रम्**[१]
**चत्वारि आज्यस्तोत्राणि**[२]
**माध्यंदिनपवमानस्तोत्रम्**[३]
**चत्वारि पृष्ठस्तोत्राणि**[४]
**आर्भवपवमानस्तोत्रम्**[५]
**( प्रथमम् ) अग्निष्टोमस्तोत्रम्**[६]
**( द्वितीयम् ) अग्निष्टोमस्तोत्रम्**
**गौरीवितम्**

साकौसं [ २·८·१·४·१–३ ]—

किमित्ते विष्णो परिचक्षि नाम प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥
प्र तत्ते अद्य शिपिविष्ट हव्यमर्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके ॥
वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥

१ ५ २र २ ४र ५ १ र र र १
**हुम् किमित्तेवा३इष्णोपरिचा ॥ ओक्षिनामप्रयद्ववक्षेशिपिविष्टोअस्मा२३इमाव-**
र २ ४ र १ र ४र ५ ४
**र्पोआ३१२३स्मदपगूहएतद्या५दन्या ॥ रूपःसमा३१२३ ॥ थेबोवाभू५थो६ ॥**
५ ५ ३र २ ४ ५ १ र र र
**हाइ॥ [१] प्रतत्तेआ३द्यशिपिवाइ ॥ ओं॑ष्टहव्यमर्यःशं॑सामिवयुनानिविद्वा२३न्तान्त्वा-**
२ ४ र १ २ ४ ५ ४
**गृणा३१२३मितवसमतव्यान्क्षा५यन्ताम् ॥ आस्यरजा३१२३ ॥ सःपोवारा५को६ ॥**

१. द्रष्टव्यं पृ. २७८ । द्रष्टव्यं पृ. ३२८, ३३६, ३४०, ३४५ । ३. द्रष्टव्यं पृ. ३५७ ।
४. द्रष्टव्यं पृ. ३८८, ३९८, ४०३, ४११ । ५. द्रष्टव्यं पृ. ४२० । ६. द्रष्टव्यं पृ. ४५३ ।

५ ५ ३र २ ४ र ५ र र
हाइ ॥ [ २ ] वषट्तेवा३इष्णवासआ ॥ ओङ्कृणोमितन्मेजुषस्वशिपिविष्टहव्या२३
१ २ ४ ४ र र १ २ ४ ५ ४
म्वार्द्धन्तुत्वा३१२३सुष्टुतयोगिरोमेयू५यम्पा ॥ तासुवस्ता३१२३इ ॥ भिःसोवादा५नो
५
६ ॥ हाइ ॥ [ ३ ] [ ऊह २१·३·६ ]

तांब्रा [ ९·७·९–११ ]—यदि तृतीयसवनादतिरिच्येत विष्णोः शिपिविष्टवतीषु गौरीवितेन स्तुयुः ० एतदन्यत् कुर्युरुक्थानि प्रणयेयुः० ॥

जैब्रा [ १·३५० ]—यदि तृतीयसवनात् सोमोऽतिरिच्यतेऽथो[1] उक्थ्यं कुर्वीरन् ॥

ऋसं—

[2]अध्वर्यो शोशोंसावो३म् [3]प्र तत् ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् । तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराको३म् किमित् ते विष्णो परिचक्ष्यं भूत् प्र यद् ववक्षे शिपिविष्टो अस्मि । मा वर्प अस्मदप गूह एतद् यदन्यरूपः समिथे बभूथो३म् वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् । वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नो३म् ( ७·१००·५–७ ) शोंसावो३म् [4]प्र तद् विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वो३म् प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे । य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित् पदेभो३म् यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति । य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वो३म् ( १·१५४·२–४ ) ॥

[5]प्र वः पान्तमन्धसो धियायते महे शूराय विष्णवे चार्चत ।
या सानुनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साधुना ॥
त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपावामुरुष्यति ।
या मर्त्याय प्रतिधीयमानमित् कृशानोरस्तुरसनामुरुष्यथः ॥
ता ईं वर्धन्ति मह्यस्य पौंस्यं नि मातरा नयति रेतसे भुजे ।
दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः ॥
तत्तदिदस्य पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य मीळ्हुषः ।
यः पार्थिवानि त्रिभिरिद् विगामभिरुरु क्रमिष्टोरुगायाय जीवसे ॥

---

१. ‘ ०च्यतेऽतो ’ इति मुद्रितपाठः । २. शाङ्खा०मते होतुः शस्त्रम् । ३. स्तोत्रियस्तृचः । ४. अनुरूपस्तृचः । ५. एता ऋचः स्तोमातिशंसनार्थाः ।

द्वे इदस्य क्रमणे स्वर्दृशोऽभिख्याय मर्त्यो भुरण्यति ।
तृतीयमस्य नकिरा दधर्षति वयश्चन पतयन्तः पतत्रिणः ॥
चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् ।
बृहच्छरीरो विमिमान ऋक्वभिर्युवाकुमारः प्रत्येत्याहवम् ॥ १·१५५
आ यो विवाय सचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः ।
वेधा अजिन्वत् त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत् ॥ १·१५६.५
सखे विष्णो वितरं वि क्रमस्व द्यौर्देहि लोकं वज्राय विष्कभे ।
हनाव वृत्रं रिणचाव सिन्धूनिन्द्रस्य यन्तु प्रसवे विसृष्टाः ॥ ८·१००·१२
तमस्य द्यावापृथिवी सचेतसा विश्वेभिर्देवैरनु शुष्ममावताम् ।
यदैत् कृण्वानो महिमानमिन्द्रियं पीत्वी सोमस्य क्रतुमाँ अवर्धत ॥
तमस्य विष्णुर्महिमानमोजसांशुं दधन्वान् मधुनो वि रप्शते ।
देवेभिरिन्द्रो मघवा सयावभिर्वृत्रं जघन्वाँ अभवद्वरेण्यः ॥ १०·११३·१–२
जज्ञा न एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभि पौंस्यं रणम् ।
अवृश्चदद्रिमव सस्यदः सृजदस्तभ्नान्नाकं स्वपस्यया पृथुम् ॥
आदिन्द्रः सत्रा तविषीरपत्यत वरीयो द्यावापृथिवी अबाधत ।
अवाभरद्धृषितो वज्रमायसं शेवं मित्राय वरुणाय दाशुषे ॥
इन्द्रस्यात्र तविषीभ्यो विरप्शिन ऋघायतो अरंहयन्त मन्यवे ।
वृत्रं यदुग्रो व्यवृश्चदोजसापो बिभ्रतं तमसा परीवृतम् ॥
या वीर्याणि प्रथमानि कर्त्वा महित्वेभिर्यतमानौ समीयतुः ।
ध्वान्तं तमोऽव दध्वसे हत इन्द्रो मह्ना पूर्वहूतावपत्यत ॥
विश्वे देवासो अध वृष्ण्यानि तेऽवर्धयन्त्सोमवत्या वचस्यया ।
रद्धं वृत्रमहिमिन्द्रस्य हन्मनाग्निर्न जम्भैस्तृष्वन्नमावयत् ॥
भूरि दक्षेभिर्वचनेभिर्ऋक्वभिः सख्येभिः सख्यानि प्र वोचत ।
इन्द्रो धुनिं च चुमुरिं च दम्भयञ्छ्रद्धामनस्या शृणुते दभीतये ॥
१०·११३·४–९
[1]त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ।
या मर्त्याय प्रतिधीयमानमित् कृशानोरस्तुरसनामुरुष्यथः ॥ १·१५५·२

१. याज्या ।

**यद्यवभृथायोद्यतः किंचिदापद्येत**

दृश्यताम् ' यद्यङ्गस्याच्छेत् '

**यद्यभ्यवह्रियमाणः किंचिदापद्येत**

दृश्यताम् ' यद्यङ्गस्याच्छेत् '

**यदि प्रप्लुतः किंचिदापद्येत**

दृश्यताम् ' यद्यङ्गस्याच्छेत् '

**यदि यूपमुपस्पृशेत्**

मैसं [ ३.९.४ ]—तस्माद्यूपो नोपस्पृश्यः० यद्येकः स्यात् एष ते वायो इति ब्रूयात् । यदि बहवः[१] एते ते वायो इति ब्रूयात्० ।।

**यज्ञभ्रेषे प्रायश्चित्तिः**

माशब्रा [ ११.५.८.५–६ ]—ते देवाः प्रजापतिमब्रुवन् । यदि न ऋक्तो वा यजुष्टो वा सामतो वा यज्ञो ह्वलेत् केनैनं भिषज्येमेति । स होवाच । यदृक्तो भूः इति चतुर्गृहीतमाज्यं गृहीत्वा गार्हपत्ये जुहवथ । यदि यजुष्टो भुवः इति चतुर्गृहीतमाज्यं गृहीत्वाग्नीध्रीये जुहवथ । अन्वाहार्यपचने वा हविर्यज्ञे । यदि सामतः स्वः इति चतुर्गृहीतमाज्यं गृहीत्वाहवनीये जुहवथ । यद्यु अविज्ञातमसत् सर्वाण्यनुद्रुत्याहवनीये जुहवथ० ।।

काशब्रा [ १३.५.८.६–७ ]≡ माशब्रा

ऐब्रा [ ५.३४ ]—यदि यज्ञ ऋक्त आर्तिर्भवति भूः इति ब्रह्मा गार्हपत्ये जुहुयात् । यदि यजुष्टो भुवः इत्याग्नीध्रीये । अन्वाहार्यपचने वा हविर्यज्ञेषु । यदि सामतः स्वः इत्याहवनीये । यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वः इति सर्वा अनुद्रुत्याहवनीय एव जुहुयात्० ।।

षब्रा [ १.५ ]—तद्यदृक्त उल्बणं क्रियेत गार्हपत्यं परेत्य भूः स्वाहा इति जुहुयात्० अथ यदि यजुष्ट उल्बणं क्रियेतान्वाहार्यपचनं परेत्य भुवः स्वाहा इति जुहुयात्० अथ यदि सामत उल्बणं क्रियेताहवनीयं परेत्य स्वः स्वाहा इति जुहुयात्० अतो वाव यतमस्मिन्नेव कतमस्मिंश्चोल्बणं क्रियेत सर्वेष्वेवानुपर्यायं जुहुयात्० ।।

छांउ [ ४.१७.४–६ ]—तद्यदृक्तो रिष्येद् भूः स्वाहा इति गार्हपत्ये जुहुयात० अथ यदि यजुष्टो रिष्येद् भुवः स्वाहा इति दक्षिणाग्नौ जुहुयात्० अथ यदि सामतो रिष्येत् स्वः स्वाहा इत्याहवनीये जुहुयात्० ।।

---

१. द्रष्टव्यं पृ. ५९९ ।

जैउब्रा [ ३·१७·१-२ ]—स यदि यज्ञ ऋक्तो भ्रेषन्नियात् **ब्रह्मणे प्रब्रूत** इत्याहुः । अथ यदि यजुष्टो **ब्रह्मणे प्रब्रूत** इत्याहुः । अथ यदि सामतो **ब्रह्मणे प्रब्रूत** इत्याहुः । अथ यद्यनुपस्मृतात् **कुत इदमजनि** इति **ब्रह्मणे प्रब्रूत** इत्येवाहुः । स ब्रह्मा प्राङ् उदेत्य स्रुवेणाग्नीध्र आज्यं जुहुयाद् **भूर्भुवः स्वः** इत्येताभिर्व्याहृतिभिः ॥

गोब्रा [ १·३·३ ]—स यदृक्तो भ्रेषं नियच्छेत् **ओ३म् भूर्जनत्** इति गार्हपत्ये जुहुयात् । यदि यजुष्टः **ओ३म् भुवो जनत्** इति दक्षिणाग्नौ जुहुयात् । यदि सामतः **ओ३म् स्वर्जनत्** इत्याहवनीये जुहुयात् । यद्यनाज्ञाता ब्रह्मतो वा **ओ३म् भूर्भुवः स्वर्जनत्** इत्याहवनीय एव जुहुयात्० ॥

**सर्वप्रायश्चित्तम्**

षब्रा [ १·६ ]—किꣳ सर्वप्रायश्चित्तमिति । महाव्याहृतीरेव० यच्चावगतं यच्चानवगतꣳ सर्वस्यैवैव प्रायश्चित्तिरिति । तस्मादेतामेव जुहुयात् । अपि वा **आज्ञातं यदनाज्ञातं यज्ञस्य क्रियते मिथु । अग्ने तदस्य कल्प त्वꣳ हि वेत्थ यथायथꣳ स्वाहा** इति । अपि वा प्राजापत्यां **प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव । यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाꣳ स्वाहा** इति० ॥

**यदि यज्ञविभ्रष्टः स्यात्**

षब्रा [ २·९ ]—स यदि पशुना व्याधीयेताध्वर्युर्म इदमकरिति विद्यात् । अथ यद्येनं पापिका कीर्तिरनूदियाद्धोता म इदमकरिति विद्यात् । अथ यद्यस्य योगक्षेमो व्यथेत ब्रह्मा म इदमकरिति विद्यात् । अथ यद्यात्मना प्रजया वा व्याधीयेतोद्गाता म इदमकरिति विद्यात्० स यदि मन्येत ब्रह्मा म इदमकरिति हरितꣳ हिरण्यं दर्भेनाड्या प्रबध्य स्रुच्यवधाय चतुर्गृहीतमाज्यं गृहीत्वा जुहुयात् **नमः प्राणाय वाचस्पतये स्वाहा** इति । यद्यु वा इतरे **नमो वाचे प्राणपत्न्यै स्वाहा** इति । यदीतरो यदि वेतरे सर्वेष्वेवानुपर्यायं जुहुयात् **नमः प्राणाय वाचस्पतये स्वाहा नमो वाचे प्राणपत्न्यै स्वाहा** इति । अथ तद्धिरण्यं ब्रह्मणे दद्यात्० ॥

**अविज्ञातप्रायश्चित्तम्**

**कासं [ ३४·१९–३५·२ ]—**

**अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् ।**
**दूरेदृशं गृहपतिमथर्युम् ॥**
**अग्निनाग्निस्समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥**
**सप्त ते अग्ने समिधस्सप्त जिह्वास्सप्तर्षयस्सप्त धाम प्रियाणि ।**
**सप्त होत्रा अनु विद्वान् सप्त योनीरापृणस्वा घृतेन ॥**

मनो ज्योतिर्जुषतामाज्यस्यारिष्टं यज्ञं समिमं तनोतु ।
इमं यज्ञं सप्ततन्तुं ततं न आ देवा यन्तु सुमनस्यमानाः ॥

त्रयस्त्रिंशत् तन्तवो यान् वितन्वत इमं यज्ञं स्वधया ये ददन्ते ।
तेषां छिद्रं प्रतिदध्मो यदत्र स्वाहायं यज्ञो अप्येतु देवान् ॥

यन्मे मनसश्छिद्रं यद्वाचो यच्च मे हृदः ।
अयं देवो बृहस्पतिस्सं तत् सिञ्चतु राधसा ॥

विश्वकर्मा हविरिदं जुषाणस्संतानैर्यज्ञं समिमं तनोतु ।
या व्युष्टा उषसो याश्च निम्रुचस्तास्संदधातु हविषा घृतेन ॥

अयाश्चाग्नेऽस्यनभिशस्तिश्च सत्यमित्वमया असि ।
अयास्सन् मनसा कृतोऽयास्सन् हव्यमूहिषेऽया नो धेहि भेषजम् ॥
त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽवयासिसीष्ठाः ।
यजिष्ठो वह्नितमश्शोशुचानो विश्वा द्वेषांसि प्रमुमुग्ध्यस्मत् ॥

स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अवयक्ष्व नो वरुणं रराणो वीहि मृडीकं सुहवो न एधि ॥
भद्रं कर्णेभिश्शृणुयाम देवा भद्रं पश्येमाक्षिभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवास्स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति न स्तार्क्ष्यो अरिष्टनेमिस्स्वस्ति नो बृहस्पतिर्दधातु ॥
पृषदश्वा मरुतः पृश्निमातरश्शुभंयावानो विदथेषु जग्मयः ।
अग्निजिह्वा मनवस्सूरचक्षसो विश्वे मा देवा अवसागमन्निह ॥

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥

प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
त्वां शश्वन्त उपयन्ति वाजाः ॥

श्रुत्कर्णाय कवये वेद्याय वचोभिर्नाकमुपयामि शंसन् ।
यतो भयमभयत्वं नो अस्त्वग्ने देवानामव हेड इक्ष्व ॥

अग्निं वो देवमग्निभिस्सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम् ।
यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः ॥
घृतप्रतीको घृतपृष्ठो अग्निर्घृताहवनो घृतमस्य धाम ।
घृतप्रुषो हरितस्त्वावहन्तु घृतं पिबन् यजताद्देव देवान् ॥
इमो अग्ने वीततमानि हव्याजस्रा वक्षि देवतातिमच्छ ।
प्रति न ईं सुरभीणि व्यन्तु ॥

सप्त ते अग्ने....॥ त्रयस्त्रिंशत्....॥ यन्मे मनसो....॥ विश्वकर्मा....॥ अग्निं युनज्मि....॥ इन्धानास्त्वा....॥ अग्निर्न ईडित ईडितव्यैर्देवैः पार्थिवैः पातु वायुर्न ईडित ईडितव्यैर्देवैरन्तरिक्ष्यैः पातु सूर्यो न ईडित ईडितव्यैर्देवैर्दिव्यैः पातु विष्णुर्न ईडित ईडितव्यैर्देवैर्दिश्यैः पातु ॥ अग्निर्यजुर्भिः पूषा स्वगाकारैस्त इमं यज्ञमवन्तु ते मामवन्त्वनु व आरभेऽनु मारभध्वम् ॥

समृतसोमे

तैसं [ ३·१·७ ]—संवेशाय त्वोपवेशाय त्वा गायत्रिया [ अभिभूत्यै स्वाहा ॥ संवेशाय त्वोपवेशाय त्वा ] त्रिष्टुभो [ ऽभिभूत्यै स्वाहा ॥ संवेशाय त्वोपवेशाय त्वा ] जगत्या अभिभूत्यै स्वाहा ॥ प्राणापानौ मृत्योर्मा पातम् ॥ प्राणापानौ मा मा हासिष्टम् ॥ देवतासु वा एते प्राणापानयोर्व्यायच्छन्ते येषाँ सोमः समृच्छते० प्रेतिवन्त्याज्यानि भवन्ति० मरुत्वतीः प्रतिपदः० उभे बृहद्रथन्तरे भवतः ० यद्विहव्यँ शस्यते ० ॥

तैब्रा [ १·४·६ ]—एकैको वै जनतायामिन्द्रः । एकं वा एताविन्द्रमभिसँसुनुतः । यौ द्वौ सँसुनुतः ० एतिवन्त्याज्यानि भवन्ति० मरुत्वतीः प्रतिपदः० उभे बृहद्रथन्तरे भवतः० अभिवर्तो ब्रह्मसाम भवति० अभिजिद्भवति० विश्वजिद्भवति० यद्यग्निष्टोमः सोमः परस्तात् स्यात् । उक्थ्यं कुर्वीत । यद्युक्थ्यः स्यात् । अतिरात्रं कुर्वीत० ॥

मैसं [ १·९·८ ]—एतैरेव[1] जुहुयात् समृतयज्ञे चतुर्भिश्चतुर्भिरन्वाकशायं पुरस्तात् प्रातरनुवाकस्य० ॥

कासं [ ९·१५ ]—अथैते संभाराः[2]० समृतसोम एतेषां चतुर्भिश्चतुर्भिः प्रचरिष्यञ्जुहुयात्० ॥

[ ३४·४ ]—यदि सोमौ संसुतौ स्यातां महति रात्र्याः प्रातरनुवाकमुपाकुर्यात् ० वृषण्वतीं प्रतिपदं कुर्यात्० तदाहुस्सवनमुखे सवनमुखे कर्तव्या० संवेशायोपवेशाय गायत्र्यै

1. चतुर्होतृभिः । 2. द्रष्टव्यं श्रौ. १ पृ. १३२ ।

छन्दसेऽभिभुवे स्वाहा ।। संवेशायोपवेशाय त्रिष्टुभे [ छन्दसेऽभिभुवे स्वाहा ।। संवेशायोपवेशाय ] जगत्यै [ छन्दसेऽभिभुवे स्वाहा ।। संवेशायोपवेशाय ] अनुष्टुभे छन्दसेऽभिभुवे स्वाहा० सजन्यं शस्यं विहव्यं शस्यमगस्त्यस्य कयाशुभीयं शस्यम् ० ।।

[ ३४·१८ ]—यो वै स्तोमभागानामायताश्च प्रतिहिताश्च विद्यात् स समृतसोमस्य ब्रह्मा स्यात् । बहिष्पवमाने प्रस्तुते ब्रूयात् स्तुतेषे स्तुतोर्जे स्तुत देवस्य सवितुः प्रसवे बृहस्पतिप्रसूता इति० यां दिशं सोमौ संसुतौ[1] स्यातां तां दिशं परीक्षेत इदमहममुमामुष्यायणममुष्याः पुत्रं शुचा विध्यामि इत्यृत्विजामेकं ब्रूयात्० बहिष्पवमाने प्रस्तुते स्तुतेषे स्तुतोर्जे स्तुत देवस्य सवितुः प्रसवे बृहस्पतिप्रसूता इत्युपर्युपरि ब्रह्माणमतीक्षेत० ।।

साकौसं—

बहिष्पवमानस्तोत्रम्

गायत्रम्

१ २ २ २
१–३ स्तोमाः पवस्वेन्दोवृषासुतोम् ।।[2]

१ २
४–६ ” दविद्युततियारुचोम् ।।[3]

१ २ २
७–९ ” पवमानस्यतेकवोम् ।।[4]

अपि वा

१ २ २ २
१–३ स्तोमाः पवस्वेन्दोवृषासुतोम् ।।[2]

२ २ २ २
४–६ ” उपास्मैगायतानरोम् ।।[3]

२ २
७–९ ” पवस्ववाचोअग्रियोम् ।।[5]

चत्वारि आज्यस्तोत्राणि[6]

---

१. ‘ संसुतौ ’ इति मुद्रितपाठोऽसमीचीनः प्रतिभाति । २. द्रष्टव्यं पृ. २८२ । ३. द्रष्टव्यं पृ. २७९ । ४. द्रष्टव्यं पृ. २८० । ५. द्रष्टव्यं पृ. १८१ । ६. द्रष्टव्यं पृ. ३२८, ३३६, ३४०, ३४५ । आद्यं राथन्तरं शिष्टानि बार्हतानि । अपि वा पूर्वे बार्हते उत्तरे राथन्तरे ।

**माध्यंदिनपवमानस्तोत्रम्**

१–३ स्तोमाः गायत्रम्[१]
४–६ ,, आमहीयवम्[१] ऊह ६.२.१
७ स्तोमः रौरवम्[२] ऊह १.१.२
८ ,, यौधाजयम्[३] ऊह १.१.३
९ ,, तौरश्रवसम्

साकौसं [ २·१·१·९·१–२ ]—

पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥
दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नꣳ सधस्थमासदत् ।
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥

१ ३ ४ २ ४र ५ १ २ १ – १ २ ^३ २
हुम् प्रा५त्नꣳसधा३स्था३मादात् ॥ ओम्प्रत्नꣳसधा२स्थमासा१दा२हुवा३
१ २ र १ २ – १ २ ^३ २ १ २ २ १ १ – १
ओ३वा आपाच्छ्यो१या२न्धरूणा१म्वा२उवा३ओ३वा ॥ जियार्षा१सा२इनृभा-
२ ^३ २ १ २ ४ ५ ४ ५
इर्धौ१ता२उवा३ओ३ता३ ॥ विचोवाक्षा५णो६॥ हाइ ॥ [ ऊह्य ५·१·७ ]

१०–१२ स्तोमाः रथन्तरम्[४] ऊह ४.१४
१३–१५ ,, पार्थम्[५] ऊह ७.१.६

**चत्वारि पृष्ठस्तोत्राणि[६]**

**आर्भवपवमानस्तोत्रम्**

१–३ स्तोमाः गायत्रम्[७]
४–६ ,, संहितम्

साकौसं [ २·४·१·३·६–८ ]—

अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः । सꣳ सूर्येण दिद्युते ॥
गिरस्त इन्द ओजसा मर्मृज्यन्ते अपस्युवः । याभिर्मदाय शुम्भसे ॥
तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे । तव प्रशस्तये महे ॥

१ १ २ १ १ १ २ १– २ १ – १ १
हुम् अचिक्रदद्वृषा२हराइः ॥ ओम्महा२न्मा२३इत्रोनदा२र्शताः ॥ सा२३
२ १–१ ७ २ ^ ३ ५ १ २ – १
ꣳसू ॥ री२येणदा२हाउवा३ ॥ द्यू२३४ते ॥ [ १ ] गिरस्तइन्दओ२जसा ॥

१. यथा गवामयने प्रायणीयेऽतिरात्रे । २. द्रष्टव्यं पृ. ३५८ । अत्र प्रथमायाम् । ३. द्रष्टव्यं पृ. ३५९ । अत्र द्वितीयायाम् । ४. यथा द्वादशाहे सप्तमेऽहनि । ५. यथा गवामयने आभिप्लविकस्य द्वितीयेऽहनि । ६. द्रष्टव्यं पृ. ३८९, ३९८, ४०४, ४११ । ७. यथा द्वादशाहे षष्ठेऽहनि बहिष्पवमानस्तोत्रे ।

१ २ - २ २१ १ १ २ १ - १ ७ २
ओम्मर्मृ२ज्या२३न्ताअपा२स्यूवाः ॥ या२३मीः ॥ मा२दायशू२३ᳬहाउवा३ ॥
मा२३४से ॥ [ २ ] तन्त्वामदायघा२र्व्वयाइ ॥ ओमुलो२का२३कृत्नुमी२माहाइ ॥
ता२३वा ॥ प्रा२शास्तया२३हाउवा३ ॥ मा२३४हे ॥ [ ३ ] [ ऊह २१·३·१ ]

| | | |
|---|---|---|
| ७ स्तोमः | सफम्[१] | ऊह १.१.१० |
| ८ ,, | श्रुध्यम्[२] | ऊह ९.१.२० |
| ९ ,, | श्यावाश्वम्[३] | ऊह १.१.११ |
| १० ,, | तौरश्रवसम् | |

साकौसं [ २·१·१·१८·१–३ ]—

पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
अप श्वानᳬ श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥
यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः ॥
तं दुरोषमभी नरः सोमं विश्वाच्या धिया । यज्ञाय सन्त्वद्रयः ॥

हुम् सखायोदीर्घजिह्वायाम् ॥ ओ्योधारयापा३वा२३कयापा२३राइप्रास्या-
इन्दा२३ता२इसू२३४ताः ॥ इन्दूराश्वा२४औहोवा ॥ ना२३का२र्त्ता२वा२३४
औहोवा ॥ या२३४५ः ॥ [ ऊह ५·१·८ ]

| | | |
|---|---|---|
| ११ स्तोमः | औदलम्[४] | |
| १२–१४ स्तोमाः | आन्धीगवम्[५] | ऊह १०.१.३ |
| १५–१७ ,, | कावम्[५] | ऊह १.१.१२ |
| | अग्निष्टोमस्तोत्रम्[६] | ऊह १.१.१३ |

तांत्रा [ ९·४·१–१८ ]—यदि सोमौ सᳬसुतौ स्यातां महति रात्रेः प्रात-रनुवाकमुपाकुर्यात्[७] ० वृषण्वतीं प्रतिपदं कुर्यात्[८] ० अथो खल्वाहुः सवनमुखे सवनमुखे कार्या० सुसमिद्धे होतव्यम् ० संवेशायोपवेशाय गायत्र्यै च्छन्दसेऽभिभूतये स्वाहा ॥ संवेशा-

---

१. द्रष्टव्यं पृ. ४२१ । अत्र प्रथमायाम् । २. द्रष्टव्यं पृ. ४२५ । अत्र प्रथमायाम् । ३. द्रष्टव्यं पृ. ४२२ । अत्र प्रथमायाम् । ४. यथा एकाहेषु महाव्रते । अत्र तृतीयायामेव । ५. द्रष्टव्यं पृ. ४२३–४२४ । ६. द्रष्टव्यं पृ. ४५३ । ७. अध्वर्युः । ८. उद्गाता ।

योपवेशाय त्रिष्टुभे च्छन्दसेऽभिभूतये स्वाहा ॥ संवेशायोपवेशाय जगत्यै च्छन्दसेऽभिभूतये स्वाहा इति जुहोति[1]० उभे बृहद्रथन्तरे कार्ये[2]० तौरश्रवसे कार्ये[3]० पूर्वेऽभिषुणुयुः[4]० विहव्यꣳ शस्यम्[5]० यदीतरोऽग्निष्टोमः स्यादुक्थ्यः कार्यो यद्युक्थ्योऽतिरात्रः० अथो खल्वाहुर्दुष्प्राप इव वै परः पन्थाः। यमेवाग्रे यज्ञक्रतुमारभेत तस्मान्नेयादिति। सजनीयꣳ शस्यमगस्त्यस्य कयाशुभीयꣳ शस्यम्० ॥

साजैसं [ ४·१·७–९ ]—

प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या। देवान् जिगाति सुम्नयुः ॥
ईळे अग्निं विपश्चितं गिरा यज्ञस्य साधनम्। श्रुष्टीवानं धितावानम् ॥
अग्ने शकेम ते वयं यमं देवस्य वाजिनः। अति द्वेषाꣳसि तरेम ॥

जैब्रा [ १·३४२–३४४ ]—यदि सोमौ सꣳसुतौ[6] स्यातां महारात्रे प्रातरनुवाकमुपाकुर्यात्० सुषमिद्धे होतव्यम्० आग्नीध्रे होतव्यम्। संवेशायोपवेशाय गायत्र्यै छन्दसेऽभिभूत्यै स्वाहा इति प्रातस्सवने जुहुयात्। संवेशायोपवेशाय त्रिष्टुभे छन्दसेऽभिभूत्यै स्वाहा इति माध्यंदिने सवने जुहुयात्। संवेशायोपवेशाय जगत्यै छन्दसेऽभिभूत्यै स्वाहा इति तृतीयसवने जुहुयात्० प्रजापतेर्ऋग्भिर्होतव्यम्० यदि कामयेरन्नध्वर्युरेषां म्रियेतेत्यध्वर्युं प्रातस्सवने ब्रूयुः प्रजापतेर्ऋग्भिर्जुहुधि इति। यदि कामयेरन् होतैषां म्रियेतेति होतारं माध्यंदिने सवने ब्रूयुः प्रजापतेर्ऋग्भिर्जुहुधि इति। यदि कामयेरन्नुद्गातैषां म्रियेतेत्युद्गातारं तृतीयसवने ब्रूयुः प्रजापतेर्ऋग्भिर्जुहुधि इति० यदि कामयेरन् यजमान एषां म्रियेतेति यजमानं ब्रूयुः प्रजापतेर्ऋग्भिर्जुहुधि इति। यदि कामयेरन् सर्व एव म्रियेरन्निति सर्व एव सर्वेषु सवनेषु जुहुयुः। उभे बृहद्रथन्तरे भवतः ० प्र वो वाजा अभिद्यव इत्याग्नेयमाज्यं भवति० आभीकमभिनिधनमभीवर्तमाभीशवमित्येतानि सामानि भवन्ति० विहवीयꣳ सजनीयमगस्त्यस्य कयाशुभीयमित्येतानि शस्त्राणि भवन्ति० यदीतरेऽग्निष्टोमं कुर्वीरन्नथात्मनोक्थ्यं कुर्वीरन्। यदीतर उक्थ्यं कुर्वीरन्नथात्मना षोडशिनं गृह्णीरन्। यदीतरे षोडशिनं गृह्णीरन्नथात्मनातिरात्रं कुर्वीरन्। यदीतरेऽतिरात्रं कुर्वीरन्नथात्मना द्विरात्रं कुर्वीरन्। यदीतरे द्विरात्रं कुर्वीरन्नथात्मना त्रिरात्रं कुर्वीरन्० ॥

[ १·३६१ ]—तस्मादु हैव विद्वानप्युत्काशो दीक्षेत। स हैव सꣳसुन्वतोरभिभवति। स एतां देवतामुपतिष्ठेत शिवोऽसि प्र त्वा पद्ये नमस्ते अस्तु मा मा हिꣳसीः ॥ यो मां द्वेष्टि स आर्तिमार्छतु इति० ॥

१. प्रतिसवनं पवमाननिःसर्पणकाले त्र्याणामेकैकेन मन्त्रेणोद्गाता जुहोति। द्र. लाट्याश्रौ १.११.१०।
२. माध्यंदिनपवमाने 'पुनानः सोम' इति बार्हते प्रगाथे रथन्तरं कर्तव्यम्, पृष्ठस्तोत्रे बृहत्साम कर्तव्यम्।
३. माध्यंदिनार्भवपवमानयोः। ४. अध्वर्यवः। ५. होत्रा वैश्वदेवसूक्तस्य पुरस्तात्। ६. 'संस्तुतौ' इति मुद्रितपाठः।

ऋसं—

[1]कया शुभा सवयसः सनीळाः। समान्या मरुतः सं मिमिक्षो३म् कया मती कुत एतास एते। अर्चन्ति शुष्मं वृषणो वसूयो३म् कस्य ब्रह्माणि जुजुषुर्युवानः। को अध्वरे मरुत आ ववर्तो३म् श्येनाँ इव ध्रजतो अन्तरिक्षे। केन महा मनसा रीरमामो३म् कुतस्त्वमिन्द्र माहिनः सन्नेकः। यासि सत्पते किं त इत्थो३म् सं पृच्छसे समराणः शुभानैर्वोचेस्तन्नः। हरिवो यत् ते अस्मो३म् ब्रह्माणि मे मतयः शं सुतासः। शुष्म इयर्ति प्रभृतो मे अद्रो३म् आ शासते प्रति हर्यन्त्युक्थेमा हरी। वहतस्ता नो अच्छो३म् अतो वयमन्तमेभिर्युजानाः। स्वक्षत्रेभिस्तन्वः शुम्भमानो३म् महोभिरेताँ उप युज्महे। न्विन्द्र स्वधामनु हि नो बभूथो३म् क्व स्या वो मरुतः स्वधासीत्। यन्मामेकं समधत्ताहिहत्यो३म् अहं ह्युग्रस्तविषस्तुविष्मान्। विश्वस्य शत्रोरनमं वधस्नो३म् भूरि चकर्थ युज्येभिरस्मे। समानेभिर्वृषभ पौंस्येभो३म् भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा। मरुतो यद् वशामो३म् वर्धी वृत्रं मरुत इन्द्रियेण। स्वेन भामेन तविषो बभूवो३म् अहमेता मनवे विश्वश्चन्द्राः। सुगा अपश्चकर वज्रबाहो३म् अनुत्तमा ते मघवन्नकिर्नु। न त्वावाँ अस्ति देवता विदानो३म् न जायमानो नशते न जातः। यानि करिष्या कृणुहि प्रवृद्धो३म् एकस्य चिन्मे विभ्वस्त्वोजः। या नु दधृष्वान् कृणवै मनीषो३म् अहं ह्युग्रो मरुतो विदानः। यानि च्यवमिन्द्र इदीश एषो३म् अमन्दन्मा मरुतः स्तोमो अत्र। यन्मे नरः श्रुत्यं ब्रह्म चक्रो३म् इन्द्राय वृष्णे सुमखाय मह्यम्। सख्ये सखायस्तन्वे तनूभो३म् एवेदेते प्रति मा रोचमानाः। अनेद्यः श्रव एषो दधानो३म् संचक्ष्या मरुतश्चन्द्रवर्णाः। अच्छान्त मे छदयाथा च नूनो३म् को न्वत्र मरुतो मामहे वः। प्र यातन सखीँरच्छा सखायो३म् मन्मानि चित्रा अपिवातयन्तः। एषां भूत नवेदा म ऋतानो३म् आ यद् दुवस्याद् दुवसे न कारुः। अस्माञ्चक्रे मान्यस्य मेधो३म् ओ षु वर्त्त मरुतो विप्रमच्छ। इमा ब्रह्माणि जरिता वो अर्चो३म् एष वः स्तोमो मरुत इयं गीः। मान्दार्यस्य मान्यस्य कारो३म् एषा यासीष्ट तन्वे वयाम्। विद्यामेषं वृजनं जीरदानो३म् (१.१६५)[2]॥

[3]यो जात एव प्रथमो मनस्वान्। देवो देवान् क्रतुना पर्यभूषो३म् यस्य शुष्माद् रोदसी अभ्यसेताम्। नृम्णस्य मह्ना स जनास इन्द्रो३म् यः पृथिवीं

---

१. माध्यंदिनसवने मरुत्वतीयशस्त्रे निविद्धानीयसूक्तस्य पुरस्तादिदं सूक्तं शंसेत्। २. शिष्टं शंसनं द्रष्टव्यं पृ. ३८३। ३. निष्केवल्यशस्त्रे निविद्धानीयसूक्तस्य पुरस्तादिदं सूक्तं शंसेत्।

व्यथमानामदृंहत् । यः पर्वतान् प्रकुपिताँ अरम्णो३म् यो अन्तरिक्षं विममे वरीयः । यो द्यामस्तभ्नात् स जनास इन्द्रो३म् यो हत्वाहिमरिणात् सप्त सिन्धून् । यो गा उदाजदपधा वलस्यो३म् यो अश्मनोरन्तरग्निं जजान । संवृक् समत्सु स जनास इन्द्रो३म् येनेमा विश्वा च्यवना कृतानि । यो दासं वर्णमधरं गुहाको३म् श्वघ्नीव यो जिगीवाँ लक्षमादत् । अर्यः पुष्टानि स जनास इन्द्रो३म् यं स्मा पृच्छन्ति कुह सेति घोरम् । उतेमाहुर्नैषो अस्तीत्येनो३म् सो अर्यः पुष्टीर्विज इवा मिनाति । श्रदस्मै धत्त स जनास इन्द्रो३म् यो रध्रस्य चोदिता यः कृशस्य । यो ब्रह्मणो नाधमानस्य कीरो३म् युक्तग्राव्णो योऽविता सुशिप्रः । सुतसोमस्य स जनास इन्द्रो३म् यस्याश्वासः प्रदिशि यस्य गावः । यस्य ग्रामा यस्य विश्वे रथासो३म् यः सूर्यं य उषसं जजान । यो अपां नेता स जनास इन्द्रो३म् यं क्रन्दसी संयती विह्वयेते । परेऽवर उभया अमित्रो३म् समानं चिद् रथमातस्थिवांसा । नाना हवेते स जनास इन्द्रो३म् यस्मान्न ऋते विजयन्ते जनासः । यं युध्यमाना अवसे हवन्तो-३म् यो विश्वस्य प्रतिमानं बभूव । यो अच्युतच्युत् स जनास इन्द्रो३म् यः शश्वतो मह्येनो दधानान् । अमन्यमानाञ्छर्वा जघानो३म् यः शर्धते नानुददाति शृध्याम् । यो दस्योर्हन्ता स जनास इन्द्रो३म् यः शम्बरं पर्वतेषु क्षियन्तम् । चत्वारिंश्यां शरद्यन्वविन्दो३म् ओजायमानं यो अहिं जघान । दानुं शयानं स जनास इन्द्रो३म् यः सप्तरश्मिर्वृषभस्तुविष्मान् । अवासृजत् सर्तवे सप्त सिन्धो३म् यो रौहिणमस्फुरद् वज्रबाहुः । द्यामारोहन्तं स जनास इन्द्रो३म् द्यावा चिदस्मै पृथिवी नमेते । शुष्माच्चिदस्य पर्वता भयन्तो३म् यः सोमपा निचितो वज्रबाहुः । यो वज्रहस्तः स जनास इन्द्रो३म् यः सुन्वन्तमवति यः पचन्तम् । यः शंसन्तं यः शशमानमूतो३म् यस्य ब्रह्म वर्धनं यस्य सोमः । यस्येदं राधः स जनास इन्द्रो३म् यः सुन्वते पचते दुध्र आ चित् । वाजं दर्दर्षि स किलासि सत्यो३म् वयं त इन्द्र विश्वह प्रियासः । सुवीरासो विदथमा वदेमो३म् ( २.१२ )[१] ॥

[२]ममाग्ने वर्चो विहवेष्वस्तु । वयं त्वेन्धानास्तन्वं पुषेमो३म् मह्यं नमन्तां प्रदिशश्चतस्रः । त्वयाध्यक्षेण पृतना जयेमो३म् मम देवा विहवे सन्तु सर्वे । इन्द्रवन्तो मरुतो विष्णुरग्नो३म् ममान्तरिक्षमुरुलोकमस्तु । मह्यं वातः पवतां कामे अस्मो३म् मयि देवा द्रविणमा यजन्ताम् । मय्याशीरस्तु मयि देवहूतो३म् दैव्या होतारो वनुषन्त पूर्वे । अरिष्टाः स्याम तन्वा सुवीरो३म् मह्यं यजन्तु मम यानि

१ शिष्टं शंसनं द्रष्टव्यं पृ. ३९२।

२, तृतीयसवने वैश्वदेवशस्त्रे निविद्धानीयसूक्तस्य पुरस्तादिदं सूक्तं शंसेत् ।

हव्या । आकूतिः सत्या मनसो मे अस्तो३म् एनो मा नि गां कतमच्चनाहम् । विश्वे देवासो अधि वोचता नो३म् देवीः षळुर्वीरुरु नः कृणोत । विश्वे देवास इह वीरयध्वो३म् मा हास्महि प्रजया मा तनूभिः । मा रधाम द्विषते सोम राजो३म् अग्ने मन्युं प्रतिनुदन् परेषाम् । अदब्धो गोपाः परि पाहि नस्त्वो३म् प्रत्यञ्चो यन्तु निगुतः पुनस्ते । मैषां चित्तं प्रबुधां वि नेशो३म् धाता धातॄणां भुवनस्य यस्पतिः । देवं त्रातारमभिमातिषाहो३म् इमं यज्ञमश्विनोभा बृहस्पतिः । देवाः पान्तु यजमानं न्यर्थो३म् उरुव्यचा नो महिषः शर्म यंसत् । अस्मिन् हवे पुरुहूतः पुरुक्षो३म् स नः प्रजायै हर्यश्व मृळय । इन्द्र मा नो रीरिषो मा परा दो३म् ये नः सपत्ना अप ते भवन्तु । इन्द्राग्निभ्यामव बाधामहे तो३म् वसवो रुद्रा आदित्या उपरिस्पृशम् । मोग्रं चेत्तारमधिराजमक्रो३म् ( १०.१२८ )[1] ॥

अशौसं—

यजूंषि यज्ञे समिधः स्वाहाग्निः प्रविद्वानिह वो युनक्तु ॥
युनक्तु देवः सविता प्रजानन्नस्मिन् यज्ञे महिषः स्वाहा ॥
इन्द्र उक्थामदान्यस्मिन् यज्ञे प्रविद्वान् युनक्तु सुयुजः स्वाहा ॥
प्रैषा यज्ञे निविदः स्वाहा शिष्टाः पत्नीभिर्वहतेह युक्ताः ॥
छन्दांसि यज्ञे मरुतः स्वाहा मातेव पुत्रं पिपृतेह युक्ताः ॥
एयमगन् बर्हिषा प्रोक्षणीभिर्यज्ञं तन्वानादितिः स्वाहा ॥
विष्णुर्युनक्तु बहुधा तपांस्यस्मिन् यज्ञे सुयुजः स्वाहा ॥
त्वष्टा युनक्तु बहुधा नु रूपा अस्मिन् यज्ञे सुयुजः स्वाहा ॥
भगो युनक्त्वाशिषो न्वस्मा अस्मिन् यज्ञे प्रविद्वान् युनक्तु सुयुजःस्वाहा ॥
सोमो युनक्तु बहुधा पयांस्यस्मिन् यज्ञे सुयुजः स्वाहा ॥
इन्द्रो युनक्तु बहुधा वीर्याण्यस्मिन् यज्ञे सुयुजः स्वाहा ॥
अश्विना ब्रह्मणा यातमर्वाञ्चौ वषट्कारेण यज्ञं वर्धयन्तौ ।
बृहस्पते ब्रह्मणा याह्यर्वाङ् यज्ञो अयं स्वरिदं यजमानाय स्वाहा ॥
५.२६. १–१२

अपैसं—

यजूंषि यज्ञे .... ॥ युनक्तु देवः .... सयुजः स्वाहा ॥ इन्द्र उक्थामदानि यज्ञे अस्मिन् .... स्वाहा ॥ प्रैषा निविद आप्रियो यजूंषि शिष्टाः .... ॥

---

१. शिष्टं शंसनं द्रष्टव्यं पृ. ४४० ।

छन्दांसि यज्ञे .... ।। एयमगन् .... ।। त्रिष्णुर्युनक्तु .... सयुजः स्वाहा ।। त्वष्टा युनक्तु बहुधा विरूपा .... सयुजः स्वाहा ।। भगो युनक्त्वाशिषो .... सयुजः स्वाहा ।। सोमो युनक्तु .... सयुजः स्वाहा ।। इन्द्रो युनक्तु .... सयुजः स्वाहा ।। अश्विना ब्रह्मणेतमर्वाग् .... ब्रह्मणे ह्यर्वाङ् .... धेहि स्वाहा ।। ९.२. १–१२

गोब्रा [ २.२. ११ ]—यजूंषि यज्ञे समिधः स्वाहेति ० एतैरेव जुहुयात् सभृतयज्ञे । चतुर्भिश्चतुर्भिरन्वाहार्यं पुरस्तात् प्रातरनुवाकस्य जुहुयात् ० एतैरेव जुहुयात् पुरस्ताद्द्वादशाहस्य ० एतैरेव जुहुयात् पुरस्ताद्दीक्षायाः ० एतैरेवातिथ्यमभिमृशेत् ० ।।

[ २.२.१५ ]—यो ह वा आयतांश्च प्रतियतांश्च स्तोमभागान् विद्यात् स विष्पर्धमानयोः समृतसोमयोर्ब्रह्मा स्यात् । स्तुतेषे स्तुतोर्जे स्तुत देवस्य सवितुः सवे बृहस्पतिं वः प्रजापतिं वो वसून् वो देवान् रुद्रान् वो देवानादित्यान् वो देवान् साध्यान् वो देवानाप्त्यान् वो देवान् विश्वान् वो देवान् सर्वान् वो देवान् विश्वतस्परि हवामहे । जनेभ्योऽस्माकमस्तु केवलः । इतः कृणोतु वीर्यम् इति । एते ह वा आयतांश्च प्रतियतांश्च स्तोमभागास्ताञ्जपन्नुपर्युपरि परेषां ब्रह्माणमवेक्षेत ० ।।

बहूनाम् असखीनां यजमानानाम्

साकौसं—

बहिष्पवमानस्तोत्रम्

गायत्रम्

१–३ स्तोमः एतेअसृग्रमिन्दवोम् ।।[१]

१ २

४–६ ,, दविद्युततियारुचोम् ।।[२]

१ २ २

७–९ ,, पवमानस्यतेकवोम् ।।[२]

चत्वारि आज्यस्तोत्राणि[३]

माध्यंदिनपवमानस्तोत्रम्[४]

चत्वारि पृष्ठस्तोत्राणि[५]

आर्भवपवमानस्तोत्रम्[६]

अग्निष्टोमस्तोत्रम्[७]

तांब्रा [ ६.९.१३ ]—एते असृग्रमिन्दव इति बहुभ्यः प्रतिपदं कुर्यात् ० ।।

१. यथा द्वादशाहे तृतीयेऽहनि । २. द्रष्टव्यं पृ. २७९–८० । ३. द्रष्टव्यं पृ. ३१८, ३२६, ३४०, ३४५ । ४. द्रष्टव्यं पृ. ३५७ । ५. द्रष्टव्यं पृ. ३८९, ३९८, ४०९, ४११ । ६. द्रष्टव्यं पृ. ४२० । ७. द्रष्टव्यं पृ. ४५३ ।

जैत्रा [ १·९४ ] एते असृग्रमिन्दव इति बहूनां संयजमानानां प्रतिपदं कुर्यात्० असृक्षत प्र वाजिनः इति त्रयाणां संयजमानानां प्रतिपदं कुर्यात्० ॥

**सखीनां यजमानानाम्**

**साकौसं—**

**बहिष्पवमानस्तोत्रम्**

गायत्रम्

१ र

१–३ स्तोमाः दविद्युततियारुचोम् ॥[१]

र र र र

४–६ ,, उपास्मैगायतानरोम् ॥[१]

१ र र

७–९ ,, पवमानस्यतेकवोम् ॥[१]

चत्वारि आज्यस्तोत्राणि[२]

माध्यंदिनपवमानस्तोत्रम्[३]

चत्वारि पृष्ठस्तोत्राणि[४]

आर्भवपवमानस्तोत्रम्[५]

अग्निष्टोमस्तोत्रम्[६]

तांत्रा [ ६·९·२४ ]—दविद्युतत्या रुचेति व्रातायं प्रतिपदं कुर्यात्० ॥

**द्वियजमानके**

**साकौसं—**

**बहिष्पवमानस्तोत्रम्**

गायत्रम्

साकौसं [ २·३·२·१३·३, २, १ ]—

युवꣳहि स्थः स्वः पती इन्द्रश्च सोम गोपती । ईशाना पिप्यतं धियः ॥
वृषा पुनान आयूꣳषि स्तनयन्नधि बर्हिषि । हरिः सन्योनिमासदः ॥
यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु । तन्नः पुनान आ भर ॥

१र र र – १र २

१–३ स्तोमाः युवꣳहिस्थःसुवःपतोम् ॥ ओमोओओओओओओ२ओओओओओ-

१ – १ २^१११ १र र र १

१२१२ ॥ हुम्आ२ ॥ ओओ ॥ आ३४५ ॥ [ १ ] वृषापुनानआयूꣳषोम् ॥ ओ-

१. द्रष्टव्यं पृ. २७९–८० । २. द्रष्टव्यं पृ. ३२८, ३३६, ३४०, ३४५ । ३. द्रष्टव्यं पृ. ३५७ ।
४. द्रष्टव्यं पृ. ३८९, ३९८, ४०५, ४११ । ५. द्रष्टव्यं पृ. ४२० । ६. द्रष्टव्यं पृ. ४५३ ।

र - १ र २ १ - १ २^१ १ १
मोओओओओओओओ२ओओओओओओ१२१२ ॥ हुम्आ२ ॥ ओओ ॥ आ३४५ ॥

१ र र र र र र - १र र २
[ २ ] यत्सोमचित्रमुक्थियोम् ॥ ओमोओओओओओओ२ओओओओओ

१ - १ २^१ १ १
१२१२ ॥ हुम्आ२ ॥ ओओ ॥ आ३४५ ॥ [ ३ ]

| | | |
|---|---|---|
| ४–६ स्तोमाः | दविद्युततियारुचोम् ॥[१] | |
| ७–९ " | पवमानस्यतेकवोम् ॥[१] | |
| | चत्वारि आज्यस्तोत्राणि[२] | |
| | माध्यंदिनपवमानस्तोत्रम् | |
| १–३ स्तोमाः | गायत्रम्[३] | |
| ४–६ " | आमहीयवम्[३] | ऊह १.१.१ |
| ७ स्तोमः | रौरवम्[४] | ऊह १.१.२ |
| ८ " | यौधाजयम्[५] | ऊह १.३.३ |
| ९ " | दैर्घश्रवसम्[६] | ऊह ११.२.१६ |
| ९ " | उद्वत् प्राजापत्यम्[७] | ऊह २१.१.१ |
| १०–१२ स्तोमाः | अश्विनोर्व्रतम् | |

साकौसं [ २.१.१.९.१–२ ]—

पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥
दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नꣳ सधस्थमासदत् ।
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥

१ २र १ र १र २ र १र २१ २१ र र र
हुम् होइहा३इहोइहा३हो३हा३इहोइहा३होइहा३इहोइहा३पुनानःसोमधारया-
१ २ १ २र २ र २र २ र २र १र २ र र र
ओहाउ ॥ ओꣳहोइहा३इहोइहा३होइहा३इहोइहा३होइहा३इहोइहा३अपोवसानोअर्ष-

---

१. द्रष्टव्यं पृ. २७९–८० । २. द्रष्टव्यं पृ. ३२८, ३३६, ३४०, ३४५ । ३. द्रष्टव्यं पृ. ३५७–५८ । ४. द्रष्टव्यं पृ. ३५८ । अत्र प्रथमायामेव । ५. द्रष्टव्यं पृ. ३५९ । अत्र द्वितीयायामेव । ६. यथा सौमिकचातुर्मास्येषु साकमेधे द्वितीयेऽहनि । अत्र तृतीयायामेव । ७. त्रैकल्पिकम् । यथा काम्याग्निष्टोमेषु ज्योगामयाविनः ।

र १ २ २र २ र २र २ र २र २ र २र र र
साओहाउ ॥ होइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३इहोइहा ३आरत्नधायोनिमृत-
र र १ २ २र २ र २र २ र २र २ र २ र र र
स्यसीदसाओहाउ ॥ होइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३इहोइहा ३उत्सोदेवो-
र १ २ २र २ र २र १र १र २ र ५र र १
हिरण्ययाओहाउहोइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३इहोइहा ३४औहोवा ॥ ई५
१ २र३र२ १र २ र १र २ र २र २ र २ र
हीहीहीहीही ॥ [ १ ] होइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३इहोइहा ३ उत्सो३
२र र १ २ १ १र २ र १र २ र २र २ र २ र
देवोहिरण्ययाओहाउ ॥ ओ६ होइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३इहोइहा ३उत्सो३
२र र १ २ २र २ र २र २ र २र २र २ र र
देवोहिरण्ययाओहाउ ॥ होइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३इहोइहा ३दुहानऊध-
र र १ २ २र २ र २र २र २ र १र २
र्दिवियम्मधुप्रियामोहाउ॥ होइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३इहोइहा ३प्रत्न६ स-
र र १ २ २र २ र २र र २ २र २ र २ ५र र १
धस्थमासदादोहाउहोइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३इहोइहा ३४औहोवा ॥ ई-
१ २र ३र२ २र २ र २र १र २र २र २
५हीहीहीहीही ॥ [ २ ] होइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३इहोइहा ३प्रत्न६ सध-
र र १ २ १ २र २ र २र २ र २र २ र २
स्थमासदादोहाउ ॥ ओ६ होइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३इहोइहा ३प्रत्न६ स-
र र १ र २ २ २र १र २र २ र २र २ र २र
धस्थमासदादोहाउ ॥ होइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३इहोइहा ३आपृच्छयन्ध-
र र १ १ २र २ र २र २ र २र २ र २ र
रुणंवाजियर्षसाओहाउ ॥ होइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३इहोइहा ३नृभिर्द्धौ-
र र १ २ २१ १र २र १र २र २ र २ ५ र र
तोविचक्षणाओहाउहोइहा ३इहोइहा ३होइहा ३इहोइहा ३होइहा ३ इहोइहा ३४औहोवा ॥ ई-
१ २र ३र २
५हीहीहीहीही ॥ [ ३ ] [ ऊह ४.२.१३ ]

| | | |
|---|---|---|
| १३-१५ स्तोमाः | औशनम्[१] | ऊह १.१.४ |

चत्वारि पृष्ठस्तोत्राणि[२]

आर्भवपवमानस्तोत्रम्

| | | |
|---|---|---|
| १-३ स्तोमाः | गायत्रम्[३] | |
| ४-६ " | संहितम्[३] | ऊह १.१.८ |
| ७ स्तोमः | सफम्[४] | ऊह १.१.९ |
| ८ " | पौष्कलम्[४] | ऊह १.१.१० |
| ९ " | श्यावाश्वम्[४] | ऊह १.१.११ |
| १० " | आन्धीगवम्[५] | ऊह १.१.१२ |
| ११ " | औदलम्[६] | ऊह १०.१.३ |
| १२-१४ स्तोमाः | अश्विनोर्व्रतम् | |

साकौसं [ २·१·१·१८·१-३ ]--

पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
अप श्वानꣳ श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥
यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः ॥
तं दुरोषमभी नरः सोमं विश्वाच्या धिया । यज्ञाय सन्त्वद्रयः ॥

१ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ २ र र र र १ २
हुम् होइहाइहोइहाहोइहाइहोइहाहोइहाइहोइहापुरोजितीवोअन्धसाहोहाउ ॥
१ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ २ र र र १ २ १ ३ २ १ ३ १
ओꣳहोइहाइहोइहाहोइहाइहोइहाहोइहाइहोइहासुतायमादयित्नवाहोहाउ ॥ होइहाइहोइहा-
१ ३ २ १ ३ २ १ ३ २ १ ३ २ २ र र १ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १
होइहाइहोइहाहोइहाइहोइहाअपश्वानश्नथिष्टनाहोहाउ ॥ होइहाइहोइहाहोइहाइहोइहाहो-
३ २ १ ३ २ २ र र र र १ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ १
इहाइहोइहासखायोदीर्घजिह्व्याꣳ होइाउहोइहाइहोइहाहोइहाइहोइहाहोइहाइहोइहा ३४
५र र — — — १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ २ र र र
औहोवा॥ ई२ई२ई२॥ [१] होइहाइहोइहाहोइहाइहोइहाहोइहाइहोइहासखायोदीर्घजिह्व-
र १ २ १ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ २ र र र र १ २
याꣳहोहाउ ॥ ओꣳहोइहाइहोइहाहोइहाइहोइहाहोइहाइहोइहायोधारयापावकयाहोहाउ ॥

१. द्रष्टव्यं पृ. ३६० । २. द्रष्टव्यं पृ. ३८९, ३९८, ४०५, ४११ । ३. द्रष्टव्यं पृ. ४२०-२१ । ४. द्रष्टव्यं पृ. ४२१-२२ । अत्र प्रथमायामेव । ५. द्रष्टव्यं पृ. ४२३ । अत्र द्वितीयायामेव । ६. एकाहेषु महाव्रते । अत्र तृतीयायामेव ।

१ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १　　र २ १ २　　१ ३ २ १ ३ २ १ ३
होइहाइहोइहाहोइहाइहोइहाहोइहाइहोइहापरिप्रस्यन्दतेसुताहोहाउ ॥ होइहाइहोइहाहोइ-
२ १ ३२ १ ३ २ १ ३ २ १　र　र १ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १
हाइहोइहाहोइहाइहोइहाइन्दुरश्वोनकृत्वियाहोहाउहोइहाइहोइहाहोइहाइहोइहाहोइहाइहो-
३ २ ५र र　— — —　१ ३ २ १ ३ २ १ ३ २ १ ३२ १ ३ २ १ ३ २
इहा२३४औहोवा ॥ ई२३ई२३ई२ ॥ [ २ ]　होइहाइहोइहाहोइहाइहोइहाहोइहाइहोइहा-
२ र र १ २　१ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ १२ र
इन्दुरश्वोनकृत्वियाहोहाउ ॥　ओ३ होइहाइहोइहाहोइहाइहोइहाहोइहाइहोइहातन्दुरोपम-
र र १ २　१ ३२ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २र र र र र १ २
मीनराहोहाउ ॥ होइहाइहोइहाहोइहाइहोइहाहोइहाइहोइहासोमंविश्वाच्याधियाहोहाउ ॥
१ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ १ ३ २ र र　र १ २ १ ३ २ १ ३ २ १ ३ २ १
होइहाइहोइहाहोइहाइहोइहाहोइहाइहोइहायज्ञायसन्त्वद्रयाहोहाउहोइहाइहोइहाहोइहाइहो-
३२ १ ३ २ १ ३ २　५र र　— — —
इहाहोइहाइहोइहा२३४औहोवा ॥ ई२३ई२३ई२ ॥ [ ३ ] [ ऊह्य ४.२.१४ ]

१५–१७ स्तोमाः　　कावम्[१]　　ऊह्य १.१.१३

अग्निष्टोमस्तोत्रम्[२]

तांड्या [ ६.१०.१४ ]—युवꣳहि स्थः स्वः पती इति द्वाभ्यां प्रतिपदं कुर्यात्० ॥

जैम्रा [ १.९४ ]—युवꣳहि स्थः स्वः पती इति द्वयोः संयजमानयोः प्रतिपदं कुर्यात्० ॥

---

१. द्रष्टव्यं पृ. ४१४ ।　　२ द्रष्टव्यं पृ. ४५३ ।

# अग्निष्टोमप्रायश्चित्तानि

## दीक्षितश्चेदनृतं वदेत्

बौ. २८.९—अथातोऽध्वरदीक्षाप्रायश्चित्तानि व्याख्यास्यामः ॥ दीक्षितश्चेदनृतं वदेत् इमं मे वरुण, तत्त्वायामि, त्वं नो अग्ने, स त्वं नो अग्ने इति चतस्रो वारुणीर्जपेत् ॥

## कृष्णाजिनाद् व्यवच्छिन्नो दण्डाद्वा

बौ. २८.९—कृष्णाजिनाद् व्यवच्छिन्नो दण्डाद्वा देवाञ्जनमगन् यज्ञस्ततो मा यज्ञस्याशीरवतु । वर्धतां भूतिर्दध्ना घृतेन मुञ्चतु यज्ञो यज्ञपतिमꣳहसः इति जपेत् ॥

## अमेध्यमनिष्टं वा दृष्ट्वा

बौ. २८.९—अमेध्यमनिष्टं वा दृष्ट्वा जपतीत्युक्तमेतत्[1] ।

## अभिवृष्टोऽभिवृष्यमाणो वा

बौ. २८.९—अभिवृष्टोऽभिवृष्यमाणो वा जपतीत्युक्तमेतत्[1] ।

## छर्दयित्वा निष्ठीव्य वा

बौ. २८.९—छर्दयित्वा निष्ठीव्य वा जपति यदत्रापि रसस्य मे निरष्ठविषमरसृतः । अग्निष्टत्सोमः पृथिवी पुनरात्मन् दधातु मे इति ॥

## रेतश्चेत् स्कन्नम्

बौ. २८.९—रेतः स्कन्नमनुमन्त्रयते यन्मे रेतः परीतोऽपात्तदपिंथ । अग्निहोत्रमिव सोमेन तदहं पुनराददे इति ॥

## मूत्रं करिष्यन् पुरीषं वा

बौ. २८.९—मूत्रं करिष्यन् पुरीषं वा पृथिव्या लोष्टमादत्ते इयं ते यज्ञिया तनूः इति । करोति अपो मुञ्चामि न प्रजामꣳहोमुचः स्वाहाकृताः पृथिवीमाविशत इति । लोष्टं प्रतिनिदधाति पृथिव्या संभव इति ॥

## यदि अश्रु कुर्यात्

बौ. २८.९—बीभत्सा नाम स्थापः स्वाहाकृताः पृथिवीमाविशत इत्यश्रु ॥

## यदि स्नूहानं कुर्यात्

बौ. २८.९—कफस्या नाम स्थापः स्वाहाकृताः पृथिवीमाविशत इति स्नूहानम् ॥

## यदि स्वेदं कुर्यात्

बौ. २८.९—तपस्या नाम स्थापः स्वाहाकृताः पृथिवीमाविशत इति स्वेदम् ॥

---

१. द्रष्टव्यं पृ. ५२१ ।

यदि दुःस्वप्नं पश्येत्

बौ. २८.९—दुःस्वप्नं दृष्ट्वा जपति अभिपर्यावर्तते दुःस्वप्न पापस्वप्नादभूत्यै। ब्रह्माहमन्तरं करवै न हि स्वप्नमुपग्रथे इति ॥

यदि स्वप्नेऽन्नं भुञ्ज्यात्

बौ. २८.९—स्वप्नेऽन्नं भुक्त्वा जपति यदन्नमद्यते नक्तं न तत् प्रातः क्षुधोऽवति। सर्वं तदस्मान् मा हिंसीन्न हि तद्दृशे दिवा इति ॥

यदि लोहितमुत्पतितं पश्येत् यदि वा कण्डूयेत

बौ. २८.९—लोहितमुत्पतितं दृष्ट्वा कण्डूय वा जपति नमो रुद्रियाभ्योऽद्भ्यः स्वाहा इति ॥

यदि वर्षति धावेत्

बौ. २८.९—न वर्षति धावेत्। यदि धावेत् नमो रुद्राय वास्तोष्पतये इत्येतामृचं जपेत् ॥

यद्यन्येन दीक्षितेन समेयात्

बौ. २८.९—नान्येन दीक्षितेन समेयात्। यदि समेयात् कया नश्चित्र आभुवत इत्येतामृचं जपेत् ॥

देवयजनादन्यत्र यद्यभ्युदियादभिनिम्रोचेद्वा

बौ. २८.९—देवयजनादन्यत्राभ्युदितोऽभिनिम्रुक्तो वा सूर्यो मा देवो देवेभ्यः पातु इति जपेत्। इतीन्वा इमानि सर्वास्वेवाध्वरदीक्षासु प्रायश्चित्तानि भवन्तीति बौधायनः। आवान्तरदीक्षायै विसर्गादिति शालीकिः ॥

यदि वाचं विसृजेत्

बौ. २९.४—यदि वाचं विसृजेद् वैष्णवीमृचं जपेत् ॥

यद्याश्राव्य वाचं विसृजेत्

बौ. २९.४—अथ यद्याश्राव्य वाचं विसृजेद् वैष्णवीमृचं जपेत् विष्णो त्वं नो अन्तमः इति। पुनरेवाश्राव्य यजेत् ॥

यदि सोमाधानमारभ्य पुरा दीक्षणीयायाः पत्न्यनालम्भुका भवति

बौ. २९.११—अथ यदि सोमाधानमारभ्य पुरा दीक्षणीयाया अनालम्भुका भवति नाग्निहोत्रं जुहोति। त्र्यहे पर्यवेतेऽप्सुदीक्षाप्रभृति सिद्धमत ऊर्ध्वम् ॥

यदि दीक्षोपसत्सु पत्न्यनालम्भुका भवति

बौ. २९.११—अथ यदि दीक्षोपसत्सु तथाहर्गणेष्वन्येष्वहःसु वा यथा त्र्यहे पर्यवेते गोमूत्रेणोष्णोदकमिश्रेण लोहितं छिरस्वेत्युक्त्वा प्रक्षाल्य दर्भपुञ्जीलैः पवयतीति। विज्ञायत आपो वै दर्भास्तैर्हि स्नाता भवतीति। विज्ञायते ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्त

इति । तस्माद्धविर्नान्वीक्षेत न स्पृशेदिति । अथ सूतिकाया दशाहे पर्यवेते यथाम्नातं[१] शौचं कृत्वा पत्नीं कर्मसु योजयेत् । तत्कर्म पुत्रो ब्रह्मचारी वा कुर्यात् । तन्मन्त्रं यजमानो जपेत् ॥ एषा पत्न्यकुशली यदि स्यादेवमेव कारयेदिति ॥

## यदि पुरा व्रतदोहनादनालम्भुका भवति

बौ. २९.११—अथ यदि पुरा व्रतदोहनादनालम्भुका भवति त्र्यहं[१] हविष्यमश्नीयात् ॥

## यदि व्रते दुग्धे पत्न्यनालम्भुका भवति

बौ. २९.११—यदि व्रते दुग्धे हविष्यमेव । व्रतमपोऽभ्यवहरेत् । त्र्यहे पर्यवेते गोमूत्रादि सिद्धमत ऊर्ध्वम्[१] ॥

## भिन्नेषु कपालेषु सर्वाणि निपतेयुः

बौ. २९.१—अथ यदि भिन्नेषु कपालेषु सर्वाणि निपतेयुस्तत्र यावन्मूतं पुरीषमादाय वसतीवरीभिः संयुत्य विस्राव्य प्रचरेत् । तत्र प्रायश्चित्तं ग्रहाणामेकेन जुहुयात् ॥

## स्रुक्षु दग्धासु

बौ. २९.१—आग्नेय्या[२] स्रुक्षु अयमग्निः सहस्रिणः इति ॥

## अध्वर्युः प्रधानदेवतामनुच्चारयित्वान्यामुच्चारयेत्

बौ. २९.२—अध्वर्युः प्रधानदेवतामनुच्चारयित्वा योऽन्यामुच्चारयेत् यद्वो देवा अतिपादयानि इत्येतया स्रुवाहुतिं जुहुयात् । दशात्मकेन नवमेन पूर्वोक्तं[३] प्रायश्चित्तं कुर्यात् ॥

## अन्यासु देवतास्विष्टासु नष्टेषु दुष्टेषु वा हविःषु

बौ. २९.३—अन्यासु देवतास्विष्टासु नष्टेषु दुष्टेषु वा दोषवति तन्त्रे प्रधानमावर्तयेत् । सर्वैर्हविरशेषतः । तस्य कः कर्मण उपक्रमो भवतीति । भागिनो दैवतस्य शूर्पादानप्रभृति कर्म कृत्वा श्रपयित्वासाद्य स्वस्थाने प्रचरेत् । तत्र प्रायश्चित्तं मिन्दाहुती जुहुयाद् व्याहृतीश्च । एवं पशावुपाकरणप्रभृत्या स्विष्टकृतः पूर्वोक्तं प्रायश्चित्तं कुर्यात् ॥

## सोमं चेदपहरेयुः

बौ. १४.२९—अथ वै भवति यस्याक्रीतं सोममपहरेयुः क्रीणीयादेव । सैव ततः प्रायश्चित्तिरिति ब्राह्मणम् । अथ वै भवति यस्य क्रीतमपहरेयुरादारांश्च फाल्गुनानि चाभिषुणुयादिति । [ २३.८–आदारसोमेष्विति ॥ सूत्रं बोधायनस्य ॥ आदारसोमेनैवाप्यन्यमागमयेरन्निति शालीकिः ॥ ] आदाराः क्षुद्रतृणानि । फाल्गुनानि हैमवतानि । तेषामलाभे श्वेतकानां प्रतिनिधिः । विज्ञायते तृतीयस्यामितो दिवि सोम आसीत् तं गायत्र्याहरत् तस्य पर्णमच्छिद्यत तत्पर्णोऽभवत् तत्पर्णस्य पर्णत्वमिति । तस्मात् पर्णत्सरूणामेवाभिषवः कार्य इति । शृतेन प्रातःसवने श्रीणीयादिति । शृतमेतद्भवति । दध्ना मध्यंदिन इति दध्येतद्भवति । नीतमिश्रेण तृतीयसवन इति । विमथितं सपिलकमुद्धृतं प्राङ्नवनीतभावादित्येतदाचक्षते । अग्निष्टोमः सोमः स्याद्रथन्तरसामा । य एवर्त्विजो वृताः स्युस्त

१. दृश्यतां 'यदि दीक्षोपसत्सु पत्न्यनालम्भुका भवति'। २. जुहुयात् । ३. दृश्यतां 'होत्रकाणामन्योन्यस्य मैत्रावरुणश्चोदयेत'।

एनं याजयेयुरिति । त एवैनं याजयन्ति । एकां गां दक्षिणां दद्यादिति । एकां गामत्र दक्षिणां ददाति । यदिह दास्यन् भवति तदमुत्र ददाति । पुनः सोमं क्रीणीयात् । यज्ञेनैव तद्यज्ञमिच्छति । सैव ततः प्रायश्चित्तिरिति ब्राह्मणम् ॥

## यदि पुरा प्रवर्ग्यस्य पत्न्यनालम्भुका भवति

बौ. २९.११—अथ यदि पुरा प्रवर्ग्यस्य न[1] प्रवृञ्ज्यात् । हविष्यप्रभृति यथाम्नातꣳ शौचं कृत्वा गोमूत्रादि सिद्धमत ऊर्ध्वम्[2] ॥

## यदि प्रवर्ग्यमप्रवृत्तमादित्योऽभ्यस्तमियात्

बौ. ९.१७—अथातो घर्मप्रायश्चित्तानि व्याख्यास्यामः । अथ यदि प्रवर्ग्यमप्रवृत्तमादित्योऽभ्यस्तमियाद्गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयात् भूर्भुवः सुवः इति । उपसदा प्रचर्य श्वो भूते प्रवर्ग्येण प्रचरेत् ॥

## यदि प्रवर्ग्यं प्रवृत्तमादित्योऽभ्यस्तमियात्

बौ. ९.१७—अथ यदि प्रवर्ग्यं प्रवृत्तमादित्योऽभ्यस्तमियाद्गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयात् भूर्भुव सुवः इति । अथापरस्यां द्वारि सूत्रेण हिरण्यं प्रग्रथ्य प्रचरेत् ॥

## यदि महावीरो विधुर्वा प्रदरो वा जायते

बौ. ९.१७—अथ यदि विधुर्वा प्रदरो वा जायतेऽश्मचूर्णानि छागापयसि संप्रकीर्य तैः प्रत्युक्ष्योल्मुकेनाभितपति विधुं दद्राणं, यद्ते चिदभिश्रिषे इति द्वाभ्याम् । सꣳ हैव रोहति ॥

## यदि प्रमत्ता ऋत्विजोऽतिपरियन्ति

बौ. ९.१७—अथ यदि प्रमत्ता अतिपरियन्ति गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयात् भूर्भुवः सुवः इति । अथ पुनरूर्जा, सह रय्या इति पुनः प्रतिपरियन्ति ॥

## यदि प्रवृत्ते पत्न्यनालम्भुका भवति

बौ. २९.११—अथ यदि प्रवृत्तेऽनालम्भुका[3] भवति हविष्यमेव तदहः सꣳस्थाप्य त्र्यहे पर्यवेते गोमूत्रादि सिद्धमत ऊर्ध्वम्[2] ॥

## यदि घर्मदुघं न विन्देत

बौ. ९.१७—अथ यदि घर्मदुघं न विन्देतान्यां दोहयेत् । अथ यद्यन्यां न विन्देताजां दोहयेत् । अथ यद्यजां न विन्देतार्कक्षीरैः प्रचरेत् । अथ यद्यर्कक्षीरं न विन्देत यवपिष्टानि व्रीहिपिष्टानि श्यामाकपिष्टानि वाद्भिः सꣳसृज्य तैः प्रचरेत् । अप्यद्भिः प्रचरेत् । न त्वेव न प्रचरेत् ॥

## यदि घर्मे प्रवृत्तायां पयो न स्यात्

बौ. २९.११—अथ यदि सांनाय्ये घर्मे वा प्रवृत्तायां पयो न स्याद्येन केनचिदुपायेन किंचित्पयो दोहयित्वाद्भिः सꣳसृज्य प्रचरेत् । नैवान्यत्पय आनीय कुर्यात् । सैव ततः प्रायश्चित्तिः ॥

---

१. एवं केषुचिल्लिखितपुस्तकेषु । '°स्यान्न' इति मुद्रितपुस्तकपाठः । २. दृश्यतां 'यदि दीक्षोपसत्सु पत्न्यनालम्भुका भवति' । ३. एवं लिखितपुस्तकेषु । 'प्रवृत्तेऽना°' इति मुद्रितपुस्तकपाठः ।

**यदि प्रवर्ग्ये प्रचर्यमाण एकसृको वाश्येत**

बौ. ९.१८—अथ यदि एकसृको वाश्येत तमनुमन्त्रयते वि गा इन्द्र विचरन् स्पाशयस्व इति। अथास्मा उभयत आदीप्तमुल्मुकं क्षिपेत् अग्ने अग्निना संवदस्व मृत्यो मृत्युना संवदस्व इति। अथैनमुपतिष्ठते सकृत्ते अग्ने नमो द्विस्ते नमस्त्रिस्ते नमः इति॥

**यदि प्रवर्ग्ये प्रचर्यमाणे गृध्रो वाश्येत**

बौ. ९.१८—अथ यदि गृध्रो वाश्येत तमनुमन्त्रयते असृङ्मुखो रुधिरेणाव्यक्तः इति॥

**यदि प्रवर्ग्ये प्रचर्यमाणे भयेडकः काकपिञ्जको वाश्येत**

बौ. ९.१८—अथ यदि भयेडकः काकपिञ्जको वाश्येत तमनुमन्त्रयते यदीषितो यदि वा स्वकामी इति॥

**यदि प्रवर्ग्ये प्रचर्यमाणे सालावृकी वाश्येत**

बौ. ९.१८—अथ यदि सालावृकी वाश्येत तामनुमन्त्रयते दीर्घमुखि दुर्हणु इति॥

**यदि प्रवर्ग्ये प्रचर्यमाणे उलूकोलूकी वाश्येत**

बौ. ९.१८—अथ यद्युलूकोलूकी वाश्येत तामनुमन्त्रयते[1] इत्यादुलूक आपप्तत् इति॥

**योऽन्य एतेभ्यो वाश्येत**

बौ. ९.१८—स योऽन्य एतेभ्यो वाश्येत तस्मा उभयत आदीप्तमुल्मुकं क्षिपेत् उत्तुद शिमिजावरि इति॥

**यदि प्रवर्ग्ये प्रचर्यमाणे आर्ता वागुदियात्**

बौ. ९.१८—अथ यद्यार्ता वागुदियात् तामनुमन्त्रयते यदेतद् वृकसो भूत्वा इति॥

**यदि प्रवर्ग्ये प्रचर्यमाणे उन्मत्ता वागुदियात्**

बौ. ९.१८—अथ यद्युन्मत्ता वागुदियात् तामनुमन्त्रयते यदेतद्भूतान्यन्वाविश्य इति॥

**यद्युद्धून्वन्निव वातो वायात्**

बौ. ९.१८—अथ यद्युद्धून्वन्निव वातो वायात् तमनुमन्त्रयते भूर्भुवः सुवो भूर्भुवः सुवो भूर्भुवः सुवः। भुवोऽद्धायि भुवोऽद्धायि भुवोऽद्धायि इति॥

**यदि प्रवर्ग्ये प्रचर्यमाणे विद्युदापतेत्**

बौ. ९.१७—अथ यदि विद्युदापतेद् गार्हपत्ये स्रुवाहुतीर्जुहुयात्[2] या पुरस्तात् विद्युदापतत् इत्येतैर्यथारूपम्॥

**यत्किंचिद् घर्मकार्यविपर्यासे**

बौ. ९.१७—यत्किंचिद् घर्मकार्यविपर्यासे चैता आहुतीर्जुहुयात् नमस्ते घर्म भूपतये स्वाहा, नमस्ते घर्म भुवनपतये स्वाहा, नमस्ते घर्म भूतानां पतये स्वाहा, घर्माय स्वाहा, अश्विभ्यां स्वाहा, इन्द्राय स्वाहा, बृहस्पतये स्वाहा, प्रजापतये स्वाहा, ब्रह्मणे स्वाहा इति॥

१. अयं पाठः कलान्दमहाशयेन सूचितः। 'तमनुमन्त्रयते' इति मुद्रितपुस्तकपाठः। २. एवं बहुषु लिखितपुस्तकेषु। 'स्रुवाहुतिं जुहुयात्' इति मुद्रितपुस्तकपाठः।

## यदि प्रवृत्तं प्रवर्ग्यं भ्रातृव्योऽभिप्रपद्येत

बौ. ९.१८—अथ यदि प्रवृत्तं प्रवर्ग्यं भ्रातृव्योऽभिप्रपद्येत गार्हपत्ये स्रुवाहुतिं जुहुयात् आहरावद्य इति। अथैनमनुव्याहरिष्यन् भवति। तमनुव्याहरेत् ब्रह्मणा त्वा शपामि इति। अथ यं द्वेष्टि तस्य दक्षिणं द्वार्बाहुमनुप्रक्षालयेत् उत्तुद शिमिजावरि इति ॥

## यदि सर्वश एव महावीरो भिद्येत

बौ. ९.१७—यद्यु वै सर्वश एव भिद्येत एतान्येव कपालान्यवाञ्जनं पिष्ट्वा येषा मृत् प्रायश्चित्ताय परिशेते तया संसृज्य कृत्वा पक्त्वाच्छृद्य निदधाति। अथान्यं प्रचरणीयं महावीरं प्रवृणक्ति ॥

## यदि महावीरः प्रवृत्तः प्रपतेत्

बौ. ९.१७—अथ यदि प्रवृत्तः प्रपतेद्गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयात् भूर्भुवः सुवः इति। अथैनमुच्छ्रयति ऊर्ध्व ऊ षु ण ऊतये, ऊर्ध्वो नः पाह्यंहसः इति द्वाभ्याम्। अथैनमाज्येन पूरयति अञ्जन्ति यं प्रथयन्तो न विप्राः इति ॥

## यदि महावीर उद्यतः प्रपतेत्

बौ. ९.१७—अथ यद्युद्यतः प्रपतेद् गार्हपत्ये तिस्रः स्रुवाहुतीर्जुहुयात् भूर्भुवः सुवः इति। अथैनमभिमृशति मा नो घर्म व्यथितो विव्यथो नो, मा नः क्रतुभिर्हीडितेभिरस्मान् इति द्वाभ्याम् ॥

## यदि घर्मदुघं महावीरं वा वयोऽभिप्रस्रावयेत्

बौ. ९.१७—अथ यदि घर्मदुघं वा महावीरं वा वयोऽभिप्रस्रावयेत् तावुष्णोदकेन प्रक्षालयेत् उप नो मित्रावरुणाविहावतम् इति। अथ गार्हपत्ये नव स्रुवाहुतीर्जुहुयात् इमं मे वरुण, तत्त्वा यामि, त्वं नो अग्ने, स त्वं नो अग्ने, त्वमग्ने अयासि, उद्वयं तमसस्परि, उदु त्यं, चित्रं, वयः सुपर्णाः इति ॥

## यदि घर्मदुघं महावीरं वा वयोऽभिप्रपतेत्

बौ. ९.१८—अथ यदि घर्मदुघं वा महावीरं वा वयोऽभिप्रपतेत् तमनुमन्त्रयते प्रसार्य सक्थ्यौ पतसि इति ॥

## यदि घर्मदुघं महावीरं वा क्रिमय उपाधिगच्छेयुः

बौ. ९.१८—अथ यदि घर्मदुघं वा महावीरं वा क्रिमय उपाधिगच्छेयुस्तानद्भिः प्रक्षालयेत् अत्रिणा त्वा क्रिमे हन्मि इति ॥

## यदि घर्मदुघं महावीरं वा स्तेनोऽपहरेत्

बौ. ९.१८—अथ यदि घर्मदुघं वा महावीरं वा स्तेनोऽपहरेद् गार्हपत्ये स्रुवाहुतिं जुहुयात् अहोरात्रे त्वोदीरयताम् इति। खट् इति वाचः क्रूराणीति ॥

**यदि घर्मः स्कन्देत्**

बौ. ९.१७—अस्कान् द्यौः पृथिवीम् इति स्कन्नानुमन्त्रणम् ॥

**यद्यवृत्तः शालां प्रपद्येत**

बौ. ९.१८—अथ यद्यवृत्तः[1] शालां प्रपद्येत आभिर्गीर्भिर्यदतो न ऊनम् इत्येतया प्रपद्येत ॥

**यदि प्रवृत्तः शालां प्रपद्येत**

बौ. ९.१८—यद्यु वै प्रवृत्त[2] एतयैव[3] ॥

**यदि संप्रैषादेकस्तनप्रभृति पत्न्यनालम्भुका भवति**

बौ. २९.११—अथ दीक्षित वाचं यच्छ व्रत्य वाचं यच्छ पत्नि वाचं यच्छ इति संप्रैषादेकस्तनप्रभृत्यनालम्भुका भवति सिद्धमावभृथात् कृत्वा त्र्यहे पर्यवेतेऽवभृथमवयन्ति । सुत्येऽहनि मार्जालीये सिकतोपोप्ते परिश्रित्योपविशेत् । अन्येष्वहःसु पत्नीशालायामेवोपविशेत् । प्राग्वꣳशं न प्रपद्येत ॥

**सदोहविर्धानानि चेद्दह्येरन्**

बौ. २९.१—अथाभिदग्धानि सदोहविर्धानानि समस्तदेवयजनमावृतैव क्रियेरन्ननावृता वा । वसतीवरीः प्रथमं गृह्णीयादिति वाधूलकस्य मतम् । अथेतरानानुपूर्वमिति ॥

**आग्नीध्रीये दग्धे**

बौ. २९.१—आग्नीध्रीयविनाश आग्नेय्यर्चा जुहुयात् अग्निर्मूर्धा दिवः इति ॥

**हविर्धाने दग्धे**

बौ. २९.१—वैष्णव्या[4] हविर्धाने विष्णो त्वं नो अन्तमः इति ॥

**सदसि दग्धे**

बौ. २९.१—ऐन्द्रिया[4] सदसि इन्द्रं विश्वा अवीवृधन् इति ॥

**यदि औदुम्बरी भिद्येत**

दृश्यतां ‘ यदि वसतीवरीकलशः ... ’

**प्राग्वंशे दग्धे**

बौ. २९.१—वैश्वदेव्या[4] प्राग्वꣳशे विश्वे देवाः शृणुतेमꣳ हवं मे इति ॥

**यदि यूपो भिद्येत**

दृश्यतां ‘ यदि वसतीवरीकलशः... ’

---

१. एवं केषुचिल्लिखितपुस्तकेषु । ‘ °वृतः ’ इति मुद्रितपुस्तकपाठः । ‘ अवृत ऋत्विक् ’ इति भवस्वामिभाष्यम् । २. एवं लिखितपुस्तकेषु । ‘ प्रवृत ’ इति मुद्रितपुस्तकपाठः । ३. आभिर्गीर्भिर्यदतो न ऊनम् इत्येतया प्रपद्येत । ४. जुहुयात् ।

## यदि चषालं भिद्येत

दृश्यतां 'यदि वसतीवरीकलशः...'

## यदि रशना छिद्येत

दृश्यतां 'यदि वसतीवरीकलशः...'

## यदि पशुं विमथ्नीरन्

बौ. १४·३—अथ वै भवति ये पशुं विमथ्नीरन् यस्तान् कामयेतार्तिमाच्छेंयुरिति कुविदङ्गेति नमोवृक्तिवत्यर्चाग्नीध्रे जुहुयादिति। स कुविदङ्ग इति नमोवृक्तिवत्यर्चाग्नीध्रे जुहोति। नमोवृक्तिमेवैषां वृङ्क्ते ताजगार्तिमाच्छन्तीति ब्राह्मणम्। यद्यु वा एकचरं विमथ्नीते शामित्र एतां जुहोति॥

## होत्रकाणामन्योन्यस्य मैत्रावरुणश्चोदयेत्

बौ. २९·२—अथ होत्रकाणामन्योन्यस्य मैत्रावरुणश्चोदयेदपि वान्योऽन्यस्य याज्यापुरोनुवाक्याभ्यां यजेत तस्य प्रायश्चित्तम्। ब्राह्मण एकहोता इत्यस्यानुवाकस्य प्रथमेन होतुर्जुहुयाद् द्वितीयेन मैत्रावरुणस्य तृतीयेन ब्राह्मणाच्छंसिनश्चतुर्थेन पोतुः पञ्चमेन नेष्टुः षष्ठेनाच्छावाकस्य सप्तमेनाग्नीध्रस्य॥

## अन्योऽन्यस्य याज्यापुरोनुवाक्याभ्यां यजेत

दृश्यतां 'होत्रकाणामन्योन्यस्य मैत्रावरुणश्चोदयेत्'

## कृष्णशकुनः पृषदाज्यमवमृशेत्

दृश्यतां 'पृषदाज्यं स्कन्देत्'

## यदि श्वा अवजिघ्रेत्

दृश्यतां 'अमेध्यभूतस्य', 'पृषदाज्यं स्कन्देत्'

## यदि ध्वाङ्क्षोऽवमृशेत्

दृश्यतां 'अमेध्यभूतस्य'

## यदि कीटोऽवपद्येत

दृश्यतां 'अमेध्यभूतस्य'

---

## अमेध्यभूतस्य

बौ. १४·९—अथातोऽमेध्यभूतस्यैव श्वावघ्रातस्य ध्वाङ्क्षावमृष्टस्य कीटावपन्नस्येति यद्व चान्यदमेध्यं मन्यते। सर्वश एवैताꣳ स्रुचमप्सु प्रवेश्याथान्यस्याꣳ स्रुच्यवदधाति शतमानꣳ हिरण्यम्। नित्ये ग्रहणे वैष्णवीमृचमनुवर्तयति विष्णो त्वं नो अन्तमः इति। अपोद्धृत्य हिरण्यमश्वमवघ्राप्यैव सादयति॥

## पृषदाज्यं स्कन्देत्

बौ. १४.९—अथ वै भवति यत्कृष्णशकुनः पृषदाज्यमवमृशेच्छूद्रा अस्य प्रमायुकाः स्युर्यच्छ्वावमृशेच्चतुष्पादोऽस्य पशवः प्रमायुकाः स्युर्यत् स्कन्देद्यजमानः प्रमायुकः स्यादिति। अथ वै भवति पशवो वै पृषदाज्यं पशवो वा एतस्य स्कन्दन्ति यस्य पृषदाज्यꣳ स्कन्दति यत्पृषदाज्यं पुनर्गृह्णाति पशूनेवास्मै पुनर्गृह्णातीति ब्राह्मणम्। अथ वै भवति प्राणो वै पृषदाज्यं प्राणो वा एतस्य स्कन्दति यस्य पृषदाज्यꣳ स्कन्दति यत्पृषदाज्यं पुनर्गृह्णाति प्राणमेवास्मै पुनर्गृह्णाति हिरण्यमवधाय गृह्णातीति। स्कन्ने पृषदाज्ये कꣳसं वा चमसं वा याचति। तमन्तर्वेदि निधाय तस्य स्वधाꣳ संभरति भूतिर्दध्ना घृतेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमागम्यात् इति। स्कन्नमनुमन्त्रयते भूपतये स्वाहा, भुवनपतये स्वाहा, भूतानां पतये स्वाहा इति। अथैतस्याꣳ स्रुच्यवदधाति शतमानꣳ हिरण्यम्। नित्ये ग्रहणे वैष्णवीमृचमनुवर्तयति विष्णो त्वं नो अन्तमः इति॥ [२३.५-नित्ये ग्रहणे वैष्णवीमृचमनुवर्तयतीति॥ सूत्रं बोधायनस्य॥ पृषदाज्य एवैषानुवर्तयितव्या भवतीति शालीकिः॥] अपोद्धृत्य हिरण्यमश्वमवघ्राप्य सादयति। अथ वै भवति वि वा एतस्य यज्ञश्छिद्यते यस्य पृषदाज्यꣳ स्कन्दति वैष्णव्यर्चा पुनर्गृह्णातीति। स वैष्णव्यर्चा पुनर्गृह्णाति। यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सं तनोतीति ब्राह्मणम्॥

## गर्भं चेत् पश्येयुः[1]

## यदि पशोरवदानं नश्येत्

बौ. १४.३—अथ वै भवति यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येदिति। [२३.५—यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येदिति॥ स ह स्माह बोधायनो यदि पशोरवदानं नश्येद्यद्येकं यदि द्वे आज्यस्य प्रत्याख्यायमिष्ट्वा तत्कृत्वा पुनर्यजेतेति॥ अत्रो ह स्माह शालीकिर्यदि पशोरवदानं नश्येद्यद्येकं यदि द्वे आज्यस्य प्रत्याख्यायमिष्ट्वा तत्कृत्वा कृतमेव मन्येत। अथ यदि भूयोऽथैवं कुर्यादिति॥] स यावन्ति पशोरवदानानि नश्यन्ति तावत्कृत्व आज्यस्य प्रत्याख्यायमवद्यति। सैव ततः प्रायश्चित्तिरिति ब्राह्मणम्॥

## सुत्यमहश्चेदतिक्रामेत्

बौ. २९.१३—सर्वं चेत् सुत्यमहरतिक्रामेत् समन्वारब्धाः प्रागुपवेशनादपच्छिद्येरन्। समाप्य पुनर्यजेत॥

## यदि सवनगतानामग्नीनामाग्नीध्रीय उद्वायेत्

बौ. २७.१०—यदि सवनगतानामग्नीनामाग्नीध्रीय उद्वायेच्छालामुखीयादेनमुद्धृत्याग्नीध्रीये षड्ढोतारं जुहोति शालामुखीये दशात्मकम्॥

## यदि औत्तरवेदिक आहवनीय उद्वायेत्

बौ. २७.१०—अथ यद्यौत्तरवेदिक आहवनीय उद्वायेदाग्नीध्रीयादेनमुद्धृत्यौत्तरवेदिक आहवनीये सप्तहोतारं जुहोत्याग्नीध्रीये दशात्मकम्॥

1, द्रष्टव्यम् श्रौ १, ६०४।

## यदि यज्ञभ्रेष आगच्छेत्

बौ. २७.४—यद्यृक्तो यज्ञभ्रेष आगच्छेत् भूः इति गार्हपत्ये जुहुयात् । यदि यजुष्टः भुवः इत्यन्वाहार्यपचने । यदि सामतः सुवः इत्याहवनीये । यदि सर्वतः सर्वा जुहुयात् ॥

## प्रातरनुवाकमनुपाकृतमादित्योऽभ्युदियात्

बौ. २९.३—अथ यदि प्रातरनुवाकमनुपाकृतमादित्योऽभ्युदियात् कथं तत्र प्रायश्चित्तं भवतीति । उषाः केतुना जुषतां यज्ञं देवेभिरन्वितम् । देवेभ्यो मधुमत्तमꣳ स्वाहा इति मिन्दाहुती व्याहृतीश्च हुत्वोपाकुर्यात् ॥

## प्रातरनुवाके शस्यमान आदित्योऽभ्युदियात्

बौ. २९.३—अथ यदि प्रातरनुवाके शस्यमान आदित्योऽभ्युदियात् उद्वयं तमसस्परि, उदु त्यं, चित्रम् इत्येताभिः स्रुवाहुतीर्जुहुयात् ॥

## यदि सोमो नाविः स्यात्

बौ. २९.३—अथ यदि सोमो नाविः स्यात् नवोनवो भवति जायमानो, यमादित्या अꣳशुमाप्याययन्ति इत्येताभ्याꣳ स्रुवाहुती जुहुयात् ॥

## यदि सूर्याचन्द्रमसोर्ग्रहणं विद्यते

बौ. २९.३—यदि सूर्याचन्द्रमसोर्ग्रहणं विद्यत एतदेव[1] ॥

## यदि वसतीवरीकलशः पात्रेजन एकधनाः कुम्भेष्टकाः कथनेष्टका वा परासिच्येरन्

बौ. २९.६—अथ यदि वसतीवरीकलशः पात्रेजन एकधनाः कुम्भेष्टकाः कथनेष्टका वा परासिच्येरन्, यूपो वा भिद्येत, रशना वा छिद्येत, चषालं वा भिद्येत, औदुम्बरी वा भिद्येत, ग्रावा वा भिद्येत, द्रोणकलशो वा दीर्येत, अन्यद्वा यज्ञे दारुमयं मृन्मयं वा पात्रं भिद्येत तत्स्वेनैव यजुषा स्व आयतने निधाय[2] वोपधाय वाभिमन्त्रयते[2] भूरायुर्मे धारयत प्राणं मे धारयत प्रजां मे धारयत पशून्मे धारयत मा म आयुः प्राणः प्रजाः पशवः परासिच्येरन् इति । अथ यदि दारुमयं पात्रमाहवनीयेऽनुप्रहरेदथ यदि मृन्मयमपोऽभ्यवहरेत् भूमिर्भूमिमगान्माता मातरमप्यगात् । भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् इति ॥

## द्रोणकलशे दीर्णे प्रवृत्ते वा

बौ. १४.७—अथातो दीर्णप्रवृत्तानामेव मीमाꣳसा । [ २३.५—दीर्णप्रवृत्तेष्विति ॥ सूत्रꣳ शालीकेः ॥ अत्रो ह स्माह बोधायनो याभ्यामेव[3] ऋग्भ्यां[3] पूतभृदाधवनीययोर्जुहुयात् ताभ्यामेव[4] ग्रहेग्रहे जुहुयात् । अथ तूष्णीꣳ सꣳस्रावमवनयेदिति ॥ ] द्रोणकलशे दीर्णे वा प्रवृत्ते वा पात्र्यां चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने विधुं दद्राणꣳ समने बहूनां युवानꣳ सन्तं पलितो जगार । देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान स्वाहा इति । अथ होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य तस्य स्वधाꣳसंभरति भूतिः सोमेन वर्धतां तस्य

---

१. नवोनवो, यमादित्या इत्येताभ्याꣳ स्रुवाहुती जुहुयात् । २. एवं केषुचिल्लिखितपुस्तकेषु । 'निधायोपधायाभिमन्त्रयते' इति मुद्रितपुस्तकपाठः । ३. एवं केषुचिल्लिखितपुस्तकेषु । 'याभ्यामेतदृग्भ्यां' इति मुद्रितपुस्तकपाठः । ४. एवं केषुचिल्लिखितपुस्तकेषु । 'ताभ्यां' इति मुद्रितपुस्तकपाठः ।

मेष्टस्य वीतस्य द्रविणमागम्यात् इति । स्कन्नमनुमन्त्रयते भूपतये स्वाहा, भुवनपतये स्वाहा, भूतानां पतये स्वाहा, इति । स यद्यह दीर्णो भवति प्रतिलिम्पत्येनम् । यद्यु वै प्रवृत्त उच्छिद्रूत्यैनं बर्हिषी अन्तर्धाय स्वधामानयति । अपोद्धृत्य बर्हिषी आग्रयणादप्तुं प्रस्कन्दयति ॥

## यदि द्रोणकलशो दीर्येत

दृश्यतां ' यदि वसतीवरीकलशः ... '

## आधवनीये दीर्णे प्रवृत्त वा

बौ. १४.७—आधवनीये दीर्णे वा प्रवृत्ते वा तथैव पात्र्यां चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने द्वौ समुद्रौ विततावजूर्यौ पर्यावर्तेते जठरेव पादाः । तयोः पश्यन्तो अति यन्त्यन्यमपश्यन्तः सेतुनाति यन्त्यन्य१ स्वाहा इति । अथ होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य तस्य तथैव स्वधा२ संभरति भूतिः सोमेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमागम्यात् इति । स्कन्नमनुमन्त्रयते भूपतये स्वाहा, भुवनपतये स्वाहा, भूतानां पतये स्वाहा इति । स यद्यह दीर्णो भवति प्रतिलिम्पत्येनम् । यद्यु वै प्रवृत्त उच्छिद्रूत्यैनं बर्हिषी अन्तर्धाय स्वधामानयति । अपोद्धृत्य बर्हिषी आग्रयणादेवाप्तुं प्रस्कन्दयति ॥

## पूतभृति दीर्णे प्रवृत्ते वा

बौ. १४.७—पूतभृति दीर्णे वा प्रवृत्ते वा तथैव पात्र्यां चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने द्वे द्रप्सी सतती वस्त एकः केशी विश्वा भुवनानि विद्वान् । तिरोधायैत्यसितं वसानः शुक्रमा दत्ते अनुहाय जार्यै स्वाहा इति । अथ होतृचमसे वसतीवरीभ्योऽध्यपो निःषिच्य तस्य तथैव स्वधा२ संभरति भूतिः सोमेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमागम्यात् इति । स्कन्नमनुमन्त्रयते भूपतये स्वाहा, भुवनपतये स्वाहा, भूतानां पतये स्वाहा इति । स यद्यह दीर्णो भवति प्रतिलिम्पत्येनम् । यद्यु वै प्रवृत्त उच्छिद्रूत्यैनं बर्हिषी अन्तर्धाय स्वधामानयति । अपोद्धृत्य बर्हिषी आग्रयणादेवाप्तुं प्रस्कन्दयति ॥

## आग्रयणे दीर्णे प्रवृत्ते वा

बौ. १४.७—आग्रयणे दीर्णे वा प्रवृत्ते वा तस्य पुरोरुचा हुत्वोच्छिद्रूत्यैनं बर्हिषी अन्तर्धाय स्वधामानयति । अपोद्धृत्य बर्हिषी द्रोणकलशादेवाप्तुं प्रस्कन्दयति ॥

## ग्रहे दीर्णे प्रवृत्ते वा

बौ. १४.७—अथान्यस्मिन् ग्रहे दीर्णे वा प्रवृत्ते वा तस्यैव पुरोरुचा हुत्वोच्छिद्रूत्यैनं बर्हिषी अन्तर्धाय स्वधामानयति । अपोद्धृत्य बर्हिषी आग्रयणादेवाप्तुं प्रस्कन्दयति ॥

## वायव्येषु दग्धेषु

बौ. २९.१—वायव्यया[1] वायव्येषु वायो शत१ हरीणाम् इति ॥

## अन्यद्दारुमयं मृन्मयं वा पात्रं भिद्येत

दृश्यतां ' यदि वसतीवरीकलशः ...'

---

१. जुहुयात् ।

## सर्वेषु दग्धेषु

बौ. २९.१—सर्वेषु मिन्दाहुती जुहुयाद् व्याहृतीश्च। अपि वेष्टिं निर्वपेदगारदहने क्षामवान् सर्वविनाशे तन्तुमती॥

## यदि ग्रावा भिद्येत

दृश्यतां 'यदि वसतीवरीकलशः...'

## यदि सवनकालोऽतिक्रामेत्

बौ. २९.४—अथ यदि सवनकालोऽतिक्रामेत् अग्निर्मूर्धा दिवः इत्येतस्यानुवाकस्य प्रथमेन गायत्रेण जुहुयात् प्रातःसवने। तथा त्रैष्टुभेन माध्यंदिने सवने। तथा जागतेन तृतीयसवने॥

## यदि सवनीयपुरोडाशः पूतिगन्धः स्यात्

बौ. २९.४—अथ सवनीयानां प्रायश्चित्तिः। अथ यदि पूतिगन्धः स्यात् तदुत्सृज्य पुनरुत्पाद्य प्रचरेत्। अपि वोष्णोदकेन प्रक्षाल्याज्येऽवधाय पुनः श्रपयित्वा प्रचरेत्। तत्रापि यदि पूतिगन्धो भवेत् तदुत्सृज्य पुनरेवोत्पाद्य प्रचरेत्। तथा सवनीयानां पुरोडाशानाम्। तथा सांनाय्यानाम्॥

## यदि सांनाय्यं पूतिगन्धं स्यात्

दृश्यतां 'यदि सवनीयपुरोडाशः पूतिगन्धः स्यात्'

## यद्यन्यवृता ऋत्विजोऽन्यवृतैः संसृज्येरन्

बौ. २९.५—अथ यद्यन्यवृता ऋत्विजोऽन्यवृतैः संसृज्येरन् दीक्षिता दीक्षितैर्वान्यत्र व्रात्यस्तोमात् सत्त्राच्चेत्येतदेव[1]।

## ग्रहान्ग्रहीष्यमाणो भागिनीं देवतामगृहीत्वान्यां गृह्णीयात्

बौ. २९.४—अथ यदि ग्रहान्ग्रहीष्यमाणो भागिनीं देवतामगृहीत्वा योऽन्यां गृह्णीयात् तथा अमुष्मै स्वाहा इति तदानीमेव सर्वं जुहुयात्। भागिनीं पुनर्गृहीत्वा मिन्दाहुती जुहुयात्। अपि वा ग्रहाणामेकेन जुहुयात् सर्वान् वा[2] वाचस्पते विधे नामन् इत्येवमादीन् ग्रहान् होतॄणाम्[3]॥

## यदि सुतः सोमोऽभिवृष्येत

बौ. २९.५—अथ यदि सुतः सोमोऽभिवृष्येत तदित्पदं, प्रत्यस्मै पिपीषते इत्येताभ्यां स्रुवाहुती हुत्वा तस्य नित्यभक्षमनुवर्तयति इन्दुरिन्दुमवागादिन्दोरिन्द्रोऽपात्। तस्य त इन्दविन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति॥

---

१. दृश्यतां 'यदि हुताहुती सोमौ संसृज्येयाताम्'। २. एवं केषुचिल्लिखितपुस्तकेषु। मुद्रितपुस्तके नास्ति। ३. एवं केषुचिल्लिखितपुस्तकेषु। 'होत्रकाणां' इति मुद्रितपुस्तकपाठः।

## यदि सुते सोमे यजमानो म्रियेत भयं वागच्छेत्

बौ. २९.५—अथ यदि सुते सोमे यजमानो म्रियेत भयं वागच्छेत् सर्वाणि हवीꣳषि पात्र्याꣳ समवधाय द्रोणकलशे सोमं जुह्वामाज्यं पशुमन्यस्यामित्येकामाहुतिं जुहुयात् ये देवा येषामिदं भागधेयं बभूव येषां प्रयाजा उतानूयाजाः। इन्द्रज्येष्ठेभ्यो वरुणराजभ्योऽग्निहोतृभ्यो देवेभ्यः स्वाहा इति हुत्वात ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्येताभये वा पुनर्यजेत ॥

## ग्रहेषु वा चमसेषु वा हविर्दोषोक्तदोषो भवेत्

बौ. २९.४—ग्रहेषु वा चमसेषु वा हविर्दोषोक्तदोषो भवेत्। तथापोऽभ्यवहृत्य[1] तत्प्रायश्चित्तꣳ हुत्वा[1] तथा पुनर्गृहीत्वा जुहुयात्। चमसेषु पुनरुन्नीय जुहुयात्। हुत्वा वा तस्मिन् हिरण्यमन्तर्धायाप आनीय भक्षयेत्। सैव ततः प्रायश्चित्तिः ॥

## स्तोत्रं शस्त्रं प्रतिगरं वोत्सृजेत्

बौ. २९.४—अथ यदि स्तोत्रꣳ शस्त्रं प्रतिगरं वोत्सृजेन्मिन्दाहुती हुत्वोपाकुर्यात् ॥

## एकां स्तोत्रीयां सूक्तं वर्चं वार्धर्चं वा प्रतिगरं वोत्सृजेत्

बौ. २९.४—अथ यद्येकाꣳ स्तोत्रीयाꣳ सूक्तं वर्चं वार्धर्चं वा प्रतिगरं वोत्सृजेन्मिन्दाहुती हुत्वा जपेत् ॥

## औषधं पयः पशुः सोम आज्यमित्येतेषु न्यूनेषु वा नष्टेषु वापहृतेषु वा

बौ. २९.३—अथ वितते यज्ञकर्मणि प्रायश्चित्तानि व्याख्यास्यामः। तत्रौषधं पयः पशुः सोम आज्यमित्येतेषु न्यूनेषु वा नष्टेषु वापहृतेषु वा पुनरुत्पाद्य गृह्णीयात्। यत्र स्मरेत् प्राक् स्विष्टकृत उत्पादनं भवति। स्विष्टकृत ऊर्ध्वꣳ स्मरेत् तत् सꣳस्थाप्यैतेनैव पुनर्यजेत् सह यजेद्वा। अथ यदि निरुप्य स्मरेदन्यं दैवतम् अमुष्मै त्वा इति प्रतिविभज्याभिमृश्य सर्वं जुहुयात् अमुष्मै स्वाहा इति। यत्र स्मरेत्तत्रैवमेव कुर्यादासादनात्। अथ यद्यासाद्य स्मरेदन्वावात्य स्थानेषु जुहुयादन्यद्वा पूर्वोक्तं प्रायश्चित्तं कुर्यात् ॥

## सोमेषु दग्धेषु नष्टेषु वा सोमानामुपघातापहारेषु वा

बौ. २९.१—दग्धेषु सोमेषु वा नष्टेषु वा सोमानामुपघातापहारेषु वा यथालाभमꣳशून् गृहीत्वा वसतीवरीभिः संयुत्याभिषुत्य प्रचरेत् ॥

## यदि सोमो लुप्येत

बौ. २९.१३—यदि पशुबन्धः सोमो वा लुप्येत वैश्वानरीमिष्ट्वा पुनर्यजेत ॥

## सर्वसोमविनाशे

बौ. २९.१—सर्वविनाश ओषधीभिरभिषुत्य प्रचरेत्। तत्कृत्वा पुनर्यजेतेति श्रुतिः। एवमेव कुर्यात्। सा प्रायश्चित्तिरिति ॥

---

१. द्रष्टव्यं श्रौ. १ पृ. ३०२।

## यदि हुताहुतौ सोमौ संसृज्येयाताम्

बौ. २९.५—अथ यदि हुताहुतौ सोमौ स॰सृज्येयातामाहवनीयादुदीचोऽङ्गारान्निरूह्य तेषु जुहुयात् यज्ञस्य हि स्थ ऋत्वियाविन्द्राग्नी चेतनस्य च। हुताहुतस्य तृप्यतमहुतस्य हुतस्य च। हुतस्य चाहुतस्य चाहुतस्य हुतस्य च। इन्द्राग्नी अस्य सोमस्य वीतं पिबतं जुषेथा॰ स्वाहा इति। तस्य नित्यभक्षमनुवर्तयति मा यजमानं तमो विदन्मर्त्विजो मो इमाः प्रजाः। मा यः सोममिमं पिबात् स॰सृष्टमुभयं कृतम् इति॥

## यद्यन्यहुताश्चमसा अन्यहुतैः संसृज्येरन् सोमे वा सोममभिगृह्णीयात्

बौ. २९.५—अथ यद्यन्यहुताश्चमसा अन्यहुतैः स॰सृज्येरन् सोमे वा सोममभिगृह्णीयादित्येतदेव[1]।

## ऊनातिरिक्तपुनरुक्तव्याघातेष्वन्येषु वा

बौ. २९.४—ऊनातिरिक्तपुनरुक्तव्याघातेष्वन्येषु वान्यत्र प्रायश्चित्तं मिन्दाहुती जुहुयात्। सर्वस्थानेषु मिन्दाहुती यज्ञशरीरमिति श्रुतिः। तस्मात्सर्वेषामाचार्याणां प्रशस्तमिति॥

## यदि प्रातःसवने सोमोऽतिरिच्येत

बौ. १४.२५-२६—अथ वै भवति यस्य प्रातःसवने सोमोऽतिरिच्यते माध्यंदिन॰सवनं कामयमानोऽभ्यतिरिच्यत इति। स प्रातःसवने सोमेऽतिरिक्ते प्राञ्जयन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सर्वंश एव राजानमुन्नय मातिरीरिचः इति। होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्। सर्वंश एव राजान॰ समुन्नीयोत्तरवेद्या॰ स॰सादयन्ति। अथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति। स्तुवते। तदेतद्गायत्र॰ साम पञ्चदशं गौर्धयति मरुताम् इति घयद्वतीषु कुर्वन्ति। होत्रे एषोत्तमा इति प्राहुः। समानमत ऊर्ध्वम्। इति नु छन्दोगबह्वृचेषु कामयमानेषु। ते चेन्न कामयेरन् प्रातःसवनेऽतिरिक्ते या॰ स्थालीमल॰ राज्ञेऽतिशिष्टाय मन्यते तस्या उपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति। त्रिरभिविष्यन्दयति। सोऽभिविष्यन्दमानः सर्व आग्रयणः संपद्यते। तं त्रिरभिहिंकृत्य परिमृज्य सादयति॥ [ २३.८—अतिरिक्तसोमेष्विति॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः॥ ]

## यदि माध्यंदिने सवने सोमोऽतिरिच्येत

बौ. १४.२५-२६—अथ वै भवति यस्य माध्यंदिने सवने सोमोऽतिरिच्यत आदित्यं तृतीयसवनं कामयमानोऽभ्यतिरिच्यत इति। स माध्यंदिने सवने सोमेऽतिरिक्ते प्राञ्जयन्नाह होतुश्चमसमनून्नयध्वमुन्नेतः सर्वंश एव राजानमुन्नय मातिरीरिचः इति। होतृचमसमेव प्रथममुन्नयन्ति यथोपपादमितरान्। सर्वंश एव राजान॰ समुन्नीयोत्तरवेद्या॰ स॰सादयन्ति। अथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति। स्तुवते। तदेतद्गौरीवित॰ साम सप्तदशं बण्महा॰ असि सूर्य इत्येतासु कुर्वन्ति। होत्रे एषोत्तमा इति

---

१. दृश्यतां 'यदि हुताहुतौ सोमौ संसृज्येयाताम्'।

प्राहुः। समानमत ऊर्ध्वम्। इति नु छन्दोगबह्वृचेषु कामयमानेषु। ते चेन्न कामयेरन् माध्यंदिने सवनेऽतिरिक्ते तथैव याꣳस्थालीमलꣳ राज्ञेऽतिशिष्टाय मन्यते तस्या उपरिष्टादाग्रयणमानीयाधस्तादुपगृह्णाति। त्रिरभिविष्यन्दयति। सोऽभिविष्यन्दमानः सर्व एवाग्रयणः संपद्यते। तं तथैव त्रिरभिहिङ्कृत्य परिमृज्य सादयति॥ [ २३·८–अतिरिक्तसोमेष्विति॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः॥ ]

## यदि तृतीयसवने सोमोऽतिरिच्येत

बौ. १४·२५-२६—अथ वै भवति यस्य तृतीयसवने सोमोऽतिरिच्येतोक्थ्यं कुर्वीत। इति नु छन्दोगबह्वृचेषु कामयमानेषु। ते चेन्न कामयेरन् तृतीयसवनेऽतिरिक्ते हारियोजनमेवात्राभिविष्यन्दयति। न हि पुनर्ग्रहणं विद्यते॥ [ २३·८—अतिरिक्तसोमेष्विति॥ पूर्वः कल्पो बोधायनस्योत्तरः शालीकेः॥ ]

## ध्रुवश्चेत् परिहीयेत

बौ. १४·२६—अथातो ध्रुवस्यैव परिहीणस्य मीमाꣳसा। [ २३·८—ध्रुवे परिहीणे प्रायश्चित्तकरण इति॥ स ह स्माह बोधायनः प्राक् चेदवभृथाच्छन्दोगबह्वृचेषु लभेरन्नभ्यावर्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा पुनर्यजेतेति॥ अत्रो ह स्माह शालीकिः प्राक् चेदवभृथाच्छन्दोगबह्वृचेषु लभेरन्नभ्यावर्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा कृतमेव मन्येतेति॥ ] इन्द्राग्निभ्यामेनमृग्भ्यां परिगृह्य जुहुयात्। इन्द्राग्नी वै देवानां पुनःपुनरभ्युपाकारं यजामह इत्येतदेकम्। आश्विनीभ्यामेनमृग्भ्यां परिगृह्य जुहुयात्। अश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोतीत्येतदेकम्। वैष्णवीभ्यामेनमृग्भ्यां परिगृह्य जुहुयात्। यद्वै यज्ञस्यातिरिच्यते विष्णुं तच्छिपिविष्टमभ्यतिरिच्यत इत्येतदेकम्। अवभृथेनैनꣳ सहाभ्यवहरेत्। यथा मेऽन्यानि सोमलिप्तानि पात्राण्येवं म एव भविष्यतीत्येतदेकम्। बर्हिषैनꣳ सहाभ्युपोषेत्। एष वा अग्निर्वैश्वानरो यत्प्रदाव्यः। अग्नय एष वैश्वानराय गृह्यते। ध्रुव एवमग्नौ वैश्वानरे हुतो भविष्यतीत्येतदपरम्। अथ पुनर्दीक्षते। यज्ञो ह वै यज्ञस्य प्रायश्चित्तिः। इति न्वेकाहयाजिनः। अथ सत्रिणाम्। मार्जालीये परिष्यन्दं निष्यन्दनवन्तं कृत्वा तदेनं निनयन्ति। श्वो भूते हि ते सोष्यन्तो भवन्ति॥

## यदि सोम उपदस्येत्

बौ. १४·२९—अथ वै भवति यस्य सोम उपदस्येत् सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्यर्जीषेऽन्यदाधूनुयाज्जुहुयादन्यदिति। [ २३·८—यस्य सोम उपदस्येत् सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्यर्जीषेऽन्यदाधूनुयाज्जुहुयादन्यदिति॥ सूत्रं बोधायनस्य॥ सहिरण्या एवास्मात ऊर्ध्वं मुख्याश्चमसा हूयेरन्नभ्युन्नीयेरन्निति शालीकिः॥ ] स यस्य सोम उपदस्यति तत्सुवर्णꣳ हिरण्यं द्वेधा विच्छिद्यर्जीषेऽन्यदाधूनोति मुख्ये चमसेऽन्यदवधाय जुहोति। सोममेवाभिषुणोति सोमं जुहोतीति ब्राह्मणम्। अथ वै भवति सोमस्य वा अभिषूयमाणस्य प्रिया तनूरुदक्रामत् तत् सुवर्णꣳ हिरण्यमभवद्यत् सुवर्णꣳ हिरण्यं कुर्वन्ति प्रिययैवैनं तनुवा समर्धयतीति ब्राह्मणम्॥

नाराशंस उपदस्येत्

बौ. २५.२२—नाराशꣳसमुपदस्तꣳ हुतादेवैनꣳ होतृचमसाद् गृह्णीयात् ॥

सोमापचारकालातिक्रमान्तरितविपर्यासव्यवायसमासादिषु अन्येषु चाज्ञातेषु ज्ञातेषु च दोषेषु

बौ. २९.१३—सर्वेषु सोमेषु सोमापचारकालातिक्रमान्तरितविपर्यासव्यवायसमासादिषु अन्येषु चाज्ञातेषु ज्ञातेषु च दोषेषु प्राक् समिष्टयजुष आज्यस्थाल्याः स्रुवेणोपघातꣳ सर्वप्रायश्चित्तानि जुहुयात् । जयानित्येके । अभ्यातानानित्येके । राष्ट्रभृत इत्येके । अमात्यहोमानित्येके । छन्दाꣳसीत्येके । सौरीरित्येके । तनूरित्येके । होतॄनित्येके । दशात्मकमित्येके । पौरुषीरित्येके । वैष्णवीरित्येके । महाव्याहृतीरित्येके । व्याहृतीरित्येके । प्राजापत्यामित्येके । प्रणवमित्येके । सर्वानित्याचार्यः सर्वानित्याचार्यः ॥

संसवे

बौ. १४.४—अथ वै भवति यो वै छन्दोभिरभिभवति स सꣳसुन्वतोरभिभवतीति । [२३.५—सꣳसव इति ॥ यत्र क्व च नाव्या वा नदी स्यादन्तरेणोदयक्ष्मवती वासꣳसवस्तत्रेति बोधायनः ॥ यत्र क्वचन शब्दा न सꣳसृज्येरन्नसंꣳसवस्तत्रेति शालीकिः ॥ यत्र क्वचनान्तरेणेथादसꣳसवस्तत्रेत्यौपमन्यवः ॥ प्रस्थयोरेव जनपदयोरसꣳसवस्तत्रेत्यौपमन्यवीपुत्रः ॥ नाविद्विषाणयोः सꣳसवो विद्यत इति छागलेयं ब्राह्मणं भवतीत्याञ्जीगविः ॥ ] स सꣳसुन्वतोर्महारात्र उत्थायाग्नीध्रे तिस्रोऽभिभूतीर्जुहोति संवेशाय त्वोपवेशाय त्वा गायत्रिया अभिभूत्यै स्वाहा, संवेशाय त्वोपवेशाय त्वा त्रिष्टुभोऽभिभूत्यै स्वाहा, संवेशाय त्वोपवेशाय त्वा जगत्या अभिभूत्यै स्वाहा इति । अथ द्वे प्राणाहुती जुहोति प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टम् इति । अथ वै भवति देवतासु वा एते प्राणापानयोर्व्यायच्छन्ते येषाꣳ सोमः समृच्छते संवेशाय त्वोपवेशाय त्वेत्याह छन्दाꣳसि वै संवेश उपवेशश्छन्दोभिरेवास्य छन्दाꣳसि वृङ्क्त इति ब्राह्मणम् । अथ वै भवति यस्य भूयाꣳसो यज्ञक्रतव इत्याहुः स देवता वृङ्क्त इति यद्यग्निष्टोमः सोमः परस्तात्स्यादुक्थ्यं कुर्वीतेति । उक्थ्यं क्रतुमुपैति । यदुक्थ्यः स्यादतिरात्रं कुर्वीतेति । अतिरात्रं क्रतुमुपैति । यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते वसीयान् भवतीति ब्राह्मणम् । इतीन्वा[1] अध्वर्युतः । अथ छन्दोगतः । प्रेतिवन्ति चैतिवन्ति चाज्यानि भवन्त्यभिजित्यै । मरुत्वतीः प्रतिपदो विजित्यै । उभे बृहद्रथन्तरे भवतः । इतीन्वै छन्दोगतः । अथ होतृतः । सजनीयꣳ शस्यं विहव्यꣳ शस्यमगस्त्यस्य कयाशुभीयꣳ शस्यमितीन्वा एकाहयाजिनः । अथ सत्त्रिणां महारात्र उत्थानं चैव समानं पञ्चाभिभूतीर्द्वे प्राणाहुती । ते यथाक्रत्वेव यन्ति । [ २३.५—अभिभूतीनाꣳ होम इति ॥ आध्वरा हुत्वा सात्त्रायणिका जुहुयादिति बोधायनः ॥ सात्त्रायणिका एवेति शालीकिः ॥ ] आदिष्टान्येवाहान्युपयन्ति । [ १४.२७–उक्तः सꣳसवः ॥ ]

---

१. एवं केषुचिल्लिखितपुस्तकेषु । 'इति न्वा' इति मुद्रितपुस्तकपाठः ।

# बौधायनशुल्बसूत्रम्

बौधायनश्रौ० [ ३०.४ ] —

प्राग्वंशः षोडशप्रक्रमायामो द्वादशव्यासः । अपि वा द्वादशप्रक्रमायामो दशव्यासः । तस्य मध्ये द्वादशिको विहारः । त्रिंशत्पदानि प्रक्रमा वा पश्चात्तिरश्ची भवति षट्त्रिंशत्प्राची चतुर्विंशतिः पुरस्तात्तिरश्चीति महावेदेर्विज्ञायते । मानयोगस्तस्या व्याख्यातः । आहवनीयात् षट् प्रक्रमान्महावेदिः । तत एकस्मिन् सदः । तद्दशकम् । उदक् सप्तविंशत्यरत्नयः । अष्टादशेत्येकेषाम् । ततश्चतुर्षु हविर्धानम् । तद्दशकं द्वादशकं वा । मानयोगस्तयोर्व्याख्यातः । यूपावटीयाच्छङ्कोरर्धप्रक्रममवशिष्योत्तरवेदिं विमिमीते । दशपदोत्तरवेदिर्भवतीति सोमे विज्ञायते । मानयोगस्तस्या व्याख्यातः । चात्वालः शम्यामात्रोऽपरिमितो वा । अथोपरवाः प्रादेशमुखाः प्रादेशान्तरालाः । अरत्निमात्रं समचतुरश्रं विहृत्य स्रक्तिषु शङ्कून्निहन्यात् । अर्धप्रादेशेनार्धप्रादेशेनैकैकं मण्डलं परिलिखेत् । सदसः पूर्वार्धाद् द्विप्रक्रममवशिष्य धिष्ण्यानां द्विप्रादेशो विष्कम्भः । तथान्तरालाः । आग्नीध्रागारस्य पार्श्वमानी पञ्चारत्निः । एतेन मार्जालीयो व्याख्यातः । तस्योदीचीं द्वारं कुर्वन्ति । रथाक्षान्तराला यूपावटा भवन्तीत्येकादशिन्यां विज्ञायते । तस्या दशानां च रथाक्षाणामेकादशानां च पदानामष्टाङ्गुलस्य च चतुर्विंशं भागमाददीत । स प्रक्रमः स्यात् । तेन वेदिं विमिमीते । अथाश्वमेधे विंशत्याश्च रथाक्षाणामेकविंशत्याश्च पदानामष्टाङ्गुलस्य च चतुर्विंशं भागमाददीत । स प्रक्रमः स्यात् । तेन वेदिं विमिमीते । अथ प्राच्येकादशिन्यां यूपार्थं वेदेः पूर्वार्धात् पदार्धव्यासमपच्छिद्य तत्पुरस्तात्प्राश्चं दध्यात् । नात्राष्टाङ्गुलं विद्यते । न व्यतिषङ्गः । यूपावटाः पदविष्कम्भास्त्रिपदपरिणाहानि यूपोपराणीति ॥

---

# सूची

ब्राह्मणभागे सूत्रभागे च ये देवताहविर्द्रव्यादिसंज्ञाविशेषाः समागतास्तेषां सूची अत्र दीयते। मन्त्रभागे प्रयुक्ताः संज्ञा अत्र नोद्धृताः। सूत्रगतानां संज्ञानां पृथक्त्वेनावधारणार्थं पृष्ठाङ्काः सूक्ष्माक्षरैः मुद्रिताः।

---

# शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७ | १० | दक्षिणां | दक्षिणा |
| २१ | १७ | °भ्यक्ते | °भ्यङ्क्ते |
| २७ | ७ | इमीम् | यिमीम् |
| २७ | ८ | स्वस्तायाइ° | स्वस्तायायि° |
| २७ | ८ | इमा | यिमा |
| ३३ | १ | यज्ञमनसः | यज्ञं मनसः |
| ५१ | १९ | मायो भवाय | मायोभवाय |
| ६३ | २६ | मध्येरात्रे | मध्यरात्रे |
| ९४ | ८ | अस्त | अन्त |
| ११६ | ११ | आदशाभ° | आ दशभि° |
| ११६ | २३ | गाधुगोषमा | गोधुगोषमा |
| १३९ | ८ | सुपूर्षाह्ण | सुपूर्वाह्ण |
| १४३ | ७ | निर्वपति | निवपति |
| १६१ | २० | ५·४·१–५,७ | ५·४·१–५·७ |
| १६७ | २३ | बाहुमात्रां | बाहुमात्रं |
| १६७ | २९ | °क्ष्णय | °क्ष्णया |
| १७० | २६ | वेण | ध्रुवेण |
| १७१ | ११ | –२३ | –३३ |
| १७३ | १२ | रक्षोहणौ | रक्षोहणो |
| १७४ | २५ | त्रिगेये | त्रिगेये |
| १८५ | १ | °वर्युकः | °वर्षुकः |
| १८८ | १८ | [ ३·९·२–१८ ] | [ ३·९·२–८ ] |
| १८९ | २८ | जष्टं | जुष्टं |
| १९३ | ९ | बहुल | बहुलं |
| २०२ | २३ | °भिरूपामाज्य° | °भिरूपामज्य° |
| २०३ | २० | गायत्रीरन्वाह० | गायत्रीरन्वाह० अपरिमिता अन्वाह० |
| २०३ | २२ | सावित्रीमन्वाह० | सावित्रीमन्वाह० एकदेवत्यामन्वाह० द्यावापृथिव्यामन्वाह० |
| २१२ | १९ | सुवारं | सुवीरं |
| २४० | १ | साह° | सह° |
| २५३ | २५ | कृत्वा | कृत्वः |

२६९ २० पङ्क्त्यनन्तरम्—[ २८·१० ]–पात्राणि प्रयुज्यन्ते० प्रान्यानि युज्यन्ते नान्यानि० उपांशुपात्रं प्रयुज्यते० अन्तर्यामपात्रं प्रयुज्यते० ऋतुपात्रे प्रयुज्येते०

उक्थ्यपात्रं प्रयुज्यते० शुक्रपात्रं प्रयुज्यते० मन्थिपात्रं प्रयुज्यते० आदित्यपात्रं प्रयुज्यते० आग्रयणपात्रं प्रयुज्यते० द्रोणकलशः प्रयुज्यते० एतावन्तो वै प्रातर्ग्रहा गृह्यन्ते ते स्तोत्रवन्त उक्थवन्तो निदानवन्त आयतनवन्तः कर्तव्याः ॥

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८० | २ | [ २·१·३·१ ] | [ २·१·१·३ ] |
| २८५ | १३ | उपास्मै | ओहम् ॥ उपास्मै |
| २९९ | १ | बहिष्पवमानस्तोत्रम् | सदःप्रसर्पणम् |
| ३११ | ८ | ब्रह्मण | ब्रह्मणः |
| ३२२ | १३ | धयेषिता | धियेषिता |
| ३२३ | २२ | मघो३म् । | मघो३म् |
| ३३३ | २० | व्यर्धयानिति | व्यर्धयानीति |
| ३३८ | १६ | जरितणाम् | जरितृणाम् |
| ३४४ | १२ | सूर्यन्यङ्गानि | सूर्यान्यङ्गानि |
| ३४९ | १८ | पङ्क्त्यनन्तरम् — मैसं [ ३·९·८ ] – यदच्छावाक्या द्विदेवत्याः शँसति ॥ | |
| ३६६ | ६ | [ मित्र | मित्र [ |
| ३६७ | १७ | पङ्क्त्यनन्तरम् — गोत्रा [ २·२·१६ ]–अङ्गारैर्द्वे सवने विहरति० ॥ | |
| ३७० | ४ | वृषमोभा | वृषमोभा |
| ३७० | १४ | अभितृणवती० | अभितृणवती० |
| ३९० | ९ | रोहन् रोहाति | रोहान् रोहति |
| ३९१ | २१ | यथास्येदेवं | यथा स्यादेवं |
| ३९८ | ३१ | °स्तोत्रम् | °स्तोमम् |
| ३९८ | ३१ | °ऽस्येवमेव | °ऽप्येवमेव |
| ४०३ | २३ | ३९५ | ३९८ |
| ४०५ | २० | वासोमान्दा° | वासोर्मान्दा° |
| ४१३ | १८ | सुद्रवं | सुद्र्वं |
| ४१३ | २४ | वसनो३म् | वसूनो३म् |
| ४३० | ५ | जगतीच्छन्दा | जगतीछन्दा |
| ४५५ | १९ | धिषीय ॥ अगन् | धिषीयागन् |
| ४६७ | ११ | आनळवावृध° | आनळवीवृध° |
| ४७९ | ३ | । — —ए२३ | ॥ *... ...ए२३ |
| ४७९ | ४ | । — —ए२३ | ॥ *... ...ए२३ |
| ४७९ | २२ | इत्यनन्तरम् — *आदितः साम गीत्वा एतन्निधनं ब्रूयात् । | |
| ४८४ | २२ | कुम्भऋजीषं | कुम्भ ऋजीषं |
| ४९८ | १ | °च्चपा | °च्चूपाः |
| ५०५ | १७ | और्णावयम् | और्णायवम् |
| ५०९ | २५ | गाः | गौः |
| ५२० | २६ | अपरद्वारि° | आपरद्वारि° |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५२० | २९ | नर्त्विज° | नर्त्विजा° |
| ५२० | ३१ | तप्स्वोगुदद्वास्य | तप्स्वोदगुद्वास्य |
| ५२५ | १ | महावेदिमवा° | महावेदिमेवा° |
| ५२९ | ८ | एवैता | एवैत |
| ५४६ | ३२ | प्रपदाये° | प्रपाद्ये° |
| ५५७ | ३७ | या | यान् |
| ५५८ | १५ | इत्यनुद्रत्य | इत्यनुद्रुत्य |
| ५५८ | ३१ | प्राणोऽनुन् | प्राणोऽनु |
| ५६० | २५ | °ऽवाच्छिद्यत | °ऽवच्छिद्यत |
| ५६१ | १ | नरेत्योप | पुनरेत्योप |
| ५७० | ३२ | क्रतुना | ऋतुना |
| ५७० | ३४ | तपस्याया | तपस्याय |
| ५७२ | १६ | तथेव | तथैव |
| ५८१ | १९ | °नुसंचरेस्न | °नुसंचरेरन |
| ५८२ | २२ | गोर्हिरण्यं | गौर्हिरण्यं |
| ५९२ | २४ | °प्रस्थातः | °प्रस्थाता |
| ५९४ | २० | सत्या त | सत्या ता |
| ५९९ | २४ | °दशिनी | °दशिनी° |
| ६०२ | ७ | त्रिस्तृतीया | त्रिस्तृतीय— |
| ६११ | २८ | जतृभ्य | जत्रुभ्य |
| ६१२ | ५ | महवीरं | महावीरं |
| ६१३ | ११ | °जावरी | °जावरि |
| ६२२ | १५ | स्कन्दति० | स्कन्दति० यत् पृषदाज्यं जुहोति० |
| ६३४ | २३ | पथो° | पयो° |
| ६३६ | ५ | तभिदमृशेत् | तदभिमृशेत् |
| ६३६ | ९ | °निर्गृह्णीयात् | °न्निर्गृह्णीयात्० द्रोणकलशान्निर्गृह्यन्ते ॥ |
| ६५४ | ८ | त वाया इात | ते वायो इति |